REPRINT FROM THE PANDIT.

# शास्त्रदीपिका ।

मीमांसाधुरन्धरश्रीमत्पार्थसारथिमिश्रप्रणीता ।

भट्टकुमारिलमतानुगा ।

पूर्वमीमांसासूत्राणां संक्षिप्तव्याख्यानस्वरूपा ।

पण्डितस्वामिश्रीराममिश्रशास्त्रिणा संस्कृता ।

तदीयविरलटिप्पण्या संकलिता च ।

# ŚÁSTRADÍPIKÁ,

A COMMENTARY OF JAIMINI SÚTRA

OF ŚRIPARTHA SÁRATHI MIŚRA

EDITED, WITH NOTES

BY P. S. RÁMA MIS'RA SÁSTRI'.



काश्याम् ।

मेडिकल्-हाल्-नामकमुद्रालये मुद्रयित्वा प्रकाशिता ।

१९४८ वैक्रमाब्दे । १८९१ ई० ।

PRINTED, PUBLISHED AND SOLD BY E. J. LAZARUS & CO., AT THE MEDICAL HALL PRESS, BENARES.

SOLD ALSO BY

JYESTHARAM MUKUNDJI, BOMBAY, GANESH DAS AND CO., BENARES. OTTO HARRASSOWITZ & M. SPIRGATIS LEIPZIG: LUZAC & CO., LONDON.



[मूल्यम् । ८। )

॥ श्रीः ॥

श्रियै नमः ।

श्रीपतये नमः ।

श्रीमते रामानुजाय नमः ।

# शास्त्रदीपिकाया भूमिका ।

वेदा हि ऋग्यजुःसामाथर्वभेदैर्मन्त्रब्राह्मणारण्यकोपनिषदादिभेदैरवान्तरैर्मण्डलप्रपाठकसूक्तानुवाकवर्गकाण्डाध्यायादिलक्षणैरपरैश्च विशेषैः सन्ति बहुधा प्रविभक्ताः । तेऽमी बुभुत्सूनामर्थनिरूपणसौकर्याय कर्मकाण्डोपासनाकाण्ड-ज्ञानकाण्डरूपेण पूर्वाचार्यैर्व्यभाजिषत । तत्र मन्त्रभागस्य संक्षेपतः सर्वविद्यास्थानभूतस्यापि प्रायो[1] यागोपयोगिद्रव्यदेवतादिस्मारकतया कर्मकाण्डतां, ब्राह्मणानां च मन्त्रोदितार्थेतिकर्तव्यताप्रतिपादनबहुलानां तच्छेषतां, प्रायो ब्राह्मणैकदेशस्वरूपाणामुपनिषदां नीरक्षीरन्यायेन उपासना-ज्ञाननिरूपणपराणामुपासना-ज्ञानमूलतां चाचक्षते । तत्रापि च षोडशाध्यायीरूपेण कर्ममीमांसाशास्त्रेण अनादिनिधनाविच्छिन्नवैदिकसंप्रदायस्थेम्ना याथातथ्येन प्रतिनियतक्रमाणामनुन्मिषितस्वरवर्णविपर्ययाणामैहिकामुष्मिकार्थसंदोहदोग्ध्रीणां तत्रभवतीनां श्रुतीनामर्थनिर्णयाय भगवान् जैमिनिर्बादरिबादरायणादिपूर्वाचार्यपरम्परापरिप्राप्ता एव वेदार्थनिर्णयोपयिकीस्सद्युक्तीः सूत्रयाञ्चकार । तत्रादिमा द्वादशाध्यायी कर्मकाण्ड-पदेन प्रसिध्यति । शेषा चतुरध्यायी तु द्वादशाध्याय्युक्तार्थावशिष्टार्थनिरूपणपरा संकर्ष-काण्डपदेन व्यवह्रियते । अस्ति चैषा विप्रकीर्णवेद-

[1] ईशावास्योपनिषदः संहितान्तर्गतत्वात्प्रायः पदम् ।

वाक्यार्थनिरूपणपरा । अत एवैनां संकर्षकाण्ड—पदेन व्यवहरन्ति, सम्यक्—निःशेषतया स्फुटतया च कृष्ट्वा—आकृष्य विप्रकीर्णवेदवाक्येभ्यः संगृह्य निर्णीयन्ते अर्था यत्रेति संकर्ष इति व्युत्पत्त्या "अकर्तरि च कारके संज्ञायां"मित्यधिकारस्थेन "हलश्चे"ति घञा तथार्थावगतेः । यश्चामुष्याः संकर्षण—काण्डपदेन व्यवहारः सोऽपि अधिकरणल्युटा तथाऽर्थाभिधानायैव । विप्रकीर्णार्थनिरूपणपरतयैव तु द्वादशाध्याय्यामिव शेषचतुरध्याय्यां प्रत्यधिकरणं न संगतिः ॥ द्वादशाध्याय्या सह तु शेषचतुरध्याय्या अस्त्येव संगतिमदर्थप्रतिपादकतयैकग्रन्थत्वं, वेदान्तचतुरध्याय्या तु न संगता षोडशाध्यायी तस्या ज्ञानकाण्डरूपायाः पृथगर्थनिरूपणपरतयाऽत्यन्तभिन्नत्वात् । अत एव तु अथातो ब्रह्मजिज्ञासेति सूत्रस्थाथ—शब्दस्य महत्याऽऽरभट्या वृत्तिकाराभिमतकर्माधिगमानन्तर्यार्थकतां व्युदस्य साधनचतुष्टयसंपत्त्यानन्तर्यार्थकतामास्थिषत श्रीमच्छङ्कराचार्याः ॥

श्रीभाष्याचार्यास्तु अथातो ब्रह्मजिज्ञासेतिसूत्रस्थाथ—शब्दस्य कर्माधिगमानन्तर्यार्थत्वमास्थाय विंशत्यध्यायीस्वरूपयोः पूर्वोत्तरमीमांसयोरेकशास्त्रतामाहुः "संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धिरिति" इति, "वृत्तात्कर्माधिगमादनन्तरं ब्रह्मविविदिषेति" इति च, पूर्वा[१] चार्यवचनं प्रमाणतयोपदर्शयन्तः ।

युक्तं चैतत् वेदाविरोधितर्कोपन्यासपुरःसरं वेदार्थविचाररूपत्वादुभयोर्मीमांसयोः । अतएव तु ज्योतिष्टोमदर्शपौर्णमासबृहस्पतिसवादिज्ञानमात्रेणापवर्गतत्साधनयोरविदितत्वात्पुरुषार्थतदुपायज्ञानं कार्त्स्न्येन नपर्यवस्यतीति कर्मकाण्डे तत्तदर्थबोधकश्रुतिषु तत्तत्प्र-

१ भगवद्बोधायनवचनम् ।

ण्खावसाने नाभ्यासो ऽर्थपरिसमाप्तिबोधको दृश्यते, वेदान्तेषु तु न स पुनरावर्तते न स पुनरावर्तते । नावर्तन्ते नावर्तन्ते । वेदानुशासनं वेदानुशासनम् । तस्माद् ब्राह्मणो महिमानमाप्नोति तस्माद् ब्राह्मणो महिमानमाप्नोति । अमृत: समभवदमृत: समभवदित्यभ्यासो भवति ।

वेदान्तेषु प्रतिविद्यमवसानेऽभ्यासप्रयोजनं तु इतरविद्यानैरपेक्ष्येण एकैकस्या: परमपुरुषार्थब्रह्मावाप्तिलक्षणफलप्राप्तिहेतुत्वबोधनम्, एकैकयैव विद्यया तत्र पुरुषार्थपर्यवसानेन विद्यान्तरस्य ज्ञातव्यत्वनियमाभावेनानपेक्षणीयत्वात् ।

अत एव तु श्रुतिदृष्टरीतिमनुकुर्वता वेदविदग्रेसरेण कृष्णद्वैपायनशिष्येण जैमिनिना पूर्वकाण्डस्योत्तरकाण्डसापेक्षपरमपुरुषार्थावाप्तिहेतुतासूचनाय अथातो धर्मजिज्ञासेत्यारभ्य अन्वाहार्ये च दर्शनादित्यन्ते द्वादशाध्यायीग्रन्थे, चतुरध्यायीस्वरूपे संकर्ष–काण्डे वा अध्यायान्ते "एवं मुक्तिफलानियमस्तदवस्थाऽवधृतेस्तदवस्थावधृते"रित्यादिव्याससूत्रेष्विव पदावृत्तिरर्थपरिसमाप्तिबोधिका नादृता । संकर्षणकाण्डे तु सर्वशेषे काण्डसमाप्तिसुसूचयिषया वाक्यावृत्तिरादृता न, तु समस्तसूत्रावृत्ति: शास्त्रपरिसमाप्तिद्योतिका, यथोत्तरकाण्डे अनावृत्ति: शब्दादनावृत्ति:शब्दादिति परमर्षि: सूत्रमभ्यस्यन् पूर्वोत्तरमीमांसयो: समाप्तिं स्पष्टमवबोधयतीति श्रुत्यर्थनित्यनिरीक्षणनीतनिजजनुषां मादृशामनपरपरिशीलितो भगवद्बोधायनमतोपपादनप्रकार: ।

अतएव तु "द्वादशाहवदुभयविधं बादरायणो ऽत:" अ. ४. पा. ४. सू. १२ । इत्युत्तरकाण्डे पूर्वकाण्डोदितार्थमुपजीव्यत्वेनावल-

लम्बे भगवान् कृष्णद्वैपायनः, तद्यथा "द्वादशाहमृद्धिकामा उपेयुः"। "द्वादशाहेन प्रजाकामं याजयेदित्युपैतियजतिचोदनाभ्यां सङ्कल्पभेदेन सत्त्रमहीनं च भवति तथा सङ्कल्पभेदादुभयविध शरीरमशरीरञ्च मुक्तमाचार्यो मन्यते इति,

एवमेव तु "दर्शयतश्चैवं प्रत्यक्षानुमाने" अ. ४ पा. ४. सू. २. । इति सूत्रे श्रुतिं परानपेक्षतया प्रत्यक्षपदेन, स्मृतिं च स्वप्रामाण्ये श्रुतिमुखनिरीक्षणसापेक्षतयाऽनुमानपदेन सिद्धवद् व्यवजहार, यतोऽयमर्थः पूर्वकाण्डे प्रमाणलक्षणे सुनिरूपितः, ततश्च तादृशार्थानां समानतन्त्रसिद्धार्थतया तथाऽभिधानमिति तद्विदां न संशयः ॥

न च कर्तृस्मर्तृभेदः शास्त्रानैक्यसाधनायालं, मुनित्रयप्रणीतत्वेऽपि व्याकरणस्यैकत्वात्, स्मर्तॄणां मधुच्छन्दःप्रभृतीनां बहुत्वेऽपि तत्स्मृतिविषयर्ग्यजुःसामसंहितादिभागानामेकत्वाच्च आधुनिकैरपि च संभूय ग्रन्थाः प्रणायिषत, यथा धूर्तस्वामिकपर्दिभ्यामापस्तम्बसूत्रव्याख्यानं, यथा वा पाणिनीयसूत्रव्याख्यानं वामनजयादित्याभ्यामेवमादि ॥

न च कर्मब्रह्ममीमांसयोरेकशास्त्रत्वे कर्मिणामेव ब्रह्मविद्याधिकारे च पूर्वकाण्डोदितापशूद्राधिकरणेनैव निर्विद्यानां ब्रह्मविद्याऽनधिकारबोधसिद्धौ वेदान्तचतुरध्याय्यां पुनस्तद्वारणायापशूद्राधिकरणारम्भे कृतकरत्वप्रसङ्ग इति न तयोरैकशास्त्र्यमित्यनुमिमीमहे इति सांप्रतं, ग्रहणधारणादिलक्षणलौकिकसामर्थ्यमात्रस्याधिकारकारणतां भ्रान्त्या प्रतिपद्यमानान् प्रति, दुरुपदेशवशात् साधनचतुष्टयमात्रस्य पूर्ववृत्तितां प्रतिपद्य ब्रह्मविद्यासु प्रवर्तमानान् प्रति

वा, मध्वादिविद्यास्विवानुपनीतानामपि ब्रह्मविद्यास्वधिकारं जानानान् प्रति वा, भ्रान्तोपदेशवशाद्वैदिकाचारस्य तत्त्वज्ञानेऽनपेक्षाभ्रमवतः प्रति वा, पूर्वकाण्डविचारे इवोत्तरकाण्डविचारेऽपि वर्णाश्रमधर्मानुपालनावश्यम्भावद्रढिम्ने वा तस्य सार्थक्येन कृतकरत्वप्रसङ्गरूपचोद्यानवतारात्। यथा च परस्यैवापशूद्राधिकरणं न सङ्गतं तथा वयमिहैवाग्रे पराक्रम्य समर्थयिष्यामहे इत्यकिञ्चिदिदम्।

न च अथातो धर्मजिज्ञासेति प्रतिज्ञायाऽऽरब्धे शास्त्रे ब्रह्मनिरूपणमसाम्प्रतमिति शङ्क्यम्। सिद्धसाध्यरूपेण धर्मद्वैध्यस्य शास्त्रसिद्धतया द्विविधधर्मनिरूपणप्रतिज्ञानेन षोडशाध्याय्या साध्यरूपं धर्मं निरूप्य सिद्धरूपस्य तस्याभिधानेन क्रमेणार्थप्रतिपादनपरयोः कर्मब्रह्ममीमांसयोः संगतत्वात्। धर्मद्वैविध्ये प्रमाणं तु, "इज्याचारदमाहिंसादानस्वाध्यायकर्मणाम्। अयं तु परमो धर्मो यद्योगेनात्मदर्शनम्" इति याज्ञवल्क्यस्मृतिः, इयं हि आत्मदर्शनस्य परमधर्मतां ब्रुवाणा सिद्धसाध्योभयधर्मबोधिकेति स्पष्टमेव। एषा हि परमर्षीणां शैली यत्स्थलविशेषे असिद्धार्थप्रसिद्धिबहुलेन धर्म—शब्देनात्मानं, क्वचित्तु तादृशेन यज्ञ—शब्देन, सिद्धधर्मस्वरूपमात्मानमुपादित्सन्ते, यथा गीतासु "श्रेयान् द्रव्यमयाद्यज्ञाज् ज्ञानयज्ञः परन्तप" इत्यादिषु, तदुभयसाधारणधर्मत्वं चालौकिकश्रेयस्साधनत्वश्रेयस्स्वरूपत्वान्यतरत्वमित्यन्यत्र कृतविस्तरा वयमिहोपेक्षामहे। नाप्यवान्तरो विशेषः शास्त्रानैक्यसाधकस्तस्य पादाध्यायाधिकरणपूर्वोत्तरषट्कादिभेदेन भिन्नस्य शास्त्रानैक्यसाधकतायाः सर्वसंप्रतिपन्नत्वात्। न चैवं कल्पसूत्रगृह्यसूत्रादीनामपि वेदार्थविचाररूपतया सर्वस्याप्यास्तिकशास्त्रस्यैक्यमेवं ब्रुवाणस्य स्यादिति फल्गु शङ्क्यम्॥

तेषां वेदार्थविचारत्वाविशेषेऽपि युक्तिमात्ररूपताविरहेण भेद-

साधकविशेषस्यात्यन्तसुवचत्वात् । न चैवं पूर्वोत्तरमीमांसयोरेकशास्त्रत्वे तर्कादिपदेन षण्णामवगमः शास्त्रषट्कादिव्यवहारश्च विलुप्येतेति वाच्यम् अवान्तरविशेषमादाय तादृशव्यवहारस्याञ्जस्येनैव समर्थनात् । मा चैवमवान्तरं षट्काध्यायपादादिलक्षणं भेदमादाय शास्त्रसप्तकादिव्यवहारोऽप्यतिप्रसजेदिति शङ्क्ष्ठाः नैमित्तिके सति निमित्तानुसरणं न तु निमित्तमस्तीत्यारोप इति न्यायेन यादृशो व्यवहार आजानिकस्तन्निर्वाहाय निमित्तगवेषणेऽपि निमित्तमस्तीत्येतावन्मात्रेणासतो व्यवहारस्यापादयितुमशक्यत्वात् ।

यच्च फल—जिज्ञास्यभेदेन पूर्वोत्तरकाण्डयोर्भेदाभिधानं तदपि बालसंमोहनमात्रम् "अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासेत्यादिजैमिनीये जिज्ञास्यभेदेऽपि शास्त्रैक्यस्य सर्व्वसंप्रतिपन्नत्वात्, फलभेदोऽपि न शास्त्रभेदे तन्त्रं तस्यासिद्धत्वात् । तथा हि "अग्निहोत्रादि तु तत्कार्य्यायैव तद्दर्शनात्" "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" इत्यादिव्याससूत्रपरम्परया "यज्ञो दानं तपः कर्म न त्याज्यं कार्य्यमेव तत् । यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् । एतान्यपि तु कर्म्माणि सङ्गं त्यक्त्वा फलानि च । कर्त्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥ सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते इत्यादिभगवद्गीतावाक्यैः, "यज्ञेन दानेन तपसाऽनाशकेन इत्यादिश्रुतिभिश्च निष्कामकर्म्मणो ज्ञानेन सहैककार्य्यकारणताथाः शतधा प्रसाधितत्वात् । अस्तु वा निष्कामकर्म्मणामपि ज्ञानदार्ढ्यप्रयोजकत्वं न साक्षादपवर्गहेतुत्वं तावताऽपि सिद्धसाध्योभयभेदभिन्नं धर्ममथातो धर्म्मजिज्ञासेति निरूप्यत्वेन प्रतिज्ञाय षोडशाध्याय्या साध्यरूपं तमभिधाय वेदान्तचतुरध्याय्या सिद्धरूपस्योपजीवकस्य परमधर्म्मस्यात्मनिरूपणस्य समुचितत्वात् उपजी-

व्यनिरूपणानन्तरमुपजीवकनिरूपणस्य यौक्तिकत्वेन ज्ञानकर्म्मसमुच्चयापेक्षापक्षेऽपि मीमांसयोरेकशास्त्रताया: सुदृढत्वात् ।

यदपि जिज्ञास्ये भूतत्वभव्यत्वलक्षणवैलक्षण्यं पुरस्कृत्य क्रमोपक्रान्तयो: पूर्वोत्तरमीमांसयो: क्रमविवक्षाऽसंभवाभिधानं तदप्यापातरमणीयं यतो भव्याया अप्युपासनाया अस्तीह भूतब्रह्मनिरूपणपरे शास्त्रे क्रियासमभिहारेणाभिधानं यथोपकोसलोपासनप्रतीकोपासनाज्ञोपासनप्राणोपासनदहरविद्याशाण्डिल्यविद्यादीनां, न च तत्प्रासङ्गिकमिति शक्यं शङ्कितुमपि उपासकस्यार्चिरादिमार्गेण मूर्द्धानमभिभिद्य निष्क्रामतो ब्रह्मलोकावाप्तिलक्षणफलपर्यन्तस्यार्थजातस्य इहैव शास्त्रे निरूपणप्रक्रमात्, न हि त्रयीचि[1]काण्डीसमाम्नातस्योपासनस्य वेदान्तशास्त्रमपहायापरत्र मीमांसनम् ॥

अत एव स्वयमपि तु आनन्दमयाधिकरणोपक्रमे "एवमेकमपि ब्रह्मापेक्षितोपाधिसंबन्धं निरस्तोपाधिसंबन्धं चोपास्यत्वेन ज्ञेयत्वेन च वेदान्तेषूपदिश्यत इति प्रदर्शयितुं परो ग्रन्थ आरभ्यते" इति स्पष्टमुपासनापरत्वं वेदान्तानामभिहितम्, एवमेव तु क्रममुक्त्यर्थोपासनानामिव तत्र तत्र कर्मसमृद्ध्यर्थोपासनानामभ्युदयफलार्थानां ज्ञोपासनानामिहैव निरूपणमिति न बहु निरूपणीयं निरूपकेषु। एवं च कर्मसमृद्ध्यर्थोपासनानामपीहैव निरूपणीयत्वे कर्मावबोधानन्तर्यपक्षाक्षेपोऽनवधानेन स्वपक्षाक्षेप इति सिद्धमस्खलितं कर्मावबोधानन्तर्यम् ॥

अत एव तूपसंहारेऽपि "अनावृत्ति: शब्दादनावृत्ति: शब्दादि"ति भगवान् कृष्णद्वैपायनोऽनावृत्तिलक्षणं शास्त्रफलमुपासकस्यैव

[1] कर्मज्ञानोपासनालक्षणार्थप्रतिपादनपरो वैदिकसन्दर्भः ।

प्राप्तव्यमूचे । ततश्च भूतब्रह्मनिरूपणपरेऽपि शास्त्रे 'भव्याया अप्यु-पासनायाः अधिकारीतिकर्तव्यताफलपर्य्यन्तं विवेचनात् फलनिष्ठो भूतत्वभव्यत्वलक्षणोविशेषोऽकिञ्चित्कर इति साधु प्रसाधितम्, अत एव तु भव्यस्य धर्मस्य ज्ञानकालेऽसत्त्वात् भूतस्य च ब्रह्मणोनित्य-निर्वृत्तत्वादिति प्रतिपाद्यवैलक्षण्यसमर्थनश्रमोऽप्यकिंचित्करः, " न ह्युदासीनस्य प्रतिपाद्यनिष्ठतादृशावान्तरविशेषस्य प्रतिपाद्यनिरूपण-क्रमभङ्गप्रयोजकतासंभवः इतरथा तु "अथातः शेषलक्षण"मिति तृतीयाध्याये जैमिनीयद्वितीयलक्षणेन कर्मभेदमभिधाय शेषशेषित्व-चिन्तनपरतया प्रवृत्ते शेषशेषित्वविचारोऽप्यसंगतः स्यात् कर्मभेद-तच्छेषशेषित्वादेरर्थस्य क्रमनिरूपणीयस्यापि विलक्षणत्वात्, न हि कर्मब्रह्मनिष्ठो विशेष एव पौर्वापर्यभङ्गप्रयोजको नापर इति शक्यते वक्तुम् ॥

एतेन "एवं च सत्यथातो ब्रह्मजिज्ञासेति तद्विषयः पृथक् शास्त्रारम्भ उपपद्यते प्रतिपत्तिविधिपरत्वे हि अथातो धर्मजिज्ञा-सेत्येवारब्धत्वान्न पृथक्शास्त्रमारभ्येत, आरभ्यमाणं चैवमारभ्ये-त—अथातः परिशिष्टधर्मजिज्ञासेति, अथातः क्रत्वर्थपुरुषार्थयोर्जि-ज्ञासेतिवत्" इत्यपि प्रत्युक्तमथातोधर्मजिज्ञासेति सामान्यतोधर्म-निरूपणं प्रतिज्ञाय कर्मरूपं तमभिधाय सिद्धरूपस्य तस्याभिधाने शि-ष्यावधानाय अथातो ब्रह्मजिज्ञासेत्येव सूचयितुमुचितत्वात्, शिष्या-वधानफलं हि प्रतिज्ञाशास्त्रं, न च शिष्यावधानोपधानं यथा ब्रह्म-जिज्ञासेत्युक्त्या तथा परिशिष्टधर्मजिज्ञासेति सूत्रणेऽपि । किं च पूर्वं कर्मब्रह्मसाधारणधर्मनिरूपणं प्रतिज्ञायापि चोदनालक्षणोऽर्थो धर्म इति सूत्रेण लिलक्षयिषितः क्रियारूपोधर्म एव निरूपयितुमुपक्रान्त-

स्तथा च परिशिष्टधर्मजिज्ञासेत्युक्तौ चोदनालक्षण एव कश्चित् परिशिष्टो धर्म इह जिज्ञास्यते ? आहोस्विज्जगज्जन्मादिलक्षणोऽपर इति शिष्याः संशयीरन् जन्माद्यस्य यत इति ब्रह्मलक्षणवाक्यार्थावगमात् प्राक्, यथास्थितसूत्रकरणे तु कर्मब्रह्मणोर्वेदार्थत्वलक्षणसामान्येऽपि इदम्प्रथमः कश्चिदयमपूर्वो धर्मो निरूप्यते यो लक्षयिष्यते जन्माद्यस्य यत इति शान्तशङ्काः शिष्याः स्पष्टमवबुध्यन्त इति युज्यते तथा सूत्रसंदर्भो महर्षेर्व्यासस्य, किं च अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासेति दृष्टान्तावष्टम्भोऽपि परस्य न शोभनः, यतः सूत्रकृन्महर्षिरिह विशिष्याभिधेयमुपादत्ते क्रत्वर्थपुरुषार्थयोरिति न तु परार्थयोरिति एवं चेह न परिशिष्टधर्मजिज्ञासेति वक्तव्यं किन्तु ब्रह्मजिज्ञासेत्येवेति न किंचिदेतत्। किं च क्रमनिरूपणीययोरत्यन्तसाजात्यनिर्बन्धे गन्धवत्याः पृथिव्या निरूपणानन्तरं निर्गन्धानामपां निरूपणं, विशेषगुणशून्ययोः कालदिशोर्निरूपणसमनन्तरं च ज्ञानेच्छाद्यनेकविशेषगुणयोगिन आत्मनो निरूपणमसंगतमित्यप्यापद्येतेति बहु व्याकुलीस्यात् ॥

यदपि केचन ब्रह्मजिज्ञासायां कर्मावगमानन्तर्यमसहमानाः "सति चानन्तर्यार्थत्वे यथा धर्मजिज्ञासा पूर्ववृत्तं वेदाध्ययनं नियमेनापेक्षते, एवं ब्रह्मजिज्ञासाऽपि यत्पूर्ववृत्तं नियमेनापेक्षते तद्वक्तव्यं, स्वाध्यायानन्तर्यं तु समानं, नन्विह कर्मावबोधानन्तर्यं विशेषः, न, धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेः," इति साटोपमूचुस्तत्प्रतिब्रूमहे—अत्र स्वाध्यायानन्तर्यं तु समानमित्युक्त्या ब्रह्मजिज्ञासायां स्वाध्यायानन्तर्यस्यौदासीन्येन विवक्षितुमशक्यत्वेऽपि धर्मजिज्ञासायां स्वाध्यायानन्तर्यमङ्गीकृतमिति

स्पष्टं सिध्यति, तत्रैवं वादी प्रष्टव्यः, किं यत्किंचित्स्वाध्यायाध्ययनानन्तर्यं सर्वस्वाध्यायाध्ययनानन्तर्यं वा विवक्षसि, तत्र सर्वस्वाध्यायाध्ययनासम्भवेन प्रथम एवावलम्बनीयः पक्षस्तथा च यथा यत्किंचित्स्वाध्यायाध्ययनानन्तर्यं धर्मजिज्ञासायामेवं नित्यनैमित्तिकादियत्किंचित्कर्मावगमानन्तर्यं ब्रह्मजिज्ञासायामपि सुवचं, यतो भवत्पक्षेऽपि संन्यासिनामेव ज्ञानाधिकारिताया व्यवस्थापनेन संन्यासप्रतिनियतकर्मावगमानन्तर्यस्य भवतोऽप्यापतितत्वात् ब्रह्मचर्यस्य च सर्वाश्रमप्रकृतित्वेन तदनन्तरमेव संन्यासाधिकारिताया वक्तव्यत्वेन तदवगमानन्तर्यस्यावश्याभ्युपेयत्वाच्च । न च ब्रह्मचर्यसंन्यासयोरुपलक्षणत्वमेव ब्रह्मजिज्ञासायां न विशेषणत्वमिति वक्तुं पारयसि, तथा सति संसारस्यानादित्वेन यदा कदाचिद्विद्यमानयोस्तयोरव्यावर्तकत्वेन तत्कारणताया एव दुर्निर्वहत्वप्रसङ्गादित्यादि मदीयब्रह्मसूत्रवृत्तावनुसन्धेयम् ।

अत्रेदमवदधीमहि कर्मावगमानन्तर्यं प्रद्विषतामपि स्वाध्यायानन्तर्यं कर्मब्रह्मसाधारणं सोढव्यमत एव इहैव "स्वाध्यायानन्तर्यं तु समान"मित्युक्तं, ततश्च स्वाध्यायानन्तर्यस्याथ–शब्दार्थत्वासंभवेऽपि स्वाध्यायाध्ययनाव्यभिचारित्वं ब्रह्मजिज्ञासायां प्रयत्नशतेनापि व्यवस्थापनीयं, न च तत्संभवति वेदाध्ययनानधिकारिणामपि ब्रह्मावगमसम्पत्तिसिद्धेरसकृत्पुराणेतिहासेषु प्रसिद्धेः । एवं च यथा स्वाध्यायानन्तर्यं ब्रह्मजिज्ञासायां भवता समर्थनीयं तथैव कर्मावगमानन्तर्यं ममापि सुसमर्थमिति न कश्चिद्विशेषोऽभिनिवेशं विना ।

एतेन धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेरिति विभीषिकाप्रदर्शनमपि मन्देष्वेव स्वभावभीरुषु न तु

युक्तितनुचेषु कुशलेषु पूर्वोक्तरीत्या ब्रह्मजिज्ञासायां कर्मावगमानन्तर्यस्य कर्मब्रह्मजिज्ञासयोः स्वाध्यायानन्तर्यस्येव सुनिर्वहत्वात्।

यदपि परे कर्मब्रह्मजिज्ञासयोरधिकृताधिकारं शेषशेषिभावं चामृष्यमाणा भगवद्बोधायनपक्षं प्रतिक्षेप्तुमुद्यच्छन्ते कुशकाशमवलम्बमानाः तदेतदपि प्रमाणपरतन्त्राणामरुन्तुदम्, यतः, "अधीत्य विधिवद्वेदान् पुत्रांश्चोत्पाद्य धर्मतः। इष्ट्वा च शक्तितो यज्ञैर्मनो मोक्षे निवेशयेत्" इति स्मृतिः कर्मस्वधिकृतस्यैव स्पष्टं मोक्षाधिकारमाह, अतथाऽऽचरतश्चाह सपातं पुनरनधिकारमपरा स्मृतिः "अनधीत्य द्विजो वेदाननुत्पाद्य तथा सुतान्। अनिष्ट्वा चैव यज्ञैश्च मोक्षमिच्छन् व्रजत्यधः॥ इति, एवं च यथाऽऽहिताग्नेरेवाग्निसाध्येषु कर्मस्वधिकारो यथा वा चातुर्मास्येनेष्टवत एव सोमेऽधिकारो यथा वा विधिवदधीतवेदस्यैव कर्मस्वधिकारस्तथाऽवगतकर्मण एवोत्तरमीमांसास्वधिकार इति सिध्यत्यधिकृताधिकारः कर्मब्रह्ममीमांसयोः, अननुष्ठितकर्मणामपि ब्रह्मजिज्ञासोदयेन कर्मणामयथाभावस्तु अनधीतस्वाध्यायानामपि ब्रह्मजिज्ञासोदयेन समानयोगक्षेम इति न ममैव बहु प्रयतनीयमित्यब्रूमहि।

अस्ति च शेषशेषिभावोऽपि कर्मब्रह्ममीमांसयोः, कर्मणां ब्रह्मजिज्ञासोद्देशेनानुष्ठितानां ब्रह्मजिज्ञासाफलकत्वेन परोद्देशप्रवृत्तत्वरूपपारार्थ्यस्याऽङ्गस्यैव समर्थनात्। न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुरिति श्रुतिस्तु भगवदनर्पितानां कर्मणां मोक्षहेतुत्वाभावमाह न तु कर्मणामेवायथाभावं, त्यागेनैके अमृतत्वमानशुरिति इहैव त्यागस्य मोक्षहेतुत्वाभिधानात् त्यागश्चेह, "यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते" इति स्मार्तो ग्राह्यो न पराभिमतः कर्मस्वरूपत्यागस्तथा च सकामकर्मणां

ज्ञानोत्पादविरोधित्वेऽपि भगवदर्पितानां निष्कामकर्मणां ज्ञानहेतुतया शेषशेषिभावः साधु समर्थितो भवति ।

अत एव तु संक्षिप्याखिलवेदान्तार्थनिरूपणव्याजेन अष्टादशाध्यायीस्वरूपगीतार्थोपसंजिहीर्षया च प्रवृत्तेऽष्टादशाध्याये सन्न्यासस्य त्यागस्य च तत्त्वं पृष्टवतेऽर्जुनाय "काम्यानां कर्मणां न्यासं सन्न्यासं कवयो विदुः । सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः" इति भगवता पूर्वमज्ञानावस्थायामनुष्ठितानां काम्यकर्मणां संसारस्यानादितया भोग्यकर्मप्रचयस्य चानन्ततया भोगेन क्षपणासंभवाद् भगवति भरन्यासः सन्न्यासः, सर्वकर्मफलत्यागश्च त्याग इत्युपदिष्टो न तु कर्मणां स्वरूपत्यागः । एवमेव तु त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः । यज्ञदानतपः कर्म न त्याज्यमिति चापरे ॥ इति परमतमुपन्यस्य अतिस्निग्धाय शिष्यायार्जुनाय शास्त्रतत्त्वमुपदिदिक्षुः श्रीभगवान् ।

"निश्चयं शृणु मे तत्र त्यागे भरतसत्तम ! ।
त्यागो हि पुरुषव्याघ्र ! त्रिविधः परिकीर्तितः ॥
यज्ञो दानं तपः कर्म न त्याज्यं कार्यमेव तत् ।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥
एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च ।
कर्तव्यानीति मे पार्थ ! निश्चितं मतमुत्तमम् ॥
नियतस्य तु सन्न्यासः कर्मणो नोपपद्यते ।
मोहात्तस्य परित्यागस्तामसः परिकीर्तितः ॥
दुःखमित्येव यत् कर्म कायक्लेशभयात् त्यजेत् ।
स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥

कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन ।
सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः ॥

इत्यभिदधौ,

ततश्च सात्त्विकराजसतामसभेदभिन्नं त्यागमुपदिशता पावनानि मनीषिणामिति कर्मणां ज्ञानवतामप्युपादेयतामभिब्रुवाणेन भगवता कर्मफलत्याग एव त्यागो न तु कर्मणां स्वरूपत्याग इति स्पष्टमाख्यायते इति न किञ्चिच्चोद्यमवशिष्यते ॥

तदेवं सति यो वेदान्तवाक्यानां सहकारितयाऽपि कर्मानपेक्षाप्रतिपादनपरः "न च वाक्यं सहकारितया कर्म्माण्यपेक्षत इति युक्तम् । अकृतकर्म्मणामपि विदितपदतदर्थसङ्गतीनां समधिगतशाब्दन्यायतत्त्वानां गुणप्रधानभूतपूर्वापरपदार्थाकाङ्क्षासन्निधियोग्यतानुसन्धानवतामप्रत्यूहं वाक्यार्थप्रत्ययोत्पत्तेः । अनुत्पत्तौ वा विधिनिषेधवाक्यार्थप्रत्ययाभावेन तदर्थानुष्ठानपरिवर्जनाभावप्रसङ्गः । तद्बोधतस्तु तदर्थानुष्ठानपरिवर्जने परस्पराश्रयः । तस्मिन् सति तदर्थानुष्ठानपरिवर्जनं, ततश्च तद्बोध इति । न च वेदान्तवाक्यानामेव स्वार्थप्रत्यायने कर्म्मापेक्षा, न वाक्यान्तराणामिति साम्प्रतम् । विशेषहेतोरभावात्" इति भामतीनिबन्धः सोऽपि अल्पक्षधिषणाधर्षणायित एव, ज्ञानिनोऽपि कर्मणामनुष्ठेयत्वप्रतिपादकनिरुक्तभगवद्गीतावाक्यविरोधाद् वक्ष्यमाणयुक्तिविरोधाच्च ।

अत्रैवं पराक्रम्यते—इह वाक्याद्वाक्यार्थावगमः निष्कम्पप्रवृत्तिनिवृत्तिलक्षणफलपरिपाकपर्यन्तं विवक्षितोऽथवा जरद्गवादिवाक्यसाधारण्येन पदार्थोपस्थितितदसंसर्गाग्रहपर्यवसन्नोऽथवा खपुष्पनरशृङ्गादिप्रतिपादकवाक्यसाधारण्येन वैकल्पिकप्रत्ययरूपोऽत्यन्तासदर्थसाधारण इति विवेचनीयं, तत्र द्वितीयतृतीयपक्षयोःरुत्पन्नोऽपि

बोधो न निष्कम्पप्रवृत्तिलक्षणफलपाकपर्यवसायीति प्रथम एव पक्षः क्रोडीकरणीयस्तत्सामग्री च नाकाङ्क्षासन्निधियोग्यत्वानुसन्धानमात्रं पौष्कल्येन तद्वतामपि अननुष्ठितकर्मणामदृष्टविशेषशून्यानां दशकृत्वः शाब्दबोधयतामपि लौकिकवैदिकवाक्येभ्यः प्रवृत्तिनिवृत्त्योरदर्शनात्, अधीष्व वत्सेति प्रत्ययिततरपिचादिवाक्यं शृण्वतां तदर्थं सम्यगाकलयतामपि अदृष्टविशेषप्रतिबन्धेऽधिजिगांसानुदयदर्शनाददृष्टविशेषे चाशु तथाप्रवृत्तिदर्शनात्तत्कारणीभूतकर्मणां कारणत्वसिद्धेरवर्जनीयत्वात्, अदृष्टस्य साधारणकारणत्वेन तद्धेतुतासिद्धेरनुल्लङ्घनीयत्वाच्च । यदि तु साधारणकारणत्वाभ्युपगमेऽपि असाधारण्येनादृष्टतत्कारणकर्मादेः कारणत्वं निषिषेधयिषितमिति मन्यसे तर्हि अदृष्टादेः सामान्यतः साधारणकारणत्वेऽपि तत्तत्कार्यविशेषे तत्तदसाधारणरूपेणैव कारणताया वक्तव्यत्वादसाधारकारणत्वमप्यावश्यकमिति रूपविशेषेण साधारणासाधारणकारणतायाः सुवचतया न तदपि चोद्यमवतरति, अस्तु वा साधारणकारणमेवादृष्टतज्जनककर्मादिकं तत्रापि न नो द्वेषस्ततोऽप्यस्मदभिप्रेतादृष्टादिकारणत्वसिद्धेरप्रत्यूहत्वात् ।

यच्च अकृतकर्मणां वाक्याद्वाक्यार्थावगमानुत्पत्तौ विधिनिषेधशास्त्रैर्वाक्यार्थावगमासंभवेन तदनुष्ठानवर्जनाभावोद्भावनं तत्तु शिष्यधीव्यामिश्रणमात्रं भवन्मते पूर्वपूर्वाध्यासव्यक्तीनामुत्तरोत्तराध्यासहेतुताया इव पूर्वपूर्वादृष्टव्यक्तीनामुत्तरोत्तरभाविकार्यहेतुतायाः सिद्धान्तसिद्धतया प्राचीनकर्मजन्यादृष्टविशेषेण विधिनिषेधशास्त्रेभ्यो निष्कम्पप्रवृत्तिनिवृत्तिरूपफलपर्यवसायिबोधसम्भवेन तादृशशङ्कायाः सुदूरपराहतत्वात्, ।

एतेन "तद्बोधतस्तु तदर्थानुष्ठानवर्जने परस्पराश्रयः तस्मिन्‌सति तदर्थानुष्ठानवर्जनं ततश्च तद्बोध" इति भामतीनिबन्धोऽप्यपास्तः, विधिनिषेधशास्त्रैर्वाक्यार्थे जननीये पूर्वोपार्जितकर्मजन्यादृष्टव्यक्तेरपेक्षणीयतया तादृशादृष्टव्यक्तेश्च पूर्वोत्पन्नया स्वोत्पत्तौ स्थितौ ज्ञप्तौ वा जनिष्यमाणायास्तादृशविधिनिषेधशास्त्रबुद्धेरनपेक्षणीयतयाऽपेक्षितुमशक्यत्वाच्च परस्पराश्रयदोषशङ्काया अन्तरितुमप्यशक्यत्वात्, ।

न हि ययाऽदृष्टव्यक्त्या विधिनिषेधशास्त्रार्थावगमः सैव व्यक्तिस्तयैव विधिनिषेधशास्त्रार्थावगत्या तदानीन्तन्या जन्येत्यातिष्ठामहे यतो दोषसम्भावना स्यात् ।

यदपि "तत्त्वमसीति वाक्यात् त्वंपदार्थस्य कर्त्तृभोक्तृस्वरूपस्य जीवात्मनो नित्यशुद्धबुद्धोदासीनस्वभावेन तत्पदार्थेन परमात्मनैक्यमशक्यं द्रागित्येव प्रतिपत्तुम् आपाततोऽशुद्धसत्त्वैर्योग्यताविरहनिश्चयात् । यज्ञतपोदानतनूकृतान्तर्मलास्तु विशुद्धसत्त्वाः श्रद्दधाना योग्यतावगमपुरःसरं तादात्म्यमवगमिष्यन्तीति चेत् । तत्किमिदानीं प्रमाणकारणं योग्यतावधारणमप्रमाणात्कर्म्मणो वक्तुमध्यवसितोऽसि प्रत्यक्षाद्यतिरिक्तं वा कर्म्मापि प्रमाणम् । वेदान्ताविरुद्धतन्मूलन्यायबलेन तु योग्यतावधारणे कृतं कर्म्मभिः" ॥

इति भामत्यामुक्तं तदपि यथाश्रुतप्रतिपत्तृशिष्यप्रज्ञाप्रतारणमात्रम्, अत्र तत्किमिदानीं प्रमाणकारणं योग्यत्वावधारणमप्रमाणात्कर्मणो वक्तुमध्यवसितोऽसि प्रत्यक्षाद्यतिरिक्तं वा कर्मापि प्रमाणमिति वदता प्रमाणस्य स्वरूपसतोऽनन्यापेक्षस्य प्रमाकारणत्वमभिमन्यते? उत प्रमाणस्यैव प्रमाणसहकारित्वं नाप्रमाणस्येत्यभिप्रेयते? अथवा

प्रमाणसहकारितामात्रेण प्रमाणत्वमापाद्यते? नाद्यः स्वरूपसतश्चक्षुरादेः प्रमाकारणत्वाङ्गीकारे सातत्तिककार्योत्पादप्रसङ्गात्, तदेकमात्रकार्योत्पादे च कार्यान्तरानुत्पादप्रसङ्गात्, न ह्येकं किंचित्पर्याप्तं स्वकार्ये किंतु संभूयेति सिद्धान्तव्याघाताच्च, तथा सति चक्षुःपिधानभित्तिव्यवधानादिसत्त्वेऽपि स्वरूपसता चक्षुषा ज्ञानोत्पादावश्यंभावप्रसङ्गाच्च। द्वितीये तु प्रमाणस्य चक्षुरादेर्व्याप्तिज्ञानादिस्वरूपानुमानप्रमाणसहकारित्वेऽपि नैष नियमो यत्प्रमाणमेव प्रमाणसहकारीति अप्रमाणस्यापि कामलादिदोषाभावस्य चक्षुरादिसहकारित्वादप्रमाणस्यापि वा बाधाद्यभावस्यानुमानादिसहकारित्वात्, अतादृशस्यैव शक्तिज्ञानस्य शक्ये सादृश्यज्ञानादेश्च शब्दोपमानसहकारितायाः सर्वसंप्रतिपन्नत्वाच्च, तृतीयस्तु पक्षोऽप्रमाणस्यापि शक्तिज्ञानादेः प्रमाणं सहकुर्वतोऽप्यप्रमाणत्वस्य सर्वसंप्रतिपत्त्यैव परास्तः।

यदि तु योग्यत्वावधारणं क्लृप्तसामग्र्यैव भवति न तु कर्मादृष्टादिद्वारेत्यभिप्रैषि तर्हि कर्मादृष्टादिकं न क्लृप्तसामग्र्यामन्तर्भवतीति कुतोऽवधारितमायुष्मता, यदि वेदान्ताविरुद्धतन्मूलन्यायबलेन योग्यत्वावधारणे तद्भिन्नस्य कर्मादेरन्यथासिद्धिं समर्थयसे तर्हि सहस्रशो वेदान्ताविरुद्धतन्मूलन्यायाभियोगभाजामपि तत्त्वमस्यादिवाक्येभ्योनाखण्डार्थधीसमुत्पत्तिरिति तस्यैवान्यथासिद्धया कुतो न संतुष्यसि, यदि तु कर्मादृष्टादेरन्तःकरणशुद्धावेवोपयोगो न तु वाक्यार्थज्ञानेऽपीत्यभिसंधत्से, तत्किमदृष्टं न कार्यमात्रे हेतुः, वेदान्तवाक्योत्था धार्वा न[1] कार्यमात्रान्तर्गता, केनचिद्रूपेण साधारण-

१ वेदान्तवाक्योत्थधियमवष्टभ्य पराक्रान्तमस्माभिर्वृत्तिषु।

कारणस्यैव वा सतो रूपान्तरेण नासाधारणकारणत्वमेकस्य वा कारणस्य नानाकार्यजनकत्वं न निरीक्षितवानसि न जातु दैवं चैवात्र पञ्चममिति पारमेश्वरवचसि वा क्षणमपि श्रद्धां व्यधाः, यद्देवं कर्मजन्यादृष्टस्यान्तःकरणशुद्धावेवोपयोगमतिप्रयासेन समर्थ्य वाक्यार्थबुद्धौ तस्यान्यथासिद्धिसमर्थने कृतपरिकरो गृहीतदीक्ष इवाभासि ।

यदि त्वदृष्टस्य कारणत्वेऽपि कर्माणि तेनान्यथासिद्धानीति ब्रूषे, एवं तर्हि पाणिव्यापारव्यवहितत्वात्कुलालस्य घटहेतुत्वं स्वव्यापारव्यवहितत्वाद्दण्डस्यैव वा तद्धेतुत्वं दुःसमर्थं स्यात्, न स्याच्च रवेरर्थप्रकाशकत्वं किरणव्यवहितत्वात्, वृष्टेर्वा सुभिक्षहेतुत्वं कृषिनदीपूरभेदादिव्यवहितत्वात्, वेदेऽप्यारुण्यादीनां द्रव्यद्वारकक्रयसाधनत्वममुख्यं स्यादिति त्वयापि "न हि व्यापारेण व्यापारिणोऽन्यथासिद्धि" रित्यङ्गीकरणीयं, तत एव च ममापि कर्मणां कारणत्वनिर्वाह इति किन्ते चोद्यमवशिष्यते । अत एव तु नापूर्वेण यागोऽन्यथासिद्ध इति वेदविदामुद्घोषोऽन्यथा तु अपूर्वेण यागोऽन्यथासिद्ध इति सर्वैवोन्मूलिता मीमांसेत्यतिकष्टम्, एवमेव तु भगवान् कृष्णद्वैपायनोऽपि कर्मजन्यस्य भगवत्प्रसादलक्षणापूर्वस्य सर्वफलहेतुतामाह "फलमत उपपत्ते"रिति, एवं च तत्त्वमस्यादिवाक्यार्थबुद्धौ तद्धेतुषु योग्यतादिज्ञानेषु च प्रत्येकमेव कार्येषु कर्मणां कारणत्वसिद्धेरवर्जनीयतया ज्ञानेऽपि कर्मणां कारणत्वमित्यविचाल्योऽयं बृहस्पतेरपि बोधायनीयो वैदिकः पक्ष इति कृतधियां सुधियां परामर्शः ॥

यदपि प्रवर्तकमानमेयत्वोदासीनमानमेयत्वलक्षणवैलक्षण्यवता प्रमाणेन बाधितत्वात्कर्मब्रह्मणोर्न तत्प्रतिपादकशास्त्रस्य क्रमनियमः, धर्मो हि यागादिलक्षणः प्रवर्तकमानेन यजेतेत्यादिना मी-

यते, ब्रह्म तूदासीनेन तत्त्वमस्यादिवाक्येनेति, तदिदमप्यविचारसारं यतो मानभेदो न मेयवैजात्यं प्रयोजयति, एकस्मिन्नेव घटादौ प्रत्यक्षानुमानादिप्रमाणसंप्लवस्य, धर्माधर्मयोर्वा अनुमानागमादिलक्षणप्रमाणस्य संप्लवेऽपि प्रमेयस्यैकजातीयत्वात्, यदि तु नियोगविषयत्व-तदविषयत्वलक्षणवैलक्षण्यं कर्मब्रह्मनिष्ठं विवक्ष्यते तदा तादृशावान्तरविशेषस्य सर्वत्राप्यावश्यकत्वेन कुत्रापि क्रमो विवक्षितुं न शक्यः स्यात्ततश्च द्वादशाध्याय्या अपि प्रतिपाद्यार्थभेदेन क्रमाविवक्षणेऽसंगतत्वापत्तिरिति वृद्धिमिच्छतोमूलहानिरित्यतिकष्टम् ॥

किंचाथ-शब्दस्य कर्माधिगमनैरपेक्ष्येण साधनचतुष्टयसंपत्त्यानन्तर्यार्थकत्वे शूद्राणामपि ब्रह्मविद्याऽधिकारप्रसङ्गो दुर्वारः कर्मिणां तु ब्रह्मविद्याऽधिकारे विधिवदधीतवेदानामेव कर्मस्वधिकृतत्वेन शूद्रादेश्च तदसंभवान्नापत्तिः । किंच वर्णाश्रमधर्मनिरपेक्षस्य ज्ञानमात्रस्य मोक्षमुख्योपायत्वे अपशूद्राधिकरणमपि कदर्थितं स्यात् ।

केचित्तु अनुपनीतानां वरुणवृहस्पतीन्द्रादीनां ब्रह्मविद्यावत्त्वाधिगमादनुपनीताः शूद्रा अपि विषयसौष्ठवाकृष्टा लौकिकसामर्थ्यभाजश्च प्रवर्तेरन् विद्यास्विति ते मा च प्रवर्तिषत भ्रान्त्येति बोधनमपशूद्राधिकरणफलं, देवास्तु देवविग्रहग्राहकपुण्यपुञ्जेन स्वतःप्रतिभातवेदा इति तेषामुपनयनं नावश्यकमित्यातस्थिरे, तदिदमसमीक्ष्याभिधानमिति न मृष्यामहे देवेष्वपि ब्रह्मक्षत्त्वादिलक्षणवैर्णिकविभागसद्भावेन तत एव तेषामुपनयनकल्पनेनानुपनीतत्वविरहात्, तथा हि श्रुतिः "ब्रह्मा वृहस्पतिः क्षत्रमिन्द्रो मरुतो वै देवानां विश" इति,

न च आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति श्रुत्या श्रुतिश्रवणजन्यातिशयस्यैव साक्षात्कारहेतुतया प्रतिप-

ज्ञत्वादकृततथाश्रवणस्य नाधिकारो ब्रह्मविद्यास्विति न दोष इति, वाच्यम्, तथा सति मुमुक्षुत्वादीनामिव श्रवणजन्यातिशयस्यापि ब्रह्मज्ञानात्पूर्वमपेक्षणीयत्वे साधनपञ्चकस्य पूर्ववृत्तत्वं प्राप्तमिति साधनचतुष्टयपूर्ववृत्तित्वोक्ति भृशं क्षुभ्येत, तदिष्टापत्तौ च कर्मावबोधपूर्वभावे एव भगवद्बोधायनाभिमते किमित्यकारणः प्रद्वेषः, न चानवगतकर्मणामप्यधीतवेदान्तानां ब्रह्मजिज्ञासोदयादवगतकर्मणामपि च साधनचतुष्टयशून्यानां जिज्ञासाऽनुदयान्न तथेति युक्तं, "कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते" "ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः" इत्यादिप्रमाणशतेन कर्मणां ज्ञानहेतुतासिद्धौ कर्माधिगमपूर्ववृत्तित्वोक्तेरावश्यकतया कर्मावगमे * वैजात्यमभ्युपेत्य जन्मान्तरसाधारणकर्मावगमस्य ब्रह्मज्ञानहेतुतां वाङ्गीकृत्य व्यभिचारयोः सुपरिहरत्वेन कर्मब्रह्मावगत्योः शास्त्रावगतकार्यकारणभावस्याबाध्यमानत्वात् । एवमेव तु अत्यन्तान्तरङ्गं शिष्यमुपलभ्य भगवानपि गीतासु "यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् । यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणमित्यादिना कर्मणामुपादेयत्वमसकृदुपदिदेशेत्यब्रूमहि इह चापरच चेति ॥

अत्रेदमालोचयामः—साधनचतुष्टयसंपन्नाः शूद्रादयोऽपशूद्राधिकरणेन ब्रह्मविद्यायामनधिकारं बोध्यन्ते ? उतासंपन्नाः ? आहोस्वित्तदुभयसाधारणाः, न तावदाद्यः साधनसंपन्नानां शूद्राणामपि पुराणेतिहासप्रमाणिकाया विशिष्टज्ञानवत्ताया दुरपह्नवत्वेन उपायो हि वार्यते न फलमिति न्यायेन फलपरिपाकवतां तादृशां धर्मव्याधप्रभृतीनां ब्रह्मविद्याऽनधिकारितायाः बाधितमर्थे वेदोऽपि न बोध-

* यावता ज्ञानोत्पादप्रतिबन्धककल्मषापनयसम्भवस्तावत्त्वलक्षणवैजात्यमिष्टाभिमतम् ॥

यतीति न्यायेन श्रुतिसहस्रेणापि बोधयितुमशक्यत्वात् । व्याधस्य हि विद्यासु विनयेन स्वानधिकारं ख्यापयतोऽतिनिर्बन्धेन गुरूकरणं स्मर्यते, ततश्च यं महर्षयोऽपि ब्रह्मविद्यासु उपदेष्टारं वव्रिरे तस्य स्वयं विद्यायां कः संशयोऽवशिष्यते, न द्वितीयः साधनशून्यानामनधिकारितायाः स्वतः परिप्राप्तत्वात्, न ह्यनधिकारादनधिकार इत्यपि वेमाम, तथा सत्यनधिकारिणां साधनचतुष्टयशून्यानामैहिकामुष्मिकार्थानुरागवतां श्रोत्रियाणामप्यनधिकारबोधनाय पृथगधिकरणारम्भस्यावश्यकत्वापातात् । न हि साधनशून्यैः शूद्रैरेधाधिकमपराद्धं, यदि तु अध्ययनगृहीतस्वाध्यायजन्यतदर्थज्ञानवत एव वैदिकेष्वधिकार इत्यपशूद्राधिकरणे अध्ययनवेदवाक्यश्रवणादिविधुरस्य शूद्रस्य विद्याऽधिकारनिषेधात्, न शूद्राय मतिं दद्यादिति स्मृतेरापाततोऽपि तस्य विद्यामहिम्नाऽवगत्युपायासंभवेन तदर्थित्वानुपपत्तेश्च शूद्रस्य विद्यायामनधिकार इति ब्रूषे हन्त तर्हि अर्थित्वसामर्थ्यशून्यशूद्रस्य विद्याऽनधिकारबोधने अपशूद्राधिकरणवैयर्थ्यशङ्कां नोत्तीर्णोऽसीति घट्टकुट्यां प्रभातं, न च विषयसैाष्ठवेनार्थिताया लौकिकसामर्थ्यसत्त्वेन च प्रवर्तमानाः शूद्राः प्रत्याचिख्यासिता विद्यायामिति तदधिकरणसङ्गतिरिति वाच्यम्, एवं सति हि साधनचतुष्टयसंपन्नानधिकारिणोनिर्विशेषमात्मतत्त्वं चाधिकृत्य प्रवृत्तासु ब्रह्मविद्यासु मुधैव चेच्छूद्रा निराक्रियन्ते तर्हि नटान् विटान् गणिका गायकांश्चापि प्रत्याख्यातुमधिकरणान्तरमारम्भणीयं स्यान्न हि एतेऽप्यधिकुर्वते, कश्च तथा सति कामहतं श्रोत्रियमपेक्ष्य शूद्रादेर्विशेष उक्तः स्यादनधिकारादेवानधिकारसमर्थने इति पूर्वमेव समगरिष्महि ।

यदि तु वेदाख्याक्षरराशेरर्थतः स्वरूपतश्च ग्रहणानधि-

कारो बोध्यत इत्युच्यते तर्हि अविद्यैकप्रत्युपस्थापितस्वरूपस्य ग्रहीतृग्राह्यग्रहणस्वरूपप्रपञ्चस्य वस्तुयाथात्म्यज्ञानैकनिवर्त्यस्य तेनैव निवर्हणे किं वेदग्रहणेन । न हि भवन्मते कर्मकाण्डस्येव ज्ञानकाण्डस्य प्रवृत्तिरविद्यावत्पुरुषमवष्टभ्य यतो वर्णाभिमानिनस्तस्य निषेधः सफल इति वक्तव्यं स्यात् । यदि तु व्यवहारप्रवृत्तं पुरुषमभिप्रेत्य निषेधसाफल्यं समर्थयसे तदाऽप्यपेतब्रह्मक्षत्रादिभेदमात्मानमवगच्छन्तमुपक्रम्य प्रवृत्तेषु वेदान्तेषु तादृशार्थाभिधाने कामचिकित्सातन्त्रयोरपीहैव मीमांसनप्रसङ्गः, अपशूद्राधिकरणविचारस्येव तयोरप्युपयोगानुपयोगयोः साक्षात्पारम्पर्येण च समानत्वात् । किं च कथमपि शिष्यस्य वर्णाश्रमकर्मवयोऽभिमानसंबन्धोभवेदपि परं गुरोर्ज्ञानस्य परां काष्ठामुपेयुषस्तदसंभवेन "संस्कारपरामर्शात्तदभावाभिलापाच्चे"त्यादिसूत्रेण शरीरमात्राधेयातिशयानां तदभिमानवत्पुरुषाधेयातिशयानां वा संस्काराणामतिदूरोपकारकाणामिहापेक्षितत्वाभिधानमसंगतमित्यतिस्फुटमेव, क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गादित्यनेनापि च पौत्रायणस्य क्षत्रियत्वसमर्थनं व्यर्थं विद्यायाः सर्वाभिमानविप्रतीपस्वभावायाः क्षत्रियत्वाद्यनपेक्षत्वात्तद्विरोधिस्वरूपत्वाच्चेत्यसकृदवोचाम । यदि तु अधीतवेदो हि विदितवेदार्थो वेदार्थेष्वधिक्रियते, न च शूद्रस्य वेदाध्ययनमस्ति उपनयनपूर्वकत्वाद्वेदाध्ययनस्य, उपनयनस्य च वर्णत्रयविषयत्वादिति ब्रूषे तर्हि स्वस्ति भवते आयातोऽसि मार्गेण इदमभिधापयितुमेवायमस्मदीयो भगीरथरथपथाश्रयः, तद्यथा अध्ययनेन विदितवेदार्थस्य वेदार्थेषु कर्मोपासनाज्ञानेष्वधिकारः, तच्चाध्ययनमुपनयनपूर्वकमिति व्यापकोपनयननिवृत्त्या अध्ययननिवृत्तेः तद्व्याप्यानां कर्मोपासनाज्ञानानां निवृत्तिरिति फलति । ततश्चोपनयननिवृत्तिद्वार-

काध्ययनाख्यकर्मनिवृत्त्या शूद्रस्य ब्रह्मविद्यानिवृत्तिसाधने कण्ठोक्तं विद्यायाः कर्मावगमानन्तर्यं, यदि तु साधनचतुष्टयस्येव कर्मावगमस्य नाधिकारिविशेषणत्वमिति तत्पक्षाक्षेप इत्यभिसंधत्से तर्हि तदपि नातिशङ्कनीयमिति ब्रूमः, यतः स्वविषयानुष्ठानजन्यापूर्वसंबन्धेन कर्मावगमस्य यागस्येवापूर्वसंबन्धेन कारणतायाः सुघटत्वादधिकं तु अस्मदीय[1]वृत्तावनुसंधेयमित्युदास्महे ॥

साधनचतुष्टयसदसद्भावनिरपेक्षाः शूद्राः प्रत्याचिख्यासिता विद्यास्विति तृतीयस्त्ववशिष्टपक्षः पूर्वपराकृतपक्षद्वयसमानयोगक्षेम इति तदपाकरणाय न पृथग् यतनीयमवशिष्यते ॥

न चार्थितायाः सामर्थ्योपबृंहिताया एवाधिकारकारणत्वात्, केवललौकिकसामर्थ्यस्य चादृष्टे कर्मणि अपर्याप्ततया शास्त्रीयेऽर्थे शास्त्रीयं सामर्थ्यमप्यपेक्षितमिति तस्य शूद्रेष्वध्ययनविरहेण निराकृतत्वान्नावकल्पन्ते शूद्रा उपनिषद्भ्योऽधिगन्तुं ब्रह्मविद्यामिति वाच्यम् ॥

यतोऽपशूद्राधिकरणेन साधनचतुष्टयसंपन्ना वार्यन्ते? उतासंपन्ना इति जिज्ञासायामुक्तमेवावर्तते, इति समशङ्कोत्तरमिदं नाशङ्कनीयं, यदि तु साधनचतुष्टयसंपत्तावपि शूद्रा नाधिकृता विद्यायामिति बोधनमपशूद्राधिकरणकृत्यमित्युच्यते तर्हि किमुद्दश्य तत्तस्य कृत्यमित्युच्यताम्, तत्र यदि वेदप्रयुक्त्यभावाच्छूद्राणामनधिकारबोधकं तदिति ब्रूषे तर्हि अस्तु शूद्रत्वाभिमानिनो द्विजत्वप्रयोज्येष्वाधानादिष्वनधिकारो यथा राजजातीयाभिमानकर्तृके राजसूये ब्राह्मणवैश्ययोस्तथाऽभिमन्यमानयोः, परं तु अशनायाद्यतीतमपेतब्रह्म-

१ ब्रह्मसूत्राणामक्षरस्वारस्यसंरक्षणेन अर्थकथनरूपा व्याससूत्राणां वृत्तिर्मत्प्रणीता यामचिरान्मुद्रयितुमिच्छामः ।

त्वचशूद्रत्वादिभेदमसंसार्यात्मतत्त्वमधिकृत्य प्रवृत्तासु ब्रह्मविद्यासु साधनचतुष्टयसंपन्नस्य जात्या शूद्रस्य शूद्रत्वाभिमानरहितस्यानधिकारे कारणं किमिति तावतापि नोक्तं भवति, न हि ब्राह्मणत्वाभिमाननिबन्धना द्विजत्वाभिमाननिबन्धना ब्रह्मविद्या इत्युत्प्रेक्षितुमपि शक्यं, तस्याः सर्वाभिमानविप्रतीपभूमित्वात्, यदि तु साधनचतुष्टयवतामपि चिरसंभृताऽविद्यासंस्कारानुवृत्त्या मनागपि शूद्रत्वाभिमानोऽनुवर्त्तते इति तादृशा एव प्रत्याचिख्यासिता ब्रह्मविद्यासु अत एव तु "शूद्रयोनावहं जातो नातोऽन्यद्वक्तुमुत्सहे" इति वदतां ज्ञानकाष्ठामुपागतानामपि महात्मनां विदुरप्रभृतीनां वेदप्रयुक्त्यनधिकारनिबन्धनं नातोऽन्यद्वक्तुमुत्सहे इत्यभिधानमित्युच्यते तर्हि साधनचतुष्टयमुत्कीर्त्य "तेषु हि सत्सु प्रागपि धर्मजिज्ञासाया ऊर्द्ध्वं च शक्यते ब्रह्म जिज्ञासितुं ज्ञातुं च न विपर्यये" इति साधनचतुष्टयस्यानन्यापेक्षकारणत्वाभिधानमुपरुध्येत, विरुध्येत च "तस्मात्तस्याचानन्तर्यं वक्तव्यं यद्विना ब्रह्मजिज्ञासा न भवति यस्मिन् सति तु भवन्ती भवत्येवे" ति भामतीनिबन्धोऽपि ॥

किंच विद्यासु विदुरप्रभृतीनामनधिकारबोधनमपशूद्राधिकरणफलमित्यत्यन्तं दुर्भणितं भवान्तराधिगतज्ञानानां कृतकार्याणां तेषां प्रत्याख्यातुमशक्यत्वात्, अतएव तु "विदुरप्रभृतयस्तु शूद्रयोनिप्रभवा अपि विशिष्टज्ञानसंपन्नाः स्मर्यन्ते" इति स्वयमप्युक्तम्, एवमेव तु इहैव भारतवचने नातोऽन्यद्वक्तुमुत्सहे इति वेदानभिधातृत्वमेव बोध्यते न तु वैदिकार्थानभिज्ञत्वमितरथा तु नातोऽन्यज्ज्ञातुमीश्महे इत्युक्तं स्यादिति ॥ तस्मादुपासनानात्मकस्य वाक्याद्वाक्यार्थावगमरूपस्य कर्म्मादृष्टाद्य[1]किंचित्करपदार्थमुख-

[1] कर्मादृष्टादीनामकिंचित्करत्वाभिधानं परमतेन ।

निरीक्षणनिरपेक्षस्य ज्ञानस्य वैदिककर्म्मसु व्यापृतानां त्रैवर्णिकानां दुरासदत्वेऽपि तदनधिकारिणां परेषामेव श्रौतस्मार्तानपेक्षसमीचीनन्यायाभियोगभाजां तज्ज्ञानं सुसम्पाद्यमिति साधु मीमांसाद्वयार्थनिरूपणमिति कृतं वाचां विसर्गः ॥

भवतु किमप्येतत् संहितमसंहितं वा मीमांसाद्वयमिति सर्वथाऽपि तु जैमिनीयषोडशाध्यायी कर्म्ममीमांसाशास्त्रं, चतुरध्यायीस्वरूपं च व्यासमुनिप्रणीतं वेदान्तशास्त्रमित्यविवादपदं व्याससूत्राणां व्याख्यानं, शिष्टसमादृतत्वेनार्षत्वेन युक्तिसिद्धार्थाभिधायित्वेन विश्वासभूमिर्बोधायनवृत्तिरिवास्य चादिमं व्याख्यानमुपवर्षमहर्षिप्रणीता वृत्तिः, यां शबरस्वामिभृतयोऽत्यन्तप्राचीनमीमांसकाः क्वचित्प्रमाणतया क्वचिच्च निराकरणीयतयोद्धृतवन्तः । आधुनिका अपि मीमांसकाः वृत्तिग्रन्थं स्थलविशेषे संवादितया क्वचिच्च विसंवादितयोपन्यास्थन् ॥

योऽपि ब्रह्मसूत्राणां जैमिनिप्रणीतत्वव्यामोहहेतुरिव नैष्कर्म्यसिद्धिग्रन्थः, तद्यथा "यदपि जैमिनीयं वचनमुद्घाटयसि तदपि तद्विवक्षाऽपरिज्ञानादेवोद्राव्यते किं कारणम् । यतो न जैमिनेरयमभिप्राय आम्नायः सर्व एव क्रियार्थ इति, यदि ह्ययमभिप्रायोऽभविष्य "दथातो ब्रह्मजिज्ञासा जन्माद्यस्य यत" इत्येवमादिब्रह्मवस्तुस्वरूपमात्रयाथात्म्यप्रकाशनपरं गम्भीरन्यायसन्दृब्धं सर्ववेदान्तार्थमीमांसनं श्रीमच्छारीरकं नासूत्रयिष्यत् । असूत्रयच्च !, तस्माज्जैमिनेरेवायमभिप्रायो यथैव विधिवाक्यानां स्वार्थमात्र प्रामाण्यमेवमैकात्म्यवाक्यानामप्यनधिगतवस्तुपरिच्छेदसाम्यादिति" । इति, सोऽपि न तदर्थावगमकः, यतो न जैमिनेरययभिप्राय आम्नायः सर्व एव क्रियार्थ इति, यदि ह्ययमभिप्रायोऽभविष्यत् "अथातो ब्रह्मजि-

ज्ञासा जन्माद्यस्य यत इत्येवमादिब्रह्मवस्तुस्वरूपमात्रयाथात्म्यप्रकाशनपरं गम्भीरन्यायसंदृब्धं सर्ववेदान्तार्थमीमांसनं श्रीमच्छारीरकं नासूचयिष्यत् । असूचयच्च । भगवान् वादरायणो ब्रह्मस्वरूपनिर्दिदिक्षया तथा, ततश्च जैमिनेरेवाम्नायस्य क्रियार्थतामाचक्षाणस्य अक्रियार्थवेदभागस्य च वैयर्थ्यमभिदधानस्य न तात्पर्यं यदुपनिषद्वाक्यानामानर्थक्यमिति किन्तु विधिवाक्यसहपठितानामर्थवादादिवाक्यानां विधिवाक्यैकवाक्यतापन्नानामेवार्थानुष्ठापकत्वलक्षणं प्रामाण्यं, न हि अर्थवादवाक्यानि कञ्चिदर्थं स्तुत्वा निन्दित्वा वा तावता कृतार्थानि, तेषां स्तुतिनिन्दापरत्वे पदस्थानीयतया शाब्दबोधानुपधायकत्वात्, अत एव "विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्यु"रिति स्पष्टं जैमिनिस्तेषामेवैकवाक्यतां प्राह—अयायं भावो नैष्कर्म्यसिद्धिकारस्य जैमिनिव्यासौ गुरुशिष्यौ सन्तौ वेदार्थमीमांसने प्रवृत्तौ परस्परं विप्रसंवदेयातामितरजनानामिवेति न कथञ्चित्सम्भवि उभयोरेवोभयमतानुगन्तृतायाः स्वसूत्रेष्वेव स्फुटमुपलम्भात्, तद्यथा औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं वादरायणस्यानपेक्षत्वात् ॥ अ. १ पा. १०५ इति, एवं भगवान् वादरायणोऽपि परं जैमिनिर्मुख्यत्वात्, ब्राह्मेण जैमिनिरुपन्यासादिभ्यः इत्यसकृदेव जैमिनिमतमुपन्यास्थत् अत एव पराशरोपपुराणादिषु जैमिनिव्यासयोः समं श्रुतिपारदृश्वत्वमुत्कीर्त्यते—अक्षपादप्रणीते च काणादे सांख्ययोगयोः । त्याज्यः श्रुतिविरुद्धोंऽशः श्रुत्येकशरणैर्नृभिः ॥ जैमिनीये च वैयासे विरुद्धांशो न कश्चन । श्रुत्या वेदार्थविज्ञाने श्रुतिपारं गतौ हि तौ ॥ इति, एवं च गुरोर्व्यासस्य मतानुरोधेन जैमिनेरर्थनिरूपणस्यावश्यम्भावे अक्रियार्थाम्नायवैयर्थ्याम्नानं नोपनिषद्वैयर्थ्यसमर्थनाय किन्त्व-

र्थवादादिवाक्यानां विधिवाक्यैकवाक्यतापन्नानां सार्थकत्वाख्याना-येति न तयोर्विसंवादिता । एवं च नैष्कर्म्यसिद्धिग्रन्थे ब्रह्मसूत्राणि जैमिनिमुनिप्रणीतानीत्युक्तमिति भ्रमोन्निराकृतः ।

बोधायनवृत्तेरनादरमूलं विषस्य विषमौषधमित्यवधार्य दत्ता-भयं शून्यवादिमतनिराचिकीर्षया लम्भितपदं निर्विशेषाद्वैतमतमिवे-तस्या आर्षवृत्तेरनादरमूलन्तु प्राभाकरादिमतप्रचारः, ऋषयोहि कर्म-काण्डस्योपासनाकाण्डस्येव भगवदाराधनरूपताममंसत व्यवास्थि-षत च ॥

प्राभाकरप्रभृतयस्तु कर्मस्वेव भोगापवर्गप्रदशक्तिमुपयन्तः का-र्यपरवाक्येभ्य एव शाब्दबोधोपधानमाद्रियमाणा उपनिषदोऽप्यपा-र्थकयन्ति, सोऽयं तेषां वरविघाताय वधूद्वाहः, यस्माद्धि वेदपुरुषा-दाराधनप्रीतात् "फलमत उपपत्ते"रित्यादिप्रमाणैः फलमुदीक्षन्ते वि-चक्षणाः स एव चेदवधारितः पुराणपुरुषः कृतं तर्हि विनश्वरै-र्यागैः । "वेदैश्च सर्वैरहमेव वेद्यः" "तं त्वौपनिषदं पुरुषं पृच्छा-मीत्यादिप्रमाणशतैर्यासु चोपनिषत्सु निभृतभराः श्रुतमतनिदिध्या-सतात्मतत्त्वा आत्मानमन्विच्छन्तस्तितीर्षन्ति संसारसागरं ता एव ब्रह्मचारिण्योऽसंभावितपुंसंपर्का भ्रमप्रमादादिदोषसंसर्गासहिष्णव उप-निषद्देव्यो नोपदधते धियं कृतं तर्हि परापेक्षैर्व्यभिचारादिदोषश-ङ्काकलङ्कितैरलब्धपदैरनुमानादिप्रमाणैः । न हि कामधेनोरनड्डुरे करभः कार्यकारक इति कल्पते संकल्पयितुमपि ॥

तत्रैवं सति जगद्व्यवहारोपप्लव एव कृतः स्यादिति न परोक्षं प्रेक्षावताम् ॥

तस्माद्दूषदावेशैरेतैरेव मीमांसाया आर्षवृत्तिरुत्सादितेति सुनिश्चितं परीक्षकाणाम् ॥ बोधायनवृत्तिर्वा उपवर्षवृत्तिर्वा अपरे

वा आर्षा ग्रन्थाः परैरुत्सादिता उपसादिताश्च तत्स्थाने निजनिर्मिता ग्रन्था इति इदानीं शोकनाटनमस्थाने क्रियमाणम् "अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे" इति भगवदुक्तरीत्या हास्यास्पदतां गोचरयति, पुरुषाधमत्वं चावेदयतीति उपयुक्तेषु वैशद्यमित्यामाणकोक्तन्यायेन प्रसभमस्माभिरिदानीं निजमतिवैभवेन प्रचलितैरेव ब्रह्मसूत्रजैमिनिसूत्रगीतोपनिषद्वाक्यैरर्था निरूपणीयाः पूरणीयाश्चार्था यथामति, रक्षणीयश्चायमनन्यशरणो ऽनुदिनं ह्रासमुपेयवान् पितृपितामहक्रमागतो महानिधिरिव, चिन्तामणिरिव, कल्पपादप इव, निजाभिजन इव, वेदशास्त्रसार्थः ।

तत्राधीतिबोधाचरणप्रचारणरूपेषु रत्नपादेष्वेकः पुस्तकमुद्रणेनापि कथञ्चित् प्रचारणपादः सबलो भवति स्थैर्यविषये इत्यनुध्याय सर्वथा निरभिसन्धिः कथमपि यज्ञपुरुषमाराधयितुकामः शास्त्रदीपिकामुद्रणमुद्रया शब्दमूर्तिधरस्य श्रीविष्णोः प्रचारणपादसंवाहने प्रवृत्तः ।

शास्त्रदीपिकाकारश्चायं सुगृहीतनामा पार्थसारथिमिश्रो यं कर्णाकर्णिकया संक्षिप्ताक्षरार्थबहुललेखप्रणाल्या च मैथिलं प्रतिपद्यामहे, अस्ति चापरस्तन्त्ररत्नग्रन्थोऽपि व्यासेन मीमांसार्थप्रतिपादनपरः पार्थसारथिमिश्रप्रणीतः, न्यायरत्नाकराभिधा श्लोक[1]वार्त्तिकटीकाऽपि तेनैव निर्मिता, एषा च दीपिका परिपक्ववयसा पार्थसारथिमिश्रेण निरमायीत्युपपादनकौशलेन "अन्यानि तु दूषणानि तन्त्ररत्नएव दर्शितानीति नेह प्रपञ्च्यन्ते" एवंविधेन दीपिकायां तत्र तत्रोपन्यासेन चावधारयामः । यद्यपि सन्ति न्यायसुधा–भाट्टदीपिका–पञ्जिका–कणिका–विधिनिर्णय–विधिरसायन–भाट्टरहस्य–मी-

१ पण्डितविन्ध्येश्वरीप्रसादेन सा टीका मया दृष्टेति मां प्रत्युक्तम् ।

मांसाकुतूहल—मीमांसाकौस्तुभ—मीमांसाऽधिकरणमालाप्रभृतीनि मीमांसाग्रन्थरत्नानि तथाऽपि यादृशः परितोषः समादरश्च विदुषां दीपिकायां न तथा ग्रन्थान्तर इत्यवधार्यादौ तस्या एव प्रकाशने प्रावर्तिष्महि, यद्यपीह कथोपकथया शाबरमतं, भाट्टमतं, प्राभाकरमतमित्यनेकमीमांसकमतसंदर्शनं तथाऽपि कुमारिलमतेन शास्त्रदीपिकानिर्माणमिति सुप्रसिद्धमेव। अत्र च ग्रन्थे दशमाध्याये ५६६ पृष्ठे प्रसङ्गतो हरिमतमप्युत्थापितं, यमतिप्राचीनं वेदान्तिकमपि प्रतिपद्यामहे यदीयोपनिषद्भाष्यतात्पर्येण वृहदारण्य[१]कभाष्यादौ शङ्कराचार्याः स्वप्रणीतव्याख्यानस्य संक्षिप्ततां मेनिरेऽभिदधिरे च। यं च वृहदारण्यकशाङ्करभाष्यटीकाकारा भर्तृ—शब्देन कथयन्ति सोऽयमतिप्राचीनो मीमांसाद्वयाचार्यः प्रसिद्धभर्तृहरिर्वा (यमभिप्रेत्य महाभाष्यव्याख्यानावसरे आदावेव कैयटः "तथाऽपि हरिबद्धेन सारेण ग्रन्थसेतुने"त्यभिदधौ) अन्य एव वा कश्चित्ततोऽपि प्राचीनतमस्ततोऽप्यभ्यर्हिततमश्च पुरुषश्रेष्ठ इति नेश्महे विशिष्यावधारयितुं गमकानुपलम्भात्।

एतस्य च ग्रन्थस्य मुद्रणावसरे अशुद्धिबहुलानि खण्डितानि जीर्णान्यतिजीर्णानिच पुस्तकान्यापमवापं च कथं चिद्विश्वासभूमितां प्राप्तमेकं बालसरस्वतीभवनस्थपुस्तकमपरं च ब्रह्मामृतवर्षिणीसभापुस्तकालयस्थं पुस्तकं, मुद्रणानन्तरं च शोधनपत्रावसरे काशीस्थराजकीयप्रधानविद्यामन्दिरस्थमतिप्राचीनं तथाऽप्यनतिशुद्धं, नवीनमपरं तथाऽपि शुद्धं पुस्तकं संवाद्य तत्र तत्र पाठोपपाठापपाठादिकं शुद्धिपत्रे न्यवीविशं, मुद्रणावसरे च प्रायेनव्येष्वेव

१ एतेन चिकीर्षितार्था वृत्तेर्भर्तृप्रपञ्चभाष्येणागतार्थत्वमुक्तमिति॥ (भर्तृप्रपञ्चभाष्यात्क्षेपान्तरमाह) (अल्पग्रन्थेति)

शिष्येषु निभृतशोधनभरेण मया बह्वपराद्धमिह दीपिकाग्रन्थ इति साहजिकगुणचतुष्टयेगुणिनः क्षमन्तामिति साञ्जलिबन्धमभ्यर्थये, प्रार्थये च शास्त्रदीपिकामधीयाना अध्यापयन्तश्च सन्तस्तत्र तत्र शुद्धिपत्रतोऽप्यधिका अशुद्धीरुपलभमानास्ताः संकलय्य यदि मामनुगृह्णीयुस्तद्दानेन तर्हि निष्कारणदयाभाजनमात्मानं मंस्ये इति,

| ज्येष्ठकृष्णाचतुर्थी सोमदिने, संं० १९४९ । | काशीस्थब्रह्मामृतवर्षिणीसभायाम्, राममिश्रशास्त्री । |
|---|---|

ब्रह्मार्पणं ब्रह्मार्पणं ब्रह्मार्पणम्, इतः परं ब्रह्मसूत्राण्यनुक्रम्य बोधायनीयव्याख्यानमुज्जीवयिष्यामः । स्मृतिसंशोधनाय दत्तकविजयवैजयन्तीं च प्रस्तोष्यामः । श्रीः ।



# शास्त्रदीपिकाया विषयसूचनिकापत्त्रम् ।

## अथ प्रथमाऽध्याये प्रथमः पादः ।

पादेप्रधानविषयसंख्या ॥ ३४ ॥

## अथ प्रथमाऽध्याये द्वितीयः पादः ।



पादेऽधिकरणसंख्या ॥ ४ ॥

## अथ प्रथमाऽध्याये तृतीयः पादः ।

## अथ प्रथमाऽध्याये चतुर्थः पादः ।



## अथ द्वितीयेऽध्याये प्रथमः पादः ।

## अथ द्वितीयेऽध्याये द्वितीयः पादः ।



## अथ द्वितीयेऽध्याये तृतीयः पादः ।

## अथ द्वितीयेऽध्याये चतुर्थः पादः ।



## अथ तृतीयेऽध्याये प्रथमः पादः ।

पादेऽधिकरणसंख्या ॥ १५ ॥

## अथ तृतीयेऽध्याये द्वितीयः पादः ।



पादेऽधिकरणसंख्या ॥ २० ॥

## अथ तृतीयेऽध्याये तृतीयः पादः ।

पादेऽधिकरणसंख्या ॥ १८ ॥

## अथ तृतीयेऽध्याये षष्ठः पादः ।

## अथ तृतीयेऽध्याये सप्तमः पादः ।



## अथ तृतीयेऽध्याये ऽष्टमः पादः ।

## अथ चतुर्थोऽध्याये प्रथमः पादः ।

## अथ चतुर्थेऽध्याये द्वितीयः पादः ।



## अथ चतुर्थेऽध्याये तृतीयः पादः ।

## अथ चतुर्थाऽध्याये चतुर्थः पादः ।



## अथ पञ्चमाऽध्याये प्रथमः पादः ।

पादेऽधिकरणसंख्या ॥ १८ ॥

## अथ पञ्चमाऽध्याये द्वितीयः पादः ।



पादेऽधिकरणसंख्या ॥ ११ ॥

## अथ पञ्चमाऽध्याये तृतीयः पादः ।

पृष्ठ ।



पादेऽधिकरणसंख्या ॥ १५ ॥

## अथ पञ्चमाऽध्याये चतुर्थः पादः ।



पञ्चमाध्यायाधिकरणसंख्या ॥ ३० ॥ पादेऽधिकरणसंख्या ॥ ८ ॥

## अथ षष्ठाध्याये प्रथमः पादः ।

## अथ षष्ठाऽध्याये द्वितीयः पादः ।



## अथ षष्ठाऽध्याये तृतीयः पादः ।

## अथ षष्ठाऽध्याये चतुर्थः पादः।



## अथ षष्ठाऽध्याये पञ्चमः।

पादेऽधिकरणसंख्या ॥ २३ ॥

## अथ षष्ठाऽध्याये षष्ठः पादः ।



पादेऽधिकरणसंख्या ॥ ७ ॥

## अथ षष्ठाऽध्याये सप्तमः पादः ।

## अथ षष्ठाऽध्याये ऽष्टमः पादः ।



## अथोत्तरषट्कम् । तत्र सप्तमाऽध्याये प्रथमः पादः ।

पृष्ठ ।

## अथ सप्तमाऽध्याये द्वितीयः पादः ।



## अथ सप्तमाध्याये तृतीयः पादः ।



## अथ सप्तमाऽध्याये चतुर्थः पादः ।



## अथ अष्टमाऽध्याये प्रथमः पादः ।

## अथ नवमेऽध्याये प्रथमः पादः ।



## अथ नवमे ऽध्याये द्वितीयः पादः ।

## अथ नवमेऽध्याये तृतीयः पादः ।



## अथ नवमेऽध्याये चतुर्थः पादः ।

नवमाध्यायेऽधिकरणसंख्या ६६ । पादेऽधिकरणसंख्या ॥ १५ ॥

## अथ दशमेऽध्याये प्रथमः पादः ।



पादेऽधिकरणसंख्या ॥ १२ ॥

पृष्ठ ।

## अथ दशमेऽध्याये द्वितीयः पादः ।

## अथ दशमेऽध्याये तृतीयः पादः ।



## अथ दशमेऽध्याये चतुर्थः पादः ।

पादेऽधिकरणसंख्या ॥ २५ ॥

## अथ दशमाऽध्याये पञ्चमः पादः ।

## अथ दशमाऽध्याये षष्ठः पादः ।

पादेऽधिकरणसंख्या ॥ २२ ॥

## अथ दशमाऽध्याये सप्तमः पादः ।

## अथ दशमाध्याये ऽष्टमः पादः ।



## अथ एकादशाध्याये प्रथमः पादः ।

## अथ एकादशाऽध्याये द्वितीयः पादः।



## अथ एकादशाऽध्याये तृतीयः पादः।

## अथ एकादशाध्याये चतुर्थः पादः ।



## अथ द्वादशाऽध्याये प्रथमः पादः ।

## अथ द्वादशाऽध्याये द्वितीयः पादः ।

## अथ द्वादशाऽध्याये तृतीयः पादः ।



## अथ द्वादशाऽध्याये चतुर्थः पादः ।

शास्त्रदीपिकाग्रन्थविषयसूचनिका समाप्तेति शम् ॥

पूर्वाचार्येभ्यो नमः ॥

नमो जैमिनये ॥



श्रीमते रामानुजाय नमः ।

नम उपवर्षमहर्षये ।

नमोनमो वेदान्तविशदीकरणदीक्षाय गुरवे श्रीबोधायनमहर्षये ॥

# शास्त्रदीपिकायाः शुद्धिपत्त्रम् ।

| अशुद्धम् । | शुद्धम् । | पृष्ठ॰ | पंक्ति |
|---|---|---|---|
| लैाकिकस्यापि | लैाकिकस्यापि | ११ | २ |
| मवगम्यमाने | अवगम्यते | १४ | १२ |
| गयेव | यथेव | १६ | १० |
| पदार्थस्तेषां | पदार्थास्तेषां | १६ | ७ |
| संप्रयोगत्वं | संप्रयोगजत्वं | ३० | ४ |
| नुमानत्वस्य | नुमानस्य | ४१ | १३ |
| अनेकसंबन्ध | अनेकदेशसंबद्ध | ५६ | १० |
| तद्गजविशे | तद्गजविशे | ५९ | ८ |
| प्रतियोनि | प्रतियोगिनि | ६४ | ५ |
| बुद्धिद्धय | बुद्धिद्वय | ७७ | १ |
| समर्थ्यत् | समर्थ्यत | ९१ | १ |
| "धर्मप्रमित्युपयोगि"इतिपाठान्तरम् | | १३३ | ५ |
| करेण | करणे | १३४ | ३ |
| धर्म।धर्मप्रतिमित्यनुदया"दिति पाठान्तरम् | | १३५ | ४ |
| प्रयोऽजना | प्रयोजना | १३५ | १० |
| पशुना | पशूना | १३८ | ४ |
| खादिरव | खादिरत्वव | १३८ | ८ |
| सिद्धहेतोः | सिद्धिहेतोः | १३८ | ११ |
| "वह्वृचमि"ति तु युक्तः पाठः | | १४१ | १२ |
| क्रमादेहानिर्भवतिनवेति पाठान्तरम् | | १४९ | १० |
| "स्मत्याचारविरोधे वे"सूत्रंसूत्राक्षरैर्नमुद्रितं नापितत्रसूत्रसंख्यासन्निवेशोजातोभ्रान्त्या । | | १५३ | १० |
| वृता | कृता | १५६ | १३ |
| धातुमिः | नधातुभिः | १८१ | ५ |
| विस्पष्टं च | विस्पष्टं | १५७ | १ |
| तगाश्चोदाहृत्य | गतांश्चोदाहृत्य | १६० | ६ |
| ब्राह्मणाथा | ब्राह्मणार्थां | १६२ | १ |
| स्वरूपादि | स्वरूपादिं | १६४ | ११ |
| घाश्येना | घाराश्येना | १६९ | ९ |
| "सांचधिवशाच्चे"तिपाठान्तरम् | | १७१ | २ |
| पचशान्याज्यानी | पंचदशाज्यानी | १७४ | ५ |
| तदाज्यानामान्यत्वामिति पाठोपेक्षितः | | १७५ | १ |
| विशिष्टकर्मविधित्वाद्देवताविधा"विति पाठोऽपेक्षितः | | १७५ | ९ |
| नाचैककारकविधानादवाक्यभेदः। विभक्तिपृथक्त्वेनकारकनानात्वात् | | १७५ | ८ |
| नामधेयं | नामधेयत्वं | १७७ | ४ |
| नैकेवा | नैकेना | १७९ | ५ |
| द्वाश | द्वादश | १८५ | १ |
| कपालःसमस्ति | कपालत्वमस्ति | १८६ | ९ |
| पशुशब्दायं | पशुशब्दोयं | १८९ | २ |
| नञा | नञा | १९० | १ |
| स्तुवा | स्नुवा | १९२ | १२ |
| समार्थ्यं | सामर्थ्यं | १९२ | १० |
| भेदनानु | देदानु | १९४ | १३ |
| हृत्तं | हृतं | १९५ | ४ |
| क्रियारक | क्रियाकारक | १९६ | ७ |
| क्षूत | द्रूप | १९९ | २ |
| निष्पत्ता | निष्पत्तो | २०२ | ७ |
| शिखण्डकात् | शिखण्डकान् | २०४ | ५ |
| तृतीतस्य | तृतीयस्य | २११ | ६ |
| कश्यत | कथ्यत | २१२ | ७ |
| कालस्याविहित | कालस्य विहित | २१७ | १० |
| श्रुते | श्रुते | २२० | ११ |
| व्यारा | व्याहारा | २३६ | ७ |
| व्याप्तिन्या | व्यापितया | २४१ | १० |
| प्रास्थान | प्रस्थान | २४५ | १० |
| स्याद्यसै | स्याद्यद्यसो | २४७ | ३ |

| अशुद्धम् । | शुद्धम् । | पृष्ठ॰ | पंक्ति॰ |
|---|---|---|---|
| पेक्षिते | पेक्षितो | २४७ | ७ |
| एव | एव | २४८ | ६ |
| प्राप्नोति | पर्याप्नोति | २४८ | ८ |
| सिद्धत्वं | सिद्धं | २५० | ३ |
| सोऽत्र | सोऽत्र | २५३ | ७ |
| कर्मभेदस्येत्यु-क्तम् | न शास्त्रभेदस्ये-त्युक्तम् | २५७ | १ |
| लक्षणे | लक्षणाये | २६१ | १ |
| तत्सु | सत्सु | २६१ | ११ |
| कारणत्वं | कारणत्वं | २६१ | १० |
| यिन्यां | यन्यां | २६२ | ८ |
| वैकत्वं | चैकत्वं | २६५ | ३ |
| क्रियावशो | क्रियया | २६५ | २ |
| प्रधान्य | प्रधानान्य | २७२ | ११ |
| तदभावोऽत्र | तदभावाच | २७७ | १ |
| त्रिराहुयत्य | त्रिराहुयतीत्य | २७६ | १२ |
| खल्वे | खल्वे | २८० | ६ |
| ते | गम्यते | २८१ | २ |
| वाक्यस्य | साकस्य | २८१ | ३ |
| येपयं | येमं | २८१ | ४ |
| यस्त्वं | यस्त्वं | २८१ | ४ |
| मन्वा | मन्त्रा | २८१ | १० |
| कुर्व | तेनोपपन्नमिष्टदेवताप्रकाशनं कुर्वत | २८१ | १२ |
| शब्दान | शब्दानां | २८१ | २ |
| प्राकृत्यो | प्राकृत्योर्वैकृत्यो | २८२ | ३ |
| क्रमसमाख्यावशात्तु काम्येष्टिष्वेव यथाक्रमं यथासमाख्यं च याज्यानुवाक्यत्वेन विनियोगः इतिपाठः । | | २८३ | ८ |
| कृता | प्रकृता | २८३ | १२ |
| द.ग्नेयाः । सच | दाग्नेय्याः सच | २८३ | ५ |
| पस्थानात् | पस्थानता | २८४ | १४ |
| तथं | तथदा | २८४ | ७ |
| प्रकरण | प्रकरणं | २८५ | २ |
| समाख्यामे | समाख्याभ्यामे | २८६ | ८ |
| मन्त्रोऽर्थं | मन्त्रोऽथ | २८७ | १९ |
| षशेष्वेव | सशेषेष्वेव | २८८ | ८ |
| देवत्यानामे | देवत्यादीनामे | २८८ | ५ |
| यात्रावृग्यते | मात्रावृग्यते | २८८ | ४ |
| यजमानसं | यजमानसं | २९० | ९ |
| प्रदानां | प्रदानानां | २९० | ७ |
| न पाने | तेन पाने | २९१ | ६ |
| स्वेष्वादय | स्वेस्वादयः | २९२ | १० |
| दत्वार्थ | दत्वादर्थ | २९३ | २ |
| बाधते | न बाधते | २९३ | १० |
| यन्त्तं | यत्तं | २९४ | ४ |
| इत्याप्तः | इत्याप्त | २९५ | ८ |
| कथमती | कथमिती | २९५ | ६ |
| यद्दी | यद्दी | २९६ | २ |
| तत्र | तच | २९६ | १० |
| साधनेनैव | साधनतयैव | २९७ | ३ |
| विधायस्कत्वेन | विधायकत्वेना | २९८ | ७ |
| शेपत्वं | शेषित्वं | २९९ | ८ |
| शुचि | श्रुति | २९९ | २ |
| सुमनस्य | सुमन्यस्य | ३०१ | ६ |
| बलत | बलतां | ३०२ | १ |
| पम्याप | पम्यप | ३०५ | ३ |
| त्पर्हागंणे | हाप्तर्गणात्र | ३०५ | २ |
| शत्युव | शत्युपबन्धः | ३०७ | २ |
| सएव | पुंसएव | ३०७ | ७ |
| व्यवच्छिन्नाः | व्यवस्थिताः | ३०७ | ५ |
| देवृशां | देवृश्यां च | ३११ | ४ |
| तन्मध्याव | तन्मध्यव | ३१६ | १३ |
| दयगम | दयगतम | ३१६ | ५ |
| शेषः | विशेषः | ३१७ | १ |
| अधिधायकाः | अभिधायकाः | ३१७ | ४ |
| तिपादेन | तिपादने | ३१८ | ३ |
| मेवगाना | मेवाङ्गाना | ३२१ | ७ |
| वैकि | वैदिक | ३२२ | १४ |
| विध्युद्देश्य | विध्युद्देश | ३२२ | ४ |
| शक्तः | शक्तेः | ३२३ | ७ |
| नसि | नति | ३२७ | ४ |
| कीयतामपि | कियतीमपि | ३२७ | ३ |
| गीत | गीते | ३२७ | २ |
| शेषभावा | शेषाभावा | ३२९ | ४ |
| यागगत्वे | यागगतत्वे | ३३३ | ४ |

पदार्था एकैकविशिष्टार्थप्रतिपादनाय समाहृता वाक्यार्थं प्रतिपादयन्तीति न दोषः। तेषां च समाहारे यत्र पुरुषस्य स्वातन्त्र्यं तत्र तद्बुद्ध्यधीनं प्रामाण्यम् अस्वातन्त्र्ये त्वनपेक्षम्। अतो न पदानामन्विते शक्तिः प्रमाणवती, निरस्तश्चायमन्विताभिधानवादो न्यायरत्नमालायामित्यास्तां तावत्, वाक्यस्फोटोऽपि पदस्फोटन्यायैरेव निरस्तः। वाक्यार्थस्य च निर्भागत्वम्। भागावगमात्प्रसङ्गाद्यनुपपत्तेश्च निरसनीयम्। तथा हि "प्रसङ्गतन्त्रबाधोहानिर्देशाधिक्रियाक्रमाः। प्रयुक्तिशेषभेदाश्च कथं निर्भागवादिनाम्"। यदा ह्यग्नीषोमीयं पशुमालभेतेति निर्भागस्य साङ्गप्रधानविधेरर्थोऽनिर्भागो न साध्यं, न साधनं, नाप्यङ्गानि, तदा न पशुर्नानुयाजा न पुरोडाशा न तदीयाः प्रयाजाः सन्तीति किं कुत्र प्रसज्यते। एवं तन्त्रादिष्वपि दर्शयितव्यम्। तस्मादनेकवाक्यानुरक्तो वाक्यार्थः। स च पदार्थमूलः, न निर्मूलो, न च संकेतमूलः। तस्माच्चाप्रामाण्यं चोदनायाः। यत्तु वाक्यत्वात्पौरुषेयत्वमित्युक्तं, तदुपरितनेऽधिकरणे निराकरिष्यामः। वेदाश्चैके संनिकर्षं पुरुषाख्याः संकेतानपेक्षैरेव पदैः पदार्थाः प्रतिपाद्यन्ते। तैरप्यनपेक्षितसंकेतैर्वाक्यार्थ इत्युक्तम्। इदानीं किं पौरुषेयाणि वेदवाक्यानि? उतापौरुषेयाणि? इति चिन्त्यते। पौरुषेयत्वेऽपि संजातस्यापि वाक्यार्थप्रत्ययस्य स्वतःप्राप्तमपि प्रामाण्यं पौरुषेयस्येदृशेऽर्थे मूलप्रमाणासंभवात् विप्रलम्भभ्रान्त्यादिमूलतयाऽपोद्यते। तत्र "वेदानां पौरुषेयत्वं वाक्यत्वाद्भारतादिवत्। काठकादिसमाख्याऽपि कृतकर्त्रे समर्थ्यते"। नन्वपूर्वात्मा वेदार्थो ऽलौकिकः कथंचिदपि न बुद्धावारोपयितुं शक्यः कथं तत्र पुरुषा वाक्यं रचयेयुः, भवानपि वा कथमीदृशे तस्मिन् लिङादौ शक्तिं गृह्णीयात्। अधिकारिनियोज्यान्वयस्वर्गसाधनत्वमकार्यरूपमित्यादिरूपेण कथंचिद्हृदयमानीय शक्तिग्रहणं, तथा वाक्यरचनाविधिः संभविष्यति। तस्माद्वाक्यत्वात्पौरुषेया वेदाः, तथा काठकादिसमाख्या युज्यते। न हि प्रवचननिमित्ता समाख्या संभवति प्रवचनस्यानेकपुरुषसाधारणत्वात्काठकविशेषणासंभवात्। कर्तृत्वं चैकस्यैवेति युक्तं विशेषणम्। किं पुनर्वाक्ये पुंसः कर्तृत्वम्? यः स्वातन्त्र्येण पदानि वाक्यत्वेन रचयति स कर्ता।

स्वातन्त्र्यं चैकस्यैवेति युक्तं विशेषणम् । यत्तु यथैव पुरुषान्तरेणोच्चरितं तथैवोच्चारयामीत्येवमुच्चारयति नासौ कर्त्ता । तादृशमुच्चारणं च बहूनामप्येकस्मिन्वाक्ये संभवतीति विशेषणानुपपत्तिः । तस्मात्कर्तृनिमित्तेयमिति प्राप्तेऽभिधीयते । उक्तं तु "शब्दपूर्वत्वमाख्याप्रवचना"दिति । "वाक्यत्वात्पौरुषेयत्वं दृश्यादर्शनबाधितम् । प्रतिहेतुविरुद्धश्च हेतुस्तस्मादकृत्रिमः" । यदि वेदानां कर्त्ता कश्चिदभविष्यत् ततोऽवश्यमध्येतृपरम्परया बुद्धादिवदस्मरिष्यत् । न त्वस्य विस्मरणं संभवति । तत्प्रत्ययेन हि तदा सर्वपुंसां वेदार्थानुष्ठानम् । प्रमाणान्तरागोचरत्वात्फलसाधनत्वस्य । अतोऽर्वाचीनैः कथमसौ विस्मर्येत । अतः स कर्त्ताऽवश्यं स्मर्त्तव्यः ।

न च स्मर्यते, तेन स्मृतिदर्शनयोग्यत्वे सत्यदृश्यमानः कर्त्ता शशविषाणवदभावात्मनाऽध्यवसीयते । ये ऽपि हि पौरुषेयतां मन्यन्ते तेऽपि नैव परम्परया कर्तृविशेषस्मरणं शक्नुवन्ति वदितुम् । सामान्यतोदृष्टेन कर्त्तारमनुमाय स्वाभिमतं कर्त्तारं तत्र निक्षिपन्ति केचिदीश्वरम्, अन्ये हिरण्यगर्भम् । अपरे प्रजापतिम्, न चायं नानाविधो विवादः परम्परया कर्त्तरि मन्वादिवत्स्मर्यमाणे कथंचिदप्यवकल्पते, न हि मानवे, भारते, शाक्यग्रन्थे च कर्तृविशेषं प्रति कश्चिद्विवदते । तस्मात्स्मर्त्तव्यत्वे सत्यस्मर्यमाणत्वं दृश्यादर्शनबाधितं सामान्यतोदृष्टं न शक्नोति कर्त्तारमवसाययितुम् । सप्रतिसाधनश्च हेतुर्वाक्यत्वादिति विवादाध्यासितं वेदाध्ययनं गुर्वध्यापनपूर्वकं वेदाध्ययनपूर्वकवेदाध्ययनत्वात् अद्यतनाध्ययनवदिति । तदिदमाह सूत्रकारः । "उक्तं तु शब्दपूर्वत्व"मिति अत्र शब्द–शब्दजन्यः शब्दो ऽध्ययनम् । तदयमर्थः सर्वपुरुषाणामध्ययनमध्ययनान्तरपूर्वकं सर्वे हि यथैव गुरुणाऽधीतं तथैवाधिजिगांसन्ते न पुनः स्वातन्त्र्येण कश्चिदपि प्रथमोऽध्येता वेदानामस्ति यः कर्त्ता स्यात् । तस्मादपौरुषेया वेदाः, समाख्याऽपि योग्यानुपलब्धिनिराकृते कर्तृत्वे तन्निमित्ता न संभवतीति प्रवचननिमित्ताऽवसीयते । प्रवचन एवातिशययोगेनासाधारण्यं कठस्य संभवतीति न विशेषणत्वानुपपत्तिः । यद्वाऽयं न पुरुषविशेषणप्रवचनः कठशब्दः । किं तु नित्यस्य चरणविशेषस्यैवेयं संज्ञा तच्चरणैः पुरुषैः परम्परयाऽधीयमान

शाखा काठकशब्देनाभिधीयते। "तस्मादपौरुषेयत्वाच्चोदनानां प्रमाणता। चोदनेति प्रतिज्ञार्थः पादेनानेन साधितः"। इयं हि चोदनासूत्रे प्रतिज्ञातं भेदशेषप्रयुक्तिक्रमनियमाधिकारातिदेशबाधोहतन्त्रप्रसङ्गसर्वविशेषणविशिष्टे धर्मस्वरूपे चोदनैव प्रमाणं, प्रमाणमेव चोदनेति, तत्र चोदनैवेत्यवधारणेन यच्चोदनानिरपेक्षाणां तया सह तुल्यकक्षतया स्पर्द्धमानानां प्रत्यक्षादीनामप्रामाण्यं प्रतिज्ञातं तत्प्रत्यक्षसूत्रेण साधितम्। औत्पत्तिकस्त्वित्यादिना पादशेषेण प्रमाणमेवेत्ययमंशः साधितः। तदेवमस्मिन्नेव सूत्रे[1] चोदनासूत्रप्रतिज्ञातार्थविशेषे साधिते उपरितनपादत्रयं भ चोदनासूत्रशेषतया सङ्गच्छते। किंतु प्रथमे सूत्रे किंलक्षणोधर्म? इति धर्मस्य प्रमाणं वक्तव्यत्वेन प्रतिज्ञातम्। तत्रानेन पादेन चोदनायाः प्रामाण्यमुक्त्वा अर्थवादस्मृतिनामधेयानामुपरितनेन पादत्रयेण प्रामाण्यं प्रतिपाद्यते। तेन चोदनासूत्रवदेव पादत्रयं जिज्ञासासूत्रोक्तया को धर्म? इत्यनयैव प्रतिज्ञया संगच्छते। न चार्थवादादीनां प्रामाण्ये चोदनैवेति प्रतिज्ञाव्याघातः स्यादिति मन्तव्यं, तुल्यजातीयापेक्षत्वादवधारणस्य। यथा शुक्लः पट इत्युक्ते कृष्णादीनामेव निवृत्तिर्न द्रव्यत्वादीनाम्। एवं चोदनैवेत्यवधारणेन प्रत्यक्षादीनामेव चोदनावत्स्वातन्त्र्येण प्रमाणीभवतां व्यावृत्तिर्न त्वर्थवादादीनाम्। चोदनैकवाक्यतया चोदनामूलतया च प्रमाणीभवतां चोदनाविषयेणावधारणेन प्रामाण्यं न निरस्तम्, नापि साधितम्, उपरितनेन पादत्रयेण तत्साधयिष्यते यथाऽऽह

इति प्रमाणत्वमिदं प्रसिद्धमुक्त्वेह धर्मे प्रति चोदनायाः।
अतः परं तु प्रविभज्य वेदं त्रेधा ततो वक्ष्यति तस्य योऽर्थः॥

इति महोपाध्यायश्रीपार्थसारथिमिश्रकृतौ शास्त्रदीपिकायां
प्रथमास्याध्यायस्य प्रथमः पादः॥

---

१ पादे इति पाठान्तरम्

ओं नमो भगवते मीमांसाद्वयगुरवे श्रीदगुरवे रामानुजाचार्याय ।

## सू० आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते ॥ १ ॥

अथातो धर्मजिज्ञासेत्यत्र प्रमाणस्वरूपसाधनफलैः साभासैर्धर्मो-जिज्ञास्यत्वेन प्रतिज्ञातः. तत्रास्मिन्नध्याये प्रमाणं निरूप्यते किं प्रमाणं धर्मे इति, तेन यदेव किंचिद्धर्मप्रमाणनिरूपणम् अर्थवादमन्त्रस्मृतिनामधेयादि-गोचरं तत्सर्वमत्रैव संगतं, न ह्यत्र चोदनाप्रामाण्यसाधनं लक्षणार्थो, येन स्मृत्यादेर्न संगतिः स्यात्, किं तर्हि धर्मप्रमाणनिरूपणं, तदुक्तं भाष्यकृता "को धर्मः? कथंलक्षणक?' इति, सर्वस्मिंश्चाध्याये तदेव क्रियत इति समस्तमध्यायं प्रमाणलक्षणमाचक्षत" इति, तेन लक्षणसंगतिस्तावत्सिद्धा प्रकृतसंगतिरपि चोदनानां प्रामाण्ये पदपदार्थसंबन्धौत्पत्तिकत्वेन वाक्यार्थप्रतीतेर्मूलवत्तया चोपपादिते ऽनन्तराधिकरणे वेदद्वारेण तासां पौरुषेयत्वमाशङ्कितं यथोक्तं भाष्यकारेण "संनिकृष्टकाला वेदा इदानींतनास्ते च चोदनासंघातास्तत्र पौरुषेयाश्चेद्वेदा असंशयं पौरुषेय्यश्चोदना इत्येवमाशङ्क्य वेदापौरुषेयतया तदवयवानां चोदनानामप्यपौरुषेयतया प्रामाण्यं प्रतिपादितम्। एवं चोदनानां वेदावयवानां प्रामाण्ये साधिते तदवयवत्वेनोपस्थितानामर्थवादादिभागानामप्यपौरुषेयत्वसामान्याच्चोदनावत् प्रसक्तं प्रामाण्यमस्ति न वेति चिन्त्यत इति, तदिदमुक्तं "सिद्धप्रमाणभावस्य धर्मे वेदस्य सर्वशः । विध्यर्थवादमन्त्राणामुपयोगोऽधुनोच्यत" इति, अस्यार्थः सिद्धप्रमाणभावं चोदनांऽशे वेदं त्रिधा विभज्य किं तावन्मात्रस्यैव प्रामाण्यम्? उत सकलस्य? इति विचार्यते न विधेरेव किन्तु विध्यर्थवादमन्त्राणां सर्वेषामेव सर्वशः सर्वप्रकारं विधिस्तुतिस्मृतिभिर्धर्मप्रतीतौ उपयोगः प्रतिपाद्यत इति। यद्वा चोदनार्थमप्युक्तेनापौरुषेयत्वेन समस्तस्य प्रामाण्यं सिद्धप्रायमपि बाधकशत्त्यभावमाश्रित्य स्थिरीक्रियते विध्यर्थवादमन्त्राणामिति, नायमर्थो विधेरप्युपयोगः प्रतिपाद्यत इति किन्तर्हि विध्यादीनां सर्वेषामुपयोगोऽस्ति न विधेरेवेति प्रतिपाद्यत इति, नामधेयाभिप्रायं वा

विधिग्रहणम् । यद्वा अर्थवादमन्त्रयोः स्तुतिस्मृतिभ्यामुपयोगे कथितेऽर्थो-द्विधेरपि सामान्यसिद्धमुपयोगित्वं साक्षाद्विधानेन विशेषरूपेण साधितं भवतीत्यभिप्रायः । औदुम्बराधिकरणे वा विध्युपयोगः प्रतिपाद्यत इत्य-भिप्रायः । अत्रास्मिन्नेव सूत्रे विध्यतिरिक्तानां सर्वेषाम् अस्यैव पादस्य द्वितीयाधिकरणे भवितव्यमित्येतावत्साधारण्येनैवाभिधास्यते पश्चात्तु क्रमेण स्तुत्याद्युपयोग इति वेदितव्यं, तत्र प्रथममर्थवादेष्वेव सिद्धान्तकथना-त्तानेवोदाहृत्य चिन्त्यते वायुर्वै क्षेपिष्ठा देवतेत्येवमादीनि यानि विधिभाव-नातदंशत्रयातिरिक्तार्थानि तानि किं धर्मे प्रमाणमुत नेति? संशयः, तदर्थ-मिदं विचारयितव्यं, किं विध्युद्देशेनैषामेकवाक्यत्वमुत भिन्नवाक्यते ति तत्सिद्ध्यर्थमप्येतच्चिन्तनीयं, किं विध्युद्देशार्थवादयोः परस्पराकाङ्क्षाऽस्ति? न वेति, तत्रैवं पूर्वः पक्षः ।

अर्थवादा निराकाङ्क्षा भूतार्थप्रतिपादनात् ।
विध्युद्देशाः समाप्यन्ते विशिष्टार्थविधानतः ॥

यथाश्रुतिगृहीतानि तावत्सन्तमसन्तं वा भूतमर्थमन्वाचक्षते न धर्मा-धर्मौ, न चाध्याहारादिभिस्तत्प्रतिपादनम् अपरिपूर्णेषु खल्वध्याहारादयः, परिपूर्णानि चैतानि "स एवैनं भूतिं गमयती"ति विशिष्टार्थप्रतिपादनाद-र्थान्तराकाङ्क्षाभावात्, अनाकाङ्क्षत्वादेव च न संनिहितेनापि "वायव्यं श्वेत-मालभेते"त्यनेनैकवाक्यता, विशिष्टार्थप्रतिपादनमेव हि पदानां लोके का-र्यमवधारितं, न प्रयोजनवदर्थप्रतिपादनं, येन तल्लिप्सया विध्येकवाक्यता कल्प्येत आख्यायिकारूपाणां बहुलमुपलब्धेर्लोके स्वाध्यायविधिवशाद्वेदस्य कृत्स्नस्य प्रयोजनवदर्थपर्यवसानमिति चेत् न दृष्टोऽर्थस्तेनानुसर्त्तव्यो न तद्वशेनार्थकल्पना, तद्वरमदृष्टार्थताऽध्ययनस्य, तन्न तावदर्थवादानामाका-ङ्क्षाः, नापि विध्युद्देशस्य, तस्यापि विशिष्टभावनाविधानेन निराकाङ्क्ष-त्वात् ।

न च प्रवर्त्तनाय प्राशस्त्यापेक्षा, विधित एवानपेक्षात्समीहितसाध-नभावावगमेन प्रवृत्तिसिद्धेः, न वार्थवादैः प्राशस्त्यं प्रतिपाद्यते, भूतार्थ-मात्रप्रतिपादनात् लक्षणया हि तेभ्यः प्राशस्त्यं गम्यते ।

न च श्रौतस्यार्थस्य संभवे सा युक्ता एकवाक्यतया च लक्षणा स्यात्।

न च तस्यां प्रमाणमस्ति तस्मादानर्थक्यम्। एवं मन्त्रनामधेययोरपि दर्शयितव्यं ताभ्यामपि धर्मप्रमित्यनुदयात् तस्माद्वेदप्रामाण्यं तेन समस्तो वेदः प्रमाणमित्यवधारणा न सिद्ध्यति, सिद्धान्तस्तु।

सू० विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः ॥ ७॥

स्वाध्यायविधिना वेदः पुरुषार्थाय नीयते।
सर्वस्तेनार्थवादानां प्राशस्त्ये न प्रमाणता ॥

स्वाध्यायाध्ययनविधिना दृष्टार्थत्वात्सकलस्य वेदस्य प्रयोजनवदर्थपर्यवसानं बोधितम्। अर्थवादानां च भूतार्थप्रतिपादनेन प्रयोजनाऽनवाप्तेर्यस्ततो लक्ष्यमाणः क्षिप्रदेवतासाध्यं कर्म क्षिप्रमेव फलं दास्यतीति प्राशस्त्यरूपोऽर्थः सोऽनन्तरप्रवृत्तविध्युद्देशाकाङ्क्षितत्वादाकाङ्क्षां, शक्नोति पूरयितुमिति गृह्यते स्वाध्यायविधिरेव प्रयोजनवदर्थपर्यवसानं बोधयन् प्राशस्त्यपरतया विना तदनुपपत्तेस्तात्पर्यमेवाङ्गमयति तात्पर्याच्च लक्षणासिद्धिः, ततश्चैकवाक्यत्वम्। यत्तु दृष्टोऽयं स्वाध्यायविधिनाऽनुसक्तेऽयो न तद्वशेनार्थकल्पनेत्युक्तं, सत्यं लाक्षणिकोऽप्यर्थो दृष्ट एव, दृश्यत एव हि श्रौतार्थद्वारेण तत्संबन्ध्यर्थान्तरे प्रत्ययः, सम्भवति तु श्रौतपरत्वे तात्पर्याभावाल्लक्षणा नाङ्गीक्रियते अत्र च स्वाध्यायविधिनाऽर्थवादस्यापि पुरुषार्थपर्यवसानबोधनात्परम्परया दृष्टलाभे स्वर्गादिकल्पनाऽनुपपत्तेर्भूतार्थमात्रस्याप्रयोजनत्वात् प्राशस्त्यपरत्वं लक्षणयाऽङ्गीक्रियते तद्धि पुरुषप्रवर्त्तनाय विधिरपेक्षते

यत्तु स्वयमेव विधिः समीहितसाधनतां बोधयन् अलमेवानपेक्षः प्रवर्त्तयितुमित्युक्तं, तत्रोच्यते सत्यं, विधिरेव प्रधानं प्रवृत्तिकारणं तस्यैव त्वनुग्राहिका प्राशस्त्यावगतिः

फले हि निसर्गसुन्दरे स्वयमेव लिप्सा भवति तत्साधने तु दुःखाकरे स्वतस्तावद् द्वेष एव, अवश्यं च साधने प्रवर्त्तमानस्य तत्रैव रुच्या भवितव्यं, हितसाधनताऽवगतिरपि तत्रैव रुचिं जनयन्ती प्रवृत्तिहेतुः

स्यात् नान्यथा, सा च पुरुषेभ्यः प्रमादालस्यादियुक्तेभ्यः कर्म दुःखात्मकं रोचयन्ती गुणकथन[1]मवेक्षते, अवगतसमीहितसाधनभावमपि कर्मारुचिगोचरं सत् सतामसतां वा गुणानां कीर्त्तनादेव रोचततरामिति सार्वजनीनमेतत्। तदेवं विधीनामध्ययनविधिवशेनैव दृष्टे पुरुषप्रवर्त्तने प्रवर्त्तमानानां रुचिकरप्राशस्त्यापेक्षत्वादर्थवादानां च तद्वशेनैव प्रयोजनमपेक्षमाणानां मिथोनियम इति विधिना सहैककार्यकरत्त्वात्तद्वदेवार्थवादानामपि सिद्धं प्रामाण्यम्। एवं मन्त्राणामपि स्वाध्यायविधिवशादेव प्रयोजनवत्त्वावगमाद्विधिस्तुत्योश्च द्वितीयेऽध्याये निराकरणात् प्रकरणादिवशेन प्रधानाङ्गभूतानां दृष्टमदृष्टं वा प्रयोजनं कल्प्यत इति नाप्रामाण्यम्। नन्वेवमङ्गत्वेऽपि प्रयोजनं लभ्यते न तु प्रामाण्यं, नैष दोषः पदार्थानां वाक्यार्थे प्रामाण्याभ्युपगमात्, उक्तं हि "पदार्थास्तत्स्मृतिर्वा स्या"दिति, तेन मन्त्रविशिष्टमर्थं बोधयतः प्रधानवाक्यस्यार्थे मन्त्राणामपि प्रामाण्यं संभवति तेन मन्त्राणामपि प्रयोजनवत्त्वात्प्रामाण्यमस्तीत्येतावत्सिद्धं, प्रयोजनविशेषस्तु प्रस्तुतमर्थवादाधिकरणं समाप्य पश्चाद्वक्ष्यते, तथा नामधेयस्यापीति सिद्धं सकलस्य वेदस्य प्रामाण्यम्।

सू० विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकम् ॥ १२ ॥

पूर्वोक्तापेक्षया त्विदमारभ्यते यदुक्तमानर्थक्यमर्थवादानामिति तद् गृह्णीमः स्तुत्यर्थत्वं तु केषुचिन्न मृष्यामहे यथा "औदुम्बरो यूपो भवत्यूर्ग्वा उदुम्बर ऊर्क्पशव ऊर्जै वा स्मा ऊर्जं पशूनाप्नोत्यूर्जोऽवरुध्यै" इत्येवमादिषु विधिसंभवादित्येवमाक्षिप्यते अत्रैवं विचार्यते किमौदुम्बरो यूपो भवतीत्यौदुम्बरतायाः "ऊर्जोऽवरुध्यै" इति फलम्? उत सर्वोऽयमर्थवादः? तदर्थं च किमेवंजातीयकेन विधिविभक्तिहीनेन साधनत्वमौदुम्बरतादीनां शक्यते प्रतिपादयितुं न वेति, तत्र पूर्वः पक्षः ऊर्जं पशूनाप्नोत्यूर्जोऽवरुध्या इत्यनेन पशूनां साध्यत्वं गम्यते श्रुत्या, लक्षणया तु प्राशस्त्यं, फलविधौ चार्थवत्त्वम्, आनर्थक्यमर्थवादत्वे, साध्यस्य च साधनापेक्षत्वात्तत्संनिधावुच्चरितमौदुम्बरत्वमसत्यपि विधौ साधनत्वेनावगम्यते साधनत्वावगमादेव च प्रव-

१ अपेक्षत इति पाठान्तरम्।

त्तिसिद्धेर्नार्थो विधिनेति, सिद्धान्तस्तु विधावसति भावनाया औदुम्बरताभवनाक्षिप्तायाः सैव भाव्या स्याच्च फलं, संनिहिता च सा, विप्रकृष्टं तु फलम्, अतो ऽपि न फलसंबन्धः, तेन यद्यपि तावदूर्जं पशूनाप्नोत्यूर्जोऽवरुध्या इत्यनेन फलमभिधातुं शक्यते तथाप्यविहितस्यौदुम्बरत्वस्य फलवचनमनर्थकमित्यर्थवादत एवात्र विधिरुन्नेतव्यः, न च स्तुतित्वेन विधिशक्तिमुपजनय्य पुनस्तेनैव फलकल्पना संभवति वाक्यभेदप्रसङ्गात्, तस्मादर्थवादः, न चैवंविधेन कामशब्दरहितेन शक्यते फलं प्रतिपादयितुमिति पर्णमय्यधिकरणे वक्ष्यामः । अत्र तु साधनांशविचारमुखेनार्थवादत्वमुक्तं, तत्र तु साध्यांशविचार इत्यपौनरुक्त्यम् । अथवा साध्यांशेऽप्यत्रैव विचारिते रात्रिसत्रन्यायेन फलपरत्वमेवापापश्लोकश्रवणादीनामाशङ्क्य निराकरिष्यते चतुर्थे, न चौदुम्बरतायाः फले विधीयमानायाः विधिराश्रयो लभ्यते तत्रास्मादेव वाक्यादाश्रयकल्पनायां वाक्यभेदः, पशुयागो हि प्रकृतः स तावदयोग्यः, यत्र हि गुणः कारकतामापद्यते स आश्रयः, यथा होमादध्नः, न चौदुम्बरता शक्नोति यागे कारकीभवितुं तदाश्रयत्वे च यूपग्रहणानर्थक्यम् अनुवादासंभवात्, यत्तु पशुनियोजनं यूपद्वारेण योग्यं तदपि सह यूपेनैवाप्रकृतम् ।

न च प्रकृतिवच्छब्देन तस्य संनिधिसंभवः, स हि प्राकृतमित्थंभावं सामान्येन संनिधापयति तत्र न यूपस्य स्वरूपेण विपरिवृत्तिरस्ति अविपरिवर्त्तमानं च न शक्नोत्याश्रयाकाङ्क्षां पूरयितुं, तादृशी च विपरिवृत्तिर्जुह्वादीनामप्यस्तीति तेषामप्याश्रयत्वं स्यात् तत्र तथैव यूपग्रहणानर्थक्यं तत्र वाक्येनैवाश्रयसंबन्धे फलसंबन्धे च विधीयमाने वाक्यभेदः, एकदेशिनां तु वाक्येनैवाश्रयसंबन्धं फलसंबन्धं च गुणाधिकारेऽभ्युपगच्छतामिहापि तथैव प्रभवाद्यदेकेन वाक्येन संबन्धद्वयासंभवात् अप्रामाण्यमाशङ्क्य तन्निरासाय स्तुत्यर्थत्वमापादितं तदनर्थकम् । कश्चित्त्वाह यूपस्यादृष्टत्वात्तत्संबन्धो दधिहोमसंबन्धवल्लोकतो लभ्यते ततस्तस्य फलसंबन्धस्य नैकस्माद्वाक्यात्सिद्धिरिति, तदसत्, यद्यपि यूपत्वमदृष्टेन तु निमित्तेन यस्मिन् काष्ठे यूपशब्दो वर्त्तते तस्य चौदुम्बरजातेश्च लौकिक

एव संबन्धः। यदि चैवं न लभ्यते "खादिरं वीर्यकामस्य यूपं कुर्या"दित्यत्रापि एकवाक्यता न स्यात्, अस्तु तत्र वाक्यभेद इति चेत् वार्त्तमेतत् एकवाक्यत्वावगमात्, यदि चात्रैकस्मिन्नाख्याते वाक्यभेदस्तथा सत्यौदुम्बरो यूपो भवत्यूर्ज्जं पशुनाप्नोतीत्याख्यातद्वये सुतरां वाक्यभेदः प्रामाण्यं च संभवतीति दूरापेतमप्रामाण्यम्। अथ खादिरो यूपो भवतीत्येतद्वाक्यविहितयूपसंबन्धाश्रयणेन फलसंबन्धविधिर्यः खादिरो यूपः स वीर्यकामस्येति तथा सति खादिरत्वं न क्रत्वर्थं स्यात् उक्थ्यादिवद्गूढवच्च फलार्थमेव स्यात् उभयार्थं चैतदिष्टं खादिरवदुभयार्थतां दधिग्रहणस्य वदतो निबन्धकारस्यापि. तस्मादुपाश्रितस्य खादिरत्वस्यैवौदुम्बरत्वस्य फलार्थविधिसंभवाचाप्रामाण्यशङ्केत्यास्तां तावत्, तस्मादौदुम्बरता यूपोद्देशेन विधीयते ततः स्तुतिरियमूर्ज्जो वरुध्यै इति सिद्धम्।

## सू० हेतुर्वा स्यादर्थवत्त्वोपपत्तिभ्याम् ॥ २६ ॥

### एवमानर्थक्यप्रतियोगिनो विधिप्रतियोगिनश्चार्थवादाः

विचारिताः, इदानीं प्रतिहेतुप्रतियोगिनो विचार्यन्ते, एवं श्रूयते "शूर्पेण जुहोति तेन ह्यन्नं क्रियते" तत्र संदेहः किं शूर्पेण होमे कर्त्तव्येऽन्नकरणताहेतुः? उतार्थवाद? इति तत्र हि शब्दश्रुत्या हेतुत्वं गम्यते लक्षणया प्राशस्त्यम् अनर्थकप्रायश्चार्थवादः, हेतुस्त्वर्थवान् कः पुनरर्थो हेतोः? येन येनान्नं क्रियते शूर्पादन्येनापि दर्विपिठरादिना तेनापि होमसिद्धिर्हेतोः प्रयोजनं कथमप्रसिद्धायां व्याप्तौ हेतुव्यपदेशः. अत एव हेतुनिर्द्देशाद्व्याप्तिमन्तरेणानुपपद्यमानात् व्याप्तिवचनं कल्प्यते, येन येनान्नं क्रियते तेन होतव्यमिति तेन वचनेन सर्वान्नकरणविधायिना शूर्पस्यापि होमसाधनत्वसिद्धेः शूर्पेण जुहोतीत्यविकृत्यानुवादः, तेनेदृशमिदं वाक्यं श्रुतानुमितैकदेशनिष्पन्नं शूर्पस्य होमसाधनत्वमन्नकरणत्वाद्धेतोः, अतः शूर्पमन्यद्वा यदन्नकरणं तेन होतव्यमिति पूर्वः पक्षः। सिद्धान्तस्तु शूर्पस्य तृतीयाश्रुत्या करणत्वं गम्यते न तदानुमानिकैर्दर्विपिठरादिभिर्विकल्पितुमर्हति।

न च वेदेनोच्यमानं शूर्पस्य होमसाधनत्वं हेतुमपेक्षते वेदस्यैव तत्र प्रमाणत्वात्, अर्थवादस्त्वपेक्षितः प्ररोचनार्थत्वेन. तस्मादर्थवादत्वम्। एवं चाप्रसिद्धव्याप्तिवचनकल्पनाक्लेशो न भविष्यति, क्रियत इति चावर्त्त-

माने वर्त्तमाननिर्द्देशः प्ररोचनार्थत्वे युक्तो भवति, न हि भूते भाविनि वा तादृशी प्रीतिर्यादृशी प्रवर्त्तमाने तेन रुच्यर्थत्वेन लक्षणया अवर्तमाने वर्त्तमाननिर्द्देशो युक्तः, विध्यर्थत्वे तु निष्प्रमाणकं लक्षणाश्रयणं न परिकल्प्यते।

न च श्रौतेन वर्त्तमानाचक्रियेण मुख्याचकरणेन शक्यते होमः कर्तुं, तस्मादर्थवादत्वम् ।

## सू० तदर्थशास्त्रात् ॥ ३१ ॥

गतोऽर्थवादप्रसङ्गः, मन्त्रेष्विदानीं चिन्ता तेषामप्याद्याधिकरणे अनार्थक्यमाशङ्क्य स्वाध्यायविधिवशेनार्थवत्तया भवितव्यमित्येतावदपर्यवसितं कथितं, तत्पर्यवसानायेदानीमर्थविशेषश्चिन्त्यते, तेषां च क्रमप्रकरणाभ्यां क्रत्वङ्गत्वं भवत्किं दृष्टेनैवार्थप्रकाशनेन भवति? किम्वोच्चारणमात्रेणादृष्टं कुर्वता? मिति, तत्र यदि दृष्टार्थतैव स्यान्मन्त्राम्नानमनर्थकं, प्रत्यायनाददृष्टं चेत्तदुच्चारणतो वरं, शक्यते ह्युपायान्तरेणापि प्रयोगवेलायामर्थप्रकाशनं, तद्यदि तावन्मात्रमेव कार्यं मन्त्राणां स्यात् नित्यवदाम्नानमनर्थकं स्यात् । अथ तु मन्त्रप्रत्यायनाददृष्टं कल्प्येत ततो यद् दूरमपि गत्वा कल्प्यमदृष्टं तदुच्चारणादेव कल्पयितुं युक्तं, तद्धि पुरुषव्यापारगोचरः, प्रत्यायनं तु तस्मिन्ननुष्ठिते स्वयमेव भवति, स्वव्यापारे च पुरुषो नियुज्यते यत्र च नियुज्यते तत्र फलाकाङ्क्षा, तेन याऽवश्यं भाविनी अदृष्टकल्पना सा तत्रैव युक्ता न तु तस्य प्रत्यायनार्थत्वं, प्रत्यायनं वा दृष्टार्थमिति युक्तं, तस्माददृष्टार्था मन्त्राः, तथा च तदर्थशास्त्राद्युपपत्तिः । इतरथा परिसंख्याद्याश्रयणे क्लेशः स्यादिति । अत्राभिधीयते "यस्य दृष्टं न लभ्येत स्यात्तस्यादृष्टकल्पना । अनुष्ठेयस्मृतेश्चेद् मन्त्रोच्चारणमर्थवत् ॥ स्मरणं च प्रयोगार्थं प्रयोगाच्च फलोदयः। एवं दृष्टार्थतालाभाददृष्टपरिकल्पना" यस्तु मन्त्रेणैव स्मर्त्तव्यमिति नियमः, तस्य न किंचिद् दृष्टमस्तीत्यदृष्टं कल्प्यते. मन्त्रोच्चारणस्य तु दृष्टेनैवार्थवत्त्वात्तत्रानुपपत्त्येकशरणमदृष्टकल्पनमनवकाशं तदर्थशास्त्रादयोऽपि गुणार्थार्थवादपरिसंख्यादिभिः परिहृताः, "तस्मात्प्रकाशनेनैवं मन्त्राणामुपकारिता ।
उपायनियमादेव त्वदृष्टपरिकल्पनम्" ।

इति शास्त्रदीपिकायां प्रथमाध्यायस्य द्वितीयः पादः समाप्तः ॥

॥ ओं नमो भगवते मीमांसाद्वयगुरवे श्रीहरामानुजाचार्याय ॥

स्मृतिप्रामाण्याधिकरणम् ।

सू० धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यात् ॥ १ ॥

कथंलक्षणो धर्म इत्येतदिह लक्षणार्थं इत्युक्तं, तत्र प्रथमे पादे चोदनाप्रामाण्यं सिद्धं, द्वितीये त्वर्थवादादेः, एवं कृत्स्नस्य वेदस्य प्रामाण्यमुक्तम्, इदानीं पौरुषेयीषु स्मृतिष्वाचारेषु च वैदिकपरिगृहीतेषु चिन्ता, यद्यपि चोदनाप्रामाण्यमप्रामाण्येऽपि स्मृतीनां न विहन्यते, तथाऽपि किंलक्षणो धर्म इति जिज्ञासाऽधिकारात् स्मृतिप्रामाण्यं लक्षणे संगतम्। नन्वप्रामाण्ये स्मृतीनां वेदस्यापि तत्सापेक्षत्वादप्रामाण्यं स्यात् "याञ्जनाः प्रतिनन्दन्ती"त्ययं मन्त्रो रात्रिदेवत्यकर्माङ्गत्वेन प्रतीयते, स्मार्त्ते च कर्मणि रात्रिर्देवतेति तदपेक्षस्य मन्त्रस्य तदप्रामाण्यादप्रामाण्येन तत्सामान्यादितरेषु तथात्वमिति सकलस्य वेदस्याप्रामाण्यं, तेन वेदप्रामाण्यसिद्ध्यर्थं स्मृतिप्रामाण्यमिति संगतिः । नैतदेवं, यदा हि स्मृतेरप्रामाण्यं तदा मन्त्रस्य स्मार्त्तकर्माङ्गत्वे किं प्रमाणं? न तावल्लिङ्गं, तस्य सामा[1]न्यसंबन्धप्रमाणसापेक्षत्वात्, नापि स्मृतिवाक्यं, तस्याप्रामाण्यात्, यद्यपि लिङ्गमात्रं विनियोजकं स्यात्, तथाऽपि फलवदङ्गत्वेनाफलस्य विनियोगात् स्मृत्यप्रामाण्ये च स्मार्त्तस्य कर्मणः फलवत्त्वाभावाच्च तादर्थ्यं मन्त्रस्य येन सापेक्षता स्यात्, सत्यपि च मन्त्राप्रामाण्ये सकलस्याप्रामाण्यं कुतस्त्यं, न हि मन्त्रस्य स्वारसिकमप्रामाण्यं येन शब्दमात्रे स्यात्, अपि तु सापेक्षैकवाक्यताकृतम् ।

न च कृत्स्नस्य तदस्तीति कथमप्रामाण्यं, तस्मान्नैवं संगतिः संभवतीति पूर्वोक्तैव संगतिर्ज्यायसी, धर्मप्रमाणचिन्ताऽधिकारात् स्मृतीनामपि तत्र प्रामाण्यं प्रतिपाद्यत इति, न चैवं चोदनैवेति प्रतिज्ञाव्याकोपः, तन्मूलत्वेन तदन्तर्भावेन चेत[2]रेषां प्रामाण्यात्स्वातन्त्र्येण प्रामाण्याभावात्,

१ तस्य सामान्यसंबन्धसापेक्षत्वादिति तु पुस्तकान्तरपाठः ।

२ तदन्तर्भावेन वेति पाठान्तरम् ।

तदिह किं स्मृत्याचाराणां धर्मे प्रामाण्यम्? उत ने? ति विचार्यते, तदर्थं च श्रुतिमूलत्वमेषां भ्रान्त्यादिमूलत्वं वेति विचारयितव्यं, तत्र "प्रायेणानृतवादित्वात्पुंसां भ्रान्त्यादिसंभवात् । चोदनाऽनुपलब्धेश्च श्रद्धामात्रात्प्रमाणात।" संभवद्भ्रमविप्रलम्भेषु पुरुषेषु न तावन्निर्विचिकित्समेव प्रामाण्यं स्वध्यवसानम्, अतश्चाऽननुष्ठानात्फलतो ऽप्रामाण्यमेव । किंच नैषां प्रत्यक्षादिमूलत्वेन प्रामाण्यं तेषां धर्माधर्मयोरप्रवृत्तेः, न च स्वातन्त्र्येण वेदवत् पौरुषेयत्वात्, न चोदनामूलत्वेन तदनुपलम्भात्, न ह्यनुपलभ्यमानाश्चोदनामूलत्वेन स्वप्रमेयं प्रतिपादयन्ति, न ह्यासां प्रत्यक्षेणोपलम्भसंभवः, अनुच्चार्यमाणत्वात्, उच्चार्यमाणत्वे[1] च स्मृतिप्रणयनवैयर्थ्यं, प्राक् पठिता अपि संप्रति पुरुषक्षयादुत्सन्ना इति चेत् न, विकल्पासहत्वात्, यो ह्युत्सादं चोदनानां वदति स वक्तव्यः, किमेका काचिच्छाखा स्मार्त्तश्रुतिसंघातात्मिका पूर्वमासीत्सा चेदानीमध्येतृक्षयादुत्सन्नेति कल्प्यते? किं वा बह्वीषु शाखास्वितस्ततः श्रुतयः स्मृतिमूलभूताः पठिताः संप्रत्युत्सन्नाः? इति, तत्र "सहस्रं सामशाखाः,एकशतमध्वर्युशाखाः,एकविंशतिशाखं बाह्वृच्यम्" इत्यादिशाखापरिमाणस्य परम्परया सर्वलोकस्मरणात्नातोऽधिका शाखा संभावयितुं शक्यते, नापि पठ्यमानानामत्यन्ताऽवहिताध्येतृकाणां मध्ये कासांचिच्चोदनानामुत्सादसंभवः ।

न च संप्रत्यपि पठ्यन्त एव विप्रकीर्णाः स्मृतिमूलभूताः श्रुतय इति युक्तं, स्मृतिप्रणयनवैयर्थ्यादित्युक्तं, तत्र तावदिदानीमतीतकाले वा पठिताः श्रुतयः स्मृतीनां मूलं, नापि नित्यानुमेयाः, अन्धपरम्परान्यायात्, या हि चोदना न कदाचिदुच्चार्यते तस्याः सर्वपुरुषप्रत्यक्षादिप्रसराभावात् दुर्लभतरमस्तित्वम् ।

ननु स्मृतिलिङ्गवशेनानुमानं प्रसरत्येव सर्वेषां लिङ्गादिकल्प्यास्विव श्रुतिषु, विषम उपन्यासः, लिङ्गादयो हि सर्वपुरुषप्रत्यक्षविषयाः श्रुतिमन्तरेणानुपपद्यमाना युक्तं यत्तस्यां निश्चयमादधति, स्मृतिवाक्यरचना तु पौरु-

[1] उच्चार्यमाणत्वे वेति पुस्तकान्तरपाठः ।

येरी यदर्थविषयोपलभ्यते तद्विषयं [1]रचयितुर्ज्ञानं कल्पयति,'अष्टकाकर्त्तव्यताविषयं च स्मृतिवाक्यमिति नूनमयमष्टकाकर्त्तव्यतां वेदेत्येतावत्प्रथमं कल्प्यते न श्रुतिस्वरूपं, नापि श्रुतिज्ञानम्, एवमर्थज्ञाने स्मृतिकारस्य कल्पिते पश्चाज् ज्ञानलिङ्गात् ज्ञेयभूतार्थानुमानं, न श्रुतिकल्पनम्। एवं स्मृतिका[2]रान्तरस्यापि स्मृत्यन्तरलिङ्गादर्थ एवानुमानमिति नि[3]ष्प्रामाणिकी श्रुतिकल्पना स्यात्। अथोच्येत न खलु परकीयेण ज्ञानेन झटित्येवार्थनिर्णयः, मूलानुसंधानसापेक्षत्वात्, तत्र यदि स्मृतिकारस्यार्थविषयज्ञानमूलमनुसंदधानः स्मृत्यन्तरमेव संभावयेत् तदपि च ज्ञानस्यैव लिङ्गं, नार्थस्य, एवं ततः पूर्वतरमपि स्मरणं ज्ञानस्यैव लिङ्गं नार्थस्येति न क्वचिदर्थनिश्चयो लैङ्गिको लभ्यत इति श्रुतिरेव कल्पयितव्या। यद्येवं, श्रुतावपि तु[4]ल्यमेतत्, स्मृतिकारस्य मूलतया श्रुतिज्ञानमेव प्रथमं कल्प्यते न श्रुतिसद्भावः, श्रुतिविषयेण तु ज्ञानेन ज्ञेयभूतश्रुतिविनिर्णयः, परज्ञानेन न तद्विषयश्रुतिनिश्चयो मूलानुसंधानसापेक्षः, मूलं च स्मृतिकारस्य स्मृत्यन्तरमेव, तदपि चार्थज्ञानद्वारेण श्रुतिज्ञानस्यैव लिङ्गं, न श्रुतिसद्भावस्येति न क्वचित्कस्यचिदप्येवं श्रुतिसद्भावनिश्चयो लैङ्गिको लभ्यते, लिङ्गादीनि तु श्रुतिसद्भावं कल्पयन्तीत्युक्तो विशेषः, तेन यदि परकीयेण ज्ञानेन प्रागेवार्थनिश्चयः, ततोऽर्थस्मरणपरम्परयाऽर्थस्यैवानुमानाच्च श्रुतिसिद्धिः अतः स्मृत्यन्तरमेव मूलं स्यात् अन्धपरम्परया च रूपनिश्चयस्तदा स्यात्, चैत्यवन्दनादीनामपि पुंवाक्यपरम्परया धर्मत्वा[5]नुमानं स्यात्। अथ मूलानुसंधानापेक्षं ततो यथैव वयं मानवीयात्स्मरणान्मनोरर्थविषयं श्रुतिवि[6]षयं च ज्ञानमात्रं कल्पयित्वा श्रुतिसद्भावमनि-

---

१ तद्विषयमेवेति पुस्तकान्तरपाठः।

२ स्मृतिकारस्यापि इति पुस्तकान्तरपाठः।

३ निष्प्रमाणिकेति तु युक्तः पाठः।

४ तुल्यमेवैतदिति पाठान्तरम्।

५ धर्मानुमानमिति पाठान्तरम्।

६ श्रुतिविषयं वेति पु०।

श्चित्य तद्विश्वंभाय मनोः श्रुतिसद्भावमूलं प्रमाणं मृगयामहे, तथा मनुरप्यन्यस्य सोऽप्यन्यस्येति न श्रुतिसद्भावसिद्धिः । एवमुभयथाऽपि श्रुतिर्नित्यानुमेया न सिध्यतीति, न तन्मूलत्वेन प्रामाण्यं स्मृतीनाम् । अतः श्रद्धामात्रविजृम्भितं स्मृतिप्रामाण्यमिति प्राप्तेऽभिधीयते ।

वैदिकैः स्मर्यमाणत्वात्तत्परिग्रहदार्ढ्यतः ।
संभाव्यवेदमूलत्वात् स्मृतीनां वेदमूलता ॥

य एव हि वेदस्यैव धर्ममूलता नान्यस्येत्यास्थिता मन्वादयस्तेषामष्टकादिषु धर्मत्वस्मरणं न कथंचिदुपपद्यते न यदि वेदमूलता, तथा वैदिकानामेवाविगीतपरम्परया परिग्रहो, वैदिकत्वस्मरणं चैषु शिष्टानां नासति वेदमूलत्वे ऽवकल्पते, संभवति च त्रैवर्णिकानां वेदसंयोग इति तन्मूलत्वमेवाध्यवसीयते, कथमनुच्चारितानां मूलत्वोपपत्तिः? इति चेत् समुच्चार्यन्त एव स्मृतिमूलभूताः श्रुतयः संप्रत्यपि विप्रकीर्णाः काश्चित् क्वचित्कस्यांचिच्छाखायां, विप्रकीर्णत्वात्तु शाखान्तराध्यायिभिः शाखान्तरगतानामनुपलम्भात्तादर्थ्येनार्थवन्निबन्धनम्, उपलम्भे ऽपि वा मन्दधीभिरनुपसंहरणीयानामुपसंहारफलं स्मृतिप्रणयनमिति न वैयर्थ्यमतः स्मृतयः प्रमाणमिति सिद्धम् ।

श्रुतिप्राबल्याधिकरणम् । सू॰ विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम् ॥ ३ ॥

उत्सृष्टस्य स्मृतिप्रामाण्यस्यापवादः क्रियते, यत्र प्रत्यक्षश्रुतिविरुद्धाः स्मृतीरुदाहृत्य[१]चिन्त्यते किं प्रमाणमप्रमाणं वा? इति, तदर्थं च पूर्ववदेव श्रुतिमूलत्वं भ्रान्त्यादिमूलत्वं वेति चिन्तनीयम्, तत्र पूर्वाधिकरणं समस्तमिह पूर्वपक्षः ॥

न च प्रत्यक्षश्रुतिविरोधात् स्मार्तश्रुतिकल्पनाऽनवक्लृप्तिः, द्वयसंभवात् व्रीह्यादिश्रुतिवत्, यत्र हि द्वयोरसंभवस्तत्रैकविषयेण प्रत्यक्षेणेतरवि-

१ स्मृतय उदाहृत्य चिन्त्यन्ते इति युक्तः पाठः ।

षयमनुमानं प्रमेयापहारादनायासेन निराक्रियते वह्नाविव शैत्यानुमानं, यत्र तु द्वयसंभवस्तत्र शीघ्रप्रवृत्तमपीतरश्चेतरस्य विषयमपहरतीति तद्विषयमनुमानं न शक्नोति प्रतिषेद्धुं, संभवति च युगपदनुपसंहरणीयार्थमपि श्रुतिद्वयं व्रीहियवदृहद्रथन्तरग्रहणाग्रहणादिविषयश्रुतिवदिति प्रत्यक्षेणापि स्पर्शविधिना सर्ववेष्टनश्रुतिविषयमनुमानं न शक्यं निराकर्त्तुं, कथं तर्हि श्रुतिलिङ्गादिषु पूर्वपूर्वेणोत्तरोत्तरस्य बाधः ? तत्रापि श्रुतिद्वयसंभवात् क्लृप्तया कल्प्या निराकर्त्तुं शक्यते। उच्यते नैव तत्र प्रमेयापहारनिबन्धनो बाधः, किंतु कल्पनामूलोच्छेदात्, यावद्धि अन्ताम्नानमनवगतप्रयोजनं, प्रकरणी[१] वा क्रतुः, क्रतार्थस्तावदेव तत्सिद्ध्यर्थं श्रुतिकल्पनं प्रमाणवत्, यदा तु क्लृप्तया श्रुत्या द्वयोरपि नैराकाङ्क्ष्यं, तदा मूलोच्छेदादाकाङ्क्षाऽधीना श्रुतिकल्पना नैवाभ्यनुज्ञाति, अत्र तु प्रत्यक्षया श्रुत्या न स्मृतेर्मूलाकाङ्क्षा निवर्त्तते,[२] यतो मूलोच्छेदादनुमानविरोधः स्यात्, यदि परं प्रमेयापहाराद्ग्नाविव शैत्यानुमानं प्रत्यक्षेण विरुध्येत, न चैवं संभवति, श्रुतिद्वयसंभवात् अग्नेर्हि शैत्यौष्ण्ये न संभवतः परस्परोपमर्दकत्वात्तयोः, अतः प्रत्यक्षेणौष्ण्येन शैत्यस्यापहृतत्वान्न तद्विषयमनुमानमुदेतुमुत्सहते, अत्र तु संभवति श्रुतिद्वयं व्रीहियवादिवदित्युक्तम्। अथवा श्रुतिस्मृतिप्रमेये न मिथो विरुध्येते, न हि व्रीहिशक्त्या यवशक्तिर्विरुध्यते, सा वा तया, स्पर्शशक्त्या वा वेष्टनशक्तिः, सा वा तया, शक्तिमात्रं च विधेः प्रमेयम्, अतोऽत्रानुमानस्य प्रत्यक्षेणाविरोधात् विरुद्धानामपि प्रामाण्यमिति प्राप्तेऽभिधीयते। "अप्रामाण्यं विरुद्धानामशक्त्यार्थविधानतः। औदुम्बरीं न शक्नोति सर्वां वेष्टयितुं स्पृशन्। वेष्टितां वापि संस्प्रष्टुमतोऽन्योन्यविरोधतः। प्रमेयापहृतेरेव बाधः स्याद्वह्निशैत्यवत्" अशक्यार्थविषयता हि मूर्द्धाभिषिक्तमप्रामाण्यनिदानं विधीनां, सागरं तरेदित्यादिवत्, अशक्यं च संस्पृशता वेष्टयितुं, वेष्टयता स्प्रष्टुं वा, अतो वेष्टयेत्स्पृशेदिति अशक्यार्थविधानान्न तावदुभयोरपि प्रामाण्यं संभवतीत्यवश्यमन्यतरद्बाधितव्यम्।

१ प्रकरणी चाकृतार्थः इति पाठान्तरम्।
२ निवर्त्यते इति पु०।

ननु शक्तिमात्रं विधेः प्रमेयं, संभवति चाननुष्ठीयमानयोरपि शक्तिरिति सत्यप्यनुष्ठानविरोधे प्रमेयभूतशक्त्यविरोधादुभयोः प्रामाण्यमुपपन्नमिति नैकस्यापि बाधो युज्यते, किमिदानीं सागरं तरेदग्निना सिञ्चेदित्यादीनामपि प्रामाण्यम्? अननुष्ठीयमानस्यापि शक्तिसंभवात्, तथा सामान्यविशेषशास्त्रयोरपि न विरोधः स्यात्, आहवनीयपदयोरुभयोरपि शक्तिसंभवात्, आहवनीयस्य न पदेन बाधः स्यात्, अविरुद्धस्य दुर्बलस्यापि बाधायोगात्, न चात्र श्रुत्यादिभिरिव लिङ्गादीनां मूलोच्छेदेन श्रुतिकल्पनाविरो[1]धाद्बाधसंभवः, सामान्यशास्त्रस्यापि प्रत्यक्षत्वात्तन्मात्रेण होमान्तरेष्विव पदहोमे ऽप्याहवनीयसिद्धेः, अतोऽत्र सामग्रीविरोधासंभवात्प्रमेयविरोधादेव बाधो ऽङ्गीकर्त्तव्यः शक्तिमात्रे च प्रमेये तद्विरोधाभावान्न बाधः सिद्ध्येत्, एवमुत्पत्त्युत्पन्नशिष्टनित्यनैमित्तिकादिषु प्रसङ्गो दर्शयितव्यः, तस्मादवश्यमनुष्ठानविरोधे शास्त्रविरोधोऽङ्गीकर्त्तव्यः, किं च न शक्तिमात्रं भूतार्थकथनवद् विधिना बोध्यते, प्रवर्त्तनारूपो हि विधिर्यात्समीहितसाधनशक्तिं बोधयति, प्रवर्त्तना चाशक्यविषया न संभवतीति स्यादेवाप्रामाण्यं, यदा तु समीहितसाधनतैव विध्यर्थ इत्याश्रीयते तद[2]पि न तन्मात्रं विधिः, किंतु कर्त्तुः समीहितसाधनता, न चाशक्यार्थे कर्त्तृत्वं संभवतीत्यप्रामाण्यं, यथोक्तम् "आख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणी"ति तेनाशक्यानुष्ठानमर्थद्वयं बोधयतोः प्रमाणयोः प्रमेयविरोधादवश्यमन्यतरत् बाधितव्यं, तत्र प्रत्यक्षेणानुमानस्य बाधोऽग्नाविव शैत्यानुमानस्येति सिद्धमप्रामाण्यं स्मृतीनां श्रुतिविरुद्धानां, व्रीह्यादिषु तु द्वयोरपि प्रत्यक्षत्वेनाप्रमाणविशेषत्वान्नैकेनेतरस्य बाधः संभवति, विरुद्धार्थत्वाच्च न द्वयोराञ्जस्येन प्रामाण्यं, न चाप्रामाण्यमविद्यमानदोषयोः संभवतीति गत्यन्तराभावादुभयोरपि पाक्षिको बाधः कल्प्यते, न चैवं शास्त्रस्याप्रामाण्यं, यथा सामान्यशास्त्रस्य विशेषशास्त्रबाधितस्यापि नाप्रामाण्यं, तद्वदिहापि ।

ननु बाधितं भवत्यप्रमाणं च न भवतीति व्याहतमेतत्, सत्यमेतच्च

१ कल्पनाविरोधनाद्बाधसंभवः इति पु० ।
२ तथापि इति पाठान्तरम् ।

त्वत्र पारमार्थिकः शास्त्रार्थो बाध्यते येनाप्रामाण्यं शास्त्रस्य स्यात्, किंतु प्रतिपक्षमनालोचयतो यः शास्त्रस्य स्वरसतः सार्वत्रिकः प्रत्ययः सोऽत्र बाध्यते तद्बाधाच्च पाक्षिकानुष्ठानपरत्वं शास्त्रस्याध्यवसीयते सामान्यशास्त्रस्यैव विशेषशास्त्रानाक्रान्तविषयपरत्वमिति नाप्रामाण्यं, न चैवं स्मृतिवशेन श्रुतिस्वरूपभङ्गेन स्पर्शनस्य पाक्षिकत्वं कल्पयितुं शक्यते, स्मृतेः स्वतोऽप्रमाणत्वेन श्रुतिबाधासामर्थ्यात्, श्रुतिकल्पनस्य च प्रत्यक्षश्रुतिविहितस्पर्शविरोधेन विरुद्धत्वात् ।

ननु पाक्षिकत्वेनापि प्रत्यक्षश्रुतेरुपपत्तेर्यस्मिन् पक्षे सा नास्ति तत्र स्पर्शाभावेन वेष्टनस्यापि शक्यानुष्ठानत्वात्तद्विषये श्रुतिकल्पनमुपपन्नमिति चेत् न इतरेतराश्रयात्, स्वरसतो हि श्रुतिवाक्यादपाक्षिकं स्पर्शनं गम्यते तस्मिंश्चापाक्षिके न स्मार्तश्रुतिकल्पनम् अशक्यत्वात्, न हि स्पृशता वेष्टयितुं शक्यते, तत्र स्पर्शनस्य पाक्षिकत्वे सति शक्यार्थतामासाद्य काल्पनिकी श्रुतिरात्मानं लभते, तस्यां च लब्धात्मिकायां तद्विरोधात्स्पर्शनस्य पाक्षिकत्वमितीरेतराश्रयत्वं स्यात्, अतोऽत्र श्रुत्यसंभवाद्भ्रान्त्यादिमूलकत्वादप्रमाणमेवंजातीयकं स्मरणं, न ह्यसंभवद्भ्रान्त्यादिकं स्मरणं कस्यचिदपि श[1]ङ्कमध्यवसातुं, संभाव्यमाने तु भ्रान्त्यादौ दृष्टानुगुणाऽदृष्टकल्पना, असति तु विरोधे कर्तृसामान्यात् वैदिकपरिग्रहदार्ढ्याच्च श्रुत्यनुमानमिति न सर्वत्रैकरूप्यमिति,

दृष्टमूलकस्मृत्यप्रामाण्याधिकरणम् ।

## सू॰ हेतुदर्शनाच्च ॥ ४ ॥

अधिकरणान्तरं वा, अत्र वक्ष्यमाणकारणं श्रुत्यविरुद्धस्मरणमुदाहरणं "वैसर्जनहोमीयं वासोऽध्वर्युर्गृह्णातीत्यादिकं तत्प्रमाणमप्रमाणं वेति विचारः, कर्तृसामान्यात्प्रत्यक्षश्रुतिविरोधाभावा[2]त्प्रामाण्यमिति प्राप्ते उच्यते, न दृष्टे हेतौ हेत्वन्तरानुमानं प्रक्रमते, दृष्टश्चात्र लोभ एव हेतुरिति, तत एव स्मृत्युपपत्तेर्नात्यन्तापरिदृष्टवैदिकवचनकल्पनोपपत्तिः, अतः

१ शक्यमध्यवसातुमिति पा॰ ।

२ श्रुतिविरोधाभावाच्चेति पाठान्तरम् ।

श्रुतिविरुद्धं दृष्टकारणं च स्मरणमप्रमाणम्, अतोऽन्यत्प्रमाणमिति, यस्त्वाचार्यैर[1]धिकरणभङ्गो दर्शितः, तत्रायमभिप्रायः, भवेदेवं स्मृतेर्बाधो यदि स्मृतिमूलं न कदाचिदपि कैश्चित्कस्यांचिदपि शाखायां पठ्यत इत्यध्यवसातुं शक्यते, तदा हि तत्र सर्वपुरुषाणामेव प्रत्यक्षप्रसराभावात् केवलं स्मृत्यनुमानसमधिगम्यं श्रुतिवाक्यमनुमानस्य प्रत्यक्षविरोधादनुदयात्सकलजनसमस्तप्रमाणपथाऽननुवर्त्तिगगनकुसुमायमानं स्यात्, न चैवमध्यवसातुं शक्यम् अनन्तचरणाधाराणामनेकसहस्राणां वेदशाखानां कार्त्स्न्येनोपलम्भासंभवात्, एवं चानध्यवसीयमाने सत्यपि विरोधे दुर्लभतरमप्रामाण्यं, नित्यानुमेयश्रुतिमूलत्वानिराकरणात्, यदा हि शाखान्तरगतानि पुरुषान्तर[2]प्रत्यक्षाण्येव वेदवाक्यानि स्मृतीनां मूलं तदा वेष्टनवाक्यमपि पुरुषा[3]न्तरे प्रत्यक्षतया संभाव्यमानं कथमिव शक्यं नास्तीति वक्तुं, द्वेधा हि तस्याऽभावावधारणं बाधकप्रमाणसद्भावात्, साधकप्रमाणाभावाद्वा भवेत्, बाधकसद्भावोऽपि द्वेधा, दृश्यादर्शनाद्वा, तदभावनियतार्थान्तरदर्शनाद्वा, न तावद्दृश्यादर्शनं समस्तशाखोपलम्भाभावादित्युक्तम् ।

न च विरुद्धश्रुतिदर्शनं तदभावनियतं, येन तद्दर्शनात्तदभावोऽवधार्येत, विरुद्धानामपि ग्रहणाग्रहणादिश्रुतीनां सहस्रं द[4]र्शनात्, तेन न तावद्बाधकसद्भावो, नापि साधकाभावः, स खल्वात्मीयः सर्वेषां वा भवेत्, न तावत्स्वप्रमाणनिवृत्त्या वस्त्वभावनिश्चयोऽतिप्रसङ्गात् ।

न च समस्तपुरुषाणां तत्र प्रमाणं नास्तीति शक्यते निश्चेतुं, संभवति हि तस्य शाखान्तरे समाम्नानं, पुरुषान्तरेण प्रत्यक्षीकरणं च, नित्यानुमेयत्वे हि सर्वेषामिहानुमानमेव प्रमाणं स्यात्, तच्च प्रत्यक्षश्रुतिविरोधे नोदेतीति सर्वपुरुषाणां साधकप्रमाणाभावादीषत्करमभावावधारणं स्यात्

न च तदस्तीत्युक्तम् अन्धपरम्परादोषात्, अतः पुरुषान्तराणामिह प्रत्यक्षसंभवात् तस्य चात्मप्रत्यक्षतुल्यत्वाच स्मार्त्तश्रुतिनिराकरणं, तदुक्तम्

---

१ अत्राचार्यपदेन शबरस्वामिन उच्यन्ते ।

२ पुरुषान्तरप्रत्यक्षतयेति पु० ।

३ पुरुषान्तरप्रत्यक्षतयेति पाठान्तरम् ।

४ सहस्रदर्शनादिति तु युक्तं स्यात् ।

"आत्मीयात्परकीयस्य दौर्बल्यं न हि किंचन। प्रत्यक्षत्वाविशेषेण स्वप्रत्यक्षसमं हि तत्"। यदा चैवं स्वशाखापठितश्रु[1]तितुल्यप्रमाणकतया स्मार्त्तमपि वेदवाक्यं संभाव्यते तदा स्मृतिलिङ्गकमनुमानं न केनचित्प्रतिबध्यत इति न निर्मूलत्वं स्मृतेः शक्यते वक्तुं, ततश्च वेष्टनस्पर्शनयोरात्मीयपरकीयप्रत्यक्षश्रुतिविहितयोस्तुल्यकक्षप्रमाणतया विकल्पो न्याय्यः, यदि परमात्मीयस्य प्रत्ययस्य विश्र[2]म्भणीयतया तेनैव परप्रत्ययमनादृत्य व्यवहारः क्रियते ततः क्रियताम्, अनादरणं च सहस्रतमेऽप्यंऽशे परप्रत्ययस्यादृष्टमूलस्य न्यायाभासनिमित्तत्वसंभवाद्भ्रान्त्यादिमूलसंभवाद्वा "अङ्गं वा समभिव्याहारादविशेषाद्धुभौ वे"तिवत् न त्वप्रामाण्याध्यवसानं, व्यवहारविशेषौचित्यप्रतिपादनार्थं चेदं सूत्रं, "विरोधे त्वनपेक्षं स्या"दिति, श्रुतिस्मृतिविरोधे यत्प्रमाणान्तरानपेक्षश्रुतिवाक्यं तदेव ग्राह्यम्, असति ह्यात्मप्रत्यये परप्रत्ययानुमानं क्लेशाश्रयणमिति, यथाहुः "यावदेकं श्रुतौ कर्म स्मृतौ चान्यत्प्रतीयते। तावत्तयोर्विरुद्धत्वे श्रौतानुष्ठानमिष्यत" इति, तेन फलतोऽप्रामाण्यं श्रुतिविरुद्धानां स्मृतीनामिति स्थितं, भाष्यमप्यननुष्ठानरूपाप्रामाण्यपरं व्याख्येयम्। यद्वा यान्येतानि त्रयीविद्भिर्न परिगृहीतानि शाक्यादिभिर्निर्मितानि धर्मशास्त्राभासानि तेषामनेनाप्रामाण्यं पूर्वसूत्रोक्तकर्तृसामान्यप्रत्युदाहरणत्वेनोच्यते, तेषां हि प्रत्यक्षादिमूलत्वेन प्रामाण्यं प्रत्यक्षसूत्रे निराकृतं, मन्वादिवद्वेदमूलत्वेन प्रामाण्यमिह निराक्रियते, तेषां ह्यसत्यपि प्रसिद्धवैदिकैरग्निहोत्रादिभिः कर्तृसामान्ये भिन्नप्रस्थाना वा वेदा मूलं भविष्यन्ति, यथैवाथर्वणस्य त्रयीभिन्नरूपता, तथा चतुर्भ्योऽपि वेदेभ्यो भिन्नरूपा वेदाः संभवेयुः, ते चेदानीं प्रलीनाः. मन्वादीनामपि हि क्वचित्प्रलीनशाखामूलतामनुमन्यन्ते, तद्वदत्रापि भविष्यति, इत्थं च संभवति प्रामाण्ये नाप्रामाण्यं युक्तमिति भवति केषांचिदाशङ्का, साऽपि [3]मन्दविषन्यायेन निराकर्त्तव्येत्येवमर्थमिदमधिकरणं, कृतः पूर्वपक्षः, सिद्धान्तस्तु अवि-

१ स्वशाखापठितश्रुतितुल्यप्रमाणकमिति पाठान्तरम्।

२ विस्रम्भणीयतयेति तु युक्तम्।

३ सा च मन्दविषन्यायेनेति पु०।

च्छिच्चवैदिकपरिग्रहानुपपत्त्या मन्वादिष्वनुपलभ्यमानोऽपि वेदः कल्पितः, शाक्यादिषु त्वत्यन्तं वैदिकविपरीतमवैदिकमप्रमाणं च तदित्येव शिष्टानां स्मरणं, वेदद्वेषिण एव तेषां प्रामाण्यमनुमन्यन्ते, दृष्टानुसारिणी च कल्पना न तद्वैपरीत्येन, अतोऽत्र वेदकल्पना दवीयसीत्यप्रामाण्यमेव तेषामसन्मूलत्वादिति ।

पदार्थप्राबल्याधिकरणम् ।

सू॰ शिष्टाकोपेऽविरुद्धमिति चेत् ॥ ५ ॥
न शास्त्रपरिमाणत्वात् ॥ ६ ॥

"आचान्तेन कर्त्तव्यम्" "यज्ञोपवीतिना कर्त्तव्यम्" "दक्षिणाचारेण कर्त्तव्य"मित्येवमादीनि क्रत्वङ्गस्म[1]रणान्युदाहरणं किं प्रमाणमप्रमाणं? वेति विचारः, तदर्थं च प्रत्यक्षश्रुत्या विरुध्यन्ते न वेति, तदर्थमप्येभिः किं क्रतुमध्येऽनुष्ठीयमानैः कस्यचिच्छ्रुत्यर्थस्य क्रमादेर्भवति बाधो न वेति, अथवाऽभ्युपेत्यैव विरोधं प्रमाणमप्रमाणं वेति विचारः, तदर्थं च प्रमाणप्रमेयबलाबलविसंवादे किं च ज्याय इति चिन्त्यते, ? तथा हि श्रुतिस्मृत्योः प्रमाणयोः श्रुतिर्बलीयसीति स्थितम्, अतः श्रौतत्वात् क्रमादयः स्मार्त्तेभ्य आचमनादिभ्यो बलीयांसो विज्ञायन्ते, प्रमेयस्वरूपालोचने पदार्थगुणत्वात्क्रमादेराचमनादयः पदार्था बलीयांसोऽवगम्यन्त इति बलाबलद्वयविसंवादात्कतरेण निर्णय इति संदेहः, तत्र पूर्वः पक्षः "श्रुत्युक्तानां क्रमादीनां स्मार्त्तैराचमनादिभिः । व्याकोपः स्यादतस्तावत् विस्पष्टैव विरोधिता ॥ ततः श्रुतिबलीयस्त्वात्स्मृतेः स्यादप्रमाणता । पूर्वभाविप्रमाणस्थं प्रमेयस्याद् बलाबलात् । ज्यायस्तेनैव निर्णीते न पश्चादितरादरः । नैराकाङ्क्ष्यात्प्रमातॄणामतः स्मृत्यर्थबाधनम्" ॥

"वेदं कृत्वा वेदिं कुर्यादि"ति क्रमः कालश्च यः प्रधानेनाङ्गानामविप्रकर्षः प्रयोगप्राशुभावश्च प्रयोगवचनावगतो यश्च पूर्वाह्णादिः परिमाणं चाविस्मृतसमस्तपदार्थानुष्ठानसिद्ध्यर्थं प्रयोगविधिनैवाकाङ्क्षितं पदार्थविधिप्रचयावगतं, तदेतत्त्रयमपि क्रमकालपरिमाणात्मकमाचमनादिभिर-

१ क्रत्वर्थाङ्गस्मरणानीत्यपि पाठः ।

न्यथात्वं प्रतिपद्यते तेन विरोधस्तावदस्त्येव, विरोधे च श्रुतेर्बलीयस्त्वात् स्मृत्यर्थस्याचमनादेर्बाधः ।

न च श्रुत्यर्थत्वेऽपि पदार्थगुणत्वात्क्रमादेर्दौर्बल्यमाचमनादेः स्मृत्यर्थस्यापि पदार्थत्वाद्बलीयस्त्वमिति वाच्यं प्रमाणपूर्वको हि प्रमेयावगमः तेन पूर्वभाविप्रमाणस्थं बलाबलं पूर्वमवगम्यते तेन चाचमनादिभ्यः क्रमादीनां बलीयस्त्वे निर्णीते निराकाङ्क्षत्वाच्च पश्चादवगतं प्रमेयबलाबलमादर्तव्यं, तस्मादाचमनादिस्मृतीनामप्रामाण्यम् । सिद्धान्तस्तु "पदार्थप्राप्त्यपेक्षत्वात्क्रमादेरविरोधिता । विरोधेऽपि च दौर्बल्यं पदार्थेभ्यो गुणत्वतः" ॥ सर्वेषु हि पदार्थेषु प्राप्तेषु प्रयोगवेलायां तद्विशेषणतया क्रम आश्रीयत इति तेन पदार्थप्राप्त्यपेक्षत्वात्क्रमस्य अत्यन्तजघन्यप्रमाणकोऽपि पदार्थः पूर्वं प्राप्नोति पश्चात्क्रमः सर्वपदार्थप्रयोगाङ्गतयाऽवतरन्नपि न पदार्थैर्विरुध्यते कालोऽप्येवमेव प्रयोगाङ्गत्वात्, यावन्तः पदार्था अवधारितास्तेषां सर्वेषामेव पूर्वाह्णादिकालत्वं प्रधानसंनिकर्षः प्रयोगप्राशुभावश्च, परिमाणं तु न कस्यचिच्छास्त्रस्यार्थः, प्रयोगविधिरपि न तदाक्षिपति अन्यथाप्यविस्मरणसिद्धेः, अथापि शास्त्रार्थस्तथाऽपि प्रयोगौपयिकत्वात्प्रयोगस्य च प्रयोज्यपदार्थप्राप्त्यपेक्षत्वादविरोधित्वं, यद्यपि क्रमादीनामाचमनादिभिर्विरोधः स्यात्तथापि सर्वपदार्थगुणत्वाद्दौर्बल्यम्, आचमनादयस्तु पदार्थत्वाद् बलवन्तः ।

न च प्रमाणबलाबलस्य पूर्वभावित्वं, न हि प्रमाणयोः स्वरूपतो विरोधः, अपि तु प्रमेयविरोधनिमित्तः प्रमेयगतं हि विरोधमालोच्य प्रमाणविरोधबुद्धिर्भवति तद्यदैव प्रमेययोर्विरोधो गम्यते तदैव तयोर्बलाबलमपीति तत एव निर्णये कृते नैराकाङ्क्ष्यात्प्रमाणबलाबलमनादर्तव्यमिति न स्मृतेर्बाधः । यद्धि स्वभावात् एवाप्रमाणं शाक्यवाक्यं तत्सर्वदैवानादर्तव्यं यत्तु बलवद्विरोधापेक्षमप्रमाणं तत्तदभावापेक्षया प्रमाणमेवेत्यवगन्तव्यं, न चात्र बाधकमस्ति प्रमाणबलाबलस्याबाधकत्वात्, तस्मादाचमनादेर्बलीयस्त्वात् तदनुरोधेनैव श्रुत्युक्तक्रमादयो बाध्यन्त इत्याचमनादिस्मृतीनामबाधात्प्रामाण्यमिति । न त्विदमेवमधिकरणं पूर्वपक्षस्यातिमन्दत्वाद्यत्तो-

पवीतादेश्च प्रत्यक्षश्रुतिविहितत्वेनानुदाहरणत्वात् तस्मादत्र पूर्वं शाक्यादिशास्त्राभासानामप्रामाण्यमुक्तं तत्रैव चोद्योत्तरत्वेनाद्यं सूत्रद्वयं व्याख्येयम् । यद्धि तेष्वहिंसादिवचनं श्रुतिस्मृतिशिष्टं न कोपयति तत्प्रमाणं भवत्विति चेत्तत्रोत्तरं "न शास्त्रपरिमाणत्वात्" इति न खलु येन केनचित्प्रमितो धर्मः फलं साधयति तत्प्रमाणं भवति "स्वाध्यायोऽध्येतव्यः" "वेदोऽखिलो धर्ममूलं तद्विदां च स्मृतिशीले धर्मज्ञसमयः प्रमाणं वेदाश्च" "पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः । वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश"त्येवमादिभिरेव धर्मप्रमितेर्नियमादन्यतः प्रमितस्य फलसाधनत्वाभावेन धर्मत्वाभावात्तेषामप्रामाण्यमिति ।

यत्तु तृतीयं सूत्रम् "अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन् तेष्वदर्शनाद्विरोधस्ये"ति

तत्सदाचारप्रामाण्यप्रतिपादनार्थमधिकरणान्तरं व्याख्येयम् अत्रानिबन्धनाः सदाचाराः वसन्तोत्सवादिविषया उदाहरणं प्रमाणमप्रमाणं वेति संदेहः, तदर्थं च श्रुत्यादिमूलत्वं भ्रान्त्यादिमूलत्वं वेति चिन्तनीयं तत्र स्मृत्यधिकरणे कर्तृसामान्यादाचाराणामपि स्मृतिवत्प्रतिपादितमपि प्रामाण्यं निर्निबन्धनतया व्यतिक्रमसाहससङ्कराच्चाक्षिप्य समाधीयते । यदि वसन्तोत्सवादयोऽष्टकादिवद्वेदमूला भवेयुस्ततस्तद्वदेव मन्वादिभिरपि निबध्येरन् । अनिबन्धनात्तु नैषां मूलं केनचिद्दृष्टम् । आचारपरम्परामात्रमेव दृष्ट्वा मन्वादिभिरपि सदाचारः प्रमाणमित्येवं परोक्षरूपेणानभि[1]धानात्प्रामाण्यमनुमीयते इति मन्यामहे । तत्र सैवान्धपरम्परा स्यात् । धर्मव्यतिक्रमसाहसदर्शनाच्च नाचारमात्राच्छक्यं धर्माध्यवसानमिति पूर्वपक्षः । सिद्धान्तस्तु धर्मबुद्ध्या वैदिकैरनुष्ठानमसति वैदिकत्वेऽनुपपन्नं, व्यतिक्रमसाहसदर्शनं तु रागद्वेषादिनिबन्धनत्वाच्च धर्मबुद्धिनिबन्धनं, धर्मबुद्धिनिबन्धनस्य चाचरितस्याग्रहणमात्रकारणत्वाच्छ्रुतिस्मृतिविरोधादर्शनाच्च धर्मलिङ्गत्वाव्यभिचारः । मन्वादिभिस्तु लाघविकैर्यदि नाम स्वरूपेणानिबध्य

१ परोक्षरूपेणाभिधानात्प्रामाण्यमनुमीयते इत्यपि पाठान्तरम् ।

सामान्यात्मना शिष्टाचारः प्रमाणमित्येवमुक्तं नैतावता कश्चिद्दोषः, तस्मात्स्मृतिवदाचाराणामपि धर्मे प्रामाण्यं सिद्धम् ।

शास्त्रप्रसिद्धपदार्थप्रामाण्याधिकरणम् ।

सू० तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिः स्यात् ॥ ८ ॥

आचारप्रसङ्गाच्छब्दार्थप्रयोगरूपाचारविप्रतिपत्तौ बलाबलं चिन्त्यते अत्र भाष्ये आर्यम्लेच्छविशेषानुपादानाद्वाक्यशेषेण सिद्धान्तकथनात् शिष्टाचारस्य च पूर्वप्रकृतत्वात् यत्र शिष्टानामेव मिथोऽभिधानविप्रतिपत्तिः केषांचिद्वाक्यशेषानुगुणा केषांचिदननुगुणा तत्र तुल्यबलतामाशङ्क्य वाक्यशेषानुगुणाया बलीयस्त्वं प्रतिपाद्यते इति लभ्यते, तत्तूदाहरणाभावाद् यवादिशब्दानां दीर्घशूकादिष्वेव सर्वशिष्टप्रयोगादन्यस्यापि शिष्टप्रयोगस्य विप्रतिपत्तिविषयस्योदाहरणस्यादर्शना"त्संदिग्धेषु वाक्यशेषा"दित्यनेन गतप्रायत्वाद्वाक्यशेषाच्चैवनिर्णयः, ततोऽसति वाक्यशेषेऽभियुक्तानभियुक्तप्रसिद्धीश्च तुल्यबलत्वप्रसङ्गादयुक्तमिति मत्वा आचार्यैरन्यथाऽधिकरणं व्याख्यातं, यत्रार्यम्लेच्छयोरभिधानविप्रतिपत्तिः, यथा पीलुशब्दमार्या वृक्षविशेषे प्रयुञ्जते, म्लेच्छास्तु हस्तिनि, तत्र चिन्त्यते, किं तुल्यबलत्व? मुतार्यप्रसिद्धिर्बलीयसीति? तत्र लोकप्रसिद्धिगम्यत्वाच्छब्दार्थस्योभयोरपि समा विप्रतिपत्तिः स्याच्छास्त्रार्थे हि बलाबलं, यः शास्त्रप्रमाणको धर्मस्तत्र शास्त्राभियोगशून्येभ्यो म्लेच्छेभ्यस्तदभियोगशालिनामार्याणामस्ति बलीयस्त्वं व्यवहारगम्यस्तु शब्दार्थः, स च म्लेच्छानामप्यविशिष्ट इति प्रमाणाविशेषादविशिष्टो द्वयोरपि शब्दार्थः, यच्चार्येष्वनादित्वकारणमव्यस्मरणं, तदपि समानं म्लेच्छेष्वपि, तस्मात्समेयमभिधानविप्रतिपत्तिः स्यात्, इति प्राप्ते ब्रूमः, "प्रतिपादकतामात्रं म्लेच्छेष्वप्यवगम्यते । अविप्लुतस्तु शब्दार्थः शिष्टेष्वेवावधार्यते," न तावदेवं न्याय्यम् उभावपि शब्दार्थाविति, अनेकादृष्टशक्तिकल्पनाप्रसङ्गात्, शब्दप्रयोगे ऽपि चान्यतरस्याप्यनवधारणात् व्यवहारानुपपत्तिप्रसङ्गात् कदाचित्कस्यचिदुपादानेऽष्टदोषविकल्पापत्तेरेकत्र मुख्यत्वेनान्यत्र गौणत्वेनापि प्रयोगोपपत्तेर्गौणेऽपि प्रयोगे पार्श्वस्थानां मुख्याभिमानसंभवात्तैरेव चान्येभ्यो मुख्यत्वस्य कथ-

नान्मुख्याभिधानपरम्परया अनुवृत्तिसंभवात् । तत्र यदि कथंचिदपि विशेषोऽवधार्येत तदा गत्यभावाद् द्वयोरपि अभिधेयता स्यात्, अस्ति त्वभियुक्तानभियुक्तयोर्विशेषः, शास्त्रस्था हि शब्दैकसमभिगम्यधर्माधर्मोऽविप्लुतिलिप्सया शब्दार्थतत्त्वं विविच्य परिपालयन्ति, म्लेच्छास्तु दृष्टार्थव्यवहारस्य यथाकथंचित्सिद्धौ प्रयोजनाभावाचाविप्लुतिसिद्धौ यतन्ते, अतो यद्यपि प्रतिपादकतामात्रं म्लेच्छेष्वपि सिद्ध्यति तथाऽपि विप्लुतिसंभवाच तेषु शब्दार्थतत्त्वसिद्धिरित्यार्यप्रसिद्ध्यैव निर्दोषया बलीयस्याऽर्थसिद्धिरिति पीत्वादिशब्दा वृक्षाद्यर्थाभिधायिन इति स्थितम् । भाष्यमप्यार्यम्लेच्छविगानाभिप्रायं व्याख्येयं वाक्यशेषश्चाभ्युच्चयत्वेनोक्तः, न मूलहेतुतयेति ।

स्मृत्याचारविरोधे वा यत्र मन्वादिनिबन्धनानामनिबन्धनानां चाचाराणां विरोधो मातुलदुहितृपरिणयनादिषु तत्र किं तुल्यकक्षत्वम्? उत स्मृतीनां बलीयस्त्व? मिति चिन्त्यते, तत्र "बलाबलविशेषस्तु कक्षान्तरितकारितः । श्रुतिस्मृत्योरिह त्वेवं न द्वयोः श्रुतिमूलतः" श्रुत्या हि साक्षादर्थः प्रतीयते स्मृत्या तु श्रुतिकल्पनयेत्येकान्तरितप्रामाण्यत्वादव्यवहितप्रामाण्या श्रुतिर्बलीयसीति तेन तत्र युक्तं यत्स्मृतेरननुष्ठानलक्षणमप्रामाण्यम्, इह त्वेवं विशेषो नास्ति, द्वयोरपि श्रुतिमूलत्वेनैकान्तरितयोरविशेषात्तस्मात्समा विप्रतिपत्तिरिति । अत्रोच्यते "सप्रत्ययप्रणीता हि स्मृतिः सोपनिबन्धना । तस्यास्तेन बलीयस्त्वमाचारान्निर्निबन्धनात्" प्रत्यायिततरा हि मन्वादयः स्मर्त्तारः तत्स्मरणं गुणवत्तरकर्तृकत्वादितरजनवाक्याद्विश्रम्भणीयतरमिति व्यक्तमेतत्, अपि चाचरितृणां जनानां स्वयमितस्ततो विप्रकीर्णपरप्रकरणादिगतश्रुत्युद्धरणेनार्थं प्रतिपत्तुमसामर्थ्यादवश्यमेते महर्षिभिरेव ज्ञात्वा स्मृत्वा समर्पितमर्थमनुतिष्ठन्तीत्यङ्गीकार्यम्, अत आचारस्य स्मृतिकल्पनेन श्रुतिकल्पकत्वमिति द्व्यन्तरितप्रमाणत्वाद्दुर्बलत्वम् । अपि चाचारेषु कर्मस्वरूपमात्रमेव प्रत्यक्षं, कर्तव्यता तु विमर्शपूर्वमर्थसुखहेत्वन्तरासंभवनिरूपणेन पारिशेष्यात्कल्पयितव्या, तां च कल्पयित्वा पश्चान्मूलक-

त्पन्नमिति विप्रकर्षः, सन्निबन्धनासु तु स्मृतिषु द्रागेव यन्यतः कर्तव्यताऽवगम्यते, मूलमात्रं तु कल्प्यमिति सन्निकर्षः, सर्वेषां च स्मृतिविरुद्धाचाराणां मातुलदुहितृपरिणयनादिविषयाणां कामादि हेत्वन्तरं विस्पष्टमेव दृश्यत इति न कथंचिदपि श्रुतिमूलत्वं संभावनीयं, न चात्र विकल्पाभ्युपगमेनोभयोरपि प्रामाण्यं संभवति वस्तुनि विकल्पासंभवात्, न हि मातुलदुहितृपरिणयनात्प्रत्यवायोत्पत्तिरनुत्पत्तिश्च संभवतीत्यवश्यमन्यतरस्याप्रामाण्यमाश्रयणीयं तत्र दृश्यमाननिमित्तस्याचारस्याप्रामाण्यमिति सिद्धमेवंजातीयकानां दुराचारत्वम् ।

अथवा त्रिवृच्चर्वश्वबालादौ यत्र लो[1]कवाक्यशेषयोरर्थविप्रतिपत्तिः यथा "त्रिवृद्बहिष्पवमान"मिति अत्र त्रिवृच्छब्दस्य त्रैगुण्यं लोकादर्थोऽवगम्यते वाक्यशेषात्तु स्तोत्रीयानवकम् आदित्यः प्रायणीयः पयसि चरुरिति चरुशब्दस्य स्थालीवाक्यशेषादोदनः आश्वबालः प्रस्तर इति अश्वस्य बालः वाक्यशेषात्तु काशः, "ऐक्षव्यौ विधृती" इति इक्ष्ववयवात्मिकेति लोकात् वाक्यशेषात्काशमूलके, किं तत्र लोकवाक्यशेषयोस्तुल्यबलवत्त्वम्? उत वाक्यशेषस्या प्रतीतिर्बलीयसी? ति संशयः तत्र "पदार्थपदसंबन्धे तुल्यत्वं लोकवेदयोः । अदृष्टसाधनत्वे हि लोकाद्वेदोऽतिरिच्यते" विध्युद्देशात्तावदेतावदवगम्यते यदिह त्रिवृदादिशब्दाभिधेयं तद्वाक्यार्थान्वयीति, किं तु तस्याभिधेयमित्यन्यतोऽवगन्तव्यं, तत्र लोकस्याप्यभिधेयनिर्णये वेदवाक्यशेषतुल्यत्वं, ततोऽधिकं वा सामर्थ्यमस्तीत्यर्थद्वयमपि तुल्यप्रमाणकत्वाद्विकल्पेन ग्रहीतव्यमिति पूर्वः पक्षः, सिद्धान्तस्तु "वाक्यैकत्वं विधिस्तुत्योर्विषयैक्यादृते न हि । तेनात्र वाक्यशेषस्या प्रतिपत्तिर्बलीयसी" यदि लौकिकोऽर्थो विध्युद्देशेनाश्रीयते ऽन्यार्थो वाक्यशेषोऽन्यार्थश्च विध्युद्देश इति न कथंचन संबन्धः स्यात् तस्माद्यत्र वाक्यशेषः त्रिवृद्बहिष्पवमानमित्यादिषु तत्र तावत्तदनुगुण एवार्थः समाश्रयणीय इत्येतावदिहाधिकरणे स्थितं, यदा चैवं वाक्यशेषवशात् स्तोत्रीयानवकमपि वाच्यमित्यवधारितं तदा

१ लौकिकवाक्यशेषयोरिति पुस्तकान्तरपाठः ।

यत्र वाक्यशेषो नास्ति त्रिवृदग्निष्टुदग्निष्टोम इत्यादिषु तत्राप्यनेनै-वार्थेन भवितव्यं, रूढिवशादिति दशमे वक्ष्यते चरुशब्दोऽप्योदनस्थाल्योः परस्परसंबन्धित्वाद्वाक्यशेषावधारितौदनवचनत्वेन स्थाल्यामन्याय्यश्चा-नेकार्थत्वमिति प्रतिबद्धशक्तित्वाल्लाक्षणिकः, तेनासत्यपि वाक्यशेषे "सौर्यं चरुं निर्वपे"दित्यादावप्योदनवचनत्वमेवेति दशमे वक्ष्यते, आश्वबालेववी-शब्दावपि काशतन्मूलयो रूढत्वादन्यत्रापि तदर्थावेव भवतः, न चात्र 'संदिग्धेषु वाक्यशेषादि'त्यनेन गतत्वम् असंदेहात्, इह हि वाक्यशेषा त्प्रागर्थान्तरमेव निर्णीतं वाक्यशेषेण बाध्यते न तु प्रथमं संदिग्धत्तेन निर्णीयत इति ॥

सू० चोदितं तु प्रतीयेताविरोधात्प्रमाणेन ॥ १० ॥

आर्यप्रसिद्धिविरोधे म्लेच्छप्रसिद्धेरप्रामाण्यमुक्तम्, इदानीं किं म्लेच्छ-प्रसिद्धिरित्येवाप्रमाणम्? उत बलवद्विरोधादेवाप्रमाणम्? अविरोधे तु तस्या अपि भवत्येवाभिधेयनिर्णये प्रामाण्यमिति चिन्त्यते पिकनेमसततामरसा-दिशब्दा न क्वचिदार्याणां प्रसिद्धाः, म्लेच्छानां तु कोकिलादिषु प्रसिद्धाः, तत्र यद्यप्रमाणमेव म्लेच्छप्रसिद्धिः, ततस्तेषां निरुक्तादिवशेनार्थकल्पनम्। अथ तु सा प्रमाणं, ततः सैवाश्रयिष्यते, तदत्र म्लेच्छप्रसिद्धिः प्रामाण्ययोग्या न वेत्येतावदधिकरणशरीरं, सत्यपि तु प्रामाण्ये किं म्लेच्छगतत्वाद्दुर्बला निरुक्तादिद्वारा शास्त्रस्थत्वाद्बलीयसी? उतेयमेव दुर्बला? कल्प्यत्वात्, म्ले-च्छप्रसिद्धिस्तु क्लृप्तत्वाद्बलीयसीत्येतत्प्रासङ्गिकं, शिष्टाकोपे ह्येतदवस्थितं, स्वरूपगतमेव बलाबलं प्रमाणद्वारकाज्ज्यायः इति तेनैव न्यायेनात्रापि प्रयोक्तृद्वारा बलाबलात् क्लृप्तकल्प्यत्वेन स्वरूपगतमेव ज्यायो भवति तेन गतप्रायमिह प्रसङ्गत उक्तं भाष्यकारेण, प्रामाण्यसंभवासंभवमात्रं तु म्लेच्छ-प्रसिद्धेश्चिन्त्यते, तत्र पूर्वः पक्षः, "म्लेच्छेषु हि पदार्थानां विप्लुतिर्भूयसी यतः। ततस्तेषु प्रसिद्धेऽर्थे न विश्रम्भः कथंचन" पदानि पदार्थाश्चापभ्रंशप्राया एव म्लेच्छेषु बाहुल्येन, तेषु कथमिवाविप्लुतपदार्थावधारणम्। अतोऽप्रमाणं म्लेच्छप्रसिद्धिः, न हि ते दृष्टार्थव्यवहारित्वाच्छब्दार्थाविप्लवे यत्नं कुर्वते तस्माद्विप्लुतिसंभवात्तेषु प्रसिद्धोऽर्थो न विश्रम्भणीयः, निरुक्तादिद्वारेण

त्वर्थकल्पनं पिकादीनामिति ॥ * ॥ सिद्धान्तस्तु "पदानि तावदेतानि वेदादिष्वेव दर्शनात्। अविप्लुतानि तेषां च भाव्यमर्थेन केनचित् ॥ नित्ये नार्थेप्वसौ नास्ति यतो म्लेच्छेषु विप्लुतिः। म्लेच्छप्रसिद्ध एवार्थस्तेषामिति हि निर्णयः ॥" पिकादिपदानि तावद्वेदवेदाङ्गादिषु दृष्टत्वादविप्लुतानि नित्यानि तदेषां नित्येनैव केनचिदर्थेन भवितव्यं, न चामीषामार्येष्वर्थः कश्चिदस्ति यत्र मुख्यानि भूत्वा म्लेच्छप्रसिद्धेऽर्थे गौणभ्रान्त्यादिनिमित्तप्रयोगभाञ्जि विप्लुतिं गच्छेयुः, न ह्यसति मुख्ये गौणादिसंभवः, तस्मात् म्लेच्छप्रसिद्ध एवार्थोऽमीषामित्यध्यवसीयते, अतः सिद्धमविरुद्धेषु प्रसिद्धवाचकत्वेषु म्लेच्छानामभिधेयनिर्णये प्रामाण्यम् ॥

## सू० प्रयोगशास्त्रमिति चेत् ॥ ११ ॥

अत्र कल्पसूत्राण्युदाहृत्य किं प्रमाणमप्रमाणमिति भाष्ये विचारितम्

ननु स्मृत्यधिकरण एव सर्वेषां वेदातिरिक्तानां प्रामाण्याप्रामाण्यचिन्ता वृत्ता, तत्र केचिदाहुः तत्रा[१]शब्दतया पूर्वपक्षमुक्त्वा शब्दानुमानेन सिद्धान्तितम्। एतानि वैदिकार्थनिबन्धनत्वात्प्रत्यक्षशब्दानीति न तत्रोदाहरणं, स्मृतयो हि प्रायेणेतस्ततो विप्रकीर्णपरप्रकरणपठितवाक्यशेषगतप्रसिद्धवन्निर्देशानुपपत्तिकल्पिततिरोहितप्रायविधिमूलाः, तद्यथा "नयनं दक्षिणं दीक्षितः पूर्वमङ्क्ते सव्यं हि मनुष्याः पूर्वमञ्जत" इति प्रसिद्धवत्सव्यस्य पूर्वमञ्जनं निर्दिष्टं, तच्च दृष्टप्रयोजनाभावात्प्रमाणान्तरेणाप्राप्तमित्यनुपपत्त्या विधिः कल्प्यते, तथा "तस्मादपि वध्यं प्रपन्नं न प्रतिप्रयच्छन्ति तस्माद्भ्रूणविज्ञातेन ब्रह्महे"त्येवंविधं स्मृतीनां मूलम्, अत एव चैषु स्मार्त्तत्वप्रसिद्धिः प्रत्यक्षश्रुतावविहितत्वात्, दर्शपूर्णमासादिषु तु प्रत्यक्षविधिसद्भावाच्छ्रौतत्वम्, इममेव च विशेषमभिप्रेत्य गौतमेनोक्तं "प्रत्यक्षश्रुतिविधानात् गार्हस्थ्यस्ये"ति न तु स्मृतिपरम्परयैवानुमेयत्वम् अन्धपरम्परादोषात्, अत एव प्रत्यक्षश्रुतिविरोधे स्मृतेरननुष्ठानं, स्मृतयो हि सिद्धवन्निर्देशानुपपत्तिकल्पितविधिमूलतयाऽपि संभाव्यन्ते, कल्पना च प्रत्यक्षश्रुतिविरोधेऽनुपपन्ना, तेनाविरुद्धविषयवद्विरोधविषयेऽपि न्यायाभासेन विधिं कल्पयित्वा किमियं स्मृतिः

१ तत्रावेदतयेति तु पा०।

प्रवृत्ता? किं वा "ऽग्निहोत्रं जुहुयादाद्यन्ते ऽग्निशोःसदे" त्यादिवत्प्रत्यक्षमेव विधिं दृष्टेति विचिकित्सोपजननाद्यावत्तद्विषयप्रत्यक्षविधिर्नोपलभ्यते ताव-त्तदनादरेण प्रत्यक्षोपलब्ध एवानुष्ठेय इति, तेन स्मृतय एव तत्रोदाहरणं न कल्पसूत्राणि। किंच नैषामिह प्रामाण्याप्रामाण्यचिन्ता किंतु स्वतन्त्राणामेव वेदवत् प्रामाण्य?मुत स्मृतिवत्परतन्त्राणा?मिति। यद्वा भवतु नामैषामपि तत्र विचारस्तेषामपि तु मन्वादीनामिह स्वातन्त्र्यनिराकरणम्, अथवाऽ-ङ्गान्यत्रोदाहरणं, तेषां हि "षडङ्गमेक" इति वेदत्वस्मरणात्स्वातन्त्र्याशङ्का जायते। अथवा शाक्यादिग्रन्थानां श्रुतिमूलत्वेन प्रामाण्ये निरस्ते संप्रति श्रुतिवदेव तत्प्रामाण्यमाशङ्क्य निराक्रियते, तदेतानि चत्वार्यपि विचारस्था-नानि समानन्यायानि सह विचार्यन्ते, किमेषां स्वातन्त्र्येण प्रामाण्यं न वे?ति, तदर्थं च किमेषां पौरुषेयत्वमपौरुषेयत्वं वे-ति चिन्तनीयम्, तत्राव-गतिस्तावदेतेभ्यो धर्माधर्मविषया समुपजायते, सा च स्वतःप्रमाणं, तद्यदि पौरुषेयत्वं शाक्यादिग्रन्थानां ततः पुरुषदोषादप्रामाण्यापत्तेर्दृष्टप्रामा-ण्यहानिः स्यात्, अतो दृष्टानुगुण्याद्पौरुषेयत्वं, मन्वादीनां त्वविगी-तमेव प्रामाण्यं, तत् किमेषामेवापौरुषेयत्वं कल्प्यताम्? उत प्रमाणान्तरं कल्पयित्वा तस्य नित्यत्व?मिति दृष्टानुसारित्वान्नित्यत्वकल्पनं ज्यायः. अङ्गानां तु "मन्त्रब्राह्मणयोर्वेदनामधेयं षडङ्गमेक" इति स्मरणाद् दृढमेवा-पौरुषेयत्वं. कल्पसूत्राणां तु पठितपाठप्रत्यक्षवेदार्थोपनिबन्धनाच्छाखान्तरतु-ल्यत्वादपौरुषेयत्वं, न हि सकलजनप्रत्यक्षवेदवाक्यविषयमर्थं वदतामेषां पुरुषैः प्रणयनं संभवति, बुद्धबौधायन[1]मशकादिभिस्तु समाख्या काठका-दिवत्प्रवचननिमित्तत्वेनोपपन्ना, तन्निमित्ता च एषु लौकिकानां कर्तृस्मृतिः, भवति चात्र प्रयोगः, "बौद्धाद्यध्ययनं सर्वं गुर्वध्ययनपूर्वकम्। बौद्धाध्ययनसा-मान्यादधुनाऽध्ययनं यथा॥ कल्पानां तु नित्यब्रह्मयज्ञविधिविषयत्वादपि नित्यता, श्रूयते हि "यद्ब्राह्मणानीतिहासान्पुराणानि कल्पा"निति, कथम-नित्यानां नित्यविधिविषयत्वं, तस्मादेषां नित्यविधिविषयत्वात्स्वातन्त्र्य-मिति प्राप्ते ब्रूमः, "नैतेषां पौरुषेयाणां स्वातन्त्र्यमुपपद्यते। विस्पष्टं च पौरु-

१ बुद्धबौधायनमनुमशकादिभिरिति तु पुस्तकान्तरपाठः।

येयत्वं दृढकर्तृस्मृतेर्वशात्'' पुरुषपरम्परयैव ह्येषु कर्तारः स्मर्यन्ते न काठकादिवत्प्रवचनेन परिहर्तुं शक्यन्ते, तत्र हि समाख्यानमात्रम् । अत्र तु पारम्पर्येण सर्वेषामविगीतस्मरणाच्च नित्यत्वसंभवः, षडङ्गमेक इति परमतोपन्यासात्पूर्वपक्षोक्तिमात्रं, नानाशाखागतलिङ्गादिकल्पितश्रुत्यर्थोपसंहारस्य कल्पसूत्रानपेक्षैः कर्तुमशक्यत्वात्तादर्थ्येनार्थवच्चिबन्धनं नानर्थकम्, एवंविधाश्च ग्रन्थाः प्रतिमन्वन्तरं क्रियमाणाः केचित्सर्वकालमविच्छिन्नपारम्पर्येण प्रवर्त्तन्ते, ते च वेदार्थकल्पनात्कल्पा इति नित्ययैव समाख्यया ब्रह्मयज्ञाङ्गतया विधीयन्त इत्यनित्यत्वेऽपि ग्रन्थव्यक्तीनां नित्यविधिविषयत्वोपपत्तिः, तस्मात्तेषां स्वातन्त्र्येण प्रामाण्यमिति शाक्यादिनिबन्धनानां सिद्धं धर्मे प्रमाणाभासत्वं, कल्पादिषु तु यानि प्रत्यक्षश्रुतिन्यायविरुद्धानि वचनानि तेषाम् अप्रामाण्यं, यथा "अविशेषादुभौ"वेति सर्वपुरोडाशचतुर्द्धाकरणवचनं, सन्निहितं च शास्त्रम् "आग्नेयं चतुर्द्धा करोती"ति, तथा स कृताकृत इति सवनीयपुरोडाशस्य विकल्पवचनं पूर्वपक्षमूलं न वचनमूलम् "अन्यत्र तदर्थवादवचना"दित्याश्वलायनवचनात् तथा "यावद्रूपं वेदिं[1]मुद्धरन्ती"ति वेदेर्यूपाङ्गत्ववचनं "जाघनीभिश्च पत्नीः संयाजयन्तीति जाघनीनां समुच्चयवचनं द्वादशाधिकरणपूर्वपक्षमूलं न वचनमूलं, तत्रापि संनिहितं शास्त्रं "जाघन्या पत्नीः संयाजयन्ती"ति, विवक्षितं चैकत्वमुपादेयगतत्वादिति द्वादशे वक्ष्यते, तथा "पुरोडाशं पर्यग्नि करोती"ति संनिहिते शास्त्रे "सर्वाणि हवींषी"ति वचनं च दशमाधिकरणपूर्वपक्षमूलं न वचनमूलं, पशुः पुरोडाशविकारः स्यात् पर्यग्निकरणदर्शनादित्यष्टमेऽभिधानात्, तदिदमुक्तं "सर्वत्र च प्रयुक्तत्वात्संनिधानशास्त्राच्चे"ति

सू० अनुमानव्यवस्थानात्तत्संयुक्तं प्रमाणं स्यात् ॥ १५ ॥

स्मृतीनामाचाराणां चाविरोधविरोधयोः प्रामाण्याप्रामाण्ये प्रतिपादिते, स्वातन्त्र्यं च स्मृतीनां निरस्तम्, इदानीं केषांचिदाचाराणां स्मृतीनां च व्यवस्था अव्यवस्था वेति चिन्त्यते होला[2]कादयो हि केश्चि-

---

१ वेदिमुद्धन्तीति पुस्तकान्तरपाठः ।

२ होलाका होलका होलिका इति त्रयोऽपि साधवः शब्दाः ।

दृेव प्राच्याद्यभिमानिभिरनुष्ठीयन्ते न सर्वैः, गृह्यादिमानवातिरिक्तस्मृतयश्च कैश्चिदेव काश्चित्पठ्यन्ते न सर्वैः, तदेतान् स्मृत्याचारानुदाहृत्य चिन्त्यते किमेते तेषामेव धर्माः? किं वा सर्वेषामिति, तदर्थं च किमेतेषां मूलभूता श्रुतिर्व्यवस्थितविषया शक्यते कल्पयितुम्? उत सर्वसाधारण्येनैव? ति, तत्र "लिङ्गव्यवस्थया लिङ्गी व्यवस्थां प्रतिपद्यते। धूमो हि यत्र तत्रैव वह्निर्नान्यत्र मीयते" स्मृत्याचारलिङ्गगम्या श्रुतिर्न प्रत्यक्षा तच्च लिङ्गं केषुचिदेवोपलभ्यते अतस्तद्विषयतयैव श्रुतिरनुमातुं शक्यते न हि तस्याः सर्वविषयत्वे प्रमाणमस्ति, व्यवस्थितविषयत्वेऽपि स्मृत्याचारयोरुपपत्तेः। यदि च साधारणी श्रुतिः स्यात्ततस्तन्मूलौ स्मृत्याचारावपि सर्वपुरुषगामिनौ स्यातां, यदि त्वालस्यादिनिमित्तमितरेषामनाचरणं तदा स्यादपि साधारण्यानुमानम्। यत्तु नियमेन प्राच्याद्यभिमानिनामाचरणमितरेषां चानाचरणं न तत्साधारण्यानुमानेऽवकल्पते तदा तस्माद्व्यवस्थितमेषां धर्मत्वमिति प्राप्ते ऽभिधीयते ॥ * ॥

"विशेषाभावमात्रेण प्रसिद्ध्येत् सर्वधर्मता। विशेषणाद्व्यवस्था स्यात्तच्च नेहोपपद्यते" यदुक्तं सर्वधर्मत्वे प्रमाणं नास्तीति तदयुक्तं न हि सर्वधर्मत्ववादिना प्रमाणमुपन्यसितव्यम् उभयवादिसिद्धेन विधिनैवासति विशेषोपादाने सर्वधर्मत्वसिद्धेः, व्यवस्थावादिना तु वक्तव्यं प्रमाणं तच्च नास्ति, तथाहि स्मृतयस्तावत्साधारण्येनैव विदधतीति न तेषु चरणविशेषोपादानमस्तीति स्मृत्यनुसारेणैव श्रुतिकल्पनमिति सापि साधारणी न्याय्या, पठनव्यवस्था तु कर्तुस्तच्चरणत्वात्। कर्ता हि छन्दोगः स्वशिष्यान् छन्दोगान् स्वयन्थमध्यापयामास तेऽप्यन्यांश्छन्दोगानित्येवं गौतमीयस्य छन्दोगैः पाठः, तथाऽऽपस्तम्बादिग्रन्थस्य तैत्तिरीयैरेवं गृह्यग्रन्थानामपीति व्यवस्थितधर्मविषयत्वमप्रमाणकम्, आचाराणां तु सर्वाचरितृष्वनुगतमनाचरितृभ्यश्च व्यावृत्तमाकृतिव्यक्तिगुणसंस्थानादिकं न किंचिद्विशेषणं संभवति यदुपादाय होलाद्यधिकारं विशिंष्यात् प्राच्यादिसमाख्याऽपि व्यभिचारिणी तद्देशगतानामपि केषांचिदनाचरणात् चिरविनिर्गतपुत्रपौत्राणामपि चाऽसत्यां समाख्यायां समाचारात् तस्मादसति विशेषणे सर्वधर्मत्वमाचाराणां स्मृतीनां चेति ।

सू० प्रयोगोत्पत्त्यशास्त्रत्वाच्छब्देषु न व्यवस्था स्यात् ॥ २४ ॥

स्मृत्याचारविरोधे स्मृतेर्बलीयस्त्वमाचारेष्वप्यभियुक्ताचारस्य बलीस्त्वं स्थितम् । इदानीं शब्दापशब्दविभागेऽपि किं व्याकरणस्मृतेस्तदभियुक्तानामाचारस्य चेतरलोकव्यवहाराद्बलीयस्त्वं संभवति नेति विचार्यते तदिहैकस्मिन्नर्थे प्रयुज्यमानान्गोगाव्यादिशब्दान् व्याकरणानुगताननुगतांश्चोदाहृत्य चिन्त्यते किमेते सर्वे तस्मिन्नर्थे प्रयोक्तव्याः साधवः? किं वा व्याकरणानुगता एव साधवः? अन्ये त्वसाधवो न प्रयोक्तव्या इति, तदर्थं च किं सर्वे अविच्छिन्नपारम्पर्यप्रयोगजाः? उत केचिदशक्तिजाः? अपभ्रंशा इत्यर्थः, तदर्थं च किं व्याकरणं प्रमाणमप्रमाणं? मिति चिन्त्यते, तत्सिद्धये किं तस्य मूलं संभवति ने? ति, मूलसंभवे प्रमाणभूतव्याकरणबलीयस्त्वेन तदभियुक्तपुरुषाचारबलेन च पृथग्जनाचारबाधात् गाव्यादीनामसाधुत्वं निर्मूलत्वे, तु तदप्रामाण्याल्लौकिकप्रयोगाविशेषात् सर्वेषां साधुत्वेन प्रयोज्यतेति, तेन व्याकरणे प्रामाण्याप्रामाण्यमेवात्र चिन्तयितव्यं, तत्र "निर्मूलत्वाद्विगीतत्वान्नैष्फल्याद्दृष्टबाधनात् । पूर्वापरविरोधाच्च नास्ति प्रामाण्यसंभवः ।"तस्मादेतेन शब्दानां प्रयोगो न नियम्यते । तेनार्थप्रत्ययात्सर्वे प्रयोज्या न व्यवस्थया" नियमद्वयार्थं हि व्याकरणं साधूनेव प्रयुञ्जीत नासाधून् इत्येकः प्रयोगनियमः, गवादय एव साधवो न गाव्यादय इति साधुत्वस्वरूपनियमोऽपरः, न चैतद् द्वयमप्यनेन नियन्तुं शक्यते तथा हि न तावत्साधूनेव प्रयुञ्जीतेति नियमसंभवः, अर्थावगमाय हि शब्दोच्चारणं न धर्माय, अर्थश्च यद्यसाधुभ्यो ऽपि गम्यते तर्हि साधुनियमोऽनर्थकः । अथ न गम्यते ततः सुतरां नियमशास्त्रानर्थक्यमर्थवशादेव नियमद्वयसिद्धेः । अथ गम्यमानेऽप्यसाधुभ्योऽर्थे दृष्टार्थमपि शब्दप्रयोगमाश्रित्य धर्माय साधुनियमः शास्त्रेण क्रियत इत्युच्यते, तच्च मूलासंभवात् न तावदत्र प्रत्यक्षादीनां मूलत्वं तेषां धर्माधर्मयोरप्रवृत्तेः ।

१ प्रयोगप्रत्ययानुपपत्त्या इति पाठान्तरम् ।

न च वेदवाक्यानि गवादिषु प्रतिपदं कल्पयितुं शक्यन्ते अनन्तवाक्यपाठासंभवात् अपठितानां च मूलत्वानुपपत्तेः

न च सुशब्दमेव प्रयुञ्जीत नापशब्दमित्येकोपलक्षणेन सर्वेषामुपसंग्रहः, गाव्यादीनामपि श्रोत्रग्रहणत्वेन सुशब्दत्वाद्व्यवस्थानुपपत्तेः, न चावान्तरसामान्यं गवादिष्वनुगतं गाव्यादिभ्यश्च व्यावृत्तं किंचिदस्ति येन व्यवस्था स्यात्, साधुत्वमिति चेत् किं पुनरिदं साधुत्वं यद्गवादिष्वेव व्यवस्थितमित्युच्यते न हि इदं प्रत्यक्षादिभिर्गम्यते, वाचकत्वमिति चेत् तद्गाव्यादिष्वप्यविशिष्टं तेषामपि हि प्रयोगप्रत्ययानुपपत्त्या वाचकत्वं लोके गम्यते, न ह्यवाचकानां प्रयोगः प्रत्यायकत्वं वा घटते ।

न च यवादीनामिव प्रियङ्ग्वादिषु गुणात्प्रयोगसंभवः, मुख्याभावात् मुख्यपूर्वा गौणः, नासावत्यन्तावाचकस्य गाव्यादेरवकल्पते एतेन लक्षणा प्रत्यूढा तेन गाव्यादीनामवाचकत्वं लोकविरुद्धमिति न साधुरूपं शास्त्रेण नियन्तुं शक्यते, अनादित्वं साधुत्वमिति चेत् एतदपि गाव्यादिष्वविशिष्टं तत्रापि संबद्धन्धुरस्मरणाददृष्टसाधनत्वमिति चेत् न तस्य प्रत्यक्षाद्यविषयत्वात् वेदवाक्यानां च प्रतिपदमसंभवादुपलक्षणानुपपत्तेश्च तत्र साधुत्वमेवोपलक्षणं तदेव च प्रमेयमित्यात्माश्रयदोषापत्तिः, तस्मान्मूलाभावादप्रमाणं व्याकरणं, परस्परविगानाच्च सूत्रकारो ह्यवश्यवक्तव्यं प्रयोजनमनभिदधानो निष्प्रयोजनतामेव शास्त्रस्य मन्यते, भाष्यवार्त्तिककारौ तु धर्मप्रयोजनतामिति विगीतत्वं, तयोरपि मिथोज्ञानतत्पूर्वप्रयोगधर्मत्ववचनाद्विगीतत्वं, निष्फलं चेदं शास्त्रं न ह्यनेन धर्मार्थकाममोक्षाणां कश्चिदवाप्यते धर्म इति चेत् न तत्रापि पूर्वोक्तनिर्मूलत्वेनाप्रमाणत्वात्

न च रक्षोहादीनामपि प्रयोजनत्वं, तेषामन्यत एव शिष्याचार्यसंबन्धलोकमीमांसादिभ्यः सिद्धिरिति वार्त्तिक एव प्रपञ्चितं, वेदविरुद्धं चेदं व्याकरणं "दृष्टं सामे"त्यधिकृत्य "कलेर्ढक्" "वामदेवाड् ड्यड्ड्या" वित्युक्तं, वेदे च "यदकालयत्तत्कालेयस्य कालेयत्वं ततो वामं वसु समभवदित्युपत्यस्य "वामं वा इदं देवेभ्यो ऽजनि तस्माद्वामदेव्यमिति वेदबाधादप्रामाण्यं, पूर्वापरविरोधाच्च "अर्थप्रयुक्तानां हि शब्दानां व्याकरणं प्रतिज्ञातं वाक्यमेव च

तथेष्टं न पदानि अनर्थकत्वात्. यथोक्तं "ब्राह्मणाद्या यथा नास्ति कश्चिद्‌ब्राह्मणकम्बले। देवदत्तादयो वाक्ये तथैव स्युरनर्थकाः" इति, ततश्च यथाप्रतिज्ञं वाक्यमेव व्याकरणेन संस्कर्तव्यं तदव्याकरणात्पदव्याकरणाच्च पूर्वापरविरोधः, पदद्वारेण वाक्यमेव व्याकरणेन संस्क्रियते इति चेत् अत्यन्ताविद्यमानत्वाद्वाक्ये पदानां तद्द्वारेण वाक्यस्य विपाणद्वारेणेव शशस्य संस्काराभावात्तस्पादप्रमाणं व्याकरणं सर्वं भाषितव्या इति प्राप्तेऽभिधीयते "प्रयोगप्रत्ययौ तावद्वाचकत्वाद्धृतेऽपि हि। युक्तावेकस्य चार्थस्य न्याय्या नानेकशब्दता। अभियुक्तस्मृतेश्चात्र स्याद्विशेषावधारणं स्मृतेः स्मृत्यन्तरं मूलं साधुरूपनिरूपणे। प्रत्यक्षव्यव[1]धानाच्च नाप्तवाक्यसमानता। प्रयोगनियमे मूलं वेदस्तस्मात्प्रमाणता" गवादय एव साधवो न गाव्यादय इति साधुस्वरूपनियमः। साधव एव प्रयोज्या नासाधव इति धर्माय प्रयोगनियम इति द्वौ नियमौ व्याकरणे प्रतिपाद्येते द्वयोरपि च मूलसंभवादुपपन्नं प्रामाण्यं तथा हि प्रयोगनियमे मन्वादिवत्सप्रत्ययप्रणीतत्वाद्वेदमूलत्वं, न हि पाणिनिकात्यायनपतञ्जलिभ्योऽन्यः कश्चित्प्रत्ययिततरोऽस्ति तेन तत्प्रत्ययात्स्वनुमानं वेदवाक्यं, प्रत्यक्षमेव च वाजसनेयादिषु वचनं "तस्माद्ब्राह्मणेन न म्लेच्छितवै म्लेच्छो ह वा एष यदपशब्दः" इति, "आहिताग्निरपशब्दं प्रयुज्य सारस्वतीमिष्टि" मित्यादिषु च प्रायश्चित्तविधानम्। 'उत त्वः पश्यन्नित्यादयश्च बहवो मन्त्रवर्णाः शब्दापशब्दविभागाभिज्ञतदनभिज्ञस्तुतिनिन्दारूपा', दृष्टार्थेऽपि च शब्दप्रयोगे तदाश्रितः साधुनियमो भोजनाद्याश्रित इव दिङ्नियमः शास्त्रेण विधीयत इति न प्रयोगोत्पत्त्यशास्त्रत्वादव्यवस्था सत्यानृतवदनवर्जनयोश्चावगीतमेव शास्त्रार्थत्वम्। तच्च शब्दार्थभेदेन द्विविधम् तत्र यथैवार्थसत्यं यथावस्थितार्थकथनं धर्माय, तथा शब्दसत्यत्वमपि यथावस्थिताविप्लुतशब्दोच्चारणमित्यर्थः। यथा चार्थानृतमन्यथावस्थितस्यान्यथा वचनं प्रत्यवायाय, तथा शब्दानृतमप्यस्वरूपे वाचके सत्यस्वरूपोच्चारणमिति न प्रयोगोत्पत्त्यशास्त्रत्वम्। द्वाभ्यामेव च वाक्याभ्यां साधूनेव प्रयुञ्जीत सुशब्दपर्यायान्नासाधून

१ प्रत्यक्षवचनाच्चेति पुस्तकान्तरपाठो युक्तः।

पशब्दपर्यायानित्ति समस्तशब्दापशब्दविधिप्रतिषेधसिद्धेर्नानन्तवाक्यकल्पनापत्तिः । साधुत्वासाधुत्वे एव च शब्दापशब्दसत्यानृतपर्याये उपलक्षणे अनादिवाचकत्वमेव साधुत्वं तद्विपर्ययश्चासाधुत्वम् । यत्तु प्रयोगप्रत्ययानुपपत्त्या गाव्यादीनामपि वाचकत्वेऽवस्थानुपपत्तिरित्युक्तं, तत्रोच्यते यद्यप्येषामवाचकत्वं, यद्यपि च मुख्याभावे गौणलक्षणयोरसंभवस्तथाऽपि वाचकाशक्तिजतया मूलशब्दोपस्थानेन प्रत्यायकत्वं भविष्यति अशक्तिजत्वापरिज्ञानाच्चोपलभन्तो बालास्तथैव संज्ञासंज्ञिसंबन्धं शिक्षित्वा तथैव स्वयं व्यवहरन्ति । तेभ्यश्च शिक्षित्वाऽन्येऽपीत्येवं प्रयोगप्रत्यययोरुपपत्तौ नैकान्ततः सर्वेषामविच्छिन्नवाचकत्वम् अध्यवसातुं शक्यते । संभवति चैवं नानेकशब्दत्वमेकस्यार्थस्याभ्युपगन्तुं न्याय्यम् अनेकशक्तिकल्पनाप्रसङ्गात् । प्रयोगवेलायां चाष्टविधदोपनिदानविकल्पापत्तेः । वाच्यवाचकयोश्चैकैकधाऽवधारितस्य नियमस्यानेकत्वे बाधप्रसङ्गात् । सास्नादिमान् हि यस्याभिधानक्रियायां कर्म तस्यां गोशब्दः करणमित्यनयोः संबन्धः । तद्यदि गाव्यादिभिरपि सास्नादिमानभिधीयते ततस्तस्यां वेलायां सास्नादिमत्कर्मिकायामप्यभिधानक्रियायां गोशब्दस्य करणत्वाभावात्प्रतीतबाधः । तस्मादेकैकस्यैव वाचकत्वमितरे तदशक्तिजा इति न्याय्यं, करहस्तादिषु च विशेषानवधारणादन्यथ्याऽप्यनेकशब्दता गत्यन्तराभावादङ्गीक्रियते गवादिगाव्यादिषु त्वभियुक्तस्मरणास्मरणाद्विशेषोऽस्तीति न तावत्सर्वेषां वाचकत्वं वाचकरूपनियमेऽपि स्मृतेः स्मृत्यन्तरं मूलं तस्याऽप्यन्यदित्येवमनादिरेव स्मृतिपरम्परा, न चान्धपरम्परान्यायः शब्दस्वरूपस्य शब्दान्तरार्द्विविक्तस्य प्रत्यक्षत्वात् । सर्वे हि स्वे स्वे काले गवादिशब्दान्प्रत्यक्षत एवोपलभन्ते अतीतकाले च सत्तां पूर्वेभ्यो वृद्धेभ्यः श्रुत्वाऽवधारयन्ति सर्वकालमपि च केचन वृद्धाः सन्तीति तत्प्रत्यक्षसंभवात् न कदाचिदपि प्रत्यक्षविच्छेदः, सर्वकालवर्तित्वमेवानादित्वं साधुत्वं, तच्चाविच्छिन्नपारम्पर्याभियुक्तस्मरणेन सुलभमिति न निर्मूलत्वम् ।

न च विगानादप्रामाण्यं श्रुतीनामपि ग्रहणाग्रहणादिविगानदर्शनात् । फलं चास्य शब्दापशब्दविभागज्ञानमुपादानपरित्यागोपयोगिधर्माध-

र्मप्राप्तिपरिहारार्थं रक्षोहादि च वेदविरुद्धं कामं भवतु अप्रमाणं सर्वेत्रेष्ट-नादिस्मरणवत् न तावता सर्वाप्रामाण्यम्, एवं पदानर्थक्यवाक्यस्फोटा-द्यभ्युपगमोऽपि न न्यायमूल इति न्यायाभावादप्रमाणं धर्माधर्मसिद्धयर्थं शब्दापशब्दविभागकथनमभियुक्तप्रणीतत्वात्प्रमाणमेवेति प्रमाणं व्याक-रणं तदनुगता एव गवादयो वाच्य इति स्थितम् ।

सू० प्रयोगचोदनाभावादर्थैकत्वमविभागात् ॥ ३० ॥

इदानीं वाचकप्रसङ्गाद्वाच्यविशेषश्चिन्त्यते किमाकृति? उत व्यक्ति-रिति। तत्र यदि लोकवेदयोः शब्दार्थानामन्यत्वं भवेत्तत इदमनारम्भणी-यम् । तथा हि लौकिकशब्दविषयं तावदिदमधिकरणमनर्थकं वैदिकविषयं तु भवत्यर्थवत् न तु तत्र व्यवहारानलुपातिनां शब्दानामर्थनिर्णयः शक्यते कर्तुम् उपायाभावात्तेनोभयस्मिन्नपि विषयेऽनारम्भ एवाधिकरणस्यान्य-त्वपक्षे स्यात् । एकत्वपक्षे तु लोके वृद्धव्यवहारानुसारेण शब्दार्थनि-र्णयः कृतः, तत्रानुपयुक्तोऽपि वेदे फलिष्यति तेनाकृत्यधिकरणोपोद्घात-तया लोकवेदयोः पदपदार्थानामन्यानन्यत्वे विचार्यते तत्र सत्यपि वर्णा-भेदे केनचित्स्वरच्छान्दसवर्णागमलोपविकारविपर्ययाध्यायानध्यायादिध-र्मभेदेन जरराजपदयोरिव क्रमभेदेन व्यपदेशभेदात्स्पष्टभेदस्वरूपादिश-ब्दसाहचर्याच्च लोकवेदयोः पदानामन्यत्वम् । अर्थोऽपि च पदान्यत्वा-देव "उत्ताना वै देवगवा वहन्ती"ति दर्शनाच्च अश्वबालादिशब्दानां च स्पष्टार्थान्तरदर्शनादन्य इति प्राप्तेऽभिधीयते । "प्रत्यक्षप्रत्यभिज्ञानाद्धर्थै-कत्वं प्रतिष्ठितं वर्णात्मकं पदं तच्च तदभेदान्न भिद्यते" ।

ननु वर्णाभेदेऽपि स्वरादिभेदात्पदभेदो वाक्याधिकरणे दर्शितः । "पदावधारणोपायान् बहूनिच्छन्ति सूरयः । क्रमन्यूनातिरिक्तत्वस्वरवाक्य-श्रुतिस्मृती"रिति, सत्यं, योऽर्थप्रतीत्यैपयिको धर्मस्तद्भेदे भिद्यत एव पदं यथा पूर्वपदप्रकृतिस्वरत्वे बहुव्रीह्यर्थत्वम् । अन्तोदात्तत्वे स्वार्थवृत्तिता-स्मरणादवगम्यते ब्रह्मब्राह्मणादिषु तु न्यूनातिरिक्तवशादर्थभेदो लोकत-एवावगतः, जरराजादिषु क्रमान्यत्वादर्थान्यत्वाध्यवसायः । नैवं लोक-

वेदयोरर्थापर्यायकधर्मभेदोऽस्ति । यदि ह्यनियतस्वराणामन्यो ऽर्थो नियत-स्वराणामन्योऽर्थ इति स्मृतितोलोकतो वा ऽवगतं स्यात्ततो नियतानियत-स्वरतया लोकवेदयोः पदभेदोभवेत् न चैवमतो नास्ति पदभेदः । पद्यते गम्यते ऽनेनेति हि पदम्, अतो गमकस्वरूपस्य कियताऽपि रूपेण सति भेदे भिन्नं पदं, तदभावे तु धर्ममात्रभेदाच्च तद् भिद्यते । एवं देवासः, [१] त्मनेत्यादिषु लौकिकेभ्यो न्यूनातिरेककृतस्वरूपभेदे सत्यपि तद्रूपस्यार्थान्तरानवगमात्किंचिद्रूपभेदेऽपि लौकिकपदप्रत्यभिज्ञानात् सत्यपि च केषांचिद्भेदे सर्वेषां भेदस्याप्रामाणिकत्वात्, पदैक्ये च तदर्थावगमादुत्तानादिवचनस्यान्यपरत्त्वादश्वबालाद्यर्थभेदेऽपि सर्वेषां तदभावात्सिद्धमेकत्वं लोकवेदयोः पदपदार्थानाम् ॥

एवं सिद्धे विचार्यते किमाकृतिः शब्दार्थ? उत व्यक्ति? रथाकृतिविशिष्टव्यक्ति? रिति त्रयः पक्षाः प्राधान्येन चिन्त्यन्ते ॥

अन्ये तु विकल्पसमुच्चयसंबन्धसमुदायादयः सर्वे पक्षा आकृतिविशिष्टव्यक्तिपक्षनिराकरणेन निराकृता एव भवन्तीति न पृथग् विचार्यन्ते तत्र "प्रयोगचोदनाभावाद्व्यक्तेरेवाभिधेयता । न ह्याकृतिरमूर्त्तत्वाद्व्यवहारोपयोगिनी ॥ लिङ्गकारकसंख्याभिः संबन्धोऽस्या न कल्पते । सामानाधिकरण्यं च न जातिगुणशब्दयोः ॥ व्यक्तिवाचित्वपक्षे तु सर्वमेतत्समञ्जसम् । तेन शुद्धा विशिष्टा वा व्यक्तिः शब्दस्य गोचरः" ॥ "व्रीहीनवहन्ति" "पशुमालभेत" "गामानय" "ब्राह्मणो न हन्तव्य" इति यावन्त एवमादयोविनाशिमूर्त्तिमद्द्रव्यगोचराः प्रयोगविधयः प्रतिषेधा वा ते सर्वे व्यक्तावेव संभवन्ति नाकृतौ । न ह्याकृतिरवहन्तुमालब्धुमानेतुं वा शक्यते नित्यत्वादमूर्त्तत्वाच्च, तेनानर्थकं तद्विधानं, प्रतिषेधश्च, प्राप्त्यभावाद्व्यक्तिपक्षे तूपपद्यते । तस्माद्व्यक्तिः शब्दार्थः, एवं च वृत्तौ वृक्षाभ्यामिति व्यक्तौ प्रातिपदिकार्थे प्रत्ययाभिहितानि लिङ्गसंख्याकारकाणि तया संबध्यन्ते । जातेरलिङ्गत्वादङ्कसंख्यत्वादमूर्त्तत्वेन चाकारकत्वादसंबन्धः स्यात् । सा-

१ आत्मना इत्यस्य शब्दसंक्षेपः ।

मानाधिकरण्यं च गौः शुक्ल इति शुद्धव्यक्तिवचनयोरेकार्थत्वादुपपद्यते जातिगुणविशिष्टद्रव्यवचनत्वे ऽपि विशेषणभेदे सत्यपि विशेष्याभेदादुपपन्नम् । त्वत्पक्षे तु जातिगुणमात्रवृत्तित्वादर्थभेदे दुर्लभं सामानाधिकरण्यम् । एवं पुरुषो देवदत्त इति जातिद्रव्यवचनयोर्दर्शयितव्यम् । तस्माद्व्यक्तिरेवार्थः, कथं तर्हि व्यक्त्यन्तरे प्रयोगो यत्र न दृष्टः शब्दः ? सामान्यस्योपलक्षणत्वाददोषः । यैवमाकृतिका सा गौरिति सामान्यमुपलक्षणीकृत्य शब्दार्थशिक्षा योऽयं शुक्लवासाः स देवदत्त इतिवत् । यथा च तत्रोपलक्षणभूतं वासोऽनभिधाय देवदत्त एवाभिधीयते तथेहाप्युपलक्षणमात्रत्वात् सामान्यस्यानभिधाने व्यक्तय एव शुद्धा अभिधीयन्ते । एकोपलक्षणलाभादेव नानेकशक्तिकल्पनापत्तिः । आकृतिविशिष्टव्यक्त्यभिधाने तु न कश्चिद्दोषः । तस्माद्व्यक्तिरेव शुद्धा विशिष्टा वा शब्दार्थ इति, नैतद्युक्तं, कुतः ? "आनन्त्यव्यभिचाराभ्यां शक्त्यनेकत्वदोषतः । संदेहाच्चरमज्ञानाच्चित्रबुद्धेरभावतः ॥ अन्वयव्यतिरेकाभ्यामेकरूपप्रतीतितः । आकृतेः प्रथमज्ञानात्तस्या एवाभिधेयता ॥ व्यक्त्याकृत्योरभेदाच्च व्यवहारोपयोगिता । लिङ्गसंख्यादिसंबन्धः सामानाधिकरण्यधीः । सर्वं समञ्जसं ह्येतद्वस्त्वनेकान्तवादिनः । लक्षणा वाऽभ्युपेतव्या जातेस्तेनाभिधेयता" । न ह्यनन्तासु व्यक्तिषु संज्ञित्वं शक्यते ऽवगन्तुम्, व्यभिचाराच्च व्यक्तीनामशब्दार्थत्वं नियमलक्षणत्वात्संबन्धस्यानियमे तदयोगात्, अनन्ताश्च शब्दव्यक्तयो ऽनन्तासु व्यक्तिषु कल्प्याः, जात्युपलक्षणत्वेऽप्यभिधेयानामनन्तत्वाच्छक्त्यानन्त्यमस्त्येव । व्युत्पत्तिकाले हि जातिरुपलक्षणं न त्वभिधानसमये, अभिधानं हि प्रातिस्विकेनैव रूपेण व्यक्तीनां, तद्यथाऽक्षत्रयमेकापवरकस्यमेकापवरकस्थित्यैवोपलक्ष्य कश्चित्कंचिदाह य एतस्मिन्नपवरकेऽधुना आसते ते त्रयोऽक्षशब्दाभिधेया इति । तत्र यद्यपि व्युत्पत्तिसमयेऽपवरकस्थिति नामैकमुपलक्षणं लभ्यते तथाऽपि शब्दस्तदनादरेण व्यक्तित्रयमेव स्वरूपेणाभिधत्त इति भवति शक्तित्रयम् एवमिहापि, यद्यपि व्युत्पत्तिसमये जातिरेकोपलक्षणमासीत्तथा ऽपि शब्दस्तामस्पृशन्नेव नानारूपा व्यक्तीः स्वेन रूपेणाभिधत्त इति स्यादेव शक्त्यानन्त्यम्, अपि च यद्यव्यपदेश्यं धर्मिरूपम-

भिधेयं ततो गोशब्दोच्चारणाद्गोव्यक्तिः प्रतीयमानाऽपि नाश्वादिव्यक्तिभ्यो व्यवच्छिन्ना प्रतीता स्यात् न ह्यसाधारणमाकारमन्तरेण द्रव्यं द्रव्यान्तर-व्यवच्छिन्नं प्रतीयते तत्र गौरित्युक्ते सर्वत्राविशिष्टा प्रतीतिः स्यात् यथा-ऽऽह "अव्यपदेश्यत्वेन सर्वत्राविशेषणप्रसङ्गा"दिति अथाभिधानसमय एव जातिरुपलक्षणमित्यभिदधदेव हि व्यक्तिं शब्दो जातिमुपलक्षणमादाय तज्जातीयरूपेणाभिधत्ते गोजातीयमिति । ततः प्रथमं जातिरभिधातव्या न ह्यनभिधाय जातिं तज्जातीयत्वेन रूपेण व्यक्तिरभिधातुं शक्यते । ततश्च विशिष्टाभिधानमेव वाचोयुक्त्यन्तरेणापन्नं न शुद्धाभिधानम् । तदाह "सामान्याकारेण निरूपणे विकल्पा"दिति विशेषणादित्यर्थः । विशिष्टाभिधाने च पूर्वतरं विशेषणमभिधातव्यम् । तदभिधाने च तत एवा-त्यन्ताविनाभूतव्यक्तिप्रतिपत्तिसिद्धेर्न तत्राभिधानशक्तिकल्पनावसरः । किंच गोशब्द उच्चरिते व्यक्तिषु संशयो भवति न कस्यांचिन्निर्णयः । यत्र च संश-यो न तस्यामभिधेयता शब्दस्य निश्चायकत्वात्सामान्यं तु निर्णीयत इति भवत्यभिधेयम् । ननु असत्यपि व्यक्तिविशेषनिर्णये व्यक्तिमात्रं निर्णीयत-एव, किमिदं व्यक्तिमात्रं? सामान्यं विशेषो वा द्व्याकारैव हि वस्तुषु बुद्धि-र्व्यावृत्त्यनुगतरूपा तत्र विलक्षणबुद्ध्यालम्बनं व्यक्तिः समानबुद्ध्यालम्बनं च सामान्यम् न तदुभयातिरिक्तं व्यक्तिमात्रं नाम किंचिदस्ति वस्तुनो रूप-म् । सामान्यमेव त्वनेन मात्रशब्देनाभिधीयत इति तदेवाभिधेयम् । प्रथमं च सामान्यमेव शब्दाद्गम्यते पश्चाच्च व्यक्तिष्वाकाङ्क्षामात्रं जायते ततस्तदेवाभिधेयं न व्यक्तिविशेषः । विचित्राश्च खण्डमुण्डादिरूपा व्यक्तय इति विचित्रा गोशब्दोच्चारणे बुद्धिः स्यात् एकाकारा तूत्पद्यते । अतो-ऽभिधेया जातिः, अन्वयव्यतिरेकाभ्यां चैवमेव युक्तम् । व्यवहाराङ्गता च जातेर्व्यक्त्यनतिरेकादुपपद्यते अतोऽभिधेया जातिः, न हि जातिर्नाम व्यक्तेरर्थान्तरभूतं किमपि तत्त्वम्, अपि तु वस्त्वेव ह्येकमुभयात्मकं व्यावृत्त्यनुगतरूपतया बुध्यते । तत्र सामान्यं शब्दार्थ इति, अयमर्थः सामान्यात्मना वस्तुशब्दाद्गम्यते न विशेषात्मनेति । यच्च सामान्यात्म-ना शब्देन बोधितं तस्य क्रियासंबन्धश्चोद्यते । शक्नोति च तत्क्रियां सा-

धयितुम्, अतस्तदेव क्रियाश्रयविशेषरूपमपि लिङ्गसंख्याकारकसंबन्धः सामानाधिकरण्यं च सर्वमनेकान्ताश्रयेणैव सुपरिहारम् । यदा तु भेद एव जातिव्यक्त्योस्तदा सर्वमिदं लाक्षणिकव्यक्त्याश्रयणेनोपपद्यते । यत्र तु "पशुना यजेत" "अरुणया क्रीणाती"त्येवमादौ करणत्वश्रवणं तत्र जातिगुणयोरेवामूर्त्तयोरपि द्रव्यपरिच्छेदेन मुख्यमेव करणत्वमुपपन्नम् । अधिकरणसंप्रदानादिरूपत्वं मूर्त्तस्यासंभवादभेदं लक्षणां वाऽऽश्रित्य समर्थनीयम् । आह च "तेन तल्लक्षितव्यक्तेः क्रियासंबन्धचोदना । जातिव्यक्त्योरभेदो वा वाक्यार्थेषु विवक्षित" इति तस्मात्सामान्यमेवाभिधेयं न व्यक्तिरिति सिद्धम् ॥ इति श्रीपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां प्रथमस्याध्यायस्य तृतीयः पादः ॥

उद्भिदादिशब्दानां यागनामताधिकरणम् ।

सू० उक्तं समाम्नायैदमर्थ्यं तस्मात्सर्वं तदर्थं स्यात् ॥ १ ॥

उद्भिदादिशब्दानुदाहृत्य गुणविधिर्नामधेयमिति भाष्ये विचार्य "उक्तं समाम्नायैदमर्थ्य"मित्यनेन सूत्रेण पूर्वपक्षमभिधाय "अपि वा नामधेयं स्या"दित्यनेन सिद्धान्तितं, तत्तु प्रमाणलक्षणासङ्गतमिति वार्त्तिककारेणाधिकरणभेदमाश्रित्य प्रथममुद्भिदादिशब्दानां धर्मे प्रामाण्यमस्ति न चेति विचार्य पश्चाद्गुणविधिनामधेयविचारो दर्शितः । तदनेन ये शास्त्रारम्भप्रयोजनसमर्थनावसरे "पूर्वं प्रमाणरूपाभ्यां पादेनाद्यस्य निर्णय" इति वार्त्तिके दृष्ट्वा प्रथमपाद एव प्रामाण्याप्रामाण्यचिन्ता समाप्ता त्रिपाद्यां तु कथंलक्षणो धर्म इति अमुना प्रतिज्ञातप्रामाण्यप्रकारो निरूप्यते विध्यर्थवादमन्त्रनामधेयस्वरूपैर्धर्मे प्रामाण्यं वेदस्येति प्रकारतद्गतावान्तरभेदात्समस्तोऽध्यायः प्रमाणलक्षणमाख्यायत इति मन्यन्ते ते निराकृताः । तथा सति हि नामधेयस्वरूपप्रकारचिन्तनाद् यथाभाष्यमेवाधिकरणं सङ्गतं स्यात्तस्माच्च तावदयं पक्षो वार्त्तिककारस्य संमतः

न च युक्तः, स्मृतिपादस्य त्रिपाद्यामसङ्गतिप्रसङ्गात् । न हि तत्र वेदप्रामाण्यप्रकारनिरूपणम्, तस्मात्सर्वस्मिन्नध्याये धर्मे प्रमाणतदाभास-

निरूपणमेव क्रियत इति वक्तव्यम् । तत्र च चोदनैव साक्षात्प्रमाणम्, अर्थवादमन्त्रस्मृतिनामधेयानि तच्छेषत्वेन तन्मूलत्वेन च प्रमाणं भवन्तीति धर्मप्रमितेरितिकर्त्तव्यतास्थाने नियतं निपतन्ति, चोदना तु प्रधानं प्रमाणं तस्याश्च प्रथमपाद एव समाप्तं॰ प्रामाण्यमित्यभिप्रायेणोक्तं पादेनाद्यस्य निर्णय इति, चोदनैव हि साक्षात्प्रमाणं तच्च प्रथमपादेनैव निर्णीतमित्यभिप्रायः, त्रिपाद्यां त्वप्रधानप्रमाणनिरूपणमित्येतावान् भेदः । प्रमाणचिन्तात्मकत्वं तु सकलस्याविशिष्टमिति स एवैकोऽध्यायार्थः । तदिह संभवदाख्यातसामानाधिकरण्यानुद्भिदभिजिच्चित्राज्यपृष्ठवहिष्पवमानाग्निहोत्राऽऽघारश्येनादिशब्दानुदाहृत्य चिन्त्यते किमेते धर्मे प्रमाणं न वेति । "तत्र विध्यर्थवादमन्त्रांशैर्वेदाद् धर्मः प्रतीयते । न चोद्भिदादिशब्दानां तेष्वन्तर्भावसंभवः ॥ न तावदर्थवादत्वं स्तुतिबुद्धेरभावतः । उत्तमामन्त्रणास्वन्तत्वान्तरूपाद्यभावतः ॥ मन्त्रप्रसिद्ध्यभावाच्च मन्त्रतैषां न युज्यते । न च विध्यन्तपातित्वं साध्याद्यनभिधानतः" ॥ न तावदेते साध्यमभिदधत्यफलवचनत्वात् न साधनम् । समानपदोपात्तधात्वर्थसाधनाऽवरोधात् भावनायाः

न च गुणविधानेनेतिकर्त्तव्यतान्तर्भावः, उद्भिदादिरूपस्य लोके गुणत्वेनाप्रसिद्धत्वात् मत्वर्थलक्षणादोषाच्च चित्रादिषु वाक्यभेदप्रसङ्गात् अग्निहोत्रादिषु तत्प्रख्यशास्त्रान्तरसद्भावात् श्येनादिषु उपमानानुपपत्तेः

न च नाम्न इतिकर्त्तव्यतान्तर्भावः, नाम्नोऽनितिकर्त्तव्यतारूपत्वात् अप्रवृत्तिविशेषकरत्वेन च नाम्नोऽनर्थकत्वादप्रसिद्धत्वाच्च । तस्मादप्रमाणमेवंजातीयकं धर्मे इति पूर्वपक्षः । सिद्धान्तस्तु "सकलस्यैव वेदस्य स्वाध्यायविधिवाक्यतः । विज्ञातं पुरुषार्थत्वमुद्भिदादेरपि ध्रुवम्" ॥ तत्र त्वदुक्तेनैव मार्गेण मन्त्रार्थवादत्वासंभवाद्विध्युद्देशान्तर्भावस्य च प्रत्यक्षत्वात् तत्रैव गुणत्वेन नामधेयत्वेन वा प्रामाण्यं स्वाध्यायविध्यध्यापितस्यानर्थक्यासंभवात्सर्वानुपपत्तिपरिहारेणाऽध्यवसातव्यम् । एतावदिहाधिकरणे स्थितं भूयं तावत्प्रामाण्येनेति, तदेतदर्थवादप्रस्तावेऽभिहितमप्यनेकविचारान्तर्हितमिति कृत्वा विशेषविचारायानेन सूत्रेणोपस्थाप्यते

सू॰ अपि वा नामधेयं स्यादुदुत्पत्तावपूर्वमविधायकत्वात् ॥ २ ॥

विधित्वेन प्रामाण्यमित्येतावद्व्यवस्थितम् । तच्च द्वेधा संभवति गुणविधानेन नामधेयत्वेन वा यावदन्यतरन्नोपपाद्यते तावत्पूर्वावगतमपि प्रामाण्यं न प्रतितिष्ठतीति तत्प्रतितिष्ठापयिषया गुणविधिनामधेयचिन्ता प्रस्तूयते । तत्र प्रथमं तावदुद्भिदादिषु यौगिकेषु चिन्त्यते किं गुणविधिः ? कर्मनामधेयमिति तदर्थं किमेषां वैयधिकरण्येनाख्यातसंबन्धः ? उत सामानाधिकरण्येने - ति. "तत्रावयवयोगेन खनित्रादौ प्रसिद्धितः । प्रकृत्यौपयिकत्वाच्च गुणो यागे विधीयते" ॥ यद्यपि व्रीह्यादिवदेते न क्वचित्समुदायरूपेण निरूढास्तथाऽप्यवयवद्वारेण उद्भेदनसाधनेषु प्रसिद्धिसंभवात्कर्मणि कथंचिदप्यप्रसिद्धेर्नामधेयत्वेऽपि च यजतेः प्रकृत्यन्तरानुपदेशादानर्थक्यापत्तेर्गुणविधिपक्षे तु गुणे प्रकृत्यौपयिकत्वेन प्रयोजनवत्त्वाद्गुणविधानमेव युक्तम् ।

न च मत्वर्थलक्षणा यागानुवादात् । यदि ह्यत्र यागो विधीयेत ततस्तस्य करणत्वादुद्भिदाद्यपि करणमिति करणस्य करणान्तरेण संबन्धायोगाद्भिन्नार्थयोश्च श्रुत्या सामानाधिकरण्याभावादुद्भिच्छब्देन तद्वन्तं यागं लक्षयित्वोद्भिद्वता यागेनेति सामानाधिकरण्येन गुणो विधातव्य इति भवेन्मत्वर्थलक्षणा, यदा तु प्रकृतज्योतिष्टोमयागानुवादेन गुणमात्रमनेन विधीयते तदा विधिवाक्ये करणत्वेनोपदिष्टस्यापि यागस्यासाधितस्य करणत्वानुपपत्तेर्यदर्थाक्षिप्तं साध्यत्वं तदनुवादेन तदर्थतया तदाश्रित्य वा वाक्यान्तरेण फलाय गुणे विधीयमाने नाऽस्ति मत्वर्थलक्षणा उद्भिदा यागः कर्तव्य इति यागसाधनेनोद्भिदा पशून् भावयेदिति वा । नन्वेवं ज्योतिष्टोमवाक्येऽपि ज्योतिष्टोमगुणविधानान्न यागविधिरस्ति । तथाऽन्यत्रापि सर्वत्रोपपदश्रवणात्तद्विधिरेवेति क्वचिदपि कर्मविध्यभावाल्लौकिककर्माश्रयणेन गुणविधीनां सापेक्षत्वेनाप्रामाण्यप्रसङ्गः, नैष दोषः प्रकृतकर्माभावेन गत्यभावाज्ज्योतिष्टोमवाक्ये कर्मविधानं, तस्मिंश्च विधीयमानेऽनेकविधिदोषान्मत्वर्थलक्षणादोषाच्च ज्योतिष्टोमपदमेकं कर्मनामधेयं भविष्यति । यद्वा तदेकं मत्वर्थलक्षणामाश्रित्य गुणविशिष्टकर्मविधानम् । उद्भिदादयस्तु तत्प्रकृते कर्मणि गुणविधयः, वरं हि लक्षणाश्रयणमप्रामाण्यात् ।

न च लक्षणायाः प्रमाणान्तरापेक्षणेनाप्रामाण्यम्, पदसमभिव्याहारादेव लक्षणासिद्धेः, इतिकर्तव्यतासंविधिविशेषाच्च "भूयस्त्वेनोभयश्रुती"त्यनेन न्यायेन ज्योतिष्टोमवाक्य एव कर्मविधानं नेतरेषु । भवतु वा ज्योतिष्टोमवाक्येऽपि गुणविधानमेवमपि नाप्रामाण्यं यदाऽऽग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति विश्वजित्सर्वपृष्ठोऽतिरात्रो भवतीत्येवमादिषु अनेकगुणोपादानेन कर्मणोऽवश्यंविधातव्यत्वात्तत्रैव ज्योतिष्टोमेऽद्भिदादिगुणविधिसंभवाच्च लौकिककर्माश्रयणाद्प्रामाण्यम् । कथमप्रकृतेषु गुणविधिरिति चेत् लौकिकं वा किं प्रकृतं येन तत्र गुणो विधीयेत तेन यदि तावदप्रकृतेऽपि विधिः स्यात्ततो विश्वजिदादिष्विव विधानान्नाप्रामाण्यम् । अथ तु न ततो लौकिकेऽप्यविधानाद्विशिष्टविधिरित्युभयथाऽपि नाप्रामाण्यम्, न चौत्पत्तिकज्योतिष्टोमादिगुणविरोधादुद्भिदादिगुणानामविधानम् काम्यत्वेन तेषां नित्यगुणबाधकत्वात् । "उद्भिदा यजेत पशुकाम" इति हि प्रकृतं ज्योतिष्टोममाश्रित्य उद्भिद्गुणः पश्वर्थेन विधीयते । तस्माद्गुणविधिरिति प्राप्तेऽभिधीयते "धातोरत्यन्तपारार्थ्याद्विप्रकृष्टविधेस्तथा । फले कर्मणि वा नेह गुणो वाक्ये विधीयते" । फले तावद् विधीयमाने गुणे परपदसंबन्धविधानाद्धातोरत्यन्तपारार्थ्यं विप्रकृष्टार्थविधिश्चापद्यते । अथ तु कर्मण्येव गुणो विधीयते तथाऽपि विप्रकृष्टार्थविधानं, धातोश्च किंचित्पारार्थ्यमस्त्येव फलपदं चानर्थकं स्यात् । "दध्यादौ गत्यभावेन सर्वमेतत्समञ्जसम् । उद्भिदादिषु तत्रैवं नामधेयत्वसंभवात्" । "दध्नेन्द्रियकामस्य जुहुयात्", "व्रीहिभिर्यजेते"त्येवमादिषु दधिव्रीह्यादिपदानामर्थान्तरेऽत्यन्तनिरूढत्वाच्च सामानाधिकरण्येन यजिनामत्वं शक्यते कल्पयितुमप्रसिद्धार्थं हि प्रसिद्धपदसामानाधिकरण्येन निर्णीयते । दध्यादयस्तु निरूढत्वाच्च कथंचिदपि धातुसामानाधिकरण्यं प्रतिपद्यन्त इति गत्यभावात्तत्र धातुपारार्थ्यं विप्रकृष्टार्थविधानं श्रितम् । उद्भिदादयस्तु यथैवावयवद्वारेण खनित्रादौ वर्तन्ते तथैव स्वफलोद्भेदनकारित्वाद्यागेऽपीति नात्र धात्वर्थविधानं बाधितव्यम् ॥ "विशिष्टविधिपक्षे तु भवेन्मत्वर्थलक्षणा । सोमादौ

गत्यभावात्सा न त्वत्र गतिसंभवात्"। उद्भिदादयो हि करणत्वेन श्रूयन्ते करणं च कारकत्वात्क्रिययैव संबध्यते नान्येन। क्रिया चात्र प्रत्ययवाच्या फलभावनैव

न च तस्यामुद्भिदादीनां करणत्वं संभवति समानपदोपात्तधात्वर्थावरोधादिति भावाधिकरणे वक्ष्यामः। न च धात्वर्थेनोद्भिदादीनां संबन्धः संभवति तस्य धातुना प्रत्ययार्थं प्रति करणत्वेनोपादानात् क्रियारूपतयाऽनवगमात्क्रियारूपत्वे वा धात्वर्थस्य प्रत्ययार्थं प्रति करणत्वानुपपत्तेः

न च सत्यपि प्रत्ययवाच्यायाः फलभावनाया धात्वर्थावरोधेऽर्थाक्षिप्तया धात्वर्थभावनयोद्भिदादीनां संबन्ध इति वक्तव्यम्। तस्या इहाश्रुतत्वात्, अश्रुतया च तया शब्दान्तरस्यान्वयायोगात्। फलभावना ह्यत्र श्रुता, न च धात्वर्थभावना, न चाध्याहृत्य धात्वर्थभावनां तया सम्बन्धः। उद्भिदा भाव्यमानेन यागेन पशून् भावयेदिति विनाऽप्यध्याहारेण वाक्यसमन्वयोपपत्तेः, तदवश्यं यदत्र प्रत्ययार्थे करणं यागस्तत्रैव तृतीयान्तैरुद्भिदादिपदैर्वर्तितव्यं नान्या गतिरस्ति। तत्र गुणविधिपरत्वेऽर्थान्तरवाचिनामुद्भिदादिपदानामर्थान्तरे यागे वृत्तिर्मत्वर्थलक्षणया स्यात् उद्भिद्वता यागेनेति। नामधेयत्वे तु श्रुत्या, सोमेन यजेतेत्येवमादिषु तु सोमादिशब्दानामर्थान्तरेऽत्यन्तनिरूढत्वाद्यागे च कथंचिदप्यप्रसिद्धेरप्रसिद्धकल्पनातो वरं प्रसिद्धार्थद्वारेण लक्षणाश्रयणमेवेति मत्वर्थलक्षणया गुणविशिष्टयागविधानमङ्गीकृतं सोमवता यागेन समीहितं कुर्यादिति। उद्भिदादीनां त्ववयवद्वारेण कर्मण्यपि प्रसिद्धिरस्तीति श्रुत्या नामधेयत्वं युक्तम्। प्रयोजनं च नाम्नां सर्वत्र व्यवहार एव। न ह्यन्तरेण नामधेयमृत्विग्वरणादिष्वनेनाहं यक्ष्ये इति लघुराख्यानोपायः स्यात्। क्वचिच्च गुणफलोपबन्धेनार्थवत्ता दर्शपूर्णमासावारप्स्यमानोऽन्वारम्भणीयामिष्टिं निर्वपेदिति गुणोपबन्धः। "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते"ति फलोपबन्धः। क्वचिच्च भेदकतयाऽर्थवत्त्वं यथा "अथैष ज्योतिरित्यादिषु वक्ष्यते। यथा चात्रैवो"द्भिदा यजेत पशुकाम" इति नामधेयत्वाभावे हि प्रकृतस्यै-

व ज्योतिष्टोमस्य फलविधिरयं स्यात् नामधेयत्वे तु यागान्तरविधानात्सिद्धमर्थवत्त्वम् ॥

चित्रादिशब्दानां यागनामधेयताऽधिकरणम् ।

**सू० यस्मिन् गुणोपदेशः प्रधानतोऽभिसंबन्धः ॥ ३ ॥**

इह लोके जातिगुणवचनतया निरूढा गुणफलोपबद्धेषु वाक्येषु श्रुताः कर्मण्यपि योगवशेन संभवद्वृत्तय उत्पत्तिवाक्ये फलवाक्ये गुणवाक्ये वा तृतीयानिर्देशेन कर्मसमभिव्याहृताः शब्दास्ते सर्वे उदाहरणं यथा "चित्रया यजेत पशुकामः पञ्चदशान्याज्यानि सप्तदशानि पृष्ठानि त्रिवृद्बहिष्पवमानमिति चित्राज्यपृष्ठबहिष्पवमानशब्दास्ते गुणविधयः कर्मनामधेयानि वेति संशयः । तदर्थं च किं गुणविधौ वाक्यभेदो न वेति चिन्तयितव्यम् । कस्मात्पुनरुत्पत्तिवाक्यमेवाज्यैः स्तुवत इत्यादिकं नोदाह्रियते । पक्षद्वयेऽपि निर्णयकारणाभावात् गुणवाक्याधीन एव निर्णय इति तदेवोदाहृतम् । तथा हि न तावदाज्यैः स्तुवत इति गुणविधिरध्यवसातुं शक्यते । घृतस्य स्तुतौ करणत्वा[1]संभवात् तत्र लक्षणया घृतसंबन्धिभिर्मन्त्रैरिति वक्तव्यम् ।

न च घृतसंबन्धिनः केचिन्मन्त्राः प्रसिद्धा ये लक्ष्येरन् । तत्रानेनैव वाक्येन लक्षणया घृतसंबन्धं मन्त्राणां विधाय तैश्च स्तोत्रे विधीयमानेऽत्यन्तगौरवं, विधौ च लक्षणाऽत्यन्तक्लिष्टा समाश्रिता स्यात् । तदुक्तं "यदा जिमीयुस्तदाज्यानामाज्यत्वम्" इत्यादिवाक्यशेषावगतयोगाश्रयणेन नामधेयत्वमङ्गीकृतमिति न गुणविधित्वाध्यवसानं, रूढत्वाच्च नामधेयत्वमपि न स्वध्यवसानम् । यदा तु पञ्चदशान्याज्यानीति संख्याविशिष्टान्याज्यान्यवान्तरप्रकरणेन स्तोत्रगुणतया विधीयन्ते तदा तेनैव प्राप्तमाज्यसंबन्धं लक्षणया मन्त्राणामनूद्य स्तुतिमात्रमुत्पत्तिवाक्ये विधीयते । अनुवादत्वाच्च लक्षणा न दोषः स्तुतिमात्रविधानाच्च लाघवं विधेर्विनैव नामत्वेन लभ्यत इति प्रसिद्ध्यादिभिर्गुणवचनतैवाऽध्यवसीयते । यदा तु नात्र संख्याविशिष्टाज्याऽऽविधानं संभवति किंतु आज्यानुवादेन संख्यामात्रविधानं तदा स्तोत्रे घृतस्याप्राप्तत्वात्तदनुवादासंभवात्स्तोत्रानुवादेनैव

[1] कारकत्वासंभवादिति पाठान्तरम् ।

संख्या विधातव्या तच्चाऽऽज्यशब्दस्य स्तोत्रवाचित्वेऽवकल्पते नान्यथेति गुणवाक्यालोचनेनैवाज्यादिपदमुत्पत्तिवाक्यगतं नामधेयत्वेनाध्यवसीयत इति पदद्वयेऽपि गुणवाक्याधीनत्वान्निर्णयस्य तत्रैव कथा प्रवर्त्तते। पञ्चदशान्याज्यानीति किं संख्यायुक्तं घृतं स्तोत्राङ्गतया विधीयते? किं वाऽऽज्यशब्देन स्तोत्रमुद्दिश्य संख्यामात्रं विधीयते? इति। एवं सप्तदशानि पृष्ठानीत्यादिषु द्रष्टव्यम्। एवं चित्रयेत्यग्नीषोमीययागानुवादेन चित्राशब्देन चित्रत्वस्त्रीत्वे विधीयेते? उत दधि मधु घृतं पयो धाना उदकं तण्डुलास्तत्संसृष्टं प्राजापत्यमिति प्रकृतो यागः फले विधीयते? चित्राशब्दस्य चित्रद्रव्यवाचकत्वात्तत्रैव नामधेयत्वमिति। तत्र प्रसिद्धार्थादिभिर्गुणविधिः रूढत्वाच्च नोद्भिदादिन्यायः उत्पत्तिवाक्यावगतकरणेनार्थाक्षिप्तं यद् यागस्य यत्साधत्वं तदनुवादेन वैयधिकरण्येन गुणविधानाच्च मत्वर्थलक्षणेत्युक्तम्

न च वाक्यभेदः, एकपदोपात्तत्वाच्चित्रत्वस्त्रीत्वयोरुभयविशिष्टैककारकविधानात्पशुकामपदमपि पशुसाधनकत्वादग्नीषोमीयस्य यागस्याऽऽर्ज्जनाङ्गतया प्राप्तसाधनकामनाऽनुवादः। अस्ति हि पशुयागं कुर्वतः पशौ कामना, पञ्चदशान्याज्यानीत्यत्रापि संख्याविशिष्टाज्यविधानाद् न वाक्यभेदः, तस्माद्गुणविधिः। एवं चाज्यैः स्तुवत इत्याद्युत्पत्तिवाक्येऽप्याज्यादिपदं गुणवाक्यप्राप्तगुणानुवादकं न नामधेयमिति प्राप्तेऽभिधीयते"। "वाक्यभेदप्रसङ्गेन सामानाधिकरण्यतः। अन्वाख्यानार्थवादाच्च नामतैवोपपद्यते। चित्रत्वं स्त्रीत्वं च नैकेन विधातुं शक्यं वाक्यभेदप्रसङ्गात्। उभयविशिष्टकारकविधानेऽपि गौरवम्। कामपदं च फले मुख्यं साधने गौणम्। प्रकृतफलाकाङ्क्षद्ध्यादियागादिक्रमश्च न न्याय्यः, तस्मात्तस्यैव फलमात्रविधानम्। चित्रापदं च सामानाधिकरण्येन नामधेयम्। पञ्चदशान्याज्यानीत्यत्रापि समासाभावान्न संख्याविशिष्टद्रव्यप्रतिपत्तिरस्ति तत्रोभयोर्द्रव्यसंख्ययोर्विधानाद्वाक्यभेदः। तस्मादाज्यानुवादेन संख्यामात्रं विधेयं, तच्च यद्युत्पत्तावाज्यपदं नामधेयं ततो घटते नान्यथेति गुणवाक्यवशादेवोत्पत्तौ नामत्वं विज्ञायते। सामानाधिकरण्याच्चाज्यैः स्तुवत इति वाक्यशेषाच्च

यद्वाजिमीयुरित्यादेर्नामत्वमेव युक्तम् । यत्तु वार्त्तिके पृष्ठैः स्तुवत इत्युत्पत्तिवाक्यमुदाहृतं तत्र चोदयन्ति यद्येतदुत्पत्तिवाक्यं तथा सति उत्पत्तौ बहुत्वयोगाद्बहूनि मुख्यानि पृष्ठानि भवेयुः । तत्र यत्सप्तमे वक्ष्यते ज्योतिष्टोमे पृष्ठबहुत्वाभावाद्वैकल्पिके द्वे पृष्ठे न बहूनीति मैत्रावरुणसामादिषु पृष्ठशब्दो गौणः, तेन विश्वजिति सर्वपृष्ठशब्दो बहुत्वापेक्षत्वात्र चोदकप्राप्तानुवाद इति तद्विरुध्यते । तेन रथन्तरं पृष्ठं भवति बृहत्पृष्ठं भवतीत्युत्पत्तिवाक्यं वक्तव्यम् । तथा च स्वयमेव वार्त्तिककारो नवमे वक्ष्यतीति सत्यमेवम् । अनादरादिदमुक्तम् एतदुक्तं भवति सर्वथा सप्तदशानि पृष्ठानीत्येतदत्रोदाहरणं, यदेव तूत्पत्तिवाक्यं पृष्ठैः स्तुवत इति वा रथन्तरं पृष्ठं भवतीति वा न तदेवोदाहर्त्तव्यमित्यभिप्रायः ।

अग्निहोत्रादिशब्दानां यागनामधेयताधिकरणम् । अयमेव च तत्प्रख्यन्यायः । सू० तत्प्रख्यं चान्यशास्त्रम् ॥ ४ ॥

"आघारमाघारयति" अग्निहोत्रं जुहोती"त्याघारशब्दोऽग्निहोत्रशब्दश्च गुणविधिः कर्मनामधेयं वेति विचारः प्रसिद्ध्यादिभिर्गुणविधिः ।

न च मत्वर्थलक्षणा अग्निहोत्रे बहुव्रीहिणैवाग्नये होत्रमस्मिन्निति मत्वर्थस्योक्तत्वात् उपसर्जनार्थोऽग्निर्देवता विधीयते नामधेयत्वे चारूपत्वं स्यात् । यद्यपि च दध्यादिवाक्यैर्द्रव्यं लभ्यते तथाऽपि देवताभावादरूपत्वं "यदग्नये च प्रजापतये च सायं जुहोति" "यत्सूर्याय च प्रजापतये च प्रात"रित्यनयोरनेकगुणोपपादनेन विशिष्टकर्मविशिष्टत्वदेवताविधौ वाक्यभेदादसामर्थ्यं न चैककारकविधावाद्विभक्तिपृथक्त्वेन कारकनानात्वात् । यदि त्वग्नीषोमीयवदग्निप्रजापतिभ्यां समस्ताभ्यामेका विभक्तिरश्रोष्यत तत उभयविशिष्टैकदेवताकारकविधानाच्च वाक्यं भेत्स्यते, अथापि क्षीणात्निवत्पृथक्पदं विभक्तिः स्यात् तथापि तया वाक्येनारुणैकहायनीवदग्निप्रजापत्योर्युगपत्संबन्धात्स्यादुभयविशिष्टमेकं कारकम् । यदा तु यजतिददातिजुहोतिभ्य इव भावनाविभक्तिः प्रत्येकमग्निप्रजापतिभ्यामुच्चरन्ती देवताविभक्तिः प्रकृत्यर्थभेदभिन्नामेव देवतां भावनामिव प्रतिपादयति तदा कुतो देवतैक्यम्? । देवतासामान्येन त्वेकत्वं भावनासा-

मान्येन तुल्यमिति समस्तो वेद एकं वाक्यं स्यात् । अतो नामत्वे द्वेवताविधानासंभवादरूपत्वमिति गुणविधित्वमेव युक्तम् । अविहित-द्वेवताकेषु वा दर्विहोमेषु गुणविधानाच्च तत्प्रख्यत्वम् । आघारशब्दे-नापि क्षरणसमर्थद्रव्यमाज्यपयः प्रभृत्यभिधीयते । तच्च द्वितीयानिर्दे-शादाघारणसंस्कार्यत्वेन गम्यते निष्प्रयोजनस्य संस्कारासंभवात्प्रयोजना-पेक्षायां प्रकृतद्रव्यापेक्षाउपांशुजार्थतो विज्ञायते प्रकरणेन च गुणे विधी-यमाने नास्ति मत्वर्थलक्षणा मतुप्प्रत्यययुक्तस्यैव वाक्यस्य प्रकरणेन कल्पनात्, न चात्र यागो विधीयते संस्कारमात्रश्रवणात् ।

न च संस्कारकर्माणि क्वचिन्नामवन्ति तस्माद्गुणविधिः, एवं च द्वितीयानिर्द्देशो युक्तो भवति आघारस्य संस्कार्यत्वात् अग्निहोत्रे चा-र्थासाध्यत्वानुवादेनोपसर्ज्जनार्थविधानात् । नामधेयत्वे तु तस्याविधे-यत्वात्कर्मैव विधेयं, तच्च करणमिति नामधेयं तृतीयान्तं स्यादनुपपन्ना द्वितीया स्यात् ।

न च फलवाक्य एव कर्मणः करणत्वम् । उत्पत्तिवाक्ये तु फल-वाक्यापेक्षितकर्मस्वरूपकर्त्तव्यतैव प्रतिपाद्यत इति वाच्यम् । विधेः कर-णत्वावगमात् कर्मत्वासंभवात्साध्यत्वे च तस्य साध्यान्तरानपेक्षत्वाच्च फलवाक्येनापि फले विधातुं शक्यत इति कर्मान्तरमेव फलवाक्ये स्यात् । तथा चाघाराग्निहोत्राधिकरणे वक्ष्यते न ह्यकरणभूतोऽसौ साध्यान्तरानपेक्ष-त्वाद्वाक्यान्तरेणापि फले विधातुं शक्यत इति तस्मादुत्पत्तावपि कर्मणः करणत्वात् द्वितीयानुपपत्तिरतो गुणविधिः, अत्रोच्यते "वाक्यार्थो न विधा-तव्यो धात्वर्थविधिसंभवे । पदान्तरं न चानन्यगतिनामत्वसंभवात्" । श्रुत्या हि धात्वर्थविधानं वाक्येनोपपदार्थस्य तत्र यद्युपपदमनन्यगति स्यात् स्याद्वाक्यार्थविधानम् । तत्तु शास्त्रान्तरप्रख्यापितं गुणं निमित्ती-कृत्य नामधेयत्वेन संभवतीति न धात्वर्थविधानं बाधितव्यम् । किं पुनः शास्त्रान्तरं यदस्य गुणस्य प्रख्यापकम्? । अग्नेस्तावदग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोति सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहे"ति प्रातरिति वाच-निकमन्त्रवर्णात्प्राप्तिः "यदग्नये च प्रजापतये च सायं जुहोतीत्येतत्तु मन्त्र-

वर्णाप्राप्ताग्निसूर्यानुवादेन प्रजापतिसमुच्चयविधानमतो न वाक्यभेदः, आघारवाक्येऽप्याघारसंज्ञके कर्ममात्रे विहिते चतुर्गृहीतं वा एतद्भूत्तस्याघारमाघार्यत्यनेनैवाज्यप्राप्तेः चरणात्मकत्वं प्राप्तमिति तन्निमित्तनामधेयत्वसंभवात्कर्मविधानमेव युक्तम्। दृष्टं च संस्काराणामपि नामधेयम्। "उपांशुं गृह्णातीत्यन्तर्यामं गृह्णातीति न चास्य संस्कारत्वम् "इन्द्र ऊर्ध्वो ऽध्वर इत्याघारमाघारयती"ति मान्त्रवर्णिकेन्द्रदेवतावत्त्वाद्यागत्वसिद्धेः अतो नामत्वम्। अर्थाक्षिप्तसाध्यांशाभिप्रायकश्च द्वितीयानिर्देशः। कथं पुनः शब्देनानध्याहृतेन च शब्दस्यान्वयः। न हि श्रुत्या लक्षणया वा विधिवाक्ये, साध्यत्वं शब्दं, नाप्यध्याहृतं वाक्यभेदप्रसङ्गादग्निहोत्रहोमं कुर्याद्धोमेन च फलमिति अर्थाक्षिप्तेनापि यद्यन्वयः स्यात्तथा सति गुणोऽप्युद्भिदादिरर्थाक्षिप्तसाध्यांशाभिप्रायेण करणभूतेऽपि कर्मणि विधीयमानः श्रुत्यैव शक्यो विधातुमिति मत्वर्थलक्षणा दत्तजलाञ्जलिः स्यात्। एतेन ये धात्वर्थस्य विषयतया करणत्वेन चान्वयं मन्यन्ते ते निरस्ता वेदितव्याः। विषयभूतेन हि कथं करणवाचिनां नामधेयानां सामानाधिकरण्यम्?। आर्थिकेन करणत्वेन सामानाधिकरण्यमिति चेत् साध्यत्वमपि तर्ह्यार्थिकमस्तीति गुणविधिरपि विनैव मत्वर्थलक्षणया विना च वैरूप्येण स्यादिति समस्तमेव नामधेयप्रतिपादनमनुपपन्नं स्यात्। अथ विषयत्वद्वारेण करणत्वपर एव शब्दस्ततोऽन्यपरेण शास्त्रेणोपायमात्रत्वेनोपात्तं विषयत्वं न शास्त्रार्थः स्यादतत्परत्वात्। अथ शब्द एव प्रथमं विषयतयाऽभिधाय पुनःकरणतयाऽप्यभिधत्ते कथं सकृदुच्चरितो द्विरभिदध्यादभिदधानो वा साध्यत्वमपि पुनरभिदधीत न हि नियामकमस्ति द्विरेवाभिधत्ते न त्रिरिति। "सकृत्प्रवृत्तायाः किमवगुण्ठनेने"ति न्यायात्। अतश्च गुणविधिरपि स्यादित्युक्तम्। अतः करणत्वेनैवान्वयो वाच्यो न विषयत्वेनेत्यास्तां तावत्। अतः कथं द्वितीयाश्रुतिनिर्देश इति वक्तव्यम्। तदुच्यते अस्ति तावदार्थिकं धात्वर्थस्य साध्यत्वमसाधितस्य करणत्वानुपपत्तेरतः साध्यसाधनयोर्द्वयोरेकार्थसमवायात् साध्याभिधायिनी द्वितीया साधनत्वमेव लक्षयन्ती धातुसामानाधिकरण्यं प्रतिपद्यत इत्यविरोधः।

श्येनादिशब्दानां यागनामधेयताऽधिकरणम् ।
अयमेव तद्व्यपदेशन्यायः ।

सू० तद्व्यपदेशं च ॥ ५ ॥

इह रूढिशब्दा एव वाक्यभेदरहितास्तद्व्यपदेशवन्त उदाहरणम् । यथा "श्येनेनाभिचरन् यजेते"त्यादिषु श्येनादिशब्दाः तेषु गुणविधिः कर्मनामधेयं वेति संशयः । अत्यन्तनिरूढत्वाद्गुणविधिर्ज्योतिष्टोमादिषु काम्यत्वाच्च नित्यमुत्पत्तिशिष्टमपि सोमं बाधते । यद्वा गुणविशिष्टकर्मविधानम् अप्रसिद्धार्थकल्पनातो वरं मत्वर्थलक्षणा सोमादिवत् ।

न च यथा वै श्येन इत्यादिवाक्यशेषदर्शितक्रियासामान्येन कर्मणि गौणत्वेन कर्मवचनत्वं युक्तम् । अत्यन्तविप्रकृष्टत्वात् गौणत्वस्य लक्ष्यमाणगुणैर्योगाद्वृत्तिर्गौणीति वक्ष्यते । तद्दूरं लक्षणैवाश्रिता गौणत्वे चार्थान्तरपरत्वाच्छ्रुतिबाधः । लक्षणायां तु तद्वृत्त्यपि वर्त्तमानः श्येनशब्दो लोहितोष्णीषादिवदुपसर्जनार्थश्येनविधिपर एव करणीभूतेन तु यागेन करणीभूतस्यैकवाक्यता नान्तरेण मत्वर्थलक्षणां लभ्यत इत्येकवाक्यत्वार्थं लक्षणाश्रयणं, तात्पर्यं तु श्रुत्यर्थ एवेति न श्रुतिबाधः, उच्यते गुणविधौ तावत्स एव स्तोतव्यः । तस्य चात्मनैवोपमानमनुपपन्नमिति तद्व्यपदेशात्मकवाक्यशेषानुपपत्तिर्विशिष्टविधिस्तु गौरवादेवायुक्तः ।

न च सोमादिवत्पदान्तरस्यानन्यमतित्वं यथा वै श्येन इति वाक्यशेषानुसाराद्गौणत्वेन नामत्वसंभवात् । अवश्यं हि वाक्यशेषस्यैतदेव प्रयोजनं, कथं नाम श्येनशब्दस्य यागनामधेयता विज्ञायेतेति तस्मान्नामधेयम् । एवं यौगिकवाक्यभेदतत्प्रख्यतद्व्यपदेशैश्चतुर्भिर्नामत्वं साधितम् एतैरेव च सर्वत्र नामधेयत्वमिति द्रष्टव्यम् ।

वाजपेयादिशब्दानां नामधेयताऽधिकरणम् ।

सू० नामधेये गुणश्रुतेः स्याद्विधानमिति चेत् ॥ ६ ॥

"वाजपेयेन स्वाराज्यकामो यजेते"ति वाजपेयशब्दः किं गुणविधि? उत कर्मनामधेय? मिति चिन्त्यते । तदर्थमिदं विचार्यते किं यजेतेत्याख्यातं गुणफलाभ्यां तन्त्रेण संबद्धुं क्षमते न वेति सर्वाणि चोद्विदादीनि अत्रोदाहर्त्तव्यानि ।

सर्वेष्वाख्यातशब्देषु तन्त्रसंबन्धसंभवात् ।
मत्वर्थलक्षणा दोषो नास्तीत्याक्षिप्यतेऽधुना ॥
कर्मत्वं करणत्वं वा नाख्यातेनाभिधीयते ।
यागादेः किं तु संबन्धमात्रं साधारणं च तत् ॥

यदि हि यजेतेति यागस्य कर्मत्वमुच्येत ततः साध्यद्वयासमवायाच्च फलं संबध्येत गुण एव तु साधनतया संबध्येत। अथ तु करणत्वमेव यागस्य ततोऽपि करणद्वयासमवायाच्च गुणः संबध्येत फलमेव संबध्येतेति न स्यात्तन्त्रत्वम्, न त्वेतदन्यतरदाख्यातेनोच्यते तद्वाचकशब्दाभावात् । प्रकृत्या हि यागमात्रमुक्तं प्रत्ययेन तु भावना तयोस्तु समभिव्याहारात्संबन्धमात्रं गम्यते । तच्च कर्मत्वकरणत्वयोः साधारणम् । अतश्चोभयरूपसाधारणत्वाद्यागस्य तद्विषयाऽपि भावना यागकर्मिका यागकरणिका चेति द्विरूपा भवति । तत्र यागकर्मिकांशेन गुणसंबन्धं तत्करणिकांशेन फलसंबन्धं भावना लभते तन्त्रेणेति विनैव मत्वर्थलक्षणया यागे गुणविधानमुपपन्नं वाजपेयेन यागं कुर्याद्यागेन च स्वाराज्यमिति, अत्रोच्यते,

"संबन्धमात्रतात्पर्ये नैकस्याप्यन्वयोभवेत् । तद्विशेषपरत्वे तु स्यादन्यलरसङ्कृतिः ।
रूपद्वयपरत्वं तु विना वृत्त्या न लभ्यते ।
तस्मान्नाख्यातशब्दस्य तन्त्रसंबन्धसंभवः" ॥

श्रुत्या लक्षणया वा यत्परः शब्दः स एव शब्दान्तरार्थेन संबध्यते। तद्यद्याख्यातात्संबन्धमात्रं धात्वर्थभावनयोरवगतं ततो नैकस्यापि फलगुणयोस्तदन्वयः स्यात् । फलस्य साधनापेक्षत्वाद्यागकरणिकैव भावना फलसंबन्धमर्हति, तथा गुणस्य साध्यापेक्षत्वाद्यागकर्मिकयैव भावनया संबन्धः । अनिर्द्धारितोभयरूपा तु नैकेनाप्यन्वीयते अयोग्यत्वात्तत्रावश्यं विशेषपरताऽभ्युपगन्तव्या । कथमसत्योः कर्मकरणविभक्त्योस्तत्परता शब्दस्येति चेत्। सामान्यवाचिनी वा षष्ठी किमत्रास्ति येन संबन्धमात्रमवगम्येत, समभिव्याहारादेव लक्षणया संबन्धावगतिरिति चेत्। तत एव समभिव्याहारात्पदान्तरान्वयपर्यालोचनया संबन्धविशेषस्यैव लक्षणया सिद्धेः।

न ह्यसति विशेषपरत्वे पदान्तरान्वयो घटत इत्युक्तम्, तस्माद्विशेषपरता। तत्र कर्मपरत्वे गुणस्यैव संबन्धो न फलस्य, करणपरत्वे तु फलस्यैव न गुणस्येत्यन्यतरविशेषपरत्वेऽन्यतरस्यैव संबन्धात् न तन्त्रेणोभयसंबन्धः, उभयपरत्वं तु नावृत्तिमन्तरेण लभ्यते। न खलु यस्मिन्नेव क्षणे यागं करणात्मनाऽवबुध्यामहे तस्मिन्नेव कर्मात्मनाऽवबोद्धुमीश्महे इति स्वानुभवसिद्धमेतत्। एवं गुणप्रधानतोद्देशोपादानविध्यनुवादत्वकृतमपि वैरूप्यम् अतो न तन्त्रत्वं भावनावदिति चेत्। यथा खलु भावना कर्मकरणत्वोद्देश्योपादेयत्वादिरूपभेदमन्तरेणैवाख्याताभिधेयेनैवात्मना साध्यादिभिः संबध्यते इदमनेनेत्थं कुर्यादिति तथा यागोऽपि कर्मकरणत्वरूपमनादृत्य धात्वभिहितेनैव यागरूपेण गुणफलाभ्यां संबध्यत इति न वैरूप्यमिति नाक्रियात्वात्। भावना हि क्रियारूपा सर्वकारकसाधारणरूपैवेति युक्तं पदवैरूप्येणानेकसंबन्धं लभते, यागस्त्वक्रियारूपः कथमिव कारकरूपैर्गुणादिभिः संबध्यते। तदसौ भावनाद्वारेणैवारुणैकहायनीवत् गुणफलाभ्यां संबध्यत इति युक्तम्, भावनासंबन्धोऽपि चास्य न स्वरूपेण संभवति। कारकं हि क्रियया संबध्यते न वस्तुरूपमतोऽवश्यं कर्मात्मना करणात्मना वा धातुना यागः प्रतिपादनीयः। तत्रान्यतररूपप्रतिपादने अन्यतरेणैव गुणेन फलेन वा संबन्धान्नोभयसंबन्धसिद्धिः। उभयरूपप्रतिपादने वा द्विरुच्चारणे वाक्यभेदः, तस्माच्च तन्त्रसंबन्धः, तेन गुणविधिपक्षे सैव मत्वर्थलक्षणा सोमेन यजेत अरुणया क्रीणातीत्यादि तदाश्रयितव्या वरं वाजपेयं सुराद्रव्यसम्मिन्निति सुराग्रहविधानात् तत्संख्यतया नामधेयत्वम्। ये तु कार्याभिधायिनामेव भावनाऽभिधेया न सर्वाख्यातानामित्याहुस्तैषां काष्ठैः पचतीत्यादिषु भावनाभावाद्धात्वर्थेनैव कारकाणां संबन्धात् क्रियारूपत्वं धात्वर्थस्याभ्युपगन्तव्यम्। अतश्च स्वरूपेणैव धात्वर्थः कारकसंबन्धमर्हतीति विनैवावृत्त्या यत्यभिहितेनैव रूपेण साध्यसाधनाभ्यां संबध्यत इत्यधिकरणमिदमनुपपन्नं स्यात्। न चोद्देश्योपादानादिकृतमपि वैरूप्यम् गुणविशिष्टयागविधानात्।

न च मत्वर्थलक्षणा, कारकविभक्त्यैव श्रुत्या क्रियारूपधात्वर्थसंबन्धसिद्धेः । अतोऽक्रियारूप एव धात्वर्थ इत्याश्रयणीयं, युक्तं चैतत् अन्यथा हि काष्ठैः पचतीतिवत्काष्ठैः पाक इत्यपि संबन्धः स्यात् । तेन यद्यपि धात्वर्थानामेवान्योत्पादानुकूलतया क्रियारूपत्वमस्ति तथाऽपि धातुभिः स्वरूपमभिधीयते प्रतीत्यभावादिति न तत्संबन्धः कारकाणाम् । यथा हि वस्त्वादिशब्दाभिहिताऽपि क्रिया न कारकैः संबध्यते तथा न धात्वभिहिताऽपि। भावनादिशब्दा अपि न तद्रूपस्याभिधायकाः अदूरविप्रकर्षमात्रेण तेषामाख्यातपर्यायत्वम् । आख्यातमेव तद्रूपाभिधायीति तेनैव कारकाणामन्वयः । तेन लडादिष्वपि कारकसंबन्धसिद्ध्यर्थमाख्यातस्य भावनावाचित्वमङ्गीकर्त्तव्यम् । अन्यथा धात्वर्थस्य क्रियात्वापत्तेरधिकरणमिदमनुपपन्नं स्यात् । भवन्मते चासत्यपि प्रत्ययार्थस्य क्रियात्वे धात्वर्थसंबन्धित्वाभ्युपगमात् कारकाणां सुतरां गुणविधित्वमेव स्यात् । अपि च लडादिभिरपि कर्मनामधेयानां करणार्थतया समभिव्याहारोऽनुवादवाक्ये दृश्यते "वाजं वा एषोऽवरुन्धे यो वाजपेयेन यजेत यद्दर्भमयं परिधापयति वाजस्यावरुध्या" इति तद्यदि लडादिषु धात्वर्थ एव क्रिया स्यात् कथं तृतीयान्तनामधेयसंबन्धः, न ह्यात्मैवात्मनः करणं भवति तथा यो राजसूयेन यजते योऽश्वमेधेन यजत इति तथा तमालभत तेनायजत इति लङन्तप्रयोगेऽपि दर्शयितव्यम्, अतो यथा वैदिकवाक्यालोचनेनापूर्वं शब्दार्थं भवन्तोऽनुमन्यन्ते तथा सर्वाख्यातानां करोत्यर्थवचनत्वं विमुक्तलज्जैरनुमन्तव्यम् । तथा हि तत्रैव तृतीयान्तानां नामधेयानां करणसमर्पकतयाऽन्वयो घटते अन्यथा दुर्घटं स्यादित्यास्तां तावत्, तस्मात्सिद्धं नामधेयत्वम् ।

आग्नेयादीमनामताऽधिकरणम् ।

**सू० तद्गुणास्तु विधीयेरन्नविभागाद्विधानार्थे न चेदन्येन शिष्टाः ॥ ६ ॥**

"यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवती"-त्यत्राग्नेयशब्दो गुणविधिः कर्मनामधेयमिति विचारः, तदर्थं च किम-

त्र तत्प्रख्यन्यायोऽस्ति न वेति। तत्रानेकगुणविधाने वाक्यभेदादष्टाकपालद्रव्यकं कर्ममात्रं विधीयते। तस्य तु स्थानक्रमादग्निदैवत्यं याज्यानुवाक्यायुगलमङ्गं संभवति अतो मान्त्रवर्णिकोऽग्निरग्निहोत्रवत्प्राप्त इति तद्वदेव नामधेयत्वम्। उच्यते

"मन्त्राकाङ्क्षा न चात्रास्ति सत्यामपि न योग्यता।
मन्त्रस्य नास्ति वचनमग्निहोत्रेऽस्ति तत् त्रयम्॥

न ह्यष्टाकपालो भवतीत्येतावता पुरुषव्यापारः कश्चिदुक्तो योऽनुष्ठानाय स्मारकं मन्त्रमपेक्षेत सत्यामपि तु मन्त्राकाङ्क्षायां पुरोडाशमात्रविषयस्य व्यापारस्य देवतावाचिमन्त्रसंबन्धायोग्यत्वाच्च संबन्धः। यदि यागत्वं मन्त्रसंबन्धात्प्रागेवावगतं स्यात् ततो भवेद्देवतावाचिमन्त्राऽभिधायिना मन्त्रेण संबन्धः, न तु तदस्ति देवतासंबन्धात्प्राक् प्रत्यक्षयागाश्रवणात्।

न च वाचनिकोमन्त्रो नाघारवद्वलान्मान्त्रवर्णिकी देवता स्यात् अग्निहोत्रे तु होमस्य पुरुषव्यापारस्य श्रवणादस्ति मन्त्राकाङ्क्षा, योग्यश्च होमो देवताऽभिधायिना मन्त्रेण संबन्धुं वाचनिकश्च तत्र मन्त्रः तेन युक्तं मान्त्रवर्णिकदेवताकल्पनम्। इह तु मन्त्रसंबन्धस्याकाङ्क्षायोग्यत्ववशेन कल्प्यत्वात् न प्राग्यागात्सिद्धिरस्तीति देवतासंबन्धेनैव यागोलब्धव्य इत्याग्नेयशब्देन देवता विधातव्या विशिष्टकर्मविधानाच्चार्थादनेकेषामपि गुणानां विधिः सिद्ध्यतीति न वाक्यभेदः॥

बर्हिरादिशब्दानां जातिवाचिताऽधिकरणम्।

सू० बर्हिराज्ययोरसंस्कारे शब्दलाभादतच्छब्दः॥ ७॥

कर्मनामप्रसङ्गात् द्रव्यनाम्नां बर्हिराज्यपुरोडाशशब्दानां संस्कृतेषु शास्त्रस्थैः सर्वैः प्रयुज्यमानानामसंस्कृतेऽपि जातिमात्रे कैश्चिदशास्त्रस्थैः प्रयुक्तानां किं संस्कारनिमित्तता यूपादिवत्? उत जातिवाचिते? ति चिन्त्यते तत्र पील्वादिवदश्वबालादिवच्च शास्त्रस्ययाज्ञिकप्रसिद्धिः सार्वत्रिकी

अशास्त्रस्थम्लेच्छकतिपयप्रसिद्धेर्बलीयसीति संस्कारनिमित्ततेति प्राप्ते ब्रूमः । "अन्वयव्यतिरेकाभ्यामेतेषां जातिवाचिता । व्यभिचाराच्च संस्कारनिमित्तत्वं प्रकल्प्यते" । न हि शास्त्रस्थाः सर्वलोकस्थाश्च जातिमपहाय प्रयुञ्जते । संस्कारत्वमपहाय जातिमात्रे केचित्प्रयुञ्जते तेन जातिमेते न व्यभिचरन्ति, व्यभिचरन्ति तु संस्कारम् अतो जातिवाचिता ।

न च शास्त्रस्थसर्वलोकविरोधः, तत्रापि जातेरनपगमादित्युक्तम् ।

न च जातिमात्रे शास्त्रस्थानामप्रयोगादतद्वचनत्वं, न हि यो यत्र शक्तः स तत्र सर्वैः प्रयोक्तव्यः, तस्माज् जातिवचनाः ॥

प्रोक्षण्यादिपदानां यौगिकत्वाधिकरणम् ।

सू० प्रोक्षणीष्वर्थसंयोगात् ॥ ८ ॥

प्रोक्षणी—शब्दस्यापि पूर्ववत्सर्वलोकशास्त्रस्थप्रयोगात्संस्कारनिमित्तत्वं प्राप्तमपोह्यासंस्कृतेऽपि क्वचित्प्रयोगादव्यभिचाराज् जातिनिमित्तता प्राप्ता, न चावयवार्थता युक्ता समुदायप्रसिद्धेर्बलीयस्त्वात् । अवयवद्वारेण हि विशिष्टार्थप्रतीतिर्वाक्यादिव वाक्यार्थप्रतीतिः पदार्थनिमित्ता लाक्षणिकी, समुदायप्रसिद्धौ तु श्रुत्या प्रतीतिरिति सैव बलीयसी । उच्यते ।

"रूढिर्लब्धात्मिका योगं बाधते न त्वलब्धिका ।
तत्रैव चात्मलाभोऽस्या यत्र नावयवार्थता" ॥

यथा वृत्तेऽश्वकर्णस्य सत्सु त्ववयवार्थेषु तत एवोपपन्नत्वादर्थापत्तिः परिक्षीणा नादृष्टां समुदायस्य शक्तिं कल्पयितुं क्षमा, सन्ति त्ववयवार्थाः । प्रकृष्टोक्षणहेतुत्वात् स्त्रीलिङ्गत्वाच्च तेनात्र नात्मानं लभते रूढिर्वाक्यार्थे वाक्यवत् तस्माद्यौगिकः प्रोक्षणीशब्दः ॥

निर्मन्थ्यशब्दस्य यौगिकत्वाधिकरणम् ।

तथा निर्मन्थ्ये ॥ ९ ॥

टी० निर्मन्थ्येनेष्टकाः पचन्तीति विषयवाक्यान्निर्मन्थ्यशब्दस्यापि शास्त्रस्य सार्वलौकिकप्रयोगात्संस्कारवाचित्वमव्यभिचाराद्वा जातिनिमित्तत्वमुद्भाव्य प्रसिद्धावयवार्थत्वात्पूर्ववद्यौगिकत्वं साधनीयं विशेषस्त्वेतावान्

प्रोक्षणीशब्दो हि सेचनसाधनत्वनिमित्तः । अस्ति चापां सेचनसाधनत्वं सर्वदेति युक्तं यौगिकत्वं निर्मन्थ्यशब्दस्तु मन्थनकर्मत्वनिमित्तः ।

न च निष्पन्नस्याग्नेर्मन्थनकर्मत्वयोग्यताऽस्ति निष्पन्ने चाग्नावयं शब्दो लोके प्रयुज्यते निर्मन्थ्यमानय यक्ष्यामह इति ।

न च भूतपूर्वेण योगेन प्रवृत्तिः प्रतिक्षणमग्निभेदात् अन्यो ह्यग्नि-र्मन्थननिष्पन्नः स तदैव नष्टः, अन्यश्चायं पाकाय नीयते सोऽयमसत्यव-यवार्थे प्रयुज्यमानं संस्कारमिव योगमपि व्यभिचरतीति न तन्निमित्तः; जातिं तु न व्यभिचरतीति तद्वाचित्वमेव युक्तमिति इमां[1] विशेषां शङ्कां निवर्त्तयितुमतिदेशः क्रियते । भूतपूर्वमपि योगं निमित्तीकृत्य संतानाभिप्रा-येण प्रयोगोपपत्तेर्न रूढिरत्यन्तापरिदृष्टा कल्पयितुं शक्यते तस्माद्यौगिकः ॥

अथ वैश्वदेवादिशब्दानां नामधेयत्वाधिकरणम् ।

सू० वैश्वदेवविकल्प इति चेत् ॥ १० ॥

चातुर्मास्येषु प्रथमे पर्वण्यष्टौ यागाः समाम्नाताः आग्नेयमष्टाक-पालं निर्वपति[2] सौम्यं चरुं सावित्रं द्वादशकपालं सारस्वतं चरुं पौष्णं चरुं मारुतं सप्तकपालं वैश्वदेवीमामिक्षां द्यावापृथिव्यमेककपालमिति । तत्संनिधाविदमाम्नायते "वैश्वदेवेन यजेते"ति । तत्र संशयः किं यजे-तेत्यनूदितानां यागानां वैश्वदेवशब्देन गुणविधिः, विश्वेदेवा देवता वि-धीयन्ते किं वा तेषामेव नामधेयमिति "तत्र नामत्वपक्षे स्याद्वाक्यमेतदन-र्थकं देवताऽतो विधेया स्यात् गत्यभावाद्विकल्प्यते"। नामत्वपक्षे हि तस्या-विधेयत्वाद्यागस्य चारूपत्वेनाविधेयत्वात्समस्तवाक्यानर्थक्यप्रसङ्गः, त-स्माद्गुणविधिः, अग्न्याद्यवरुद्धेषु यागेषु देवतान्तरमनवकाशमिति चेत् न विकल्पसंभवात् न ह्यद्यापि सूत्रभाष्यकाराभ्यामुत्पत्तिशिष्टप्राबल्यं कथित-मिति तुल्यबलतां मन्यते ।

---

१ विशेषशङ्कां निवर्तयितुमतिदेश इति युक्तः पाठः ।
२ निर्वपेदिति पुस्तकान्तरपाठः ।

ननु च गुणाधिकरणे बलाबलं वक्ष्यते तेन गतार्थमिति चेत् न । आनर्थक्याधिक्यात् वक्ष्यति हि श्रुतिलिङ्गाधिकरणे दुर्बलस्यापि प्रमाणस्य बाधे यदि किंचिदनर्थकं भवति ततो विपरीतोबाधो भवतीति सदिहाप्यविधीयमाने गुणे समस्तस्यैव वाक्यस्यानर्थक्यप्रसङ्गाद्देवतैव विधातव्या सा च गत्यभावादुत्पत्तिशिष्टाऽप्युत्पत्तिशिष्टैरन्यादिभिर्विकल्पयिष्यते, स्यादेतदेवं यदि वाक्यानर्थक्यं स्यात् तत्त्वनुवादत्वेऽपि समुदायीकरणेनार्थवत् । न हि नानावाक्यचोदितानाम् आग्नेयादीनामेकशब्दोपादानादृते समुदायभावापत्तिरेकसंज्ञासंबन्धो वा लभ्यते । सति त्वनुवादे तेनैव निमित्तेनैकप्रतीत्यारूढानामेकसमुदायत्वमेकनामधेयत्वं च लभ्यते । ततश्च प्राचीनप्रवणे वैश्वदेवेन यजेतेत्येवमादिषु वैश्वदेवनामकस्याग्नेयादिसमुदायस्य ग्रहणं सिद्धं भवति । इतरथा ह्यामिक्षायागस्यैव वैश्वदेवत्वप्रत्यक्षप्रत्यभिज्ञानात्प्राचीनप्रवणादिसंबन्धः स्यात् । नन्वनुवादेऽपि श्रुत्यर्थबलादामिक्षायागस्यैव स्यात् । इतरथा हि वैश्वदेवावैश्वदेवेषु वैश्वदेवशब्दः छत्रिन्यायेन कल्प्यः स्यात्, न आनर्थक्यात् । आमिक्षायागस्यैव देशादिसंबन्धोऽसत्यप्यनुवादे लभ्यते ततश्च तदवस्थमानर्थक्यं स्यात् । वरं चानर्थक्याल्लक्षणाश्रयणं, न चावश्यं लक्षणा । वाक्यशेषदर्शितयोगवशेन श्रुत्यैवाष्टानामपि यागानां नामत्वसंभवात् । एवं हि श्रूयते "यद्विश्वेदेवाः समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्वम्" । तदनेन योगेनाष्टानां नामत्वव्युत्पादनार्थोऽयमनुवादः, सति चानुवादत्वेनाप्यर्थवत्त्वेन देवताविशिष्टयागान्तरमपि शङ्कनीयम् । गौरवात् प्रकृतप्रत्ययबाधाच्च । अष्टौ हवींषीतिचात्यन्तानन्यगतिलिङ्गविरोधात् तस्मात्समुदायानुवादः । तत्र च यष्टृत्वयोगेन वैकदेशदेवतात्वेन वा विश्वेषां देवानां समवायात्तत्प्रख्यन्यायेन नामधेयं वैश्वदेवशब्दः ॥

वैश्वानरेऽष्टत्वाद्यर्थवावादताधिकरणम् ।

**सू० पूर्ववन्तोऽविधानार्थास्तत्सामर्थ्यं समाम्नाये ॥ ११ ॥**

"वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते" इत्युक्त्वा "यदष्टाकपा-

तोभवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति यन्नवकपालस्त्रिवृतैवास्मि"न्नित्येवमादि श्रूयते तत्र विचारः। किमष्टाकपालादिशब्दाः प्रकृतवैश्वानरयागस्य नामधेयम्? उत तत्रैव गुणविधिः? अथ फले गुणविधिः? किं वाऽर्थवादः? इति, तदर्थं च गुणविधिपक्षे सर्वेषामष्टाकपालादीनामुत्पत्तिशिष्टता संभवति? किं वा सर्वेषामुत्पन्नशिष्टता?। अथ वा द्वादशकपाल उत्पत्तिशिष्टः? अन्ये तूत्पन्नशिष्टाः? इति। तत्र वैश्वानरसामानाधिकरण्यादष्टत्वादीनां द्वादशसु प्राप्तेस्तत्प्रख्यन्यायेन नामधेयत्वमाशङ्क्य द्रव्यवचनत्वाद्यागसामानाधिकरण्याभावात्तत्प्रख्यत्वाभावाच्च गुणविधिः। तथा हि यद्यपि द्वादशस्वष्टौ विद्यन्ते तथापि न द्वादशकपालेऽष्टाकपालः समस्ति। योह्यष्टसु कपालेषु संस्कृतः पुरोडाशः सोऽष्टाकपालः।

न च पुरोडाशेषु पुरोडाशान्तरमस्ति।

न च द्वादशकपाल एवाष्टसु संस्कृत इति शक्यते वक्तुम्। अष्टानां तत्र सापेक्षत्वात् अष्टभिश्चतुर्भिश्चासौ संस्कृतो न केवलैरष्टभिः, ततश्चासामर्थ्यात्तद्धितानुपपत्तिः तस्मात्प्राप्त्यभावाच्च तत्प्रख्यत्वम्। अत एव नार्थवादत्वं, न ह्यविहितस्याष्टाकपालस्य स्तुतिः संभवति तस्माद्गुणविधिः। अष्टाकपालद्रव्यमष्टत्वसंख्या वा विधीयते वैश्वानरयागे न चोत्पत्तिशिष्टद्वादशकपालावरोधादविधानम् सर्वेषामुत्पत्तिशिष्टत्वात्। एकं हीदं वाक्यं वैश्वानरं द्वादशकपालमित्यादि यस्मिञ्जात इत्येवमन्तम्। एकोपक्रमावसानत्वात्तन्मध्ये चाष्टत्वादयः श्रुताः सर्वे एवोत्पत्तिशिष्टाः संभवन्ति। यद्वा सर्वे एवोत्पन्नशिष्टा वैश्वानरं द्वादशकपालमिति देवताविशिष्टयागविधानात्। तत्र यदष्टाकपाल इत्यादिभिर्वाक्यान्तरैर्वैकल्पिकद्रव्यविधानम्। उपक्रमे तु द्वादशकपालशब्दो गुणवाक्यप्राप्तद्रव्योपलक्षणार्थो न विवक्षितः। विवक्षितत्वेऽष्टाकपालादीनामानर्थक्यं स्यात् तस्माद्गुणविधिः। उच्यते "उत्पत्तिवाक्यशिष्टत्वं न तावदुपपद्यते। सर्वेषामर्थभेदेन वाक्यं तत्र हि भिद्यते"। अर्थवादत्वे ह्येकवाक्यत्वं सिद्ध्यति। त्वत्पक्षे तु नानागुणविधानेनार्थभेदाद्वाक्यभेदः स्यात्। किंच

निर्वपतिनाऽत्र कर्मविधानम् स च द्वितीयान्तेन द्वादशकपालेनैव संबध्यते न च प्रथमान्तैरष्टाकपालादिभिः, ततश्च द्वादशत्वमुत्पत्तिवाक्यगतत्वादितरेभ्यो वाक्यान्तरविहितेभ्यो बलवत्स्यात्, न चाप्युत्पन्नशिष्टत्वं सर्वेषामुपपत्तिमत् । न द्वादशकपालस्य ह्यविवक्षोपपद्यते वैश्वानरसमानाधिकरणं द्वितीयान्तं द्वादशकपालपदं निर्वपतिसंयुक्तं नाविवक्षितं विना कारणं कल्पयितव्यम् । अष्टत्वादीनामन्यथाऽप्युपपत्तेः । तस्मादुत्पत्तिशिष्टं द्वादशत्वमितीतरेषां कर्मणि विधानासंभवात् ब्रह्मवर्चसादिफलार्थेन्न वैश्वानरयागमाश्रित्याष्टत्वादिविधानम् । काम्यो हि गुण उत्पत्तिशिष्टबाधेनापि शक्यते विधातुमिति प्राप्तेऽभिधीयते । "फलार्थेषु गुणेषु स्याद्वाक्यभेदोऽर्थभेदतः । उपक्रमोपसंहारसाम्याच्चात्रैकवाक्यता" ।"वैश्वानरं द्वादशकपाल"मिति येवेष्टिरुपक्रान्ता तामेव यस्मिन् जात एतामिष्टिं निर्वपतीत्युपसंह्रियमाणामन्ते पश्यन्तो न तन्मध्ये वाक्यान्तरमवगन्तुमीश्महे । फलेभ्यश्च गुणेषु विधीयमानेषु स्फुट एव वाक्यभेदोऽर्थभेदात् तस्मादर्थवादत्वम् । अवयवद्वारेणावयविस्तुतिः द्वादशकपालावयवो हि योऽष्टसु कपालेषु श्रुतः सोऽष्टाकपालपुरोडाशसादृश्याद् गौण्या वृत्त्याऽष्टाकपाल इत्युच्यते स्तोतुं तस्मादर्थवादः ॥

अथ यजमानशब्दस्य प्रस्तरादिस्तुत्यर्थताधिकरणम् ।

सू० तत्सिद्धिः ॥ १२ ॥

"यजमानः प्रस्तरः" यजमान एककपाल इत्यत्र गुणविधिनामधेयार्थवादसंदेहे सामानाधिकरण्यादेकमितरस्य नामधेयं प्रस्तरशब्दो वा यजमानस्य यजमानशब्दो वा प्रस्तरस्येति शङ्का, भिन्नार्थत्वेन तु प्रसिद्धत्वान्नैकमपीतरस्य नामधेयम् । न चार्थान्तरवचनेनार्थान्तरस्य स्तुतिर्भवति अष्टाकपालादिभिस्त्ववयवद्वारेण स्तुतिरुक्ता द्वादशकपालस्य

न च प्रस्तरावयववचनो यजमानशब्दः, येन स्तुतिः स्यात् । तस्मादन्यतरकार्येऽन्यतरविधानाद् गुणविधिः, तत्रापि यजमानस्य मुख्यत्वात्क्रतुवृत्तो यजमानः प्रस्तरशब्दलक्षिते स्रुग्धारणादौ कार्ये विधीयते-

तस्माद् गुणविधिः । नैतदेवं यजमानस्य स्रुग्धारणादौ विनियुक्तस्य स्वप दार्थकरणविरोधात्प्रस्तरवच्च सूक्तवाकेन प्रहरणादेककपालवच्च सर्वहुत-करणात्सर्वतन्त्रपरिलोपः स्यात् तस्मादर्थवादः । कथं परशब्देन परस्य स्तवनं सामानाधिकरण्यं वा गुणादिति ब्रूमः । कथमगुणवचनो गुणमभि-दध्यात् । नाभिदधाति किं तु स्वार्थसंबन्धेन बोधयति । यजमानशब्दो-हि स्वार्थमभिधत्ते स चाभिहितः स्वसमवेतं स्वकार्यकरत्वं संबन्धाद्बो-धयति । तच्च प्रस्तरेऽप्यस्तीति प्रस्तरबोधः । एवं स्वार्थसदृशे तद्गुणशा-लिनि तात्पर्यप्यजमानेयजमान शब्दो गौणः संपद्यते यथा लोके सिंहो देवदत्त इति । न चाध्यारोपितार्थत्वं लोके गौणत्वं तत्संबन्धिनि अर्थान्तरे तदभावात् न सिंहो देवदत्त इति प्रयुञ्जानस्य सिंहत्वाद्यारोपोऽस्ति । शौर्यादिगुणविवक्षयैव प्रयुङ्क्ते । प्रतिपत्तारोऽपि सादृश्यमेव प्रतिपद्यन्ते नाध्यारोपम् । तस्मादभिधेयसदृशे वृत्तिगौणत्वं नाध्यारोपितवचनत्वम् । कथं तर्हि खपुष्पशशविषाणादिशब्दानां गौणत्वं खपुष्पं भवत्सिद्धान्त इत्या-दिषु । न हि तेषां मुख्यमभिधेयमस्ति येन सादृश्यात् गौणत्वं स्यात् । उच्य-ते । यद्येषामभिधेयं नास्ति कथं तस्यान्यत्र तद्रूपारोपः । न हि स्वरूपेणावि-द्यमानमन्यत्रारोपयितुं शक्यते तेन तद्रूपमेवारोपितमङ्गीकर्त्तव्यम् । तत-श्चारोपितस्यापि तस्य मुख्यत्वाद्युक्तमन्यत्र गौणत्वम् । त्वत्पक्षे तु खपुष्प एव खपुष्पशब्दो गौणः स्यात् आरोपितवचनत्वात्, भवत्विति चेत् न सर्वलौकिकविरोधात् । तन्नाध्यारोपो गौणलक्षणम्, स्वार्थसादृश्यं तु भवति खपुष्पादीनामपि मुख्यसादृश्यविवक्षयैव लौकिका गौणं प्रयोगं प्रयु-ञ्जते । यथा ऽकाशस्य पुष्पात्मना शशमूर्द्धवर्त्तिनां चावयवानां च विषा-णात्मना विकारोऽत्यन्ताप्रसिद्धो निष्प्रमाणकः तथा भवत्सिद्धान्त इति । तस्माद्यजमानवत्कार्यसिद्धावभ्यर्हितत्वात्प्रस्तरस्य प्रशंसेयमित्यर्थवादत्वम्

अथाग्नेयादीनां ब्राह्मण-स्तुत्यर्थताऽधिकरणम् ।

सू० ज्ञातिः ॥ १३ ॥

"अग्निर्वै ब्राह्मण" इत्यादिष्वपि पूर्ववद् गुणविधित्वं नामधे-यत्वं चोद्भाव्यार्थवादत्वं साधनीयम् । निमित्तान्तरकथनार्थं तु सूत्रान्त-

रम् । एवमुत्तरसूत्राण्यपि द्रष्टव्यानि । पूर्वत्र हि परशब्दस्य परत्र वृत्तौ तत्सिद्धिकरत्वं निमित्तमिह तु जातिर्जननमित्यर्थः । द्वावपि ह्यग्निब्राह्मणौ सृष्टिकाले ब्रह्मणो मुखाज्जातावित्यर्थवादे संकीर्त्तितौ । अनेन निमित्तेनाग्निशब्दो ब्राह्मणे प्रवर्त्तते स्तोतुम् ।

अथ यूपादिशब्दानां यजमानस्तुत्यर्थताधिकरणम् ।

सू० सारूप्यात् ॥ १४ ॥

आदित्यो यूपो यजमानो यूप इत्यत्रापि त एव पक्षाः । सारूप्यं त्वत्र प्रवृत्तिनिमित्तम् ।

ननु सर्वत्र सारूप्यं गौणत्वनिमित्तं कोऽत्र विशेषः, सत्यम्, इह तु चक्षुर्ग्राह्यत्वं सारूप्यं विवक्षितं चाक्षुषं हि यूपस्य यजमानसारूप्यमूर्द्ध्वत्वम् । आदित्यसारूप्यमञ्जननिमित्तं तेजस्वित्वम् । अतस्तद्द्वारेण यजमानादित्यशब्दाभ्यां यूपः स्तूयते ।

अथापश्वादिशब्दानां गवादिप्रशंसार्थताऽधिकरणम् ।

सू० प्रशंसा ॥ १५ ॥

"अपशवो वा अन्ये गोअश्वेभ्यः पशवो गो अश्वा" इत्यत्र नामधेयत्वमनाशङ्क्यमिति गुणविधित्वेन पूर्वः पक्षः पशुकार्ये गवाश्वव्यतिरिक्तानां प्रतिषेधः प्रतीयते तस्मादर्थवादः प्रशंसानिमित्तस्तु परशब्दस्य पशुव्यतिरिक्तघटादिवचनस्य अपशुशब्दस्य परत्राजादिषु पशुषु प्रयोगः ।

ननु सर्व एव प्रशंसानिमित्तोऽर्थवादः किमत्र विशेषेणोपन्यस्यते सत्यम्, । फलमन्यत्र गुणवादस्य प्रशंसा तत्सिद्ध्यादिना गुणेन शब्दः प्रवृत्तः प्रशंसाफलो भवति इह तु शब्दप्रवृत्तिनिमित्तमपि गुणः प्रशंसैव तथा हि अयमत्रावयवार्थः "अपशवो वा अन्ये गोअश्वेभ्य" इत्यत्रापशव इति नञ्समासगतेन पशुशब्देन प्रथमं गवाश्वगतं प्राशस्त्यमुपादाय पश्चात्तदभावो नञा पश्वन्तरेषु कथ्यते न हि पशुत्वं शक्यं प्रतिषेद्धुम् । अवश्यं च पशुशब्दोपात्तोऽर्थो नञा पश्वन्तरेषु पर्युदसितव्यः । शक्नोति च पशुशब्दाऽयं गवाश्वशब्दाभ्यामेकवाक्यतया संबद्धस्तद्गतं प्राशस्त्यं लक्षयितुम् । तच्च

नञा पर्युदसिष्यते, एतदुक्तं भवति गवाश्वेषु यत्प्राशस्त्यं न तदन्येष्वस्ति । तस्मादप्रशस्तास्ते गवाश्वमेव प्रशस्तमिति । सोऽयं गवाश्वगतप्राशस्त्याभावः पश्वन्तराणाम् अपशूनां च तुल्य इत्यनेनाभिप्रायेण पश्वन्तराण्यपशव इत्युच्यन्ते ।

अथ बाहुल्येन सृष्टिव्यदेशाधिकरणम् । इदमेव च भूमाधिकरणमुच्यते । सू० भूमा ॥ १६ ॥

"सृष्टीरुपदधाती"ति सृष्टिशब्दो गुणविधिरर्थवाद इति संशयः । तत्राख्यातसंबन्धाद्विध्यन्तरशेषत्वाभावादर्थवत्त्वाच्च विधिः । सृष्टिलिङ्गा मन्त्रा उपधानार्थेन विधीयन्ते नैवं लिङ्गप्रकरणाभ्यामेव मन्त्राणां प्राप्तत्वान्न विधिः संभवति तथा सति परिसंख्या स्यात् बहुषु मन्त्रेषु प्रकरणप्राप्तेषु सृष्टिविधानादन्ये परिसंख्यायेरन् । सा च त्रिदोषा परिसंख्यातानां च मन्त्रान्तराणाम् आनर्थक्यं स्यात् । तस्मादुपधानमेव विधेयम् । सृष्टीरिति तु लिङ्गप्राप्तमन्त्रानुवादमात्रं यथा सृष्टमेवावरुद्धे इत्यस्यार्थवादस्योपपत्त्यर्थमिति भाष्याभिप्रायः । केचित्त्वयं मन्त्रविधिरेवेति समर्थयन्ते न ह्येकया स्तुवत इत्यादीनामुपधानैकान्तिकं लिङ्गमस्ति येन प्राप्तिः स्यात् । साधारणलिङ्गत्वाद्धि ग्रहणासादनादिष्वपि इष्टकानां प्राप्नुयुः, तत्रास्ति विधेरवकाशः सत्यामप्युपधानप्राप्तौ मध्यमचितिसंबन्धार्थमपि प्रत्यक्षविधानमर्थवद्भविष्यति । वक्ष्यति हि मध्यमायां तु वचनाद्ब्राह्मणवत्य इति, न चास्मिन्सूत्रेऽवश्यं सृष्टीनामविधानमादर्तव्यम् । गुणवृत्तिनिमित्तकथनमात्रपरत्वात्कः पुनरत्र गुणः? सृष्टिसमुदाये हि भूमाऽस्ति सृष्टसृष्टिसमुदाये हि सृष्टिभूमाऽस्ति सृष्टसृष्टिसमुदाये कया स्तुवतेत्यनुवाके सृष्टिभूमाऽस्तीत्यनेन सादृश्येन सृष्टिशब्दः ।

अथ प्राणभृदादिशब्दानां स्तुत्यर्थताऽधिकरणम् । सू० लिङ्गसमवायात् ॥ १७ ॥

प्राणभृत उपदधातीत्यत्रापि पूर्ववदेव मन्त्रोपादानमर्थवादार्थं विध्यर्थं वेति वक्तव्यम् । निमित्तान्तरकथनार्थं तु सूत्रान्तरम्, तत्र हि भूम्ना शब्दप्रवृत्तिः, इह तल्लिङ्गवतामल्पत्वात्तत्समवायमात्रादेव शब्दप्रवृत्तिः । प्राणभृद्वहणे हि प्राणभृत्समवायोऽस्ति । प्राणभृदप्राणभृद्वणेऽपीत्यनेन सादृश्येन प्राणभृच्छब्दः । "तत्सिद्धिजातिसारूप्यप्रशंसालिङ्गभूमभिः । षड्भिः सर्वत्र शब्दानां गौणी वृत्तिःप्रकल्पिता" ॥

अथ वाक्यशेषेण संदिग्धार्थनिरूपणाधिकरणम् ।

सू० संधिग्धेषु वाक्यशेषात् ॥ १८ ॥

"अक्ताः शर्करा उपदधाति" "तेजो वै घृत"मित्यत्र संशयः । घृततैलवसानामन्यतममेवाञ्जनं कर्त्तव्यम्? उत घृतेनैवे? ति तदर्थं किं विध्युद्देशार्थवादयोर्विरोधोऽस्ति न वे? ति । स्तावकत्वेन प्रामाण्यमर्थवादस्योक्तमिह संदिग्धनिर्णयेऽपि क्वचित्प्रामाण्यं प्रतिपाद्यत इति सङ्गतिः । तत्राक्ता इति शब्देन येन केनचिदञ्जनम् प्रतीयते विधिश्चायं बलवानर्थवादतः । "प्राधान्यात्प्रक्रमस्थत्वादप्राप्तविषयत्वतः । तद्बाधाद् घृतशब्दोऽयं लक्षणार्थो भविष्यति" । प्रधानं विधिरङ्गं स्तुतिः । न चाङ्गेन प्रधानं बाधितुं शक्यम् उपक्रमस्थत्वाच्चासंजातविरोधो विधिर्निर्विघ्नमेव स्वार्थं बोधयन्नुपसंहारस्थं स्वविरुद्धमर्थवादं लक्षणां नयति । विधिश्चाप्राप्तविषयत्वाद्यथाश्रुत एव नेतव्यः । अर्थवादस्त्वनुवादत्वाल्लक्षणयाऽपि नीयमानो नातीव दुष्यति । विधेश्च यत्किंचिदञ्जनसाधनं गम्यत इति तेन बाधितो घृतशब्दोऽर्थवादस्थोऽञ्जनसमर्थद्रव्यमात्रलक्षणार्थो भविष्यति । तस्मात् येन केनचिदञ्जनमिति प्रसिद्धे ब्रूमः । "विधेर्यदि विरोधः स्याद्भवेदेवं न चास्त्यसौ । न हि सामान्यशब्दोऽयं विशेषेण विरुध्यते" । सामान्यं हि विधिना बोधितम् । तच्च सर्ववि-

शेषेषु कृत्स्नमस्तीति न विशेषोपादाने तस्य बाधः। अवश्यं च यः कश्चिद्विशेष उपादातव्यो निर्विशेषसामान्येन व्यवहाराभावत्। तत्रासति विशेषप्रमाणे यः कश्चित् स्यात्। अस्ति त्वत्र घृतस्य प्रमाणमर्थवादः। स हि घृतं स्तुवन्विधेयस्य स्तुत्ययोगाद्विधेयत्वं गमयति, तस्मात् घृतेनैवाञ्जनम्।

अथ सामर्थ्यानुसारेण अव्यवस्थितानां व्यवस्थाऽधिकरणम्।

सू॰ अर्थाद्वा कल्पनैकदेशत्वात् ॥ १९ ॥

विधेरिदानीं प्रतिपादितप्रामाण्यस्य संदिग्धार्थनिर्णयेऽपि सामर्थ्यसनाथस्य प्रामाण्यं प्रतिपाद्यते। "स्रुवेणावद्यति स्वधितिनाऽवद्यति हस्तेनावद्यतीत्यवदानसाधनत्वेन स्रुवादीनि विहितानि। अवदानं च द्रवाणामाज्यादीनामसंहतानां च पुरोडाशादीनां मांसादीनां चास्ति। तत्र किमविशेषेण स्रुवादीनि भवेयुः,? यथासामर्थ्यं वेति तथाऽञ्जलिना सक्तून् प्रदाव्ये जुहुयादिति किं देवताप्रसादादिप्रार्थनायामिव हस्तसंयोगमात्रमञ्जलिहोमे यथासमर्थ्ये व्याकोश एव वा। तत्र विशेषाश्रवणादनियम इति प्रतिभायामुत्तरमुच्यते अशक्यार्थविध्यसंभवादवश्यं विधायकस्य शक्तिः सहकारिणीत्यङ्गीकर्त्तव्यं तस्माच्छक्तिसहायो विधिरेव यथासामर्थ्यं विधेयं व्यवस्थापयति द्रवादिषु स्रुवादीनां व्याकोशस्य च सक्तुषु अर्थापत्तिवशात्तस्माद् व्यवस्थेति व्यवस्थितम्। "नामार्थवादविधिमन्त्रयुतश्च वेदस्तद्वत्स्मृतेश्च चरितं च निरस्तदोषम्। धर्मप्रमाणमिह सिद्धमतः परं तद्भेदप्रकारविनियोगफलादिचिन्ता ॥

इति श्रीपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां, प्रथमस्याध्यायस्य चतुर्थः पादः ॥

समाप्तश्च प्रथमोऽध्यायः ॥

# शास्त्रदीपिका ।

## अथ द्वितीयाध्याय आरभ्यते ।

श्रीगणेशाय नमः ।

अथापूर्वस्य आख्यात-पदप्रांतपाद्यत्वाधिकरणम् ।

सू० भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेतैष ह्यर्थोऽभिधीयते ॥ १ ॥

प्रथमेऽध्याये धर्मस्य प्रमाणं निरूपितं, प्रथमे पादे चोदनाया, अनन्तरं त्वर्थवादमन्त्रनामधेयस्मृत्याचाराणां, वाक्यशेषसामर्थ्ययोश्च संदिग्धार्थनिर्णये प्रामाण्यमुक्तम् । एवं समस्तेनाध्यायेन धर्मप्रमाणनिरूपणात्कथंलक्षणको धर्म इत्ययमंशो निरूपितः[1], तद्विचारादेव तत्प्रमेयस्य ज्योतिष्टोमाष्टकादेर्धर्मत्वावधारणात्को ऽयं धर्म इत्ययमंशो विचारितो भवति । वेदादिप्रमेयो धर्म इत्येतावत्यवबोधितेऽपि न कार्त्स्न्येन धर्मस्वरूपमवगतं भवति । भेदलक्षणेन त्वियन्ति धर्मस्वरूपाणीत्यवधारणान्निरवशेषस्वरूपावगतिसिद्धिः । अतो भेदलक्षणमपि को धर्म इत्यस्मिन्नंशेऽन्तर्गतं भवति । कान्यस्य साधनानीति तु शेषलक्षणे विचारयिष्यते । सर्वं च भेदाभेदशेषशेष्या[2]दिप्रमाणबलेन निरूपणीयमिति प्रमाणलक्षणात्पश्चात्प्रारम्भः ॥

ननु वेदार्थस्यैवेह भेदाभेदादि शास्त्रे चिन्त्यते तत्र तु वेदप्रामाण्यमेवोपयुज्यते, स्मृत्यादिप्रामाण्यस्य तु न तत्रोपयोगं पश्यामः, नैवम् । धर्मस्यैवेह भेदाभेदादिविचारः शास्त्रे चिन्त्य[3]ते श्रौतस्य स्मार्त्तस्य वा, न श्रौतस्यैव अष्टकादिष्वपि शब्दान्तरादिलक्षणस्य भेदस्य श्रुत्यादिलक्षणस्य च शेषिशेषभावस्य प्रयुक्त्यादेश्च तुल्यत्वात् । अपि चाहत्यैव शास्त्रे स्मृत्याचारगम्यधर्मविचारः प्रदेशेषु करिष्यते द्रव्यार्ज्जननियमः क्रत्वर्थः पुरुषार्थ इति, तथा प्रजापतिव्रतानि, तथा तस्मिंस्तु शिष्यमाणानि जननेन प्रवर्त्तरन् । अपि वा वेदतुल्यत्वादुपायेन प्रवर्त्तरन् । आचाराद्गृह्यमाणेषु तथा स्या-

---

१ विचारित इति तु पुस्तकान्तरपाठो नातिशायकः ।
२ भेदाभेदशेषशेषिभावादिप्रमाणबलेनेति पाठान्तरम् ।
३ करिष्यते इति पुस्तकान्तरपाठस्तु युक्तोभाति ।

दित्यादिभिः। तस्माद्धर्म इत्येव शास्त्रविषयो न वेदार्थ इति, तथा च "दर्शितम्। "धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजन"मिति तथा चाथातो धर्मजिज्ञासा, चोदनालक्षणो धर्म, इति सूत्रं को धर्मः कथंलक्षण इत्यादि भाष्यं च न कुक्कुविकृतिरिव वेदार्थपरं व्याख्येयम्। अतोधर्मप्रमाणत्वेन स्मृत्यादिनिरूपणं नानुपयोगीति सिद्धम्। तत्र भेदपूर्वकत्वाच्छेषलक्षणादेः प्रथमं तावद्भेदलक्षणमारभ्यते शब्दान्तरादिभिः। तत्र शब्दान्तराभ्यासनामधेयगुणप्रकरणान्युत्पत्तिपरतां विधेर्बोधयन्ति[1]। उत्पन्नस्य चोत्पत्त्यन्तराभा[2]वाद्वाक्यान्तरविहितात्कर्मणः स्ववाक्यविषयस्य भेदं बोधयन्ति। संख्या त्वेषामेवान्यतमेनोत्पत्तिपरत्वे विधेरवगते सत्यनेकोत्पत्तिपरतां विधेर्बोधयन्ती स्ववाक्यविधेयानामेव कर्मणां मिथोभेदमावहतीति वेदितव्यम्। तदिह धात्वर्थभावनापूर्वाणां त्रयाणामपि भेदः प्रतिपादयिष्यते। तत्रापूर्वस्याशब्दार्थत्वात् स्वरूपेण भेदनिरूपणाशक्तेर्भावनाभेदनानुनिष्पादी भेदस्तद्भेदश्च करणीभूतधात्वर्थभेदद्वारेण वक्ष्यते। तच्च धात्वर्थस्य करणत्वे सति वक्तुं शक्यते नान्यथेति प्रस्तुतधात्वर्थभेदानुनिष्पाद्यपूर्वभेदानुसारसिद्ध्यर्थमाद्यमधिकरणमुपोद्घातत्वेनाध्यायस्यारभ्यते। किमिहोदाहरणं "श्येनेनाभिचरन्यजेत" "चित्रया यजेत पशुकामः 'सोमेन' यजेत" "हिरण्यमात्रेयाय ददाति" "हिरण्यं भार्यं" समिधो यजति दशापवित्रेण ग्रहं संमार्ष्टि यद्येनमार्त्विज्याद्वृतं सन्तं निर्हरेरन्नाग्नीध्रे जुहुयाद्दशहोतारं चतुर्गृहीतेनाज्येन। यः कामयेत वीरो म आजायेतेति स चतुर्होतारं जुहुयादित्यादि यावत्किंचिददृष्टार्थं विधानं क्रत्वर्थं पुरुषार्थं काम्यं नैमित्तिकं वा द्रव्योपपदं वा नामोपपदं वा गुणोपपदं वा तत्सर्वमुदाहरणम्। केचित्त्वधिकारचोदना एवोदाहरन्ति। तासु च सर्वासु विरुद्धत्रिकद्वयापत्त्या नामैवोपपदम्। अतो नामोपपदान्येवोदाहरणमित्याहुः, तदयुक्तम्। तथाहि यद्यपि तावदधिकारचोदना एवोदाहरणं तथाऽपि न तासु सर्वासु नामे-

---

[1] बोधयन्ति सन्ति इति पुस्तकान्तरपाठो नातिशायकः।

[2] उत्पन्नस्योत्पत्त्ययोगादिति पाठान्तरम्।

वोपपदम् । यदेव हि यौगिकवाक्यभेदतत्प्रख्यतद्व्यपदेशयुक्तं तदेव नामधेयम्, इतरत्त्वधिकारावगतमपि गुणार्थमेव । यथा "यः कामयते वीरोमआजायेतेति स चतुर्होतारं जुहुयादिति चतुर्होतृशब्दोमन्त्रवचनो न-नामधेयं तथा यज्ञेनमार्त्विज्याद्वृन्तं सन्तं निर्हरेरन्नाग्नीध्रे जुहुयाच्चतुर्गृहीतेनाज्येनेति नैमित्तिकाधिकारगतमाज्यपदं न नामधेयम् ॥

न च विरुद्धत्रिकद्वयापत्तिः । मत्वर्थलक्षणया विशिष्टविधानसंभवात् । वरं च लक्षणाऽप्रसिद्धार्थकल्पनातः, इतरथा हि सोमेन यजेतेत्यपि सोमपदं नामधेयं स्यात्, उत्पत्तिवाक्येऽपि गुणपक्षे लक्षणाऽस्तीत्यभ्यासाधिकरणे स्वयमेव निबन्धनकारेणोक्तं "यागविधानेनेत्यादिना । युक्तं चैतत् तथाहि तत्राऽपि हि यद्यपि प्रथममपूर्वान्तरमप्रतिपन्नं तथाऽपि प्रत्ययेन तावत्तदेवाभिधीयते । तत्करणं च याग इति दोषसाम्यान्नामत्वं स्यात् । न चैवं[1] युक्तं । किंच "सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः" "वायव्यं श्वेतमालभेतेति अधिकारचोदनेयम् । अत्र चरुं श्वेतमिति द्रव्यगुणशब्दौ सौर्यादिपदं भावार्थं नियोगविषय इति निबन्धनकारः शब्दानुबन्धवादी मन्यते तेन तदप्यत्रोदाहरणम् । भावार्थयुक्ता[2]र्थचोदनात्वाच्च । तथा हिरण्यं भार्यमित्यक्रत्वर्थत्वाद्विश्वजिदादिवदुदाहरणम् अत्र चरुश्वेतहिरण्यसौर्यशब्दा द्रव्यगुणवचना न नामधेयम् । अतो नामोपपादान्येवोदाहरणमित्ययुक्तमेतत् । भाष्यविरुद्धं च भाष्यकारो हि भावार्थाधिकरणस्य प्रयोजनमभिदधानः सिद्धान्ते श्रुतद्रव्यापचारे प्रतिनिध्युपादानं प्रयोजनमाह, नामधेयत्वे हि कस्य प्रतिनिधिः स्यात् । न चावश्यमधिकारचोदना एवोदाहरणम् "सोमेन यजेत" "हिरण्यं ददाती"त्यादिष्वपि कुतोऽपूर्वमिति विचारसंभवात् । यद्यपि तेषु प्रधानापूर्वानुवादशङ्कायां न प्रथममपूर्वान्तरं प्रतीयते तथाऽपि पश्चादपि तावत्प्रतीयमानं किं विषयं प्रत्येतु न्याय्यमिति संभवति चिन्ता ।

१ न चैवमिष्टम् इति पुस्तकान्तरपाठः ।

२ भावार्थयुक्ताधिकारचोदनात्वादिति पाठान्तरम् ।

ननु प[1]श्चात्कारकविशिष्टस्य कर्मणो ग्राहकगृहीतस्यावान्तरव्यापारत्वेन कल्प्यमानं भावार्थविषयत्वेनैव निर्णीतमिति न विचारावसरः। स्यादेवं यदि कर्मैव ग्राहकेण गृह्यत इति प्रागस्मादधिका[2]रात्सिद्धं स्यात् न तु तत्सिद्धम्, अत्रैव ह्येतद्विचार्यते। किं सर्वाणि पदानि क्रियाकारकसंबन्धानादरेण अपूर्वस्य विषयीभवन्ति? उत क्रियाकारकसंबन्धापरित्यागेनेतरपदविशेषितमेकमेव पदम्? ॥ यद्यप्येकं तदाऽपि द्रव्यादिपदं भावार्थविशेषितं विपरीतं वे?ति। तत्र क्रियारकसंबन्धावगमात्प्रागपि द्रव्यगुणयोर्भावार्थकारकत्वेन श्रवणादन्योत्पादकस्वभा[3]वाच्च भावार्थादेवापूर्वमिति स्थिते चास्मिन् क्रियाकारकसंबन्धापरित्यागन्याये ग्राहकग्रहणमपि भावार्थस्यैव भवति। तस्यान्योत्पादकस्वभावत्वात्कारकत्वाच्च द्रव्यगुणयोः अतश्चापूर्वमपि तत एव स्यात्। असति तु तस्मिन् न्याये हिरण्यं ददातिश्च मिथःसंबन्धानादरेण ग्राहकेण गृह्येयाताम्। दानोपसर्जनं वा हिरण्यम्। ततश्चापूर्वमपि पश्चात्कल्प्यमानमुभयविषयं हिरण्यविषयं वा स्यात् तस्मात्तत्रापि भावार्थविषयत्वमपूर्वस्यैतदधिकरणाधीनमिति युक्तमुदाहरणत्वम्। तस्माददृष्टार्थं सर्वमत्रोदाहरणम्। तत्र संशयः। किं सर्वाणि पदानि प्रत्येकमपूर्वं प्रतिपादयन्ति? उतैक-मिति। तदर्थमिदं विचार्यते किं सर्वेषामर्थाः फलभावनायां करण? मुतैकस्यैव करणत्वम् इतरे च तदर्था? इति। यच्च फलसाधनं ततोऽपूर्वं कल्प्यते अतो यस्तस्य वाच[4]कत्वेनापूर्वं प्रतिपादितं भवतीति। ततश्च सर्वेषां फलसाधनत्वे सर्वेभ्योऽपूर्वमेकस्य तु साधनत्वे तत एवापूर्वमिति। तत्र प्रधानसंबन्धलाभादवैरूप्याच्च सर्वेषां फलेन संबन्धः। अन्यथा हि यत्फलसाधनं तस्य फलं प्रत्युपादानविधानगुणभावात् इतरत्तु प्रत्युद्देशानुवादप्रधानत्वाद्वैरूप्यं, मत्वर्थलक्षणा वा स्यात्। तस्मात्सर्वेषां फलसंबन्ध इति प्राप्ते ऽभिधीयते।

---

१ तत्पश्चादिति,पुस्तकान्तरम्।

२ प्रागस्मादधिकरणादिति तु युक्तः पाठः।

३ स्वभावत्वाच्चेति पाठान्तरम्।

४ यस्तस्य वाचकस्तेनापूर्वमिति युक्तः पाठः।

अपूर्वस्य तावददृष्टत्वादेककल्पनयैवोपपन्ने वाक्ये नानेककल्पनमुपपत्तिमत् तस्मादेकमेव फलसाधनमितरत्तु तदर्थमिति ।

न च वैरूप्यं, श्येनादीनां नामत्वसंभवात् सोमादिषु मत्वर्थलक्षणाश्रयणात् । वरं चादृष्टकल्पनातो लक्षणा तस्मादेकमपूर्वं यद्येकं तदा संदेहः । किं भावशब्देभ्यः ? उत द्रव्यगुणशब्देभ्य ? इति तदर्थं च किं भावार्थाः फलेन संबध्यन्ते ? किं वा द्रव्यगुणशब्दार्था ? इति । नन्वनियमेन यत्किंचिद्भवतु न त्ववश्यं नियन्तव्यम् । उच्यते नानियमो वाक्येन बोधयितुं शक्यते तस्यैकरूप एवार्थः । न हि तत्कदाचिद्यागस्य फलवत्त्वमितरस्य च तादर्थ्यं प्रतिपादयति कदाचिच्च विपर्ययम्, वचनव्यक्तिभेदात् । तस्मादेकरूप एव वाक्यार्थः स किं रूप इति चिन्तयितव्यम् । तत्रानध्यवसायमेव केचित्पूर्वपक्षमाहुः । तदयुक्तम्, तथा ह्यप्रामाण्यमेव स्यात् तच्चायुक्तम् । तथा सति हि प्रमाणलक्षण एवायं विचारः स्यात् न त्विह सिद्धत्वात्प्रामाण्यस्य ।

ननु पक्षद्वयेऽप्यनुष्ठानस्यैकरूपत्वेनाध्यवसितत्वान्नाप्रामाण्यं, मूर्खप्रलपितमेतत् । यदि पक्षद्वयेऽपि न कश्चिदनुष्ठाने विशेषः किमर्थमधिकरणम्[१] । अपि च पूर्वपक्षे श्येनादीनां गुणविधित्वात् श्येनद्रव्येण यष्टव्यम् । सिद्धान्ते तु नामधेयत्वात्सोमेन यष्टव्यमित्यस्ति विशेषः । यथाऽऽह भाष्यकारः "स्थित एतस्मिन्नधिकरणे गुणविधिर्नामधेयमिति विचारः" इति । यत्तु न सिद्धान्तेऽपि नामधेयं "सोमेन यजेते"ति तत्र प्रतिनिधिसद्भावः प्रयोजनम् । तदप्याह भाष्यकारः । यदि द्रव्यगुणशब्दा अपूर्वं बोधयन्ति द्रव्यगुणापचारे न प्रतिनिधिरुपादातव्यो यथा पूर्वपक्षः, यथा तर्हि सिद्धान्तः । द्रव्यं गुणं वा प्रतिनिधाय प्रयोगोऽनुष्ठातव्य इति तस्मात्प्रसज्यत एवाप्रामाण्यमिति नैवं पूर्वः पक्षः । किंतु द्रव्यादिभ्यो ऽपूर्वं त एव फलसाधनमिति । कुतः, फलं हि साध्यमानत्वात्सिद्धं साधनमिच्छति, द्रव्यादि च तथा यागः स्वयं साध्यो न साधनम् । श्येनेनाभिचरन् यजेतेत्यादौ फलं समिधो यजतीत्यादौ च फलवदुपकारः साध्यरूपत्वात्सिद्धरूपं साधनम-

पेक्षते न साध्यान्तरम्। द्रव्यगुणौ च सिद्धरूपत्वात्तदाकाङ्क्षां पूरयितुं समर्थौ याजादयस्तु स्वयमेव साध्यत्वान्न साधनत्वयोग्याः। तस्मात् द्रव्यादिभ्यः फलम्। यत्तु भाष्यकारेणाविशेषेणेत्युक्तं तच्छब्दतो विशेषानवगमाद्वस्तु-स्वभावेन द्रव्यादिभ्य एव फलं युक्तमित्येतदभिप्रायम्। तस्माद्द्रव्यादेरेव-फलभावनायाः करणमिति प्राप्ते ऽभिधीयते। "भावनैव हि भाव्येन फले-नान्वेतुमर्हति। धात्वर्थः करणं तस्यां लाघवात्सन्निकर्षतः" फलमपि कारकं करणमपि, न हि कारकाणि मिथःसंबध्यन्ते। किंतु क्रियया, सा चेह प्रत्ययवाच्या फलभावना, तेन तयैव फलं संबध्यते तद्द्वारेणैव करणस्य फलसंबन्धः। तस्यां च धात्वर्थस्यैव करणत्वं युक्तम्। कल्पनालाघवात्तस्मिन् हि फलवति अपूर्वसाधने कल्पिते द्रव्यादेस्तन्निर्वृत्तिर्दृष्टमेव प्रयोजनं, द्रव्यादिभ्यस्त्वपूर्वे कल्प्यमाने धात्वर्थोऽसिद्धरूपः सिद्धरूपस्य द्रव्यादेर्न दृष्टमुपकारं शक्नोति कर्त्तुमिति ततोऽप्यपरमदृष्टं कल्पनीयम्। सन्निकृष्टश्च प्रकृत्युपात्तो धात्वर्थः प्रत्ययवाच्यया भावनया पदश्रुत्या संबध्यते, द्रव्यादि तु पदान्तरेणोपात्तं वाक्येन श्रुतिश्च वाक्याद्बलीयसी। साध्यरूपोऽपि धात्वर्थः स्वसाधननिष्पादितः सन् शक्नोति फलं साधयितुम्, तस्मात्स एव भावनायाः करणम्। का पुनरियं धात्वर्थातिरेकिणी भावना नाम यस्यां धात्वर्थः करणम्?। कर्त्तृव्यापार इति चेत्। नन्वसौ पचावधिश्रयणा-दिर्यजौ च मानसस्त्यागस्तद्धेतुर्वा प्रयत्नः सङ्कल्पो वा गतौ चलनं ते चाधिश्रयणत्यागप्रयत्नसंकल्पचलनादयो धात्वर्था एवेति न धात्वर्थातिरे-किणीं भावनामुपलभामहे। प्रयत्नो भावनेति चेत्। रथो गच्छतीत्यादौ व्यभिचारः। स्पन्द इति चेन् यजेतेत्येवमादिषु आत्मकर्त्तृकेषु व्यभिचारः। उभयसाधारणमुदासीनं[1] त्वविच्छेदसामान्यं भावनेति चेत् शब्दादिष्वभाव-प्रसङ्गः। न हि शब्दस्य विभोरचेतनस्य प्रयत्नः परिस्पन्दो वाऽस्ति। तत्राभिधा-भावनामाहुरन्यामेव लिङादयः। अर्थात्मभावना त्वन्या सर्वाख्यातेषु गम्यत इत्यादिविरोधः। तस्माद्वक्तव्यं भावनारूपम्। किमत्रोच्यते। उक्तं ह्येतदा-

१ उदासीनत्वविच्छेदसामान्यमिति पा०।

चार्यैः । "धात्वर्थव्यतिरेकेण यद्यप्येषा न लक्ष्यते । तथाऽपि सर्वसामान्यरूपेणान्यावगम्यत" इति । विवृतं चैतन्मण्डनेन कथ्यमानाद्रूपभेदाद्द्विधा धात्वर्थसङ्गतिः । अन्योत्पादानुकूलात्मा भावना किं प्रदुष्यतीति । एतदुक्तं भवति । सत्यं न धात्वर्थातिरेकिणी भावना धात्वर्थानामेव तु द्वे रूपे पाको यागः प्रयत्नः संकल्पश्चलनं छेदनमभिधानं छेदनमिति । प्रातिस्विकं धात्वभिधेयम् एकमक्रियात्मकं सिद्धस्वभावम् । अपरं तु सर्वधात्वर्थानुयायिकरोतिप्रत्ययवेद्यं क्रियात्मकं साध्यस्वभावमन्योत्पादानुकूलात्मकमाख्याताभिधेयं । तथाहि यः स्पन्दते यो यजते प्रयतते चलति अभिदधाति ते सर्वे करोतिप्रत्ययमनुभवन्ति भिन्नेष्वपि धात्वर्थेषु । तच्च रूपमुत्पाद्यवस्त्वन्तरकर्मकमेव सर्वदा प्रतीयते । तदेव च भवितुः प्रयोजकव्यापारो भावनेत्युच्यते । तच्चाख्यातेष्ववगम्यमानत्वात्तदभावे पाकादावनगमादाख्याताभिधेयमाश्रीयते । येऽपि प्रयत्नं भावनामाहुः ये च स्पन्दं ये चोभयं तेऽपि स्वरूपेण तेषां भावनात्वमाहुः किं त्वन्योत्पादानुकूलत्वं रूपं तच्च सर्वधात्वर्थानामस्तीति सर्वेव्याप्येव भावनारूपमङ्गीकर्त्तव्यं । तस्मिंश्च क्रियारूपे प्रकृत्युपात्तोयागादिः कदाचित्कर्मत्वेन संबध्यते पाकं करोति यागं करोतीति कदाचित्करणत्वेन यागेन स्वर्गं करोति पाकेनौदनमिति यथा विवक्षितम् । तद्यदा यागादेः कर्मत्वेन सङ्गतिस्तदा तद्धेतुभूतः प्रयत्नः संकल्पादिर्वा धात्वन्तरार्थोऽपि यजेतेत्यत्र पदे यागकृतिरित्येवंरूपेणाख्याताभिधेयतां भजते । संकल्पादिकं तु विशेषरूपं धात्वन्तराभिधेयं प्रमाणान्तरवेद्यं नाख्यातेन स्पृश्यते यदा तु विधिवशात् करणत्वेन यागस्य सङ्गतिः, कर्मत्वं तु स्वर्गादेर्दर्शपूर्णमासयागेन स्वर्गं कुर्यादिति तदा न यागस्य हेतुभूतैव कृतिराख्यातेनोच्यते यागस्य कर्मत्वाभावात् फलस्यैव कर्मत्वात्तत्कर्मिका कृतिराख्यातेनोच्यते यागस्तु करणम् । अतो यदवस्थो यागः स्वर्गं संपादयति तदवस्थो यागो येन व्यापारेण संपद्यते स व्यापारः स्वर्गकृतिरित्येवंरूपेणाख्याताभिधेयो भवति तस्यापि व्यापारस्य विशेषरूपं प्रमाणान्तरवेद्यं नाख्यातेन स्पृश्यते यागेन स्वर्गं कुर्यादित्यनेन ह्येताव-

रवगम्यते यथा यागात्स्वर्गो भवति तथा व्याप्रियेतेति तत्र कथं व्यापरि-
तव्यं कोऽसौ व्यापार इति व्यापारविशेषात्मककथंभावापेक्षायामग्न्यन्वाधा-
नप्रयाजावघातादिभिरुपकारसंपादनं शास्त्रान्तरैरवगम्यते यागस्वरूपस्य च
संपादनमर्थापत्त्या । न ह्यनिष्पादितस्य करणत्वमुपपद्यते तेन स्वरूपसं-
पादनं प्रयाजादिभिश्चोपकारसंपादनमिति सकलोऽयं व्यापारः स्वर्गकृति-
रित्यनेनाकारेणाख्यातेनाभिधीयते, विशेषरूपं च प्रयाजादिशास्त्रान्त-
रावगम्यत्तेन सकलोऽयं प्रयाजादिव्यापारः फलभावनाया एव प्रपञ्चः ।
तेन च व्यापारेण फलसाधनात्मना संपद्यमानो यागः करणम्, एतदेव हि
करणानां करणत्वं यदुत फलोद्देशप्रवृत्तकर्तृव्यापारेण फलसाधनात्मना
संपत्तिः परशोरिवोद्यमननिपतनाभ्यां द्वैधीभावसाधनतया तत्सिद्धा धात्व-
र्थातिरिक्ता भावना । नन्वेवं धात्वर्थसामान्यमेव भावना स्यात् नेति ब्रू-
मः। विलक्षणत्वात्प्रतिधात्वर्थम् अन्यद्धि पाकस्यौदनं प्रत्यानुकूल्यम् अन्यच्च
चलनादेः संयोगादि प्रति फलभेदात् । एकात्मकत्वे हि तद्रूपस्य फलभेदो
न स्यात् भिन्नेषु रूपेषु भावनात्वसामान्यमनुवर्त्तते यागादिष्विव करणत्व-
सामान्यम् । अयं चापरो विशेषः, यतो धातोर्यज्यादिकात्प्रत्यय उत्पन्न-
स्ततो धात्वर्थान्तरं संकल्पादिकं तत्कृतिरूपेण प्रत्ययेनोच्यते न यजिरेव ।
तत्तु कामं धात्वन्तरेणोच्यताम् । इह तावदेकान्ततः प्रत्ययार्थः, यजिस्तु
तत्र कर्म करणं वा तथा संकल्पयतीत्यत्रापि संकल्पादर्थान्तरमेव भावना
सङ्कल्पस्तु कर्म करणं वा तेन यतो धातोः प्रत्यय उत्पन्नस्तदर्थव्यतिरिक्तैव
भावना तत्कर्मिका तत्करणिका वा तद्गतेन प्रत्ययेनोच्यते न तु तस्यैव
रूपान्तरमिति न धात्वर्थसामान्यं भावनेत्युच्यते धात्वन्तरेण तस्याभिधानं
नानिष्टं यथा स्पन्दनस्य प्रयत्नस्य वा द्वयोर्वा भावनात्वे स्पन्दादिधातु-
वाच्यत्वं, तस्मात्सिद्धं धात्वर्थारिक्तं भावनारूपं, तत्र च धात्वर्थः करणं
ततोऽपूर्वं कल्प्यत इति भावशब्देभ्योऽपूर्वम् ॥

अपूर्वस्यास्तिताऽधिकरणम् ।

सू० चोदना पुनरारम्भः ॥ ५ ॥

"दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" "श्येनेनाभिचरन् यजेते"त्येव-

मादिषु अपूर्वं सिद्धं कृत्वा तत्प्रतिपादकशब्दविशेषो विचारितस्तस्य त्वस्तित्वमेवासिद्धमिति तत्प्रतिपादनार्थमारभ्यते किमेतेष्वपूर्वं नाम यागस्वर्गातिरिक्तमस्ति ? ने ? ति विचारः । तदर्थं च किं वाक्यावगतः स्वर्गयागादिसाध्यसाधनभावोऽपूर्वमन्तरेणापि घटते ? ने ? ति तत्र "साध्यसाधनभावो हि श्रूयते स्वर्गयागयोः । वस्त्वन्तरस्य सद्भावे श्रुतिरेव विरुध्यते" । वस्त्वन्तरं हि कल्प्यमानं यागसाध्यं स्वर्गसाधनं च कल्प्येत, तच्चोभयमपि श्रुतिविरुद्धं स्वर्गयागयोरेव साध्यसाधनभावश्रवणात् । कथं पुनः क्षणिकयागस्य विनाऽपूर्वेण कालान्तरभावि फलसाधनत्व ? मिति यदि ब्रूयात् प्रतिब्रूयादेनमपूर्वेऽपि कल्पिते कथं यागस्य फलसाधनत्वं, ? तदा ह्यपूर्वमेव साधनं स्यान्न यागः । यागस्यैव शक्तिरवान्तरव्यापारो वाऽपूर्वमिति चेन्न शक्तिमति व्यापारवति चातीते शक्तिव्यापारयोरवस्थानायोगात्, तस्माद्याग एव विनष्टोऽपि फलं साधयति, स एव वा फलं यावदवतिष्ठत इति शास्त्रप्रामाण्यादवगन्तव्यं, नापूर्वमिति प्राप्ते ब्रूमः । "विनष्टस्यासतस्तावन्न कार्यारम्भसंभवः । क्षणिकत्वेन सिद्धस्य नावस्थानं च युक्तिमत्" । तदेव हि श्रुतार्थानुपपत्त्या कल्पयितव्यं न यत्प्रमाणान्तरेण विरुध्यते, विरुद्धं च सर्वप्रमाणैर्विनष्टस्यासतो ऽनारब्धवस्त्वन्तरस्य कार्यारम्भकत्वमवस्थानं च क्षणमात्रवर्त्तिनः प्रमाणाविरुद्धमेवातो ऽपूर्वमेव कल्पनीयम् ।

न च श्रुतिविरोधः, तस्य यागस्य शक्तित्वात् । अवान्तरव्यापारत्वाद्वा । न हि शक्त्याऽवान्तरव्यापारेण वा व्यवधिर[1]करणतामापादयति काष्ठादीनामिव ज्वालया । न चावश्यं शक्तिमत्येवा[2]वतिष्ठते कार्यानुमेया हि शक्तिः, यत्रैव कार्यायालं तत्रैव कल्प्यते । अतो यागशक्ति[3]रात्मनि तिष्ठति इत्यविरोधः । एतदेवावान्तरव्यापाराणां तत्त्वं यत्समीहितोद्देशप्रवृत्तेन साधनेन तत्सिध्यर्थमन्तरा साध्यमानत्वं, काष्ठैरिव ज्वालायाः, तस्मादस्त्यपूर्वं फलसाधनस्य कर्मणोऽवान्तरव्यापाररूपम् । अङ्गानां च फलवदुप-

१ अकारणतामापादयतीति पा० ।
२ न चावश्यं शक्तिमत्येवावस्थातव्यं शक्त्येति पुस्तकान्तरपाठः ।
३ यागशक्तिरप्यात्मन्येवावतिष्ठते इति पाठान्तरम् ।

कारसाधनानामेषाऽत्र प्रक्रिया । प्रथमं तावत्फलवाक्येन कर्मणः फल-साधनत्वं बोध्यते, यागेन स्वर्गं कुर्यादिति, कथं विनश्वरेण फलं कर्त्तव्य-मित्यपेक्षायामपूर्वं कृत्वेत्युच्यते, कथमपूर्वं क्रियत इत्यपेक्षायामङ्गानुष्ठान-प्रकारेणेति, ततः पूर्वापरकालवर्त्तिभिरङ्गव्यापारैर्विषयीकृतस्य यागस्यापूर्वसा-धनत्वं न स्वरूपेण संभवतीति अपूर्वान्तरमपि कल्प्यते । दर्शपूर्णमासयोस्तु पक्षद्वयवर्त्तिभ्यां समुदायाभ्यां युगपत्फलापूर्वारम्भायोगादेकैकं प्रतिसमुदा-यमपूर्वं कल्प्यते, तत्कथंभावापेक्षायामन्वाधानाद्यङ्गोपदेशः । ततः पूर्ववदेव पूर्वोत्तरा[1]ङ्गसहितेभ्यस्तदुत्पत्तिर्न स्वरूपेण संभवतीति प्रति-त्रिकं त्रीणि त्रीण्यपूर्वाणि कल्प्यन्ते । यदि पुनः [2]षड्यागेभ्यः प्रथममेव षडपूर्वाणि कल्प्येरन् ततोऽपूर्वार्थत्वादङ्गानामङ्गोपकृतेभ्योऽपूर्वसिद्धौ पुनरपि षडपूर्वाणि कल्प्यानि स्युरिति गौरवं स्यात् । तस्मादेकमेव फला-पूर्वमुत्पत्त्यपूर्वाणि तु प्रतिप्रधानं भिद्यन्ते, तथाऽङ्गान्यपि क्रतूपकारकत्वेन स्वीकृतानि क्षणिकत्वाच्च स्वरूपेण संहत्योपकर्तुं शक्नुवन्तीत्यवान्तरव्यापा-ररूपाण्यपूर्वाणि तावदारभन्ते, ततः सर्वाणि संहत्य प्रधानस्य सामर्थ्या-द्बोधनं फलारम्भोन्मुखत्वरूपमनुग्रहं परमोपकारं जनयन्ति । तत्र त्वयं विभागः, सन्निपत्योपकारकाणि द्रव्यदेवतासंस्कारद्वारेण यागस्वरूपस्यैव शक्त्यतिशयमादधानानि तदुत्पत्त्यपूर्वनिष्पत्तौ व्याप्रियन्ते तद्द्वारेण फला-पूर्वे, आरादुपकारकाणि तु साक्षादेवोत्पत्त्यपूर्वेभ्यः फलापूर्वनिष्पत्ता । एवं प्रकारभेदे सत्यपि सर्वाण्यङ्गानि यागापूर्वनिष्पत्तावनुग्राहकाणि भवन्ती-त्येवमेकरूपेणेत्थंभावेन स्वीक्रियन्ते तस्मादस्त्यपूर्वम् ॥

कर्मणां गुणप्रधानभाव-विभागाधिकरणम् ।

सू० तानि द्वैधं गुणप्रधानभूतानि ॥ ६ ॥

एवं ताव[3]दस्त्यपूर्वं तच्चाख्यातेभ्यस्तदर्थं च द्रव्यादिपदमाख्यातं तु द्रव्याद्यपेक्षया प्रधानस्य कर्मणो वाचकमित्याख्यातभेदानुसार्यपूर्वभे-दानुसरणं कर्त्तव्यमिति स्थितं, तस्यापवादः क्रियते सत्यपि धात्वर्थभाव-

१ पूर्ववदेवाङ्गसहितेभ्यस्तदुत्पत्तिरिति तु पुस्तकान्तरम् ।
२ यदि पुनः प्रथममेव षड्भ्यो यागेभ्यः ।
३ एतावदस्त्यपूर्वमिति पाठान्तरम् ।

नयोर्भेदे केषुचिदाख्यातेषु नापूर्वं भिद्यते इति दर्शपूर्णमासयो"र्व्रीहीन-वहन्ति" "तण्डुलान् पिनष्टी"ति श्रूयते तत्र संशयः किमवघातादिभ्योऽपूर्व-मस्ति? न वे?ति तदर्थं च किमवघातार्था व्रीहयः? उत व्रीह्यर्थोऽवघात? इति, तत्र वाक्यसाफल्यायावश्यं कल्प्यमदृष्टं, तच्च धात्वर्थादेव साध्यभूता-न्याय्यम्। तथा हि भूतस्य द्रव्यस्य तन्निर्वृत्त्या दृष्टार्थता स्यात्। अन्यथा त्वदृष्टद्वयं कल्प्यमित्युक्तं पूर्वाधिकरणे, तस्माद्व्रीह्यपेक्षयाऽवघातः प्रधानमेव ततश्चापूर्वमिति। स्यादेवं यद्यदृष्टं कल्प्येत अत्र पुनः क्लृप्तमेव यागनि-र्वृत्तिः प्रयोजनं, तादर्थ्ये चावघातस्य कर्मोपयिकं तुषविमोकादि दृष्टमेव प्रयोजनं लभ्यते इति न कस्यचिद् अदृष्टं कल्प्यं, नियमादृष्टं तु कल्पनीयं तच्चावघातस्यादृष्टार्थत्वेऽपि द्रव्यनियमादवश्यं कल्प्यमित्यदृष्टद्वयं, तद्वर-मेकमेव दृष्टार्थावघातनियमाददृष्टं कल्पितम्॥

संमार्जनादीनामप्रधानताऽधिकरणम्।

सू॰ धर्ममात्रे तु कर्म स्यादनिर्वृत्तेः प्रयाजवत्॥ ९॥

यत्र न किंचिद् दृष्टमस्ति कर्मोपयिकं तु द्रव्यं द्वितीयया संयुज्य निर्दिश्यते "स्रुचः संमार्ष्टी"त्या"दिषु तत्र विचार्यते किं प्रधानकर्मेत गुणकर्मे?ति। तदर्थं च साध्यवाचिनी द्वितीया?ऽथवा साधनवाचिनी?ति। यद्यपि चात्र सिद्धान्तेऽपि द्रव्यगतादृष्टरूपं संस्काररूपापूर्वसद्भावाचापूर्व-भेदाभेदयोरुपयोगस्तथाऽपि पूर्वोक्तगुणकर्मलक्षणस्याव्यापकत्वं प्रधानकर्म-लक्षणस्यातिव्याप्तिं चाशङ्क्य समाधीयत इति सङ्गतिः। तथा हि यैस्तु द्रव्यं चिकीर्ष्यते इति दृष्टोपकारित्वं गुणकर्मलक्षणमुक्तं तच्चाव्यापकं संमार्ज्जना-दिष्वभावात्, तथा यैर्द्रव्यं न चिकीर्ष्यत इति दृष्टोपकाराभावः प्रधानलक्ष-णमुक्तं, तच्च संमार्ज्जनादिष्वतिव्यापकं तेषामपि प्राधान्यप्रसङ्गात्, तदिद-माशङ्काद्वयं निराकर्त्तुमिदमुच्यते। द्वितीयाश्रुत्या संमार्ज्जनादीनामपि द्रव्यगुणत्वं, पूर्वोक्तं तु लक्षणद्वयं न गुणप्रधानविषयम्, अपि त्वपूर्वसद्भाववि-षयं तावन्मात्रस्यैव, भावार्थाधिकरणापवादत्वेन प्रतिपित्सितत्वात्तेनापूर्व-सदसद्भावाय तानि द्वैधमिति गुणप्रधानकर्मणी उपक्षिप्ते कीदृशं तद्गुणकर्म यत्रापूर्वं नास्ति? कीदृशं वा प्रधानकर्म यत्रापूर्वं विद्यते? इत्यपेक्षायामुक्तं

दृष्टोपकारिष्वपूर्वं नास्ति तदभावे त्वस्तीति, संमार्गादिषु चास्त्येवापूर्वं द्रव्यगतमित्यनवद्यं लक्षणम् । अत्र पूर्वपक्षाभिप्रायः, दृष्टप्रयोजनत्वमेव गुणकर्मलक्षणं न द्वितीयेति । कुतः, "व्यभिचारान्न साध्यत्वमुच्यते लोकवेदयोः । साधनत्वं द्वितीयार्थः सर्वत्राव्यभिचारतः" ॥ १ ॥

बल्वजात् शिखण्डकात् कुर्विति लोके, वेदे च "सक्तून् जुहोती"ति व्यभिचारान्न साध्यत्वं द्वितीययोच्यते, साधनत्वं तु घटं करोतीत्यादावपि घटादीनां बुद्धिस्थत्वेन क्रियाहेतुत्वादस्त्येवेत्यव्यभिचारात्स एव हि द्वितीयार्थः, अतः स्रुगादिसाधनकसंमार्गविधानात् दृष्टोपकाराभावाच्च प्रधानकर्मैव संमार्गादीनीति प्राप्ते ब्रूमः ॥

"स्मृत्या साध्याभिधायित्वं द्वितीयायाः प्रतीयते ।
कर्तुर्यदीप्सितं यच्च तथा युक्तमनीप्सितम् ॥ १ ॥
तत्कर्म तद् द्वितीयार्थ इत्येवं पाणिनेः स्मृतिः ।
बलीयसी च साऽऽचारात्प्रयोगोऽप्यस्ति तादृशः ॥ २ ॥

स्मृतिस्तावदाचाराद्बलीयसीति स्थितम् । स्मरति च पाणिनिः "कर्मणि द्वितीया" "कर्तुरीप्सिततमं कर्म" "तथा युक्तं चानीप्सित"मिति च यथेप्सितं क्रियया युज्यते साध्यात्मना तथा साध्यात्मनैव क्रियया युक्तमनीप्सितमपि कर्मसंज्ञमितीप्सितानीप्सितानुवर्त्तिसाध्यरूपं कर्मेत्यर्थः । कर्म च द्वितीयाऽर्थ इति साध्यत्वमेव द्वितीयार्थः ॥

न च निर्मूलं स्मरणं, घटं करोति व्रीहीनवहन्तीति लोकवेदयोः प्रयोगसद्भावात् । यदि त्व साधनत्वमर्थः स्यात् परशुना छिनत्तीति परशौ द्वितीया स्यात् । साधनविशेषवचनत्वाददयमदोष इति चेत्कः पुनरसौ? यस्य साध्यत्वमितिचेत्तदेव तर्हि वाच्यमस्तु किं साधनत्वोपलक्षणत्वेन नन्वेवमपि कथं स्रुगादीनां शेषित्वमीप्सितं हि शेषि भवति । न चेप्सितं द्वितीयाऽर्थः । किं त्वीप्सितानीप्सितानुवर्त्तिसाध्यत्वमात्रम् । सत्यम् । न शेषित्वं द्वितीयार्थः, तत्तु विधेर्लभ्यते । विधिवशेन हि समीहितमेव भावनाया भाव्यमवगतं, तद्विशेषश्च पदान्तरात्प्रार्थ्यते तत्र स्रुगादीनां

द्वितीयया भाव्यत्वमुच्यते । समीहितभाव्यापेक्षिण्यां च भावनायां नासमीहितस्य भाव्यत्वं संभवतीति स्रुगादीनां समीहितत्वसिद्धिः ।

ननु यत्समीहितं तस्य साधनं विधिना बोध्यते, न तु तद्वशेन समीहितत्वं, को नामाह समीहितत्वं विधिगम्यमिति । किं तु विधिविषयीभूतया क्रियया ईप्सितत्वं स्रुगादीनां द्वितीयया प्रतिपादितसाध्यभावानां विधिवशाद्गम्यत इत्युच्यते । स्वरूपेण तु तेषां समीहितत्वं क्रतुसाधनत्वादेव सिद्धम् । सक्तूनां तु भूतभाव्युपयुक्तत्वाभावाच्च समीहितत्वमस्तीति समीहितसाध्यापेक्षिण्यां भावनायां भाव्यत्वेनान्वयस्यायोग्यत्वात् साधनत्वमेव लक्षणया द्वितीयाऽभिधत्ते । स्रुगादीनि तु क्रतुसाधनरूपेणेप्सितत्वाद्योग्यान्येव समीहितभाव्यापेक्षिण्या संमार्गभावनयाऽन्वेतुमिति साध्यत्वमेव श्रुतिबलेन गृह्यते, तत्र दृष्टोपकाराभावेऽप्यदृष्टकल्पनात्सिद्धं गुणकर्मत्वम् ॥

स्तोत्रादिप्राधान्याधिकरणम् ।

सू० स्तुतशस्त्रयोस्तु संस्कारो याज्यावद्देवताऽभिधानत्वात् ॥ १३ ॥

इह स्तोत्रशस्त्राण्युदाहरणम् । "आज्यैः स्तुवत" इत्यादि प्रगीतमन्त्रसाध्यं गुणेन गुणिनः संबन्धाभिधानं स्तवनं स्तोत्रम् । शस्त्रमपि स्तवनमेवाप्रगीतमन्त्रसाध्यम्, प्रउगं शंसतीत्यादि गुणकर्माणि प्रधानकर्माणि वेति विचारः । तदर्थं च किं देवतां प्रति गुणभूतानि तत्प्रकाशनार्थानि ? । किं वा देवतां प्रति प्रधानभूतान्यदृष्टार्थानी ? ति तत्र देवतास्मरणं दृष्टमुज्झित्वाऽदृष्टकल्पनं न युक्तं, तेन तादर्थ्यात्स्तोत्रादेर्गुणकर्मता, गुणगुणिसंबन्धे हि कीर्त्यमाने गुणिनी देवता कीर्त्यते तत्कीर्तनाच्च तत्स्मरणं क्रतूपयोगि दृष्टमेव प्रयोजनं लब्धमिति नादृष्टकल्पनावसरः । तस्माद्देवताप्रकाशनार्थत्वाद्गुणकर्मैवेति । उच्यते । "सत्यं दृष्टार्थता युक्ता श्रुतिश्चैव विरुध्यते । देवतास्मरणार्थत्वे श्रुतिरूपं विहन्यते" । यथाश्रुतस्यार्थस्य प्रयोजनकल्पनं न श्रुतरूपहानेन । स्तुतिश्चात्र कर्तव्यतया श्रूयते स्तौति शंसतीति । यदा च मन्त्रवाक्यं गुणसंबन्धाभिधानपरमेव भवति तदा स्तुतिर्भवति । यदा तु गुणद्वारेण

गुणप्रकाशनार्थं तदा स्तुतिर्न भवति । यथा लोके वक्रकेशान्तो देवदत्त इति गुणसंबन्धपरत्वे स्तुतिं मन्यन्ते । यदा तु एवमुच्यते योऽयं वक्रकेशान्तस्तमानयेति न तदा स्तुतिबुद्धिर्भवति । तेन प्रकाशनार्थत्वे स्तोत्रिशंसत्योः स्वार्थहानेन प्रकाशनलक्षणा स्यात्

न च तत्र लक्षणार्थत्वे प्रमाणमस्ति, श्रुत्यैव वाक्यार्थोपपत्तेः तेन श्रुतिबलाददृष्टार्थत्वमेव । एवं च माहेन्द्रग्रहसंनिधावैन्द्री स्तुतिरुपपन्ना भवति । इतरथा हि श्रुतिसमवायिनी देवता विधिशब्देनैव निगमेषु वक्तव्येति माहेन्द्रग्रहदेवता नेन्द्रशब्देन शक्यते प्रकाशयितुमिति यत्रेन्द्रस्तत्रैन्द्री स्तुतिरुत्कृष्येत, मनोतास्याग्निशब्दवद्वाऽग्नीषोमाविन्द्रशब्द एव महेन्द्रलक्षणया प्रकाशयेत् । तच्च द्वयमप्यन्याय्यम्, तस्मात्प्रधानकर्मणी स्तोत्रशस्त्रे ॥

मन्त्राविधायकत्वाधिकरणम् ।

## सू० विधिमन्त्रयोरैकार्थ्यमैकशब्द्यात् ॥ ३० ॥

प्रासङ्गिकमिदमधिकरणम् । द्विविधमाख्यातमुक्तं प्रधानकर्मणां विधायकं गुणकर्मणां विधायकं चेति । किमेतदेव प्रकारद्वयं ? नेत्युच्यते । अस्ति तृतीयोऽपि प्रकारो ऽभिधायकत्वमिति प्रतिपाद्यते । तत्र "देवांश्च याभिर्यजते ददाति च अग्नीदग्नीन्विहर" 'बर्हिर्देवसदनन्दामीति । एवमादीनि यच्छब्दामन्त्रणोत्तमपुरुषादिसंयुक्तान्याख्यातानि । यानि च यस्योभयं हविरार्त्तिमार्छेदित्यादीनि यावन्ति निमित्तादिप्रतिपादनेनाख्यातान्तरैरेकवाक्यतां गतानि तान्युदाहरणम् । तानि च प्रायेण मन्त्रेष्वेवेति मन्त्रोपन्यासः । न तु मन्त्रत्वस्य कश्चिच्छायोपयोगः । तानि विधायकानि न वेति संशयः । तत्र "विधायकत्वमेतेषामाख्यातत्वाविशेषतः । सत्यपि प्रकृते कर्मण्यभ्यासात्कर्मभेदधीः" । अत्रोच्यते । यच्छब्दादिभिरेतेषां विधिशक्तिर्विहन्यते" । न हि "याभिर्यजेते"ति कथंचिद्विधिसंभवः । तथा दामि गृह्णामीति नात्मनाऽऽत्मा शक्यो विधातुम् । आमन्त्रणविभक्तेश्चाग्नीदग्नीन्विहरेति वक्त्रभिमुखश्रोतृविषयत्वात्, वेदे च वक्तुरभावात् विधेश्चाभिमुखानभिमुखपुरुषसाधारणत्वाद्विरुद्धस्वभावेनामन्त्रणेन विधिशक्त्यवलोपः ।

तस्मादेवमादीनां प्रयोगमध्ये पुरुषान्तरेण पुरुषे स्मारयितव्ये सामर्थ्यं न बहिःप्रयोगभाविनि विधाविति सिद्धमभिधायकत्वम् ॥

मन्त्रनिर्वचनाधिकरणम् । सू० तच्चोदकेषु मन्त्राख्या ॥ ३२ ॥

न्यायानौपयिकेनापि मन्त्रशब्देन पूर्वं व्यवहृतमिति तत्प्रसङ्गादहेबुध्नियमन्त्रं मे गोपायेत्यादि वेदप्रयुक्तस्य मन्त्रशब्दस्यार्थनिरूपणार्थं मन्त्रलक्षणं क्रियते । यानि प्रयोगकाले ऽनुष्ठानौपयिकार्थाभिधानस्वरूपाणि वाक्यानि तानि मन्त्रशब्देनोच्यन्ते । प्रायिकमिदमभियुक्तप्रसिद्ध्युपलक्षणार्थम्[1] । यत्राभियुक्तानां मन्त्रप्रसिद्धिः स मन्त्र इत्यर्थः ॥

ब्राह्मणनिर्वचनाधिकरणम् । सू० शेषे ब्राह्मणशब्दः ॥ ३३ ॥

द्विविभागस्य वेदस्यैकस्य भागस्य मन्त्रात्मकस्य लक्षणमुक्तं, तत्प्रसङ्गादे"तद्ब्राह्मणान्येव पञ्च हवींषी"ति वेदप्रयुक्तब्राह्मणशब्दार्थपरिज्ञानार्थं ब्राह्मणलक्षणकथनमवशिष्टं ब्राह्मणमिति ॥

ऊहाद्यमन्त्रताऽधिकरणम् । सू० अनाम्नातेष्वमन्त्रत्वमाम्नातेषु हि विभागः स्यात् ॥ ३४ ॥

ऊहप्रवरनामधेयानां मन्त्रत्वमुत नेति संदेहे मन्त्रवाक्यैकवाक्यत्वेन तन्मध्ये निवेशान्मन्त्रकार्यकरत्वेन च मन्त्रत्वे प्राप्तेऽभिधीयते । मन्त्रकार्यकरत्वं तावद्ध्यघोषादिष्वनैकान्तिकं, मन्त्रैकवाक्यताऽपि न तत्कारणम् । किंतु "अभियुक्तप्रसिद्ध्या हि मन्त्रत्वमवकल्पते । स्वाध्यायकाले तेषां च समाम्नातेषु मन्त्रधीः । मन्त्रानध्यापयामोऽद्य तथा मन्त्रानधीमहे । सामाम्नायबहिर्भूत ऊहादौ नास्ति मन्त्रधीः" ॥ तस्मादभियुक्तप्रसिद्ध्यभावदेवामन्त्रत्वम् ॥

ऋग्लक्षणाऽधिकरणम् । सू० तेषामृग्यत्रार्थवशेन पादव्यवस्था ॥ ३५ ॥

वेदभागयोर्मन्त्रब्राह्मणयोर्लक्षणमुक्तम् ॥ तत्र मन्त्रभागस्यापरोऽवान्तरविभागः ऋगादिरूपो लोके वेदे च प्रसिद्धः । "अहेबुध्नियमन्त्रं मे

१ तत्कारणमिति तु पाठान्तरम् ।

गोपाय यमृषयस्त्रयीविदा[1] विदुः ऋचः सामानि यजूंषी"ति । तत्र को-भाग ऋक्शब्देनोच्यते? को वा सामवेदशब्देन? को वा यजुःशब्देनेति? तत्परिज्ञानाय ऋगादिलक्षणमुच्यते । यत्रार्थवशेन पादव्यवस्था सा ऋक् इति ।

सामलक्षणाधिकरणम् । सू० गीतिषु सामाख्या ॥ ३६ ॥

यद्यपि प्रगीते मन्त्रे सामशब्दप्रयोगोऽभियुक्तानां तथाऽपि नागृहीत-विशेषणेति न्यायेन "कवतीषु रथन्तरङ्गायती"त्याद्यतिदेशोपपत्तेश्च गीति-रेव सामेति सप्तमे सूत्रकारः स्वयमेव वक्ष्यति । इह तु मन्त्रत्रिभागमात्रं विवक्षितम् । तद्यदि प्रगीतो मन्त्रः साम यदि वा गीतिमात्रमुभयथाऽपि ऋग्यजु[2]र्भ्यामन्यत्सामेति विभागसिद्धेर्न विभागाय प्रयत्यते । सप्तमे तु रथन्तरमुत्तरयोर्गायतीत्याद्यतिदेशोपयिकत्वाद्विभागेन प्रयोजनमस्तीति तत्रैव वक्ष्यमाणावष्टम्भेन गीतिः सामेत्युक्तम् । यत्त्वत्र भाष्यवार्त्तिकयोर्गीति-वाचित्वं साधितं तद्वक्ष्यमाणमेव प्रसङ्गादिति द्रष्टव्यं न सूत्रार्थतया मा-भूत्साप्तमिकस्य पौनरुक्त्यम् ॥

यजुर्लक्षणाधिकरणम् । सू० शेषे यजुः शब्दः ॥ ३७ ॥

ऋक्सामाभ्यां यदन्यत्प्रश्लिष्टपठितं मन्त्रजातं तद्यजुः ॥

निगदानां यजुष्ट्वाधिकरणम् । सू० निगदो वा चतुर्थं स्याद्धर्मविशेषात् ॥ ३८ ॥

शेषे यजुःशब्द इत्येतदाक्षेपेणेदमारभ्यते । सन्ति निगदानामपरसं-बोधनरूपा मन्त्राः प्रोक्षणीरासादयेत्यादयस्ते किं यजूंष्येव? न यजुर्भ्योऽन्य? इति विचारः । संज्ञाभेदादिमे निगदा इमानि यजूंषीति । तथा उपांशु यजुषा उच्चैर्निगदेनेति विप्रतिषिद्धधर्मयोगाच्च भेदप्राप्तावुच्यते । संज्ञा तावदि-तराङ्गद्यते इति व्युत्पत्त्या यजुःष्वेवोच्चैर्धर्मयोगाच्छक्नोति वर्त्तितुम् । ब्राह्म-णेष्विव परिव्राजकसंज्ञेति न तया भेदः ॥

---

१ विदाविदुरिति आर्षतया साधुता ।

२ ऋक्सामेतिवत् ऋग्यजुषेति निपातनात् प्रकृतस्य साधुता ।

न च धर्मभेदाद्भेदः, सत्यपि यजुष्ट्वे परप्रत्यायनकार्यविरोधेन निगदेषूपांशुत्वाप्राप्तेरर्थवशादुच्चैस्त्वसिद्धेः ॥

ननु वाचनिकमुपांशुत्वं, लैङ्गिकं परं सम्बोधनं कार्यं, तदुभयं[1] लिङ्गेन वचनस्य बाधः उच्यते ॥ अङ्गमुपांशुत्वं मन्त्रस्य प्रधानं परप्रत्यायनकार्यं तद्यद्यपि दुर्बलप्रमाणकं तथाऽपि स्वरूपतो बलवत्त्वात् बलवत्प्रमाणकमपि स्वरूपतो दुर्बलमुपांशुत्वं बाधते प्रमाणबलाबलाद्धि प्रमेयबलाबलम्बलीय इति वर्णितमेतत् ॥

न च वचनस्याप्रामाण्यं यजुरन्तरे सावकाशत्वात् । अपि चाप्राप्तविधानान्नियमविधानं लघीयः । तेन यत्रानियमेनोपांशुत्वं प्राप्तं तत्र तन्नियममात्रमुपांशु यजुषेत्यनेन क्रियते । निगदव्यतिरिक्तेषु च यजुःषु येन केनचित्स्वरेण कार्यसिद्धेरुपांशुत्वस्यानियमप्राप्तिरिति तद्विषयमेवेदं वचनम् । निगदेषु तु कार्यबलेनोच्चैस्त्वमेव प्राप्तं न पक्षेऽप्युपांशुत्वमिति न तत्रास्य वचनस्य व्यापारः । एवं चार्थप्राप्ते उच्चैर्निगदेनेत्यनुवादः । तस्माद्यजूंष्येव निगदा न मन्त्रान्तरम् । तथा वेदे अहेबुध्नियमन्त्रं मे गोपाय ऋचः सामानि यजूंषीति मन्त्रशब्दसामानाधिकरण्यम् ऋगादीनामेव त्रयाणां दृश्यते । जात्यन्तरत्वे हि निगदशब्दोऽपि तत्र श्रूयेत । तस्मात् त्रिधैव मन्त्राः ॥

एकवाक्यत्वाधिकरणम् ।

**सू० अर्थैकत्वादेकवाक्यं साकाङ्क्षं चेद्विभागे स्यात् ॥ ४६ ॥**

ऋग्यजुःसामरूपे मन्त्रविभागेऽभिहिते ऽधुना तदवान्तरभेदं कथयितुं प्रस्तावः । तत्र ऋक्सामानामध्येतृसिद्धो भेदो न वक्तव्यः । यजुषान्तु प्रश्लिष्टपठितानां भेदो न सुज्ञान इति तत्परिज्ञानाय यजुषः परिमाणलक्षणमुच्यते । यावदेकप्रयोजनं विभागे च साकाङ्क्षं पदजातं तावद्यागसाधनत्वादेकं यजुर्वक्तव्यत्वाच्च वाक्यम् । एतस्माच्चेत्कारणादेकवाक्यत्वं तदा यत्ततोऽन्यद्वाक्यान्तरं यजुरन्तरं चेत्युक्तं भवति, उदाहरणं "देवस्य त्वा

१ तत्कथं लिङ्गेनास्य बाधः इति पुस्तकान्तरपाठः ।

सवितुः प्रसव" इति अत्र हि सर्वाणि पदानि निर्वापप्रकाशनार्थानि विभागे च साकाङ्क्षाणि तस्मादेकयजुष्ट्वम् ॥

वाक्यभेदाधिकरणम् । **सू० समेषु वाक्यभेदः स्यात् ॥ ४७ ॥**

एकप्रयोजनं सर्वं विभज्यमानं साकाङ्क्षं पदजातमेकं यजुरित्युक्तम् । एतेन लक्षणेन यत्र कर्मसमवेतार्थप्रकाशकं निर्वपामीत्यादि पदमस्ति तत्र सुगमं परिमाणम् । अथ यत्र समवेतार्थपदाभावेन लैङ्गिकविनियोगाभावे वाचनिको विनियोगः परस्परनैराकाङ्क्ष्यं च स्वरूपतो ऽवगम्यते यथे"षेत्वो- र्जेत्वे"ति यथा "वायुर्यज्ञेन कल्पतां" "प्राणो यज्ञेन कल्पता"मिति तत्र किं[1] यदेकं यजुरिति चिन्त्यते किं प्राग् दृष्टार्थमन्त्रावधेरेकमन्त्रत्व ? मुत यावदेव मिथः संबद्धमिषे त्वेति तावदेकं यजुरन्यच्च यजुरन्तर?मिति । तदर्थं च किं स- र्वमेकार्थमुत भिन्नार्थ ? मिति चिन्ता । तत्र तावत् "अदृष्टार्थत्वमेतेषामनुष्ठे- याप्रकाशनात् । तच्चैकं तत्र साकाङ्क्षाः सर्वं इत्येकवाक्यता" । अदृष्टं हि क- ल्प्यमानमेकमेव युक्तं तावतैवोपपत्तेः अतः सर्वे तावदेकार्थाः । तच्च सर्वेषां सह कल्प्यतामिति संभूयकारित्वाद्विभज्यमानाः साकाङ्क्षा भवन्तीत्येकवाक्य- ता, निश्चिते च मन्त्रैकत्वे यद्यपि प्रत्येकभेदेनाने[2]कत्र विनियोग इषे त्वेति छिनत्ति, ऊर्जे त्वेति अनुमार्ष्टीति । तथाऽपि यावद्विनियोगं सकल आवर्त्ति- ष्यते । उच्यते । "यद्यप्येषामदृष्टोऽर्थस्तथाऽपि न तदेकता । रूपतो हि निरा- काङ्क्षाभिन्नत्वेनावधारिताः । अन्योन्यानादरेणैव प्रार्थयन्ते प्रयोजनम् । यथा- ऽपेक्षमतस्तेषां भिन्नाऽदृष्टप्रकल्पना । यथा विश्वजिदादीनां भेदेन फलक- ल्पना । यथा च समिदादीनामपूर्वं भिन्नमिष्यते । तद्वदत्र न चात्रैषामदृष्टार्थ- त्वसंभवः । शाखाच्छेदप्रकाशेन दृष्टार्था हि विधेरमी" । इषे त्वेति छिनत्ती- ति शाखाच्छेदने करणत्वेन मन्त्रो विधीयते क्रियानिर्वर्त्तकं च करणं भवति ।

न च मन्त्राणां क्रियानिर्वर्त्तकत्वमन्यतः प्रकाशनात् ; तेन विधिवशा- देषां प्रकाशनार्थत्वम् । तत्र यावता विना चोदितप्रकाशनं न भवति तावद- ध्याहर्त्तव्यं छिनद्मीत्यादि । तत्रैकेन छेदनं प्रकाश्यते अन्येनानुमार्जनमिति

(१) कियदेकमिति तु पाठान्तरम् ।
(२) प्रतीकभेदेनानेकत्र विनियोग इति पाठान्तरम् ।

अर्थभेदान्मन्त्रभेदः। तथा "आयुर्यज्ञेन कल्पता"मित्यादीनामपि स्वरूपतो निराकाङ्क्षत्वात् "क्लृप्तीर्वाचय"तीति च क्लृप्तिबहुत्ववचनस्य चोदितत्वात्तत्सम्पत्त्यर्थमायुरादिविशिष्टक्लृप्तिभेदप्रकाशनपरत्वादर्थभेदेन मन्त्रभेदः॥

अनुषङ्गाधिकरणम्। सू० अनुषङ्गो वाक्यपरिसमाप्तिः सर्वेषु तुल्ययोगित्वात्॥ ४८॥

अत्रापि यजुःपरिमाणमेव चिन्त्यते। यत्र बहूनां वाक्यशेषापेक्षिणां वाक्यानां सन्निधावेकस्यानन्तरदेशे परिपूरणसमर्थो वाक्यशेषः श्रूयते यथा "याते अग्नेऽयाशया तनूर्वर्षिष्ठागह्वरेष्ठोग्रवचो अपावधीत्वेषम्वचो अपावधीत्स्वाहा याते अग्नेरजाशयायाते अग्नेहराशये"ति। अत्रोत्तरौ मन्त्रावुदाहरणं किं तयोर्लौकिकः शेषो ऽध्याहर्त्तव्यः? उत योऽसौ पूर्वमन्त्रानन्तरं पठितस्तनूर्वर्षिष्ठेत्यादि स एव सर्वेषामर्थेनाम्नातः पूर्वस्यैवोत्तरयोरप्यनुषङ्गेण शेष? इति अध्याहारे "याते अग्नेरजाशयेत्येतावानेव मन्त्रोऽध्याहृतस्य लौकिकस्योहादिवदमन्त्रत्वात्। अनुषङ्गे तु तत्सहित एव मन्त्र इत्यस्ति परिमाणे विशेषः। तत्र "एकत्रैव निबद्धो हि समाम्नायेन वैदिकः। शेषोऽन्यत्र न नेतव्यो लौकिकस्त्वनिबन्धनः"। लौकिको हि शब्दः सर्वार्थो न क्वचिदेव विशेषेण निबद्धः स यत्र यत्र कार्यं तत्र सर्वत्र यथेष्टं विनियुज्यमानो न विरुध्यते। वैदिकस्तु यदर्थमाम्नातस्तेनैव निबद्धो नान्यत्र नेतुं शक्यते नीयमानो वा समाम्नायबहिर्भावाल्लौकिक एव स्यात्।

न च सर्वार्थमाम्नात इति वाच्यं सकृदाम्नातस्यानेकार्थताऽनुपपत्तेः। न चागृह्यमाणविशेषत्वम् आनन्तर्येण देशभेदेन च विशेषणग्रहणात् प्रथमस्य ह्यसावनन्तरो न तृतीतस्य। द्वितीयस्य तु यद्यप्यनन्तरस्तथाऽपि परस्ताद्भावित्वेन वाक्यशेषस्याकाङ्क्षितत्वाच्च पुरस्ताद्भाविना संबन्धः, प्रथमस्य त्वपेक्षित एव देशे पठितस्तस्मात्तस्यैवायं शेष इति प्राप्ते ऽभिधीयते। "यथापेक्षितरूपे हि वाक्यशेषे समर्पिते। वेदे न लौकिकः शेषो न मृग्यो निष्प्रमाणकः"। सर्वानन्तरं सकृत्पठितुमशक्यो बुद्धिविपरिवृत्तिमात्रेण साकाङ्क्षैः सर्वैः संबन्धसिद्धेः। पुनःपुनरसमाम्नातो-

प्ययं शेषः सर्वार्थेनैवाम्नात इति युक्तमङ्गीकर्त्तुम् । एवं वेदसमर्पितेन शेषेण सर्वेषां नैराकाङ्क्ष्यसिद्धेः, निष्प्रमाणकोलौकिकोऽध्याहारः, शक्नोति चायं सर्वैः संबद्धुं । प्रथमेन हि संबद्धो द्वितीयस्याप्याकाङ्क्षावेलायां बुद्धौ विपरिवर्त्तमानस्तेनापि संबध्यते तत्संबन्धाच्च विपरिवृत्त्यभङ्गात् तृतीयेनापि संबन्धसिद्धिः । तुल्यो ह्यस्य सर्वैर्योगः कारणाविशेषात् । एतावच्च शब्दानामन्वये कारणमाकाङ्क्षासन्निधिर्योग्यत्वं च, न त्वनन्तरसमाम्नानं । व्यवहितस्याप्यसंबन्धिव्यवधानाभावे बुद्धिविपरिवृत्तिरूपं सन्निधानं सर्वत्र क्रमेण लभ्यते । तस्मादाम्नानमेवास्य सर्वार्थमिति सर्वशेषता । एवं तावत्साकाङ्क्षेषु अनुषङ्गः उक्तः । यत्र तु निराकाङ्क्षाणामेकार्थानां सन्निधावेकस्यानन्तरं वाक्यशेषः श्रूयते यथा "चित्पतिस्त्वा पुनातु वाक्पतिस्त्वा पुनातु देवस्त्वा सविता पुनात्वि"ति सर्वे निराकाङ्क्षा यजमानपावनार्थाः सत्यप्येकार्थत्वे वचनात्समुच्चीयन्ते । तेषामन्ते "अच्छिद्रेण पवित्रेणे"ति शेषः समाम्नातः स किं पूर्वयोरपि अनुषज्यते? किं वा परस्यैव मन्त्रस्य शेष? इति । तत्र शेषस्तावदेकेनैवानन्तरेण संबन्ध्य निराकाङ्क्षः संपद्यते, शेषिणस्तु प्रागेव निरपेक्षास्तेनाप्रामाणिको ऽनुषङ्ग इति उच्यते । पुनातुशब्देनैकवाक्यतामुपगतोऽयमच्छिद्रादिः करणद्वारेण पावनक्रियाप्रकाशनार्थः, सैव च क्रिया पूर्वाभ्यामपि मन्त्राभ्यां प्रकाश्यते, तदर्थं च वाक्यशेषः प्रधानवशात्तत्राकृष्यत इत्यनुषङ्गसिद्धिः ॥

व्यवेताननुषङ्गाधिकरणम् । सू० व्यवायान्नानुषज्येत ॥ ४९ ॥

"सन्ते वायुर्वा तेन गच्छतां संयजत्रैरङ्गानि संयज्ञपतिराशिषेति गच्छतामित्ययं शब्दः संयजत्रैरङ्गानीत्यनेन बहुवचनान्तेनायोग्यत्वान्न संबध्यते संयज्ञपतिना तु योग्यत्वादनुषङ्गेण संबध्येत्याशङ्कायामुच्यते । पूर्वत्रासंबद्धत्वेन बुद्धिविपरिवृत्तिभङ्गान्नानुषङ्गः । "सर्वत्र तुल्ययोगित्वादनुषङ्गो हि वर्णितः । असंबन्धितिरोधाने व्यवधानाच्च तुल्यता" ॥

इति श्री शास्त्रदीपिकायां द्वितीयाध्यायस्य प्रथमः पादः ॥

शब्दान्तराधिकरणम्।

सू० शब्दान्तरे कर्मभेदः कृतानुबन्धत्वात् ॥ १ ॥

गतमुपोद्घातप्रसक्तानुप्रसक्तमिदानीं लक्षणार्थः कर्मभेदः शब्दान्तरादिभिरभिधीयते। तत्र प्रथमं शब्दान्तराद्भेदोऽभिधीयते इहैकप्रकरणगतान्यपर्यायधातुनिष्पन्नान्याख्यातानि यजतिददातिजुहोतीत्यादीन्युदाहरणम्। अत्र हि सत्यपि प्रत्ययांशस्यैकत्वे धातुभेदादाख्यातपदानि मिथः शब्दान्तराणि भवन्ति। तत्र संशयः किमत्रैका भावना नानाधात्वर्थानुरक्ता विधीयते? उत प्रतिधात्वर्थं भावनाभेद? इति। तत्र भिन्नासु भावनासु स्यादनेकापूर्वकल्पनम्। "एकक्लृप्त्युपपत्तेऽर्थे नानेकं तत्र कल्प्यते। फलायवर्गित्वात्क्रियाणां न फलभेदमन्तरेण भेदसंभवः, तद्यदि प्रतिधात्वर्थं भावनाभेदः स्यात्ततः सा भाव्यरूपा पूर्वभेदादृते न भिद्यते इत्यनेकापूर्वकल्पना स्यात्, न चैकेनोपपन्ने वाक्यार्थे ऽनेककल्पनं न्याय्यं, तस्मादेका भावना। किंच "भावना प्रत्ययार्थत्वात्तदेकत्वाच्च भिद्यते। गुणभूता हि धात्वर्था न तां भिन्द्युः कथंचन"। यद्यपि धातुभेदादाख्यातपदानि मिथःशब्दान्तरं तथाऽपि प्रत्ययांशः सर्वत्रैकरूपस्तदर्थश्च भावना तदभेदादभिन्ना भवितुमर्हति। यदि हि धात्वर्थान् प्रति गुणभूता भावना स्यात्। ततस्तेषां धातुभेदेन भिन्नत्वाद्भावनाऽपि तान्प्रति उपादीयमाना प्रति धात्वर्थं भिद्येत। भावनाप्रधानत्वात्त्वाख्यातस्य तां प्रत्युपादीयमाना धात्वर्थाः संहत्यैव तां विशिषन्ति क्रयमिवारुणिमादयः। तस्माच्च भावनाभेदमावहेत् इति प्राप्तेऽभिधीयते।

प्रत्ययांशः समानोऽपि प्रतिधातु प्रयोगतः।
तत्तदर्थानुसारेण भावनाभेदमावहेत् ॥ १ ॥
निष्पद्येत समस्तेभ्यो धातुभ्यः प्रत्ययो यदि।
ततः सर्वविशिष्टा स्याद् द्वन्द्वोत्पन्नसुबर्थवत् ॥ २ ॥
यदि वा प्रत्ययः शुद्धः सर्वधातुपृथक्कृतः।
श्रूयेत क्रयवत्सर्वैर्विशेष्येत स धातुभिः ॥ ३ ॥

न हि समुदिते धातुभ्यः प्रत्ययः श्रूयते अग्नीषोमादिभ्य इव सुप्प्रत्ययः, नापि पृथक् क्षीणातिरिवारुणादिभ्यो विविक्तः, येन सर्वैर्धात्वर्थैः प्रातिपदिकार्थैरिव सुबर्थः पदेन अय इवारुणिमादिभिर्वाक्येन युगपद्भावना विशिष्येत प्रत्येकं तु धातुभ्यः प्रत्ययः श्रूयते इति नैकभावनासंभवः। तथा हि प्रत्ययो हि यजतिपरः श्रूयमाणः केवलयागकरणिकां भावनां श्रुत्या विधत्ते दानहोमौ तस्यां निविशमानौ पदान्तरगतत्वात् वाक्येन प्रकरणेन वा निविशेयातां, ते च श्रुतितो दुर्बले करणांशोपनिपाताच्चास्ति विरोध. समुच्चये नैरपेक्ष्यबाधः, तेन दानहोमयोस्तदनुवादेन विधानासंभवात् तदनुरक्ते भावने एव तद्गतेन प्रत्ययेन विधातव्ये विहितायाश्च विध्यसंभवात् भावनान्तरत्वम्, उच्चार्यमाण एव प्रत्ययः प्रकृत्यर्थभेदभिन्नामेव स्वाभिधेयां भावनामगमयति। तस्मात्सिद्धो धात्वर्थभेदेन भावनाभेदः॥

समिदाद्यपूर्वभेदाधिकरणम्। सू० एकस्यैवं पुनः श्रुतिरविशेषादनर्थकं हि स्यात्॥ २॥

अभ्यासादिदानीं भेदोऽभिधीयते। विधेरविशेषेण पुनःश्रवणमभ्यासः। यथा समिधो यजतीत्यादिपञ्चकृत्वो यजतिपदमभ्यस्तं, तत्किमेकां भावनां प्रतिपादयत्युत प्रत्यभ्यासं भावनाभेद? इति। तदर्थं च किमेक एव याग? उत पञ्च यागाः? इति यागैकत्वे भावनैकत्वं, तद्भेदे च पूर्वाधिकरणन्यायात् धात्वर्थभेदात् भावनाभेद इति, तत्र "प्रत्यक्षप्रत्यभिज्ञानाच्छब्दैकत्वं प्रतिष्ठितम्। तदेकत्वात्तदर्थोऽपि न भेदं प्रतिपद्यते"। प्रत्ययांशस्य सर्वत्र समानत्वात्तदर्थस्यापि भावनाया एकत्वं प्राप्तमपि करणीभूतधात्वर्थभेदादपोदितम्। इह तु तस्यैव धातोः पुनः पुनः श्रवणादसति च शब्दभेदे ऽर्थभेदस्य निष्प्रमाणत्वात् स एव यागः सैव भावना॥

ननु समिदादिसंज्ञाभेदाद"थैष ज्योतिरथैष विश्वज्योतिरिति"वद्यागभेदः स्यात्। न शब्दैकत्वेनार्थैकत्वस्य दृढतरप्रत्यभिज्ञानात् स्पष्टे च यागैकत्वे तस्य समित्संज्ञाऽवरुद्धस्य संज्ञान्तरमन्याय्यमिति तनूनपादादिशब्द समिद्यागे देवता विधास्यन्ति न संज्ञाः, येन संज्ञातोभेदः स्यात्। यदि हि

तनूनपा[1]दं यजतीत्यादयो यागविधयो भवेयुस्ततो विहितस्य विधानायोगाद्विधिपुनःश्रुत्या यागभेदो भवेत्, सति च यागभेदे संज्ञान्तरं युक्तमेवेति स्यात्तनूनपादादिशब्दानां संज्ञात्वं, तेनाभ्यासनिमित्तभेदाधीनमेषां संज्ञात्वमिति न संज्ञावशाद्भेदसिद्धिः, यत्र तु प्राग्यागभे[2]दावगमात् संज्ञात्वं प्रसिद्धं तत्र संज्ञया भेदः स्याद्यथाऽथैष ज्योतिरिति उद्भिदा यजेतेति । इह तूपपदान्यपोद्धृत्य यजतीत्येतावन्मात्रं पञ्चकृत्वोऽभ्यस्तं भेदं बोधयति न वेत्येतदेव चिन्त्यम् । तत्र चाभेदावगमात् गुणविधिरेव तनूनपादादिशब्दैः ।

न च गुणाद्भेदः । सर्वेषां तनूनपादादिशब्दानामुत्पन्नवाक्यशिष्टत्वेन दध्यादिवत् अभेदकल्पकत्वात् । समिधो यजतीति चोत्पत्तौ समिच्छब्दस्य नामधेयत्वेन गुणत्वाभावात् । न चागृह्यमाणविशेषत्वम् । प्रथमोच्चारितत्वेन समिद्वाक्ये यागविधिरितरेषु तत्प्रत्यभिज्ञानात् । तदनुवादेन गुणविधिः चरमश्रुतत्वात् । गुणविधानार्थत्वादेव पुनः श्रुतेर्नानर्थक्यं, सत्यपि चानर्थक्ये न दोषः । न हि प्रयोजनवशेन प्रमाणं नेतुं शक्यम् तस्मादेको यागः । तदेकत्वाच्च भावनाऽपूर्वयोरप्येकत्वमिति प्राप्ते ब्रूमः । "विधेस्तावत्स्वभावोऽयमप्रवृत्तप्रवर्त्तनम् । धात्वर्थभावयोरेव तच्च श्रुत्याऽवगम्यते" । यत्तावदुक्तं भवत्वानर्थक्यमिति, तदयुक्तं विधिश्रुतिविरोधात् तथा हि स्वतोऽप्रवृत्तप्रवर्त्तनं गम्यते । तच्च बलवता कारणान्तरेणाऽन्यथात्वं प्रतिपद्यते । न चात्र तदस्ति तद्यद्येकमेव कर्म स्यात्तस्य पूर्वविहितत्वादप्रवृत्तप्रवर्त्तनात्मा विधिरुपरुध्येत तेन विधिशात्कर्मान्तरत्वम् । यत्तु दृढप्रत्यभिज्ञानात्कर्मैकत्वमिति तत्र । संनिधिकृता हि प्रत्यभिज्ञा विधिश्रुत्या तु भेदज्ञानं संनिधेश्च श्रुतिर्बलीयसी ।

ननु यजिश्रुतिकृतैवेयं प्रत्यभिज्ञा न यागोऽयमिति श्रुत्याऽवगम्यते । न पुनः स इत्यन्य इति वा साधारण्येनैव तदभिधायिन्यां श्रुतौ संनिधिकृतामभेदप्रत्यभिज्ञामनभिजानन्तः श्रुतिकृतां मन्यन्ते । तस्माद्विधिश्रुत्या कर्मभेदः । यदप्युक्तं, संनिधिकृतप्रत्यभिज्ञाबाधाय गुणवि-

१ तनूनपातं यजतीति पाठान्तरं तु न युक्तम् ।

२ प्राग् यागावगमादिति तु पाठान्तरम् ।

धानार्था पुनः श्रुतिर्भवत्विति। तदप्ययुक्तं श्रुतिविरोधादेव, प्रदलक्षणया हि श्रुत्या धात्वर्थभावनयोरेव विधेयत्वं गम्यते न तत्सन्निधिमात्रेणैव बाधितुं शक्यते। यदि हि तनूनपादादि दध्यादिवद्विधीयमानमनर्थकं स्यात् ततस्तस्यावश्यं विधीयमानत्वादनेकार्थविध्यशक्त्या कर्मानुवादाकाङ्क्षायां सन्निधिकृतमभेदज्ञानं विधिरनुमन्येत, यदा तु मन्त्रवर्णप्राप्तत्वात्तनूनपादादिदेवतानां तत्प्रख्यन्यायेन नामधेयत्वेनानुवादत्वेन वा संभवान्नानर्थक्यं, तदा श्रुत्यवगतं कर्मविधानं न बाधितव्यम्। तस्माद्यागभेदाद्भावनाभेदः तद्भेदाच्चापूर्वभेदः॥

आघाराद्याग्नेयादीनामङ्गाङ्गिभावाधिकरणम्।

सू० प्रकरणं तु पौर्णमास्यां रूपावचनात् ॥ ३ ॥

इदानीमभ्यासस्यापवादः क्रियते। "यदा ऽऽग्नेयोऽष्टाकपालोऽमावस्यायां पौर्णमास्यां चाच्युतोभवति तावब्रूतामग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन् ताभ्यामेतमग्नीषोमीयमेकादशकपालं पौर्णमासे प्रायच्छत् ऐन्द्रं दध्यमावास्यायामैन्द्रं पयोऽमावस्याया"मिति कालसंयुक्तानि वचनानि श्रूयन्ते। तथा "समिधो यजति" 'तनूनपातं यजति" "आज्यभागौ यजति" इत्यकालसंयुक्तानि। तेषां सन्निधौ "य एवं विद्वान् पौर्णमासीं यजते" य एवं विद्वानमावास्यां यजत" इति वाक्यद्वयं श्रूयते। तथा "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते"ति फलं श्रुतं तत्र विचार्यते किमनेन फलवचनगतेन यजिना सन्निहिताः सर्वे यागा राजसूयवत् फलं प्रति विधीयमानाः समप्रधानाः? किं वा य एव कालसंयुक्ता यागास्तेषामेव फलसंबन्धेन प्राधान्यमन्येषां तदङ्गते?ति तत्सिद्ध्यर्थमिदं विचारयितव्यम्॥ य एवं विद्वानिति संयुक्तो यजतिप्रकृतानामाग्नेयादीनां पौर्णमास्यमावास्याकालसंयुक्तानां तन्निमित्तप्रसिद्धनामधेयत्वाभ्यां पौर्णमास्यमावास्यापदाभ्यां विशेष्यमाणावनुवदतारा? वुतापूर्वयोः कर्मणोरेवं संज्ञयोर्विधातारा? विति। तत्सिद्ध्यर्थमप्येतच्चिन्तनीयं किमपूर्वकर्मविधौ रूपं लभ्यते? न वे?ति। ततोऽप्येतद्विचार्यते किं वार्त्रघ्नी पौर्णमास्यामनूच्येते वृधन्वती अमा-

वास्यायामित्येताभ्यां यदाऽऽग्नेयोऽष्टाकपाल इत्यादिभिर्वाक्यैः कर्मणो-त्तयोरूपं विधातुं शक्यते न वेति, ततोऽपि पुनर्विचारणीयं किं प्राप्त-कर्मानुवादेनानेकगुणविधानमेकेन विधिना संभव? त्युत नेति ॥ अत्र चाभ्यासापवादार्थत्वादधिकरणस्य य एवं विद्वानित्येवं संयुक्तमेव वाक्य-द्वयमधिकरणस्य विषयः, तच्च कर्मान्तरविधायकं समुदायानुवादकं वेत्येतावदेवाधिकरणशरीरम् । एतस्य तु फलं समप्रधानाङ्गाङ्गिभाववि-चारः । फलविचारविषयत्वेन चाग्नेयादिवाक्यानामुपन्यासो, नाधिकरणशरी-रविषयत्वेन । तत्र पूर्वाधिकरणन्यायेन विधेः पुनः श्रुत्या कर्मान्तरत्वं पौर्ण-मास्यमावास्यासंयुक्तयोः। किं पुनरनयोर्द्रव्यदेवतम्? । उच्यते । द्रव्यं ताव"च्च-तुर्ध्रुवायां गृह्णातीत्यसंयुक्तोत्पन्नं ध्रौवमाज्यं प्रयोजनापेक्षम् । द्रव्यापेक्षिणां प्रकरणगतानां सर्वकर्मणामविशेषेण लिङ्गप्रकरणाभ्यामङ्गं भवदुपांशुयाजा-दीनामिवानयोरपि कर्मणोर्लभ्यते । वचनाद्वा, सर्वस्मै वा एतद्यज्ञाय गृह्यते यद् ध्रुवायामाज्यमिति । देवताऽपि वार्त्रघ्नी पौर्णमास्यामनूच्येते वृधन्वती अमावस्यायामिति वाक्याभ्यां पौर्णमास्यमावास्यासंज्ञयोर्मन्त्रविधानान्मा-न्त्रवर्णिकीति रूपलाभात्कर्मान्तरत्वम् । अन्यथा समस्तानुवादस्यानर्थक्यं न केवलं य एवं विद्वानित्येतयोरेवानर्थक्यं पौर्णमास्यां पौर्णमास्या यजे-तामावास्यायाममावास्यया यजेत इत्यपि वाक्यद्वयमनर्थकं स्यात् । न ह्यनेनाग्नेयादीनां कालो विधीयते तेषामुत्पत्तिवाक्यैरेव कालस्या-विहितत्वात्, यदा तु य एवं विद्वानित्येताभ्यां पौर्णमास्यमावास्यासंज्ञके कर्मान्तरे विधीयेते तदा तयोः कालविधानात्पौर्णमास्यां पौर्णमास्या-यजेतेत्यपि वाक्यद्वयमर्थवद्भवति तस्मात्कर्मान्तरविधानम् । यदा त्वेवं तदा सर्वे यागाः फलसंबन्धात्समप्रधानभूताः न हि तदा फलवाक्यगतं दर्शपूर्णमासपदमलमाख्यातमवच्छेत्तुमप्रसिद्धार्थत्वात् । कालनिमित्तं ह्येतद् द्विवचनान्तं च तच्छेषामुत्पत्तौ द्वित्वमाज्याभागादीनां न तेषु प्रातिपदिकं समर्थं कालयोगाभावाच्छेषां त्वाग्नेयादीनां कालयोगस्तेषां बहुत्वात् द्विवचनानुपपत्तेरसमर्थं पदम् । न च समुदायद्वयापेक्षया द्वित्वसंभवः, समु-दायो हि पूर्वसिद्ध एव वा गृह्येत अत्रैव राजसूयवद्वा संपाद्येत, न

तावत्पूर्वसिद्धमस्ति समुदायद्वयमेकावगत्यनुप्रवेशेन हि कर्मणामेकसमुदायापत्तिः, एकाभिधानेन चैकावगतिः । न चाग्नेयादीनां त्रिकस्य त्रिकस्यैकमभिधानमस्ति प्राक् सिद्धं य एवं विद्वानित्येतयोस्तदनुवादकत्वानङ्गीकरणात् उत्पत्तिवाक्येषु चैकैककर्मविधानेन समुदायाभावात्। तत्र तु फलवाक्यगतेन यजिना तन्त्रेण सर्वेषामुपादानात्समुदायापत्तिः स्यात् । तथा चैककर्मसमुदायनिष्पत्तौ राजसूयवत् द्विवचनानुपपत्तिः । न च दर्शशब्देन पौर्णमासशब्देन च त्रिकस्य त्रिकस्य पृथक् तन्त्रोपादानात्समुदायद्वयसिद्धिरिति वाच्यम्, तयोराख्यातपरतन्त्रत्वात् । तद्यत्राख्यातं वर्त्तते तत्राभ्यामपि वर्त्तितव्यं । न चाख्यातं तन्त्रेण त्रीन् यागान् प्रथममुपादाय पुनरन्यानुपादातुमर्हति सकृदुच्चरितत्वात् ।

न च समुदायद्वयं तन्त्रेण शक्यमुपादातुं, समुदायद्वयस्य प्रागसिद्धत्वात् । तदिदमाख्यातं बहून् यागान् सन्निहितान् फलमेकं प्रति तन्त्रेणोपादत्ते, तेषां च तदुपादानादेवैकः समुदायो निष्पद्यते ततश्च नामधेयमपि समुदाय्यभिप्रायं बहुवचनं, समुदायाभिप्रायं चैकवचनं लभ्येत न कथं चिद् द्विवचनं, द्विवचनान्तं चेदम् अतोऽप्रसिद्धर्थत्वात् नानेनाख्यातं विशेषे स्थापयितुं शक्यमिति अविशेषात्सर्वेषां फलसंबन्धात्प्राधान्यं, नामधेयमपि तत्परतन्त्रत्वात्सर्वेषामेवाव्युत्पन्नं द्विवचनप्रतिरूपकमिति प्राप्तेऽभिधीयते ॥

कर्मान्तरविधायित्वे स्यात्सर्वेषां प्रधानता
समुदायानुवादो तु रूपाभावादिमौ मतौ ॥ १ ॥
द्रव्यं कथंचिल्लभ्येत देवता तु न लभ्यते
लभ्यते मन्त्रवर्णाच्चेचाज्यभागाङ्गता यतः ॥ २ ॥
लिङ्गक्रमाभ्यां मन्त्राणामाज्यभागाङ्गता स्थिता
वचनन्तु व्यवस्थार्थमल्पार्थत्वादबाधतः ॥ ३ ॥

वार्त्तघ्नीवृधन्वतीनां हि लिङ्गक्रमाभ्यामाज्यभागाङ्गत्वेनाव्यवस्थया प्राप्तानां तादर्थ्याबाधेन व्यवस्थामात्रं वार्त्तघ्नी पौर्णमास्यां वृधन्वती अमावास्यायामित्येताभ्यां विधीयते लाघवादिति नैतेषां मन्त्राणां य एवं विद्वानिति विहितकर्मान्तरसंबन्धः येन मान्त्रवर्णिकी देवता स्यात् ॥

न च कल्पयितुं देवता शक्यते, विधिगम्यत्वाद्देवतात्वस्य । न चासत्यां देवतायां यागानुष्ठानं संभवतीति गत्यभावात्समुदायानुवादत्वं, तत्र पौर्णमासीसंयुक्तेन वाक्येनोपपदवशात्पौर्णमासीकालयुक्तानां त्रयाणां तत्क्लेशानुवादः, तेनैवैकानुवादेन त्रयाणामपि तेषामेकसमुदायापत्तिः, तदेकत्वाच्च पौर्णमासीमित्येकवचनम्, एवममावास्यासंयुक्तेऽपि । ततश्च समुदायद्वयसिद्धिः कालयोगाच्चाग्नेयादीनां प्रसिद्धार्थं दर्शपूर्णमासाभ्यामिति द्विवचनान्तं कालयोगि चोपपदं शङ्कात्याख्यातं विशेषे स्थापयितुमिति तेषामेव प्राधान्यमितीयमेव च द्विवचनापेक्षितसमुदायद्वयसिद्धिः समुदायानुवादप्रयोजनमिति नानर्थक्यम् । यत्तूक्तं पौर्णमास्यां पौर्णमास्येत्येतदपि वाक्यद्वयमनर्थकं स्यादिति नानर्थकम्, आग्नेयादीनामेव त्रिकस्य त्रिकस्य सहप्रयोगार्थत्वात् उत्पत्तिवाक्येषु हि तेषां प्रत्येकं कालयोगाच्चैकप्रयोगता सिद्ध्येत् । अनेन तु वचनेन यथैकप्रयोगसिद्धिस्तथैकादशे वक्ष्यामः । तस्मादरूपत्वात्प्रयोजनवत्त्वाच्च समुदायानुवादत्वम् । इदानीं पूर्वपक्षवादी प्रकारान्तरेण प्रत्यवतिष्ठते ।

भवेदेवमरूपत्वे समुदायानुवादता ।
यदाग्नेयादिवाक्यैस्तु तयोरूपं विधीयते ॥

य एवं विद्वानित्येताभ्यां पौर्णमास्यमावास्यसंज्ञकौ यागौ विधीयेते यदाऽऽग्नेयोऽष्टाकपाल इत्यादिभिस्तु पौर्णमास्यमावास्यासंज्ञाभ्यां तावेव यागावनूद्याष्टाकपालादिद्रव्यमग्न्यादयश्च देवता विधीयन्ते इति नारूपत्वम् । एवं सर्ववाक्यानि विधायकानि भवन्ति न कश्चित्समुदायानुवादः । यागश्च प्रत्यक्षश्रुतो न द्रव्यदेवतासंयोगादनुमातव्यो भवतीति श्रेयानयं पक्षः ।

अत्रोच्यते गुणो ऽनेकः प्राप्तकर्मानुवादतः ।
नैकेन विधिना शक्यो विधातुमसकृच्छ्रुतेः ॥

भावनास्थोऽपि विधिस्तादर्थ्यभेदेन तत्र तत्र संक्रामति यत्परश्च विधिः स एव विधेयो नान्यस्तद्देशोऽपि । तद्यदाऽपूर्वकर्मपरो विधिर्भवति तदाऽस्यैकस्यानेकगुणविशिष्टस्य विधानाद्विशेषणानां चार्थापत्त्या विधिसि-

द्वेर्नासकृच्छ्रवणादोषः प्रसज्यते। यदा त्वन्यतः प्राप्तं कर्म भवति तदा तस्या-विधेयत्वाद्विशेषणपरो भवति । तत्रानेकेषु विशेषणेष्वेकेन विहितेनेतरा-नात्तेपात्तत्रापि श्रुत्यैव विधानं कर्तव्यमित्यावृत्तिप्रसङ्गः, विशेषणान्यपि यानि प्रागेव क्रियान्वयान्मिथः संबन्धितया शब्देन प्रतिपादितानि विनैव विधिना प्रसिद्धसंबन्धानि भवन्ति यथा पशुनेत्येकपदोपात्तानि जाति-लिङ्गसङ्ख्याकारकाणि । तत्र हि प्रत्ययाविधेयमेकं प्रधानभूतं करणकारक-मुपसर्जनीभूतजात्यादिविशिष्टं पदेन प्रतिपादितम् । प्रसिद्धा च कारकश-क्तिर्जात्यादीनां प्रमाणान्तरेण विनैव विधिनेति शक्यं प्राप्तकर्मानुवादेनापि तदेकं विधातुम् । भिन्नपदोपात्तान्यपि यानि सामानाधिकरण्येन षष्ठ्या वा क्रियान्वयात्प्रागेव मिथःसंबन्धं शब्दतो वस्तुतश्च विधिमनादृत्यैव लभन्ते यथाऽभ्युदितेष्टौ ये तोदिष्ठास्तान्विष्णवे शिपिविष्टाय शृते चरुम् । तत्र हि शिपिविष्टशब्दो यौगिकः शक्नोति सन्निहितेन विष्णुशब्देन श्रुत्यैव सामा-नाधिकरण्यं प्रतिपत्तुम्, प्रसिद्धश्च विष्णुशिपिविष्टो मन्त्रार्थवादादिभिरिति तत्र केवलं शृतसहिततोदिष्ठसंबन्धो विधिना बोधयितव्यः यो विष्णुः शिपिविष्टः स शृतस्य तोदिष्ठानां च देवतेति । तेनैकार्थविधानाद्विधिप्र-त्ययस्य नासकृदुच्चारणापत्तिः । अत्र त्वाग्नेयोऽष्टाकपालः पौर्णमास्यामिति यद्यपि तद्धितस्य सन्निहितद्रव्यवचनत्वात्सामानाधिकरण्यलक्षणः शब्दः संबन्धः प्रागेव पौर्णमासीसंबन्धादाग्नेयोऽष्टाकपालयोर्लभ्यते । तथाऽप्यसौ संबन्धः प्रमाणान्तरेणासिद्धत्वादत्रैव विधातव्यः । तं तु विधाय पुनः पौर्ण-मासीसंबन्धविधिरित्यावृत्तिप्रसङ्गः । न त्वेवं संभवति य आग्नेयोऽष्टाक-पालः स पौर्णमास्यामिति असिद्धत्वादाग्नेयस्याष्टाकपालस्य । अत एव वक्तव्यम् अष्टाकपाल आग्नेयः स च पौर्णमास्यामित्यावृत्तिः प्रत्ययस्य स्यात्तस्माद्य एवं विद्वानिति विहितकर्मानुवादेनात्र गुणविध्यसंभवादवश्य-मेव भावनान्तरं द्रव्यदेवताविशिष्टमाक्षिप्तयजिकं विधातव्यम् । न च

भावनान्तरं भावनान्तरस्य रूपं भवतीति सिद्धमरूपत्वमतः समु-दानुवादो ॥

उपांशुयाजाऽपूर्वताऽधिकरणम् ।

सू० पौर्णमासीवदुपांशुयाजः स्यात् ॥ ५ ॥

अतः परं समुदायानुवादापवादकतयाऽधिकरणत्रयमारभ्यते । दर्शपूर्णमासयोः श्रूयते "जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशौ उपांशुयाजमन्तरा यजति विष्णुरुपांशु यष्टव्योऽजामित्वाय प्रजापतिरुपांशु यष्टव्यो ऽजामित्वायाग्नीषोमावुपांशु यष्टव्यावजामित्वाये"ति तथाऽग्नेयाग्नीषोमीयपुरोडाशयाज्यानुवाक्यायुगलयोर्मध्ये वैष्णवप्राजापत्याग्नीषोमीयाणि याज्यानुवाक्यायुगलान्याम्नातानि शाखाभेदेन। तत्र संशयः । किमुपांशुयाजमन्तरा यजतीति समुदायानुवादो विष्ण्वादिगुणकानां यागानामुत विधि ? रिति । तदर्थं किमस्य रूपमस्ति ? न वेति, तदर्थं च विष्णुरुपांशु यष्टव्य इत्यादिभिर्विष्ण्वादिदेवत्याः यागा विधीयन्ते ? । किम्वाऽयमर्थवाद इति । यदि विधयस्तत एषामेव यागानां विष्ण्वादिदैवत्याः याज्यानुवाक्याः लिङ्गक्रमाभ्यामङ्गं भवन्ति नोपांशुयाजमन्तरा यजतीत्यस्य सामर्थ्यापरिज्ञानात्ततश्च मान्त्रवर्णिकदेवता ऽलाभादरूपः सचगत्या विष्ण्वादियागानां समुदायमनुवदति । यदा तु विष्ण्वादिश्रवणमर्थवादस्तदा याज्यानुवाक्या यागान्तराभावादुपांशुयाजमन्तरा यजतीत्यस्यैव क्रमादङ्गं भवन्ति दशमाधिकरणन्यायेनेति मान्त्रवर्णिकी देवता लभ्यते ध्रौवं च द्रव्यमिति रूपलाभाद्विधिरेव भवतीति ॥

तत्र विष्ण्वादिवाक्येषु तव्यप्रत्ययदर्शनात् ।
ऐकान्तिको विधिर्नात्र वर्त्तमानापदेशतः ॥

वैश्वानरवाक्ये हि यदष्टाकपालो भवतीत्यादिषु विधिपुरुषव्यापारयोरश्रवणाद्यच्छब्दोपबन्धाद्वर्त्तमानापदेशेनार्थवादरूपत्वात् द्वादशकपालं निर्वपेदिति विधियुक्तभावनाश्रवणात्तदुपक्रमोपसंहारमध्यवर्त्तिनामष्टत्वादीनां तदेकवाक्यत्वं न बाधितव्यमिति गुणफलविधानं निरस्तम् । इह तु सत्यपि जामित्वाजामित्वोपक्रमोपसंहारमध्यवर्त्तित्वे यच्छब्दाद्यनुपहतविधिश्रवणादजामित्वायेति च तेष्वेव प्रत्येकमुपक्रमोपन्यस्तजामित्वदोषपरिहारप्रशंसाऽवगमाद्वाक्यभेदमङ्गीकृत्य विधित्वमध्यव-

सीयते । जामि वा एतदिति चोपक्रमस्त्रयाणामपि तेषामनुषङ्गेण वाक्यशेषो भवति । सति च तेषां विधित्वे रूपाभावाद्वर्त्तमानापदेशाच्चोपांशु याजं यजतीत्ययं जामित्वोपन्यासेन प्रस्तुतानां वक्ष्यमाणानां विष्ण्वादियागानां समुदायानुवाद इति प्राप्ते ऽभिधीयते ॥

जामित्वोपक्रमादेकमजामित्वोपसंहृतेः ।
वाक्यं तन्मध्यपाताच्च विष्ण्वादेरर्थवादता ॥
वाक्यशेषानुषङ्गस्तु गतौ सत्यां न युज्यते ।
अनूचीननिमित्तश्च जामिदोषः प्रकीर्त्तितः ॥
तेनान्तरालसंयुक्तो विधिस्तत्रैव निश्चितः ।
अजामित्वं च तस्यैव प्रशंसेत्यवधारितम् ॥

जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशाविति पुरोडाशैरन्तर्ये जामिदोषाभिधानादुपक्रम एवैतदध्यवसितम् । नूनमन्तराले किंचिद्विधित्सितं तदन्तरालकरणादेवाजामित्वगुणेन प्रशंसितमिति । किं तद्विधेयमित्येतावदनवगतमन्तरालसंयुक्तं तद्विधानमित्यवगतमेव ॥

न च विष्ण्वादियुक्तेष्वनन्तरालसंयोगोऽस्ति येन विधिः स्यात् अन्तराले चाविहितानां नाजामित्वेन प्रशंसाऽवकल्पते । पुरोडाशैरन्तर्याज्जामिता स्यादतोऽन्यत्र क्वचिद्विष्ण्वादयो यष्टव्या अजामित्वायेति किङ्केन सङ्गतं, तस्मादुपांशुयाजमन्तरा यजतीत्युपांशुगुणको यागोऽन्तरालोपलक्षिते काले विधीयते तदर्थवादोऽयं विष्णुरुपांशु यष्टव्य इत्यादिमन्त्रवर्णप्राप्तविष्ण्वाद्यनुवादेनेति न्याय्यम्' । एवं चैकवाक्यत्वं न बाधितं भविष्यति न चानुषङ्गः सत्यां गतौ कल्पितो भवति । तस्माद्विधिरयं न समुदायानुवादः ॥

आघाराद्यपूर्वताऽधिकरणम् ।

सू० आघाराग्निहोत्रमरूपत्वात् ॥ ४ ॥

"अग्निहोत्रं जुहोति" "आघारमाघारयती"ति निर्गुणं कर्मसंज्ञायुक्तं श्रुतं तत्सन्निधौ दध्ना जुहोति ऊर्ध्वमाघारयतीत्यादीनि सगुणानि श्रवणानि । तत्र संशयः किं दध्ना जुहोतीत्यादिभिर्गुणविशिष्टा होमाघारा विधीयन्ते । तेषां च रूपवतामरूपोऽयमग्निहोत्रं जुहोतीत्याघारमाघारयतीति समुदा-

यानुवादः? उतायमेव कर्मविधिरिति तत्रैव गुणविधय इति । तदर्थमिदं विचार्यते किमविज्ञातरूपं कर्म विधातुमेवाशक्यमुताविज्ञातरूपमपि ताव-द्विधाय पश्चाद्रूपज्ञानं संभवतीति । तथेदमपरं चिन्तनीयं प्राप्ते कर्मणि गुणकर्ममात्रविधानं संभवति? उत-ने-ति । तत्र रूपापरिज्ञाने विशेषानव-धारणात् ।

सामान्यस्याविधेयत्वाद्वानयोर्विधिसंभवः ॥
न च दध्यादिभिर्वाक्यैः प्राप्तकर्मानुवादतः ।
गुणमात्रं विधातव्यमव्यापारात्मकं यतः ॥

अग्निहोत्रं जुहोतीति होमसामान्यमवगम्यते । न च तद्वि-धानयोग्यं, विशेषस्तु योग्यः स चानुरञ्जकाधीननिरूपणो न जुहोती-त्येतावता गम्यते । न चेह द्रव्यदेवतादिकमनुरञ्जकमुपात्तं यद्वशेन विशेष्यावधारणं स्यादनिरूपितश्च विशेषो न विधिनाऽन्वेतुं योग्यः तेनावगतस्य सामान्यस्यायोग्यत्वाद्योग्यस्य च विशेषस्यानवगतत्वाच्चात्र विधिः संभवति तथाऽग्निहोत्रमिति संज्ञा च विशेषविषयत्वादनवगते विशेषे दुर्घटैव । यदा चैवं विधिरेवानिष्पन्नस्तदा न दध्यादिवाक्यैरपि गुणविधानं शक्यं विहिते कर्मणि तदनुवादेन तैर्गुणो विधातव्यो न चात्र विहितं कर्मेत्युक्तम् । अपि च यद्यप्यत्र कर्म विधीयते तथाऽपि न शक्यते गुणो विधातुमव्यापारात्मकत्वात्, चेतनप्रवर्त्तनात्मको हि विधिर्न चासौ स्व-व्यापारादन्यत्र प्रवर्त्तयितुं शक्यते । तेन दध्यादिवाक्यैरपि स्वस्वव्यापारे एव विधातव्यः । तद्विशेषगुणतया च दध्यादीनां विधिरङ्गीकर्त्तव्यो न चाग्निहोत्रवाक्यविहितो होमः पुनरत्र दधिविशिष्टो विधातुं शक्यते विहि-तस्य विधानायोगात् तेन दधिमात्रमवशिष्यते तच्चाविधेयमित्युक्तम् । अतो ऽत्र दध्यादिविशिष्टा होमा विधीयन्ते । तथा चाग्निहोत्रमित्यस्यान्य-तोऽपि रूपालाभात्समुदायानुवादत्व,मेव माघारवाक्येऽपीति प्राप्ते ब्रूमः ॥

प्रकृतानामसद्भावात्कर्मणां नानुवादता ।
न हि दध्यादिवाक्येषु दध्याद्याक्षिप्तशक्तिना ॥

विधिना शक्यते कर्म विधातुमितरत्र तु ।
अनन्याक्षिप्तशक्तित्वाद्विधिः कर्मैकगोचरः ॥

"दध्ना जुहोतीति ह्यप्राप्तदध्याद्याक्षिप्तशक्तिर्विधायको ऽनेकविधिनिमित्तगौरवपरिजिहीर्षया कर्मानुवादं प्रार्थयमानो यदि न कथंचिदपि प्राप्तिं लभते ततो विशिष्टविधिमङ्गीकरोति । सत्यां त्वग्निहोत्रादिवाक्येन कर्मणः प्राप्तौ तदनुवादेन गुणमात्रविधानं लाघवान्न तु विशिष्टविधानम् । अतश्चाविहितत्वाद्धोमानामप्राप्तत्वादग्निहोत्रवाक्येऽनन्याक्षिप्तशक्तित्वात् विधायकः कर्म विधत्ते । यद्यपि तत्र रूपं न ज्ञायते तथाऽपि विधिवशादेव सामान्यमतिक्रम्य तल्लक्षितोऽन्यत्राविहितो होमविशेषोऽयमित्येतावतैव गम्यमानत्वाच्च विधानासम्भवः, लक्षितविशेषविषयत्वेन संज्ञोपबन्धोऽप्युपपन्नः । तस्य दध्यादिवाक्यरूपविधानाद्रूपत्वं स्वरूपेण विधेयमपि दध्यादिव्यापारविशिष्टं शक्यं विधातुं दध्ना जुहुयादिति । यद्यपि न क्रियां विहाय द्रव्यविधिः प्रतीयते तथाऽपि तस्यामेव विशिष्टायां प्रतीयमानो विधिः स्वरूपेण तस्याः प्राप्तत्वादप्राप्तगुणमात्रपरतामवलम्बमानः फलतो गुणविधिरित्युच्यते न प्रतीतितः । तेनात्र गुणमात्रविधानम् अग्निहोत्रं जुहोतीति प्रकृतकर्माभावाद्रूपलाभाच्च विधिरेव न समुदायानुवादः ॥

पशुसोमापूर्वताऽधिकरणम् ।

सू० द्रव्यसंयोगाच्चोदना पशुसोमयोः प्रकरणे ह्यनर्थको द्रव्यसंयोगो न हि तस्य गुणार्थेन ॥ ५ ॥

"अग्नीषोमीयं पशुमालभेते"ति श्रूयते । तथा "हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षस" इत्यादीनि । तथा सोमेन यजेतेति श्रुतं तत्र "ऐन्द्रवायवं गृह्णाति मैत्रावरुणं गृह्णाती"त्येवमादीनि । तत्र संशयः किमवद्यतिगृह्णातिभ्यां चोदितानां कर्मणामिवालभतियजती समुदायस्यानुवदितारौ? उतापूर्वयोः कर्मणोर्विधारौ ? विति, तदर्थं च किमैन्द्रवायवादिवाक्यैर्यागा विधीयन्ते? किम्वा संस्कारमात्रमिति तत्र

"ऐन्द्रवायवमित्यादि द्रव्यदेवतसङ्गतेः ।
याग एव विधातव्यो गृह्णातौ न हि देवता" ॥

ऐन्द्रवायवमित्यादि तावद्देवतातद्धितोऽयम् । न च देवतायागादन्येन संपादयितुं शक्यते, येन ग्रहणेनैन्द्रवायवं कुर्यादिति वाक्यार्थः स्यात् । न वैन्द्रवायवं सन्तं गृह्णातीति संभवति असिद्धत्वादैन्द्रवायवस्य, तेनावश्यं यागा एव विधातव्याः । ननु नावश्यं देवतातद्धित एवायं तस्येदमिति संबन्धमात्रेऽपि तस्य स्मरणात्तेनैन्द्रवायूद्देशविशिष्टग्रहणमात्रविधिः संभवत्येव, भवेदेवमैन्द्रवायवादिषु परिहारः मरुत्वतीयादिषु देवतायामेव छविधानादवश्यं देवतासंबन्धोऽङ्गीकर्त्तव्यः । तथा चैन्द्रवायवादिष्वपि तथाऽस्तु किमनिरूपितसंबन्धमात्राश्रयणेन, तस्माद्यागविधानम् । एवं च सोमेन यजेतेति देवताऽभावादरूपः सन्समुदायानुवाद एव भवति यजिः सोमशब्देन तत्रैव गृह्णातिना सामान्याक्षिप्तं द्रव्यं नियम्यते । यद्वाऽख्याधारया गृह्णातीति गुणवाक्येन धारासमर्थे द्रव द्रव्यमात्रावगमात्तत्प्रकृतित्वेन सोमविधानं व्रीहिभिर्यजेतेतिवत् । ननु विकृतौ प्राप्तायां प्रकृतिविधानं युक्तं । न चैन्द्रवायवादिवाक्येषु पुरोडाशवत् विकृतिरुपात्ता यस्याः प्रकृतिर्विधीयेत । यदि तु सोममभिषुणोति सोमं पावयतीत्यादिभिः सोमरसस्य प्रकृतत्वात्तद्विषयत्वाच्च गृह्णातेः प्राप्त एव विकृतिभूतो रस इत्युच्यते ततस्तस्य निर्ज्ञातसोमप्रकृतित्वाच्च भूयः सोमविधानं संभवति । न चाऽख्वाधारयेत्यन्तोऽपि विकृतिप्राप्तिरूदकस्यापि द्रवद्रव्यस्य संभवात् । उच्यते यदि विकारानुवादेन प्रकृतिर्विधातव्या स्यात्ततोऽयं दोषः स्याच्च च व्रीहिभिर्यजेत इत्यपि पुरोडाशानुवादेन व्रीहिविधिः पुरोडाशस्यानुपात्तत्वात् । व्रीहिभिर्यजेतेति च करणविभक्तेर्द्रव्यसंबन्धाभावात्तेन यागं प्रति करणत्वेन विहिता व्रीहयः पुरोडाशवद्धे यागे साक्षात्करणत्वासंभवात्तत्प्रकृतित्वेनैव करणं भवन्तीति प्रकृतिद्रव्यविधिरित्युच्यते न च प्रकृतित्वेनैव विधानात्, एवमत्रापि यागं प्रति करणत्वेन विहितः सोमो धारासमर्थद्रव्यावद्धे यागे तत्प्रकृतिर्भवति, सम्भवति च सोमप्रकृतिकं द्रवद्रव्यमिति युक्तं प्रकृतिवि-

धानम्। अथवा सोममभिषुणोतीत्यादिभिः सोमरसस्य प्राप्तत्वात् सोमशब्दोऽप्यनुवाद एव तत्प्रख्यन्यायेन नामधेयं भवति। तदेवं त्रेधा पूर्वपक्षः सोमशब्देन द्रव्यं विधीयते? प्रकृतिद्रव्यं वा, नामधेयं वेऽति। यजिस्तु सर्वथैव समुदायानुवादः। तथा च यागभेदादैन्द्रवायवादीनां समुच्चये सति दशैतानध्वर्युः प्रातः सवने ग्रहान् गृह्णाति "अश्विनो दशमो गृह्यते तं तृतीयं जुहोति" इत्यादि क्रमसमुच्चयदर्शनमुपपद्यते। अन्यथा त्वेकत्वाद्यागस्य तदर्थानां च देवतानां ग्रहाणां च विकल्पे सति क्रमादिदर्शनानुपपत्तिः। यदि च सोमेन यजेतेति यागविधिः स्यात्ततः सोमशब्दस्य लतावचनत्वात्तयैवोत्पत्तिशिष्टया यागः साधनीय इति नैन्द्रवायवादिवाक्यैः रसविषयैर्गुणविधिः संभवतीत्यानर्थक्यं तेषां स्यात्। अभिषवादिभिश्चोत्पत्तिशिष्टा लता न रसीकर्तुं शक्यते। तस्मादैन्द्रवायवादिभिरेव यागविधिः। एवमग्नीषोमीयं पशुमालभेतेत्यत्रापि यागविधौ समुत्पत्तिशिष्टपशुजातीयद्रव्यमेव यागसाधनमिति हृदयाद्यवदानवचनानि तत्र गुणविधित्वेनासम्भवादनर्थकानि स्युः। अतो हृदयादिवाक्यविहितहृदयादिद्रव्यकर्मानुवादेन देवताविधानमेतदिति वक्तव्यम्। पशुशब्दोऽपि हृदयादीनां "छागस्य वपाया मेदस" इति मन्त्रवर्णाच्छागप्रकृतित्वात्तेषामेव विकृतौ प्रकृतिवदुपचारादनुवादः। कथं पुनः कर्माणि हृदयादिवाक्यैर्विधीयन्ते यान्यनूद्य देवताविधानम् उच्यते द्वावत्र पक्षौ एकस्तावदवदानमात्रं विधीयते द्रव्यदेवतासंयोगाश्रवणात्त्यजयज्यश्रवणाच्च तदाक्षिप्तं तु स्पर्शनमालभतिनाऽनूद्यते पशुशब्देन तु हृदयादिप्रकृतिद्रव्यवाचिना उपचाराद्धृदयादिद्रव्यम् अग्नीषोमीयशब्देन तु हृदयादिप्रकृतद्रव्ये ऽग्नीषोमीयत्वेन विहिते तत्रैतावन्तो यागाः कल्पन्त इति। अन्यस्त्वसत्यपि देवतासंबन्धश्रवणे हृदयाद्यवदानानां सान्नाय्यावदानप्रकृतित्वात्तद्वदत्र यागसाधनत्वं हृदयादीनामभिषवयुक्पूतीकवल्लभ्यते न यागानुवादेनैव देवतादिविधिरिति तस्मात्समुदायानुवाद इति प्राप्ते ऽभिधीयते

द्रव्यान्तरेण संयोगान्नानुवादोऽवकल्पते।
तेन यागविधी एतावन्ये गुणविधायिनः॥

पशुशब्दो हि जातिवचनोऽतज्जातीयेषु विना कारणेन लक्षणया भवितुमर्हति श्रौतपशुविशिष्टयागविधानोपपत्तेः।

न च पशुविशिष्टयागे विहिते हृदयादिवाक्यानां गुणविधित्वासंभवः, पशोरेव हृदयादिद्वारेण करणत्वोपपत्तेः, प्रणाड्याऽपि हि येन यत्क्रियते भवति तत्करणं तस्य। यथा लोके गोमयेन पचतीति, वेदेऽपि तुषपक्वा भवन्ति यागेन स्वर्गमिति तस्मादेको यागः पशुविशिष्टोऽग्नीषोमदेवत्यो विधीयते। हृदयादिवचनानि तत्रैव संस्कारमात्रविधानानि तथा सोमेन यजेतेति सोमशब्दो लतावचनः। न चासौ प्रकृतेष्वैन्द्रवायवादिषु हविष्ट्वेन विधातुं शक्यते धारया गृह्णातीति गुणवाक्यसंनिधापितस्य द्रवद्रव्यस्यैन्द्रवायवमिति तद्धितेन देवतासंबन्धित्वेन श्रुत्याऽभिधानाच्च तावद्गुविर्विधानम्। नापि तत्प्रख्यन्यायेन नामधेयत्वं सोमरसस्य प्रागस्माद्वचनादप्राप्तेः। नन्वैन्द्रवायवमिति प्रकृताभिधायी तद्धितोऽभिषवादिवाक्यैः प्रकृतं सोमरसमभिधत्ते। नैवम् श्रवण्या धारयेत्यनेन व्यवधानादभिषवादिवाक्यानामप्रकृतत्वाद्द्वारासमर्थद्रव्यमात्रमत्र प्रकृतम् न च धारावाक्यं सोमरसविषयं धारामात्रश्रवणात्तन्मात्रेण च वाक्यार्थोपपत्तेः सत्यपि संनिधाने तद्विषयत्वं धारावाक्यस्याप्रमाणकम्। संस्कारवाक्येषु हि लौकिकस्य संस्कारानुपपत्तेरपूर्वसाधनविशेषलक्षणया कथंचित्प्रकृतग्रहणं युक्तम्। धारावाक्ये तु ग्रहणोद्देशेन धारामात्रविधानाच्च प्रकृतापेक्षा। किं चास्मिन्पक्षेऽयमपि नियमो नास्ति य एव क्रये सोमः स एवाभिषवे य एवाभिषवे स एव पावने इति सर्वेषां क्रयादिवाक्यानां लौकिकग्रहणेनारादुपकारकक्रयादिविधायिनां मिथोऽनपेक्षत्वात्।

न च प्रकरणाद्विशेषलाभः प्रकरणस्याविशेषकत्वात्। नाप्यधिकाराद्विशेषसिद्धिस्तुल्येषु नाधिकारः स्यादिति हि द्रव्यसंख्याहेतुसमुदायमित्यत्र वक्ष्यति। यदि तं सोममभिषुणुयादिति तच्छब्दः श्रूयते ततः सा वैश्वदेवीतिवत्प्रकृतग्रहणं भवेत् सोममात्रश्रवणाच्च प्रकृतगामित्वम्।

एवं धारावाक्येऽपि ऐन्द्रवायवादिवाक्येषु प्रकृतगामिष्वपि धारासमर्थमेव द्रव्यं गृह्यते न सोमरसस्तस्याप्रकृतत्वादित्युक्तम् । अतो न तत्प्रख्यन्यायेन नामधेयत्वम् । एतेनैकदेशिनः संस्कारं वाक्यैः सोमस्य प्राप्तिमभिदधाना निरस्ताः, तेषां सिद्धान्तेऽपि तथैव सोमप्राप्तेः सोमपदं नामधेयं स्यादित्यास्तां तावत् । एवं तावद्गुणविधिर्नाविधानं नापि नामधेयत्वमित्युक्तम् । प्रकृतद्रव्यविधानं त्ववशिष्टं तन्निराकरणार्थं च सूत्रम् "अचोदकाश्च संस्कारा" इति । यद्यैन्द्रवायववाक्येषु यागो विधीयेत ततः स्यात्प्रकृति द्रव्यविधिः, तेषु तु ग्रहणमात्रमेव देवताविशिष्टं विधीयते । तन्मात्रश्रवणात्संभवति च ग्रहणेनैन्द्रवायवं कुर्यादिति विधिः । यद्यपि ग्रहणमात्रेण तद्देवत्यता न भवति यागसहितेन तु ग्रहणेन शक्यते तद्देवत्यता कर्तुम् । अतो देवताविशिष्टे ग्रहणे चोदिते यागमन्तरेण तदनुपपत्तेः, यागापेक्षायां सोमेन यजेतेत्येतत्सर्वत्र द्रव्यदेवतासंबन्धानुपपादयद्यागान्तरकल्पनां निरुणद्धि "दशमुष्टीर्मिमीत" इति च परिमाणश्रवणात् तावतश्च सोमस्याल्पपरिमाणैः पात्रैरसति समुच्चये ग्रहणासंभवाद् यथागृहीतानामेव च होमादुपपन्नं क्रमसमुच्चयदर्शनमाश्विनो दशमो गृह्यते तं तृतीयं जुहोतीति । त्रयाणामपि समुदायानुवादापवादाधिकरणानां पूर्वपक्षे कर्मभेदः सिद्धान्ते त्वभेद इति लक्षणसंबन्धः ॥

संख्याकृतकर्मभेदाधिकरणम् ।

## सू० पृथक्त्वनिवेशात्संख्यया कर्मभेदः स्यात् ॥ ६ ॥

गतोऽभ्यासप्रसङ्गः । संख्यया भेद इदानीमभिधीयते । अत्र कर्मोत्पत्तिवाक्यगता कर्मसमानाधिकरणा संख्योदाहरणम् । यथा तिस्र आहुतीर्जुहोति द्वादश द्वादशानि जुहोतीति तत्रैको होमो विधीयते बहवो वेति संदेहः ।

तत्र आख्यातस्य सकृच्छ्रुत्या कर्मैकत्वेऽवधारिते ।
संख्यासंपत्तिरभ्यासात्प्रयाजैकादशत्ववत् । उच्यते,
स्यादेवं यदि कर्मैक्यं प्रागस्मादवधारितम् ।
आख्यातमात्रात्तत्सिद्धेस्तावतश्चाप्रमाणता ॥

एकादशप्रयाजानिति हि निर्ज्ञातसंख्येषु प्रयाजेषु श्रुतासंख्यायुक्तमभ्यासेन पूर्यते । न चैवमिह कर्मैकत्वं विज्ञातम् । न ह्याख्यातमात्रं प्रमाणं यतः कर्मैकत्वं प्रमितं स्यात् यावन्ति वाक्ये पदानि प्रयुज्यन्ते तावतां संहत्य प्रामाण्यम् । अतो विदधदेवाख्यातं सङ्ख्यासामानाधिकरण्याद्बहूनि कर्माणि श्रुतसङ्ख्याविशिष्टानि विधत्त इति सिद्धो भेदः । अत्र कर्मण्येव सङ्ख्याश्रवणात्पूर्वपक्षशङ्का मन्देति मत्वा भाष्यकारः सप्तदश प्राजापत्यानीत्युदाहरत् । अत्र द्रव्यगतसङ्ख्यया नातीव स्फुटः कर्मभेद इति विचार्यते । किं सप्तदशपशुद्रव्यक एको यागो विधीयते ? । किं वैकैकपशुद्रव्यकाः सप्तदशैते यागा इति तदर्थं विचार्यते । प्राजापत्यानीति प्रकृत्या प्रजापतिर्देवताऽभिधीयते तद्धितेन पशुद्रव्यं, बहुवचनेन बहुत्वम् । तत्र तद्धितार्थो बहुत्वेन प्रथममन्वितः पश्चात् प्रजापतिना देवतया संबध्यते । पशुश्च पशुश्च पशुश्च पशवस्तेषां प्रजापतिर्देवतेति, तदा बहुभिः पशुभिर्व्यासज्यैकदेवता संबध्यते इति द्रव्यदेवतासंबन्धैक्यादेको यागो भवति । किं वा प्रथमं प्रजापतिनाऽन्वितः पशुः पश्चाद्बहुत्वेन संबध्यते प्रजापतिर्देवता अस्येति प्राजापत्यः । प्राजापत्यश्च प्राजापत्यश्च प्राजापत्यश्च प्राजापत्या बहव इति, तदा भिन्नैर्द्रव्यदेवतासंबन्धैर्भिन्ना एव यागाः कथ्यन्ते तत्र प्राजापत्यशब्देन देवतासंबन्धोपसर्जनं द्रव्यमेव प्राधान्येनोच्यते । यच्च प्रधानं तस्यैवार्थान्तरेण बहुत्वेन संबन्धो नोपसर्जनस्य देवतासंबन्धस्य । ननु देवताविशिष्टं द्रव्यमभिहितं विशिष्टेनैव स्वरूपेण संख्याऽन्वयः स्यान्न स्वरूपेण । न द्वौ त्रय इत्यत्रानैकान्त्यान्न हि द्वावित्यत्र द्वित्वविशिष्टेन रूपेण द्विवचनाऽभिहितसङ्ख्यायोगः । तथा सति द्वाविति चत्वारः प्रतीयेरन्, एवं त्रय इति नव । न च तथा, तस्माद्यथा तत्र द्वित्वविशिष्टमपि द्रव्यं द्विशब्देनोक्तं स्वरूपेणैव द्विवचनाभिहितसङ्ख्यायोगं प्रतिपद्यते, तथाऽत्रापि तद्धिताभिहितं सङ्ख्यायोगं प्रतिपद्यते, तथाऽत्रापि तद्धिताभिहितं द्रव्यं स्वरूपेणैव बहुत्वयोगं प्रतिपद्यते न सोपसर्जनम् । तस्मादेकं कर्म सप्तदशपशुद्रव्यकम् । कथमिदानीं चोदकप्राप्तमेकपशुनिष्पन्नैकादशावदानद्रव्यत्वं

यागस्यानुग्रहीतव्यं। माऽनुग्राहि, न चोदकानुसार्युपदेशनिर्णयः। यथोपदेशं त्वतिदेशवर्णना, तस्मादेकं कर्मेति प्राप्ते ब्रूमः

यदि कर्म भवेदेकमेकः स्याच्चोदकस्ततः।
तेन चैकगणप्राप्तेः पशुसङ्ख्या विरुध्यते॥

सवनीयविकारा ह्येकादशिनः तद्विकाराश्च प्राजापत्यास्तत्र चैकपशुनिष्पन्नैकादशावदानद्रव्यत्वं यागस्यासीदित्यत्राप्येकत्वे यागस्य चोदकोऽप्येकमेवावदानगणमतिदिशेत्, तस्मादत्र सप्तदशानां प्राजापत्यत्वं न संपादितं स्यात्। न चोपदेशेनातिदेशस्य बाधो, विरोधाभावात्, प्राजापत्यानीत्युपदेशस्योभयथाऽप्युपपत्तेः। तेनार्थद्वयसाधारणमुपदेशवाक्यं प्रकृतिवच्छब्देन वाक्यशेषभूतेनानेककर्मपरमवधार्यते। कर्मभेदे हि प्रतिकर्म भिन्नैश्चोदकैस्तावतां गणानां प्राप्तेः सिद्ध्यति सर्वेषां प्राजापत्यत्वम्। एवं "वसन्ताय कपिञ्जलानालभत" इत्यादिष्वपि चोदकवशेनैव यावद् द्रव्यं यागभेदः। ये तु चोदकमनादृत्य द्रव्यस्य तद्धिताभिहितस्य विशिष्टस्यैव बहुत्वावगमात् भेदमाहुस्तेषां चतुर्थ्यभिहितदेवतेषु वसन्ताय कपिञ्जलानित्यादिषु न कर्मभेदः सिध्येत्, तत्र प्रतिपश्ववदानगणप्राप्तिर्न स्यात्। अथ तत्र चोदकवशाद्भेद,स्ततस्तथैव सर्वत्रास्तु, किमतद्व्यापिना तद्धितोपन्यासेनेत्यास्तां तावत्॥

संज्ञाकृतकर्मभेदाधिकरणम्। **सू० संज्ञा चोत्पत्तिसंयोगात्॥ ७॥**

उद्देशक्रमस्यातन्त्रत्वाद्बहुविचारं गुणप्रकरणान्तरनिमित्तं भेदमुपेक्ष्य संप्रति संज्ञातो भेदोऽभिधीयते। ज्योतिष्टोमं प्रकृत्य श्रूयते। "अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिरेतेन सहस्रदक्षिणेन यजेते"ति। तत्रैतच्छब्दपरामृष्टानां ज्योतिरादीनां यजिसामानाधिकरण्येन यागनामत्वं तावत्सिद्धम्। तत्र संशयः किं प्रकृतमेव ज्योतिष्टोमं ज्योतिरादिशब्दैरनूद्य सहस्रदक्षिणाख्यो गुणो विधीयते? । उत कर्मान्तराण्येवंनामान्येवंदक्षिणानि विधीयन्त? इति। तत्र प्रकरणादेतच्छब्दस्य च प्रकृताभिधायित्वात्तत्सामानाधिकरण्याच्च ज्योतिरादीनां प्रकृतहानाप्रकृतकल्पनायोगाच्च पूर्वस्यैव गुणविधिरिति प्राप्ते ब्रूमः।

नामान्तरश्रुतावर्थे भेदस्तावत्प्रतीयते।
बलवद्बाधकाच्चासावन्यथात्वं प्रपद्यते॥

न चात्र बलवदस्ति बाधकं, येन संज्ञानिमित्तो भेदो ऽपोह्येत संज्ञाश्रुत्या चार्थान्तरावगमात्प्रकरणविच्छेदे जाते ऽर्थान्तरकलुषितायां बुद्धावुपनिपतत्सहस्रदक्षिणेन यजेतेति न ज्योतिष्टोमं गन्तुमर्हति तस्मात्कर्मान्तराणि। एवं चायेव ज्योतिरित्यादेरर्थवत्त्वमन्यथानर्थक्यं स्यात्, एतेन सहस्रदक्षिणेनैतावतैव ज्योतिष्टोमस्य गुणविधिसिद्धेरेतच्छब्दश्च प्रज्ञायमानकर्मान्तरवचनत्वेनाप्युपपद्यत इति सिद्धः कर्मभेदः॥

देवताभेदकृतकर्मभेदाधिकरणम्।

सू० गुणश्चापूर्वसंयोगे वाक्ययोः समत्वात् ॥ ८॥

इदानीं गुणलक्षणो भेदः प्रस्तूयते। द्वेधा गुणस्य भेदकत्वं कश्चित्तावद्गुणः पूर्वविहितस्य कर्मणः प्रबलगुणावरुद्धत्वात्तत्र निवेशमलभमानः स्वात्मसंगतये विधेः कर्मान्तरोत्पत्तिपरतां कल्पयन् भेदको भवति, अनेकत्वाद्वा गुणानां प्राप्तकर्मानुवादेन विध्ययोगात्सर्वेषां विधिसिद्धये कर्मपरत्वं विधेः कल्प्यते। तचानेकगुणनिमित्तो भेदः पौर्णमास्यधिकरण एव प्रसङ्गात्प्रतिपादितः। अधुना बलवद्विरोधनिमित्तो ऽभिधीयते, चातुर्मास्येषु वैश्वदेव्याऽऽमिक्षेति यागं विधायाम्नायते—"वाजिभ्यो वाजिन"मिति तत्र संशयः। किं पूर्वस्मिन्नेवामिक्षायागे वाजिनं गुणो विधीयते? किं वा कर्मान्तर?मिति। तदर्थं च किमुत्पत्त्युत्पन्नशिष्टौ गुणौ तुल्यबलावुत्पत्तिशिष्टो बलीयानिति, तथा तद्धितचतुर्थ्योरपि बलाबलं चिन्तनीयम्।

तत्र वाजेनामिक्षया योगाद्विश्वेदेवा हि वाजिनः।
प्रकृतांस्तान्वदेच्छ्रुत्या वाजिशब्दश्च यौगिकः॥

ते च पूर्वविहितकर्मसंप्रदानरूपेण प्रकृतास्तेनैव रूपेण प्रत्यभिज्ञायन्ते। तथाविधेन च संबध्यमानं वाजिनं पूर्वकर्मण्येव विहितं भवति। एवं च संभवति पूर्वत्र गुणमात्रविधाने प्रकृतहानमप्रकृतकल्पनमपूर्वान्तरकल्पनं विशिष्टविधिगौरवं च नाश्रयितुं युक्तम्। नन्वामिक्षायुक्तस्यैव पूर्वकर्मण उत्पत्ताववगतत्वान्न तत्र द्रव्यान्तरसंबन्धापेक्षा, योग्यता चास्ति। उच्यते

यद्यप्युत्पत्तौ द्रव्ययुक्तं कर्मावधारितं तथाऽपीह निष्कृष्य कर्मस्वरूपमात्रमनूद्यते। अभिधानकृता चाकाङ्क्षा न वस्तुकृता, तेन स्वरूपमात्रस्याभिधानेपात्तस्यास्त्येव द्रव्यान्तरसंबन्धापेक्षा। योग्यता चास्त्येव द्रव्यान्तरेण स्वरूपमात्रस्य संबन्द्धुम्। शब्दान्तराधिकरणे हि प्रत्ययवाच्या भावना प्रकृत्यर्थानुरक्तैवावगम्यते न शुद्धस्वरूपेति धात्वर्थान्तरमनवकाशं स्यादित्युक्तम्। इह तु कल्पितेन यजिना गुणाननुरक्तमपि कर्मावगतं पदान्तरत्वात्। अतस्तदनुवादेन शक्यं गुणान्तरविधानम्, अतो नास्त्युत्पत्त्युत्पन्नशिष्टयोर्विरोधः। न चामिक्षया देवतासंबन्धस्य श्रौतत्वाद्वाक्यगम्याद्वाजिनसंबन्धाद्बलीयस्त्वमिति वाच्यम् उभयोर्वाक्यगम्यत्वात्, न ह्यामिक्षाया देवतासंबन्धो वैश्वदेवीपदेन केवलेनावगम्यते किं त्वामिक्षापदैकवाक्यतया। तस्मादुभयोस्तुल्यबलत्वात्पूर्वस्मिन्नेव कर्म्मणि विकल्पः समुच्चयो वेति प्राप्ते ऽभिधीयते।

आमिक्षाया बलीयस्त्वमुत्पत्तौ चोदनाश्रुतेः।
उत्पन्ने वाजिनं वाक्यात्तेन तद्दुर्बलं मतम्॥

यत्तु सगुणोत्पन्नमपि कर्म स्वरूपमात्रेण निष्कृष्य शक्यं गुणान्तरं विधातुमित्युक्तं, तदयुक्तं, यद्यपि ह्यभिधानतः स्वरूपमात्रं निष्कृष्यते तथाऽपि तस्योत्पत्तिवाक्यावगतस्यानुवादात्तत्स्वरूपमालोच्यमानमेवंगुणयुक्तमवगम्यते, ततश्च नैराकाङ्क्ष्यादयोग्यत्वाच्च गुणान्तरं तत्र निवेशमलभमानमात्मनिवेशनमकर्मान्तरोत्पत्तिं सूचयति। श्रौतश्चामिक्षाया विश्वेर्देवैः संबन्धः, तद्धितस्य देवताविशिष्टद्रव्यवाचिनः पदान्तरोपस्थापितद्रव्यविशेषवचनत्वाद्वाजिभ्य इति चतुर्थी संप्रदानमात्रं वदति, न तद्विशिष्टं द्रव्यं, वाक्यात्तु तत्संबन्ध इति दुर्बलं, प्रपञ्चितं चैतद्वार्त्तिक एव। अन्ये च बहवः सन्निकर्षविप्रकर्षप्रकारा वार्त्तिके एव द्रष्टव्याः। तस्मादामिक्षाऽवरुद्धे कर्मण्यसन्निवेशाद्वाजिनगुणात्कर्मभेदः॥

पूर्वाधिकरणाशङ्कानिरासोद्रव्यविशेषानुक्तिकृतकर्मैक्याधिकरणं वा।

सू० अगुणे तु कर्म(१)शब्दे गुणस्तत्र प्रतीयेत॥९॥

१ अगुणे तु कर्मशब्द इति प्रत्युदाहरणं सूत्रम्। इति द्वित्रेषु पुस्तकेषु पाठो दृश्यते स तु न युक्त इति प्रतीमः।

अथवाऽधिकरणान्तरम् "अग्निहोत्रं जुहोती"ति निर्गुणकर्मोत्पत्तं तत्सन्निधौ च दध्ना जुहोति पयसा जुहोतीत्यादयो बहवो गुणाः श्रूयमाणाः पूर्वकर्मनिवेशे सति विकल्पप्रसङ्गादन्यतरावरुद्धे चान्यतरस्य निवेशासंभवात्पूर्ववदेव कर्मान्तरं कल्पयतीति प्राप्ते ब्रूमः । सर्वेषाममीषामन्योन्याऽनालोचनेनाग्निहोत्रवाक्यमात्रालोचनात्तत्र च निर्गुणस्य कर्मणोऽवगतस्य सर्वगुणयोग्यत्वात्पौर्वापर्याभावाच्चान्यावरुद्धेऽन्यस्य निवेशे दन्याभावात्तत्रैव गुणमात्रविधानं, प्रमाणवशाच्च विकल्पः ॥

दध्यादिद्रव्यस्य फलत्वाधिकरणम् ।

सू० फलश्रुतेस्तु कर्म स्यात्फलस्य कर्मयोगित्वात् ॥ १० ॥

अग्निहोत्रं प्रकृत्य "दध्नेन्द्रियकामस्य जुहुया"दिति श्रूयते । तत्र संशयः किमग्निहोत्रात्कर्मान्तरं दधिविशिष्टमिन्द्रियकामाय विधीयते? उत तत्रैव गुणमात्रं फलाय विधीयत? इति तदर्थमिदं विचार्यते किं कर्मणः फलमिद?मुत गुणादिति । यदि कर्मणः, ततः प्राप्तस्य कर्मणः फलसंबन्धं गुणसंबन्धं चैकं वाक्यं न शक्नोति विधातुमिति कर्मान्तरं स्यात् । गुणफलसंबन्धे तु तन्मात्रं वाक्येन विधीयते । दधिहोमसंबन्धस्त्वाश्रयाश्रयिरूपः प्रकरणप्राप्तोऽनूद्यमानो न वाक्यं भिनत्तीति सिद्धत्येकवाक्यत्वमकर्मान्तरत्वेऽपि । तेन भेदाभेदसिद्ध्यर्थं कर्मणः फलं गुणाद्वेति चिन्त्यते, सत्यपि च पक्षद्वये भावनाभेदे धात्वर्थभेदाभेदविचारणाल्लक्षणसंबन्धः । तत्र

धात्वर्थात्फलमित्युक्तं भावना संनिकर्षतः ।
विप्रकृष्टस्तु नामार्थस्तदर्थो न फलान्वयी ॥

भावार्थाधिकरणे ह्येतदुक्तं, यथा धात्वर्थात्फलं न नामार्थात् स तु धात्वर्थस्यैवाङ्गमिति, तदिहापि दधि होमार्थं होमः फलार्थः । किंच ।

दध्नश्च फलसंबन्धे जुहोतेः स्यादनन्वयः ।
यदि सोऽपि विधीयेत वाक्यभेदः प्रसज्यते ॥

न ह्येकं वाक्यं फले होमे च शक्नोति दधि विधातुम्। तत्रासति होमसंबन्धे जुहोतिपदमनर्थं स्यात् तस्य च दध्ना सह क्रियाकारकभावो- ऽवगम्यमानः परित्यक्तः स्यात्तस्मात् होमस्यैव फले विधानं गुणविशिष्ट- स्येति प्राप्ते ब्रूमः।

धात्वर्थस्यान्यतः प्राप्तेर्गुणमात्रं विधीयते।
विधेयं यच्च तेनैव फलं नान्येन युज्यते॥

तत्रैव हि भावनार्थाधिकरणन्यायो यत्र धात्वर्थो नामार्थश्चोभ- यमपि विधीयते। अत्र तु प्राप्तत्वेन धात्वर्थस्याविधेयत्वाद्गुणमात्रं विधी- यते विधेयस्यैव फलसंबन्धो नाविधेयस्य। तेन गुणस्यैव फलं न तु कर्मान्तरं विधेयं भविष्यति। नापि प्रकृतहानाप्रकृतकल्पना विशिष्टवि- धिगौरवमत्वर्थलक्षणादोषप्रसङ्गः। अतो गुणमात्रविधानात्तस्यैव फलं, जुहोतेरिदानीं कथमन्वयः। केचिदाहुः कर्मापन्नमेव दधि फलकामस्य विधीयते न दधिमात्रम्, अभावार्थस्य विधिविषयत्वायोगात् अतो दध्य- नुरक्तो होम एव विधीयते। न चैवं वाक्यभेदः, दध्नो विधानाभावात् लौकिकं हि क्रियाकारकलक्षणं संबन्धमाश्रित्य द्रव्याणां क्रियाऽऽपत्तिर्न पुनस्तादर्थ्यं कर्मणो ऽकारकत्वप्रसङ्गादतः फलार्थतैव होमे कारकीभूतस्य दध्नः प्रतीयते न होमार्थत्वं, होमार्थत्वे तत्रापि विधिव्यापाराद्वाक्यभेदः स्याच्च तु तदस्ति, तेन होमाश्रितस्य दधिव्यापारस्य फले विधानाद्वाक्य- भेदं विनैव सिद्धो जुहोत्यन्वय इति। अत्रेदं वक्तव्यं, यदि न दधि विधीयते किं तर्ह्यत्र विधीयते? होम एव दध्यनुरक्तः फलाय विधीयत इति चेदेवं तर्हि होम एव फलार्थः स्यात्। दधि तु होमगतदध्यनुरागसंपत्त्यर्थमु- पादीयमानं तदर्थमेव स्याच्च फलार्थम्। अपि च मा भूद्दध्नो विधानं तद- नुरागस्तु प्राप्तस्य कर्मणो विधीयते फलसंबन्धश्चेति वाक्यभेदः॥

ननु न ब्रूमो दध्नो न विधानमिति किंतु होमार्थतया न विधीयते फलार्थतया होमाश्रितं विधीयते होमे कारकीभूतमित्यर्थः। उच्यते दध्नेति दधिविशिष्टकारकमात्रं पदेनोच्यते होमे तत्कारकमिति कुतोऽवगम्यते?। वाक्यादिति चेदेवं सत्याश्रयसंबन्धं फलसबन्धं च बोधयद्वाक्यं भिद्येत।

ननु लौकिकमेव क्रियाकारकलक्षणमाश्रयाश्रयिसंबन्धमुपादाय केवलं फलसंबन्धकरणाच्च वाक्यभेदः । नैतदेवं, लोकतो हि क्रियाकारकयोः संबन्धः संभवमात्रेण सिद्धो न कर्त्तव्यतया । कर्त्तव्यतया चात्र दधिहोमसंबन्धः श्रूयते दध्ना जुहुयादिति, तेन तस्य कर्त्तव्यता फलसंबन्धश्चेति वाक्यभेदः । न हि दध्नेन्द्रियकामस्य जुहुयादित्यत्र य इन्द्रियकामः स दध्ना जुहुयादिति वचनव्यक्तिः संभवति होमस्याविधेयत्वात्, विधाने च कर्मान्तरत्वापत्तेः, अतो जुहुयादिति तावदनुवादः । तत्र यज्जुहुयात्तद्दध्नेन्द्रियकामस्येति च वाक्यभेदः । अथ यद् दध्ना जुहुयात्तदिन्द्रियकामस्येति तदयुक्तम् । न हि सत्यपि संभवे दध्ना होतव्यं प्राप्तं यदनूद्येत । अथ यदिन्द्रियकामस्य जुहुयात्तद्दध्नेति तदप्ययुक्तम्, इन्द्रियकामार्थत्वेन होमस्याप्राप्तत्वात् । अथ मन्येत यद्यपीन्द्रियकामस्येन्द्रियकामत्वेन रूपेण होमो न प्राप्त इन्द्रियार्थत्वेनेति यावत्तथाऽपि पुरुषाणां बहुकामत्वात्कदाचिदग्निहोत्रावस्थायामपि संभवतीन्द्रिये पुरुषस्य कामना, तेनेन्द्रियकामनोपलक्षितस्य पुरुषस्य कदाचित्प्राप्त एव होम इति तदनुवादेन दधि विधीयते, तदयुक्तम् । कामस्य फलरूपाभिधायिनः कामपदस्य पुरुषस्वरूपपरत्वे लक्षणाप्रसङ्गात् । अपि चैवं न फलार्थं दधि स्यात् किंतु इन्द्रियकामनायां निमित्ते नैमित्तिकं क्रत्वङ्गं स्यात् । विवरणकारस्य तु अपूर्वान्तरानभ्युपगमात् क्रत्वपूर्वान्वितस्यैव गुणस्य फलार्थत्वादपूर्वसंबन्धस्य च लोकतः सिद्ध्यभावात्सुतरां वाक्यभेदः स्यात् । तस्माच्च होमसंबद्धं दधि वाक्येन विधीयते अपि तु दध्नेत्येतावन्मात्रमिन्द्रियकामः स दध्नेति, कथं तर्हि जुहोतेरन्वयः ? । उच्यते दध्नेति करणभूतं दधि फलाय विधीयते तृतीयानिर्देशात् क्रियाऽपेक्षं च करणत्वमिति क्रियाऽपेक्षायां सन्निधिलक्षणप्रकरणप्राप्तोहोमसंबन्धो जुहोतिनाऽनूद्यते ॥

ननु होमादिवत्फलभावनाऽपेक्षमेव करणत्वं भविष्यति न क्रियान्तरमपेक्षते, उच्यते, न धात्वर्थवद्दध्यादेः सिद्धस्वभावस्य स्वरूपेण फलभावनाकरणत्वमुपपद्यते, कर्तृव्यापारविषयस्य हि करणत्वं, दध्यादेश्च किंचिद्धात्वर्थं प्रति करणीभवतः कर्तृव्यापारविषयता न स्वरूपेण यागादिव-

दित्यस्ति धात्वर्थविशेषाऽपेक्षा । यद्यपि चादृष्टोपकारप्रयाजादिव्यापारविषयता यागादिवद्दध्यादेः सिद्धस्वभावस्यापि स्वरूपेण संभवेत्तथाऽपि दृष्टार्थव्यापारविषयतासिद्ध्यर्थं कारकभावमपेक्षते । अवश्यं च दृष्टद्वारेणापि कर्तृव्यापारविषयता करणस्याङ्गीकर्त्तव्या, अन्यथा दृष्टार्थाङ्गमात्रानुष्ठानात्करणं प्रति पुरुषप्रतिव्यापाराभावात्करणोपदेशवैयर्थ्यं स्यात्तस्माद्विभक्त्यभिहितकारकविशिष्टं दधि, दधिविशिष्टं वा कारकं प्रत्ययार्थप्राधान्यात्फलाय विधीयते । फलभावनाकरणत्वं च यागादिवदेव समभिव्याहारात्सिद्धं न विभक्त्यभिधानमपेक्षते । कारकभावश्च क्रियाविशेषापेक्ष इति सन्निधिवशप्राप्तो होमो धातुनाऽनूद्यत इति सिद्ध्यति जुहोतेरन्वयः, कारकभावश्चैकपदोपात्तः क्रियाविशेषसंबन्धश्च सन्निधिप्राप्तः फलान्वय एव वाक्येन विधीयते न वाक्यभेदः ॥

वारवन्तीयादीनां कर्मान्तरताऽधिकरणम् ।

सू० सगेषु कर्म युक्तं स्यात् ॥ ११ ॥

त्रिवृदग्निष्टुदग्निष्टोमस्तस्य वायव्यास्वेकविंशमग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामो यजेते''त्यग्निष्टुत्संज्ञकं यागं विधाय तस्य प्राकरणिकेन वारवन्तीयमग्निष्टोमसामकार्यमिति वाक्येन गुणं विधाय पुनराम्नातमेतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेतेति तत्र पूर्ववत्संशयः किं पूर्वस्मिन्नेवाग्निष्टुत्संज्ञके यागे पशुफलार्थत्वेन रेवत्याधारं वारवन्तीयं गुणो विधीयते? उत कर्मान्तरमिति तदर्थमेतत् विचार्यते । किं फलार्थस्य वारवन्तीयस्य प्रकृतो याग आश्रयीभवितुं शक्नोति नेति । तत्र पूर्ववदत्रापि गुणमात्रं विधीयते फलाय, न तु यागस्य विधानं विधिगौरवात् । सामाश्रयत्वं यागस्य साक्षाद्यद्यप्यसंभवति । तथाऽपि स्तोत्रनिर्वृत्तिद्वारा तदुपपद्यते विशिष्टयागान्तरविधौ विधिगौरवात्प्रकृतहानाऽप्रकृतकल्पनादोषाच्च तत्रैव रेवत्याधारं वारवन्तीयं फलाय विधीयते । यद्यपि द्रव्यदेवतासाधनो यागः साम्ना साक्षात्साधयितुं शक्यते इति न साक्षात्साम्नः प्रकृताश्रयत्वं संभवति । तथाऽप्यानर्थक्यात्त-

दङ्गेष्वित्यङ्गभूतस्तोत्रनिर्वृत्तिद्वारेण यागसाधनत्वं साम्नः संभवतीति युक्तं प्रकृताश्रयत्वम् । नन्वेवं रेवतीवारवन्तीयसंबन्धः फलसंबन्धश्चेत्यनेकार्थत्वाद्वाक्यभेदः स्यात्, नैव दोषः । यदि संबन्धद्वयमपि विधिशब्देन बोधयितव्यं स्यात्स्याद्वाक्यभेदः क्त्वा-शब्देनैव तु रेवतीवारवन्तीसंबन्धे प्रतीते केवलसंबन्ध एव यजेः परेण लिङ्प्रत्ययेन प्रतिपादयितव्य इति न वाक्यभेदः, यथा विशिष्टापूर्वकर्मविधौ तस्य विशेषणसंबन्धे विभक्त्यादिभिरेव सिद्धे तादृशस्य फले विधानाद्वाक्यभेदः, यः फलं कुर्यात्स॰ दृशेन यागेनेति, तद्वदिहापि यः फलं कुर्यात्स रेवतीषु वारवन्तीयकरणेनेति न वाक्यभेदः । तस्मात्फलाय गुणमात्रविधिर्यजिस्तु विपरिवृत्तिप्राप्तयागानुवादः, एतच्छब्दोऽपि षष्ठ्यन्तः पूर्वस्य यागस्य फलवता गुणेन सहाश्रयाश्रयिसंबन्धं सन्निधिलब्धमनुवदति । अग्निष्टोमसामशब्दोऽपि आनर्थक्यतदङ्गन्यायप्राप्तस्तोत्रसंबन्धानुवादः । यद्यपि तत्र बहूनि स्तोत्राणि आज्यपृष्ठादीनि सन्ति तथाऽपि वारवन्तीयस्य क्रत्वर्थस्याग्निष्टोमस्तोत्रमेव स्थानं दृष्टमिति फलार्थस्यापि तदेव स्थानं भविष्यति तस्मादेषां प्राप्तत्वेनाविधेयत्वाच्च वाक्यभेद इति प्राप्ते ब्रूमः ।

प्रकृतं कर्म गृह्णाति फलाय विहितो गुणः ।
यत्र तत्र गुणात्कामो यागः साम्ना न साध्यते ॥ १ ॥

कारकभावापत्तिर्हि तदाश्रयत्वं तदपि प्रकरणप्राप्तमनुवदितव्यं वाक्येनाश्रयसंबन्धकरणे वाक्यभेदात्, तेन यत्र प्रकृते कर्मणि फलार्थस्य गुणस्य कारकभावः संभवति तत्रैव गुणात्कामो यथा दध्नेन्द्रियकामस्येति न त्विह प्रकृतयागकारकत्वं साम्नः संभवति, संभवति तु तदङ्गभूते स्तोत्रे कारकत्वं तत्तु न प्रकृतमातिदेशिकत्वादिह स्तोत्राणां, न चायमानर्थक्यतदङ्गन्यायस्य विषयः यो हि कर्माङ्गत्वेन गुणश्चोद्यते स तत्र साक्षादसंभवन्नङ्गे निविशते । संभवति ह्यङ्गद्वारेणाप्युपकारकत्वं । न चाश्रयत्वमङ्गद्वारेण संभवति । न ह्यङ्गेन कारकभावात्प्रधाने कारकत्वं भवति । साम्नश्च गीतिरूपक्रियात्वाद्यागादिवन्नाश्रयापेक्षा यतः प्रकृतक्रियासंबन्धः स्यात् ॥

ननु नावश्यं कारकतयैव तदाश्रयत्वं संबन्धान्तरेणाप्युपपत्तेस्तेन क्त्वा-शब्देन क्रियान्तरसमानकर्तृकयागस्य मानम् रेवतीवारवन्तीय-संबन्धकरणं फलाय विधीयते किं तत्क्रियान्तरमित्यपेक्षायां संनिदधानो याग उपलभ्यते । एवमप्यग्निष्टोमसामेति नावकल्पते अनुवादासंभवा-द्विधानेन वाक्यभेदात् ।

न च क्त्वर्थस्य वारवन्तीयस्य यत्स्थानं तदेव पुरुषार्थस्यापि भव-तीति प्रमाणमस्ति यतोऽग्निष्टोमसामत्वमनूद्येत । किंच रेवतीवारव-न्तीयं कृत्वा पशून् भावयेदित्युक्ते पशुभावनाऽपेक्षयैव समानकर्तृत्वसंभवाच्च क्रियान्तरापेक्षा यतः संनिहितो यागः संबध्येत । तस्मान् क्त्वा-शब्द-कल्पितगुणफलसंबन्धविधौ यजेतेति चाग्निष्टोमसामेति च द्वावपि शब्दौ प्रकरणप्राप्तानुवादत्वासंभवाद्विधाने च वाक्यभेदादनर्थकौ स्याताम् । तस्मात् क्त्वा-शब्दकल्पितरेवतीवारवन्तीयसंबन्धविशेषितो यागः फलाय विधीयते । तत्र साम्नः प्रकृतितोऽग्निष्टोमस्तोत्रस्थानप्राप्तेस्तदनु-वद्धा रेवत्योऽपि तत्स्थाना भवन्तीति । तेनाग्निष्टोमसामेत्यनुवादः; एत-च्छब्दोऽपि प्रस्तूयमानापूर्वयागवचनो रेवतीषु वारवन्तीयं कृत्वा पशुकामो यजेतेत्येतावन्मात्रं विधीयते इति लाघवमेकवाक्यत्वं च लभ्यतेऽपूर्वविधौ, गुणफलसंबन्धविधौ तु यज्यादेरानर्थक्यं वाक्यभेदो वा स्यादित्युक्तम् । ये तु गुणफलाधिकारेष्वपि वाक्येनैव गुणस्याश्रयसंबन्धमुपगच्छन्तः कर्मैव गुणानु-रक्तं फलाय विधीयते वाक्येनेत्याहुः । तेषामत्रापि रेवतीवारवन्तीयसाध-नकाग्निष्टोमस्तोत्रविशिष्टस्य प्रकृतस्यैव यागस्य दध्यनुरक्तस्यैव होमस्य फले विधिसंभवात्सिद्धान्तहानिः ।

ननु तत्र दध्यनुरागो होमस्य लोकसिद्धो लभ्यते केवलस्तु फलसं-बन्धो वाक्येन विधीयते । इह तु यद्यपि ऋक्सामयोः स्तोत्रसाधनत्वं लौकिकं स्तोत्रस्य यागविशेषणत्वं न लोकतः सिध्यतीति विधिवशादेव लब्धव्यं, ततश्च तस्य च फलसंबन्धस्य च विधानाद्वाक्यभेदः स्यात् सत्यं न लोकसिद्धमतिदेशतस्तु सिद्धं स्तोत्रस्य पूर्वयागाङ्गत्वात्स्तोत्रविशे-

यत्वं च ऋक्सामयोर्लोकसिद्धम्। तदेव ऋक्सामविशेषितस्तोत्रानुरागं याग-स्यान्यतः सिद्धमुपादाय केवलफलसंबन्धमात्रं विधिनाऽनेन बोध्यते इति कुतो वाक्यभेदः। किं च क्त्वा-शब्देन स्तोत्रसमानकर्तृकत्वमेव याग-स्योच्यते न तत्कारकत्वं तादर्थ्यं वा। समानकर्तृकत्वं च लोकसिद्ध-मेव लभ्यते इति दध्यादिभिरविशेषः, अतो रेवतीवारवन्तीयसाधन-काग्निष्टोमस्तोत्रसमानकर्तृकत्वविशिष्टः प्रकृत एव यागः फलाय विधातुं शक्यते। यद्वा अग्निष्टोमस्तोत्रमेवातिदेशप्राप्तं रेवतीवारवन्तीया-नुरक्तं पशुकामस्य विधीयते यजिपरस्यापि विधेः स्तोत्रविषयत्वं न दुष्य-तीति निर्वापपरस्येव द्रव्यदेवतासंबन्धविषयत्वं यजेरपि निर्वपतिवदनुवा-दत्वात्, तस्माद्वाक्येनाश्रयसंबन्धे सिद्धान्तहानिरित्यास्तां तावत्॥

सौभरनिधनयोः कामैक्याधिकरणम्।

सू॰ सौभरे पुरुषश्रुतेर्निधनं काम-संयोगः[1]॥ १२॥

"यो वृष्टिकामो योऽन्नाद्यकामो यः स्वर्गकामः स सौभरेण स्तुवी-ते"ति ब्रह्म सामाख्यं स्तोत्रं प्रकृत्य तदाश्रयं सौभरफलत्रयसाधनत्वेनाम्ना-तम्। यद्यपि सौभरस्य साम्नो गीत्यात्मकक्रियात्वाद्वारवन्तीयवदाश्रयापेक्षा तथाऽपि स्तुवीतेत्यनेनैकवाक्यत्वात्तत्साधनभूतस्यैव फले विधानं विज्ञायते। तथा हि यावन्ति पदानि प्रयुज्यन्ते तावतां यथाऽन्वयो भवति तथा वा-क्यार्थो वर्णनीयः। तद्यदि सौभरमात्रं विधीयेत ततः स्तुवीतेत्यनर्थकं स्यात्, स्तुत्यन्तरविधाने गौरवं, मत्वर्थलक्षणा च स्यादतः सौभरेणेत्येकप-दोपात्तं सौभरविशिष्टं करणकारकं फले विधीयते, करणं च क्रियाऽपेक्षमिति युक्तं प्रकृतस्तोत्राश्रयत्वम्। वारवतीयन्तु द्वितीयान्तत्वाच्च करणीभूतमवग-म्यते किं तर्हि कर्मीभूतम्। न च स्तोत्रे यागे वा साम्नः कर्मत्वं संभवति तेन क्त्वा-शब्दार्थमात्रं प्रति कर्मत्वाच्च क्रियान्तरापेक्षेति वैषम्यं, तदेवं फलत्रयसाधनं सौभरं प्रकृत्याऽऽम्नातं "हीषीति वृष्टिकामाय निधनं कुर्यात् ऊर्गित्यन्नाद्यकामाय ऊ इति स्वर्गकामाये"ति। तत्र संशयः। किं हीषा-

[1] निधने कामसंयोग इति पाठान्तरम्।

दयो निधनविशेषाः सौभरफलात्फलान्तरार्थेन विधीयन्ते? उत सौभरस्यैव तत्तत्फलं साधयतस्तत्तन्निधनमनियमेन पाठतः प्राप्तं नियम्यत? इति। तदर्थं किं वृष्टिकामादिशब्दोक्तपुरुषशेषत्वेनैते साक्षाद्विधीयन्ते? अथ तत्साधनशेषत्वेने? ति तत्र पुरुषस्य श्रौतत्वात्तादर्थ्यमेव हीषादीनां चतुर्थ्या विज्ञायते तच्छेषता च तदभिलषितफलसाधनतयेति फलार्थत्वमेवैषां, साधनसंबन्धे तु वृष्टिकामादिशब्दैः सौभरं लक्ष्येत

न च श्रुतिसंभवे लक्षणा न्याय्या। तस्माद्धीषादयो गुणाः फलान्तरार्था इति प्राप्ते ब्रूमः। वृष्ट्यादीनि पूर्वोक्तान्येव विपरिवर्त्तमानानि प्रत्यभिज्ञायन्ते इति न फलान्तरावगमः। किंच हीषीति शब्दमात्रे फलाय विहिते सत्याश्रयापेक्षायां यत्तावत्सौभरं प्रकृतं न तच्छक्तोत्याश्रयत्वं प्रतिपत्तुम्। यत्तु तदवयवभूतं निधनं न तत्प्रकृतं, न चानर्थक्यतदङ्गन्यायस्यायं विषय इत्युक्तम्। सत्यपि च तदङ्गावतरणेऽनेकावयवत्वान्न नियमेन निधनसंबन्धः, तत्र निधनमित्यनर्थकं स्यात्, विधाने च वाक्यभेदः। तस्माद्वृष्टिकामादि शब्दलक्षिते सौभरे निधनत्वेनैव नियतप्राप्ता हीषादयो नियम्यन्ते। अथवा लक्षणाऽपि नातीवात्र विद्यते। न हि यदेव फलस्य करणं तस्यैव पुरुषशेषत्वं तदङ्गस्यापि तद्द्वारेणास्त्येव पुरुषशेषता। तथा चान्यत्राऽपि प्रयोगो दृश्यते। वासिष्ठादीनां नाराशंसो द्वितीयः प्रयाज इत्यादिस्तेन हीषादयः सौभराङ्गभूतास्तद्द्वारेण वृष्टिकामादीनां पुरुषाणामनियमेन यथा शेषभूताः प्राप्तास्तानेव प्रति यथारूपा नियम्यन्त इति न लक्षणा, साधनद्वारेण तु तादर्थ्यं, न साक्षादिति लक्षणावाचो युक्तिर्भाष्यवार्त्तिकयोः, यथा प्राप्तानां च नियम इति न शाखान्तरगते सौभरे शाखान्तरीयं निधनं प्रयोक्तव्यं, किंतु तत्तन्निधनसहित एव च सौभरविशेषस्तत्तत्फलार्थेन प्रयोक्तव्यः। तस्मात्फलान्तरार्थेन नैव हीषादयो गुणा विधीयन्ते नियम्यन्ते तद्यथाप्राप्ति सौभरे'।

इति शास्त्रदीपिकायां द्वितीयस्याध्यायस्य द्वितीयः पादः ॥

# अथ द्वितीये तृतीयः पादः ।

ग्रहायतताया ज्योतिष्टोमाऽङ्गताऽधिकरणम् ।

**सू० गुणस्तु क्रतुसंयोगात्कर्मान्तरं प्रयोजयेत्संयोगस्याऽशेषभूतत्वात् ।**

ज्योतिष्टोमं प्रकृत्य श्रूयते । "यदि रथन्तरं सामासोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयात् यदि बृहत्सामा शुक्राग्रा"निति तत्र संशयः । किं ज्योतिष्टोमात्कर्मान्तरं रथन्तरसामा बृहत्सामेति विधीयते? । किं वा ज्योतिष्टोम एव रथन्तरेण बृहता वावच्छिन्नो ग्रहाग्रताविशेषं प्रति निमित्तत्वेनानुकीर्त्यते ? इति, तदर्थमिदं चिन्त्यते । किमयं कृत्स्नक्रतुसंयोगो रथन्तरादेस्ताकृत्स्नक्रतुसंयोग? इति । तदर्थमपि किं रथन्तरविशिष्टः क्रतुरिह निमित्तमुत क्रतुविशिष्टं रथन्तर? मिति ।

तत्रान्यार्थप्रधानत्वाद्बहुव्रीहेर्निमित्तता ।
रथन्तरविशिष्टस्य क्रतोरेवागम्यते ॥
विशेषणं व्यवच्छेत्तृ विशेष्यस्यापि चोच्यते ।
ज्योतिष्टोमे च नान्येषां व्यवच्छेदस्य संभवः ॥
रथन्तरेण कृत्स्नस्य क्रतोर्व्याप्तिश्च नैव हि ।
सन्त्यन्यान्यपि सामानि गायत्रादीनि तत्र हि ॥

तेन व्यवच्छेद्याभावात्सत्तयाऽपि चाव्याप्तिन्या सामान्तरसापेक्षतया विशेषणासंभवात्पूर्वत्रासंभवी रथन्तरसामत्वं गुणः कर्मान्तरं कल्पयति । यदि–शब्दश्च निरर्थको रुच्यध्याहारादिना वा व्याख्येय इति प्राप्ते ब्रूमः । यदि–शब्दात्प्रकरणाच्च ज्योतिष्टोमस्याभिधानम् ।

न च सामान्तरव्यवच्छेदेन रथन्तरस्य विशेषणत्वं शब्दो हि स्वार्थसत्तामेव प्रथमं बोधयति यदि सा नित्यप्राप्ता स्यात्ततस्तत्प्रतिपादनमनर्थकमित्यर्थान्तरव्यवच्छेदं कुर्यात्, इह तु रथन्तरसत्तायाः पाक्षिकत्वात्तत्प्रतिपादने ऽपि नानर्थकत्वमित्यसत्ताव्युदासेन सत्तयैवात्र विशेषणत्वलाभाच्च कर्मान्तरत्वं, यद्यपि सामान्तरमेव व्यवच्छेत्तव्यम् । तथाऽपि वैकल्पिकयोरथन्तरबृहतोर्विरोधिनोः परस्परव्यवच्छेदेनैव विशेषणत्वं नावि-

रोधिनां सामान्तराणां व्यवच्छेदः। यथा नीलोत्पलमिति पीतादीनामेव व्यवच्छेदो न तु दैर्घ्यादीनाम्।

न च रथन्तरस्य सामान्तरापेक्षत्वमनपेक्षस्यैव पृष्ठस्तोत्रसाधनत्वेन ज्योतिष्टोमान्वयात्, तेन यद्यपीह रथन्तरविशिष्टः क्रतुर्निमित्तं, तथाऽपि प्रकृतस्यैवाभिधानम्। अथवा क्रतुविशिष्टं रथन्तरमिह निमित्तमनित्यत्वात् नित्यस्तु क्रतुर्न निमित्तं भवितुमर्हति तेन यद्यपि बहुव्रीहिणा रथन्तरविशिष्टः क्रतुरेवाभिधीयते तथाऽपि दध्ना जुहोतीतिवद्विशेषणपरत्वात्तस्यैव निमित्तत्वं प्रथमप्रतीतं रथन्तरमुल्लङ्घ्य यदि–शब्दोपक्रान्तनिमित्तप्रतीतिर्न यावत्क्रतुं गच्छतीति रथन्तरमेव निमित्तं, तच्च ज्योतिष्टोमेऽप्यस्ति तस्मान्न कर्मान्तरम्।

अथावेष्टौ क्रत्वन्तरताऽधिकारताऽधिकरणम्।

**सू० अवेष्टौ यज्ञसंयोगात्क्रतुप्रधानमुच्यते॥ १॥**

राजसूये राजकर्तृके अवेष्टिर्नामेष्टिः समाम्नाता, "आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणे"त्यादिका तां प्रकृत्योच्यते। "यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिं हुत्वा तमभिघारयेत्। यदि राजन्य ऐन्द्रं, यदि वैश्यो वैश्वदेव"मिति तत्र संशयः। किं ब्राह्मणादीनामवेष्टौ प्राप्तानां मध्ये निधानविशेषं प्रति निमित्तार्थानि श्रवणानि? उताप्राप्तानां प्रापकाणी? ति तदर्थमिदं विचार्यते किं राजसूये त्रयाणामपि ब्राह्मणादीनामधिकारः? उत क्षत्रियस्यैवे? ति। तदर्थमपि किं राजसूयाधिकारगतो राजशब्दस्त्रयाणामपि वाचकः? किम्वा क्षत्रियस्यैवे? ति। ततोऽपि किं राजशब्दो राज्ययोगनिमित्त? उत क्षत्रियाजातिनिमित्त? इति विचारयितव्यम्। यदि राज्ययोगनिमित्तस्ततस्तद्योगिनां त्रयाणामपि अधिकारवाक्यस्थराजोपपदोपादानतः प्राप्तेर्निमित्तार्थानि ब्राह्मणादीनां श्रवणानि। अथ जातिनिमित्तः, ततोऽतज्जातीययोर्वैश्यब्राह्मणयोराजोपपदवशेनार्थाचिवृत्तेरप्राप्तानां ब्राह्मणादीनां प्रापकाणि। तत्र "राज्ययोगनिमित्तोऽयमार्यावर्त्तप्रसिद्धितः। सर्वलोकप्रसिद्धत्वादविगानाच्च गम्यते।

क्षत्रियत्वनिमित्तत्वमनार्येष्ववगम्यते । द्रविडेषु विगीतं च तदन्येष्वप्रसिद्धितः" । तेन राज्ययोगाद्राजानस्त्रयोऽपि भवन्तीति, राज्यपदं तु रूढ्या जनपदरक्षणे वर्त्तते न राजयोगमपेक्षते ॥

ननु राजयोगाद्राज्यमभियुक्ताः स्मरन्ति "तस्य कर्मणी"त्यधिकृत्य "पत्यन्तपुरोहितादिभ्यो यगि"ति वचनाद्राजशब्दस्य तत्र पाठादाचाराच्च स्मृतेर्बलीयस्त्वं स्थितम् । उच्यते। लोकप्रयोग एव शब्दार्थावधारणे प्रमाणं स्मृतेरपि स एव मूलं नान्यदस्ति, प्रयोगाच्च राज्यशब्दस्यैव स्वातन्त्र्यं तन्निमित्तत्वं च राजशब्दस्यावगम्यते, ततस्तदनुसारेण स्मरणं साधुशब्दविभागमात्रपरं व्याख्येयम् । अतस्त्रयाणामपि राजपदाभिधेयत्वेन राजसूये प्राप्तानां निमित्तार्थानि श्रवणानि यदि—शब्दसामर्थ्यादप्येवमेव यदि—शब्दो हि राजशब्दस्य राज्ययोगनिमित्तत्वे प्रमाणम् अन्यथा प्राप्त्यभावाद्यदि—शब्दोऽनुपपन्नः स्याद्वैदिकश्च निर्देशः स्मृतेरपि बलीयांस्तस्मान्निमित्तार्थानीति प्राप्ते ब्रूमः । न तावद्वैदिकनिर्देशादत्र निर्णयः शक्यते कर्त्तुम् । अन्यथाऽपि तत्सद्भावा "द्राजानमभिषेचये"दिति ह्यभिषेकविधेः प्रागेव राज्ययोगाद्राजशब्दः क्षत्रियमात्रे वेदप्रयुक्तस्तेन रूढमेव राजपदं निर्णीयते । यदि—शब्दस्तु निपातत्वाद्यथा कथंचिन्नीयमानो न दुष्यति स्मरणाच्च स्वतन्त्रमेव राजपदम्

न च तस्य निर्मूलत्वं द्रविडप्रयोगस्य मूलस्य संभवादतो नायथार्थत्वे स्मरणस्य प्रमाणमस्तीति तेनैवाभियुक्तप्रणीतेनाचारस्य संभवाद्गौणभ्रान्त्यादिप्रयोगप्रसूतस्य बाधाद्राजयोगादेव राज्यशब्दः, स्वतन्त्रस्तु राजशब्दः क्षत्रियवचन इति ब्राह्मणादेरवेष्टौ प्राप्त्यभावात्प्रापकाणि वचनानीति ॥

आधानस्य विधेयत्वाधिकरणम् ।

## सू० आधाने सर्वशेषत्वात् ॥ २ ॥

इदमामनन्ति "वसन्ते ब्राह्मणोऽग्नीनादधीत ग्रीष्मे राजन्यः शरदि वैश्य" इति। तथा वसन्ते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यं शरदि वैश्यमिति अत्रापि स एव विचारः। किम् ब्राह्मणादीनामाधानोपनयनयोः प्राप्तानां वसन्तादिकालं प्रति निमित्तार्थानि श्रवणानि? उत प्रापकाणी?ति। तत्र विद्याग्निसाध्यत्वात् क्रतूनां तदुपाययोः प्राप्तत्वात् ब्राह्मणादीनां निमित्तार्था

पुनः श्रुतिः, आहवनीये जुहोतीति वाक्यादग्निसाध्यत्वं क्रतूनाम्, आहवनीयश्चाधानैक्यसाध्य इत्यर्थादाधानप्राप्तिर्ज्ञानपूर्वकत्वाच्चेतनप्रवृत्तेः, क्रतुज्ञानस्य च वेदाध्ययनसाध्यत्वात्, वेदाध्ययनस्य चोपनयनमन्तरेणासंभवात् उपनयनस्यापि क्रतुभिरेवार्थात्प्राप्तिः । नन्वलौकिकत्वादाहवनीयादीनां विधिमन्तरेणाधानसाध्यत्वानवगतेः कथं क्रतुभिरर्थादाधानस्याक्षेपः तत्रापि वा प्रथमाधानविधिषु वसन्तादिष्वाहवनीयादिपदाश्रवणादाधानसाध्यत्वावगमः स्यात् । यदि "नक्तं गार्हपत्यमादधाति दिवाऽऽहवनीयं त्रिभिर्गार्हपत्यमादधाति पञ्चभिराहवनीय"मित्यादिगुणवाक्यालोचनेनैतज्ज्ञायते नूनमाधानाधीनमाहवनीयाभिधानीयकर्मित्युच्यते तन्ममापि तुल्यम् । अतोऽग्निविद्यासाध्यैः क्रतुभिस्तदुपायभूतयोरुपनयनाधानयोराक्षेपतः प्राप्तिः । अथवा य एवं विद्वानग्निमाधत्ते इति सामान्यतः सर्ववर्णानामाधानस्य विधायकं गुणानभिभूतशक्तिकमस्ति वचनं यस्मिन् गुणापहृतविधिशक्तयो वसन्तादिविधयो ब्राह्मणादिनिमित्तं कालमात्रं विदधति तस्मान्निमित्तार्थानि श्रवणानीति प्राप्ते ब्रूमः ।

न तावत्क्रतुसामर्थ्यात्प्राप्तिरैकान्तिकी तयोः ।
सामान्यवचनं यत्तद्वर्त्तमानापदेशकम् ॥

वसन्तादिवाक्येषु तावद्यदि–शब्दाद्यभावाद्वाक्यान्तरविहिताधानोपनयनविपरिवृत्त्यभावाच्च क्रियाविधिरेव प्रतीयते । यदि सामान्यतः प्राप्तिः स्यात्तदा बलान्निमित्तार्थता स्यान्न त्वस्ति प्राप्तिः, क्रतुविधयस्तावदग्निविद्यामात्रसाध्याः, अग्नयस्तु यद्यप्याधानसाध्यास्तथाऽपि न तेनैव सर्वे निष्पाद्याः अन्येन निष्पादितानामन्येन क्रयादिभिरपि प्राप्तिसंभवात्तथा विद्याऽपि पुस्तकनिरीक्षणाद्युपायसंभवेन नैकान्तत उपनयनमाक्षिपति तत्रास्ति विधेरवकाशः, सामान्यवचनं तु वर्त्तमानापदेशसरूपं न वसन्तादियुक्ते प्रत्यक्षविधौ सति क्लेशेन विधित्वमापादयितव्यं तस्मात्प्रापकाणि वचनान्याधानोपनयनयोः ।

अथ दाक्षायणादीनां गुणतांऽधिकरणम् । सू० अयनेषु चोदनान्तरं संज्ञोपबन्धात् ॥ २ ॥

दर्शपूर्णमासप्रकरणे श्रूयते । "दाक्षायणयज्ञेन स्वर्गकामो यजेत तथा साकंप्रस्थाय्येन यजेत पशुकाम" इति तत्र विचारः किङ्कर्मान्तरविधि? उत दर्शपूर्णमासयोरेव गुणात्फल?मिति तदर्थं च किं दाक्षायणादिशब्दो गुणविधिः कर्मनामधेयमिति विचारः । तत्रैवंविधसंज्ञायुक्तस्य लोके गुणस्याप्रसिद्धत्वादुद्भिदादिवच्च सामानाधिकरण्येन नामधेयत्वं, तच्च भेदकं ज्योतिरादिवत् । अपि चास्य नामत्वेनाविधेयत्वात् गुणान्तरस्य विधेयस्याभावात्फलस्य चाविधेयत्वात्कर्मैव विधेयमित्यभ्यासादपि भेद इति प्राप्ते ब्रूमः

स्यादेवं नामधेयत्वे गुणस्त्वत्र विधीयते ।
फलाय साकं प्रास्थानमावृत्तिश्चेत्यभिन्नता ॥

नामत्वे सञ्ज्ञालक्षणो ऽभ्यासलक्षणो वा कर्मभेदः स्यात् गुणविधिस्त्वयं यद्यपि न लोकसिद्धो गुणस्तथाऽपि वाक्यशेषादवयवव्युत्पत्त्या वा वृत्तिसहप्रस्थानलक्षणगुणवचनत्वमनयोरवगम्यते । अतो गुणावप्राप्ताववश्यं विधातव्यौ, यागस्तु प्रकृत इति तदाश्रयणेनं गुणमात्रं फलाय विधीयते दध्यादिवत्, यथैव दध्यादेरर्थान्तरेऽत्यन्तरूढत्वान्न नामधेयत्वमेवं दाक्षायणादिशब्दानां, द्वे हि पौर्णमास्यावित्यादिवाक्यशेषदर्शनेन दार्शपौर्णमासिक गुणवचनत्वावगमात्तद्रूपेण च धातुपारार्थ्यादेराश्रयणीयत्वात्, नोद्भिदादिवत्कर्मान्तरवचनत्वं सम्भवतीत्यकर्मभेदः ।

अथ द्रव्यदेवतायुक्तानां यागान्तरताऽधिकरणम् ।

**सू० संस्कारश्चाप्रकरणे ऽकर्मशब्दत्वात् ॥ ४ ॥**

"वायव्यं श्वेतमालभेत भूतिकामः सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः" इत्यनारभ्याम्नातम् । तथा दर्शपूर्णमासप्रकरणे "ईषामालभेत चतुरो मुष्टीर्निर्वपति संदेहः किं दार्शपूर्णमासिकयोरीषालम्भमुष्टिनिर्वापयोः श्वेतचरुगुणौ विधीयेते? किम्वा कर्मान्तरे यावदुक्ते निर्वपणमालम्भनं च गुणफलविशिष्टे? किम्वा यागविधानमितरत्रेतरत्र? ति । तत्र विधिगौरवाच्च कर्मान्तरविधानं यागस्त्वश्रुतो दूरभ्रष्टः । न चासति यागे देवतात्वं वाय्वादीनां संभवति तेन सर्ववृक्षाणां वायुसंबन्धात् कथंचिदीषाया एव

वायव्यमित्यनुवादः सौर्यमिति चाग्नेयस्येव तेजोदेवतासामान्यादतो दार्शपौर्णमासिकयोरालम्भनिर्वापयोर्गुणविधी । यदालभेत तच्छ्वेतमिति यन्निर्वपेत्तच्चरुमिति चरुशब्दः स्थालीवचनः सप्तम्यर्थे च द्वितीया स्थाल्यां निर्वपेदित्यर्थः । भूतिब्रह्मवर्चसकामशब्दौ सर्वकामप्राप्तानुवादाविति नैतद्युक्तम् । न हि फलपदयोर्नित्यवच्छ्रुतयोः संभवत्प्रयोजनयोश्च पाक्षिकानुवादत्वमानर्थक्यं च युक्तमङ्गीकर्तुम् । तस्माद्गुणफलविशिष्टं कर्मान्तरं यावदुक्तं विधीयते । लोकेऽपि चालम्भादिसद्भावादैकान्ततो दार्शपौर्णमासिकयोः प्रतीतिः, देवतापदं तु पूर्ववद्यथाकथंचिच्चेयम् । यागस्याश्रुतस्य विधानायोगात्तदभावे च देवतात्वासंभवात्तस्माद्यावदुक्तकर्मान्तरविधिरिति प्राप्ते ब्रूमः ॥

देवतापदवैयर्थ्यं यावदुक्तविधौ भवेत् ।
तेन तत्कल्पितो यागो विधेयोऽश्रुतोऽपि सन् ॥

न हि यदेव प्रत्यक्षपठितं तदेवैकं शाब्दं सामर्थ्यमपि हि शब्दैकदेश इत्युक्तमतो द्रव्यदेवतासंबन्धकल्पितो यागो विधीयते । तदयं वाक्यार्थः श्वेतमालभेत वायुदेवत्यं कुर्यात् भूतिकामः इति, तत्र चालभेतेत्यनुवादः, चोदकादर्थेन वा प्राप्तत्वाद्वायव्यं श्वेतं कुर्यादित्येतावद्विधीयते । न चान्तरेण यागं वायव्यं कर्तुं शक्यमिति याग एवायमेवं विहितो भवति तस्माद्याग एव गुणफलविशिष्टो विधीयते ।

अथ वत्सालम्भादीनां संस्कारताऽधिकरणम् ।

सू० विशये प्रायदर्शनात् ॥ ५ ॥

अग्निहोत्रदोहाधिकारे "वत्समालभेते"ति श्रुतं तत्रासत्यपि देवतासंयोगे प्राणिद्रव्यकालम्भत्वसामान्यादत्रापि यागविधिं मन्यते । तस्योत्तरमालम्भो नाम स्पर्शमात्रं न तस्य यागमन्तरेणानुपपत्तिः, लोकेऽपि दृष्टत्वादतोऽत्रालम्भमात्रं वत्ससंस्कारो विधीयते ॥

नैवारचरोराधानार्थताऽधिकरणम् ।

सू० संयुक्तस्त्वर्थशब्देन तदर्थश्रुतिसंयोगात् ॥ ६ ॥

"चरुमुपदधाति बृहस्पतेर्वा एतदन्नं यच्चीवारा" इत्यत्रापि किं चरोर्यावदुक्तमुपधानमात्रमुत याग? इति संशयः। तत्र बृहस्पतेर्वा एतदिति कथं बृहस्पतेः स्याद्यद्यसौ देवता न स्यात्संबन्धान्तराभावात्तैत्तिरीयकाणां तु बार्हस्पत्यो भवतीति तद्धितेनैव वाक्यशेषे देवतात्वमुक्तम्। वाक्यशेषावगतदेवतासंबन्धबलेन यागार्थता चरोरुपधानं तु यागोपयुक्तस्य प्रतिपत्तिः स्विष्टकृदादिप्रत्याम्नानेनेति प्राप्ते ब्रूमः। विध्युद्देशापेक्षिते विशेषो वाक्यशेषाद्गृह्यते नानपेक्षितश्चरुश्चोपधानेनैव स्वल्प निर्वृत्त्यौपदिकेन निराकाङ्क्षो नार्थान्तरमपेक्षते न चोपधानस्य यागवद्देवतापेक्षा यतोवाक्यशेषावगता देवता गृह्येत, तैत्तिरीयकवाक्यमपि बार्हस्पत्यो भवतीति वर्त्तमानापदेशकं न देवताविधिपरमतोऽर्थवादमात्रं वाक्यशेष इत्युपधानमेव चरोर्न यागः।

त्वाष्ट्रपात्नीवतस्य पर्यग्निककरणगुणकत्वाधिकरणम्।

**सू० पात्नीवते तु पूर्ववत्त्वादवच्छेदः॥ ७॥**

"त्वाष्ट्रं पात्नीवतमालभेते"ति प्रकृत्य पर्यग्निकृतं पात्नीवतमुत्सृजतीति श्रुतम्। तत्र संशयः किं पर्यग्निकरणान्ताङ्गरीतिगुणविधि? उत तत्संबद्धयागविधि? रिति। तदर्थं च किं पर्यग्निकृतं पात्नीवतं कुर्यादित्यन्वयः? उत पर्यग्निकृतमुत्सृजतीति। तत्राव्यवहितसंबन्धलाभात्पर्यग्निकृतं पात्नीवतं कुर्यादित्यन्वयो न तु पर्यग्निकृतमुत्सृजतीति व्यवहितकल्पनादोषात्।

न च पात्नीवतशब्दात्पूर्वयागप्रत्यभिज्ञा। त्वष्टा हि पत्नीवांस्तत्र देवता न केवलः पत्नीवान्। अतो यथाऽऽग्नेयमित्यग्नीषोमीयादेरग्रहणं तथाऽत्रापि।

न च पूर्वत्र विधेयः कश्चिदिह गुणः संभवति। न तावत्पर्यग्निकरणं चोदकप्राप्तत्वात् नोत्सर्गस्तस्याप्युत्पत्तिवाक्यसिद्धत्वात्पर्यग्निकरणविशिष्टपात्नीवतोद्देशेनोत्सर्गविधौ विशिष्टानुवादाद्वाक्यभेदः।

न च पर्यग्निकृतोत्सृजतीति क्रमः तस्यापि चोदकप्राप्तेः।

न च पर्यग्निकरणान्ताङ्गकलापः, तस्यापि सिद्धत्वात्, नोत्तराङ्गपरिसंख्या त्रिदोषत्वात्तस्मात्कर्मान्तरमिति प्राप्ते ब्रूमः। पात्नीवतशब्दस्ताव-

न्मनोतास्थाग्निशब्दवच्छक्नोति पूर्वयागमुपस्थापयितुम् । न चात्राग्नेयवद्-सामर्थ्यमुत्पत्तिवाक्ये हि त्वाष्ट्रं पात्नीवतमिति हि प्रत्येकमुत्पन्नस्तद्धितः प्रत्येकमेव देवतात्वङ्गमयति न त्वग्नीषोमीयादिवत्समासादुत्पन्नस्तद्धितो-येन व्यासक्तं साऽपेक्षं देवतात्वं स्यात् ।

न च प्रत्येकमपि देवतात्वे विकल्पः युगपदेकेन वाक्येन विधा-नात्, डित्थडवित्थयोर्माता डित्थमातेति शक्यते वक्तुं यथा एवं पात्नीव-तमपि । सति चैवं प्रकृतप्रत्यभिज्ञाने न कर्मान्तरत्वं युक्तमत उत्सृजतिना पूर्वयागमनूद्य पर्यग्निकरणान्ताङ्गकलापविधिर्यद्यपि चासौ चोदकात्सिद्ध्य-ति तथाऽपि ततः प्रागेव विधीयते । तेन च क्लृप्तोपकारेण निराकाङ्क्ष-त्वात्प्रयोगवचनो गृहमेधीयवन्नातिदेशमपेक्षते । शक्नोति च पर्यग्निक्र-तुशब्दः प्राकृतपर्यग्निकरणावस्थावचनस्तदन्ताङ्गकलापं गमयितुम् । न हि पूर्वाङ्गेष्वकृतेष्वियमवस्था भवति पर्यग्निकृतोत्सर्गानुवादेन चाङ्ग-रीतिविधौ पात्नीवतशब्दो नित्यानुवाद इति न विशिष्टानुवाददोषः ।

अदाभ्यादीनां ग्रहनामता-ऽधिकरणम् ।

सू० अद्रव्यत्वात्केवले कर्मशेषः स्यात् ॥ ८ ॥

"एष वै हविषा हविर्यजते यो ऽदाभ्यं गृहीत्वा सोमाय यजते" "परा वा एतस्यायुः प्राण एति योंऽशुं गृह्णाती"त्यनारभ्य श्रुतं, तत्र विचारः। किं ज्योतिष्टोमे ग्रहणविधि? रुत यागान्तरविधि? रिति । तदर्थं च किम-शुमदाभ्यमिति यागनाम्नी? ग्रहणनाम्नी वे? ति । तत्र ग्रहणस्य संस्का-रत्वादवघातादिवन्नामधेयानर्हत्वाद्यागनामत्वमदाभ्यं यजत इति । नाम च प्रकृतादपि भेदकमित्युक्तं, किमुताप्रकृतादेव ज्योतिष्टोमादंशौ तु यद्यपि यजिर्न श्रुतस्तथाऽपि संज्ञयैव तावत्कर्मान्तरं कल्प्यते । तच्च गृह्णाति-चोदनासामान्याज्ज्योतिष्टोमप्रकृतिकमिति तदीयविध्यन्तप्राप्तेर्द्रव्यदेवता-संबन्धाद्यागो भविष्यति तस्माद्यागान्तर इति । उच्यते

१ पर्यग्निकृतशब्द इति पा० ।

"संस्काराणां न नामानि वार्यन्ते राजशासनात् ।
आनन्तर्यादतः स्यातां ग्रहयोरेव नामनी ॥
अंशौ तावद्यजिर्नैव श्रुतस्तन्नामता कुतः ।
अदाभ्ये श्रूयमाणाऽपि व्यवधानाच्च नामभाक् ॥
तदिह ग्रहयोरेव भेदो नामवशाद्भवेत् ।
न तु यागस्य, तेनात्र विधीयेते ग्रहावुभौ ॥
तयोर्ग्रहात्युपस्थानाज्ज्योतिष्टोमेन सङ्गतिः ।
अथवा तैत्तिरीयाणामनयोर्विनियोजकम् ॥
अस्ति प्रकरणे वाक्यं तेन तादर्थ्यमेतयोः ।
अदाभ्ये श्रूयमाणोऽपि गुणसंक्रान्तशक्तिना ॥
विधिना न विधातव्यो यागस्तेन न भिद्यते ।
अंशौ त्वश्रुत एवेति विधेयौ केवलौ ग्रहौ" ॥

अग्निचयनस्य संस्कारताऽधिकरणम् ।

सू० अग्निस्तु लिङ्गदर्शनात्क्रतुशब्दः प्रतीयते ॥ ९ ॥

"य एवं विद्वानग्निं चिनुत" इति श्रुतं तथेमान्यपि वचनानि "अथातोऽग्निमग्निष्टोमेनानुयजन्ति तमुक्थ्येने"त्यादि तत्र संशयः । किमयमग्निं चिनुत इति यागविधि ? उताग्निसंस्कारमात्रं चयनं स्वतन्त्रं विधीयते ? । किं वा ज्योतिष्टोमादिषु गुणो विधीयत ? इति तदर्थं च किमग्निशब्दो यागनामधेय ? मुत द्रव्यवचन ? इति । तत्राऽश्वदाभ्यवत्प्रकरणे पुनः संकीर्त्तनाभावाच्च क्रतुसंयोगस्तदभावे च संस्कारमात्रं स्वतन्त्रमनर्थकम्, अतो "ऽग्निं कुर्या"दिति यागविधिश्चिनोतिश्चेष्टकाभिरग्निं चिनुत इति वाक्यप्राप्तानुवादो निर्वपतिवत्, कथं पुनरसति यजिश्रवणे यागविधानम् ? । उच्यते अग्निं कुर्यादिति तावत्संज्ञयैव कर्मान्तरेऽवधारिते "ऽथातोऽग्निमग्निष्टोमेन अनुयजन्तीति यदग्निं यजति तदग्निष्टोमेनेति संस्थाविधिपरे वाक्ये यजिनाऽनुवादादुत्पत्तौ यागवचनोऽग्निशब्द इति गम्यते । यद्यपि नायं संस्थाविधिः किं त्वग्निष्टोमसंस्थेन यागेनाग्निमनुयजन्तीति तथाऽप्यग्नेर्यागत्वं,

न ह्यन्यथा तमन्वयैर्यष्टुं शक्यते। यथा देवदत्तमनुगच्छति यज्ञदत्त इत्युक्ते देवदत्तोऽपि गच्छतीति प्रतीयते, अन्यथाऽनुगमनानुपपत्तेरेवमनुयजनवशादेवाग्नेर्यागत्वं सिद्धत्वम्। तस्माद्यागविधानं स्यादिति प्राप्ते ब्रूमः। "अग्नेश्चयनसंस्कारमात्रमत्र विधीयते। तस्याथाऽतोऽग्निमित्यादिवाक्यैः स्यात्क्रतुसङ्गतिः। वह्नौ रूढोऽग्निशब्दोऽयं न हि यागस्य वाचकः"। न ह्यग्निशब्दोऽत्यन्तरूढत्वात् वाक्यभेदतत्प्रख्यतद्व्यपदेशविधुरत्वाच्च यागनामत्वं प्रतिपद्यते, तेन ज्वलनस्यैवायं चयनसंस्कारो विधीयते तस्य संस्कारस्य क्रतुसंबन्धपराण्यथातोऽग्निमग्निष्टोमेनानुयजन्तीत्यादीनि। अत्राग्निशब्दः प्रकरणाच्चयनसंस्कृतेऽग्नौ वर्त्तते अनु-शब्दश्चयनापेक्षया पश्चाद्भावमग्निष्टोमादीनामाह तेन चयनसंस्कृतेऽग्नावग्निष्टोमादिभिर्यजेतेत्यर्थः। न त्वत्राप्यग्निशब्दो यजिसमानाधिकरणो येन नाम स्यात्। न चावश्यं तुल्यरूपाणामेव पौर्वापर्यं, पाकमनुभुङ्क्ते इत्यादिषु विजातीयानामपि दर्शनात्तस्मादपि ज्योतिष्टोमादिषु गुणविधिः।

मासाग्निहोत्रादीनां क्रत्वन्तरताऽधिकरणम्। **सू॰ प्रकरणान्तरे प्रयोजनाऽन्यत्वम्॥ १०॥**

गुणभेदप्रसङ्गे समाप्ते ऽधुना प्रकरणान्तरेण भेदोऽभिधीयते। कुण्डपायिनामयने "उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोति मासं दर्शपूर्णमासाभ्यां यजन्ते" इत्यादि श्रुतम्। तत्र संशयः किं नैयामिकेऽग्निहोत्रादौ मासो विधीयते? किम्वा कर्मान्तर? मिति। तदर्थं किमनुपादेयगुणसंबन्धानुगृहीतो ऽसद्विधिर्भेदकारणं संभवत्युत ने? ति। "तत्राग्निहोत्रशब्देन तत्कर्मोपस्थितं यतः। तस्मात्तत्रैव मासोऽयमप्राप्तो हि विधीयते"। उपादेयमनुपादेयं वा यदप्राप्तं तदेव विधेयं मासश्च तथा, यच्च प्राप्तं तदनुवाद्यमग्निहोत्रशब्दश्च स्वाभिधेयं कर्मोपस्थापयति तच्च प्राप्तं न विधेयम्। अतो यद्यपि स्वभावतोऽनुपादेयं मासमुद्दिश्य कर्मोपादीयते। तथाऽपि मास एव विधेयो न कर्म विधिनिबन्धनश्च भेदो नोपादाननिबन्धनः, तस्मादुपादेयमपि कर्माविधीयमानं न भिद्यते इति प्राप्ते ऽभिधीयते। "प्रकरणान्तरे प्रयोजनान्यत्व"मिति किमिदं प्रकरणान्तरम्? इति

अप्रकृताभिधानमित्यर्थः। कथमप्रकृताभिधानम्? उच्यते उपसद्भिश्चरित्वेति वचनाच्च हि नैयमिकस्योपसदः सन्ति तत्र ताश्च मासश्चेत्यनेको गुणः प्राप्ते कर्मणि न शक्यते विधातुमिति कर्मान्तरम्। अत्र चाप्रकृत[1]विधानादेव प्रकरणान्तरपर्यायाद्भेदः अप्रकृताभिधानं तु गुणादिति न गुणाद्भेदः। यद्येवं वाजिभ्यो वाजिनमित्यत्राप्यप्रकृताभिधानादेव प्रकरणान्तरपर्यायाद्भेदः। अप्रकृताभिधानं तु पूर्वकर्मसंयोगिनो गुणादिति तत्रापि प्रकरणान्तरमेव भेदकं स्यान्न गुणः। तथा शब्दाऽन्तराभ्याससंज्ञाभिरप्यप्रकृतविषयतैव विधेर्बोध्यते न साक्षाद्भेदः, स तु विधेरप्रकृतविषयत्वात्सिद्ध्यतीति सर्वत्र प्रकरणान्तरमेव भेदकं स्यान्न शब्दान्तरादयः। अथ तेषामेवमेतदेव भेदकत्वं यद्विधेरप्रकृतविषयत्वापादनम्। एवं सत्यत्रापि गुणादेव तत्सिद्धेः स एव भेदकः स्यादिति न प्रकरणान्तरं शब्दान्तरादिभिः सह संख्यातुं युज्येत। तद्धि साक्षाद्भेदकं सर्वत्रान्ये तु तद्द्वैतव इत्यतुल्यत्वात्कथं सह गणनम्?। अपि च मासं दर्शपूर्णमासाभ्यां यजेत इत्यत्रानेकगुणाभावाच्चाप्रकृताभिधानं सिध्येत्तस्माच्चाप्रकृताभिधानं प्रकरणान्तरं किन्त्वन्यदेव गुणादिवदप्रकृताभिधानहेतुभूतमिति वक्तव्यम्। किं पुनस्तत् पूर्वकर्मासन्निधानं? कथं पुनस्तेन भेदसिद्धिः?। उच्यते "कर्मासन्निहितं नैव बुद्धौ विपरिवर्त्तते। शब्दात्तु तदुपस्थानमुपादेये गुणे भवेत्"। असन्निहितं तावत्कर्म न बुद्धौ विपरिवर्त्तते तादृशमपि कथंचिज्जुहोतीति प्राप्तवन्निर्देशेन दूरस्थमपि उपस्थाप्येत यदि विधित्सितो गुण उपादेयः स्यादाहवनीयादिवत्तत्र हीदृशी वचनव्यक्तिः शक्यते निदर्शयितुम् यज्जुहोति तदाहवनीय इति। "यत्र वाक्ये ऽनुपादेयो देशकालादिको गुणः। अतो न तत्र दूरस्थकर्मोपस्थानसंभवः"। यत्कुर्यादित्येवं प्राप्तवन्निर्देशेन दूरस्थकर्मोपस्थापनं स्यात्तथा च तस्योद्देशान्मासस्तत्रोपादेयः।

न च होमानुरोधेन मासः संपादयितुं शक्यते। तेनैषा वचनव्यक्तिर्यो मासस्तत्र होमं कुर्यादिति तेन शब्दस्वरसतः प्राप्तोपस्थानानवगमात्सन्नि-

1 अत्र चाप्रकृताभिधानादेवेति पा.।

धानाभावाच्च क्रियैव विधातव्येति कर्मभेदः । एवं "सरस्वत्या दक्षिणेन तीरेणाग्नेयोऽष्टाकपालः" । "सत्रायाऽवगूर्य विश्वजिता यजेते"ति देश-निमित्तयोरपि द्रष्टव्यम् ।

ननु नामधेयेन भवति पूर्वकर्मोपस्थापनम् भवतु धात्वर्थस्य भावना तु तेनानुपस्थानाद्भिद्यते एव धात्वर्थोऽपि यादृशो धातुना-ख्यातवर्तिनाऽपूर्वापरीभूतो विधेरुपादीयते न तादृशो नाम्ना उपस्था-प्यत इति तस्यापि युक्तो भेदस्तदभेदेऽपि तावद्भावना भिन्नेति सिद्धम् ॥

आग्नेयादिकाम्येष्ट्य-धिकरणम् ।

सू० फलं चाकर्मसन्निधौ ॥ ११ ॥

"आग्नेयमष्टाकपालं निर्वपेद् रुक्का[1]म" इत्यनारभ्य श्रुतम् । तथा "त्रैधातव्या दीक्षणीये"त्यश्वमेधे । तत्रापि पूर्ववत्संशयः किं प्रकृत आग्नेये फलविधिः काम्ये च त्रैधातवीये कर्मणि दीक्षणीया कार्ययजमानसंस्कार-विधिः? उत कर्मान्तरविधिः? रिति तदिह यः पूर्वत्र प्रकरणान्तरग्रहणात्तदेव भेदकं नासन्निधानमात्रमिति मन्यते यो वा फलस्योपादेयत्वं मन्यते शक्यते तद्दर्शपूर्णमासस्येनापि कामयितुं न मासादिवदशक्यसंपादनमिति तन्निरा-करणार्थमिदमधिकरणम् । पूर्वत्राप्यविपरिवृत्तिकारणत्वादसन्निधानमेव कारणं न प्रकरणान्तरं, सदपि तन्न व्याप्रियते । तच्चासन्निधानमत्राप्य-विशिष्टं, यद्यपि च फलं शक्यते कामयितुं तथाऽपि स्वरसादेव तत्का-ममुद्दिश्य साधनमेवोपादेयं न फलं फलत्वव्याघाताद्विधीयमानं हि तदङ्गमेव स्यात्, एवं संस्कारेऽपि द्रष्टव्यं, न चाग्नेये ऽग्निहोत्रवन्नाम-धेयत्वमस्ति येनाभेदाशङ्काऽपि तावत्स्यात्तस्मादत्रापि कर्मभेदः ॥

अवेष्टेरन्नाद्यफलकत्वा-धिकरणम् ।

सू० सन्निधौ त्वविभागात्फलार्थेन पुनः श्रुतिः ॥ १२ ॥

सर्वेषामेव देशकालनिमित्तफलसंस्कार्याणामसन्निधिप्रत्युदाहरणा-र्थमारभ्यते । "समे दर्शपूर्णमासाभ्यां यजेत पौर्णमास्यां पौर्णमास्या यजेत ।

---

[1] रुक्कामः—तेजस्कामः ।

यावज्जीवं दर्शपूर्णमासाभ्यां यजेत एतयाऽन्नाद्यकामं याजयेच्छेषात्स्विष्टकृते समवद्यतीति तत्र संशयः कर्मसन्निधौ किं देशादिसंबन्धे कर्मभेदो भवति? उत प्रकृतमेव कर्म देशादिषु विधीयत? इति विचारः, किं प्राप्तम्? अत्रापि तावद्देशादेरुद्देशात्कर्म तं प्रति उपादेयम्। तथा च स्याद्विधेयं तेन भिद्यते विधानमेवोपादानं नान्यत् अत्र च देशादेरुद्देश्यत्वात्कर्मावश्यमुपादेयमतश्च विधेयत्वापत्तेर्विहितस्य विधानायोगात्सत्यपि संनिधौ कर्मान्तरमिति प्राप्ते ब्रूमः

सन्निधावविभक्तत्वं कर्मणः प्रत्यभिज्ञया ।
गम्यते तेन तस्यैव फलाद्यर्था पुनः श्रुतिः ॥

निर्देशगतस्वातन्त्र्यपारतन्त्र्यात्मके उद्देशोपादाने प्राप्त्यप्राप्तिवशौ तु विध्यनुवादौ अतस्तयोः ताभ्यां भेदादुपादेयमपि देशकालयोः कर्म प्राप्तं तद्रूपमेव प्रत्यभिज्ञायते इत्यनुवाद्यं, तस्य तूद्देश्याभ्यामपि देशकालाभ्यां संबन्धमात्रमप्राप्तमिति तन्मात्रं विधीयते इत्यभेदः स्यात् । अस्तु तावद्देशकालयोर्विधेयत्वात्कर्मणोऽनुवादः । निमित्तफलसंस्कार्याणां त्वविधेयत्वात्कर्मैव विधेयमिति भेदः स्यात् सत्यं, कर्म विधातव्यं, तथाऽपि तु न भिद्यते । उत्पत्तिविधिभेदे हि भेदो नास्ति च सोऽत्र नः। कर्मस्वरूपगताप्रवृत्तपूर्वप्रवर्तनमुत्पत्तिः । न चैकस्मिन्कर्मणि उभाभ्यामप्रवृत्तप्रवर्तनं संभवतीति कर्मभेदः स्यात्, संभवति चान्येनोत्पादितस्यान्येन निमित्तादिसंबन्धमात्रप्रतिपादनं, कर्तव्यतामात्रं ह्युत्पत्तिवाक्यादवगतं तत्र किं कस्मिन् निमित्ते कस्मै वा कामायेति विशेषापेक्षायामुत्पन्नस्यैव कर्मणो नैमित्तिकी कर्तव्यता निमित्तवाक्ये प्रतिपाद्यते फलविनियोगश्च फलवाक्ये, संस्कार्यविनियोगश्च तद्वाक्य इत्यकर्मभेदः ।

आग्नेयद्विरुक्तेः स्तुत्यर्थताऽधिकरणम् ।

सू० आग्नेयस्तू[1]क्तहेतुत्वादभ्यासेन प्रतीयेत ॥ १३ ॥

१ आग्नेयसूक्तहेतुत्वादिति भाष्यानुसारिपाठः ।

दर्शपूर्णमासयो"र्यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवतीति कालद्वययुक्तमाग्नेयस्यैकं वचनमपरं तु यदाग्नेयोऽष्टाकपालो ऽमावास्यायां भवतीत्येककालयुक्तम्। तत्र संशयः किमुभयत्र विहिताद्दाग्नेयात्कर्मान्तरमिदममावास्यायां विहित? मुत तस्यैवानुवाद? इति। तत्राभ्यासात्कर्मान्तरम्।

ननु तत्राविशेषाद्भेदः, न हि तत्रैवं शक्यं वक्तुम् एवमर्थेन[1] पुनः श्रुतिरेवेति विशेषाग्रहणात्सर्वे विधयः इह त्वस्ति विशेषग्रहणं कालद्वययुक्तस्येतरा पुनः श्रुतिः संभवति।

न च विपर्ययः पौर्णमास्याधिक्यादिति नैवं, न हि तत्राविशेषाद् भेदः। समिद्वाक्यस्य प्राथम्येन विशेषग्रहणाद्विधिपुनःश्रुतिबलात्तु तत्र भेदः। किञ्चात्रापि न विशेषग्रहणं किमुभयकालयुक्तेन विहितस्येतरोऽनुवादः किं वा केवलामावास्यायुक्तेन विहितममावास्यायामाग्नेयमनूद्येतरेण केवलपौर्णमासीकालाग्नेयविधिरिति तस्मात्कर्मान्तरमिति प्राप्ते ब्रूमः। "कर्मणः प्रत्यभिज्ञानादविभागः प्रतीयते। ऐन्द्राग्नस्य प्रशंसार्था तस्यैवैषा पुनः श्रुतिः"॥

इति शास्त्रदीपिकायां द्वितीयस्याध्यायस्य तृतीयः पादः।

---

यावज्जीविकाग्निहोत्राधिकरणम्।

सू० यावज्जीविको ऽभ्यासः कर्मधर्मः प्रकरणात्॥ १॥

"दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते"ति काम्यं प्रयोगं विधायाम्नायते "यावज्जीवं दर्शपूर्णमासाभ्यां यजेते"ति तत्र संशयः। योऽयं यावज्जीविको धर्मो विधीयते इति स किमभ्यासः कर्मार्थः? उत नियमः पुरुषार्थ? इति पूर्वपक्षे काम्यस्यैव प्रयोगस्याभ्यासविधिः सिद्धान्ते प्रयोगान्तरं नित्यं विधीयते इति भेदप्रसङ्गात् प्रयोगभेदाभेदचिन्ता। तत्र कर्माङ्गविधौ कर्मकथंभावसंबन्धात्प्रकरणानुग्रहः, पुरुषार्थविधौ तु तदसम्बन्धात्प्रकरणबाधः स्यादतो-

---

१ अस्यार्थेन पुनः श्रुतिरेवेति पाठः।

ऽभ्यासविधिः। यावज्जीवकालं यागमभ्यस्येदिति नैतद्युक्तम् । यावज्जीवपदे काललक्षणैवं प्रसज्यते । यजिना च तदभ्यासलक्षणा प्रक्रियावशात्, न हि प्रकरणवशेन श्रुतेर्लक्षणार्थता न्याय्या, लक्षणे च जीवनवाचिना तत्संबद्धः कालो लक्ष्यते, यजिना च यागाभ्यासः, न चैतन्न्याय्यं, तस्माज्जीवने निमित्ते पुरुषस्य प्रत्यवायपरिहाराय दर्शपूर्णमासप्रयोगो विधीयते। जीवनं च यावद्विनिपातं नियतमिति नियतनिमित्तत्वान्नियमोऽयं विधीयत इति पुरुषार्थः।

सर्वशाखाप्रत्ययैककर्मताऽधिकरणम् ।

सू० नाम–रूप–धर्मविशेष–पुनरुक्ति–निन्दा–ऽशक्ति–समाप्तिवचनप्रायश्चित्तान्यार्थदर्शनात् शाखान्तरेषु कर्मभेदः स्यात् ॥ २ ॥

शाखान्तरेषु किमग्निहोत्रादिकर्म भिद्यते? किं वा सर्वशाखास्वेकमेवेति? विचारः। तत्राविशेषात्पुनः श्रुतिलक्षणादभ्यासाद्रूपत्वलक्षणाच्च प्रकरणान्तराद्भेदः, तथा गुणादपि क्वचिदैन्द्राग्नमेकादशकपालं निर्वपेदिति श्रुतं क्वचिद् द्वादशकपालमिति तत्रावश्यमन्यतरेण कर्मोत्पादयितव्यं येन चोत्पादितं तद्गतो गुण उत्पत्तिशिष्ट इतरस्तु तत्र निवेशमलभमानो वाजिनवत्कर्मान्तरं कल्पयतीति प्राप्ते ब्रूमः। "विधेः कर्मार्थतामात्रं पुनःश्रुत्यादिभिर्भवेत् । तावन्मात्रमिहापि स्यान्न तु भेदः प्रसिद्ध्यति" । पुनःश्रुत्या हि कर्म विधेयमित्येतावत्सिद्ध्यति, विधिवशात्तु भेदो विहितस्य विधानायोगात्, एवमसद्विधावपि विपरिवृत्त्यभावात्कर्मविधानं, विधानाच्च भेदः । तदिहापि कर्मविधिः पुनःश्रुत्यादिना सिद्ध्येन्न त्वत्र विधिवशाद्भेदसिद्धिर्विहितस्यापि पुरुषान्तरं प्रति विधिसंभवात् । यथा खल्वेकशाखागतमग्निहोत्रादिवाक्यमेकस्य पुरुषस्य विहितमेवमपरस्यापि विधत्ते न कर्मान्तरमेवमत्रापि अध्येतृभेदात्तान्प्रति सर्वाण्येव वाक्यान्येकमेव कर्म विदधति न कर्मान्तरमेवमेकादशद्वादशकपालयोरुभयोरुत्पत्तिशिष्टत्वान्न बलाबलं, तस्माद् भेदः। "शब्दान्तराभ्यासगुणैः ससंख्यैर्नाम्नातिदूरेण च सापवादः । भेदः क्रियाणामिति साधितो ऽयमतः परं तद्विनियोगचिन्ता ॥ २ ॥

इति श्रीमहामहोपाध्यायश्रीपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां द्वितीयाध्यायस्य चतुर्थः पादः ॥

इति द्वितीयोऽध्यायः समाप्तः ॥



## अथ तृतीयाध्याय आरभ्यते ।

प्रतिज्ञाऽधिकरणम् सू० अथातः शेषलक्षणम् ॥ १ ॥

एवं सिद्धे भेदे शेषशेषित्वमिदानीं चिन्त्यते, भिन्नानां हि तत्संभवति नाभिन्नानामिति भेदलक्षणस्य हेतुत्वं, यद्यपि "व्रीहीनवहन्ति" "सोमेन यजेते"त्यादिषु द्रव्यकर्मणां शेषशेषिभावो न कर्मभेदापेक्षस्तथाऽपि कर्मणामपि प्रयाजाऽऽग्नेयादीनां शेषशेषित्वमिहैव वक्तव्यमिति तत्सिद्ध्यर्थं भेदलक्षणापेक्षणम् । ननु चावघातस्यापि "व्रीहिभिर्यजेते"ति शास्त्रान्तरार्थेन शेषशेषित्वचिन्ता न व्रीहिपदार्थमात्रेण, शास्त्रभेदलक्षणं च पूर्वं वृत्तमिति भवति हेतुत्वं, तत् किं व्रीहीनवहन्ति व्रीहिभिर्यजेतेत्यनयोः शास्त्रयोर्भेदोऽस्ति? ओमिति चेत् केन खलु ? न तावन्निरपेक्षसाध्यभेदोऽत्रास्ति, नाप्यनुबन्धभेदः, येन शास्त्रभेदः स्यात्, तस्माद्वाक्यान्तरत्वमेवात्र न शास्त्रान्तरत्वं, न च वाक्यभेदलक्षणं पूर्वं वृत्तं सोमेन यजेताऽरुणया क्रीणातीत्यादिषु वाक्यान्तरत्वमपि नास्ति

ननु तत्रापि ज्योतिष्टोमेन स्वर्गकामो यजेतेति शास्त्रान्तरविहिताधिकारसंबन्धस्यैव यागस्य शेषः सोमः, इति चेन्न न हि सोमज्योतिष्टोमवाक्ययोरनुबन्धसाध्यभेदोऽस्ति उभयत्रापि सोमस्यैव विषयत्वेनानुबन्धभेदाभावात् निरपेक्षसाध्यभेदाभावाच्च "उद्भिदा यजेत पशुकामः" "सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम" इत्यादौ तु स्ववाक्यत एव फले यागस्य द्रव्यदेवतस्य च यागे शेषत्वमिति वाक्यान्तरत्वमपि नास्ति तथैकस्मिन्नेव पदे प्रत्ययार्थभावनामपूर्वं वा प्रति प्रकृत्यर्थस्य यागस्य शेषत्वात्पदभेदोऽपि नास्ति नतरां वाक्यभेदः, नतमां च शास्त्रभेदः, तस्मात्कर्मणामेव शेषशेषित्वचिन्तार्थं भेदलक्षणापेक्षणम् अतोऽपि न शास्त्रभेदापेक्षा तदभावेऽप्यवघाताग्नेयादीनां शेषशेषित्वात्, तस्मात्कर्मभेदानुभाषणमेवैतच्चानाकर्मलक्षणं वृत्तमिति न तद्द्वारा शास्त्रभेदऽनुभाषणं तस्येहानुपयोगात् । अत एव कर्मभेद एव पूर्वाध्यायार्थो न शास्त्रभेदः, सौत्रेण चातः—शब्देन पूर्ववृत्तस्येह हेतुत्वमुच्यते, हेतुत्वं च कर्मभेदस्यैव संभवति कर्मभेदस्येत्युक्तम्, अतः

सूत्रभाष्यविपरीतं शास्त्रभेदस्याध्यायार्थत्वम्, अयुक्तं च अनुग्रन्थान्तरं हि बुद्ध्यमानस्तदनुबद्धं नियोगान्तरमेव बुद्ध्यते न मध्ये शास्त्रभेदमतो नासौ चोदनार्थः, अचोदनार्थश्च न विचारमर्हतीति न तद्विचारार्थं भेदलक्षणमित्यास्तां तावत्, बहुप्रकारं चेदं शेषलक्षणं वक्ष्यते कः शेष इति स्वरूपं केन हेतुना शेष इति शेष–शब्दप्रवृत्तिनिमित्तं, कथं नियुज्यत इति विनियोगप्रकारः श्रुत्यादीनि विनियोगे शेषस्य शेषिणा सहान्वयबोधने कारणानि प्रमाणानि तेषां च विरोधे बलाबलं, विरोधश्च क्वास्ति क्व च नास्ति तदेतत्सर्वमभिसंधाय शेषलक्षणं वक्ष्याम इति सूत्रितं, तदनेन सूत्रेण श्रोतृबुद्धिसमाधित्सया वक्ष्यमाणार्थप्रदर्शनमात्रं कृतं नात्र पूर्वपक्षेण प्रयोजनम् ।

अथ शेषत्वकारणाश्रितशेषलक्षणाधिकरणम् । सू० शेषः परार्थत्वात् ॥ २ ॥

उक्तं शेषलक्षणं वक्ष्यत इति, तदिदमुच्यते, प्रथमं तावदनेन सूत्रेण शेषस्वरूपं हेतुश्च श्रुत्यर्थाभ्यामुच्यते तत्र सूत्रे श्रुत्या हेतुरुच्यते परार्थत्वाच्छेष इति, स्वरूपं त्वर्थात्, यदा हि परार्थत्वं शेष–शब्दप्रवृत्तौ हेतुस्तदा परार्थ एव शेष इति सिद्धं भवति, भाष्ये तु यः परार्थस्तं वयं शेषं ब्रूम इति स्वरूपं श्रुत्युक्तम् अर्थात्तु हेतुरि[1]ति द्रष्टव्यम्, अत्र चाविनाभावादिति लक्षणाभासनिराकरणाय पारार्थ्यं लक्षणमुच्यते केचित्किल येन विना यन्न भवति बीजादिस्तस्याङ्कुरादिः शेष इत्याहुः, तदयुक्तं रूपरसादीनामाग्नेयादीनां च मिथो ऽविनाभावेन शेषत्वापत्तेः प्रयोज्यत्वं शेषत्वम् इत्येतदपि पुरोडाशकपालादिष्वप्रयोज्येष्वपि शेषत्वसंभवादव्यापकम् । अन्ये तु यद्यस्मादधिकं विधीयते स तस्य शेष इत्याहुः, तदतिमन्दम् अङ्गप्रधानानां परस्पराधिक्यात्, अन्ये विध्यन्तविहितं शेषमाहुः तदपि विध्यादिविहितानामपि शाखाच्छेदनादीनामङ्गत्वदर्शनात् अयुक्तं, तस्मादुपकारकत्वमेव शेषत्वमित्येतदप्ययुक्तं प्रधानान्यप्यङ्गानामनुष्ठानोपयोगं कुर्वन्ति शेषत्वं गच्छेयुः "तस्मात्पारार्थ्यमेवैकं युज्यते शेषलक्षणं । परोद्देशप्रवृत्तिश्च पारार्थ्यमभिधीयते," कथं तर्हि श्रुत्यादिलक्षणं शेषत्वं, न हि सोमेन

[1] हेतुस्त्वर्थादिति द्रष्टव्यमिति पा० ।

यजेतेति तृतीयया परोद्देशप्रवृत्तत्वं सोमस्योच्यते करणमात्राभिधानात्, उच्यते न श्रुत्यादयः पारार्थ्यमभिदधतीति ब्रूमः किं तर्हि विधिसहिताः पारार्थ्यं बोधयन्तीति, विधिरपि नाभिधानेन पारार्थ्यं गमयति, किं त्वर्थापत्त्या, स हि चेतनप्रवर्तनाऽऽत्मा, न चानुद्दिष्टफले व्यापारे चेतनः प्रवर्तयितुं शक्यते, इत्यर्थाद्विधिविषयस्य व्यापारस्य फलोद्देशप्रवृत्तताऽवगम्यते, फलार्थश्च व्यापारः फलवदेव पुरुषस्याभिलषित इति तत्साधनत्वेन श्रुत्यादिभिरवगतानां तत्साधनत्वेन च विधीयमानानां सोमादीनामपि तदुद्देशप्रवृत्तिः सिद्धा भवति। तस्माद्युक्तं श्रुत्यादिगम्यं पारार्थ्यलक्षणं शेषत्वमिति।

शेषलक्षणाधिकरणम्। सू० द्रव्यगुणसंस्कारेषु बादरिः ॥ ३ ॥

अत्र शेषत्वस्य विषयकथनेन कः शेष इत्ययमेवांशः प्रपञ्च्यते "बादरिर्द्रव्यसंस्कारगुणेष्वेवाह शेषताम्। श्रुत्यादेर्दर्शनाच्चैते कर्मणामुपकारकाः" उपकारकत्वमेव शेषत्वं, न पारार्थ्यं तस्य बोधकाभावात्, विधिस्तावत्प्रवर्तनामात्ररूपो न तादर्थ्यं गमयति, श्रुत्यादयोऽपि साध्यसाधनभावमात्रपरा न पारार्थ्यं प्रतिपादयन्ति, तस्मादुपकारकत्वमेव शेषत्वं, तच्च दृष्टार्थानां द्रव्यगुणकर्मणां दर्शनादेवावगम्यते, प्रोक्षणादीनां तु श्रुत्यादिभिः, द्वितीया हि व्रीहीणां प्रोक्षणं प्रति साध्यत्वमभिदधानोपकारमन्तरेण तदनुपपत्तेरुपकारं गमयति, न तु यागस्य फलशेषत्वे, फलस्य वा पुरुषशेषत्वे प्रत्यक्षदर्शनं श्रुत्यादयो वा संभवन्ति यजेतेति यागः कर्तव्य एतावदुच्यते, न तु यागेन फलमिति तदेतत्स्वर्गकामाधिकरणपूर्वपक्षे वक्ष्यामः, स्वर्गोऽपि काम्यमानात्मना शब्देनोच्यते न त्वात्मार्थः परार्थो वेति, तस्मान्न तयोः शेषत्वम्, अत एव न पुरुषस्य शेषिता, शेषत्वं तु तस्य द्रव्यत्वादिष्टमेव, तस्माद्द्रव्यगुणसंस्कारेष्वेव शेषत्वमिति, तदेतत्स्वर्गकामाधिकरणपूर्वपक्षवादिनो बादरेर्मतं, जैमिनिस्तु उपकारलक्षणस्य शेषत्वस्योक्तदोषत्वात्पारार्थ्यमेव शेषत्वं, तच्च विधिगम्यमिति स्वर्गकामाधिकरणसिद्धान्ते वक्ष्यमाणमभिप्रेत्य कर्मणामपि पारार्थ्याच्छेषत्वमाह तदेतत्र सिद्धमिति नात्र किंचित्प्रतिपाद्यं, प्रपञ्चमात्रं त्विह पूर्वोक्तशेषत्वविषयस्य क्रियते, प्रपञ्चं तु कुर्वन् परमतोपन्यासपुरःसरं स्वमतमुपन्यस्तवान्, एवं फलस्यापि पुरुषशेषत्वं

कामवशादेवावगम्यते विधिवशाच्च, न ह्यस्वार्थं कश्चित्कामयते, यदपि परार्थं कामयते तदपि परम्परया स्वार्थमेव, अत्र तु परम्पराप्रमाणाभावादात्मा(१)र्थमेति, विधिश्चानात्मार्थफलसाधने प्रवर्तयितुमशक्नुवन् फलस्यात्मार्थतां गमयति यजेतेति चात्मनेपदनिर्देशात्, तस्माद्यागफलयोरप्यस्ति शेषता, ततश्च पुरुषस्यापि शेषित्वं, न चैवं सर्वतः प्रधानत्वात्पुरुषस्य शेषत्वं नास्तीति मन्तव्यम् आख्यातेन कर्तुर्गुणभूतत्वेनोपादानात् औदुम्बरीसंमानादिषु श्रुत्यैव गुणत्वात् । + फलं च पुरुषार्थत्वात् पुरुषश्च कर्मशेषत्वात् द्विसूची +

निर्वपणादीनामर्थानुसारेण व्यवस्थितविषयताऽधिकरणम् ।

सू० तेषामर्थेन संबन्धः ॥ ४ ॥

कः शेषः केन हेतुना शेषः इति द्वयमप्युक्तम् । इदानीं कथं च विनियुज्यत इत्ययमंशो निरूप्यते दर्शपूर्णमासयोर्निर्वपणप्रोक्षणावघातादय औषधधर्माः, उत्पवनादय आज्यधर्माः, शाखाहरणादयः सान्नाय्यधर्माः, तेषु संशयः किं सर्वे आज्ये औषधे सान्नाय्ये च कर्तव्या ? उत यथायोगं व्यवस्थे ? ति तदर्थं च किं परमापूर्वप्रयुक्ता एते ? किं वाऽवान्तरापूर्वप्रयुक्ता ? इति तत्सिद्ध्यर्थमपि किमवान्तरापूर्वाणि सन्ति ? नेति ? सत्स्वपि च तेषु किं तानि प्रयोजकानि ? किं वापरमापूर्वं ? यदा ऽपि तानि तदा ऽपि किं सर्वाणि सर्वेषां प्रयोजकानि ? किं चाऽव्यवस्थेति ? किं तावत्प्राप्तम् "एकमेव फलापूर्वं फलस्यैकस्य सिद्धये । कल्प्यं नान्यानि धर्माणां तादर्थ्यात्संकरो भवेत्" अवघातादीनां व्रीह्यादीनां च संबन्धोऽपूर्वसाधनविशेषत्वकृतो न व्रीह्यादिस्वरूपकृतः,तच्चापूर्वं सर्वेषामाग्नेयादीनामेकफलसाधनत्वादेकमेव कल्प्यते न बहूनि, तदर्थश्चावघातस्तदीये हविषि कर्तव्यः, तदीयत्वं चाज्यादीनामप्यविशिष्टम्, अतो यथा व्रीहिषु श्रुतोऽवघातो यवेष्वपि भवति एवमाज्यादिष्वपि भवितुमर्हति सन्तु चाऽवान्तरापूर्वाणि तथाऽपि तानि निष्फलत्वाद्यागस्वरूपवदेव न धर्माणां प्रयोजकानि परमापूर्वं तु फलवत्, अतस्तदेव प्रयोजकं, न चात्र वाङ्मयमन्यायः, तत्र हि दीक्षणीया—शब्दो दीक्षणीयापूर्वं लक्षयो-

(१) आत्मार्थतैव गम्यते इति पा० ।

पस्थापयति, ज्योतिष्टोमापूर्वं तु लक्षितलक्षणेऽस्ति विप्रकर्षः, अत्र तु परमापूर्वमेवावान्तरापूर्वं च द्वयमप्याग्नेयादिसाध्यमिति न लक्ष(१)णायां विशेषः प्रधानत्वाच्च परमापूर्वमेव प्रयोजकं युक्तम् । यद्यपि चावान्तरापूर्वेणाग्नेयेव नत्वं गम्यमानं साक्षादसंभवदङ्गेष्ववतरदविशेषात्सर्वाङ्गेषु विज्ञायते, उद्धननादिसंयोगस्त्वनेनैव प्राप्तत्वादवयुत्याऽनुवादः, नैतद्युक्तम्, एवं हि बहूनामुद्धननादिवाक्यानामानर्थक्यं स्यात्, न चानुवादत्वमपि संभवति नित्यप्राप्त्यभावात्, न ह्युद्धननं स्फ्येनैव प्राप्तम् अन्येनापि संभवात् तथाऽपि प्रकरणाविशेषात्सर्वाणि सर्वेषां प्रयोजकानि, तस्मात्सङ्कर इति, अत्राऽभिधीयते सन्ति तावदवान्तराणि अपूर्वाणि कुतः "न ह्याग्नेयादिकर्माणि विशरारूणि । तैर्विना संहत्य परमापूर्वं जनयन्ति स्वरूपतः" तदेतदपूर्वाधिकरणे एवानागतावेक्षणेन प्रतिपादितं, तत्सु च तेषु तादर्थ्यमेवावघातादेर्युक्तं प्रत्यासत्तेः, यद्यपि चाग्नेयादीन्येवोभयत्र कारणं तथाऽपि साक्षादुत्पत्त्यपूर्वं करणत्वं तद्द्वारेण तु परमापूर्वं संबन्धनिमित्ता च लक्षणा, तेन व्रीहिशब्दोयागद्वारेणापूर्वमुपस्थापयन्प्रथमं तावदुत्पत्त्यपूर्वं निपतति, तस्यापि चादृष्टत्वेनाज्ञाततत्प्रकारत्वात्परमापूर्वसिद्ध्युपयिकत्वेन च फलवत्त्वादतिक्रमकारणाभावात्तादर्थ्यमेवावघातादेर्युक्तं, सत्यपि च सर्वेषां प्रकरणाविशेषे श्रुतेर्बलीय(२)स्त्वावगमादसङ्करः, एवं चावघातादेर्दृष्टार्थता भवति, अन्यथा त्वदृष्टार्थता स्यात् । न च क्वचिदपि दृष्टसंभवे तत एव विध्युपपत्तेः अर्थापत्तिपरिक्षयाददृष्टकल्पनया सर्वार्थत्वं युक्तमङ्गीकर्तुम्, अतश्च यद्यपि तावदवहन्तीत्येतावन्मात्रं श्रूयते तथाऽपि दृष्टार्थवशादेव व्यवस्था स्यात्किमुत यदा व्रीह्यादिसंयोगेनैव श्रवणं, तस्माद्यथासंयोगं व्यवस्था,

स्फ्यादीनां संयोगानुसारेण व्यवस्थितत्वाधिकरणम् ।

सू० द्रव्यं चोत्पत्तिसंयोगात्तदर्थमेव चोद्येत ॥ ५ ॥

(१) लक्षणीवेत्यविशेषः इति पाठान्तरम् ।
(२) श्रुतेर्व्यवस्थाऽवगमादिति पा० ।

दर्शपूर्णमासयोः "स्फ्यश्च कपालानि" चेत्याद्युपक्रम्य "तानि वै दश यज्ञायुधानी"ति श्रुतं, तथा "स्फ्येनोद्धन्ती"त्यादीन्यपराणि वचनानि तत्र संशयः किं स्फ्यादीनां येन यदस्मिन्प्रकरणे शक्यं तत्सर्वं तेन कर्तव्य? मुत यथासंयोगमुद्धननाद्ये वे?ति, तत्रायुध-शब्दस्य साधनवचनत्वात्सर्वसाधनपाक्षिकानुवादत्वे वा नित्यवच्छ्रवणविरोधः, तस्मादेतानि वाक्यानि विधायकानि यज्ञायुध-शब्दवाक्यं त्वितैरेव प्राप्तार्थत्वाद्द-शब्दोपबन्धादाख्याताभावाच्चानुवादकं, वरं च बहूनर्थक्यादेकानर्थक्यं, न चास्यानर्थक्यं यज्ञायुधानि संभरन्तीत्यनन्तरश्रुतासादनविधिशेषत्वात् "तस्मादस्यानुवादत्वादितरे विधयो मताः। तेन स्फ्यादेर्व्यवस्था स्यात्कार्येषूद्धननादिषु"।

आरुण्यादिगुणानामसंकीर्णत्वाधिकरणम्।

सू॰ अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यात् ॥ ९ ॥

ज्योतिष्टोमे श्रूयते "अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाती"ति तत्रारुणा-शब्दोऽयमाकृत्यधिकरणन्यायेनान्वयव्यतिरेकाभ्यां च गुणवचनः, पिङ्गाक्ष्येकहायनी-शब्दौ तु यौगिकौ सामानाधिकरण्यादेकद्रव्यवाचिनौ, गुणाधिक्यफलं च शब्दद्वयं, न चैकेन विहिते परेण विधिर्न संभवतीति वक्तव्यम्, उभयोरपि श्रुत्यैव द्रव्यवाचकयोर्युगपत्प्रवृत्तेः, तदिहारुणिमानं प्रति संदेहः। किमेनं वाक्याद्भित्त्वा प्रकरणेन सर्वद्रव्येषु निवेशयामः? किं वा क्रीणातिना संबद्ध्य तदङ्गं सदेकहायिन्यां निविशत इति, तदर्थं च क्रियासाधनत्वं संभवति नेति, तत्र "अमूर्तत्वाद्गुणो नैव क्रियां साधयितुं क्षमः। तस्मात्क्रीणातिना नाऽस्य संभवत्येकवाक्यता" क्रीणातिना च संबध्यमानस्तृतीयायोगात्करणकारकं स्यात्, न चामूर्तस्य करणकारकत्वं संभवतीति नास्य क्रियासंबन्ध इति ततः पृथग् भूतः प्रकरणे निविशत इति। ननु प्रकरणे वा कथमस्य निवेशः? न तावत्क्रियाभिः, अमूर्तत्वात्, न च द्रव्यैः कारकस्य द्रव्यसंबन्धाऽनुपपत्तेः अनुपत्तानि चात्र द्रव्याणि कथं तैर्गुणः संबन्ध्येत?। स्यादेतत् तृतीया करणद्रव्याणि प्राकरणिकान्यनूद्य प्रातिपदिकार्थगुणस्तत्परिच्छेदकत्वेन

विधीयते न तु गुणस्य करणत्वं, येन द्रव्यसंबन्धो न स्यात्, तृतीयया चोपादानाद्द्रव्याणां नानुपादानदोष इति, नैतद्युक्तं न हि तृतीया करणीभूतद्रव्याभिधायिनी, विभक्तयो हि कारकशक्तिं निष्कृष्याभिधायकतया क्रियां विशिंषन्ति न तु कृदन्तकरणादिशब्दवत्कारकोपसर्जनं द्रव्यमभिदधति येन गुणस्तत्परिच्छेदकतया संबध्येत । उच्यते प्रातिपदिकमेव गुणवचनमपि लक्षणया द्रव्यं प्रतिपादयति तच्च तृतीयासंयोगात्करणं तदनेन पदेन गुणविशिष्टं द्रव्यं करणभूतं प्रतिपाद्यते तत्र विशेष्याणि करणद्रव्याणि प्रकरणगतान्यनूद्य विशेषणभूतो गुणः परिच्छेदकत्वेन विधीयते येन द्रव्येण किंचित्क्रियते तेनारुणगुणकेनेति । नन्वेवं लक्षितस्य द्रव्यस्य क्रय एव करणत्वस्य संभवात्किमिति वाक्यभेदः, नानेन लक्षितं द्रव्यान्तरं शक्यं विधातुं श्रौतैकहान्यवरुद्धत्वात्क्रयस्य, एकहायनी तु स्वशब्दविहिता न पुनर्लक्षणया विधातुं शक्यते । अथैकहायनीमेवानूद्य तत्रैव गुणो विधीयतां, न भविष्यति वाक्यभेदः, नैवं शक्यं, विधीयते ह्यत्रैकहायनी क्रयं प्रति गुणभूता च स्वार्था च, नासावेकोच्चारणेऽनुवदितुं गुणं प्रति प्रधानीभवितुं परार्थं चोच्चारयितुं शक्येत आवृत्तिप्रसङ्गात्, प्राकरणिकानि तु द्रव्याणि वाक्यान्तरविहितानि शक्यन्ते वाक्यान्तरेणानुवदितुं तस्मात्कृत्स्ने प्रकरणे ऽरुणिमा निविशत इति प्राप्ते ब्रूमः, तृतीयया गुणस्यैव करणत्वं क्रयं प्रति विस्पष्टं गम्यते, तच्च द्रव्यद्वारेण युज्यते यद्यप्यमूर्तत्वादयं न साक्षात्क्रियां साधयितुमलं तथाऽपि द्रव्यपरिच्छेदमुखेन शक्नोति साधयितुं न ह्यपरिच्छिन्नद्रव्यं क्रियां साधयति, गुणश्च तत्परिच्छिनत्तीति युक्तमस्य क्रियासाधनत्वं, गुणं हि साधनत्वेन विदधच्छब्दो यथा ह्येतेन शक्यते साधयितुं तथा कुर्यादित्याह, स च द्रव्यपरिच्छेदमुखेन शक्नोति साधयितुं नान्यथा, तेनायमर्थो भवति— अरुणपरिच्छिन्नेन द्रव्येण कुर्यादिति एवं संभवति श्रौतस्यैव गुणस्य क्रयैकवाक्यत्वेन लक्षणा वाक्यभेदश्च न युज्यते, यदा च क्रयार्थत्वं तदा तदीये द्रव्ये निवेशादेकहायन्यामेवास्य निवेशः । ननु वासःप्रभृती-

१ करणरूपमिति पा० ।

न्यन्यान्यपि क्रयद्रव्याणि तेष्वपि निविशते न तेषां क्रयान्तरद्रव्यत्वात् भिन्ना ह्येते प्रतिवाक्यं क्रियाविधिभेदात्, सर्वे ह्येते विधयो ऽन्योन्यस्मिन्नुत्पत्तिशिष्टद्रव्यावरोधाद्द्रव्यान्तरं विधातुमशक्नुवन्तस्तत्तद्द्रव्यविशिष्टक्रयविधानार्थाः । न च विहितस्य विधानं संभवतीति सिद्धः क्रयभेदः, यदाऽऽह भाष्यकारः "भिन्ने हि वाक्ये एकहायनीसाधनक एकः क्रयोऽवबुद्धो भवति अरुणासाधनकमपि क्रयान्तर"मिति, एवं हि वदन्वाक्यभेदे क्रयभेदं दर्शयति, तेन ये तु गुणकर्मत्वात्क्रयाणां भेदं नेच्छन्ति ते न्यायविरोधाद्भाष्यविरोधाच्चोपेक्षणीयाः. न च गुणकर्मणां भेदो नास्तीति राजाज्ञा, ऐन्द्रवायवादिग्रहाणां भेदस्य पशुसोमाधिकरणे दर्शितत्वात्, अतोऽस्ति क्रयभेदः, क्रयणे तु विकल्पः स्यादित्यत्राधिकरणे क्रयाणामेव विकल्पसमुच्चयचिन्ता न द्रव्याणामित्यविरोधः ॥

ग्रहैकत्वन्यायः सर्वेषां ग्रहादीनां संमार्गाद्यधिकरणम् । सू० एकत्वयुक्तमेकस्य श्रुतिसंयोगात् ॥ ७ ॥

एवं त्रिभिरधिकरणैः क्रमेण संस्कारद्रव्यगुणानां यथा संयोगं व्यवस्थोक्ता, संयोग एव त्विदानीं चिन्त्यते किं विवक्षितविशेषणेन शेषिणा शेषस्य संयोगः? किमविवक्षितविशेषणेने? ति एवं हि श्रुतं "ग्रहं संमार्ष्टी"ति तत्र संशयः किमेकस्य ग्रहस्य संमार्ग? उत सर्वेषा? मिति तदर्थं च किमुद्देश्यगता संख्या विवक्षिता? ने? ति तत्र श्रुतेर्बलाद्यद्वत्संख्योपादेयगामिनी विवक्षिता तथोद्देश्यगता श्रुत्यविशेषत इति प्राप्तेऽभिधीयते "उद्देश्यलक्षणं जातिर्यद्द्रव्यं लक्ष्यते तया । तस्याङ्गमेव संमार्गः सर्वस्येति विनिश्चयः" यदि ग्रहत्वजातेरयं संस्कारः स्यात्ततस्तस्याः प्रतिव्यक्ति समाप्तेः यत्र क्वचिद्द्रव्ये संस्कृते सा संस्कृतैवेति न द्रव्यान्तरे संस्कारः क्रियेत तस्यास्त्वमूर्तत्वादसाधनत्वाच्च तल्लक्षितानां द्रव्याणां ज्योतिष्टोमापूर्वसाधनानामयं संमार्गः, तत्रापि यदि द्रव्याणि संमार्गं प्रति गुणभूतानि स्युः पशुरिव यागं प्रति ततो येन केनापि सिद्धेर्नावश्यं सर्वत्र क्रियेत, न हि यावद्गुणं प्रधानमावर्तयितव्यं प्रयोजनाभावात्, ततश्च कियता द्रव्येणायं संमार्गः कर्तव्य? इत्यपेक्षा भवति तस्यां चापेक्षायां परिच्छेदकत्वेन

संख्या विधीयेत पश्वेकत्ववत्, प्रधानानि त्विह द्रव्याणि संमार्गं प्रति द्वितीयानिर्देशात्प्रयोजनवत्त्वाच्च, प्रतिप्रधानं च गुणावृत्तेः सर्वेषां समुच्चितानामयं संस्कार इति निश्चयाच्च परिच्छेदकापेक्षा, तदभावाच्च न संख्या पूर्ववदादर्त्तव्या, परिच्छेदकतया हि तस्याः क्रियान्वयः, न च परिच्छेदः परिच्छिन्ने संभवतीति द्वाराऽभावाच्च क्रियाऽन्वयः संख्याया विधातुं शक्यते विधीयमानमप्येकत्वं सर्वद्रव्येषु समुच्चयेन संमार्गे प्राप्ते परिसंख्यार्थं स्यात्, सा च त्रिदोषा, न चैकस्मिन्वाक्ये संमार्गविधिः परिसंख्या च संभवति वचनव्यक्तिभेदात्, न चास्य विधिरपि संभवति कुतः? "ग्रहस्य संमृज्यैवं तत्प्रधानं गुण एव वा । सर्वथा वाक्यभेदः स्यादतो नास्य विधेयता" । विधीयमानं ह्येकत्वं यदि तावद् ग्रहस्य विधीयते ततो ग्रहसंमार्गसंबन्धो ग्रहैकत्वसंबन्धश्चेत्यर्थद्वयविधानाद्वाक्यभेदः, विहितमपि चैकत्वं ग्रहस्वरूपमात्रोपक्षयाच्च संमार्गविशेषणमिति सर्वेषां संमार्गः स्यादित्यस्मत्पक्षाविरोध एव । अथ संमार्गान्वितस्य ग्रहस्यैकत्वसंबन्धो विधीयते न स्वरूपमात्रस्य, नैवं शक्यं, न हि संमार्गो ग्रहविशेषणं निर्ज्ञातं हि विशेषणं भवति, संमार्गस्त्विहापूर्वो विधीयते कथमसौ ग्रहविशेषणं? युगपद्वा विधानविशेषणत्वयोरभ्युपगमे वाक्यभेदः, ग्रहं संमृज्यात् यं च संमृज्यात्स एक इति । अथैकत्वविशिष्टस्य ग्रहस्य संमार्ग एकोऽर्थो विधीयते तेन न कश्चित्पूर्वोक्तो दोषः स्यादिति मतं कस्तदा भवति वाक्यार्थः? यद्ग्रहजातीयमेकसंख्यं च द्रव्यं तस्य संमार्ग इति, एवमपि सर्वेषां प्रत्येकमेकत्वाद्ग्रहत्वाच्च संमार्गस्य च तद्गुणत्वात्सर्वत्र प्राप्तिः स्यात्, अपि च विभक्त्या युगपत्संख्या कारकं चोच्यते, न तु प्रथमं संख्यां प्रातिपदिकार्थस्याभिधाय पश्चात्तद्विशिष्टस्य कारकत्वं, येनैकत्वविशिष्टस्य ग्रहस्य संमार्गं प्रति कर्मता स्यात् तत्र तावदेकत्वं ग्रहविशेषणम् । अथैतदपि पश्वेकत्ववद्विभक्तिश्रुत्या कारकं सत्क्रिययैव संबध्यते तत्रापि द्वयी गतिः स्यात् एकत्वस्याङ्गं संमार्गः, संमार्गाङ्गं वैकत्वं यदि तावदेकत्वाङ्गं संमार्गः स्यात्ततो ग्रहमेकत्वं चोद्दिश्य संमार्गविधानात्तदुद्देश्ययोश्चोपादेयवत्क्रिया वशीकरणासंभवात्प्रत्येकमेव ताभ्यां क्रियासंबन्धात्प्रत्युद्देश्यं वाक्यसमाप्ते-

वाक्यभेदः, पुनरपि च ग्रहस्यैकत्वानपेक्षस्यैव संमार्गान्वयात्सर्वग्रहसंमार्गः स्यादित्यस्मत्पक्षसिद्धिः। अथैकत्वं संमार्गस्य गुण इत्युच्यते, तदयुक्तं, न हि द्वितीया गुणत्वं वदति प्राधान्यवाचिनी हि सा। अथ सक्तुवल्लक्षणया गुणत्वमुच्यते न तु श्रुतिसंभवे सा युक्ता। किंच तथा सति ग्रहस्यापि गुणत्वं स्यात्, अथैकत्वस्य गुणत्वं ग्रहस्य च प्राधान्यमुच्यते न तच्छक्यं, कथं हि सकृदुपात्ता द्वितीया विभक्तिर्ग्रहापेक्षया प्राधान्यं श्रुत्याऽभिदध्यात्? एकत्वापेक्षया च गुणत्वं लक्षयेत् तत्र कथंचिदेकत्वं विवक्षितुं शक्यम्॥

अथ चमसादौ संमार्गाप्रयोगाधिकरणम्। सू० संस्काराद्वा गुणानामव्यवस्था स्यात्॥ ८॥

किमेकत्ववत्प्रातिपदिकार्थस्याप्यविवक्षितत्वाच्च समानामपि संमार्गः कर्तव्य? उताविवक्षाकारणाभावाद्ग्रहाणामेवे? ति विचारः तत्र संमार्ष्टीत्येतावत्युक्ते सोमावसेकनिर्हरणप्रयोजनतया सोमपात्राणामित्यवगमाद्ग्रहः कस्येत्यपेक्षाऽभावादविवक्षितग्रहग्रहणमेकत्ववदुपलक्षणमात्रम्। अपि च सोमयागस्यैकत्वात्तदपूर्वमप्येकमेव तत्साधननिवेशी च संमार्गः चमसेष्वपि तत्साधनेषु भवितुमर्हति, न ह्यत्र कर्मभेदोऽस्ति येनापूर्वभेदादवघातादिवद्व्यवस्था स्यात्, तस्माच्चमसेष्वपि स्यादिति प्राप्तेऽभिधीयते। "न हि ग्रहविवक्षायां वाक्यभेदः प्रसज्यते। यागैकत्वेऽप्यपूर्वाणि भिद्यन्तेऽभ्यासभेदतः" न तावदेकत्वाविवक्षावद्ग्रहविवक्षायां वाक्यभेदः, अवश्यं हि संमार्गः कस्यचिद्विधातव्यः, तत्र शब्दोपनीतं ग्रहमुल्लङ्घ्य न युक्तं यत्सामर्थ्यलभ्यं सोमपात्रमात्रं गम्यते एकस्यापि च यागस्याभ्यासभेदात्तेषां चापूर्वमन्तरेण संहत्यकारित्वायोगादवश्यं प्रत्यभ्यासमपूर्वाणि भिद्यन्ते, ततश्च ग्रहशब्दलक्षितापूर्वविशेषनिबन्धनः संमार्गो न चमसेषु कर्तव्यः॥

सप्तदशारत्निताया अगुधर्मताऽधिकरणम्। सू० आनर्थक्यात्तदङ्गेषु॥ ९॥

"सप्तदशारत्निर्वाजपेयस्य यूप" इति श्रूयते तत्र संशयः किं सप्तदशारत्नित्वं वाजपेयसाधनभूतोर्ध्वपात्रद्वारेण वाजपेयाङ्ग? मुत यूप-

द्वारेण पश्वङ्ग?मिति तदर्थे च किं सप्तदशारत्निर्वाजपेयस्येति वचनव्यक्ति? उत सप्तदशारत्निर्यूप इति तत्राव्यवहितत्वात्प्रधानत्वात्प्रकरणानुग्रहाच्च सप्तदशारत्निर्वाजपेयस्येति सम्बन्धः, यद्वा वाजपेयस्येति षष्ठ्या तत्सम्बन्ध्यूर्द्धपात्रमुद्दिश्य सप्तदशारत्नित्वं विहितं तद्द्वारेण वाजपेयाङ्गं भवतु एवं च वाजपेय-शब्दः श्रुतिवृत्तो भवति यूपसम्बन्धे तु वाजपेयस्य यूपाभावात्पशुयागसम्बन्धित्वाद्यूपस्य वाजपेय-शब्दः पशुलक्षणार्थः स्यात् । नन्वितरत्रापि यूप-शब्दो गौणः स तु न दोषो जघन्यत्वाद्यूप-शब्दस्य, वाजपेयशब्दस्य तु मुख्यत्वात्तत्र न लक्षणा युक्ता तस्मादूर्द्धपात्रे निवेशः स्यादेवं यदि यूपेन सम्बन्धे लक्षणा भवेत् "वाजपेयश्रुतेर्नासौ श्रुतिवृत्तैव सा यतः । षष्ठीसम्बन्धमात्रार्था नाङ्गाङ्गित्वमपेक्षते नाप्यव्यवधिसम्बन्धं देवदत्तस्य नप्तृवत् यूपस्य च पशुद्वारा वाजपेयोपकारतः सम्बन्धमात्रमस्त्येव क्रतुनाऽतो न लक्षणा ऊर्द्धपात्रेण सम्बन्धे यूपशब्दस्य गौणता अनन्तरेण सम्बन्धः प्रधानेन च सङ्गतिः । प्रक्रियाऽनुग्रहश्चैवं नादृत्यः श्रुतिबाधतः तेन सप्तदशारत्निर्यूप इत्येव सङ्गतिः सा च प्रकरणाद्वाजपेयसम्बन्धियूपगा तेनायं वाजपेयस्येत्यनुवादो भविष्यति ॥

अभिक्रमणादीनां प्रयाजमात्राङ्गताऽधिकरणम् ।

**सू० कर्तृगुणे तु कर्मासमवायाद्वाक्यभेदः स्यात् ॥ १० ॥**

दर्शपूर्णमासयोः प्रयाजसमीपे श्रूयते "अभिक्रामं जुहोती"ति तत्र भाष्यकारेण जुहोतेः सन्निहितप्रयाजविषयत्वं सिद्धं कृत्वा किमभिक्रमणं तेनैकवाक्यं सत्तत्कर्त्रा सम्बध्यते? किं वा ततो भिन्नं सत्कृत्स्नप्रकरणं कर्त्रे? ति विचारितम् । एवं च पूर्वः पक्षः "क्रियया कारकस्यैव नान्यस्यास्त्येकवाक्यता । न चाभिक्रमणं मूर्त्तिवर्जितं कारकं भवेत्" न चारुण्यवद् द्रव्यद्वारेण संभवति, तत्र ह्येकहायनीद्रव्यमुपात्तं युक्तं यद् द्वारतां प्रतिपद्यते अत्र जुहोतिना कर्त्तुरनुपादानाच्च द्वारत्वं, तस्माद्भिन्नं प्रकरणेन गृह्यते, शक्यते च क्रियायाः प्रकरणेन ग्रहणं प्रयाजवत्, संभवति हि कर्मणः कर्मोपकारत्वं, कारकत्वं तु न संभवति, तस्माद्दर्शपूर्णमासाङ्गं सत्सामर्थ्यात्कर्तृसंस्कारकं भवति, कर्ता

च सर्वप्रयोगाङ्गमिति सर्वप्रयोगसम्बन्धोऽभिक्रमणस्येति। सिद्धान्तस्तु "अनुपातोऽपि सद्भावमात्रेण दूरतां व्रजेत्। कर्ताऽभिक्रमणं तेन भवेद्धोमस्य साधनम्" वार्त्तिककारस्तु स्वान्तमभिक्रमणं न क्रियातोऽन्येन सम्बध्यते तस्माज्जुहोतिसम्बन्धस्य स्पष्टत्वान्न ततो विच्छेदाशङ्केत्यन्यथाऽधिकरणं वर्णयाञ्चकार "अभिक्रामं जुहोती"ति होमानुवादेन विधीयमानमभिक्रमणं किं प्राकरणिकसर्वहोमाङ्ग?मुत प्रयाजहोमस्यैवे?ति संशयः, तदर्थं च किमवान्तरप्रकरणमस्ति न वे?ति "फलवद्भावनोद्भूतकथंभावतिरोहिताः। नैवाङ्गानां कथंभावाः प्रादुःष्यन्ति तमन्तरा॥ प्रादुःष्युर्यदि चाङ्गानां कथंभावास्ततो मिथः। तेषामङ्गाङ्गिताऽऽपत्तेरव्यवस्था प्रसज्यते"॥ तस्मान्नावान्तरप्रकरणं, तदभावे च सन्निधिमात्रेणाभिक्रमणं प्रयाजाङ्गं स्यात्, स च दुर्बलः प्रकरणात् अतो दर्शपूर्णमासभावनया सम्बन्धात्तदीयसकलहोमाङ्गमभिक्रमणं बर्हिर्धर्मवत्। नन्वसत्यप्यवान्तरप्रकरणे वाक्येनैव प्रयाजाङ्गता स्यादभिक्रामं जुहोतीति, नैवं, जुहोतेः साधारणत्वेन प्रयाजोपस्थानाभावात्। नन्वनुवादोऽयं सन्निहितगामी प्रयाजाश्च सन्निहिताः, नैवं बुद्धिविपरिवृत्तिरनुवादस्यापेक्षिता न पाठप्रत्यासत्तिः तथा सत्यत्यन्तसन्निधानादुत्तमप्रयाजस्यैवाभिक्रमणमङ्गं स्यात् न समिदादीनां, तथा बर्हिषि हवींष्यासादयतीति यस्यैव हविषः कियानपि हि पाठतः सन्निधिविशेषोऽस्ति तस्यैव बर्हिष्यासादनं स्यान्नान्येषां बुद्धिविपरिवृत्तिश्च सर्वहोमानामविशिष्टा प्रकृतत्वादेव, अतो बर्हिर्हविःशब्दस्येव जुहोति-शब्दस्यापि सङ्कोचायोगात्सर्वहोमाङ्गमभिक्रमणमिति, "भवेदेवं प्रयाजानां नास्ति प्रकरणं यदि तेषां वचनसंयुक्ता ये गुणा विहिताः पुरा॥ पश्चाच्च ये विधास्यन्ते तैः संदृष्टमिदं श्रुतम्। अभिक्रामं जुहोतीति न ततोऽन्यत्र गच्छति"॥ प्रयाजान् विधाय समानयत उपभृत इत्यादिगुणान्विधायाभिक्रामं जुहोतीत्युक्त्वा "यो वै प्रयाजानां मिथुनं वेद स समिधो बह्वीरिव यजतीत्यादिवत्प्रयाजानिष्ट्वा हवींष्यभिघारयतीति प्रयाजपरामर्शदर्शनाच्चूनमेतावता प्रदेशेन प्रयाजाः समाप्यन्त इत्यवगमात्तन्मध्यपतितमभिक्रमणं तदतिक्रमेण नान्यत्र गच्छति, यद्यपि विद्यते चाङ्गभावनानामप्यविज्ञातप्रकारत्वात्कथमित्या-

काङ्क्षा, तथाऽपि "न विद्यते तु संदंशो यत्र वाचनिकैर्गुणैः । तत्राङ्गानां कथंभावः सच्चऽप्यविनियोजकः ॥ १ ॥ निष्फलत्वेन सर्वेषां न विशेषोऽवगम्यते कः शेषः ? कस्य शेषित्वमतः सर्वं प्रधानगम् ॥ २ ॥ अव्यवस्थाप्रसक्तिश्च प्रो[१]क्ता सैवं निराकृता । सन्दंशे सति सन्दष्टं तदङ्गमितरत्पुनः ॥ ३ ॥ सर्वं प्रधानगामीति नाव्यवस्था प्रसज्यते । यस्त्वाह साधिकाराणामिति कर्तव्यता स्थिता ॥ ४ ॥ नान्येषामिति तस्यापि प्रतिज्ञामात्रमेव तत् । अविज्ञातप्रका[२]रत्वादुभयेषां हि सा भवेत् ॥ ५ ॥ तान्यपि ह्यनुष्ठेयानि न चेदनुष्ठानमेव न स्यात्, एतावांस्तु विशेषो यदेषामन्यार्थमनुष्ठानं साधिकाराणां तु स्वनिष्ठमिति, न चैतावताविशेषः, अन्यार्थस्याप्यविज्ञातप्रकारस्यानुष्ठानासंभवात् प्रयाजैरपूर्वं कृत्वा प्रधानस्योपकुर्यादित्युक्ते यो नाम प्रयाजैरपूर्वं कर्तुं न जानाति तस्य भवत्येव कथमाभिरपूर्वं कर्तव्यमिति प्रकारविशेषापेक्षा, सत्यामपि तस्यां सन्दंशपतितं यदङ्गं न स्यात्ततोऽविशेषात्सर्वं फलवदङ्गं स्यात् प्रकाराकाङ्क्षा तु वाचनिकैर्गुणैरर्थापत्तिलभ्येन च स्वरूपनिष्पादनेनाचमनादिभिश्च दर्विहोमवत्पूर्यते, अभिक्रमणं तु सन्दंशपतितत्वादवान्तरप्रकरणोद्गतेः प्रयाजाङ्गम्, एकदेशिनां त्ववान्तरप्रकरणाभावात्सर्वं विधि[३]बाधेन प्रकरणाविशेषात्सर्वार्थं स्यादित्यस्तु[४] तावत् ॥

उपवीतस्य प्राकरणिकाङ्गताऽधिकरणम् । **सू० संदिग्धे तु व्यवायाद्वाक्यभेदः स्यात् ॥ ११ ॥**

दर्शपूर्णमासयोः सामिधेनीर्विधाय तासां च त्रिः प्रथमामन्वाहेत्यादिवचनैर्गुणान् विधाय ततो निविदो नाम मन्त्रादेवेद्धोमन्विद्ध इत्यादयो विहिताः ततः काम्याः सामिधेनीकल्पा विहिताः, तदनन्तरं यज्ञोपवीतमाम्नातम् "उपव्ययते देवलक्ष्ममेव कुरुत" इति, ततः पुनरपि च सामिधेनीनामेव वाचनिका गुणा विधास्यन्ते अन्तरानूच्यं सदेव त्वायेत्यादयः तदज्ञोपवीतं प्रति संशयः सामिधेन्यङ्ग? मुत दर्शपूर्णमासाङ्ग? मिति, तदर्थं

---

१ योक्तेति पा० ।

२ अविज्ञातप्रकरणत्वादिति पा० ।

३ संनिधिबाधेनेति पुस्तकान्तरपाठः ।

४ इत्यास्तां तावदिति पा० ।

च किं सामिधेनीनां वाचनिकगुणोद्भूतमवान्तरप्रकरणमुपवीतविधावनुवर्तते? अथवा विच्छिन्नमिदं निविद्भिः? रिति "अनुवृत्तौ तदङ्गत्वं विच्छिन्ने दर्शशेषता। किं प्राप्तमुभयत्रापि कीर्तनादनुवर्तते १ पुरस्तादुपवीतस्य परस्ताच्चापि कीर्तनम्। विद्यते सामिधेनीनामतः प्रकरणास्तिता" २ निविदस्तु पूषाद्यनुमन्त्रणमन्त्रवत्परप्रकरणपठिता इत्यवगन्तव्यम्। अथवा "निविदामपि तादर्थ्यं तत्कथं भावसङ्गतेः न चाङ्गैर्व्यवधीयन्ते प्रधानानि कथंचन ॥ १ ॥ काम्येष्वप्याश्रयत्वेन तासामप्यनुवर्तनम्। उपवीतमतस्तासामङ्गं प्रकरणान्नुवेत् ॥ २ ॥ एवं प्राप्ते वदामोऽत्र निविद्भिर्व्यवधानतः विच्छिन्ना सामिधेनीनां प्रक्रिया नानुवर्तते ॥ ३ ॥ यस्तु सन्निधानेऽप्येवा सम्बन्धिभिः पदैर्व्यवधानं न प्रकरणस्येति मन्यते तस्य सर्वप्रकरणानुवृत्तेः सर्वे धर्माः सर्वेषामुपदेशेनैव स्युः, अतो विश्वजिदादीनामपि क्रत्वर्थत्वं स्यात्। यत्तु निविदामप्यवान्तरप्रकरणेन सामिधेन्यङ्गत्वादव्यवधायकत्वादव्यवधायकत्वमित्युक्तं, तदयुक्तं, लिङ्गेन हि प्रकरणं बाधित्वा निविदोऽग्निसमिन्धनाङ्गं भवन्ति, न चाग्निः सामिधेन्यङ्गं भवति येन तद्द्वारेण निविदोऽपि तदङ्गं स्युः। किंतु सामिधेन्य एवाग्न्यङ्गं निविदोऽपि न तासां मिथः सम्बन्धः यथा वक्ष्यति "गुणानां च परार्थत्वादसम्बन्ध" इति तेनासम्बन्धिभिर्निवित्पदैर्दर्शपूर्णमासाङ्गैर्विच्छिन्नं सामिधेनीनां प्रकरणं नोपवीतं गृह्णाति। नन्वेवं निविदङ्गमुपवीतं स्यात् न तासां प्रकरणमस्ति अभितः कीर्तनाभावात्, सन्निधिमात्रमपि नास्ति काम्यैर्व्यवधानात्, तर्हि काम्यानामेवाङ्गं स्यात् अव्यवधानात् फलावच्छेदेन च प्रकरणसद्भावात् न तेषां विकृतित्वात्, इह हि न नित्यसामिधेन्याश्रयणेन गुणमात्रं फलाय विधीयते विच्छिन्नप्रक्रियायां तासामाश्रयत्वानुपपत्तेः, वाक्येन चाश्रयसम्बन्धे वाक्यभेदात्, किं त्वनुवचनान्तराणि संख्याविशिष्टानि फले विधीयन्ते, तानि च संख्यायुक्तानुवचनत्वसामान्यान्नित्यानुवचनप्रकृतीनि, ततश्च तासामृचामन्येषां च तद्धर्माणां प्राप्तिः, अनु-शब्देन च यस्तत्र नमः प्रवक्त इति निग-

१ पतिता इति पा०।

दानन्तरभावः सामिधेन्यङ्गत्वेनोक्तः सोऽप्यत्रातिदिश्यते स च निगदः क्रतुप्रयुक्तत्वाच्च बहिः प्रयोगे लभ्यते, ततस्तद्वशेनानुवचनान्तराणामपि क्रतुमध्यप्रयोगसिद्धिः, एतैरेव चाग्निसमिन्धनस्य प्रसङ्गात्सिद्धेर्नित्यानुवचननिवृत्तिः तेनैतेषामनुवचनानां कृप्तोपकारप्राकृतधर्मपरिपूरितानां कथंभावापेक्षाभावान्नास्ति प्रकरणं. पाठसन्निधानमात्रं तु स्यात्, तच्च दुर्बलं प्रकरणादिति दर्शपूर्णमासाङ्गमेवोपवीतम्। ये तु पश्चात्तना ये गुणास्ते दूरस्थानुवादेनैव द्वादशोपसत्त्ववद्विधातुं शक्या इति न तद्वशेनैकान्ततः प्रकरणानुवृत्तिर्विज्ञायते यतः परप्रकरणे पाठो निविदां स्यात्। यद्वा तिष्ठन्न्वाहान्तरानूच्यमित्यादिष्वनुवचनमात्रं श्रूयते, तत्र यदि सामिधेन्यनुवचनं प्रकृतं स्यात्ततस्तदेवावगम्येत तदभावात्त्वनुवचनमात्रमनुवाक्यादिसाधारणमिति न सामिधेन्यनुवृत्तिरवधार्यते। यदपि देवा वै सामिधेनीरनूच्येत्यत्ते वचनं तदप्याघारार्थवादत्वान्न सामिधेन्यनुवृत्तिं सूचयति, तस्माद्दर्शपूर्णमासाङ्गमुपवीतम्, एकदेशिनां त्ववान्तरप्रकरणाभावात्सन्निधेश्च प्रकरणाद्दुर्बलत्वादसत्यपि विच्छेदे सामिधेनीनां दर्शपूर्णमासाङ्गत्वमुपवीतस्य सिध्यतीति व्यर्थमिदमधिकरणं स्यात्। कश्चित्त्वाह उपव्ययत इत्येकं पदम् अन्विताभिधानाय कर्तारमपेक्षमाणं सन्निहितेन कर्त्राऽन्वीयत इति, तदयुक्तं प्रत्ययार्थेनापूर्वेण धातोरन्विताभिधानासिद्धेः, अवश्यं चानेन प्रत्ययेन सत्यपि सामिधेनीनां सन्निधानेऽधिकारापूर्वमेवाभिधातव्यं सामिधेनीनां सन्निपातित्वेनापूर्वशून्यत्वात् अतः पदश्रुत्यैव तदङ्गमुपवीतं भवतीति किमर्थमिदमधिकरणम्? अपि चैवं पूर्वाधिकरणपूर्वपक्षेऽपि विच्छिन्नमप्यभिक्रमणमेकपदत्वात्सन्निहितेनैव प्रयाजकर्त्राऽन्वीयत इति तदधिकरणवैयर्थ्यं स्यात्। नन्वभिक्रामभित्यस्याख्यातत्वात्सिद्धवत्प्रतीतेर्न कर्त्राऽऽकाङ्क्षा किं तु शेषभूतस्तत्र कर्ताऽपेक्षितः, न च शेषिणाऽन्विताभिधानमिति, मैवम्, अवघातादिषु शेषिणाऽन्विताभिधानाभ्युपगमात्, अपि च सर्वाण्येव कार्यार्थानि पदानि कार्येण शेषिणाऽन्वितमर्थमभिदधतीति यत्किञ्चिदेतत्. अपि च यदि न शेषिणाऽन्विताभिधानं केन तर्ह्यन्वितमभिक्रमणमभिदधतीति यत्किञ्चिदेतत्, अपि च यदि न शेषिणाऽन्विताभिधानं

क्रेन तर्ह्यन्वितमभिक्रमणमभिधातव्यं न ह्यनन्वितस्याभिधानं सम्भवति गुणभूतस्तु कर्ता अनपेक्षितत्वात्. न तेनान्विताभिधानं सम्भवतीति त्वयोक्तं सम्भवे वा सन्निहितेनैव प्रयाजकर्त्राऽन्विताभिधानाद् व्यर्थमेकवाक्यत्वप्रतिपादनं, प्रधानविधिनाऽभिक्रमणमन्वितमभिधीयत इति चेत् न तस्यापि शेषित्वादुपवीतस्यापि तत्सम्भवाच्च सन्निहितेनापि सामिधेनीकर्त्राऽन्वयः स्यात् । अथानभिहितमभिक्रमणं ग्राहको गृह्णीयादुपवीतमपि गृह्णीयात् । यदपि शेषिभूतः कर्त्राऽपेक्षितो नानुष्ठातृभूत इति, तदपि विपरीतम्, अविहितस्य शेष्यपेक्षाभावात्, कर्त्रपेक्षा तु क्रियास्वाभाव्यादेव स्यादित्यास्तां तावत् ।

वारणवैकङ्कतादिपात्राणां क्रत्वयागगुणताऽधिकरणम् मिथोऽसंबन्धन्यायो वा ।

सू० गुणानां च परार्थत्वादसम्बन्धः समत्वात्स्यात् ॥ १२ ॥

आधानप्रकरणे वारणवैकङ्कतानि यज्ञसंयुक्तानि पात्राणि श्रूयन्ते वारणोयज्ञावचरो वैकङ्कतो यज्ञावचर इति पवमानेष्टयोऽप्याधानप्रकरण एव देशान्तरे श्रुताः तत्र पात्रेषु संदेहः किं पवमानेष्ट्यङ्गम्? उत यज्ञमात्राङ्गमिति? तदर्थं च किं पवमानहवींष्याधानाङ्गम्? उत तान्यप्याधानेन समप्रधान्यन्यर्थानि इति यद्यङ्गं ततो यज्ञसंयोगात्साक्षादाधाने असंभवत्यपि पात्राण्यानर्थक्यतदङ्गन्यायेन पवमानेष्टिषु भवन्ति अनङ्गत्वे तु कथंचिदपि यज्ञसंयुक्तानां प्रकृताधाननिवेशासंभवात् इष्टीनां च स्वयमप्रकृततया अनारभ्यवादरूपेण सर्वयज्ञेषु संभवन्ति तत्राधानस्य द्वितीयासंयुक्ताग्निसंस्कारार्थतया फलत्त्वावत्त्वादफलानि पवमानहवींषि प्रकरणात्तदङ्गम्। अत्रोच्यते यदाहवनीये जुहोतीति वाक्यादेषामप्यन्यार्थता । नन्वनारभ्यवादोऽयं सर्वहोमाङ्गमाहवनीयं विधत्ते न त्वाहवनीयाङ्गत्वं पवमानहविषाम्, अत्र कश्चिदाह अनारभ्यवादेन प्रकृतावाहवनीयोऽङ्गत्वेन विहितः पवमानेष्टिष्वतिदेशेन प्राप्तः स च पवमानहविर्वेलायामनिष्पन्नत्वान्नाङ्गं संभवतीत्यङ्गत्वे निवृत्ते यस्तस्य प्रकृतौ दृष्टः साक्षात्सम्बन्धांशः स इह संभवे न बाधनीयः अवश्यं च पवमानहविषामाधानाङ्गत्ववादिनाऽप्य-

त्तिनिष्पादकत्वमभ्युपगन्तव्यम् । तच्च प्राकृतसंबन्धाबाधाय साक्षादेवास्तु किमाधानप्रणाड्या समाश्रीयत इति सिध्यत्यान्यर्थत्वं, तदिदमसारं यत्ताव-दुक्तमङ्गत्वं निवृत्तमिति तत्स्वसिद्धान्तविस्मरणात्, न हि चोदकावगतमङ्गत्वं निवर्तते यद्यपि चानिष्पन्नत्वाच्च साधयति तथाऽप्यसाधयत एवाङ्गत्वमवघातस्येव कृष्णलचरावतिष्ठते तेन साक्षात्सम्बन्धस्यैवाङ्गत्वेनैव प्रकृतिवदुपपन्नत्वाच्च तत्सिद्ध्यर्थं साध्यत्वमङ्गीकर्तव्यम् । अपि चार्थिकः प्रकृतौ साक्षात्सम्बन्धोऽङ्गत्वमेव शास्त्रार्थः, न चार्थिकं चोदकः प्रतिदिशति यद्बलेन साध्यता स्यात्, प्रतिदिश्यतां वा सम्बन्धः स तु येन केनापि प्रकारेण सिध्यतीति साध्यत्वविशेषः कुतो लभ्यते । यत्तु साध्यत्वमाधानाङ्गत्ववादिनाऽप्यभ्युपगन्तव्यमिति, सत्यमभ्युपगतम्, अस्ति हि तस्य प्रकरणं प्रमाणं, भवतस्तु किं प्रमाणं ? प्रकरणमेवेति चेन्न तथा सत्याधानाङ्गत्वद्वारेणैवाग्नीनां साध्यत्वं स्यात्, यदि ह्यविशेषितं साध्यत्वं प्रकरणात्सिध्येत् ततोऽतिदेशवशेन साक्षात्तदित्याश्रीयेत क्रत्वर्थत्वमेव तु प्रकरणादवगम्यते नाविशिष्टं साध्यत्वं, तेन यदि प्रकरणमङ्गीक्रियेताधानाङ्गतैव स्यात्, न च साध्यमेव न स्यात्, अस्तुवाऽतिदेशावगतसाक्षात्सम्बन्धवशादेव साध्यत्वं तत्तूपदेशात्मकप्रकरणावगतक्रत्वर्यत्वविरोधाद्बाधितव्यम् । अपि च करणत्वेऽपीष्टीनां न भवति साक्षादिष्टिसाध्यत्वमग्नीनां, ता हि सकलप्राकृताङ्गाहितोपकारसचिवा अग्नीन् साधयन्ति, तेनासर्वाङ्गानुष्ठानादवस्थितमुत्पत्त्यपूर्वं द्वारभूतमङ्गीकर्तव्यं तत्प्रणाड्याऽग्नीनां साध्यत्वं न साक्षात्, अपि च न प्रकृतावाहवनीयस्य साक्षात्सम्बन्धः अङ्गभूतेन हि प्रक्षेपेणाहावनीयस्य सम्बन्धो न साक्षाद् यागेन तदिहापि प्रकृतिवदतिदेशात्प्रणाड्यैव सम्बन्धः स्यात् तस्मान्नैवमन्यर्थता सिध्यतीत्यन्यदुत्तरं वाच्यम्, तदुच्यते अयमभिप्रायो भाष्यकारस्य "अनारभ्यविधानेन सत्यं नान्यर्थता भवेत् । तत्तुल्यं वाक्यमस्त्यन्यत्पवमानेष्टिसन्निधौ" तेन चाग्नेरनिष्पन्नस्यैव साधनत्वेन विधानासंभवात्तस्यैव निष्पादयितव्यस्य फलवतः साधनत्वेनाफलानि पवमानहवींषि विधीयन्ते, सप्तमी च लक्षणया साध्यत्वमेव प्रतिपादयति तप्ते पयसि दध्यानयतीतिवत्, तस्माद्वाक्येनाधानवत्पवमानहविषामग्न्यर्थत्वा-

बाधानाङ्गत्वम्, अतः सर्वयज्ञार्थानि पात्राणीति, आचार्यस्त्व न्यपि पवमा-
नहविषामन्यार्थत्वे पात्राणां वाक्येन सर्वयज्ञार्थता सिध्यतीति वाक्यद्वय-
कल्पनाक्लेशं न ममृषे, व्रीहीनवहन्तीत्यादिषु यथाश्रुतव्रीहिमात्रार्थत्वेऽव-
घातस्यानर्थक्यात्क्लृप्तः प्रकरणानुप्रवेशः, तद्बलेन च व्रीहिशब्दस्य साधनलक्ष-
णलक्षणाश्रयणम्, इह तु यथाश्रुतयज्ञार्थत्वेऽपि दीक्षणीयार्थस्येव वाङ्नियम-
स्यानर्थक्याभावात् लक्षणाश्रयणेन प्रकरणानुप्रवेशकल्पना न्याय्या, यदि च
पवमानेष्टिसन्निधौ पात्राणि यज्ञार्थानि श्रूयेरन् ततोऽनुवादस्य सति संभवे
सन्निहितगामित्वात्सप्तदशारत्नित्वमिव वाजपेयस्य प्रकृतिवच्छब्दसन्नि-
धापिते यूपे कृष्णलहोमवच्च सौर्ये प्रकृतिवच्छब्दसंनिधापितेषु प्रयाजेषु
पवमानेष्टयनुवादेन विधानात्तास्वेव पात्राणि स्युः, न तु तासामिह सन्नि-
धानमस्ति, तस्मात्प्रकरणोत्पन्नादनुपन्नत्वाद्वत्पुरुषार्थानि पात्राणि सर्वार्था-
नीति नार्थोऽधिकरणेन, सूत्रं तु पूर्वाधिकरण एव पक्षोत्तरत्वेन व्याख्येयं
निविद्व्यवायात्सामिधेनीवाक्यस्योपवीतवाक्यस्य च भेदः स्यादित्युक्तम् ।
ननु निविदां सामिधेन्यङ्गत्वादव्यवधायकत्वं स्यादिति ये वदन्ति तेषामु-
त्तरं "गुणानां च परार्थत्वादि"ति निविदोऽपि लिङ्गेनाग्निसमिन्धने गुण-
भूताः सामिधेन्योऽपि अतो न तासां मिथः सम्बन्धः ॥

वार्त्रघ्न्यामनुवाक्याना-
माज्यभागाङ्गताऽधिकरणम्।
वार्त्रघ्नीन्याय इति वा ।

सू० मिथश्चानर्थसम्बन्धः ॥ १२ ॥

दर्शपूर्णमासयोराग्नेयः सौम्यश्च द्वावाज्यभागौ विहितौ तयोः क्रमे-
णानुवाक्याचतुष्टयमाम्नातम् आग्नेयी सौमीत्येकं युगलं पुनराग्नेयी सौमी चे-
त्यपरं तत्र प्रथमद्वितीये वार्त्रघ्न्यौ तृतीया चतुर्थी च वृधन्वत्यौ तत्रापरं वचनं
वार्त्रघ्नीपौर्णमास्यामनूच्येते वृधन्वती अमावास्यायामिति तत्र संशयः ।
किमाज्यभागयोः क्रमप्राप्ता मन्त्रास्ताभ्यामाच्छिद्य वचनेन प्रधानाङ्गतया
विधीयन्ते ? । उताज्यभागयोरेव व्यवस्थया प्राप्तयोर्युगलयोर्व्यवस्थामात्र-
मिति तदर्थं चास्मिन्वचने पौर्णमास्यमावास्याशब्दौ कर्मवचना उत कालव-
चना ? विति तत्र "कालस्यास्मरणीयत्वाच्च मन्त्रेण प्रयोजनं, नापि प्रकरणं तस्य
तेन नासाविहोच्यते कर्मणः प्रकृतत्वेन मन्त्रापेक्षितयापि च तत्पौर्णमास्यमा-

वास्याशब्दाभ्यामभिधीयते। सप्तमी च पूर्वेद्युरमावास्यायां वेदिमितिवदन्यथा-ऽप्यविरुद्धा, तस्माद्वाक्येनक्रमं बाधित्वा प्रधानार्थो मन्त्रा इति, नैवं यद्यपि कर्मैव शब्दाभ्यां प्रतिपाद्यते तथाऽपि सप्तमीश्रुत्या न प्रधानत्वसंभवः पूर्वेद्युरमावास्यामिति तु लक्षणा, न चेह तथा मुख्यार्थसंभवात् न चेह सौम्यस्य मन्त्रस्य प्रधानेषु सामर्थ्यमस्ति सोमस्य प्रधानदेवताया अभा-वात् अग्नीषोमीयेऽप्यग्निसहितस्य देवतात्वं न केवलस्य, अमावास्यायां तु नास्त्येव सोमः, न च वचनादयथार्थत्वं, लिङ्गं हि वाक्याद्बलीयः, वाक्याद्धि कर्मणः प्राधान्यं लक्षणाश्रयणात् न श्रुतेः, अथापि विधिवाक्य-त्वान्मन्त्ररूपं बाधेत यद्यबाधेन नोपपद्येत तत्तु व्यवस्थामात्रमपेक्षितमल्पं च विदधत्सुतरामबाधेनैव वर्तते पौर्णमासीगतयोराज्यभागयोर्वार्त्रघ्न्याव-मावास्यागतयोर्वृधन्वत्याविति । यद्वा कालद्वारेण कर्मणि शब्दप्रवृत्तिः काले मुख्य इति तद्द्वारेण व्यवस्था विधीयते इत्याज्यभागयोरेव मन्त्राः ॥

मुष्टीकरणादीनां कृत्स्नप्रा-करणिकाङ्गताऽधिकरणम् ।

सू० आनन्तर्यमचोदना ॥ १४ ॥

दर्शपूर्णमासयोराम्नायते हस्तावनेजने निरुक्ते "उलपराजिं स्तृणा-ती"ति तथा ज्योतिष्टोमे "मुष्टीकरोति वाचं यच्छति दीक्षितमावेदयती"ति हस्तावनेजनं तत्र हस्तसंस्कारार्थं मुष्टीकरणवाङ्नियमने च मनःप्रणिधानार्थे तेन तत्त्रयमपि लिङ्गात्करिष्यमाणकर्माङ्गं सत्किमनन्तरयोरुलपराजिस्तर-णदीक्षितावेदनयोरङ्गम्? उत सर्वाङ्ग? मिति संशयः, तत्रानन्तर्यादेकवाक्य-त्वादवान्तरप्रकरणाद्वा तन्मात्राङ्गत्वे प्राप्तेऽभिधीयते "लिङ्गप्रकरणाभ्यां हि सर्वार्थत्वं प्रतीयते। क्रमश्च दुर्बलस्ताभ्यामतः सर्वार्थता भवेत्" न चाख्या-तद्वयस्य यच्छब्दाद्युपबन्धरहितस्यैकवाक्यत्वं संभवति येन वाक्येनैव तादर्थ्यं स्यात्, न च श्रुत्यादिविहिताङ्गसंदंशोऽस्ति येनावान्तरप्रकरणं स्यात् तस्मात्सर्वार्थता स्यात् ।

चतुर्धाकरणस्याग्नेयमात्रा-ङ्गताऽधिकरणम् ।

सू० प्रोक्षस्तु गुणसंयुक्तः साधारणात्तु प्रतीयेत मिथस्तेषामसंबन्धात् ॥ १५ ॥

दर्शपूर्णमासयोराग्नेयाग्नीषोमीयैन्द्राग्नाः पुरोडाशाः, "तत्राग्नेयं चतुर्द्धा करोतीति चतुर्द्धाकरणं किं सर्वेषां? युताग्नेयस्यैवेति भवति विचारः,

"तत्राग्निसम्बन्धमात्रेण भवेद् द्रव्योपलक्षणम् । सम्बन्धश्चाविशिष्टोऽतः सर्वेषामुपलक्षणम्" अग्निस्तावदत्र चतुर्धाकरणविषयद्रव्योपलक्षणमात्रं न स्वयं कार्योपयोगी तेन नासौ यथाश्रुत एव ग्रहीतव्यो येन देवतात्मभूतेनैवोपलक्षणं स्यात् किं तु यावता विना न शक्नोति द्रव्यं लक्षयितुं तन्मात्रमाहर्तव्यं सम्बन्धमात्रेण चासौ शक्नोति तल्लक्षयितुं, सम्बन्धश्चाग्नेरग्नीषोमीयेऽपि विद्यते तस्मात्तस्याग्नेयशब्देन लक्षितत्वात्स्यात् चतुर्द्धाकरणम् । अथवा देवतात्वमेवास्ति यद्धि द्वाभ्यां दीयते दीयत एव तदेकस्मा अपि । यद्वा अग्नेरिदमिति सम्बन्धमात्रेणाग्नेयशब्दो भवत्येव "सर्वत्राग्निकलिभ्यां ढग् वक्तव्य" इति स्मरणात् तस्मात्सर्वत्र चतुर्धाकरणमिति प्राप्ते ब्रूमः "केवलाद्देवतावाची तद्धितोऽग्नेः समुच्चरन् । नान्ययुक्ताग्निदेवत्यं प्रतिपादयितुं क्षमः" देवताभूतस्तावदिहासावग्निशब्दस्तद्धितेनोपलक्षणमुपादीयते, संभवति चास्य यथाश्रुत्यैवोपलक्षणत्वं केवलाग्नेयस्यापि सद्भावात्, अतो न शब्दानवगतेन सम्बन्धमात्रेणोपलक्षणत्वं युक्तं विना कारणेन श्रुतबाधप्रसङ्गात्, अग्नीषोमीयादौ तु समासादुत्पन्नस्तद्धितो द्वयोः सापेक्षयोर्देवतात्वमाह तेन तत्रान्यसापेक्षस्याग्नेर्देवतात्वं, न च सापेक्षस्य तद्धिते सामर्थ्यमस्ति, तेनाग्नेयशब्दो न शक्नोत्यग्नीषोमीयादिकमभिवदितुं, यद्यपि च सम्बन्धमात्रेऽविरुद्धस्तद्धितस्तथाऽप्यत्र देवतार्थतैवाश्रयितव्या लक्षणार्थत्वात्, प्रसिद्धसम्बन्धं हि लक्षणं भवति, प्रसिद्धिश्च विधिवाक्यादेवावाप्तव्या, विधिवाक्ये चाग्नेर्देवतासम्बन्ध एव पुरोडाशेनावगतो न सम्बन्धमात्रं तस्माद्देवतात्वमेवोपलक्षणं, तच्चाग्नीषोमीयादौ नास्तीत्याग्नेयस्यैव चतुर्द्धाकरणं, यदपि शतपथब्राह्मणे "तं चतुर्द्धा कृत्वा पुरोडाशं बर्हिषदं करोती"ति सामान्यवचनं तदप्यनेनैव विशेषवचनेनोपसंह्रियत इति तस्यैव चतुर्द्धाकरणं युक्तमिति ॥

इति पार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां
तृतीयाध्यायस्य प्रथमः पादः ॥ १ ॥

श्रीगणेशाय नमः।

# अथ तृतीये द्वितीयः पादः।

बर्हिर्न्यायः। लवनप्रकाशकमन्त्राणां मुख्ये विनियोगाधिकरणम्।

सू० अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यात्तस्मादुत्पत्तिसम्बन्धोऽर्थेन नित्यसंयोगात् ॥ १ ॥

मन्त्रेषु पूर्वपादे श्रुतिविनियोगः प्राधान्येन चिन्तितः, अधुना लिङ्गविनियोगश्चिन्त्यते विनियोजकत्वं लिङ्गस्य मन्त्राधिकरणे सिद्धम् अर्थप्रकाशनेनोपकुर्वन्तीत्यभिधानात् तद्विशेषस्त्विदानीं चिन्त्यते, लिङ्गं सामर्थ्यं तच्च मुख्य इव गौणे च कथञ्चिद्विद्यते तदिह संशयः किं मुख्य एवार्थे मन्त्राणां विनियोगः? किं वा गौणेऽपी?ति, कः पुनर्मुख्यः? को वा गौणः? यः शब्दादेवावगम्यते स मुख्यः, यथाऽग्निशब्दाद् ज्वलनः, बर्हिःशब्दाच्च कुशादयः, यस्तु शब्दाभिहितार्थगुणसम्बन्धात्तत्सदृशोऽर्थः प्रतीयतेऽसौ गौणः यथाग्निशब्दान्माणवकः, स हि ज्वलनगुणपैङ्गल्यादिगुणयोगाद् गम्यते तथा बर्हिःशब्देन तृणान्तरमुलपादि। ननु प्रयोगप्रतीत्यविशेषादुभयत्र वाचकत्वं कस्मान्न भवति? विशेषप्रतीतेः अग्निरिव माणवक इति सादृश्यप्रत्ययाद्गुणादेव च प्रयोगप्रतीत्युपपत्तेरनेकार्थत्वमन्याय्यं परगुणाः परत्र न संभवन्तीति चेन्न प्रत्यभिज्ञानात्, येऽपि प्रतिद्रव्यं गुणभेदमातिष्ठन्ते तेऽपि सामान्यात्मनैक्यमिच्छन्त्येव तेनोपपन्नो गौणमुख्यविभाग इति युक्ता चिन्ता, तत्र "अर्थानां स्मरणार्हत्वान्मन्त्राणां चापि शक्तितः। प्रतिप्रधानमावृत्तेर्गुणानामुभयार्थता" उभयेषामपि तावदर्थानामनुष्ठेयत्वात्स्मरणमपेक्षितं, मन्त्राश्चार्थं प्रति गुणभूताः समर्थाश्चोभयत्रापि यथाकथंचित्स्मृतिमाधातुं साक्षादभिधानस्यापि स्मरणमेव फलं नाधिकं, तच्च गौणसामर्थ्यस्याप्यविशिष्टं, प्रतिप्रधानं च गुणावृत्तिर्न्याय्या। तस्मादुभयत्र विनियोग इति प्राप्तेऽभिधीयते "गौणे सदपि सामर्थ्यं न प्रमाणान्तराद्विना। आविर्भवति मुख्ये तु शब्दादेवाविरस्ति तत्। तात्पर्यं तु स्वतो मुख्ये गौणार्थपरता पुनः। प्रमाणान्तरविज्ञेया तदभावोऽत्र सिध्यति" न ह्यग्निरित्येतावता-

प्रमाणान्तरमन्तरेण गौणे सामर्थ्ये तात्पर्ये वा कथंचिदपि लौकिकाः प्रतिपद्यन्ते मुख्ये तु श्रवणादेव शब्दस्योभयमवगच्छन्ति, न चेह प्रमाणान्तरमस्ति येन मन्त्राणां गौणे सामर्थ्यं तात्पर्यं वाऽभिव्यज्येत, न चानाविर्भूते सामर्थ्ये तात्पर्ये च शब्दार्थः प्रतीयते तेन गौणोऽर्थो मन्त्राच्च प्रतीयते एव कथमप्रतीयमाने विनियोगः स्यात्, मुख्यस्त्वर्थः शब्दादेवावगम्यते इति युक्तस्तत्र विनियोगः, यस्य तु मुख्योऽर्थः प्रकरणे नास्ति तस्योत्कर्षः, यथा पूषान्वनुमन्त्रणमन्त्राणां, यस्य तूत्कर्षोऽपि न संभवति तस्य जपमात्रेणोपयोगः न तु गौणत्वम् अत्यन्ताप्रमाणकत्वात्। अपि च प्रथमावगतमुख्यविनियोगेनैव कृतार्थत्वान्मन्त्रस्य न तद्वशेन गौणे विनियोगः। अर्थोऽपि गौणाख्यानाद्युपायान्तरेणापि स्मृतिसिद्धेर्नात्माभिधायिनं मन्त्रमपेक्षते अतो ऽप्रमाणकस्तत्र विनियोगः, मुख्यविनियोगस्तु मन्त्राऽऽकाङ्क्षावशाद्भवतीति तत्रैव विनियोगः,

गार्हपत्यन्यायः, इन्द्रप्रकाशकमन्त्राणां गार्हपत्ये विनियोगाधिकरणम्।

सू० वचनात्त्वयथार्थमैन्द्री स्यात् ॥ २ ॥

अपवाद आरभ्यते अग्नौ श्रूयते "निवेशनः संगमनो वसूनामित्यैन्द्र्या गार्हपत्यमुपतिष्ठते" इति तत्र संशयः किमनेन मुख्यस्येन्द्रस्य प्रकाशनं कर्तव्य? मुत गौणस्य गार्हपत्यस्ये? ति, तत्र पूर्वाधिकरणव्याख्यानान्मुख्यस्येति प्रतीयते। विनियोज्यानुसारेण, विनियोगस्तु वर्ण्यते" न खल्विन्द्राभिधानस्य मन्त्रस्याग्निप्रकाशने शक्तिरस्ति न चाशक्तोऽशक्यार्थे विनियुज्यते। तेन मन्त्रानुसारेण विनियोगार्थवर्णना। इन्द्रो हि गार्हपत्येन गौण्या वृत्त्याऽभिधीयते ॥ यज्ञसाधनसाधर्म्याद् यद्वा गृहपतेर्यतः। तेनायं गार्हपत्यः स्यादिन्द्रोऽवयवयोगतः ॥ द्वितीया वा सप्तम्यर्थं लक्षयति गार्हपत्ये स्थित्वोपतिष्ठत इति। यद्वा उपतिष्ठत इति द्वे क्रिये विद्येते समीपस्थानमात्मनेपदानुमितं चाभिधानं तत्रैन्द्रमन्त्रकरणकेऽभिधाने गार्हपत्यस्य कर्मत्वं न संभवतीति समीपस्थानविशेषणं गार्हपत्यो भवति गार्हपत्यमुपेत्याभिधत्त इति, तस्मान्मुख्य एव विनियोगोऽत्रापीति प्राप्तेऽभिधीयते, "अग्नौ वचनसामर्थ्याद्विनियोगः प्रतीयते। न चात्यन्तासमर्थत्वं गौण-

सामर्थ्यसंभवात् ॥ यत्र मानान्तरं नास्ति तत्र गौणो न गम्यते । प्रमाणान्तरसद्भावे गौणो शब्दः प्रवर्तते । पूर्वाधिकरणेऽप्येतद्दर्शितं विद्यतेऽत्र च । विस्पष्टं वचनं तेन गार्हपत्यार्थता स्फुटा । अवश्यं कल्पनीयं हि मन्त्रस्य ब्राह्मणस्य वा । गौणत्वं तच्च मन्त्रस्य प्राप्त्यर्थस्यैव युज्यते । अप्राप्तार्थे विधौ नैव गौणत्वमुपपत्तिमत् । न चावयवयोगेन वृत्तीरूढ्याग्निवेदनात् । अभिधानक्रियायाश्च प्रधानत्वात्तदन्वयः । गार्हपत्यस्य नान्यार्थसमीपस्थितिगामिता ॥ तदित्थमस्ति तावद् गार्हपत्ये विनियोग इति स्थितम् सति च तस्मिन् लिङ्गादिन्द्रार्थताऽपि भवति नेति बलाबलाधिकरणे चिन्तयिष्यते ॥

आह्वानप्रकाशकमन्त्रस्याऽऽह्वाने विनियोगाधिकरणम् ।

सू० तथाऽऽह्वानमपीति चेत् ॥ ३ ॥

दर्शपूर्णमासयोराम्नायते "हविष्कृदेहीति त्रिरवघ्नन्वा ह्वयती"ति तत्र संशयः किमयं हविष्कृदेहीति मन्त्रो गौणोऽवघाते प्रयोक्तव्यः? किं वा मुख्ये हविष्कृदाह्वाने इति तदर्थमिदं विचार्यते किमस्मिन्वचने? अवघ्नन्नित्यवघातमुद्दिश्य मन्त्रो विधीयते हविष्कृदेहीत्यवघ्नन्निति किं वा मन्त्रस्याह्वानेन संबन्धोऽवहन्तिस्तु काललक्षणार्थो हविष्कृदेहीति तत्राह्वयत्यवघात इति तत्र, पूर्वाधिकरणन्यायाद्विधौ युक्ता न लक्षणा । मन्त्रस्य त्वयथार्थत्वं वचनाचैव दुष्यति ॥ त्रिरिति तर्हि कथं विधीयत इति चेत् न प्राप्तावघातोद्देशेन मन्त्रस्य त्रिरभ्यासस्य च विधौ वाक्यभेदात् पाठप्राप्तानुवादत्वाददोषः, मन्त्रसमाम्नाये हि मन्त्रं त्रिरभ्यस्तमेव केचिदामनन्ति आह्वयतिरपि एहीति शब्दोच्चारणसाम्याद्गौणः तस्मादवघाताङ्गमन्त्र इति प्राप्तेऽभिधीयते "त्रिरभ्यासो न पाठेन नित्यप्राप्तो यतः क्वचित् । द्विः पठ्यते सकृच्चापि तस्मान्नैवमनूद्यते ॥ न पाक्षिकानुवादत्वं नित्यान्वयविरोधतः । तस्मादत्र त्रिरभ्यासो विधातव्यस्तथा सति ॥ मन्त्रस्य न विधिः शक्यो वाक्यभेदप्रसङ्गतः । आह्वानेन तु मन्त्रस्य योगो हन्तिस्तु लक्षणा । नन्वेवमप्याह्वानमनूद्य त्रिरभ्यासो हन्तिकालश्च विधीयत इति वाक्यभेदः स्यात् न अर्थप्राप्तत्वात् अवघातकाल एव सहायाह्वानमर्थप्रा-

१ तस्मादवघातार्थमन्त्र इति पु० ।

प्रम्, अतोऽनुवादमात्रमात्रमवहन्तिरनुवादत्वादेव लक्षणाऽपि न दोषः, तत्रापि चाविशिष्टं ब्राह्मणे जघन्यवृत्त्याश्रयणम् आहूयते गौणत्वात्, अपि च नात्रेन्द्रियेतिवच्छ्रौतो विनियोगः किंत्वितिकरणावमृष्टस्य मन्त्रस्यावघातस्य च समभिव्याहारात्सबन्धमात्रं गम्यते, तत्र सति संभवेऽङ्गाङ्गिभावः स्यात्, स तु वाक्यभेदान्मन्त्रलिङ्गविरोधाच्च न संभवतीति एककालतैव संबन्ध इति गम्यते, न खल्वेहीति परप्रेषणारूपस्य मध्यमपुरुषस्य हविष्कृदिति च संबोधनरूपस्याचेतनेऽवघाते सामर्थ्यमस्ति तस्मात्, त्रिरावृत्तिमात्रविधानादाह्वानाङ्गं मन्त्रो नाययार्थोऽवघाते ॥

अग्निविहरणादि प्रकाशकमन्त्राणां तत्रैव विनियोगाधिकरणम् ।

सू० तथोत्थानविसर्जने ॥ ४ ॥

उत्तिष्ठन्नन्वाहाग्नीदग्नीन्विहरेति व्रतं कृणुतेति वाचं विसृजतीति अत्रापि पूर्ववत्संशयपूर्वोत्तरपक्षाः, वाक्यभेदस्त्विहाङ्गाङ्गित्वपक्षेऽपि नास्तीति तदेव युक्तमिति विशेषाशङ्का, श्रुतिविनियोगाभावात्तु मन्त्रलिङ्गविरोधादत्रापि कालार्थ एव संयोगः, कालश्चेह विधीयते न पूर्ववदनूद्यते इति विशेषः ॥

सूक्तवाकस्य प्रस्तरप्रहरणाङ्गताऽधिकरणम् । अयमेव प्रस्तरप्रहरणन्यायः ।

सू० सूक्तवाके कालविधिः परार्थत्वात् ॥ ५ ॥

दर्शपूर्णमासयोः श्रूयते सूक्तवाकेन प्रस्तरं प्रहरतीति तत्र संशयः किं प्रस्तरप्रहरणस्य सूक्तवाकस्य च कालार्थः संयोगोऽथवाङ्गाङ्गिभाव ? इति, तत्र द्वयोः कृतार्थत्वात्वाङ्गाङ्गित्वं प्रकल्प्यते । कालार्थस्तेन संयोगस्तयोर्दर्शादिवद्भवेत् ॥ यथा दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेत्युभयोः कृतार्थत्वात्कालार्थः संयोगस्तथेहापि सूक्तवाक्यस्येष्टदेवताऽभिधानेन कृतार्थत्वात् प्रहरणस्य च नानाकर्मोपयुक्तप्रस्तरप्रतिपादनेन प्रयोजनवत्त्वादङ्गाङ्गित्वापेक्षाभावात्कालार्थः संयोगः, तत्रापि निर्ज्ञातकालत्वात्सूक्तवाकः प्रस्तरप्रहरणस्य कालं लक्षयति तृतीया चेत्थंभूतलक्षणे भविष्यति, न हि कथंचिदपि देवताभिधायिनः सूक्तवाकस्य प्रहरणाङ्गता संभवति प्रहरणे

देवताऽभावात्, अतः कालार्थ एव संयोगः एवं प्राप्ते ब्रूमः "श्रुत्या प्रहरणाङ्गत्वं सूक्तवाकस्य ते तेन तद्देवतायोगादेव होमोभविष्यति । तृतीया श्रुत्या सूक्तवाक्यस्य करणत्वं गम्यमानं न शक्यमुत्स्रष्टुं, न चेत्थं भूतलक्षणेयं तृतीयेपयं कारकविभक्तेर्बलीयस्त्वात् किं बलीयस्त्वम्? सर्वो हि संबन्धः क्रियागर्भ एव तेन सूक्तवाकप्रहरणयोर्लक्षणक्रियागर्भोऽयं संबन्धोन चेह लक्षणक्रियोपात्ता तामनुपात्तामपेक्ष्यायं सम्बन्धः प्रत्येतव्य इति विप्रकृष्यते, क्रियाकारकसम्बन्धस्तु नान्यापेत इति बलीयस्त्वं तेन करणमेव सूक्तवाकः, यद्यपीष्टदेवताप्रकाशनेनासौ कृतार्थस्तथाऽपि विनियुज्यते वचनात्, किं हि वचनं न कुर्यात् । कथं पुनर्देवताभिधायिनः प्रहरणाङ्गता-श्रुतिविनियुक्तमच्याङ्गत्वबलादेव तदभिधेयाभिरिष्टदेवताभिः संयोगः प्रहरणस्य कल्प्यते, तेनायं प्रहरतिरिष्टदेवतासंस्कारार्थो होमो भविष्यति कुर्वततेनोपपन्नमिष्टदेवताप्रकाशनं एव सूक्तवाकस्य प्रहरणाङ्गत्वम् ॥

सूक्तवाकन्यायः । सूक्तवाकानामर्थानुसारेण विनियोगाधिकरणम् ।

सू० कृत्स्नोपदेशादुभयत्र सर्ववचनम् ॥ ६ ॥

प्रहरणाङ्गं सूक्तवाक इति स्थितम्, इदानीमिदं संदिह्यते किं कृत्स्नः सूक्तवाकः पौर्णमस्यामामावास्यायां च प्रयोक्तव्य? उतेष्टदेवतानुरोधेन विभज्य प्रयोग? इति, तत्र सूक्तवाकशब्दस्य समस्तानुवाकवचनत्वेनाध्येतृणां प्रसिद्धेराग्नेयादिभावानां बलणामप्यन्योन्यनिरपेक्षाणामेव कथंभावात्मकप्रहरणवत्त्वादेकैकस्य कर्मणः सकलः सूक्तवाकोऽङ्गं प्रयाजादिवत्, तत्र सत्यप्येवमेककालवर्तिनां त्रयाणां तन्त्रेण प्रयाजादिवदुपकरोतीति न भेदेन प्रयोक्ष्यते, समुदायद्वये तु कालभेदात्सकलस्यैवावृत्त्या भवितव्यम् । नन्विष्टदेवताप्रकाशनार्थो मन्त्रोऽयं प्रहरणमपीष्टदेवतासंस्कारार्थमित्युक्तं, तत्रामावास्यादेवतापदानि पौर्णमास्यां न प्रयोगार्हाणि प्रयोजनाभावात् इतराण्यपीतरत्रेति विभाग एव प्राप्नोति, नैवं, वचनाद्धि सकलप्रयोगो-गम्यते तत्राविद्यमानार्थान्यपि पदान्यदृष्टाय प्रयोक्ष्यन्ते वचनादिति, उच्यते विभज्य प्रयोगः प्रयोजनवशादित्युक्तो हेतुः, न हीन्द्राग्न्यादिशब्दानां पौर्णमास्यां प्रयोजनं, नाप्यग्नीषोमादिशब्दानामितरत्र प्रयोजनम् । यत्तु वच

नादित्युक्तं तच्च सूक्तवाकशब्दस्यावयवव्युत्पत्त्या इष्टदेवताप्रकाशकमन्त्रवचनत्वात् सूक्तं वक्तीति सूक्तवाकः, तेन यस्मिन्प्रयोगे यावत्यो देवता इष्टा इष्टा एका बह्वो वा प्राप्तत्वो वा तत्र तावद्देवतापदप्रयोगादेव संपूर्णः सूक्तवाकः, तदतिरिक्तानिष्टदेवतापदप्रयोगे प्रत्युत सूक्तवाकत्वं हित्वा दुरुक्तवाक एव स्यात्तस्मादिष्टदेवताऽनुरोधेन निष्कर्षः ।

काम्ययाज्यानुवाक्याकाण्डानां काम्यमात्राङ्गताऽधिकरणम् ।

सू० लिङ्गक्रमसमाख्यानात्काम्ययुक्तं समाम्नानम् ॥ ७ ॥

"ऐन्द्राग्नमेकादशकपालं निर्वपेदित्यारभ्यैन्द्राग्न्यादिलिङ्गा इष्टयः समाम्नाताः तेनैव लिङ्गक्रमेण काम्ययाज्यानुवाक्याकाण्डमित्येवं समाख्यातं मन्त्रकाण्डसमाम्नानम् इन्द्राग्नीरोचनादिव इत्यादि तदिह मन्त्रकाण्डे संशयः किं यत्र यत्र सामर्थ्यमस्ति तत्र तत्र सर्वत्र विनियोक्तव्या मन्त्राः क्रमसमाख्ये बाधित्वा? उत तद्वशेन काम्येष्टिष्वेवे? ति तदर्थं च किं लिङ्गमपि श्रुत्यादिवनिरपेक्षमेव विनियोजकं? मुत क्रतुसंबन्धबोधकप्रमाणमन्यदप्यपेक्ष्य व्यापारविशेषमात्रे लिङ्गस्य प्रामाण्यमिति तत्र "लिङ्गस्याप्यनपेक्षस्य मन्यते विनियोक्तृताम् । तद्बलीयः क्रमाख्याभ्यामिति सर्वार्थता भवेत्" स्वाध्यायविध्यधापितस्य तावन्मन्त्रस्यावश्यं प्रयोजनेन भवितव्यं तत्र मन्त्रस्वरूपमेव दृष्ट्वाऽस्यार्थस्य प्रकाशकोऽयमतोऽत्र विनियोक्तव्य इति बुद्धिरुत्पद्यते, तत्र निष्प्रयोजनस्य प्रकाशनमनर्थकमिति तद्द्वारेण तत्सम्बन्धिकर्मापूर्वार्थत्वमपि तत एव गम्यते किमत्र प्रमाणान्तरेण, तच्च क्रमसमाख्याभ्यां प्रबलमिति तद्बाधेन लिङ्गात्सर्वार्थतेति प्राप्ते ब्रूमः, "सत्यं प्रयोजनापेक्षा मन्त्रस्यास्ति तथाऽपि तु । नैव सामर्थ्यमात्रेण विनियोगोऽस्य संभवी", न ह्यपेक्षितमपि प्रयोजनं प्रमाणमन्तरेण लब्धुं शक्यं, न च तावताऽत्र प्रकाशने फलमस्ति कर्मापूर्वसाधनरूपप्रकाशनार्थता तु न कर्मसम्बन्धप्रमाणमन्यदन्तरेण सामर्थ्यमात्रात्सिध्यति पूषाप्रपिष्टभाग इत्यत्र तु भाग-शब्दस्य त्यागवचनत्वात्क्रतुसम्बन्धसिद्धिरिति वक्ष्यामः, न चाग्निसूर्यादीनां स्रुवादिवत्क्रत्वव्यभिचारो येन क्रतुरूपस्याप्येत लोकेऽपि तत्सद्भा-

वात् इन्द्रादीनामपि मन्त्रार्थवादेतिहासादिभिः कर्मणोऽन्यत्रापि प्रतीतेः, तस्मात्क्रतुसम्बन्धप्रमाणमन्यदपेक्षितव्यं, न च मन्त्रकाण्डस्य क्रमसमाख्याभ्यामन्यत्प्रमाणमस्ति ते च काम्येष्टिष्वेवेति तत्रैव विनियोगो न कर्मान्तरेषु, न च कर्मान्तरेषु स्मरणापेक्षमेषां मन्त्राणां तत्र विनियोगः तेषामुपायान्तरेणापि स्मृतिसिद्धेरेकान्ततो मन्त्रानपेक्षणात्, यत्र त्वेकान्ततस्तत्र भवत्येव सामर्थ्यमात्रादपि तादर्थ्यं यथार्थज्ञानस्यानुष्ठानाङ्गत्वं, न हि तद्विनानुष्ठानं सिध्यति यथा चात्मज्ञानसांपरायिकं फलकर्मानुष्ठानौपयिकत्वम् । इह त्वेकान्ताभावान्न कर्मान्तरेषु विनियोगः संभवताम् असंभवतामपि तास्वेव सामिधेन्यादौ क्रमसहितेन लिङ्गेन विनियोगः ।

आग्नीध्रोपस्थाने प्राकृतानां मन्त्राणां विनियोगाधिकरणम् ।

**सू० अधिकारे च मन्त्रविधिरतदाख्येषु शिष्टत्वात् ॥ ८ ॥**

ज्योतिष्टोमे काश्चिदाग्नेय्य ऋचो "अग्न आयाहि वीतय" इत्यादयो विशेषरूपेणासंयुक्ताः पठिताः स्तोत्रादौ च वाक्यान्तरेण विनियुक्ताः प्रदेशान्तरे चाग्नेय्या "ऽऽग्नीध्रमुपतिष्ठत" इति श्रुतं, तत्र विचारः । किं प्रकृताभिरप्रकृताभिर्वाऽऽग्नेयीभिरिदमुपस्थानं कर्तव्यमुत कृताभिरेवेति "तत्राग्नेयीतिशब्देन सर्वासामभिधानतः । अविशेषो न काचिद्धि प्रकृतग्रहणे प्रमा" प्रकरणाद्विशेषोऽवगम्यत इति चेत्र प्रकरणस्याविशेषकत्वात् यदि त्वाग्नेयीसंस्कारार्थमिदमुपस्थानं स्यात्ततोऽपूर्वासम्बन्धिनः संस्कारायोगात्तत्साधनभूता प्रकृता गृह्येरन् । उपादीयते त्विहाग्नेयी तृतीयानिर्देशात् अतः शब्दार्थमात्रस्यैवाङ्गत्वोपपत्तेर्न प्रकृतनियमः, प्रकृतनियमः सन्निधानादिति चेत्र तदभावात् प्रदेशान्तरे हि स्तोत्रादावाग्नेय्यो विहिताः न तूपस्थानविधौ कस्याश्चिदाग्नेय्याः । सन्निधिरस्ति यतस्तद्विषयेऽयमाग्नेयी–शब्दः स्यात्, अस्तु वा सन्निधानं तथाऽपि स्तोत्रादिकार्यान्तरार्थत्वाच्चिराकाङ्क्षा नात्र सम्बन्धुमर्हति न ह्यन्यार्थेन सन्निहितेनान्यो विशेष्यते यथाऽश्वेन गच्छति श्वेतेन पटेन प्रावृत इति पटसम्बन्धेन निराकाङ्क्षेण सन्निहितेनापि श्वेतगुणेनाश्वो न विशेष्यते तथेहापि, न चाग्नेयीऽशब्दस्याप्यस्ति

विशेषापेक्षा यथाश्रुताग्नेयीशब्दस्याश्वमात्रस्येव वाक्यार्थसमवायोपपत्तेः तेनोभयोर्निराकाङ्क्षत्वात्सत्यपि सन्निधौ न मिथः सम्बन्धः । अपेक्षितसन्निधिर्हि सम्बन्धकारणं न सन्निधिमात्रम् । एवं सत्यपि यदि विशिष्येत श्रुतिजनिताविशेषप्रत्ययबाधाच्छ्रुतिरेव बाधिता स्यात् । ननु यौगिकत्वादाग्नेयीशब्दः सन्निहितामेव व्यक्तिमवलम्बते नैवम् अवयवार्थसमन्वितव्यक्तिमात्रवचना यौगिका न सन्निहितवचनाः प्रमाणान्तरेण तु विशेष्यमाणास्तत्रैव व्याप्रियन्ते यथा वैश्वदेव्याऽऽमिक्षेति, तद्धितः सन्निहितामामिक्षामेवाभिधत्ते, न ह्यत्र विशेषकमस्ति सतोऽपि सन्निधेरन्यार्थत्वेनाविशेषकत्वात्, न चात्र सोमस्यैवैन्द्रवायवत्वमृगनुवादेनाग्नेयीत्वं विधीयते येनानुवादस्य सन्निहितगामित्वात्सन्निहिता ऋचः प्रतीयेरन् आग्नेयीनां तु सतीनामुपस्थानं प्रत्युपादानात्, तस्मात्सत्यपि सन्निधावविशेषः, न च सन्निधिरप्यस्ति प्रदेशान्तरगतत्वादित्युक्तं, तस्मादाग्नेयीमात्रग्रहणमिति प्राप्तेऽभिधीयते "प्रकृता एव गृह्येरन् प्रसिद्धक्रतुसङ्गमाः । तासां कार्यविशेषो हि सुखायोत्रापदिश्यते" आग्नीध्रोपस्थानस्य हि द्वे रूपे आग्नीध्रोपस्थानात् ज्योतिष्टोमापूर्वसाधनौपयिकव्यापारता च, द्वयमपि शास्त्रेणैवावगन्तव्यम् अन्यतरेणाप्यन्यतरस्य सिद्ध्यभावात्, न हि ज्योतिष्टोमगतो यो व्यापारः स आग्नीध्रोपस्थानात्मक एवेति नियमः समस्ति, नाप्याग्नीध्रविषयमुपस्थानं ज्योतिष्टोमगतव्यापार एवेत्येषोऽपि नियमः समस्ति, ज्योतिष्टोमानौपयिकस्यापि स्पर्शादिवदभिधानं तस्याग्नीध्रविषयस्य संभवात् तेनैकेन शास्त्रसिद्धेनान्यतरस्यार्थापत्त्याऽनुमानेन वा सिद्ध्यभावाद् द्वे अपि रूपे शास्त्रतोऽवगन्तव्ये तद्यप्रकृताभिरुपस्थानं विधीयेत तत्ततस्तस्योपस्थानमेव श्रुतेर्लभ्यते न तु ज्योतिष्टोमव्यापारत्वम् अश्रुतत्वात् न च कर्मानौपयिकेनोपस्थानमात्रेण फलमस्तीत्यनर्थकं वाक्यं स्यात्फलं वा कल्प्येत । नन्ववघातादिवदुपस्थानस्य प्रकरणात्क्रतुव्यापारता सिद्ध्यति सत्यं सिध्यति न तु श्रुतिमकल्पयित्वा प्रकरणस्य स्वतः प्रामाण्याभावात्, न चाकल्पनयोपपत्तौ कल्पना युक्ता तथाविधेऽपि गौरवं स्यात् श्रुतिसिद्धमुपस्थानरूपत्वं प्रकरणकल्पितं च क्रतूपकारव्यापारत्वमुभयमपि ह्यनेनैव विधिना विधा-

तव्यम् आग्नेय्या क्रतुं प्रत्याग्नीध्रोपस्थानरूपं व्यापारं कुर्यादिति, न हि-
प्रकरणविधायकं श्रुतिवत्सम्बन्धप्रमाणत्वात् यथा व्रीहीनवहन्तीति श्रुति-
समर्पितव्रीह्यवघातसम्बन्धं प्रकरणकल्पितं क्रत्वपूर्वसाधनावघातसम्बन्धं
च विधिरेवावहन्तीति विधत्ते तद्वदिहापि प्रकरणकल्पितं क्रतुसम्बन्धे-
मयमेव विधिर्विदध्यात् श्रुत्युक्तं चोपस्थानरूपमिति गौरवं स्यात् तदिद-
मवघातादिषु गत्यभावादङ्गीकृतम् इह तु प्रकृतग्रहणेन गतौ सत्यां न गौर-
वाश्रयणमवकल्पते तथा हि प्रकृतानां प्रागेव क्रतुगतो व्यापारः कर्तव्य-
त्वेनावधारितस्तस्यावधारितस्तस्यावधारितव्यापारस्याग्नीध्रोपस्थानात्मक-
विशेषरूपमेवात्र विधीयते य आग्नेय्या क्रतौ व्यापारः कर्तव्यः स आग्नी-
ध्रोपस्थानरूप इति तेन प्रागेव कल्पितं, विहितं चाग्नेय्याः क्रतुव्यापार-
मनूद्य विशेषमात्रं श्रुत्युपात्तमिह विधीयते न ह्विह क्रतुव्यापाररूपं कल्प्यते
नापि विधीयत इति लाघवात्प्रकृतग्रहणमेव युक्तम्। नन्वेवमग्निमुपनिधा-
य स्तुवीमेत्यत्रापि प्रसिद्धक्रतुसम्बन्धानामाहवनीयादीनामेवोपधानं स्यान्न
लौकिकाग्नेः, नैष दोषः देशविशेषनिबद्धा ह्याहवनीयादयो नाहत्यवचनम-
न्तरेणान्यत्र नेतव्याः, श्रूयते हि तेषामापतनाद्बहिर्गमने दोषः प्रायश्चित्तं च
विना एष इन्द्रियेण वीर्येण वृध्यते यस्याहिताग्नेरग्निरपक्षायतीत्यादि
तस्माल्लौकिकग्रहणम्, इह तु प्रकृतानामेव लाघवादित्युक्तम्। ननु प्रकृतानां
कार्यविशेषोऽपि स्तोत्रादिर्ज्ञात एव सत्यं, सामान्यरूपमपि तावत्प्रकरण-
पाठमात्रज्ञातं तन्मात्रेण नः प्रयोजनं, विशेषरूपं तु वाक्यान्तरेण विहितं
विशेषान्तरेणानपेक्षितत्वादनादृत्य सामान्यरूपमपेक्षितं गृह्यते तस्मात्प्रकृ-
ताग्निरूपस्थान पूर्वं लिङ्गस्य सामान्यसम्बन्धापेक्षितत्वमुक्तं तत्प्रसङ्गाच्छ्रुतेरपि
सति संभवे सामान्यसम्बन्धमन्यतः सिद्धमपेत्य विशेषमात्रपरत्वं संभवतीति
प्रतिपाद्यत इति लिङ्गाधिकारे श्रुतिविनियोगश्चिन्तितः ॥

भक्षमन्त्राणां यथालिङ्गं ग्रहणादौ विनियोगाधिकरणम् ।

सू० लिङ्गसमाख्याभ्यां भक्षार्थताऽनुवाकस्य ॥ ९ ॥

भक्षमन्त्रः श्रूयते भक्षे हि माविशेत्यादिः तस्य कश्चिदंशो भक्षणं
प्रतिपादयति ग्रहणावेक्षणसम्यग्जरणप्रकाशकाश्चान्येंशाः तत्र संशय

किं सर्वोऽयं भक्षणे विनियोक्तव्य? उत ग्रहणादिष्वपि यथासामर्थ्यं विभज्य विनियोग? इति तदर्थं च किमर्थप्राप्तेषु मन्त्रस्य लिङ्गं विनियोजकं न वा? इति "तत्र सर्वस्य भक्षणाङ्गत्वग्रहणादेरचोदनात् अक्रत्वर्थो न मन्त्रस्य द्वारीभवितुमर्हति भक्षानुवाकसंज्ञा च भक्षणाङ्गत्वबोधिनी सामर्थ्यं चास्ति मन्त्रस्य द्वारीभवितुमर्हति" यद्यपि चावख्येयमित्येवमादेरवेक्षणादौ मुख्यं सामर्थ्यं क्लृप्तं तद्विशेषितभक्षणप्रतिपादने तु लक्षणया तद्वेकवा-क्यत्ववशेन कल्प्यं दुर्बलं च वाक्यं लिङ्गात् तथाऽपि मुख्यस्य ग्रह-णादेरर्थप्राप्तस्याचोदितत्वेनाक्रत्वर्थत्वात्तादर्थ्ये मन्त्रस्य क्रत्वपूर्वानुपयो-गितयाऽनर्थक्यापत्तेरसंभवति लिङ्गविनियोगे सत्रिन्नादिपदानामिव लक्षणया वाक्यवशेन प्राग्भक्षणात्वर्तिग्रहणादिविशिष्टचोदितभक्षणा-र्थता युक्ता गृहीत्वाऽवेक्ष्य सम्यग्जरणाय भक्षयामीति, एवं चा-नन्यविषयत्वाद्भक्षानुवाकसमाख्याऽप्युपपन्नतरा भवति, तस्मात्सर्वानुवाको भक्षाङ्गमेकं वाक्यमिति प्राप्ते ब्रूमः "ग्रहणादौ विभागेन विनियोगोऽस्य लिङ्गतः। वाक्यतन्त्रे हि नेशाते कर्तुं लिङ्गस्य बाधनम्॥ ग्रहणादि च शास्त्रेण साक्षादव्ययचोदितम्। तथाऽपि चोदितार्थेन कर्तव्यत्वात्प्रकाशते" न ह्यसति ग्रहणादौ चोदितो भक्षः शक्यते कर्तुमित्यर्थात्तदपि कर्त्तव्यं भक्ष-चोदनयैव वा चोदितमित्यपि शक्यं वक्तुं तच्चास्मृतमशक्यमनुष्ठातुमिति स्मारकापेक्षत्वात्तद्द्वारेण क्रतूपयोगित्वाच्छक्नोति स्मारकं मन्त्रं ग्रहीतुम्, एवं संभविलैङ्गिके विभज्य विनियोगे वाक्यसमाख्याभ्यामेकवाक्यत्वापादनेन भक्षार्थता सर्वस्य न युज्यते, समाख्या च भक्षणे सम्बन्धमात्रं प्रतिपादयन्ती सम्बन्धस्य साक्षाद्वा ग्रहणादिद्वारेण वोभयथाऽप्युपपत्तेर्नानुपपन्ना, सम्यग्-जरणपर्यन्तं च भक्षणं स्वरसतो लोकसिद्धं तादृशमेव च द्रवद्रव्यस्य भक्षण-मिति सम्यग्जरणान्तमेव सोमप्रतिपत्त्यर्थतया विधीयते, अतो जरणमपि कर्तव्यं, तच्चासनविशेषादिव्यापारसाध्यमिति युक्तस्तत्र मन्त्रविनियोगः तस्माद्विभज्य विनियोगः।

अथ मन्द्राभिभूतिरि-त्यादेर्भक्षयामीत्यन्तस्य एक-मन्त्राधिकरणम्।

सू०॥ गुणाभिधानान्मन्द्रादिरेकमन्त्रः स्यात्तयोरेकार्थसंयोगात्॥ १०॥

मन्द्राभिभूतिरित्यादि तृप्यत्वित्यन्तं तृप्तौ विनियोक्तव्यमुत वसुमद्गणाद्येकवाक्यं वाक् तृप्यत्विति भक्षयामीत्येकं भक्षणतृप्तिविशिष्टं प्रकाशयत्विति पूर्ववल्लिङ्गात्तृप्तिप्रकाशने प्राप्ते ऽभिधीयते "तृप्तिर्भक्षाऽनुनिष्पन्नाव्यापारान्तरार्थिनी तेन । स्मृत्यनपेक्षत्वान्न मन्त्रोऽत्र प्रयुज्यते" न हि तृप्तिं प्रकाश्य किञ्चित्कर्तव्यं तत्रादृष्टार्थं तत्प्रकाशनं स्यात् तृप्तिविशिष्टभक्षणप्रकाशने तूत्साहजननाद्दृष्टार्थता, तस्माल्लिङ्गासंभवाद्वाक्येन भक्षणार्थत्वम्,

इन्द्रपीतस्येत्यादिमन्त्राणां सर्वेषु भक्षणेषु ऊहेन विनियोगाधिकरणम् ।

सू० ॥ लिङ्गविशेषनिर्देशात्समानविधानेष्वनैन्द्राणाममन्त्रत्वम् ॥ ११ ॥

भक्षमन्त्र एवोदाहरणं तत्रेन्द्रपीतस्येति श्रूयते सन्ति चैन्द्राण्यनैन्द्राणि च ज्योतिष्टोमे प्रदानानि, तत्र संशयः किमैन्द्रेष्वेवायं मन्त्रो नैन्द्राणाममन्त्रकभक्षणम् ? उत तेष्वप्यूहेन मन्त्रोऽयं सर्वत्र यथाऽऽम्नानमेव मन्त्र इति, तदर्थं च किमैन्द्राणामनैन्द्राणां च प्रकृतिविकारभावोऽस्ति न वेति, तथेदमपरमपि चिन्त्यम् इन्द्रपीतस्येति तत्पुरुषः सोमविशेषणम् इन्द्रेण पीतस्य सत इति, किं वा बहुव्रीहिः सवनविशेषणम् इन्द्रो यस्मिन्पीतः सोमस्तस्य प्रातः सवनस्येति तत्र 'तत्पुरुषे स्वार्थलाभः स्यादुत्तरे पदे, बहुव्रीहौ द्वयोरन्यपरत्वाद्दुर्बलत्वयोः ऐन्द्रानैन्द्रप्रदानानि ह्यंशा एकस्य कर्मणः प्रकृतिर्विकृतिश्चेष्टा न चात्मैवात्मनः क्वचित्" तेन समासवर्जनीयत्वेन तत्पुरुषाश्रयणाद्यथाम्नातमन्त्रस्यानैन्द्रेष्वसामर्थ्यात्समाने च कर्मणि प्रकृतिविकारभावासंभवेनोहायोगादनैन्द्राणाममन्त्रकभक्षणमित्येकः पक्षः । अपरस्तु सत्यपि कर्मैकत्वे प्रदानानां भिन्नत्वात्तद्विषयः प्रकृतिविकारभावः मानग्रहणमन्त्राच्चैन्द्रप्रदानविषयः सोमः "इन्द्राय वसुमते सोमं गृह्णामी"त्यादयो मन्त्राः नानैन्द्रप्रदानेषु समर्थाः, भवति चाङ्गवशेन प्रधानस्य विषयव्यवस्था, यथाऽऽहवनीयादिवशेनाग्निहोत्रस्याहिताग्निविषयत्वम्, अतो यत्र मन्त्रस्तत्र मानग्रहणे यत्र ते तत्र सोमः यत्र सोमस्तत्राभिषवादयो भक्षस्तन्मन्त्रश्च प्रदानान्तराणि त्वधर्मकाणि चोदकेनैतान्धर्माना[1]हरन्ति

१ गृह्णन्तीति पु० ।

तत्र देवताविशिष्टभक्षप्रकाशकत्वेनोपकृतवतो भक्षमन्त्रस्य कार्यवशेन विकृतिमागतस्य यथादेवतं विकारो विज्ञायते, तस्मादनैन्द्रे ष्वप्यूहेन मन्त्र-वद्भक्षणम् । एवमूहेऽवस्थितमधिकरणमपरिसमाप्तं कृत्वाऽन्तरा प्रसङ्गादूहविषयश्चिन्त्यते ॥

अभ्युन्नीतसोमभक्षणे इन्द्रस्याप्युपलक्षणाधिकरणम् ।

सू० पुनरभ्युन्नीतेषु सर्वेषामुपलक्षणं तद्विशेषत्वात् ॥ १२ ॥

सवनमुखीयेषु चमसेषु ऐन्द्रेषु सर्वेषु हुतेषु ये होत्रकाणां मैत्रावरुणादीनां चमसास्तेष्वभक्षितेषु सशेषेष्वेव पुनः सोमोऽभ्युन्नीय देवतान्तरेभ्यो मित्रावरुणादिभ्यो हुत्वा भक्ष्यते तस्मिन्भक्ष्यमाणे भवति संशयः, किं पूर्वकृतप्रदानदेवताभूत इन्द्रोऽप्युपलक्षणीयः इन्द्रमित्रावरुणपीतस्येति ? किं वा ने? ति तदर्थं च किमैन्द्रोऽपि शेषो देवतान्तरसम्बन्धी जातो न वे? ति तत्रोन्नयनकाले देवतान्तरसङ्कल्पो न क्रियेत, यदि क्रियेत तत उन्नीयमानस्यैव देवतान्तरसम्बन्धो न पूर्वस्थितस्य शेषस्येति तस्य पूर्वदेवतासम्बन्धोनापेयात् उन्नयनमात्रं तु तदा क्रियते, देवतानिर्देशस्तु प्रदानकाले तदा च पूर्वशेषस्याभ्युन्नीयमानस्य चोभयस्य चमसस्थत्वेन देवतान्तरसम्बन्धात्पूर्वदेवतापेतसंबन्धत्वाच्चोपलक्षणीया इति प्राप्ते ब्रूमः "यद्यप्युन्नयनकालेन देवतासङ्कल्पस्तथाऽप्युन्नयनं तावत्करिष्यमाणयागार्थमित्यसंदिग्धम् अतश्चाभ्युन्नीतं स्वकरिष्यमाणयागार्थताऽवगता न पूर्वशेषस्य प्रमाणाभावात् करिष्यमाणयागार्थस्तस्यैव तदीयदेवतासंबन्धो नान्यस्य, तस्मात्पूर्वशेषस्य देवतासंबन्धानपायात्स्यादप्युपलक्षणीया ॥

पात्नीवतभक्षणे इन्द्रादीनामनुपलक्षणाधिकरणम् ।

सू० पात्नीवते तु पूर्ववत् ॥ १३ ॥

द्विदेवत्यानामैन्द्रवायवादीनां शेषा आदित्यस्थालीमागत्य ततोऽप्याग्रयणस्थालीमागच्छन्ति पात्नीवतश्चाग्रयणपात्राद्गृह्यते तस्मिन् भक्ष्यमाणे भवति संशयः किमैन्द्रवाय्वादयोऽप्युपलक्षणीयाः ? उत पत्नीवानेवे? ति तदर्थं च किं द्विदेवत्यं शेषो ? पीन्द्रवाय्वादिभ्योऽपनीय पत्नीवते गृहीतः किं वा न वेति तत्राग्रयणमात्रस्य पात्नीवतत्वं नान्यस्य तत्संसृष्टस्यापि तस्मा-

द्विदेवत्यशेषस्यापात्नीवतस्य पूर्वदेवतासंबन्धानपायादिन्द्रवाय्वादीनामप्युपलक्षणं, नैतदेवं न ह्याग्रायणं पात्नीवतं श्रूयते पात्नीवतमाग्रयणाद्गृह्णातीत्युपादानमात्रमाग्रयणाम्, अतो यत्ततोऽपेतं तत्पात्नीवतम् आग्रयणांशवत्त्वानाग्रयणमपि तत्संसृष्टं द्विदेवत्यं ततोऽपेतमिति पात्नीवतमेव अतः पूर्वदेवतासंबन्धापेतः स भूतपूर्वत्वादुपलक्ष्येत, न च प्रकृतौ भूतपूर्वोपलक्षणं कृतमित्यनुपलक्षणमिन्द्रवाय्वादीनाम् ॥

पात्नीवतशेषभक्षणे त्वष्टुरनुपलक्षणीयताधिकरणम् । सू॰ त्वष्टारं तूपलक्षयेत्पानात् ॥ १४ ॥

तस्मिन्नेव पात्नीवते आध्वर्यवो होममन्त्रः "अग्नाइपत्नीवान्त्सजूर्देवेन त्वष्ट्रा सोमं पिब स्वाहे"ति तत्र संशयः किं त्वष्टाऽपि देवता सोऽप्युपलक्षयितव्य? उत न देवता नोपलक्षयितव्य इति मन्त्रवर्णेनाग्नेः पत्नीवतस्त्वष्ट्रा सह पानं गम्यते न च तदुपपद्यते यदि त्वष्टा न पिबेत् न चादेवतायाः पानं संभवतीति त्वष्टाऽपि देवतोपलक्षयितव्य इति प्राप्ते ब्रूमः शब्दतस्तावदग्नेरेव पानं गम्यते त्वष्टुः सह भावमात्रं, न च सहभावस्तत्क्रियासंबन्धाव्यभिचारी विनापि तेन दर्शनात् सहैव दशभिः पुत्रैर्भारं वहति गर्दभीति, यद्यपि च पानं स्यात्तथापि देवतात्वमप्रमाणकं, न हि देवता पिबति उद्देशमात्रलक्षणत्वात्तस्याः, विस्पष्टं च चोदनायां तद्धितेन निरपेक्षस्य पत्नीवतो देवतात्वं गम्यमानं न मान्त्रवर्णिक्या देवताया बाधविकल्पसमुच्चयान् सहते अतो नोपलक्षणीयस्त्वष्टा ॥

पात्नीवतशेषभक्षणे त्रिंशतामनुपलक्षणाधिकरणम् । सू॰ त्रिंशच्च परार्थत्वात् ॥ १५ ॥

तस्मिन्नेव पात्नीवते याज्यामन्त्रः "एभिरग्ने सरथं या ह्यर्वाङ्नानारथं वा विभवो ह्यश्वाः पत्नीवतस्त्रिंशतं त्रींश्च देवाननुष्वधमावह मादयस्वे"ति, तत्र संशयः किं त्रयस्त्रिंशदुपलक्षयितव्या? उत नेति पूर्वत्राग्नेरेव पानं त्वष्टुस्तु सहत्वमात्रमित्यदेवतात्वमित्युक्तम् । इह तु विपरीतम् अग्नेर्मादयितृत्वादितरे माद्यन्तीति गम्यते अतस्तेषामेव देवतात्वं चोदनया च पत्नीवन्मात्रस्य देवतात्वमुक्तं न तद्विशेषस्य तत्र यथाग्नेः पत्नीव-

त्रिंति मन्त्रगतसामानाधिकरण्यादतः पत्नीवत्त्वेन देवतात्वमेवं त्रयस्त्रिं-शतोऽपि देवतानां पत्नीवतस्त्रिंशतं त्रींश्च देवानिति सामानाधिकरण्याद-सति च प्रमाणान्तरे द्विवचनबहुवचनान्तानां वृत्तिर्नेष्यते अस्ति चेह प्रमाणं मन्त्रगतसामानाधिकरण्यम् अतः पत्नीवन्तो देवता अस्येति चोद-नार्थो भविष्यति, तस्मात् त्रयस्त्रिंशदुपलक्षणीया इति प्राप्ते ब्रूमः यत एवाग्नेर्मादयितृत्वमत एव तस्यैव देवतात्वं मन्त्रवर्णाद्गम्यते न ह्यसौ-यजमानस्य द्रव्येण त्रयस्त्रिंशतं मादयितुं शक्नुयात्, न यदि यजमानो-ऽग्नये दद्यादतोऽग्नेरेव यजमानं संकल्पविषयत्वाद्देवतात्वमितरे त्वग्नि-दत्तेन कामं माद्यन्तु न तु यजमानस्तेभ्यो ददातीत्यदेवतात्वम् । एवं च यद्यपि पत्नीवन्तस्ते भवेयुस्तथाऽपि तेषां मन्त्रवर्णाद्देवतात्वमनवगत-मिति प्रमाणान्तराभावाच्च चोदनायां बहुवचनान्तेन विग्रह इति एक एवाग्निः पत्नीवानिह देवतेति तस्यैवोपलक्षणम् ॥

भक्षणेऽनुवषट्कारदेवता-णा अनुपलक्षणाधिकरणम् । सू० वषट्कारश्च कर्तृवत् ॥ १६ ॥

अनुवषट्कारदेवताया अग्नेरसंदिग्धं देवतात्वमित्युपलक्षणं प्रकृतौ त्वसौ विद्यमानाऽपि नोपलक्षिता प्रधानदेवतैव त्विन्द्र उपलक्षितः विकृ-तावपि तत्कार्यापन्ना प्रधानदेवतैवोपलक्षणीया नानुवषट्कारदेवतेति ॥

अनैन्द्राणाममन्त्र-कभक्षणाधिकरणम् । सू० छन्दःप्रतिषेधस्तु सर्वगामित्वात् ॥ १७ ॥

एवमूहं विचार्याऽधुना स्थितादुत्तरमुच्यते नास्त्यूहः समानविधान-त्वात्प्रदानां न ह्यैन्द्रप्रदानविषयः सोमः स हि सोमेन यजेतेति कर्मोप-पत्तौ अतः कर्माङ्गं न प्रदानविशेषस्य तदेव सर्वप्रदानेष्वभ्यस्यते इति सर्वाणि समानविधानानि, मानग्रहणमन्त्रो तु लिङ्गादैन्द्रप्रदानविषयौ कामं भवेतां न तु सोमः, स ह्युत्पत्तावेव श्रुत्या कर्मणा संबद्धो नाभ्यासविशेषविषयः शक्यः कर्तुम् अतः समानविधानत्वादनूहः, भक्षमन्त्रस्तु लिङ्गादैन्द्रेष्वेवे-त्यनैन्द्राणाममन्त्रकं भक्षणमिति, एवं प्रथमपक्ष एव स्थितमधिकरणम् एवं स्थिते पुनः कृत्वा चिन्ता ॥

ऐन्द्राग्नभक्षस्यामन्त्रकताधिकरणम् । **सू० ऐन्द्राग्ने तु लिङ्गभावात्स्यात् ॥ १८ ॥**

यदानैन्द्राणाममन्त्रकं भक्षणं तदा यत्रान्यसहित इन्द्रो देवता यथैन्द्राग्नादिषु तत्र मन्त्रो भवति नेति विचारः, तदर्थं च किमत्र देवताव्यापारः पानमुपलक्षणं? मुत यजमानव्यापारो दान?मिति तत्र पीतस्येति पानश्रवणात्तदेवोपलक्षणं मिश्रोद्देशेनापि दत्तः सोमोंऽशतः प्रत्येकमुभाभ्यां पीयते न पानेऽन्योन्यनिरपेक्षत्वात् द्वाभ्यामपि पीत इन्द्रपीत इति शक्यं वक्तु डित्थमातृवत् तस्मान्मन्त्रवदेव स्यादैन्द्राग्नादिषु भक्षणं स्यादेवं यदि पानं स्यात्तत्तु नास्तीति वक्ष्यते तेन देवताधिकरणन्यायेन पानाभात्पिबतिरत्र दानलक्षणार्थः, दानं च मिश्रविषयं नान्यतरेण व्यपदेष्टुं शक्यमिति चतुर्द्धाकरणवदैन्द्राग्नादिषु मन्त्राभावः ॥

मन्त्रविशेषणानामनेकच्छन्दस्के विनियोगाधिकरणम् । **सू० छन्दश्च देवतावत् ॥ १९ ॥**

तत्रैव मन्त्रेण गायत्रं छन्दस इति श्रूयते तत्र विचारः किं यत्र प्रदाने गायत्रमेव छन्दस्तत्र स्यादुत यत्र छन्दोऽन्तरमपीति पूर्ववत्केवलं छन्दोविषयत्वं मन्वानस्योत्तरं केवलगायत्रच्छन्दः प्रदानं न विद्यते सर्वत्र बहुमन्त्रसमवायेन छन्दोऽन्तराणामवश्यभावात् अतः सापेक्षत्वेऽप्यत्र नित्यसापेक्षत्वात्समासोपपत्तिः, न चात्र सापेक्षत्वमपि सर्वमन्त्राणामन्योन्यनिरपेक्षाणामेव कर्मसंबन्धात् अतः सत्यपि छन्दोऽन्तरे गायत्रच्छन्दसस्तदनपेक्षत्वात्सूत्रेऽधिकरणपूर्वपक्षवत्समासाविधानाच्चाछन्दस्कोऽपि भवति मन्त्रः ॥

एकादशाधिकरणोक्तस्य उपसंहाराधिकरणम् । **सू० सर्वेषां त्वैकमन्त्र्यमैतिशायनस्य भक्तिपानत्वात्सवनाधिकारो हि ॥ २० ॥**

स्थितादुत्तरं यदि तत्पुरुषोऽयं स्यात्स्यादनैन्द्रेष्वमन्त्रकं भक्षणं लक्षणादोषाच्चायं तत्पुरुषो मतः तत्पुरुषत्वे हि संबुध्यन्ते न सोमशब्देन ते” इति प्रत्यक्षविषयेण युष्मच्छब्देन च निर्द्दिष्टस्य हुतशिष्टस्य पात्रस्थस्य सोमस्य भक्षणार्थमुद्धृतस्यैन्द्रपीतशब्द इन्द्राय दत्तस्येत्येवं विशेषणं स्यात् न चासाविन्द्राय दत्तः पूर्वसङ्कल्पितो हि हुताहुतसमुदायस्तस्मै दत्तः तद-

वयवस्त्वयमुपचारादेवाभिधीयेत, न चासौ युक्तः, तस्माद्बहुव्रीहिः द्वन्द्वेन यस्मिन्सवने पीतः सोमस्तस्य सवनस्य सम्बन्धी यः सोमस्तस्य भक्षयामीति सर्वे च सोमा एवंविधसवनसम्बन्धिन इति सर्वेषां यथाम्नातमन्त्रकं भक्षणम् ॥

इति शास्त्रदीपिकायां तृतीयाध्यायस्य द्वितीयः पादः ॥ २ ॥

---

## अथ तृतीयेऽध्याये तृतीयः पाद आरभ्यते ॥

---

उच्चैस्त्वादीनां वेदधर्मताधिकरणम् ।

सू० श्रुतेर्जाताधिकारः स्यात् ॥ १ ॥

पूर्वयोः पादयोः श्रुतिलिङ्गविनियोगौ चिन्तितौ इदानीं वाक्यविनियोगश्चिन्त्यते "प्रजापतिरकामयत प्रजाः सृजेये"ति "स तपोऽतप्यत तस्मात्तेपानात्त्रयो देवा असृज्यन्ताग्निर्वायुरादित्यः ते तपोऽतप्यन्त तेभ्यस्तेपानेभ्यस्त्रयो वेदा असृज्यन्ताग्नेः ऋग्वेदो वायोर्यजुर्वेद आदित्यात्सामवेद "इत्युपक्रम्य श्रूयते ज्योतिष्टोमे तस्मादुच्चै "र्ऋचा क्रियते उपांशु यजुषा उच्चैः साम्ने"ति, तत्र संशयः किमुच्चैष्ट्वादय ऋगादिजातानां धर्माः मन्त्राणामित्यर्थः ऋचा मन्त्रेणोच्चैरिति, किं वा वेदधर्माः ऋग्वेदेनोच्चैरिति, उपक्रमे च वेदश्रवणादुपसंहारे च ऋगादिश्रवणात्संशयः वेद—शब्दो हि मन्त्रब्राह्मणसमुदायात्मनोऽवयविशेषस्य वक्ता नैकस्य मन्त्रवाक्यस्य ब्राह्मणस्य वा वाचकः प्रयोगाभावात् न ह्येकं द्वे त्रीणि वाक्यान्यधीत्य "वेदानधीत्य वेदौ वा वेदं वापि यथाक्रम"मित्येतच्छास्त्रार्थमनुष्ठितं मन्यन्ते तस्मात्समुदायो वेदः, न तु वेदयतीति व्युत्पत्त्या एकैकमेव वाक्यं वेद इति मूर्खप्रलपितमेतदनुसर्त्तव्यम् । ऋगादिशब्दास्तु मन्त्रवचनाः स्थापितास्तेनोपक्रमोसंहारयोर्विप्रतिपत्तेः एकवाक्यत्वाच्चोभयोरेकविषयत्वेऽवश्यंभाविनि किमुपसंहारस्थविध्युद्देशवशादुपक्रमस्थार्थवादगतो वेदशब्दो वे-

द्वेकदेशमन्त्रपरो भवतु किं वोपक्रमगतार्थवादवशादुपसंहारस्थमृगादिपद-मृगादिप्रायवेदपरं भवत्विति संशयः तत्र "गुणत्वादनुवादत्वार्थवादस्य लक्षणा । मुख्यस्यापि प्रधानत्वादप्राप्तविषयत्वतः ॥ विध्युद्देशोजघन्योऽपि स्वार्थहानिं न गच्छति । मुख्याऽपि दीक्षणीया हि लभते हि स्वधर्मताम्" ॥ जघन्यस्यापि सोमस्य प्रधानत्वात् स्वधर्मता । वक्ष्यते तद्वदत्रापि विध्युद्देशस्य सा भवेत् ॥ प्रधानत्वादप्राप्तविषयत्वाच्च विध्युद्देशे यथाश्रुतादन्यथात्वमप्रमाणकम्, अर्थवादस्तु प्रमाणान्तरप्राप्तार्थत्वात्तद्वशेन लक्षणयाऽपि नीयमानो न दुष्यतीति जाताधिकार उच्चैष्ट्वादय इति प्राप्ते ब्रूमः "लब्धात्मानः प्रधानस्य बलीयस्त्वं गुणाद्भवेत् । विध्युद्देशस्त्वलब्धात्मा लब्धात्मानं बाधते" ॥ "य इष्ट्वा पशुना सोमेन यजेते"ति वचनात्तु सोमस्यापि कालेन लब्धात्मा युक्तं यद्दीक्षणीया कालं बाधते, विध्युद्देशस्त्विह मन्त्रविषयत्वेनालब्धात्मा कथमिवार्थवादं बाधते, तथा हि वेद-शब्दः प्रक्रमगतोसंजातप्रतिपक्षत्वाद्यथाश्रुतार्थपर एव तावदवधार्यते तस्मिंश्चावधारिते सत्युपसंहारगतमृगादिपदमुपसंजातप्रतिपक्षविज्ञानत्वाद्यथाश्रुतार्थं सत्तदेकवाक्यतामप्रतिपद्यमानं तदनुगुणवेदपरतयैवात्मानं लभते नान्यथा येन बाधकं स्यात्, उपक्रम एव वेदानां किंचिद्विधास्यत इत्यवगतं किंतु तद्विधेयमित्येतावदनवगतमपेक्षितं च अतो विध्युद्देशगतोऽपि ऋगादिशब्दोऽवगतविषयत्वादनुवाद इति लक्षणां सहते, तस्माद्वेदधर्माः, ऋग्वेदेन यत्क्रियते विधीयते तदुच्चैरिति तदिहोपक्रमोपसंहारैकवाक्यतया वेदधर्मत्वमवधारितमिति वाक्यविनियोगः, एकदेशिनां त्वेकैकमेववाक्यं वेदशब्दवाच्यमित्यभ्युपगमादुपसंहारवशेन मन्त्रवाक्यपरोऽपि वेद-शब्दो व्याख्यायमानः श्रुत्यर्थात् न च्यवत इति सिद्धान्तो दुर्लभः स्यात् । अत्र यदुच्यते विधेयतया न विधायकवद्वेदकत्वमिति तदयुक्तं, यद्यपि हि विनियोगाऽपेक्षं मन्त्रवाक्यं न विधायकवदनपेक्षं वेदकं तथाऽपि तावद्वेदयति तावच्च वेदशब्दप्रवृत्तौ निमित्तम् इत्यविशेषः, यथा शुक्लमानयेति यत्स्वभावशुक्लमुदकं यच्च पाकापेक्षं पार्थिवं तत्रोभयत्राप्यविशेषेण शुक्लशब्दः प्रवर्तते तथा वेद-शब्दोऽपि न हि विधिवाक्यमपि निरपेक्षं वेदयति पदार्थव्युत्पत्तिन्या.

यविचारादिसापेक्षत्वात्, तस्मात्साधारणो वेदशब्दः कांस्यभोजिवदुपसंहारवशान्मन्त्रपरः स्यादित्यधिकरणविरोधः स्यादित्यास्तां तावत् ॥

आधाने गानस्योपांशुताऽधिकरणम् ।

सू० गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः ॥ २ ॥

याजुर्वेदिकमाधानं, तस्य सामवेदे वारवन्तीयं गायन्तीत्यङ्गविधिः तत्र वारवन्तीयस्य किं सामवेदिकः स्वरः? उत याजुर्वेदिक? इति संदेहे प्रधानविधिनिबन्धनस्य स्वरस्य प्रधानैकवाक्यताऽपेक्षित्वेन विलम्बितत्वात्स्ववेदनिबन्धन एव स्वरोऽनपेक्षतया शीघ्रं प्रतीयमानो युक्त इति प्राप्ते-प्रधानधर्मत्वादुपांशुत्वमेव बलीयः साङ्गं ह्याधानं विधिना विधीयते अतस्तादृशस्यैव याजुर्वैदिकत्वाद् उपांशुत्वंधर्मः, न चाङ्गेष्वक्रियमाणं तत्साङ्गस्य कृतं भवति तेनाङ्गस्योऽप्यसौ प्रधानार्थो धर्म इति विलम्बितप्रतीतिरपि बलीयान्, इतरथा प्रधानस्यैव वैगुण्यापत्तेः अतोऽङ्गधर्ममुच्चैष्ट्वं बाधित्वा प्रधानधर्म उपांशुत्वं स्यादिति सिद्ध्यति एवं त्व"ङ्गगुणविरोधे च तादर्थ्या"दित्यनेन गतप्रायं स्यात् न चोदाहरणमपि युक्तं वारवन्तीयं गायतीत्यस्याङ्गविधेरपि याजुर्वैदिकत्वादित्यन्यथा व्याख्यातं यस्य मन्त्रस्य वेदान्तरे समाम्नातमुत्पत्तिः वेदान्तरे च विनियोगविधिस्तस्य किमुत्पत्तिवेदनिबन्धनः स्वरो? ऽथवा विनियोगवेदनिबन्धन? इति संशयः तत्र 'उत्पत्तेः पूर्वभावित्वात्तन्निबन्धन एव हि। स्वरः प्रथमभावित्वाद्युक्तो नान्यो विलम्बितः" नैतदेवं "न खल्वाम्नानमात्रेण मन्त्रस्य स्यात्प्रयोज्यता। तेन क्रियत इत्येवमतो वक्तुं न शक्यते। तेन तु क्रियते मन्त्रो यत्र वेदे विधीयते। विध्यायत्तं ह्यनुष्ठानं तत्र चापेक्षितः स्वरः" प्रयोज्यतयाऽवधारितस्य मन्त्रस्य स्वरापेक्षा भवति न स्वरूपावगतिमात्रेण, तस्माद्वारवन्तीत्यादेः सामवेदेनाक्रियमाणत्वादनपेक्षितत्वाच्च न तन्निबन्धनमुच्चैष्ट्वं, यजुर्वेदेन तु क्रियमाणत्वात्स्वरापेक्षणाच्च तदीयमुपांशुत्वमेव स्यात् ॥

ज्योतिष्टोमस्य याजुर्वैदिकताधिकरणम् ।

सू० भूयस्त्वेनोभयश्रुति ॥ ३ ॥

यजुर्वेदे सामवेदे च ज्योतिष्टोमः समाम्नातः तस्य कतरः स्वरः स्या? दिति विचारः? यत्र विधीयते तदीय एव स्वरो न यत्र गुणार्थं श्रवणम् अतः क्वास्य विधिरिति अनियमे प्राप्ते ब्रूमः यजुर्वेदे द्रव्यदेवतमस्य श्रूयते तेन च व्यवच्छिन्नं कर्मस्वरूपं गम्यमानं सुखेन विधीयते, वेदान्तरे तु नामयुक्तं क्रियामात्रं श्रूयत इति न विध्यवगतिः समाप्यते, अतो ये यजुर्वेदेनासौ क्रियत इत्युपांशुधर्मता ।

प्रकरणस्य विनियोजकताधिकरणम् ।

सू० असंयुक्तं प्रकरणादितिकर्तव्यतार्थित्वात् ॥ ४ ॥

श्रुतिलिङ्गवाक्यैरुक्तो विनियोगः अधुनाऽधिकरणत्रयेण प्रकरणस्थानसमाख्याभिर्विनियोगोऽभिधीयते दर्शपूर्णमासयोः श्रूयते "समिधो यजन्ति" तनूनपातं यजतीत्यादि तद्दर्शपौर्णमासाङ्गं न वेति संशयः यदि प्रकरणं नाम प्रमाणं भवेत्ततोऽङ्गम् इतरथा नाङ्गमिति तच्च प्रकरणगता ज्ञानसंशयविपर्ययाणामन्यतमेन पूर्वः पक्षः यावदन्यत्र कथ्यते तावदज्ञानं भवति सदपि वाऽवसराभावान्नोक्तं स्यादिति संशयः अथवा नेत्रावरश्रवणसामर्थ्यानुसरणपदान्तरसमभिव्याहारात्मकेभ्यः श्रुतिलिङ्गवाक्येभ्योऽन्यः शब्दप्रमाणप्रकारोऽस्ति, तस्माच्च प्रकरणं प्रमाणमिति विपर्ययः, तथा हि स्वर्गकामस्य दर्शपौर्णमासौ कर्तव्याविति निरपेक्षं समाप्तं वाक्यं तथा समिधो यजतीत्याद्यपि । नन्विदं फलाभावात्साकाङ्क्षं, सत्यं, साकाङ्क्षं सा त्वाकाङ्क्षाप्तः स्वर्गः स्यादिति वा फलमात्रे योनिर्देशादिति वा दर्शपौर्णमासफलानुषङ्गेण वा निवर्तते न क्रत्वङ्गत्वं क्रतोरनाकाङ्क्षत्वादिति प्राप्ते ब्रूमः क्रतोरप्यस्ति कथमतीतिकर्तव्यताकाङ्क्षा तथा प्रयाजादेः प्रयोजनाकाङ्क्षेत्युभयोः साकाङ्क्षयोः सन्निहितयोरप्रत्यक्षमप्येकवाक्यत्वं फलान्तरकल्पनाल्लघीयः, तथोभयोर्निराकाङ्क्षत्वं फलान्तरकल्पने त्वितिकर्तव्यताकाङ्क्षा क्रतोरनिवृत्तैव स्यात् अस्ति चासावाकाङ्क्षा यदि यागं कुर्यादिति वाक्यार्थः स्यात् यागक्रियाया निर्ज्ञातप्रकारत्वात्त्स्याचिराकाङ्क्षत्वं यागेन स्वर्गं कुर्यादिति तु वाक्यार्थः, तत्र न ज्ञायते केन प्रकारेण यागेन स्वर्गः कर्तव्यः

इति, तेनास्ति प्रकाराकाङ्क्षा, ननु यागानुष्ठानमेकप्रकारः अनुष्ठितोत्पत्तो फलं साधयति किमत्र न ज्ञायते? यदि मतं न यागः फलं साधयत्यननुग्रही सर्वसाधनानामनुग्रहापेक्षादर्शनात् चक्षुरादीनामालोकानुग्रहवदतः किमस्यानुग्राहकमित्यपेक्षायां प्रयाजविधिरिति तदयुक्तम् अननुगृहीतस्यापि केवलस्य कर्मणः संयोगविभागारम्भकत्वदर्शनात् कश्चायमनुग्रहो नाम? सामर्थ्योद्बोध इति चेत् कोऽयमुद्बोधो नाम? कार्यारम्भाभिमुख्यम् इति चेत्, नैवं समर्थमेव कर्म प्रागनुष्ठानादलब्धात्मकत्वात्कार्यारम्भानभिमुखम्, अनुष्ठानात्तु लब्धात्मकत्वाद्भवत्येव कार्याभिमुखमिति कोऽत्रान्यापेक्षा सहायापेक्षणमनुग्रहापेक्षणमिति चेत्र असहायेनापि कर्मणा संयोगविभागोत्पत्तिदर्शनात् अपि चाग्नेयादीनि परस्परं सहायीभवन्तु किमन्यदपेक्षन्ते तस्माद्दुर्लक्ष्यमेतत्केयमितिकर्तव्यताकाङ्क्षा नामे? ति तदभिधीयते प्रकाराकाङ्क्षेयम् इति—शब्दः प्रकारवचनः कर्तव्यताप्रकारः क्रियाप्रकार इति यावत्, सामान्यस्य भेदको विशेषः विशेषः प्रकार इति तद्विदः किं पुनरिह सामान्यात्मनाऽवगतं विशेषरूपमपेक्षते क्रियाभावनेति यावत् यागेन स्वर्गं कुर्यादित्यस्यायमर्थः, यथा व्यापृते यागात्स्वर्गो भवति तथा यागं प्रति व्याप्रियेतेति तत्र न ज्ञायते कोऽसौ व्यापारविशेषो येन यागात्स्वर्गो भवतीति सेयं जिज्ञासेतिकर्तव्यताऽऽकाङ्क्षेत्युच्यते। ननु यागानुष्ठानमेवासौ व्यापारः किमत्र न ज्ञायते। यथाक्रियानुष्ठानमेव संयोगविभागसंपादनं, तत्र न हि मृत्पिण्डसंपादनमेव घटसंपादनम् अतो नायमेकान्ततो यत्स्वरूपसंपादनमेव कार्यसंपादनमिति। नन्वत्र यागानुष्ठानमेव शब्देनोच्यते मैवं न ह्येवं शब्दोऽस्तियागानुष्ठानमेव व्यापार इति। ननु यजेतेति यागविषयैव कृतिः शब्देनोच्यते, किमिदं विषयत्वं? साध्यत्वमिति चेत् न स्वर्गो ह्यत्र साध्यतया संबध्यते न यागः। न ह्येवं संभवति स्वर्गं कुर्याद्यागमिति। अथ यागविषयया कृत्या स्वर्गं कुर्यादिति, स्यादेवं यदि कृत्या कुर्यादिति प्रत्ययेन कृतिद्वयमुपात्तं स्यात् कुर्यादित्येतावत्प्रत्ययार्थः कृत्या साधयेदिति तु कृत्यन्तरारोपेण व्याख्यातॄणामर्थकथनमात्रं, कुर्यादित्यस्मिंश्च स्वर्गस्य साध्यत्वाच्च यागस्य साध्यत्वम्। अथ विशेषणस्य विषयत्वं सत्यं विशेषण-

मेव यागः, केन तु संबन्धेनेति निरूपयामः, न तावन्नीलोत्पलादिवत्ताद्रू-
प्येण, यागभावनयोर्भेदादतः कारकत्वेन सोमादिवद् यागस्य क्रियाविशेष-
णत्वं, तत्र च साध्यत्वाभावात्साधने नैव संबन्धः तेन यागकरणिका स्वर्ग-
कृतिरेव शब्दार्थः, न तु यागानुष्ठानम् । एवं च नाम्ना सामानाधिकरण्यं
संभवति नान्यथा अतः किंरूपेयं कृतिरित्यस्त्यपेक्षा तत्र तदाकाङ्क्षानुष-
क्तो समिधो यजतीति वचनादेवं ज्ञायते अयमसौ व्यापारो येन यागात्स्व-
र्गोभवतीति, संभवति च समिदादिक्रियाणां यागविषयत्वमदृष्टद्वारम् ।
अवघातादीनां तु दृष्टद्वारम् । अननुष्ठितश्च यागोऽसत्त्वाच्च फलं साध-
यितुं क्षम इत्यर्थाद्यागानुष्ठानं गम्यते न शब्दात्, तेनायं वाक्यार्थः यागेन
फलं कुर्यात् कथं केन प्रकारेण यागात्स्वर्गोभवतीति तत्राह समिधो-
यजति व्रीहीनवहन्तीत्यादि तदयमर्थो भवति समिदादिक्रियाणां यागवि-
षयत्वमदृष्टद्वारमवघातादिभिश्च द्रव्यदेवतासंस्कारद्वारं द्रव्यदेवतेन च
स्वरूपसंपादनेन यागे व्याप्रियेत एवंभूतोऽसौ व्यापारः येन यागात् स्वर्गो-
भवतीति यागः फलारम्भाभिमुखो भवति कार्यारम्भाभिमुख्य करणमेवोप-
कार इति समिदादेः क्रतूपकारः फलम् । नन्वेवं समिदादिभिरदृष्टं कुर्यादि-
त्यत्रापि क्रियाविशेषापरिज्ञानादाकाङ्क्षा स्यात्, कस्य वै तदनिष्टम् अत एवा-
वान्तरप्रकरणमिष्यते । नन्वेवं सौमिकधर्मातिदेशः स्यात् भवन्मते वा पितृ-
यज्ञस्य साधिकारस्य किमिति सौमिकधर्मातिदेशो न भवति, वाचनिक-
कालबाधप्रसङ्ग इति चेत् इहापि समानम् । अपि च सत्यप्याकाङ्क्षा वाच-
निकेन ध्रौवाज्यादिद्रव्येण तत्संस्कारैर्मान्त्रवर्णिक्या च देवतया वेदिबर्हिरा-
ग्नीध्रादिभिस्तत्संस्कारैऽश्चाङ्गप्रधानसाधारणै"रभिक्रामं जुहोति" "समा-
नत्र होतव्या" इत्यादिभिश्च वाचनिकैरङ्गैर्निर्वर्तेत इति न सौमिकधर्माति-
देशाद्याशङ्कनीयं सर्वं ह्यग्न्यन्वाधानादयः सन्निपातिनोऽङ्गप्रधानसाधारणाः
तेनोपांशुयाजवत्प्रयाजादयोऽपि क्लृप्तविधानाः, न च क्लृप्तविधानेष्वतिदे-
शोऽस्ति सन्निपात्युपकारकसामग्री च क्लृप्तविधानतेत्यष्टमे वक्ष्यते, अत
एव हि पितृयज्ञस्यापूर्वत्वम् अन्यथा साधिकारत्वाद्दुर्वारः सोमधर्माति-
देशः स्यात् तस्मादस्तीति कर्तव्यताकाङ्क्षा तदनुवृत्तिश्च प्रकरणम् अतः

प्रधानवाक्यस्य प्रकाराकाङ्क्षितावशात्फलाकाङ्क्षं प्रयाजादि तदङ्गत्वं प्रपद्यते ।

क्रमस्य विनियोजकत्वाधिकरणम् ।

सू० क्रमश्च देशसामान्यात् ॥ ५ ॥

दर्शपूर्णमासयोरुपांशुयाजक्रमे दब्धिर्नामासीति मन्त्रः पठ्यते स किमुपांशुयाजाङ्गं न वेति संशयः श्रुतिवाक्ययोरुभयोरभावाल्लिङ्गप्रकरणयोश्चाग्नेयादिष्वविशेषादुपांशुयाजस्य विशेषाभावात्क्रमस्य चाप्रमाणत्वादनङ्गमिति प्राप्ते उच्यते क्रमादुपांशुयाजस्येति उच्यते स्थानसामान्यात् कर्मणां मन्त्राणां च क्रमेण समाम्नातानां यस्य कर्मणः क्रमे यो मन्त्रः समाम्नातस्तस्मिन्नवगते स्थानसामान्यात्तत्कर्मोपतिष्ठते कर्मोपलब्धावपि मन्त्रः तयोरेवं समानस्थानाम्नानं तन्नूनं सम्बन्धार्थमित्येवाकाङ्क्षा परिकल्प्यते नैकवाक्यता परिकल्प्यते एवं काम्येष्टीनां याज्यानुवाक्यानां च क्रम इति देशसामान्यमुच्यते, स च द्विविधः पाठसादेश्यमनुष्ठानसादेश्यं च पाठसादेश्यमपि द्वेधा यथासंख्याम्नानं सन्निध्याम्नानं च यथासंख्यस्य दर्शितमुदाहरणं, सन्निधिसमाम्नानस्यापि सान्नाय्यापात्रशुन्धनक्रमाच्छुन्धध्वमिति मन्त्रस्य तदङ्गत्वम्, अनुष्ठानसादेश्यात्पशुधर्माणामग्नीषोमीयाङ्गत्वं वक्ष्यते ।

समाख्याया विनियोजकत्वाधिकरणम् ।

सू० आख्या चैवं तदर्थत्वात् ॥ ६ ॥

दर्शपूर्णमासादिष्वाध्वर्यवहौत्रौद्गात्रादिसमाख्याताः पदार्थाः किमध्वर्य्वादिभिरेव कर्तव्या उतानियमेनेति श्रुत्यादिभिर्नियमाभावात् समाख्यायाश्च पदार्थमात्रनिष्ठत्वेनाविधायकत्वेऽप्रमाणत्वादनियम इति प्राप्ते उच्यते अनादिस्तावदपौरुषेयी समाख्या तेनाध्वर्य्वादिशब्दाः पदार्थानां वाचका इति तावत्प्रमाणं, संबन्धनिमित्ता च समाख्या नासति संबन्धेऽवकल्पत इति अस्ति नूनं कर्तॄणां पदार्थानां च कश्चित्संबन्ध इति निश्चिते कर्तॄणां कार्यापेक्षत्वात्पदार्थानां च कर्त्रपेक्षत्वात्समाख्यया च मिथः पर्युपस्थापितानां योग्यतया क्रियाकर्तृसम्बन्धमेव प्रयोगविधिर्विधत्त इति सिद्धः समाख्यायानियमः

श्रुत्यादीनां पूर्वपूर्व-बलीयस्त्वाधिकरणम्। सू० श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्॥ ७॥

इदानीं श्रुत्यादीनामेकविषयसमवायेन विरोधे सति बलाबलं विचार्यते, प्रथमं तावच्छ्रुतिलिङ्गयोश्चिन्त्यते, एवं श्रूयते "ऐन्द्र्या गार्हपत्यमुपतिष्ठत" इति तत्र संशयः किमिन्द्रस्यैवोपस्थानं कर्तव्यमुतेन्द्रस्य वा गार्हपत्यस्य वा? अथवा समुच्चयः? अथवा गार्हपत्यस्यैव? यदि लिङ्गं बलीयस्तेन इन्द्रोपस्थानम्। अथ तुल्यत्वं ततो विकल्पः। अथ तुल्यबलत्वेऽप्यविरोधः, ततः समुच्चयः। श्रुतिबलीयस्त्वे तु गार्हपत्यस्यैवेति यः शब्दस्य श्रवणादेव विनियोगः प्रतीयते स श्रौत इत्युच्यते श्रवणं श्रुतिः गार्हपत्यमिति च ब्राह्मणगतद्वितीयान्तशब्दश्रवणादेव गार्हपत्यस्य प्रधान्यमुपस्थानं प्रति गम्यते, ऐन्द्र्याश्च तृतीयान्तायाः करणत्वमिति श्रौतोऽयं विनियोगः, मन्त्रगतात्तु इन्द्रपदादिन्द्रस्वरूपमात्रं श्रुत्याऽवगम्यते न तु मन्त्रं प्रतीन्द्रस्य प्राधान्यं, मन्त्रस्य वा करणत्वं केनचिच्छब्देनोच्यते, किं तु मन्त्रस्येन्द्राभिधानसामर्थ्यमालोच्य नूनमनेन मन्त्रेणेन्द्र उपस्थेय इति श्रुतिः कल्प्यत इति लैङ्गिकोऽयं विनियोगः। गृह्णीम एतदिन्द्रार्थत्वं लिङ्गादिति न तु गार्हपत्यार्थत्वं मन्त्रस्य श्रौतं कथं शेषशेषित्वमात्रं हि श्रुत्येन्द्र्यागार्हपत्ययोः उक्तमत्रान्योन्यविषयमस्त्वेकवाक्यतः गार्हपत्यमिति हि शेषितामात्रम् अनिर्द्धारितशेषविशेषं श्रुत्योक्तम् ऐन्द्रीविषयं तदिति वाक्यादवगन्तव्यं तथैन्द्र्येत्यनवगतशेषिविशेषं शेषत्वं श्रुतं वाक्याद्गार्हपत्यविषयं भवति। यत्तु श्रुत्युपात्तं सामान्यरूपं न तल्लिङ्गेन विरुध्यते, संभवति हि गार्हपत्यस्य कांचिदाग्नेयीं प्रति प्राधान्यम् ऐन्द्र्याश्चेन्द्रं प्रति शेषत्वम्। अन्योन्यान्वयस्तु वाक्यावगतोलिङ्गेन विरुध्यते तेन लिङ्गवाक्ययोरेव विरोधो न श्रुतिलिङ्गयोः। अत्राभिधीयते "सत्यं वाक्यविरोधोऽस्ति श्रुतिश्चापि विरुध्यते। सहिते हि विरुध्येते न तु लिङ्गेन केवले॥ यथैव श्रुतिमात्रमविरुद्धम् एवं वाक्यमपि शुचिमवादृत्यालोच्यमानमविरुद्धमेव, यदि हि गार्हपत्यशब्द इन्द्रं लक्षयेत् द्वितीया वा सप्तम्यर्थे ततो लिङ्गाविरोधेन गार्ह-

पत्यपदमैन्द्र्योपतिष्ठत इति एतेनैकवाक्यतां गच्छति । यस्तु द्वितीयान्तगार्हपत्यशब्दश्रवणादेवार्थः प्रतीयते गार्हपत्यप्राधान्यं स लिङ्गेन विरुध्यते अतो न केवलं वाक्यं न केवला श्रुतिर्लिङ्गेन विरुध्यते वाक्यसहिता तु श्रुतिर्विरुध्यते कथं पुनरेवमुभयविरोधः सन्नयं श्रुतिविरोध एव व्यवह्रियते? न वाक्यविरोधः श्रुतेः प्राधान्यात् विनियोगो हि प्रमेयः स च साध्यसाधनरूपः—

श्रुत्यैवोक्तः, वाक्यं तु प्रतियोगिविशेषसमर्पणेन श्रुतिमनुगृह्णद्गुणभूतं, प्रधानेन च विरोधो लक्ष्यते न गुणेन, अयं चापरो विशेषो येन श्रुतेरेवात्र लिङ्गेन विरोधो न वाक्यस्य, यस्य हि लिङ्गे बलीयसि बाधस्तल्लिङ्गेन विरुध्यते न चात्र लिङ्गे बलीयसि वाक्यं शक्यते बाधितुं, तद्बाधे हि पृथग्भूते गार्हपत्यैन्द्रीपदे न कञ्चिदर्थं प्रतिपादयतः पदमात्रस्याप्रामाण्यात् तत्र श्रुतेरप्यत्यन्तबाधो वाक्यस्य च, यत्र तु पृथग्भूतस्याप्यर्थप्रतिपादकत्वं न विहन्यते यथा स्योनादिषु तत्रैव वाक्यबाधो नैवंजातीयकेषु, ततश्चासंभवति वाक्यस्य बाधे श्रुतिरेव बाध्येतेति श्रुतिलिङ्गयोरेवैष विरोध इति युक्तो विचारः किं बलीय इति, तदर्थं च किं श्रुतिवल्लिङ्गाद्यपि स्वतः-प्रमाणं? मुत श्रुतिकल्पनेने? ति तत्र स्वतःप्रमाणत्वं लिङ्गादेः श्रुतिवन्मतम् । सामर्थ्यालोचनादेव तादर्थ्यं हि प्रतीयते ॥ १ ॥ गार्हपत्यार्थता श्रुत्येत्युभयोस्तुल्यकाला[1]लता । तत्र द्वयोरुपस्थानं विकल्पेन भविष्यति ॥ २ ॥ समुच्चयेन वा मन्त्रः प्रयुज्येत द्वयोरपि । प्रतिप्रधानमावृत्तिर्गुणानां न विरुध्यते ॥ ३ ॥ यद्यपि स्याद्बलीयस्त्वं श्रुतेर्लिङ्गात्तथापि तु । अविरोधादबाधः स्यात् संभवी हि समुच्चयः ॥ ४ ॥ यद्वा सामर्थ्यरूपत्वाल्लिङ्गं स्यात्प्रबलं श्रुतेः । वस्तुशक्त्यनुसारी हि सर्वः शब्दः प्रवर्त्तते ॥ ५ ॥ अत्राभिधीयते, सत्यं यद्यत्यन्तमशक्यता । गार्हपत्ये तु सामर्थ्यं गौणं मन्त्रस्य विद्यते ॥ १ ॥ गुणाद्वाऽप्यभिधानं स्यादित्यत्रैतद्धि साधितम् । तत्र तावद्बलीयस्त्वं लिङ्गस्य न च तुल्यता ॥ २ ॥ विनियोगः श्रुतेः पश्चाल्लिङ्गस्यारादसौ स्थितः । यावदेव हि मन्त्रार्थोमन्त्रेण प्रतिपाद्यते ॥ ३ ॥ तावदेव श्रुतिर्मन्त्रं गार्हपत्यार्थतां

१ तुल्यकल्पनेति पा० ।

नयेत् । मन्त्रार्थं मन्त्रतो बुद्ध्वा पश्चाच्छाब्दं निरूप्य च ॥ ४ ॥ मन्त्राकाङ्क्षावशेनेन्द्रशेषत्वे श्रुतिकल्पना । श्रुत्या प्रत्यक्षया पूर्वं गार्हपत्याङ्गतां गते ॥ ५ ॥ निराकाङ्क्षीकृते मन्त्रे निर्मूला श्रुतिकल्पना । तेन शीघ्रप्रवर्तिन्या श्रुत्या लिङ्गस्य बाधनम् ॥ ६ ॥ प्रत्यक्षे चानुमाने च यथा लोके बलाबलम् । शीघ्रमन्थरवृत्तित्वात्तथेह श्रुतिलिङ्गयोः ॥ ७ ॥ अविरोधादबाधो यो वर्णितः स न युज्यते । लिङ्गस्य हि प्रमाणत्वं मन्त्राकाङ्क्षानिबन्धम् ॥ ८ ॥ तां च श्रुतिर्निकृन्तन्ती नाविरोधेन गच्छति । विरोधे च श्रुतिर्लिङ्गं बलीयस्त्वेन बाधते ॥ ९ ॥ "लिङ्गवाक्यविरोधे स्योनं ते सदनं कृणोमि घृतस्य धारया सुषेवं कल्पयामि तस्मिन्सीदामृते प्रतितिष्ठ व्रीहीणां मेधसूमनस्यमान" इति, तत्र संशयः किं सकलोऽयं सदनकरणे पुरोडाशप्रतिष्ठापने च विकल्पेन समुच्चयेन वा प्रयोक्तव्य? उत सकलो? वा विभज्य वा? अथवा विभज्यैव स्योनादिः कल्पयाम्यन्तः सदनकरणे? तस्मिन् सीदेति प्रतिष्ठापने? इति तत्र यदि वाक्यं बलीयस्ततः सकलमेवोभयत्र, तुल्यबलत्वे सकलं वा विभज्य वा, लिङ्गबलीयस्त्वे तु विभज्यैवेति तत्र, "यावन्ति हि प्रयुज्यन्ते पदानि सति संभवे । तेषां स्यादेकवाक्यत्वं वाक्यभेदो न युज्यते ॥ १ ॥ तस्मिन्सीदेति पूर्वोक्तसापेक्षत्वाच्च गम्यते । वाक्यैकत्वमतः सर्वमुभयत्र प्रयुज्यते ॥ २ ॥ यद्वा तुल्यबलत्वं स्यादुभयोर्लिङ्गवाक्ययोः । श्रुत्या प्रत्यक्षया लिङ्गं कल्प्यश्रुतिनिराकृतम् ॥ ३ ॥ कल्प्यश्रुतित्वमिह तु समानमुभयोरपि । तेन तुल्यबलत्वं स्यादिति प्राप्तेऽभिधीयते ॥ ४ ॥ सत्यं कल्प्या श्रुतिः किं तु लिङ्गाद्द्राय कल्प्यते । वाक्येन प्रथमं लिङ्गं कल्पयित्वा ततः श्रुतिः ॥ ५ ॥ कल्पनीयेत्यतो वाक्याच्छ्रुत्यर्थो विप्रकृष्यते । संनिकृष्टस्तु लिङ्गस्य तेनैतत्प्रबलं ततः ॥ ६ ॥ स्योनं ते सदनं कृणोमीत्यस्य हि सदनकरणसामर्थ्यमनन्यापेक्षं स्वरूपत एव प्रत्यक्षमवगम्यते, ततश्च तत्र श्रुतिमनुमाय शीघ्रं विनियुज्यते, पुरोडाशप्रतिष्ठापने त्वस्य न स्वरूपतः सामर्थ्यं गम्यते, तस्मिन् सीदेत्यनेन प्रतिष्ठापनमुच्यते तदेकवाक्यताऽपेक्षया पूर्वार्थस्यापि स्वार्थविशिष्टपुरोडाशप्रतिष्ठापनसामर्थ्यं लाक्षणिकं कल्पयित्वा ततः श्रुतिकल्पनमिति विप्रकर्षात्र तत्र विनियुज्यते एवं तस्मिन्सीदेत्यस्यापि स्वार्थसामर्थ्यं क्लृप्तं-

मिति तत्रैव विनियोगो न सदनकर्मो कल्प्यसामर्थ्यत्वात् एवमर्थभेदेन नानावाक्यत्वोपगमाच्चैकवाक्यतासम्भवः, तस्माद्विभज्य विनियोगः वाक्यप्रकरणयोर्विरोधे चिन्तिते दर्शपौर्णमासयोः सूक्तवाकनिगदः तत्राग्नीषोमाविदं हविरजुषेतामवीवृधेतां महोज्यायोऽक्रातामिन्द्राग्नी इदं हविरजुषेतामवीवृधेतां महोज्यायोऽक्रातामित्यादि श्रुतं तत्राग्नीषोमादिदेवतापदं लिङ्गात्पर्वद्वयेऽपि निष्कृष्य प्रयोक्तव्यमिति स्थितं तदेकवाक्यभूतानीदं हविरजुषेतामित्यादीनि यानि तानि ततोविच्छिद्यान्यत्रापि किं प्रकरणाविशेषात्प्रयुज्येरन्? उत देवतापदैनैकवाक्यतया तद्वदेव व्यस्थितानी? ति। नन्वारादुपकारकाणामेव प्रकरणं विनियोजकं न सन्निपातिनाम् "असंयुक्तं प्रकरणा"दित्युक्तं सन्निपातिनश्च सर्वे श्रुत्यादीनामन्यतमेन संयुक्ता भवन्ति, सन्निपाती च सूक्तवाकः श्रुत्या प्रहरणसाधनत्वाल्लिङ्गेन च देवतास्मरणार्थत्वात् तदन्तर्गताश्चेदं हविरजुषेतामित्यादयः संयुक्तत्वात् न प्रकरणं तेषां विनियोजकं, सम्भवति च विनियोजकत्वे विरोधो नास्ति, तस्मात्वात्र वाक्यप्रकरणयोर्विरोध इत्यनुदाहरणत्वं, स्यादेतदेवं यदि सन्निपातिनां प्रकरणं न विनियोजकं स्यात् न तु तथा अवघातादीनामपि प्रकरणादेव क्रतुभावनेतिकर्तव्यताभूतानां क्रत्वर्थत्वम्। असंयुक्तमिति तु न प्रकरणग्राह्यस्य विशेषणं किं तु पूर्वपक्षवादी श्रुत्यादीनामेव विनियोजकत्वं तदसंयुक्तस्य नास्ति विनियोग इति मन्यते तं प्रत्युच्यते श्रुत्यद्यसंयुक्तमपि प्रकरणेन विनियुज्यत इति। यद्वा प्रकरणाविरोध्यर्थासंयोगाभिप्रायमसंयुक्तग्रहणं तदप्येतदधिकरणसिद्धबलाबलाङ्गीकारेणोक्तम्, अतो युक्तमुदाहरणम्। ये त्वारादुपकारकेष्वेव प्रकरणस्य व्यापारः सन्निपातिनां तु ग्राहकग्रहणाख्येन प्रमाणेन तार्तीयश्रुत्याद्यतिरिक्तेनापूर्वार्थत्वं, द्वारैदमर्थ्यं तु श्रुत्यादिभिरेपादानिकं क्रत्वर्थत्वं, प्रकरणस्य तु न कश्चिद् व्यापार इति मन्यन्ते तेषामेवायं सूक्तवाकपदानां श्रुत्या प्रहरणविनियुक्तानां प्रकरणाविषयत्वाच्चेदं वाक्यप्रकरणविरोधोदाहरणं युक्तमित्युपालम्भोनास्माकं, तत्र द्वयोरपि वाक्यप्रकरणयोः प्रमाणत्वात् श्रुतिकल्पनाधीनत्वसाम्यादन्यस्य च विप्रकर्षकारणस्याद्याप्यकथितत्वात्तुल्यबलत

मन्यन्ते । यद्वा प्रधानाकाङ्क्षा प्रकरणं, प्रधानार्थं च सर्वमिति तन्निबन्धन एव विनियोगो बलीयानिति प्राप्तेऽभिधीयते "येनैकवाक्यता तत्र सामर्थ्यं गम्यते मनाक् । सामर्थ्याच्च श्रुतिः श्रुत्या विनियोगोऽपरत्र तु ॥ पूर्वयोरेक-वाक्यत्वं कल्प्यं स्यात्प्रक्रियावशात् । ततो लिङ्गं श्रुतिः पश्चाद्विनियोगस्ततः परः ॥ अग्नीषोमाविदं हविरजुषेतामित्यग्नीषोमपदस्येदं हविरित्यादेश्चैक-वाक्यत्वं क्लृप्तम् एकवाक्यतयाऽग्नीषोमप्रकाशनसामर्थ्यमिदं हविरित्यादेः शीघ्रं कल्प्यते,ततश्च श्रुतिस्तया विनियोग इति सन्निकर्षः,इन्द्राग्नीपदेन त्वन-न्यस्येदं हविरित्यादेरेकवाक्यत्वं न प्रत्यक्षतोऽवगम्यते, किन्तु प्रकरणात्त-द्दर्शपूर्णमासाख्यामिदं हविरित्यादेरेकवाक्यता कल्प्यते अनेन दर्शपूर्ण-मासयोरुपकुर्यादिति, ततः कोऽस्योपकार? इति तदीयदेवतापदैकवाक्यतया तत्प्रकाशनसामर्थ्यं चिरेण कल्पयित्वा ततः श्रुतिकल्पनेन विनियोग इति विप्रकर्षाद्दुर्बलं वाक्यात्प्रकरणम् । अथ स्थानप्रकरणयोर्विरोधे चिन्त्यते राज-सूये बहवः पश्विष्टिसोमयागाः सर्वे फलवन्तः समप्रधानास्तत्राभिषेचनीयो-नाम सोमयागस्तत्सन्निधौ विदेवनादयः समाम्नातास्ते किं सर्वे राजसूयाङ्ग-मुताभिषेचनीयस्यैवे ? ति यदि सन्निधिर्बलवानभिषेचनीयाङ्गम् । अथप्रकरणं ततोराजसूयस्यैवेति, तत्र सन्निधिविशेषादभिषेचनीयाङ्गत्वे प्राप्ते उच्यते प्रक-रणाविशेषात्सर्वार्थता, नन्वभिषेचनीयस्यापि फलवत्त्वादस्त्येव प्रकरणं यद्य-प्यस्ति तथाऽप्यन्येषामप्यस्तीति तादर्थ्यमपि युक्तं यदि परमविशेषतः सर्वे-षामाकाङ्क्षायामपि पाठसंनिधिविशेषादभिषेचनीयस्य विशेषत आकाङ्क्षां कल्पयित्वा तादर्थ्यं स्यात् ततश्च विप्रकर्षः, सर्वार्थता तु क्लृप्ताकाङ्क्षातः सुखं गम्यते अभिषेचनीयाङ्गत्वं त्वाकाङ्क्षाकल्पनयेति । एतेनाग्नेयादीनां धर्म-साधारण्यं व्याख्यातम् । अपि च नास्त्यभिषेचनीयस्य प्रकरणं प्राकृतेनेत्थं-भावेन कथमाकाङ्क्षापूरणात् । नन्वन्येषामपीष्टिपशुसोमानां विकृतित्वात्ना-स्त्येव प्रकरणं सत्यं, प्रातिस्विकेन रूपेण नास्ति राजसूयात्मना त्वस्त्येव कथं श्रुत्यादिविहिताङ्गसन्दंशात् तद्वशेन न हि निवृत्ताऽप्याकाङ्क्षा पुनरुत्प-त्स्यते पवित्रादारभ्य क्षत्रस्य विधृतिं यावदङ्गविधिषु प्रायेण राजसूयाय ह्येना उत्पुनाति राजसूयेनेजानः सर्वमायुरेतीति, राजसूयपरामर्शात्तावन्तं देशम-

नुवृत्तोराजसूयकथंभावः शक्नोति तन्मध्यपतितानि विदेवनादीति ग्रहीतुम् अतः प्रकरणाद्राजसूयार्था विदेवनादयः क्रमसमाख्ययोर्विरोधे पौरोडाशिकसमाख्याते दर्शपौर्णमासकाण्डे सान्नाय्यपात्रशुन्धनक्रमे समाम्नातः शुन्धध्वमिति मन्त्र उदाहरणं स किं पुरोडाशपात्राङ्गं? मुत सान्नाय्यपात्राङ्गमुतोभयाङ्गमिति विचारः, यदि समाख्या बलवती पुरोडाशाङ्गम् । अथ तुल्यबलत्वमुभयार्थता, क्रमबलवत्त्वे तु सान्नाय्यार्थता तत्र "विशेषाग्रहणात्तुल्यबलत्वमुभयोर्भवेत् । सम्बन्धवाचिनीत्वेन समाख्या वा बलीयसी ॥ सो नैतदेवं समाख्या हि न सम्बन्धाभिधायिनी । यद्यपि त्वभिधात्री स्यात्प्रमाणं न तु तत्र सा ॥ न हि यौगिकैः शब्दैः सम्बन्धोऽभिधीयते दण्डीति हि प्रकृत्या दण्डस्वरूपमुक्तं प्रत्ययेनापि पुरुषः दण्डयुक्तस्तु पुरुषो न कस्यचिद्वाच्यः तयोः समभिव्याहारादेव परस्परयोगो वाक्यार्थ इव पदार्थानां लभ्यमानो नाभिधानं प्रयोजयति तथा पाचकादिष्वपि आह च "पाकं हि पचिरेवाह कर्त्तारं प्रत्ययोऽप्यकः । पाकयुक्तः पुनः कर्ता वाच्यो नैकस्य कस्यचि"दिति, एवं पौरोडाशिकशब्देऽपि प्रकृतिप्रत्ययाभ्यां पुरोडाशस्वरूपं काण्डस्वरूपं चोक्तं तयोश्च सम्बन्धोऽनभिहित एव कल्पयितव्यः, क्रमे तु देशसामान्यलक्षणः सम्बन्धः प्रत्यक्ष इति बलीयस्त्वम् । अथापि समाख्या सम्बन्धमभिदध्यात्तथापि न सा तत्र प्रमाणं, पदस्य पदार्थे प्रामाण्याभावात् अतः सम्बन्धनिमित्तां समाख्यामुच्चरन्तीमुपलभ्य नूनमस्त्यनयोः कश्चित्सम्बन्ध इति सम्बन्धसामान्यं कल्प्यं, ततोऽपेक्षा तत एकवाक्यत्वं ततः सामर्थ्यं ततस्तु श्रुतिः ततो विनियोगः, क्रमस्तु सम्बन्धमात्रस्य प्रत्यक्षप्रमितत्वात्तत आरभ्य श्रुत्यर्थं गच्छ[1]न्नेकपदमगतां समाख्यां जयति तदेवं श्रुत्यादीनां पूर्वपूर्वेणोत्तरोत्तरं श्रुत्यर्थं यावदगतमलब्धप्रामाण्यात्रस्यमेव मूलच्छेदाचिराक्रियते सोऽयमप्राप्तबाधः । यत्तु शास्त्रप्रदेशेषु तत्र तत्रोच्यते इदमनेन बाध्यते प्राकृतं वैकृतेन सामान्यं विशेषेणेत्यादि तद्बाधविषयं प्राप्तं बाध्यते? उताप्राप्तमिति न तावत्तत्र श्रुतिलिङ्गादिवदप्राप्तबाधसम्भवः

१ गच्छन्नेकं पदमगतामिति ।

तथा च तद्वदेव प्रापकस्य शास्त्रस्याभावोऽभ्युपगन्तव्यः, ततश्च तस्यैकत्वात् कुशेष्विवाङ्गान्तरेष्वपि चोदको न स्यात्पदहोमवच्च होमान्तरेष्वप्याहवनीयो न स्यात् । अथ प्राप्तं तत्र श्रुत्यादिवैषम्याप्रसङ्गात् एकरूपेण हि बाधेन भवितुं युक्तं न विचित्रेण, न च शक्यं शास्त्रप्राप्तं बाधितुम्, उच्यते प्राप्तस्यैव तेषु बाधः, नावश्यमेकरूपेणैव तेन भवितव्यं वैचित्र्यमेव प्रमाणबलेन युक्ततरं स्यात्, प्राप्तमपि शक्यमेव बाधितुमिति दशमाद्ये वक्ष्यते । अथ तत्र तत्रेत्यादिभाष्यस्य श्रुत्यादिविषयत्वं, स्थिते चाप्राप्तबाधत्वे प्राप्तबाधोऽपि नोत्तरमिति वार्तिकेन दूषितं, न चास्य दूषणस्य सामान्यतः प्राप्तिं मन्वाना विशेषमपश्यन्तः स्मृतिप्रमोषनिमित्तं प्राप्तं ज्ञानं व्यपदिशन्ति विशेषावगमात्तेषां निवर्तत इत्येन कश्चिदपि परिहा[1]रक्लेशः, न हि विप्रकृष्टप्रमाणं सन्निकृष्टप्रमाणात्प्राक् प्राप्तं सद् व्यवहारमपि निवर्तयति यतस्तन्निवर्तकता सन्निकृष्टस्य स्यात् अतो नेदमुपदेशबाधविदामभिधानं किं त्वतद्विदामेव तु तादृशामीदृशमभिधानमित्युपरम्यते "श्रुत्यादीनामतः षण्णामेकार्थोपनिपातिनाम् । पूर्वं पूर्वं बलीयः स्याद्दुर्बलं चोत्तरोत्तरम् ॥

द्वादशोपसत्ताया अहीनाङ्गताधिकरणम् । सू० अहीनो वा प्रकरणाद्गौणः ॥ ८ ॥

एवं विरोधे श्रुत्यादेर्बलाबलमुदीरितम् । अतः परं विरोधः क्व क्व नास्तीति विचार्यते ॥ प्रथमं तावत्प्रकरणस्य श्रुत्यादिभिः सह चिन्ता ज्योतिष्टोमप्रकरणे "तिस्र एवं साह्नस्योपसदो द्वादशाहीनस्ये"ति श्रुतं तत्र साह्न–शब्देन सहाह्ना समाप्यमानत्वाज् ज्योतिष्टोमोऽभिधीयत इति त्र्युपसत्वं तावत्तदङ्गं द्वादशोपसत्वमपि किं तस्यैवाङ्गमुत द्वाद[2]शाहादेरहर्गणस्येति संशयः तदर्थे च किमहीनश्रुत्या प्रकरणं विरुध्यते नेति तत्र प्रकरणाज्ज्योतिष्टोमाङ्गत्वं प्रतीयते तत्रैवाहीनशब्दोऽपि न हीन इति वर्तते खप्रत्ययान्तोत्यहर्गणे वचनः स्यात् नञ्समासस्त्वयं प्रकरणविरोधादङ्गीक्रियते न हीयत इत्यहीनः न ह्यसौ केनचित्क्रतुना हीयते सर्वे

१ परिहारलेश इति पा० ।
२ अहारेरगंहणस्येति पा० ।

क्रतवस्तं प्रकृतित्वेनापेतमाथा न जहति तेन श्रुत्यविरोधाज् ज्योतिष्टोमा-
ङ्गत्वे प्राप्ते ब्रूमः "साक्षादर्थान्तरं तावदहीन इति गम्यते। रूढिश्चेयं द्विरा-
त्रादौ सा च योगाद्बलीयसी ॥ तत्रापि यौगिकत्वं चेन्न सत्रेष्वप्रयोगतः
मध्योदात्तं पदं चेदमतः खप्रत्ययान्तता ॥ साह्नशब्देन ज्योतिष्टोममभिधाय
पुनरहीन इत्युच्यमानं संज्ञाभेदादेव तावदर्थान्तरं गम्यते रूढ्या च द्विरा-
त्रादिवचनत्वाच्च योगेन ज्योतिष्टोमे वर्त्तितुमर्हति। ननु द्विरात्रादावपि
अह्नां समूह इत्येवं योगेनैव वृत्तिः न सत्रेष्वप्रयोगात् किं च नञ्समा-
सत्वेऽव्ययपूर्वपदप्रकृतिस्वरत्वेनाद्युदात्तत्वं स्यात् मध्योदात्तं त्विदं पदम्
अतः खप्रत्ययान्तत्वं तथा सत्यापनादिसूत्रपदेशिवद्वचनं स्वरसिद्ध्यर्थमित्ये-
वमीनादेशस्यैवोपदेशित्वात्प्रत्ययाद्युदात्तत्वेनेकारे स्वरः सिद्धो भवति,
तस्मादहीनश्रुतेरहर्गणवचनत्वात्तद्विषयमेव द्वादशोपसत्त्वं षष्ठीश्रुत्या गम्यते
तत्तु पृथग्विधीयते, वाक्यान्तरप्राप्तं वा त्र्युपसत्वस्तुत्यर्थमनूद्यते सर्वथा
तावद् द्वादशाहीनस्येत्येतदहर्गणविषयमिति सिद्धम् ॥

कुलायादौ प्रतिपदोरुत्कर्षाधिकरणम्। सू० द्वित्वबहुत्वयुक्तं वा चोदनात्तस्य ॥ ९ ॥

ज्योतिष्टोमे श्रूयते "युवं हि स्थः स्वर्पती" इति द्वयोर्यजमानयोः
प्रतिपदं कुर्यात् एते असृग्रमिन्दव इति बहुभ्यो यजमानेभ्य इति तत्र
सन्देहः किमेते प्रतिपदौ ज्योतिष्टोमे स्यात द्विबहुयजमानकेषु कुलायाही-
नादिषूत्कृष्टव्ये? इति, तदर्थं च किं ज्योतिष्टोमे द्वौ बहवश्च यजमानाः
सम्भवन्त्युत नेति तत्र हीनाङ्गस्यापि नित्यस्य प्रयोगो येन वक्ष्यते तेनै-
कत्वं विहाय द्वौ बहवो वा प्रयुज्यन्ते यद्यपि नित्यवाक्येऽपि वस-
न्ते वसन्ते ज्योतिषा यजेतेत्याख्यातोपात्तगुणभूतेऽपि देयकर्तृगतमेकत्वं
विवक्षितं तथाऽपि नित्योऽशक्तिकृतां गत्या गाभ्युपगमा यद्येको न शक्नु-
यात्तदाङ्गान्तरवदेकत्वं विहाय द्वौ बहवो वा यजेरन् तदाश्रयणेन प्रति-
पद्विधानं प्रकृतावेवोपपन्नमिति नोत्कर्षः नैतदेवमशक्याङ्गमुपादेयं हि
लुप्यते अनुपादेयमेकत्वं यजमानस्य कालवत् "सोमेन यजेत" "वसन्ते वसन्ते
ज्योतिषा यजेते"त्युत्पत्तिप्रयोगचोदनयोः श्रुतमेकत्वमपरित्यज्याङ्गान्तरस्येव

त्यागो युक्तः । किञ्च यत्खलूपादेयमङ्गं यजमानस्य चोद्यते तद्विषय एव यथाशक्त्युपबन्धः, यत्त्वनुपादेयं कालवच्च तत्रैवमुपबन्धः तदपेक्षस्तु विधिस्तद्वृत्तमधिकृत्य प्रवर्तते अनुपादेयं च यजमानस्यात्मीयमेकत्वम् अत एको यथा शक्नुयादित्युपबन्धादङ्गान्तरं दक्षिणापरिमाणादि परित्यज्यैक एव प्रवर्तेत इति प्रकृतौ द्वित्वबहुत्वयोरभावात् षष्ठीश्रुत्या तत्संयुक्तयोः प्रतिपदोस्तद्वत्सु कुलायादिषूत्कर्षः, न च पत्न्यभिप्रायं द्वित्वबहुत्वं युक्तं यजमानशब्देनबद्धेषु स एव सर्वदाभिधानात् पत्न्यास्तु पत्नीशब्देनैवाभिधानात्, बहुभ्य इति विरूपैकशेषस्य प्रमाणमन्तरेण दुरुपपादत्वात् अपि च यजमानयोरिति यजमानशब्दस्य कर्तृवचनत्वात्कर्तृद्वित्वं प्रतीयते, न च पत्न्यभिप्रायेण कर्तृद्वित्वं सम्भवति दम्पत्योर्हि व्यासक्तं कर्तृत्वमग्नीषोमयोरिव देवतात्वम् अतस्तत्रैकवचनमेव स्यात्, यथा फलवाक्ये स्वर्गकामो यजेतेति अधिष्ठानाभिप्रायत्वे लक्षणा स्यात् । तस्मादुत्कर्षः ॥

जाघन्या अनुत्कर्षाधिकरणम् ।

सू० जाघनी चैकदेशत्वात् ॥ १० ॥

दर्शपूर्णमासयोः पत्नीसंयाजान्प्रकृत्य श्रूयते "जाघन्या पत्नीः संयाजयन्ती"ति तत्र चिन्ता किमिदं विधानं पशावुत्कृष्यते? उत नेति यदि जाघनीं कृतार्थामुद्दिश्य पत्नीसंयाजाः संस्कारा विधीयन्ते ततो वाक्यवशेनोत्कर्षः । अथ पत्नीसंयाजानां जाघनीद्रव्यं विधीयते ततोऽनुत्कर्षः तत्राराादुपकारकात्समवायिकस्य गरीयस्त्वाज्जाघनीशब्दस्य चोत्तरार्द्धादिशब्दवदेकदेशवचनत्वादेकदेशद्रव्याणां च विद्यमानैकदेशसंयोगाद्यत्र परप्रयुक्तपश्वनुनिष्पन्ना जाघनी विद्यते तत्र तस्याः संस्कारत्वेन पत्नीसंयाजविधानमिति प्राप्तेऽभिधीयते जाघनी हि गुणत्वेन तृतीयात्याऽवगम्यते पत्नीसंयाजयागाश्च द्रव्यापेताव्यवच्छिन्नाः तेनैतेषां गुणत्वेन जाघन्यत्र विधीयते' न च सापेक्षवृत्तित्वमुत्तरार्द्धादिशब्दवद् उत्तरार्द्धादिशब्दा हि परापेक्षयैव स्वार्थं बोधयन्तो युक्तं यत्परप्रयुक्तमेकदेशिनमपेक्षन्ते, जाघनीशब्दस्त्ववयवविशेषवचनो न किञ्चिदपेक्षते अतो निर्मूला स्यादस्योत्कर्षकल्पनेति दर्शपूर्णमासयोरेव निवेशः ॥

सन्तर्दनस्य संस्थानिवेशाधिकरणम् ।

सू० सन्तर्दनं प्रकृतौ क्रयणवदनर्थलोपात्स्यात् ॥ ११ ॥

ज्योतिष्टोमेऽभिषवणफलके प्रकृत्य "न संतृणत्त्यसन्तृणेहि हनू" इत्यसन्तर्दनं विधाय पुनः श्रुतम् । "अथो खलु दीर्घसोमे सन्तृद्यात् धृत्या" इति, तत्र संशयः किमिदं सन्तर्दनं प्रकृतावेवाथोत्कृष्यत इति, यदि दीर्घसोमशब्दः प्रकृतावपि वर्तते ततोऽनुत्कर्षः । अथ न वर्तते ततो वाक्यादुत्कर्षः यद्युत्कर्षस्त[१]थाऽपि किं द्विरात्रादिष्वेवोत्कर्षः? । अथवा संस्थान्तरेषु द्विरात्रादिषु चाविशेषेणाग्निष्टोमाधिकमात्र इति, तत्र प्रकृतेरपीष्टिपशुबन्धाद्यपेक्षया दीर्घसोमत्वोपपत्तेस्तत्रैव निवेशः । नन्वसन्तर्दनं तत्र विहितं क्रयवद्विकल्पो भविष्यति। ननु च तत्र समुच्चय एव सत्यं, विधानविकल्पाभिप्रायमिदं न प्रयोगाभिप्रायमित्यदोषः, नैतद्युक्तं न हि विधेर्विकल्पः संभवति वस्तुनि विकल्पासम्भवात्, तेन यद्यप्येककार्याणां सन्निपातिनां भेदाभावादेकमेव क्रयकर्म तच्चैकेनैव विधीयते अन्ये गुणविधयः तत्र विशेषो न गृह्यते सर्वत्र गुणश्रवणात्तथाप्यज्ञानमेव शक्यं वक्तुं न विकल्पाभिधानम् । अपि चारुणवाक्येऽनेकगुणश्रवणात्तत्रैव क्रयविधिरितरे गुणविधय इति विशेषग्रहणाच्च विकल्पः । अथवा भिन्नान्येव क्रयकर्माणि गुणाद्गम्यन्ते न ह्येकेन विहितेऽन्ये गुणविधयः सम्भवन्ति उत्पत्तिशिष्टगुणविरोधात् प्रमाणबलाच्च सन्निपातिनामप्येककार्याणां भेद आपतच्च दण्डेन पराणुद्यते, तथा च गुणकर्मणामवघातादीनामेककार्याणां द्वितीये भेद उक्तः, तथा "प्राकाशावध्वर्यवे ददाती"ति दानान्तरमेव प्राकृतकार्यं विधीयत इति वक्ष्यते, तथा च शतं ब्राह्मणाः सोमान् भक्षयन्तीत्यत्र भक्षान्तरविधावपि प्राकृतकार्यार्थता निबन्धनकारेणैवोक्ता, तस्मात्क्रयवद्विकल्प इति पूर्वपक्षिणा दृष्टान्त इति व्याख्येयम् । अतः प्रकृतावेव निवेशः, नैवं, दीर्घशब्दो हि सोमस्य विशेषणं, न चेष्ट्याद्यपेक्षया दीर्घत्वं सोमस्य विशेषणं भवति अव्यभिचारात्, अतः सोमान्तरापेक्षमेव दीर्घत्वं न च

१ तदापीति तु पाठान्तरम् ।

प्रकृते तदस्तीत्युत्कर्षः, अन्यः पक्षः दीर्घसोम इति षष्ठीसमासोऽयं दीर्घस्य यजमानस्य सोमः, स च प्रकृतावपि संभवतीत्यनुत्कर्षः नैवं समानाधिकरणसमासस्य बलीयस्त्वात् धृत्या इत्यर्थवादानुपपत्तेश्च, न हि यजमानदैर्घ्याद्धारणे कश्चिद्विशेषो भवति तस्मात्कर्मापेक्षमेव दीर्घत्वमित्युत्कर्षः स च द्विरात्रादिष्वेव न संस्थासु, तत्रापि चोदकप्राप्तस्य दशमुष्टेस्सोमस्य तावत एवाभिषवात् धृत्या इति च वाक्यशेषानुपपत्तेः । ननु तत्रापि प्रदानविवृध्याऽर्थात्प्रदेयविवृध्या भवितव्यं नाचोदकप्राप्तत्वात्सोमपरिमाणस्य, प्रदेयविवृद्धिस्तु तोयादिना संपादनीया, तस्माद् द्विरात्रादिष्वेवोत्कर्ष इति प्राप्तेऽभिधीयते गृह्णीम एतदुत्कर्ष इति न तु द्विरात्रादिष्वेव किन्तु अग्निष्टोमाधिकमात्रे दीर्घशब्दोपपत्तेः अविशेषेण संस्थासु द्विरात्रादिषु चोत्कर्षः, संस्थासु चास्त्यर्थात्प्रदेयविवृद्धिः, न च चोदकप्राप्तपरिमाणविरोधः दीर्घपर्वसोमग्रहणेन दशमुष्टित्रिपर्वपरिमाणयोरविरोधात्, अपि च न दशमुष्टित्रिपर्वपरिमित एव प्रकृतौ सोमः अवशिष्टानामंशूनामुपसमूहनवचनात्तत्र परिमाणाभावः, श्रूयते हि "यद्वैतावानेव सोमः स्याद्यावन्तं मिमीते यजमानस्यैव स्यान्नापि सदस्यानां प्रजाभ्यस्त्वेत्यवशिष्टानंशूनुपसमूहति सदस्यानेवान्वाभजती"ति तस्मादस्ति प्रदेयवृद्धिः अर्थात्संस्थासु सत्यां च धृत्या इति वाक्यशेषोपपत्तिः, अतोऽविशेषेण संस्थासु द्विरात्रादिष्वेचोत्कर्षः न तु संस्थास्वेवेति भ्रमितव्यम् । अविशेषादेव, न च प्रकरणाद्विशेषः संस्थानां प्रकरणाभावात् अतो वाक्येनैव सम्बन्धः तच्चाविशिष्टमिति सर्वगामिता ॥

प्रवर्ग्यनिषेधस्य प्रथमप्रयोगविषयताधिकरणम् ।

सू० संख्यायुक्तं क्रतोः प्रकरणात्स्यात् ॥ १२ ॥

ज्योतिष्टोमेऽस्ति प्रवर्ग्यः "पुरस्तादुपसदां प्रवर्ग्येण प्रचरन्ती"ति तं प्रकृत्य श्रूयते "न प्रथमयज्ञे प्रवृञ्ज्या"दिति, तत्र संशयः किं ज्योतिष्टोमाङ्गमयं प्रतिषेधः? अथ प्रथमप्रयोगाङ्ग?मिति, यदि प्रथमयज्ञशब्दो ज्योतिष्टोमनाम ततो वाक्यप्रकरणाभ्यां ज्योतिष्टोमाङ्गम्। अथ प्रयोगवचनस्ततो वाक्येन प्रकरणं बाधित्वा प्रयोगाङ्गतेति तत्र यज्ञ–शब्दस्य यागवचनत्वात्प्रथमशब्दस्य

च तद्विशेषणत्वाद्यागनामता तत्रापि प्रकरणाज्ज्योतिष्टोमनामता, विस्पष्टं च वाक्यान्तरे सामानाधिकरण्यम् "एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोम" इति प्रवृत्तिनिमित्तस्य विद्यमानत्वात्, स हि प्रथमं प्रयुज्यते "य एतेनानिष्ट्वे"ति वचनात् तस्मात् वाक्यात्प्रकरणाच्चायं क्रतोरङ्गं तदुच्यते वाक्याद्विष प्रयोगाङ्गं प्रयोगः प्रथमो य'तः। प्रथमशब्देन हि यदप्रवृत्तपूर्वस्य कर्तुराद्यं प्रवर्तनं तदुच्यते न तु क्रतुः कश्चित् स तु प्रयोगविषयत्वाल्लक्षणया गम्यते। नन्वितरत्रापि यज्ञशब्देन लक्षणया प्रयोगे वर्तितव्यं स्यात् नायं दोषः, जघन्यो हि यज्ञशब्दो लक्षणयाऽपि नीयमानो न दुष्यति, मुख्यस्तु प्रथमशब्दः श्रुतिवृत्तो ग्रहीतव्यः "एष वाव प्रथम" इति, "य एतेनानिष्ट्वे"त्यस्यार्थवादत्वाच्चाक्लृप्तशक्तिकल्पनया नामधेयत्वमवगमयितुमलं तस्मात् प्रयोगाङ्गं, प्रथमयज्ञे प्रयोगे न प्रवृज्ज्यादिति, यत्त्वग्निष्टोमे प्रवृणक्तीति वाक्यान्तरं तदनन्यार्थत्वात्प्रथमप्रयोगविषयमेव प्रतिषिद्धप्रतिप्रसवार्थं तेनाग्निष्टोमप्रथमवत्प्रयोगे विकल्पः स च व्यवस्थितः वचनान्तरात् तथा हि श्रूयते "कामं तु योऽनूचानः स्यात्तस्य प्रवृञ्ज्यादि"ति तेनाग्निष्टोमप्रथमप्रयोगेऽनूचानस्य नित्यं प्रयोगः अन्येषां नित्यमप्रयोगः, अतिरात्रप्रथमाहारे तु सर्वेषामेवाप्रयोगः प्रतिप्रसवाभावात्।

पौष्णपेषणस्य विकृतौ विनियोगाधिकरणम्। **सू० पौष्णं पेषणं विकृतौ प्रतीयेताचोदनात्प्रकृतौ ॥ १३ ॥**

दर्शपूर्णमासयोः "पूषा प्रपिष्टभाग" इति पेषणं प्रकरणे पूषाभावाद्यत्र पूषा तत्र वाक्यादुत्कृष्यते इति प्राप्तिसूत्रमेतत्।

पौष्णपेषणस्य चरावेव निवेशाधिकरणम्। **सू० तत्सर्वार्थमविशेषात् ॥ १४ ॥**

तत्पेषणं किं चरौ पशौ पुरोडाशे च विधीयते? ऽथवा चरावेवे? ति संशयः, अविशेषेण सर्वत्र स्यादिति प्राप्त उच्यते "पुरोडाशेऽन्यतः सिद्धं पशावाकृतिनाशनम्। पेषणं तेन न तयोर्विधातव्यं चरौ पुनः॥ अविघातकमप्राप्तमिति तत्र विधीयते॥ पुरोडाशे हि चोदकादेव सिद्धं पेषणमिति

१ मत इति पा०

न विधातव्यम् । नन्वन्यदिदं पेषणं अपाकोत्तरकालं वचनबलाद्विध्यति न अश्रवणात्, न हि पाकोत्तरकालमिदमन्यत्पेषणमिति वचनमस्ति पेषणमात्रं श्रुतं तच्च प्राप्तं न विधातव्यम् । ननु विधिबलादेवान्यत्स्यात्, न तस्याप्राप्तपेषणे चरावर्थवत्त्वात् ईदृशां च कल्पनायामसामर्थ्यात् गौरवं चात्यन्ताप्राप्तपेषणान्तरविधौ स्यात्, एवं पशावपि सान्नाय्यविकारेत्यऽन्ताप्राप्तम् । "हृदयस्याग्रेऽवद्यतीति विहितहृदयाद्याकृतिविनाशनं च चरौ त्वविघातकं पिष्टकचरावपि पाकविशेषेण चरुशब्दप्रयोगात् चोदकप्राप्तं च तत्प्रयोजनाभावान्निवर्तमानं प्रतिप्रसूयत इति लाघवात्तत्रैव पेषणम् ।

पौष्णपेषणस्यैकदेवत्ये निवेशाधिकरणम् । सू० एकस्मिन्नेकसंयोगात् ॥ १५ ॥

चरावेव पेषणमिति स्थितं तत्र संशयः, किं यत्रान्यसहितः पूषा देवता तत्राप्येतत्पेषण : मुत यत्रैव केवल : इति, तदर्थं च किं देवताप्रयुक्तमिदं पेषण ? मुत तद्दैवत्ययागापूर्वप्रयुक्त ? मिति तत्र "यज्ञप्रकरणाभावाद्वाक्ये चाश्रवणादिदम् । पेषणं देवताधर्मो नापूर्वस्यान्यधर्मवत्," अन्ये हि धर्माः श्रुत्यादिभिः प्रकरणाद्वा यज्ञापूर्वसंयोगिनो गम्यमाना युक्तं यत्तस्यैव फलवतोऽङ्गं भवन्ति न निष्फलाया देवतायाः, पेषणं त्विदं न यज्ञाङ्गं प्रकरणाभावात्, वाक्ये च पूषमात्रश्रवणात् अतस्तत्स्वरूपप्रयुक्तं, स च द्विदेवत्येऽपि विद्यत इति तत्रापि पेषणं स्यादिति प्राप्तेऽभिधीयते "देवता निष्फला नैव पेषणस्य प्रयोजिका: । उपादानं च यागस्य भागशब्देन विद्यते । मुख्यार्थासंभवाद्भागलिलक्षयिषयाऽत्र हि । श्रूयते भागशब्दोऽयं नानुपादानमस्त्यतः ॥ स च यागो द्विदेवत्यो द्वयव्यासक्तत्वान्नैकेन पूष्णा वा शक्यते व्यपदेष्टुम्, ऐन्द्राग्नाविव यहपुरोडाशौ आग्नेयेन्द्रपीतशब्दाभ्यां, यद्यपि चात्र तद्धितसमासानन्तर्गतत्वात्पूष्णो न वृत्त्यसामर्थ्यं तथापि भागशब्दार्थस्यैव द्विदेवत्ये पूषविशिष्टस्याभावान्न तत्र पेषणम्, एकदेवत्ये तु तदिति सिद्धम् ॥

इति शास्त्रदीपिकायां तृतीयाध्यायस्य तृतीयः पादः ॥ ३ ॥

## अथ तृतीयेऽध्याये चतुर्थः पाद आरभ्यते ॥

निवीतस्यार्थवादताऽधिकरणम् ।

सू० निवीतमिति मनुष्यधर्मः शब्दस्य तत्प्रधानत्वात् ॥ १ ॥

दर्शपूर्णमासयोः श्रूयते "निवीतं मनुष्याणां प्राचीनावीतं पितॄणामुपवीतं देवानामुपव्ययते" इति, निवीतं मनुष्याणामिति किमयं विधि ? रुतार्थवादोऽयमुपवीतविधे? रिति, अर्थवादत्वमौदुम्बराधिकरणन्यायेन सिद्धं, यदा विधिस्तदा विचार्यते क्त्वाचिन्तेयं तत्र षष्ठीश्रुत्या शुद्धमनुष्यधर्म इत्येकः पूर्वः पक्षः, श्रुतिप्रकरणयोरविरोधात्क्रतुयुक्तपुरुषधर्मो लोहितोष्णीषादिवदित्यपरः, प्रकरणाच्छुद्धक्रतुधर्मः प्रयाजादिवत् मनुष्यग्रहणं तु कर्तुः सम्बन्धानुवाद इत्यन्यः, अनुवादस्यानर्थक्यात्प्राचीनावीतोपवीतवैषम्यात्प्रकरणाविरोधाय प्रकरणे यन्मनुष्यप्रधानं कर्मान्वाहार्यदानादि तस्य धर्म इत्यपरः, प्राचीनावीतोपवीतयोः स्वतन्त्रपितृदेवताप्रधानकर्मविषयत्वादवैषम्याचिवीतमपि स्वतन्त्रं यन्मनुष्यप्रधानमातिथ्यादि कर्म तद्धर्म इत्यपरः, सर्वेषामेतेषामशोभमानत्वात्पुरुषार्थत्वे च फलकल्पनाद्विध्येकवाक्यत्वात्प्रकरणाविरोधाच्चार्थवादत्वमेव पूर्वोक्तं न्याय इति क्त्वाचिन्तोद्घाटनम् ॥

सू० उपवीतं लिङ्गदर्शनात्सर्वधर्मः स्यात् ॥ २ ॥

दर्शपूर्णमासयोरुपवीतं श्रुतमुपव्ययत इति, तत्र संशयः किमिदं सर्वदेवकर्माङ्ग ? मुत दर्शपूर्णमासाङ्ग ? मिति तत्र "मृताग्निहोत्रे प्राचीनावीती दोहयेद् यज्ञोपवीती हि देवेभ्यो दोहयतीति सिद्धवद्दैवाग्निहोत्रे यज्ञोपवीतानुवादलिङ्गेन प्रकरणं बाधित्वा सर्वार्थत्वमवगम्यते, न च दर्शपूर्णमासस्यस्यैवायमनुवादः विप्रकृष्टत्वाद्देवेभ्य इति च बहुवचनानुपपत्तेः, वैकल्पिकेन्द्रैकदेवत्यत्वात्सान्नाय्यस्य, अग्निहोत्रे त्वग्निसूर्यप्रजापत्यभिप्रायमुपपन्नं बहुवचनमिति तद्गतस्यैवायमनुवादः, स च दर्शपूर्णमासप्रकरणोल्लङ्घनेन सर्वार्थत्वे घटत इति प्राप्ते ब्रूमः प्रकरणाद्दर्शपूर्णमासाङ्गम् । अग्निहोत्रगतं तु लिङ्गं यथाप्राप्ति वर्णयितव्यमिति सन्निकृष्टाभावाद्विप्रकृष्टमपेक्ष्य

प्रवर्तते बहुवचनं तु प्रकृतिविकृतिदेवताऽभिप्रायमित्यविरुद्धं, सोऽयं लिङ्ग-प्रकरणविरोधाविरोधविचारः ॥

सू० विधिर्वा स्यादपूर्वत्वात् ॥ ३ ॥

"उपव्ययत" इत्येतदुदाहरणं किमसौ विधि? उतानुवाद ? इति "नित्योदकी नित्ययज्ञोपवीती"ति, स्मृतिप्राप्तत्वादनुवाद इति प्राप्ते विधि-रपूर्वत्वादित्याह पुरुषार्थतया हि स्मृतितः प्राप्तिः, अयं तु क्रत्वर्थतया विधिः अप्राप्तत्वात् । अथवैवमधिकरणम् । उपव्ययत इति स्मृतिप्राप्ता-नुवादः स्मृतिश्चाविशेषेण स्थितेति सर्वकर्मार्थतया प्राप्तमनूद्यत इति पूर्वः पक्षः संयोगभेदाद्विधिः अतश्च प्रकरणाद्दर्शपूर्णमासाङ्गमिति सिद्धा-न्तः । एवं चामृताग्निहोत्रे श्रूयते "यज्ञोपवीती देवेभ्यो दोहयतीति, किमयं देवाग्निहोत्राङ्गतया यज्ञोपवीतस्य विधिः? उत दर्शपूर्णमासादि-षु प्राप्तस्य प्राचीनावीतस्तुत्यर्थोऽनुवाद? इति तत्र प्राचीनावीती दोहय-तीति अग्निहोत्रस्य मृतावस्थायां वचनाद्यज्ञोपवीती हि देवेभ्यो दोह-यतीति तस्यैव जीवदवस्थायामुपवीतं गम्यते, तच्चाप्राप्तमित्यनुवादसरूप-स्यापि हि शब्दपरित्यागेन विधित्वं गम्यते स्थितं तावदपर्यवसितम् ॥

सू० उदक्त्वं चापूर्वत्वात् ॥ ४ ॥

तत्रैव श्रूयते "ये पुरोदञ्चो दर्भास्तान् दक्षिणाग्रान् स्तृणीया"दिति ये पुरोदञ्च इति किं विधि? उतानुवाद? इति प्राप्त्यभावाद्यच्छब्दोपब-द्धस्यापि व्यवहितकल्पनया वाक्यभेदेन च विधित्वं गम्यते ये पुरा जीव-दवस्थायां दर्भास्ते उदञ्चः कार्या इत्येकं वाक्यं, तान् दक्षिणाग्रानिति च मृतावस्थायां वाक्यान्तरमिति प्राप्ते ब्रूमः यच्छब्दोपबन्धाद्विध्यभावाद्वि-ध्यन्तरैकवाक्यत्वाच्चानुवादत्वम्,अस्ति च प्राप्तिः "अपवन्त्युदगग्राणी"ति स्मृतेः, न चेदमेव स्मृतेर्मूलम् । अस्याग्निहोत्रविषयत्वात्स्मृतेश्च अविशेषेण सर्वविषयत्वादवश्यं मूलान्तरं कल्पनीयं तस्मिँश्च कल्पिते तत एवाग्नि-होत्रेऽपि प्राप्तेरयमनुवाद इति स्थितादुत्तरं "यज्ञोपवीतीति हि देवेभ्यो-दोहयती"ति हि शब्दोपबन्धात्प्राचीनावीतविधिशेषत्वादनुवादत्वं तावद्

गम्यते तद्यदि कथं चिदपि प्राप्तिर्न स्यात् ततो भङ्क्त्वा रूपं विधित्वमध्यवसीयेत अस्ति च दर्शपूर्णमासादिषु प्राप्तिरिति तदपेक्षत्वादनुवादोपपत्तौ न रूपभङ्गो युक्तस्तस्मादनुवादः ।

सू० विधिस्तु धारणेऽपूर्वत्वात् ॥ ५ ॥

मृताग्निहोत्रे एवं श्रूयते "अधस्तात्समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयती"ति किमयं जीवदग्निहोत्रे विधिः? उतानुवाद? इति पूर्वेण न्यायेनानुवादः कुतश्च प्राप्तिः? आचारात्, सर्वमभ्यर्हितं द्रव्यं प्रच्छाद्यैव देशान्तरं नेतव्यमित्याचारात्प्राप्तम् । अतोऽग्निहोत्रद्रव्यमपि गार्हपत्यादाहवनीयमानीयमानमाच्छादयितव्यं तत्केनेति समिद्धारणविधानं तन्नियमार्थं दृष्टार्थं भवति समिधा प्रच्छादयेदिति सा चोपरिधार्यमाणा प्रच्छादनक्षमा नान्यथेति प्राप्तमुपरि धारणमनूद्यत इति प्राप्ते ब्रूमः विधिरपूर्वत्वात्, न ह्याचारादपरिप्राप्तिः आच्छादनासमर्थत्वात् "स्रुग्दण्डे समिधमुपसंगृह्ये"ति च श्रवणात्दण्डप्रदेशेऽसौ धारयितव्येति कुतोऽनया हविषः प्रच्छादनम्, अतोऽप्राप्तत्वाद्धि शब्दपरित्यागेन विधिः, अनुवादानुपपत्त्या हि विधिकल्पनं दिग्विभागश्च तद्वत् "ज्योतिष्टोमे प्राचीनं वंशं करोती"ति विधाय श्रूयते "प्राचीं देवा अभजन्त दक्षिणां पितरः प्रतीचीं मनुष्या उदीचीं रुद्रा" इति, तत्र प्रतीचीं मनुष्या" इत्यत्र निवीताधिकरणवत्सर्वं पक्षा रचयितव्याः, का पुनर्विशेषाऽऽशङ्का? सोच्यते निवीतं मनुष्यार्थमित्यत्र न स्तुतिरथ्याञ्जस्येन गम्यत इति दूरापास्तं विधित्वम् । इह त्वभजन्तेति पुरा कल्पेन पूर्वपुरुषाचरितत्वेन प्रशंसा गम्यते तथा च सुकल्पो विधिरित्यतो विधित्वं युक्तमितीमामाशङ्कां निवर्तयितुमिदमधिकरणम् ।*

१ स्मृतेरविशेषावस्थानादिति पा० ।

* अत्र सूत्रव्यवस्थानमत्यन्तमाकुलं तद्यथा दिग्विभागानुवादताऽधिकरणत्वेन व्याख्यातं "दिग्विभागश्च तद्वत्सम्बन्धस्यार्थहेतुत्वा"दिति सूत्रमतिप्रसिद्धमपि शाबरभाष्ये अधिकरणसूत्रव्याख्यानकृतपरिकरैरपि पार्थसारथिमिश्रैर्न व्याख्यायि, भाष्ये अस्पष्टाक्षराण्यपि च "उपवीतं लिङ्गदर्शनात्सर्वधर्मः स्यात्" १ "विधिर्वा स्यादपूर्वत्वात्" २ "उदकत्वं चापूर्वत्वात्" ३ "विधिस्तु धारणेऽपूर्वत्वात्" ४ एतानि चत्वारीह

परुषि दितादीनाम-नुवादताऽधिकरणम् । सू० परुषि दितपूर्णघृतविदग्धं च तद्वत् ॥ ६ ॥

"यत्परुषि दितं तद्देवानां यदन्तरा तन्मनुष्याणा"मिति तथा "यत्पूर्णं तन्मनुष्याणामिति घृतं देवानामस्तु पितॄणां निष्पक्कं मनुष्याणा"मित्यत्र मनुष्यसंयुक्ता उदाहरणं तथा "यो विदग्धः स नैर्ऋतः योऽशृतः स रौद्र" इति अत्रापि विध्यर्थवादादिपक्षा निवीतवदेव सर्वे योज्याः, विशेषाशङ्का त्वेषा विधित्वेऽपि न फलकल्पनं लौकिकानामेव क्लृप्तफलानां लवनमानाभ्यञ्जनक्रियाणामन्तरा पूर्णनिष्पक्कमिति विशेषनियममात्रविधानान्नियमादृष्टमात्रं न निवीतवदत्यन्ताप्राप्तविधानेनादृष्टक्रियाफलकल्पनेति यो विदग्ध इत्यपि प्रसिद्धयोरेव नैर्ऋतरौद्रयोर्विदग्धत्वाशृतत्वगुणमात्रविधानाल्लाघवमतो विधिरित्येतां शङ्कां निवर्तयितुमतिदेशः ।

अनृतवदननिषेधस्य क्रतुधर्मताऽधिकरणम् । सू अकर्मक्रतुसंयुक्तं संयोगान्नित्यानुवादः स्यात् ॥ ७ ॥

क्रतौ पुरुषे चार्थतः प्रसक्ते पदार्थे प्रतिषेधतः क्रतुप्रकरणगताः प्रतिषेधा इहोदाहरणं दर्शपूर्णमासयोर्हि "नानृतं वदेदि"ति हि श्रूयते तत्र संशयः किमयं पुरुषधर्मो विधिः ? उत क्रतुयुक्तपुरुषधर्मो ऽनुवादः ? किं वा शुद्धक्रतुधर्मोऽनुवादः ? अथवा शुद्धक्रतुधर्मो विधि ? रिति, तदर्थं च प्रतिषिध्यमाना या क्रिया विचारयितव्या किमर्था सती प्रतिषिध्यते किं क्रत्वर्था ? किं वा पुरुषार्थेयमिति, ततोऽपि पुनर्विचारयितव्यं किमाख्यातं कर्तारमभिधत्ते न वेति, तत्र "प्रतीतेः स्मरणात्कर्तृविशेषैरपृथक्श्रुतेः कर्तृवाचित्वमाख्यातप्रत्ययस्यावसीयते, वदेदित्याख्यातात्कर्ताऽवगम्यते यश्च यतोऽवगम्यते स तस्यार्थः

व्याख्यायिषत, केचित्तु "न वा प्रकरणात्तस्य दर्शनम्" "ऋतौ वालिङ्गदर्शनम्"इति सूत्रद्वयमधिकमास्थिताः पूर्वोक्त-चतुः सूत्रीं निरुक्तसूत्रद्वयसंवलितां षट्सूत्रीमाचक्षते अधिकरणसूत्राणां संदर्भाऽप्याकुलः अकर्मक्रतुसंयुक्तं संयोगान्नित्यानुवादः स्यादित्यनृतवदननिषेधाधिकरणं परुषि दितादीनामनुवादाधिकरणानन्तरं व्याख्यातं भाष्ये, इह पुनर्वैपरीत्येनेति पाठसारस्याकुलतया वृत्तिवार्त्तिकग्रन्थालोचनया पाठतत्त्वविवेकः करणीय इति मन्महे ।

तथा "कर्तरि कृदित्यधिकृत्य" "लः कर्मणि चे"ति चकारेण कर्तृवाचित्वं स्मृतं पचति देवदत्त इति च कर्तृविशेषवचनैर्देवदत्तादिपदैः सामानाधिकरण्यात्कर्तृवाचिता, स च प्रत्ययार्थत्वात्प्रकृत्यर्थं वदनं प्रति प्रधानभूत इति वदनं तावत्पुरुषार्थं यदर्थं च वदनं तदर्थः प्रतिषेधोऽपि न्याय्यः, कुत एतत् प्रतिषेधस्यानिष्टबोधकत्वात् दृष्टविपरीतं चानिष्टं तद्यदा यस्येष्टं तद्विपरीतं तदा तस्यानिष्टं भवति, तद्यदि प्रतिषेध्यभूतां वदनक्रियामनुवदन्वदेदिति शब्दः पुरुषार्थतया पुरुषेष्टसाधनतया तामुपस्थापयेत्ततः प्रतिषेधोऽपीष्टविपरीतसाधनतां बोधयन्ननुवादावस्थाप्रतिपन्नस्यैवेष्टस्य विपर्ययं फलत्वेनावलम्बते नेष्टान्तरस्य अप्रतिपन्नत्वात्, तदयमर्थः—यत्पुरुषोपकारितया प्रसक्तं वदनं तच्च तथा किं त्वपकारमेवास्य साधयतीति तेन श्रुत्या प्रकरणं बाधित्वा पुरुषार्थः प्रतिषेधः । यस्तु स्मार्तः प्रतिषेधस्तस्याप्येतदेव मूलं भविष्यतीत्येकः पक्षः श्रुतिप्रकरणयोरविरोधात्क्रतुयुक्तपुरुषधर्मोऽयं जञ्जभ्यमानमन्त्रवचनवत्कर्म कुर्वाणस्यानृतं वर्जयितव्यमिति, सोऽयं स्मृतिप्राप्तानुवादः, स्मृत्यैव हि पुरुषस्योपनयनप्रभृत्यामरणान्निषिद्धमनृतं तन्मध्यावर्तिनोश्च दर्शपूर्णमासयोस्तत एव वर्जनं प्राप्तमित्यनुवादः । न चास्मिन्पक्षे मूलमूलित्वं, श्रुतेः क्रतुविषयत्वात् स्मृतेरा[१]युर्विशेषावस्थानादिति द्वितीयः पक्षः प्रयाजादिवत्क्रत्वर्थ एवारादुपकारकः प्रतिषेधः, सोऽपि त्वनुवाद एव पुरुषो हि स्वार्थमेवानृतं वर्जयतीति प्राप्तमेव क्रतावपि वर्जनं, न हि पुरुषं विहाय क्रतावनृतं सम्भवति पुरुषे च निषिद्धमिति कुतः क्रतौ प्राप्तिः तस्मादनुवाद इति तृतीयः पक्षः । अत्राभिधीयते "क्रत्वर्थत्वेऽपि यत्तावदनुवादत्वमीरितम् तत्र संयोगभेदेन विधिरेव हि गम्यते अनृतवदनस्य पुरुषार्थेन हि स्मार्तेन प्रतिषेधेनैतदवगमनृतं वदतः पुरुषस्य प्रत्यवायो भवति वर्जनात् स न भवतीति न क्रतोः किञ्चित्तद्भावाभावयोर्वैगुण्यमवैगुण्यं वा तेन यः प्रत्यवायमभ्युपेत्य क्रतुमविगुणं चिकीर्षति तस्य नानृतं वर्जनीयं स्यात् क्रत्वर्थेन तु प्रतिषेधेन क्रतुगत एव प्रत्यवायोऽनृताद्भवतीति बोध्यते इत्यर्थभेदान्नानुवादः । तथाऽतिक्रमेऽपि पुरुषार्थोतिक्रमनिमित्तं, प्राय-

१ तच्चियमार्थं दृष्टार्थमिति पा० ।

श्चित्तं, क्रत्वर्थत्वे क्रतुदोषनिमित्तं प्रायश्चित्तमिति शेषः । एवमेव क्रतुयुक्तपुरुषसंस्कारपक्षेऽपि क्रत्वर्थत्वतुल्यान्संयोगान्तरं व्याख्येयं, तत्र तावदनुवादः इदानीं क्रतुयुक्तस्य पुरुषस्य धर्मः? उत शुद्धक्रतुधर्मः? इत्येतावदवशिष्यते तत्रोच्यते "आख्यातप्रत्ययाः सर्वे क्रियाया अभिधायकाः । तत एव प्रतीतस्य न कर्तुरभिधेयता ॥ न स्मृतिः कर्तृवाचित्वे संख्यावाचित्वगोचरा सामानाधि॰करण्यं च लक्षणातो गवादिवत् । अनन्यलभ्यो हि शब्दार्थो भवति कर्ता चाख्याताभिहितभावनाऽविनाभावादेव लभ्यमानो नाभिधेयो भवितुमर्हति । स्मृतिरपि नास्याभिधेयतामाह किं तु तत्संख्यावाचितां "लः कर्तरी"ति विभक्तिशास्त्रस्य "द्व्येकयोर्द्विवचनैकवचने" इत्यस्य च संख्याशास्त्रस्यैकवाक्यत्वात् अत्र द्व्येकयोरिति द्विवचननिर्देशादसत्यपि भावप्रत्यये भावप्रधानो निर्देशो द्वित्वैकत्वयोरिति द्रव्यपरत्वे हि द्वयोरेकस्य च सन्निपाते बहुत्वोपजननाद् बहुवचनं स्याद् द्व्येकेष्विति, तदयमर्थः कर्तुरेकत्वे लकारैकवचनमिति अनभिधेयोऽपि कर्ता धात्वर्थभावनाभ्यामेव प्रतिपन्न इति नानुपपन्नं तद्विशिष्टसंख्याभिधानं, सामानाधिकरण्यं च गौः शुक्ल इति वल्लाक्षणिककर्त्रभिप्रायमुपपन्नमिति नाभिधेयः कर्ता । तेन श्रुतिविरोधाभावात्क्रत्वर्थ एवायं प्रतिषेधः स च संयोगान्तरत्वाच्चानुवादः ।

जञ्जभ्यमानधर्माणां प्रकरणे निवेशाधिकरणम् ।

**सू॰ अहीनवत्पुरुषधर्मस्तदर्थत्वात् ॥ ८ ॥**

दर्शपूर्णमासयोः श्रूयते "जञ्जभ्यमानोऽनुब्रूयान्मयि दक्षक्रतू" इति, तत्र संशयः किमेतन्मन्त्रवचनं शुद्धपुरुषधर्मः? उत क्रतुयुक्तपुरुषसंस्कारः क्रतोरेवाङ्ग?मिति, तत्र "जञ्जभ्यमानधर्मोऽयं वाक्यात्प्रकरणेन न तु । क्रत्वङ्गं दुर्बलं तच्च तेनास्य पुरुषार्थता" । नन्वेवं फलं कल्पनीयं, नैष दोषः वाक्यावगतजञ्जभ्यमानपुरुषार्थत्वबलेन तत्कल्पनस्य न्याय्यत्वात् सत्यां च फलाकाङ्क्षायां "प्राणापानावेवात्मन् धत्त" इति वाक्यशेषेणैव रात्रिसत्रवत्फललाभात् "सत्यं यदि विरोधः स्याद्वाक्यप्रक्रियोरिह । ततः फलं प्रकल्प्येत न त्वत्रास्ति विरोधिता ॥ जञ्जभ्यमानः पुरुषः क्रतावपि हि विद्यते । तत्संस्कारमुखेनैव क्रत्वर्थत्वं भविष्यति ॥ अवश्यं हि फलं कल्प्यं तदध्याहार-

तावरम् । प्रकृतेनैव सम्बन्ध इति क्रत्वर्थता स्थिता" एकदेशिनां तु नात्र क्रत्वर्थता सिध्येत् निमित्तं हि जृम्भिका, निमित्तं चाधिकारिविशेषणम् अतो जृम्भिकानिमित्तयुक्तस्य पुरुषस्याधिकारिणोऽत्र वाक्ये श्रुतस्य लाभात्कार्यस्य च फलानपेक्षत्वादनपेक्षं संपूर्णं वाक्यं न प्रकृतसम्बन्धमुपैत्यात्स्वतन्त्रमेव पुरुषार्थं स्यादित्यास्तां तावत् ॥

अवगोरणादीनां पुमर्थाधिकरणम् । सू० प्रतिषेधः प्रदेशेऽनारभ्यविधाने च प्राप्तप्रतिषेधात्—

सू० ग्रंथौ सर्वपरिदानात् ॥ ९ ॥

दर्शपूर्णमासयोः श्रूयते "यो ब्राह्मणायावगुरेत्तं शतेन यातयात् तस्माद्ब्राह्मणाय नावगुरेते"ति, तत्र संशयः किमेष प्रतिषेधः क्रत्वर्थः? उत पुरुषार्थः? इति संशयः, तत्र "फलाभावात् क्रतोश्चापि प्रकृतत्वात्तदर्थता । कृतत्वात्तु फलस्यायं पुरुषार्थो न तु क्रतोः" यातयादिति हि साध्यतया यातना गम्यते न पूर्वाधिकरणवत् प्राणापानधारणं वर्तमानतया निर्दिश्यते साध्यत्वाभिधानादेव यातनायाः साध्यत्वं न स्वर्गादिवत्कामोपबन्धापेक्षम् । न हि प्रत्यवायः केनचित्काम्यते तस्मात्फलवत्त्वात्पुरुषार्थमवगुरणं न क्रत्वर्थम्, एकदेशिनां तु अवगुरणस्य यातनाफलत्वं न सिध्येत् नञर्थपर्यवसायित्वात्प्रतिषेधविधेः, नञर्थविषयो हि कार्य्यात्मा विध्यर्थो वाक्यार्थः, कार्यं च न फलमपेक्षते अपेक्षमाणमपि न यातनया सम्बध्यते कर्तव्यस्य यातनाफलकत्वायोगात्, न च तत्साध्यतयाऽत्र यातना गम्यते किं त्ववगूरणसाध्यतया तस्माच्च नियोगफलत्वं यातनायाः, अत एव न नियोज्यविशेषणतयाऽपि स्वर्गादिवत्समन्वयः, नियोगफलं हि साध्यतया नियोज्यविशेषणं भवति नान्यत्, अत एव न विषयीभूतनञर्थफलं विधेयस्य यातनाफलकत्वायोगात् नावगूरणस्य फलं तदनुष्ठानस्य लौकिकत्वेन विधिसंस्पर्शाभावात्, उक्तं हि "लौकिके चानुष्ठाने यदि लौकिकात्प्रमाणात्प्रत्यवायो नावगम्यते कुतोऽन्यतः शक्यतेऽवगन्तु"मिति, अतो न नञर्थविधिपरेण वाक्येन यातनायाः फलत्वं शक्यमवधारयितुम्, अनुपपत्त्यभावात्, वाक्येनैव तत्प्रतिपादने वाक्यभेदः स्यात्, अवगूरणाभावेनापूर्वं कुर्यादवगूरणं च प्रत्यवायफलमिति तस्मान्न फलत्वम् । ननु गम्यते अवगूरणसाध्यता यातनायाः, सत्यं, गम्यते

किंमूला त्वियमवगतिरिति प्रमाणमस्यां मृगयमाणा न लभामहे प्रत्यक्षादीनां दविष्ठत्वात्, शब्दस्य चान्यपरत्वेन तत्र प्रामाण्यायोगात्, निर्मूलावगतिरुत्पन्नापि प्रतिभावच्च समीचीना भवति । अथापि वाक्यभेदमङ्गीकृत्य शब्दस्यात्र प्रामाण्यमुच्यते तथाऽप्ययुक्तम्, कार्यपरत्वेन हि शब्दानां व्युत्पत्तिः, अवगूरणं च यातनाफलसाधनमिति सिद्धरूपो विनियोगः कथमिव शब्देन प्रतिपाद्येत व्युत्पत्तिविरहात्. कथं चावगूरणं क्षणिकं कालान्तरभाविनीं यातनां साधयेत्, अपूर्वद्वारेणेति चेत् न अन्यद्वारेणान्यस्य साधनायोगात्, योगे वा यागादेरपि तथात्वोपपत्तेरपूर्वाभिधानमुत्सीदेत्. तदिहापि यागादिविषयमिवावगूरणविषयं कार्यात्मकमपूर्वमभिधेयमापद्येत, न चैवमिष्टं तस्मादर्थवादमात्रं न तु फलं स्यादित्यास्तां तावत् ॥

मलवद्वासःसंवादनिषेधस्य पुरुषधर्मताऽधिकरणम् ।

सू० प्रागवरोधान्मलवद्वाससः ॥ १० ॥

दर्शपूर्णमासयोः श्रूयते "मलवद्वाससा न संवदे" दिति, किमयं प्रतिषेधः क्रत्वर्थः? उत पुरुषार्थ? इति प्रकरणात्क्रत्वर्थत्वे प्राप्तेऽभिधीयते तामवरु[1]ध्य यजेतेति वचनात्सर्वस्मादेव क्रतुव्यापारान्निवृत्ता रजस्वला तेन नानया संवादस्य क्रतौ प्रसक्तिः प्रसक्त्यभावाच्च प्रतिषेधानुपपत्तिः, पुरुषस्य हि स्वातन्त्र्येण प्रवर्तमानस्य रजस्वलया प्रसज्यते संवादः तेन यत्र प्रसक्तिस्तत्र प्रतिषेध इति पुरुषार्थता ॥

सुवर्णधारणादीनां पुरुषधर्मताऽधिकरणम् ।

सू० अप्रकरणे तु तद्धर्मस्ततो विशेषात् ॥ ११ ॥

अनारभ्य श्रूयते "तस्मात्सुवर्णं हिरण्यं भार्य" मिति, अत्र संशयः किं हिरण्यधारणमिदं क्रत्वङ्गतया विधीयते? उत क्रतुगतहिरण्यानुवादेन धारणसंस्कारो विधीयते?। अथवा हिरण्यं हस्तेन भवतीति विहितधारणानुवादेन सुवर्णता शोभनरूपता विधीयते? तद्धिरण्यं भार्यं तत्सुवर्णमिति, आहोस्विद्धिरण्यधारणा पुरुषार्थतया विधीयत? इति, तत्र "पुरुषार्थत्वपक्षे हि

[1] तामपरुध्येति पा० ।

फलं कल्प्यमतक्रतोः । अङ्गं स्याद्वैदिकत्वेन क्रियात्वेन च साम्यतः" ॥ यद्यपि तावद्धिरण्यविशिष्टधारणविधिस्तथाऽपि तस्य फलापेक्षायां वैदिकत्वक्रियात्वसामान्याद्वैदिकमेव कर्मोपतिष्ठत इति तादर्थ्यमेवारादुपकारकरूपेणापि युक्तं, नात्यन्तानुपस्थितफलकल्पना । अथवा धारणस्य स्वभावत एव धार्यमाणसंस्कारत्वात्कृत्यश्रुत्या च हिरण्यस्य प्राधान्यावगमान्निष्प्रयोजनस्य च लौकिकस्य संस्कारायोगात् क्रतुगतहिरण्यानुवादेन धारणसंस्कारविधानम् अथवा लाघवाद्धारणमप्यनूद्य सुवर्णताविधिः त्रेधाऽपि तावत् क्रत्वर्थमिति प्राप्तेऽधीयते, "न क्रतुस्तद्धिरण्यं वा धारणं वात्र गम्यते । तस्मान्न क्रतुशेषत्वं विधेस्तु पुरुषार्थता ॥ स्वर्गाद्युत्पत्तेरपि क्रियात्वादन्यत्र च वैदिकत्वादुभयमपि तुल्यं पर्युपस्थापकमिति नैकान्ततः क्रतोरुपस्थानं येन विशिष्टविधिपक्षेऽपि क्रत्वर्थता स्यात्, न च क्रतुगतहिरण्यप्रतीतिर्येन तदनुवादेन संस्कारविधिः स्यात्, लोकेऽपि हिरण्यसद्भावात्, न हि क्रत्वर्थं द्रव्यार्जनं येन बहिः क्रतुद्रव्यमेव स्यात् न पुरुषार्थं हि तदिति चतुर्थे वक्ष्यामः । ननु क्रतुगतहिरण्यप्रतीतिः संस्कार्यत्वादिति चेत् न इतरेतराश्रयात् क्रतुगतहिरण्यानुवादनिश्चये संस्कार्यत्वं, तन्निश्चये च निष्प्रयोजनस्य तदयोगात्क्रतुगतहिरण्यप्रतीतिरितीतरेतराश्रयत्वं, न हि स्वभावतः संस्कार्यता अदृष्टार्थत्वेऽपि धारणाविरोधात्, कृत्यप्रत्ययश्च कर्मत्वं साध्यतामात्रमाह न शेषित्वम्, अत एव न धारणानुवादेनापि गुणविधिः क्रतुगतधारणाप्रतीतेरन्यत्रापि धारणसम्भवात् अतो न क्रत्वर्थत्वं विधिवशाच्चावश्यं भवितव्यं फलेन तत्रार्थवादाभावे स स्वर्गः स्यादिति, सद्भावे तु तद्गतमेव फलं यथेह भ्रातृव्यस्य दुर्वर्णत्वमात्मनश्च शोभनरूपता तस्मात्पुरुषार्थत्वम् ।

जयादीनां वैदिककर्माङ्गताधिकरणम् ।

सू० शेषोऽप्रकरणेऽविशेषात्सर्वकर्मणाम् ॥ १२ ॥

क्रत्वर्थपुरुषार्थत्वविचारप्रसङ्गात्पूर्वाधिकरणेऽनारभ्यवादः प्रस्तुतः तत्प्रस्तावादेवाऽऽनारभ्याधीतानां जयादीनां वाक्येनैव कर्माङ्गत्वे सिद्धे तद्विशेषश्चिन्त्यते "येन कर्मणेर्च्छेत्तत्र जयान् जुहुया" दिति किं सर्वेषां लौकि-

[1] येन कर्मणेर्त्सेदिति तु युक्तः पाठः ।

कवैदिककर्मणामङ्गं जयादयः? उत वैदिकानामेव येषामाहवनीयोऽस्ती? ति-विचारः, तत्राविशेषतः सर्वकर्मार्थत्वं प्रतीयते। तस्मात्कृ¹ ष्यादिनापीर्च्छेत्त-त्राग्नौ जुहुयात् जयान्" यद्यपि कृष्यादीनामाहवनीयोनास्ति जयादयश्चा-हवनीये होतव्यास्तथाऽपि ते स्वयमेव होमत्वादाहवनीयप्रयोजका इति तद-र्थमेवाहवनीयं प्रणीय तेषु हूयमाना न दुष्यन्ति "तस्मात्तत्राप्यवैगुण्या-त्सर्वार्थाः स्युर्जयादयः। नैवं प्रधानवैदेश्याद्वैगुण्यं जायते यतः। यद्यप्या-हवनीयाभावकृतं नास्ति वैगुण्य तथाऽपि प्रधानदेशत्वमेव गानामवगतं तदलाभात्कृष्यादिषु क्रियमाणा विगुणा भवेयुः तेत्र कृषिराहवनीये च होम इति वैदेश्यं, वैदिकेषु त्वाहनीयादिमत्सु प्रधानसादेश्यं लभ्यत इत्यवैगु-ण्यात्तत्रैव जयादयः ॥

वैदिकाश्वप्रतिग्रहे इष्टिक-र्तव्यताऽधिकरणम् ।

सू॰ दोषात्त्विष्टिर्लौकिके स्याच्छास्त्राद्धि वैदिके न दोषः स्यात् ॥ १३ ॥

अत्राप्यनारभ्यवादस्यैव क्रत्वर्थपुरुषार्थत्वविचारः, तैत्तिरीयाका हि काम्येष्टिकाण्डे "यावतो ऽश्वान्प्रतिगृह्णीयात्तावतो वारुणाँश्चतुष्कपाला-न्निर्वपे"दिति समामनन्ति, सेयं दातुरिष्टिर्न प्रतिग्रहीतुरिति वक्ष्यते सा विचार्यते किं लौकिकेऽश्वदाने मित्रदायादेभ्यः स्नेहादिना विधिमनपेक्ष्य क्रियमाणे निमित्ते पुरुषार्था विधीयते? उत वैदिके कर्माङ्गभूते ज्योतिष्टोम-पौण्डरीकादिविषये क्रत्वर्थतया? उतोभयत्रे? ति, तदर्थं च किं दोषनिर्घा-तार्थेयम्? उत ने? ति तत्राविशेषादुभयत्रेति प्राप्तेऽभिधीयते "दोषनिर्घा-तकार्येयं यत्रासौ तत्र गम्यते। लौकिके स च दोषोऽस्ति वैदिके न विधानतः" यद्यपि निमित्तावस्थायां दोषवान् योऽश्वप्रतिग्रह इत्यशक्यं विशेष्टुं, विशि-ष्टानुवादे वाक्यभेदात्तथाऽपि कर्मणः फलापेक्षायां "स एवैनं वरुणपाशान्मु-ञ्चतीति वाक्यशेषाद्दोषनिर्घात एव फलमवसीयते, तेन यत्र दोषस्तत्रेष्टिः लौकिके चाश्वदाने "न केसरिणो ददाती"ति निषेधात् दोषोऽस्ति वैदिके तु कर्माङ्गदाने विशेषविधानात्तत्प्रतिषेधाप्रवृत्तेर्नास्ति दोषः,"तस्मात्कार्यप्रशा-

१ कृष्यादिनाऽपीर्त्स्वेदिति तु युक्तः पाठः।

द्दिष्टिर्लौकिके स्यात्तदुच्यते "दोषनिर्घातकार्यत्वे स्यादेवं न तु तत्तथा। वरुणग्रहनिर्मोकः फलमत्रावगम्यते। लौकिकेनाश्वदानेन नासावस्तीति गम्यते"। वरुणस्य पाशान्मुञ्चतीति वरुणग्रहाज्जलोदरपर्यायाद्विर्मोकः, न तु लौकिकमश्वदानं जलोदरनिदानमिति प्रत्यक्षादिना, वेदसंहिताभिर्वोऽवगम्यते, नापि प्रतिषेधेन न केसरिणो ददातीति पापमात्रकल्पना स्यात्, न चानेनैव तत्प्रतिपादनम् अस्य प्रसिद्धदोषानुवादेन तन्निर्मोकार्थं प्रायश्चित्तेष्टिविधिपरत्वात्, तत्परत्वे वाक्यभेदात् अतोयोऽत्र दोषो निर्घात्यत्वेन गम्यते नासौ लौकिकेऽस्तीति न तद्वशेन लौकिकविषयत्वम्। अथ वृणोतीति व्युत्पत्त्या वरुणशब्दः पापमेव वदेत्ततः प्रसिद्धं परित्यज्य यथाकथञ्चिद्व्याख्यायमाने वैदिकेऽपि त्यागात् दुःखदर्शनात्तदेव वरुण-शब्देन शक्यमभिधातुम् इष्ट्या ऽऽडम्बरविनोदेन तद्दुःखशमनात्स एवैन वरुणपाशान्मुञ्चतीति चोपपन्नं, तस्माच्च लौकिकविषयता, नाप्युभयत्र कुतः प्रसिद्धं ह्यश्वदानं निमित्तत्वेनो[1]द्दिश्य नैमित्तिकं कर्म विधीयते तस्य पूर्वप्रसिद्धावालोच्यमानायां नैमित्तिकस्य वैदिकत्वात्तत्सादृश्याद्वैदिकमश्वदानं शीघ्रमुपतिष्ठते तेन तत्सम्बन्धिकतूपस्थानात्तादर्थ्यं गम्यते, ततश्च नैरपेक्ष्याच्च लौकिकस्य ग्रहः फलकल्पना वा युज्यते, किंच "लौकिके पुरुषार्थत्वं वैदिके क्रतुशेषता। न चैकस्योभयार्थत्वं वैरूप्यादुपपद्यते" क्रत्वर्थत्वे प्रधानविधिपरत्वादप्रयोजकता पुरुषार्थत्वे तु स्वातन्त्र्यात्प्रयोजकत्वमिति वैरूप्यं, न च तदेकस्य विधेर्युक्तं तस्माद्वैदिक एव स्यात्।

दातुर्वारुण्याप्यधिकरणम्
वारुणेष्ट्यधिकरणमिति वा

सू० अचोदितं च कर्मभेदात् ॥ १४ ॥

इयमेवेष्टिरुदाहरणं किमियं प्रतिग्रहस्य स्वतन्त्रकर्तुः? उत हेतुकर्तुर्दातुरिति, तदर्थं च प्रक्रमस्यार्थवादस्योपसंहारस्यविध्युद्देश्यस्य च विरोधे कस्य बलीयस्त्वं? मिति चिन्त्यते विध्युद्देशबलीयस्त्वे प्रतिग्रहीतुः यावतोऽश्वान्प्रतिगृह्णीयात् तावतो वारुणांश्चतुष्कपालान्निर्वपेदिति वचनात्. अर्थवादबलीयस्त्वे दातुः प्रजापतिर्वरुणायाश्वमनयदिति प्रजापतिर्दाता

१ निमित्तत्वेनोपदिश्यते पा०।

संकीर्त्तितो वरुणः प्रतिग्रहीता स स्वां देवतामार्छदिति स इति समानविभक्तिर्निर्दिष्टः प्रजापतिः स्वां देवतां पूर्ववाक्ये सम्प्रदाननिर्देशादुक्तां तेन प्रजापतिरश्वं दत्त्वा वरुणग्रहं प्राप्त इत्यर्थः । "स पर्यदीर्यत स एतं वारुणं चतुष्कपालमपश्यत्तन्निरवपत्ततो वै स वरुणपाशादमुच्यते"ति सर्वत्र प्रजापतिरेव दाताऽनुपश्यते, तेन परकृतिरूपेऽर्थवादे दातुरिष्टिर्विहितेत्यन्येऽपि दत्त्वैवं कुर्यादिति दातुरिष्टिरवगम्यते तदेवं विरोधे किं बलीय? इति तत्र विध्युद्देशस्य प्रधानत्वात्तदनुरोधेनार्थवादो व्याख्येयः, दातुरपि तावद्दोषः स्यात्किं पुनः प्रतिग्रहीतुरिति, तस्मात्प्रतिग्रहीतुरिति प्राप्तेऽभिधीयते "असंजातविरोधित्वादर्थवादो यथा श्रुतः । व्याख्येयस्तद्विरुद्धत्वाद्विध्युद्देशस्य लक्षणा" प्रतिगृह्णीयादिति हेतुकर्ताच्यते, अस्ति हि तस्यापि हेतुकर्तृत्वं "तत्प्रयोजको हेतुश्चे"ति चकारात्, तस्मादुपक्रमबलाद्दातुरिष्टिरिति, प्रपञ्चितं चैतद्बलीयस्त्वं "श्रुतेर्जाताधिकारः स्या"दित्यत्र, किमर्थं तर्हीदमधिकरणम्? उच्यते ग्रहादिशब्दा वेदेऽपि बहुलं दृष्टप्रयोगाः गृह्णातिस्तु दातृव्यापारे न क्वचिद्दृष्टस्तेन नासौ तत्परत्वेन व्याख्यातुं शक्यत इति विशेषाशङ्कानिवृत्त्यर्थमधिकरणम् । अथवा भाष्यकारान्तरैः सा लिङ्गादार्त्विज्ये स्यादिति सूत्रानुसारात्प्रतिग्रहीतुरिष्टिराश्रिता तन्निवृत्त्यर्थमनेनैव सूत्रेण दातुरिष्टिं प्रतिपादयितुं भाष्यकारोऽधिकरणान्तरं चकार, सूत्रद्वयं तु पूर्वाधिकरणशेषत्वेन व्याख्येयं, यत्रऽप्यचोदितमिदं कर्मभेदे सति निर्णयाशक्तेः अतः उभयत्र स्यादिति चोद्यं तस्योत्तरं सालिङ्गाद्वैदिकत्वसामान्यादार्त्विज्ये ऋत्विक्सम्बन्धिनि वैदिके दाने स्यादित्यर्थः ॥

वैदिकपानव्यापत्ति सौमेन्द्रचरुविधानाधिकरणम् ।

**सू० पानव्यापच्च तद्वत् ॥ १५ ॥**

अनारभ्य श्रूयते 'सौमेन्द्रं चरुं निर्वपेद्यः सोमं वमती"ति तत्रापि तथैव संशयः किं लौकिके सोमे रसायनाद्यर्थं पीते वान्ते पुरुषार्थतयेयमिष्टि? उत वैदिके क्रत्वर्थतया? अथवोभयत्रे? ति, तत्राविशेषादुभयोर्दोषाद्वा लौकिके भवेत् । दोषो ह्यत्रास्ति वमनाद्वृद्धिरिन्द्रियवीर्ययोः" । भवति हि वम-

१ परकृतिस्वरूपेऽर्थवादे इति पा० ।

नादिन्द्रियवीर्यवृद्धिः न वरुणग्रहः इत्यक्ताविद्यमानता तेन तत्संयोगाल्लौ-क्तिके स्यात्, वैदिके तु पानमात्रस्य शास्त्रार्थत्वाद्वमनेऽपि न कश्चिद्दोष इति, नात्र प्रायश्चित्तविधिरर्थवान् एवं प्राप्ते ब्रूमः, "लोके हि वमनायैव पानाद्दोषो न विद्यते। सम्यग्जरणपर्यन्तं वेदे पानं विपद्यते" न तावल्लोके दोषोऽस्ति वमनार्थमेव पानात् अतो न तद्वशेन लौकिक एवेति शक्यं वक्तुं, वेदे तु सम्यग्जरणस्यापेक्षितत्वात्सम्यग्जरणपर्यन्तमेव पानं शास्त्रार्थः, तच्च वमनाद्विपद्यत इति अस्ति दोषः, तेन दोषवशादेव वैदिके स्यात्, यद्यपि दोषश्रवणमर्थवादस्तथाऽपि लोके दोषाभावात्प्रतिकारापेक्षा नास्तीत्यनपेक्षितं प्रायश्चित्तं, वेदे तु क्रतुवैगुण्यात्तत्समाधित्सोपजायते। अपेक्षितार्थता तत्र प्रायश्चित्तविधेर्भवेत्॥ अपेक्षितविधिर्न्याय्यानपेक्षितचोदनात्। तेन क्रत्वङ्गमेवेष्टिः फलं चैवं न कल्प्यते" अश्वदानं तु वैदिकमेव शीघ्रमुपस्थितमिति असत्यामपि प्रतिकारापेक्षायां तत्रैव वारुणीष्टिः, लौकिकं तु प्रतिषिद्धत्वात्प्रतीकारापेक्षं सदप्यनुपास्यतत्वान्नेष्टिं गृह्णातीति विशेषः॥

सौमेन्द्रचरोर्यजमानपानव्यापद्विषयताऽधिकरणम्।

**सू० तत्सर्वत्राविशेषात्॥ १६॥**

येयं वैदिके सोमवमने क्रत्वङ्गमिष्टिरवधारिता सा किं यजमानवमन एवोतर्त्विग्वमनेऽपीति विचारः, तत्राविशेषतः सर्ववमने स्यत्तदुच्यते "सौमेन्द्रं स चरुं कुर्याद्यः सोमं वमतीति हि। यच्छब्दादिष्टिवमने गम्येते तुल्यकर्तृके। इष्टौ च क्रतुशेषत्वात्स्वाम्येव हि नियुज्यते। कर्तृत्वेनेति वमनमपि तत्कर्तृकं ततः निमित्तमृत्विग्वमनं न निमित्तमिति स्थितम्"॥

आग्नेयाष्टाकपालचरोद्व्यवदानमात्रस्य होतव्यताऽधिकरणम्।

**सू० सर्वप्रदानं हविषस्तदर्थत्वात्॥ १७॥**

वमनस्य हविःशेषविषयत्वात्तत्प्रसङ्गाद्धविःशेषो हृदयमागत इत्यतः प्रभृत्यापञ्चमपादपरिसमाप्तेर्हविःशेषविषया कथा प्रवर्तिष्यते, प्रथमं तावच्छेषसद्भाव एव प्रतिपाद्यते, दर्शपूर्णमासयोः श्रूयते "आग्नेयोऽष्टाकपालो भवतीति तथोपस्तृणाति अभिघारयति द्विर्हविषोऽवद्यति चतुरवत्तं जुहो-

तीति, तत्र संशयः किं सकलस्य पुरोडाशस्याहवनीये प्रदान? मुत स्रुवदा-
नमात्रं प्रदायान्यच्छेषयितव्य?मिति, यत्राग्नेयचोदना सकलहोमेन विना
नोपपद्यते ततः सकलस्य: अथ स्रुवदानमात्रेणापि तदुपपत्तिस्ततस्तन्मा-
त्रस्य होमः, तत्राष्टाकपाल–शब्दस्यावयवपरत्वे लक्षणाप्रसङ्गात्तच्छ्रुत्या पुरो-
डाशावयव्येवाग्निदेवतासंबन्धी क्रियते, न च प्रदानमन्तरेण देवतासंब-
न्धोपपत्तिरिति सकलस्य प्रदानं, यद्यपि स्रुवदानस्य प्रत्यक्षश्रुतं होमसाधन-
त्वम् अष्टाकपालस्य त्वनुमेयं तथाऽप्यनिवार्यमनुमानम्, अन्यथाऽऽष्टाकपा-
लसंबन्धस्य श्रुतस्यानुपपत्तेः उत्पत्तिशिष्टत्वाच्च पुरोडाशस्य स्रुवदानादु-
त्पत्तिशिष्टाद् बलीयस्त्वम् अतो बलात्स्रुवदानवाक्यमुपायपरं व्याख्येयं
यत्सकलं जुहोति तत् द्विरवदायेति, न चाभ्यासमन्तरेण सकलपुरोडाश-
साधनको यागः शक्यते स्रुवदानेन कर्तुमित्यर्थादभ्यस्यते सोमयागवत्,
कथमिदानीं शेषकार्याणि स्विष्टकृदादीनि विद्यमानसन्निहितशेषाभावा-
द्धविरन्तरमाक्षेप्स्यन्ति । यद्वा भवतु यच्छेषकार्यवशात् स्रुवदानमात्रं हुत्वा-
ऽन्यच्छिष्यते तदभावे तु सकलहोमो न्याय्य इत्येतावान् पूर्वः पक्षः, कः पुनरयं
पक्षद्वयस्यानुष्ठाने विशेषः? पूर्वपक्षे शेषकार्याणामपि प्रयोजकत्वात्तदर्था-
वदाननाशेऽपि प्रधानवद्धविरन्तरोत्पादः, सिद्धान्ते तु अप्रयोजकत्वान्नेप
इति प्रयोजनान्तरमप्युपरिष्टाद्वक्ष्यामः अत्राभिधीयते "यागप्रधानमेकेन
स्रुवदानेन साधितः । द्रव्यमस्तीति कृत्वाऽसौ नावृत्तिं प्रतिपद्यते ॥ आ-
ग्नेयत्वं च कृत्स्नस्य तावतैवोपपद्यते । अग्नये स्रुवदानं यत्तत उद्धृत्य दी-
यते" प्रधानभूतो हि यागो न युक्तं यत द्रव्यवशेनावर्त्तेत, न च सो-
मयागवदभ्यासमन्तरेणानुपपत्तिः, उत्पत्तिशिष्टं हि पुरोडाशस्याग्नेयत्व-
मेतावतैवोपपन्नं यत्ततो गृहीतं स्रुवदानमग्नये दीयते अग्निदेवत्यया-
गसाधनता ह्याग्नेयता, साधनत्वं च प्रदेयप्रकृतितयाऽप्युपपन्नं व्रीही-
णामिव पुरोडाशद्वारा, सोमस्येव च रसद्वारं, पशोरिव हृदयद्वारमतो
स्रुवावदानद्वारं पुरोडाशस्य साधनत्वमिति न सर्वदा सर्वप्रदानमिति भा-
ष्याभिप्रायः । वार्त्तिककारस्तु मन्यते सत्यं प्रणाड्याऽप्युपपन्नमाग्नेयत्वं यदि
प्रणाड्यां किंचित्प्रमाणमभविष्यत् असति तु प्रमाणे साक्षादेव प्रदानं युक्तं न

त्वात्र प्रमाणमस्ति येन व्रीहिपशुसोमवत्प्रणाडीमाश्रयामः चतुरवत्तं जुहोतीति वाक्यं प्रमाणमिति चेत्, भवेत्तत्प्रमाणं यदि होमानुवादेन चतुरवत्तं साधनं विधीयेत। न त्वेवम्, उत्पत्तिवाक्ये होमस्याप्राप्तत्वात्त्यागमात्रेण होमाभावेऽपि पर्यग्निकृतानारण्यानुत्सृजन्तीतिवद्देवतासंबन्धोपपत्तेः, अतो नेयं वचनव्यक्तिर्यज्जुहोति तच्चतुरवत्तमिति, किंतु यच्चतुरवत्तमित्यपक्षरणादिवाक्यप्राप्तं यच्चतुरवत्तं द्वितीयया संस्कार्यत्वेनोद्दिश्य तत्संस्कारो होमो विधीयते, होमश्च त्यागपूर्वः प्रक्षेपः तत्र त्यागस्योत्पत्तिवाक्यप्राप्तत्वादप्राप्तः प्रक्षेपांशः संस्कारो विधीयते, अतो नानेनोत्पत्तिवाक्यविहितस्य कर्मणः साधनविधानं येन पुरोडाशस्य तत्प्रकृतित्वं स्यात् कर्मान्तरमिदमवघातादिवत्संस्काररूपं विधीयते, यागस्य तु साधनान्तराभावात्पुरोडाश एव साक्षात्साधनमिति सर्वप्रदानम्। नन्वाचारादेव होमः प्राप्तः न, आचारस्य स्वतःप्रामाण्याभावात् श्रुतिकल्पनस्य च प्रत्यक्षश्रुतिसद्भावेऽनुपपत्तेः, यदि चाचारप्रमाणको होमः स्यात् ततस्तस्य प्रकृतिविकृतिसाधारणत्वाद्विकृतिष्वप्यसावौपदेशिक एव होम इति प्रत्यक्षद्वारत्वादाहवनीयादयः पवमानेष्ट्यादिषूपदेशादेव प्राप्यरन्ननयश्च स्वकालत्वादिति न्यायात् तत्र तासामग्निः प्रकृतितः प्रयाजवदिति सूत्रकारव्यवहारो नोपपद्यते, तस्माच्चतुरवत्तं जुहोतीति होमविधिः, यागस्तु सकलपुरोडाशद्रव्यक इति समञ्जसम् अधिकरणं तु होमविषयं व्याख्येयं प्रायेण हविषां होमदर्शनादग्निमुखा वै देवा" इति चार्थवादात्सकलस्य होमं मन्यते चतुरवत्त जुहोतीति वचनात्तावत एव होमः सकलस्य तु देवतासम्बन्धस्त्यागमात्रादेवोपपन्नः। एवं च शेषात्स्विष्टकृत इत्यादि समञ्जसं भवति। नन्वाम्नायादिभ्यो दत्तं कथमिव पुनः स्विष्टकृते दीयते त्यक्तस्य हि पुनः स्वीकारे शिष्टाचारविरोधः स्यात् प्रत्यक्षश्रुत्याऽऽचारं बाधित्वा तावन्मात्रं पुनः स्वं क्रियत इत्यदोषः॥

सर्वशेषैः स्विष्टकृदनुष्ठानाधिकरणम्।

सू० अप्रयोजकत्वादेकस्मात्क्रियेरन् शेषस्य गुणभूतत्वात्॥ १८॥

सति शेषे शेषकार्याणि स्विष्टकृदादीनि किमेकस्माद्धविषः कार्याण्युत सर्वेभ्य? इति विचारः, तत्रैकस्मादेव शेषात्स्विष्टकृत इति शास्त्रार्थस्य

कृतत्वादेकस्मादेव कार्याणि न सर्वेभ्य इति प्राप्त उच्यते यदि शेषगुणकानि प्रधानकर्माण्येतानि ततः स्यादेवं शेषस्य च अक्षीणकस्यापेक्षितप्रतिपत्तेः प्रतिपत्तिनियमोऽयं विधीयते स यस्यैव न क्रियते तस्यैव प्रतिपत्तिनियमलोपाद्वैगुण्यं स्यात्तस्मात्सर्वेभ्यः, प्रतिपत्तित्वं चैषां चतुर्थे वक्ष्यते; उत्पत्तौ येन प्रयुक्तं तदर्थं श्रुतिहेतुत्वात्तस्यार्थान्तरगमने शेषत्वात्प्रतिपत्तिः स्यादिति तेनैव च गतार्थत्वाचेदमधिकरणान्तरं प्रयोजनसूत्राणि त्वेतानि पूर्वाधिकरणस्य यदा शेषकार्यवशात्पूर्वपक्षेऽप्यसर्वप्रदानं किं तदा चिन्तायाः प्रयोजनं तत्राह पूर्वपक्षेऽपि सर्वप्रदाने प्राप्ते स्विष्टकृदादिवशेन शेषः स्थाप्यते प्रधानकर्म च तदा स्विष्टकृदादि भवति तच्चैकस्मादेव सिध्यतीत्येकस्मादेव कर्तव्यं सिद्धान्ते त्वपेक्षितप्रतिपत्तेः स्थितस्य शेषस्य प्रतिपत्तिरियमिति सर्वेभ्यः स्यादिति प्रयोजनम् ॥

प्राथमिकशेषात् स्विष्टकृदाद्यनुष्ठानाधिकरणम्। सू० एकस्माच्चेद्याथाकाम्यमविशेषात् ॥१९॥

कृत्वा चिन्तेयं यदा शेषकार्यवशादेव शेषं स्थापयित्वा एकस्मात्कार्याणि तदा किमनियमो यतः कुतश्चित्? उत मुख्यादिति विशेषाभावादनियम इति प्राप्ते ब्रूमः मुख्यस्य प्राप्तनिमित्तत्वाच्छेषः स्थाप्यते तस्मिंश्च स्थापिते तत एव शेषकार्याणामुपपत्तेर्निमित्तविघातांचेतरेभ्यः शेषस्य स्थापनं, तस्मान्मुख्यादेव कार्याणि ॥

पुरोडाशविभागस्य भक्षार्थताऽधिकरणम्। सू० भक्षाश्रवणाद्दानशब्दः परिक्रये ॥ २० ॥

आग्नेयं चतुर्धा कृत्वा इदं ब्रह्मण इत्यादिभिर्व्यादेशैर्ऋत्विग्भ्यः समर्प्यते तत्र संशयः किमिदं समर्पणमृत्विजां यथेष्टं विनियोगार्थं परिक्रयाय? उत द्रव्यप्रतिपत्त्यर्थं भक्षणाये ति तत्र "भक्षस्याश्रवणात्तावत्तादर्थ्यं नावगम्यते क्रियत्यथानसिस्तावद्ब्रवीतीति तदर्थता न ह्यश्नुते भक्षे तादर्थ्यमध्यवसातुं शक्यं कर्मकरेभ्यश्च दीयते दीयमानं च क्रीयतामपि तावदानतिं करोतीति सोमचमसवत्परिक्रयार्थता मैवं स्वामी हि द्रव्यदानेन परिक्रीणीत न त्विह स्वामित्वं कस्यचिद्दत्तं देवतायै हविर्यतः सकलस्य हविषो देवतायै

प्रवृत्तत्वादनीशानो यजमानस्तुल्यः स ऋत्विग्भिः कथं परिक्रीणीत, तस्माच परिक्रयः शेषस्य तु प्रतिपत्त्यपेतत्वाद्भोग्यतया च पुरोडाशस्य भक्षणमेव प्रतिपत्तिरवगतेति कर्तृविशेषमात्रापेक्षायां ब्रह्माद्यैर्नियम्यन्ते, तन्नियमस्यापि दृष्टमेव प्रयोजनं तेषां करिष्यमाणकर्मप्रयोगकौशलं भक्षणाद्धि सामर्थ्यं भवतीति भक्षणार्थता ॥

इति शास्त्रदीपिकायां तृतीयाध्यायस्य चतुर्थः पादः ॥ ४ ॥

---

## अथ तृतीयेऽध्याये पञ्चमः पाद आरभ्यते ॥

---

ध्रुवाज्यादिभिः स्विष्टकृदादिशेषाननुष्ठानाधिकरणम् ।

**सू० आज्याच्च सर्वसंयोगात् ॥ १ ॥**

शेषकार्याणि किमाज्यादप्युपांशुयाजद्रव्यात्कर्तव्या? न्युत नेति संशयः, तत्राविशेषात्कर्तव्यानीति प्राप्ते उच्यते—कृतार्थस्य प्रतिपत्त्यपेक्षस्य स्थितस्य शेषस्य प्रतिपत्त्यर्थानि शेषकार्याणि. न चाज्यमेवंविधमस्ति यत्तावत् ध्रुवायामप्युपांशुयाजार्थे गृहीते ऽवशिष्टमाज्यं तत्पश्चाद्बर्ह्युपस्तरणाद्युपयोगीत्यकृतार्थं न प्रतिपत्त्यर्हं, सर्वान्ते च तेन [1]हविःशेषेण समिष्टयजुर्होमः क्रियत इति न ततः शेषकार्याणि । यत्तु जुह्वां चतुर्गृहीतमाज्यं गृहीतं तदशेषं हुतमिति शेषाभावात् नाज्याच्छेषकार्याणि ॥

साकं प्रस्थाय्ये शेषकर्माननुष्ठानाधिकरणम् ।

**सू० साकं प्रस्थाय्ये स्विष्टकृदिडं च तद्वत् ॥ २ ॥**

साकं प्रस्थायीये श्रूयते "सह कुम्भीभिरभिक्रामेदि"ति तत्र किं शेषकार्याणि कर्तव्यान्युत तेषु नेति तदर्थं च किं कुम्भीषु? शेषो विद्यते उत नेति, तत्राभिक्रमणमात्रं कुम्भीभिर्न होमः स त्वभिक्रम्याप्याहवनीयमभ्यदायैव जुह्वा यथाप्रकृति कर्तव्य इति शेषसद्भावात्कर्तव्यं स्विष्टकृदादि इति प्राप्ते ब्रूमः, नेदमप्राकृतकार्यमपूर्वमभिक्रमणं कुम्भीभिर्विधीयते किं

---

१ निःशेषेणेति पा० ।

तु यदेव प्राकृतं होमार्थं जुह्वाऽभिक्रमणं तदेव जुहूमपहाय कुम्भ्योनिवेक्ष्यमाणाहोमार्था विज्ञायन्ते, न ह्यन्यथा होमार्थोऽभिक्रमणसम्बन्धो युज्यते तदनेन प्रकारेण कुम्भीभिर्होमो विधीयते तद्विधौ चाभिक्रमणं प्राप्तमेवानुवदति तस्मादत्रापि शेषभावाच्च शेषकार्याणि ।

सौत्रामण्यां शेषकर्माननुष्ठानाधिकरणम् ।

## सू॰ सौत्रामण्यां च ग्रहेषु ॥ ३ ॥

सौत्रामण्यां पयोग्रहाः सुराग्रहाश्च तत्र श्रूयते "यथागृहीतान् ग्रहानृत्विज उपाददते उत्तरेऽग्नौ पयोग्रहान् जुह्वति दक्षिणाग्नौ सुराग्रहानिति,"-तत्रापि पूर्ववदेव संशयपूर्वोत्तरपक्षाः विशेषः सोमग्रहतुल्यश्रुतित्वात् तत्र च शेषसद्भावात् इहापि स्यादिमामाशङ्कां व्यावर्तयितुमतिदेशः ।

सर्वपृष्ठेष्टौ स्विष्टकृदिडादीनां सकृदनुष्ठानाधिकरणम् ।

## सू॰ द्रव्यैकत्वे कर्मभेदात्प्रतिकर्म क्रियेरन् ॥ ४ ॥

सर्वपृष्ठायां षट्कर्माणीन्द्राय रथन्तराय निर्वपतीन्द्राय बार्हतायेत्येवमादीनि तेषां षड् हवींषि क्रमेण यथादेवतं निरूप्य प्रकृतिवत्सहावघातपेषणे कृत्वा विभागे प्राप्ते तमकृत्वा वचनात्सर्वैरेकं पुरोडाशं कृत्वा ततः समन्ततः पर्यवदाय प्रधानानि क्रियन्ते तत्र किं प्रतिकर्मभेदेन स्विष्टकृदादिकमवदेयम् उत सकृदिति संशयः तत्र कर्मबहुत्वेन प्रतिकर्मावसायिभिः चोदकैः शेषकर्मापि प्रतिकर्म प्रदिश्यते, तस्मात्प्रतिकर्मावदेयं, तथा च प्रधानभेदे एकस्मिन्नपि शेषे शेषकार्यावृत्तौ सिद्धवद्धेतुं दर्शयति "द्विरैन्द्रवायवस्य भक्षयति" "त्रिर्ह्येतस्य वषट्करोतीति तद्वदिहापीति प्राप्ते ब्रूमः "सर्वसाधारणः शेषस्तस्मात्सकृद्दवद्यते। तावतैव हि सर्वेषां कृतं स्यादविशेषतः" ॥ ननु त्यक्तस्य पुनस्त्यागायोगान्न सकलः पुरोडाशः सर्वार्थः किं त्वेकैकोऽवयव एकैकस्य यागस्य साधनं तच्चेनावयवेन यो यागः क्रियते तदुत्तरार्धादवदीयमाने तस्य शेषादवत्तं भवतीति भेद एव न्याय्यः, नैतदेवं च अवयवानामेव विशेषाग्रहणाच्च ह्येतत् ज्ञायते अयमवयवोऽस्यायमस्येति विशेषे प्रमाणाभावात् होमदेशा एव वचनाद्व्यवस्थिता न यागदेशाः, तेन यागावस्थायामेवं सङ्कल्पयितव्यं योऽस्मिन् पुरोडाशे निर्वापद-

शायामिन्द्राय रथन्तराय दातुं प्रक्रान्तोऽशस्तं तस्मै ददामीति, एवं सर्वेषु कृतेषु शेषस्य साधारणत्वादगृह्यमाणविशेषं शेषकार्यं तन्त्रेण सकृत्कर्तव्यम् ऐन्द्रवायवे तु वचनात्प्रतिकर्मभक्षो न प्रधानभेदात् हेतुनिर्देशस्त्वर्थवाद-मात्रम् ।

ऐन्द्रवायवग्रहे द्विःशेषभक्षणाधिकरणम् ।

सू० ऐन्द्रवायवे तु वचनात्प्रतिकर्मभक्षः स्यात् ॥ ५ ॥

ऐन्द्रवायवे तु किं सकृद्भक्षणं? मुत द्विः? रिति पूर्ववत्सकृदिति प्राप्ते वचनाद् द्विरिति सिद्धान्तः, सति वचने पूर्वपक्षासंभवात्पूर्वाधिकरण एव चोपवर्णनापरिहारार्थं सूत्रं नाधिकरणान्तरम् ।

सोमे शेषभक्षणाधिकरणम् ।

सू० सोमेऽवचनाद्भक्षो न विद्यते ॥ ६ ॥

सोमे च बहवो ग्रहाश्चमसाश्च पुरुषाश्च तत्र संशयः किं न क्वचित्कस्यचिद् भक्षणं? मुत सर्वत्र सर्वेषामविशेषेण भक्षः? उत यस्य यत्र प्रत्यक्षवचनं तस्य तत्र भक्षणम्? अथवा समाख्यावषट्कारहोमाभिषव-प्रत्यक्षवचनैर्भक्ष इति, वार्त्तिके तु सर्वत्र सर्वेषां भक्ष इति पक्षमतिमन्द-त्वादनुपन्यस्य त्रयः पक्षा इत्युक्तं, तदिदमतः प्रभृति होमाभिषवाभ्यां चेत्येवमन्तमेकमधिकरणं तत्र "भक्षणं नास्ति सोमस्य निःशेषं हूयते यतः। शेषे सत्यपि नैवात्र भक्षणं विध्यभावतः" । सोमे हि यद् ग्रहान् स्थापयति चमसं जुहोती'ति वचनात्सौत्रामणीसाङ्गं प्रस्थायीयवच्छेष एव नास्ति कुतो भक्षणम्, अल्पं जुहोतीति वचनमल्पत्वात्सोमपात्राणामनुवादमात्र-मिति मन्यते । यस्त्वग्रबिन्दुनिपातमात्रेण शास्त्रार्थस्य कृतत्वाच्छेषहोम इत्याह तस्य सौत्रामण्यादावपि तथैव स्यादुपांशुयाजे च जौहवस्य शेषः स्यात् । अथ शेषकार्यवशाच्छिष्येत ततस्तेषामपि प्रयोजकत्वाच्छेशनाशदो-षापहारादावपि स्विष्टकृदादावपि हविरन्तरागमः स्यात्, तस्मादशेषत्वाद-भक्षणम् । यद्यपि चाल्पं जुहोतीति वचनस्यानन्यार्थत्वाच्छेषः स्यात्तथाऽपि न भक्षो वचनाभावात् पुरस्तादैन्द्रवायवं भक्षयति वषट्कर्तुः प्रथमभक्षो हवि-र्धानेग्रावभिरभिषुत्याऽऽहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षान्

भक्षयन्ती''त्यादौ सर्वत्र गुणान्तरश्रवणात् तत्परो विधिर्न[1] भक्षं विधत्ते, अथैतस्य हारियोजनस्य सर्वे एव लिप्सन्त इति लिप्सामात्रं श्रुतं न भक्षस्तस्मान्नास्ति भक्ष इति प्रथमपक्षः, शेषप्तावदल्पहोमविधानादस्त्येव तस्य चासति भक्षे विशेषविधान पुरस्तादैन्द्रवायवं भक्षयतीत्यनुपपद्यमानं भक्षं गमयति. तच्च लिङ्गं स्थालीपुलाकवदविशेषेण भक्षं गमयतीति सर्वत्र सर्वेषां भक्ष इति द्वितीयपक्षः । स्यादेतद्यदि विशेषविधिरयत, असत्यां तु भक्षण'प्राप्तौ विशेषविधिर्न घटत इति अयमेव विशिष्टभक्षविधिः, तस्माद्यत्रैन्द्रवायवादौ यस्याध्वर्य्वादेर्भक्षोपदेशस्तत्र तस्य भक्षो नातिप्रसज्यत इति तृतीयः पक्षः, सिद्धान्तस्तु सत्यमेतत् यथोपदेशं भक्ष इति पुरस्तादैन्द्रवायवस्येत्येवमादिभिस्तु भक्षोपदेशो येषु तेष्वेव भक्ष इति न मृष्यामहे कारणान्तरादेव भक्षप्राप्तेः पुरस्तादित्यादेस्तु विशेषमात्रपरत्वात् तच्च कारणान्तरमन्यत्राप्यस्ति, किं पुनः कारणान्तरं समाख्यावषट्कारहोमाभिख्या यथायथं प्रापकाः, हारियोजने तु वचनं तत्र चमसेषु तावत्समाख्यया चमसिनां भक्षः, होतृचमसादिसमाख्या वेदे प्रैतुहोतुश्चमस इति मन्त्रे पठिताः, सोमचमस इति लौकिकी समाख्या चमस इत्येषोऽदनार्थस्य चमेरौणादिकोऽधिकरणसाधनोऽसल्—प्रत्ययः, तस्मादत्र होत्रादिभिश्चमितव्यः सोमरस इति सिद्धश्चमसेषु चमसिनां भक्षः ॥

उद्गातॄणां सह सुब्रह्मण्येन भक्षाधिकरणम् ।

**सू० उद्गातृचमसमेकः श्रुतिसंयोगात् ॥ ७ ॥**

संप्रति वषट्कारादिनिमित्तं भक्षणमनुक्त्वाऽधिकरणमसमाप्यैवान्तरसामाख्याभक्षप्रसङ्गमेवानुसरति, तत्रैव मन्त्रे ''उद्गातॄणां चमस'' इति श्रूयते तत्रोद्गातृचमसमुद्गाता एको भक्षयेत् प्रातिपदिकार्थाविरोधिनोबहुत्वस्य पाशवदन्याय्यकल्पनादिति प्रथमः कल्पः युक्त पाशे बहुत्वस्य प्रकरणेऽत्यन्तासम्भवादिह तु लक्षणयाऽर्थपरत्वे सम्भवति न वचनस्यात्यन्तबाधनं युक्तं

---

१ न लक्षमिति तु पा० ।

२ लक्षणप्राप्तौ इति पा० ।

तस्मादुद्गातृ-शब्द पुरुषान्तरं लक्षयतीति, तत्र चाविशेषात्प्रकरणागतसर्वपु-रुषलक्षणात्सर्वेषां भक्ष इति द्वितीयः. श्रुत्यर्थे सम्भवति न कस्यचिल्लक्षणा युक्ता, गानकारिषु च त्रिष्ववयवयोगेन वर्तमानं प्रातिपदिकं बहुवचनं च द्वयमपि श्रुत्यर्थं भवति तस्मादपसुब्रह्मण्यानां त्रयाणां गानकारिणां छन्दोगानां भक्ष इति तृतीयः पक्षः, नावयवव्युत्पत्त्याऽपि त्रिषु तद्वृत्तिः सम्भवति. न हि गानमात्रमुद्गानं साम्नो हि द्वितीया भक्तिरुत्पूर्वस्य गायतेरभिधेया तां चोद्गातैवैको गायतीति बहुवचनानुपपत्तिः, तस्माल्लक्षणैव न्याय्या सा च न सर्वेषां किं त्वौद्गात्रप्रवचनसम्बन्धावान्तरसामान्यात्ससुब्रह्मण्यानां चतुर्णामपि छन्दोगानाम् अतश्चत्वारोऽपि भक्षयेयुः. नैवं सत्यं लक्षणा सा तु यथाऽवान्तरसामान्याच्चतुर्णामेव न सर्वेषाम् एवमेकस्तोत्रसम्बन्धः सदसि च सन्निधानं भक्षणवेलायां च व्यापृतिरित्येतान्यवान्तरसामान्यानि स्तोत्रकारिणां सन्तीति तेषामेव त्रयाणां लक्षणा न्याय्या।
किं च प्रैतु होतुश्चमस इति यत्र भक्षयितारः स्थिताः तत्र नयनं भक्षार्थं प्रैष्यते सदसि च नयनम्, अतो ये सदसि स्थिताः तान्सर्वान्प्रति नीयत इति गम्यते। न च सुब्रह्मण्यस्तत्र स्थितः न च बहुवचनबलात्तस्य सदसि स्थितिराक्षेप्तुं शक्यते। तेष्वेव स्तोत्रकारिषु तदुपपत्तेः। अतो-यत्केनचिदपनयनादुक्तमपसुब्रह्मण्यवादिनो ऽपन्याय्यवादिन इति तदेवा ऽपन्याय्यम्। अपनीतं चेति कृत्वा प्राज्ञैरुन्मत्तभाषितवदुपेक्षितव्यम्॥

यावत्स्तुतोऽपि सोमभक्षणाधिकरणम्।

सू॰ यावस्तुतो भक्षो न विद्यते ऽनाम्नानात्॥ ८॥

इदमपरं भक्षस्य कारणं यथा चमसमन्यांश्चमसांश्चमसिनो भक्षयन्तीत्युक्त्वाऽथैतस्य हारियोजनस्य सर्वे एव लिप्सन्त" इत्यभिधानाद्वचनामेव लिप्सतिना विधीयते तेनैतद्वचनं हारियोजने भक्षस्य कारणमिति स्थिते चिन्त्यते। किं चमसिनामेवात्र भक्षणम्?। उत सर्वेषामृत्विजा? मिति। यदा चमसिनां तदा यावत्स्तुतः कारणान्तराभावादभक्षणं. सर्वविषयत्वे तु तस्यापि भक्ष इति। तत्र "सन्निधेः सर्वशब्दोऽयं चमसिष्वेव वर्त्तते। तेन

तेषामयं भक्षो ग्रावस्तुचैव भक्षयेत्'' उच्यते सर्व-शब्दोऽयं कृत्स्नार्थवचनो यतः। तेन सर्वेषु वर्त्तेत न सङ्कोचोऽस्य युज्यते। सर्व-शब्दोऽयं समस्तवचनोऽपि परमसर्वेण व्यवहारायोगात्केनचिदवच्छेदं सहते। स चावश्य-प्रकृतयागगत्वेनावच्छित्तव्यः। चमसिनामपि प्रकृतगामिनामेव ग्रहणात्तेन चेद्विशेषितस्तन्मात्रादेव सिद्धेः न भूयश्चमसि-शब्देन यथा चमसम्बन्ध-कृतार्थेन श्रुतेः सङ्कोचो युज्यते। तस्माद्ग्रावस्तुतोऽपि भक्षः ॥

वषट्करणस्य भक्षनिमित्तताऽधिकरणम्।

सू० वषट्काराच्च भक्षयेत् ॥ ९ ॥

इदमपरं कारणं वषट्कारोनाम वषट्कर्त्तुः प्रथमभक्ष इति वचनम्। समाख्याप्राप्तभक्षानुवादेन प्राथम्यमात्रं विधीयते न लक्षणमिति चेत्। न वषट्कर्त्तृविशिष्टभक्षानुवादेन प्राथम्यविधौ विशिष्टानुवाददोषात् प्रथमभक्ष-इति समस्तमिदमेकं पदम्, तस्यैकप्रसरत्वाच्चैकांशेन भक्षणम् उद्दिश्यः, परेण प्राथम्यं विधीयत इति वचनव्यक्तिद्वयं सम्भवति। तस्माद्वषट्कर्त्तुर्भक्षणं प्राथम्यविशिष्टं विधीयत इति वचनव्यक्तिद्वयं सम्भवति। तस्माद्वषट्कर्त्तुर्भक्षणं प्राथम्यविशिष्टं विधीयतइति वषट्कारोऽपि निमित्तम् ॥

होमाभिषवयोरपि भक्षनिमित्तताऽधिकरणम्।

सू० होमाभिषवाभ्यां च ॥ १० ॥

अपरमपि कारणं होमाभिषवौ एवं ह्याह हविर्धाने ग्रावभिरभिषुत्याऽऽहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षान् भक्षयन्ती''ति। अत्र हि हविर्धानेऽभिनिषवः स च ग्रावभिः। प्राचावीचहोमात् होमश्चाहवनीये। ततश्च प्रत्यक्गमनमिति सर्वमिदं वचनान्तरादर्थाच्च प्राप्तं न विधेयम्, अभिषवहोमसमानकर्त्तृत्वं विधीयत इति तयोरपि कारणत्वम् ॥

वषट्कर्त्रादीनां चमसे सोमभक्षाधिकरणम्।

सू० प्रत्यक्षोपदेशाच्चमसानामव्यक्तः शेषे ॥ ११ ॥

इदानीं पूर्वाधिकरणोक्तानां भक्षकारणानां समवाये किं बाधोऽथ समुच्चय? इति चमसेषु हि चमसिनां समाख्यया भक्षणम्। वषट्कर्त्तुर्वषट्कारेण होमाभिषवाभ्याम् अध्वर्योः प्राप्नोति; तत्र समाख्यायाश्चमसैकविषय-

त्वाद्वषट्कारादेर्ग्रहेष्वपि सावकाशत्वात्प्रतिपत्तेश्चैकेनैव लक्षणेन सिद्धेः चमसिनामेव चमसेषु भक्ष इति पूर्वः पक्षः। वाचनिकयोर्वषट्कारहोमाभिषवयोः समाख्यया ऋथायोगात्तस्याश्च निरवकाशत्वेन ताभ्यां बाधासम्भवादवयवशश्च सर्वभक्षेः प्रतिपत्तिसम्भवे ऽन्यतरस्यापि बाधो न युक्त इति समुच्चय एवेति सिद्धान्तः॥

होतुः प्रथमभक्षाधिकरणम्।

**सू० एकपात्रे क्रमादध्वर्युः पूर्वो भक्षयेत्॥ १२॥**

सिद्धे ऽनेकेषां भक्षणे क्रमश्चिन्त्यते। किमध्वर्युः पूर्वं भक्षये? दुत वषट्कर्त्ते? ति तत्राध्वर्युहस्ते पात्रस्यावस्थानात्स तावद्भक्षयेत्। ततो वषट्कर्त्ता चमसिनः पश्चात्। वषट्कर्त्तुः प्रथमभक्ष इति भक्षपरं न प्राथम्यमपि विधत्ते वाक्यभेदात्। अथवाऽध्वर्योः प्राथम्यस्य न्यायतः स्थितत्वाच्च तद्बाधनं युक्तं वषट्कर्तृचमसिनां चानवगतः क्रम आकाङ्क्षित इति तद्विषयमिदं वचनं वषट्कर्त्तुश्चमसिभ्यः प्रथमं भक्ष इति नाध्वर्य्वपेक्षितत्तया, तस्मादध्वर्योः प्रथमभक्ष इति प्राप्ते ब्रूमः। "वचनस्याविशेषेण प्रवृत्तेर्न्यायमात्रेण सङ्कोचायोगाद्विशिष्टविधानाच्च वाक्यभेदाभावात्। "हो ते वनः प्रथमः पाहो"ति मन्त्रवर्णात्कारणभूतस्य वषट्कारस्य च प्राथम्यात्तन्निमित्तलक्षणं प्रथमं कर्त्तव्यम्। ये तु वचनाभावेऽपि कारणप्राथम्यादेव वषट्कर्त्तुः प्रथमं भक्षणं भवतीति प्रतिपादयितुमिदमधिकरणम्। वचनोपन्यासस्तु कृत्वा चिन्तोद्घाटनार्थमित्याहुः। तेषां स्वव्यवहारविरोधः—तार्तीयः क्रमोऽभिधेयो विधेयश्चेति विस्रब्धं व्यवहरन्ति। अत एवासौ तृतीये चिन्त्यते इत्याहुः। अत्रैवाधिकारेण क्रमचिन्ता। वषट्काराच्च भक्षयेदित्यत्र वषट्कारो भक्षनिमित्तमित्युक्तं न क्रमः। स त्विहैव चिन्त्यते। स चेद्वचनमनादृत्य न्यायादेव चिन्त्यते सो ऽप्यनभिधेयः पाञ्चमिकवदविधेयश्च स्यादिति सिद्धान्तहानिः, पञ्चमे वाऽसौ चिन्त्यः स्यात्। प्रसङ्गादिह चिन्त्यते। युष्माकमिवेति चेत्तर्हि ते भैव ब्रूहि विधेयत्वादसौ तृतीये चिन्त्यत इति पञ्चमिकाद्विशेषाभिधानं प्रलापः। किंच यदि वचनादिति सूत्रं कृत्वा चिन्तोद्घाटनार्थं तर्हि तदधिकरणं समाप्य कर्त्तव्यम् इदं तु कारणानुपूर्व्यादिति

सूत्रात्प्रागेव कृतमिति न कृत्वा चिन्तोद्घाटनं युज्यते । यदि न्यायादेव प्राथम्यं लभ्यते ततोऽवचनमेवेदं न्यायानुवादमात्रत्वात्तच्च वचनादिति सूत्रानुपपत्तिः । न च शक्यमिदं न्यायाल्लब्धुं यदा वषट्कारः न तदा भक्षणं कर्त्तव्यम् अहुतस्य भक्षणासंभवाद्धोमे तु कृते तन्निमित्तकमिदमपि भक्षणं तदुपस्थि[१]तमेवेति न विशेषः प्रत्युत वषट्कारनिमित्तमुपस्थानं भ्रष्टं होमनिमित्तं त्वभ्रष्टम् इति तदेव प्रथमं कृत्वा पश्चादन्यत्कर्त्तव्यम् । वक्ष्यति हि सहालम्भे सवनीयमुपाकृत्य पश्चादग्नीषोमीयोपाकरणमिति । तस्माद्वचनादेव प्राथम्यं वषट्कर्त्तुः । अभ्युच्चयमात्रं तु कारणानुपूर्व्यम्

भक्षस्यानुज्ञापूर्वकत्वाधिकरणम् । सू० वचनादनुज्ञातभक्षणम् ॥ १३ ॥

नानुपहूतेन सोमः पात इत्यत्रोपहूतशब्देनानुज्ञानमुच्यत इति दर्शयितुमुत्तरचिन्तार्थं चैतत्सूत्रम् ॥ तदुपहूत उपह्वयस्वेत्यनेनानुज्ञापयेल्लिङ्गात् । अनुज्ञाप्य भक्षयितव्यं वचनादिति स्थितं तल्लौकिकेन शब्देन मन्त्रेण चेति । उपहूत उपह्वयस्वेति लिङ्गवन्मन्त्राम्नानात्तेनैव कर्त्तव्यमिति इदमपि प्राप्तसूत्रमेव ॥

वैदिकवाक्येन प्रतिवचनाधिकरणम् । सू० तच्चार्थात्प्रतिवचनम् ॥ १४ ॥

"उपहूत उपह्वयस्वे"ति मन्त्रः स किं समस्त एवानुज्ञानानुज्ञापनयोः अन्यतरत्र प्रयोक्तव्य इतरत्र लौकिकः शब्दः उत ? उभयत्रापि समस्तः ? किं वा विभज्य यथायथमिति, । तत्रानुज्ञापनपूर्वकत्वादनुज्ञाया मन्त्रांशयोश्च तद्विपरीतत्वाच्च विभज्य विनियोगः । तस्मात्समस्तोऽयमन्यतरत्रोभयत्र वेति प्राप्ते ब्रूमः । लिङ्गेन वाक्यं बाधित्वा विभाग एव मन्त्रयोः । तत्रापि पाठक्रमम् अर्थक्रमेण बाधित्वा पश्चात्पठितोऽप्युपह्वयस्वेति पूर्वभाविन्यनुज्ञापने पाठ्यः । पूर्वपठितोऽप्युपहूत-शब्दः पश्चात्तनाया[२]मनुज्ञायाम् ॥

एकपात्राणामनुज्ञापनाधिकरणम् । सू० तदेकपात्राणां समवायात् ॥ १५ ॥

१ उपस्थितमेवेति पा० ।

२ पश्चात्तनायामनुज्ञायामिति पाठ एव यद्यपि सर्वपुस्तकेषु दृश्यते तथापि पश्चात्तन्यामनुज्ञायामित्येव युक्तः पाठ इति नापरोक्षमपरोक्षपाणिनीयानाम् ।

तदुपह्वानं किं सर्वेषां पुरुषाणामुतैकपात्राणा ? मेवेति । अथ शेषा-
त्सर्वेषाम् इति प्राप्ते ब्रूमः ॥ दृष्टार्थमनुज्ञापनम्यलीकं भागाधिक्यं च मर्ष-
यितुं तच्चैकपात्राणामेवेति तेषामेवानुज्ञापनम् ॥

स्वयं यष्टुर्भक्षास्ति ताऽधिकरणम् ।

सू० याज्यापनयेनापनीतो भक्षः प्रवरवत् ॥ १६ ॥

होतृप्रवचनाम्नातायाज्याः समाख्यया होतुः प्राप्तास्तत्र काश्चि-
द्धोतुरपनीय यजमानस्य विधीयते । तस्यापनीयमानायां किं वषट्कार-
स्तदपनीयते ? उत नो होतर्येवावतिष्ठते याज्यामात्रं त्वपनीयत इति
संशयः । तत्र । यजमानस्य याज्येति याज्यापनयचोदना । वषट्कारस्तु
याज्यातो भिन्नत्वान्नापनीयते । याज्याया अधिवषट्करोतीति याज्यातो
वषट्कारस्य भिन्नत्वाच्च तदपनयने ऽपनयः । यद्यपि स्वयं वा निषद्य यज-
तीति यष्टृत्वं यजमानस्योक्तं तदपि याज्यामात्रप्रयोगादेवोपपन्नम् अत-
स्तेन प्रयुक्तायाः याज्याया अधिहोमे नैव वषट्कुर्यात्तन्निमित्तश्च भक्षस्तस्यै-
वेति । प्राप्ते ब्रूमः । यष्टृत्वं यजमानस्य प्रत्यक्षवचनाच्छ्रुतम् । परिपूर्णं च
यष्टृत्वं वषट्कारेण जायते । याज्यामात्रप्रयोगे तु न्यू तच्चनं न युज्यते ।
अनवानं च यष्टव्यं याज्यामात्रं ब्रुवन्नसौ । अवात्याद्यजमानो ऽतो वषट्-
कुर्यात्स एव नः । भक्षोऽपि यजमानस्य वषट्कारनिमित्तकः ॥

फलचमसस्य इज्याविका-रताऽधिकरणम् ।

सू० फलचमसो नैमित्तिको भक्षविका-
रः श्रुतिसंयोगात् ॥ १७ ॥

"यदि राजन्यं वैश्यं वा याजयेत्स यदि सोमं बिभक्षयिषेच्यग्रोधस्ति-
भिनीराहृत्य ताः संपिष्य दधन्युन्मृज्य तमस्मै भक्षं प्रयच्छेन्न सोममिति राज-
न्यवैश्यनिमित्तेन सोमविकारः फलचमसः अतः स किं भक्षमात्रे सोमं
विकुर्या ? दुत याज्याया ? मिति संशयः । तत्र बिभक्षयिषेदित्युपक्रमाद्भक्षं प्रय-
च्छेदिति चोपसंहारात्तत्रैव विकारो नेज्यायामश्रवणादेवं प्राप्ते ब्रूमः । यागा-
र्थद्रव्यसंस्काररूपभक्षणसङ्गतेः । स्तिभिर्नो चमसो यागे द्रव्यमित्यभिधीयते ।
यदि सोमं बिभक्षयिषेदिति सोमभक्षमनु[1]त्कीर्त्य तत्र फलचमसो निभिप्यते

१ अनुकीर्त्येतितु पा० ।

प्रकरणाच्च सोमभक्षो न लक्षान्तरम् । स च यागद्रव्यसंस्कारत्वेन निर्ज्ञात-स्तत्सम्बन्धित्वेन च श्रूयमाणः फलमसोऽन्यथा तत्सम्बन्धायोगाद्यजमान-चमसयागाभ्याससाधनत्वं प्रतिपद्यते । तदेवं भक्षसम्बन्धकथनव्याजेन तद्द्वाराऽवगतयागसम्बन्धित्वेन विधीयते । तद्विधौ च भक्षसम्बन्धः प्राप्त एवानूद्यते तस्मादिज्याविकारत्वम् । एतेनाभिषवयुक्तपूतीकानां याग-साधनत्वं व्याख्यातम् ॥

ब्राह्मणानामेव राजन्यच-मसानुप्रसर्पणाधिकरणम् ।

सू० अनुप्रसर्पिषु सामान्यात् ॥ १८ ॥

राजसूये दशपेयः सोमविकारः तत्र राज्ञोऽधिकारः । ज्योतिष्टो-माच्च तत्र दश चमसाः प्राप्ताः । तेषु यजमानचमसस्य यज्ञा लक्षणं प्राप्तं तत्रेदं श्रूयते 'दश दशैकैकं चमसमनुप्रसर्प्येयुः । शतं ब्राह्मणाः सोमान्भक्ष-यन्ती"ति तत्र संशयः । किं यजमानचमसं राजन्या दश भक्षयेयुः? उत ब्राह्मणा? इति, तदर्थं च किं दश दशेति विधिः, शतं ब्राह्मणा इत्यनुवादः? । उतायमपि विधि? रिति । तत्रानुप्रसर्प्येयुरिति विधिश्रवणात्प्रति चमसं दश-संख्या विधीयते । तथा संख्यामात्रं प्राकृतं निवर्त्तते, जातिस्तु प्राकृतैवा[2]व तिष्ठते तत्रारुणैकहायनीन्यायेन जातिसंख्ययोर्मिथो नियमे सति ब्राह्मण-चमसेषु ब्राह्मणाः दश राजन्यचमसेषु राजन्या दश भवन्तीति शतं ब्राह्मणा-भक्षयन्तीति वर्त्तमानापदेशात्प्रचर्याशिष्टशतसंख्यानुवादः । भूम्ना च ब्राह्म-णा ब्राह्मणेषु ब्राह्मण-शब्दः । अनुवादाच्च लक्षणाऽपि न दुष्यति । तस्माद्य-जमानचमसं राजानो दश भक्षयेयुरिति । "उच्यते विधिरेवायमर्थत्वात् श्रुते-स्तथा । अन्यथा वचनं व्यर्थं लक्षणा च प्रसज्यते ॥ न हि कृत्स्नानुवादस्य किंचिदस्ति प्रयोजनम् । सम्भवन्त्यां श्रुतौ नैव लक्षणा ऽप्युपयुज्यते । तस्मा-च्छतानुवादेन ब्राह्मण्यमिह चोद्यते । तत्र च न्यायतः प्राप्ता राजजाति-र्निवर्त्तते । स्यात्पञ्चमलकारेण विधिश्च समिदादिवत् । ब्राह्मणानामतो भक्षोराजन्यचमसे स्थितः ॥

इति शास्त्रदीपिकायां तृतीयस्याध्यायस्य पञ्चमः पादः ॥ ५ ॥

---

१ स्तिभिनी-मुकुलमुच्यते ।
२ प्राकृत्येवावतिष्ठत इति युक्तः पाठः ।

## अथ तृतीयेऽध्याये षष्ठः पाद आरभ्यते ।

अथ सत्रादिषु खादिरतादिविधेः प्रकृतिगामिताऽधिकरणम् ।

**सू॰ सर्वार्थमप्रकरणात् ॥ १ ॥**

अनारभ्य विद्यानप्रस्तावागतं शेषविषयं विचारं समाप्येदानीं तमेवानारभ्यवादमनुसंधत्ते । "यस्य खादिरः स्रुवो भवति यस्य पर्णमयी जुहूर्भवतीत्यनारभ्य जुह्वाद्युद्देशेन विधीयमानाः पर्णतादयो जुह्वादीनां क्रत्वव्यभिचारात्तद्द्वारेण क्रत्वर्थता इति स्थिते चिन्त्यते । किं प्रकृतिविकृतिसाधारणं विधानम् ? उत प्रकृतावेवेति । तत्र "जुह्वादिप्राप्तिमात्रं हि पर्णतादेरपेक्षितम् । या चौपदेशिकी प्राप्तिः प्राप्तिर्या चातिदेशिकी । सर्वा सा प्राप्तिरूपेण तुल्या तदनुवादतः । विधीयमानं पर्णत्वं सर्वार्थमिति गम्यते । ननु येनातिदेशेन विकृतौ प्राप्यते ऽनुहूः । तेनैव पर्णताऽपीति व्यर्थं तदुपदेशनम् । नैवं प्रत्यक्षसिद्धत्वात्पर्णत्वं नानुमानतः । चोदकात्प्राप्यते तस्मात्सर्वथा पर्णतादयः ॥ नैवं द्विरुक्तिदोषः स्यात्प्राप्तस्य हि पुनर्विधेः । पृथक्त्वेन पदार्थानां भवच्चेच्चोदकस्ततः । तद्वच्च[1] युज्यते प्राप्तिः प्रकारस्त्वतिदिश्यते । पदार्थानां खलु प्राप्तिस्तद्विशेषणभावतः । समुच्चिताश्च ते सर्वे प्रकृतौ तद्विशेषणाम् । तेन यावज्जुहूप्राप्तिर्विकृतौ तावत्येव च प्राप्तैव पर्णताऽपीति व्यर्थस्तस्य पुनर्विधः । अवश्यं च जुहूप्राप्तिः प्रतीक्ष्या पर्णताविधेः । तया सहैव पर्णत्वं प्राप्तं न तु विधीयते प्रकृतावेव पर्णत्वविधिस्तेन व्यवस्थितः ॥

सामिधेनीनां सप्तदशसंख्याया विकृतिगामिताऽधिकरणम् ।

**सू॰ प्रकरणविशेषात् तु विकृतौ विरोधि[2] स्यात् ॥ २ ॥**

सप्तदश सामिधेनीरनुब्रूयादित्यनारभ्य श्रुतं साप्तदश्यं किं प्रकृतावुत विकृताविति संशयः, तदर्थं च किं प्राकरणिकेन पाञ्चदश्येन तुल्य

---

१ तद्वज्जयुज्यते इति पा॰ ।

२ विरोधित्वादिति तु पा॰ ।

बल? मुत ततो दुर्बल-मिति तत्र द्वयोरपि वाक्यसंयोगाविशेषात्तुल्यबलतां मन्यते, न च प्रकरणे न कश्चिद्विशेषः "वाक्यात्तुल्यं यस्मात्तस्मात्प्रकृतिगामिता । पूर्ववत्साप्तदश्यस्य तथा, प्राप्ते ऽभिधीयते ॥ सामिधेनीस्वरूपेण संबन्धो वाक्यतो भवेत् । तन्मात्रसङ्गते चैते संख्ये स्यातामनर्थिके । अपूर्वसाधनत्वांशे लक्षिते सङ्गतिर्भवेत् तल्लक्षणावबोधश्च शीघ्रं प्रकरणाद् भवेत् ॥ प्रकरणे विधीयमानस्य सर्वस्य प्रकृतापूर्वसाधनत्वं स्वरसत इति पाञ्चदश्यमपि तत्रैव विधीयमानं तादर्थ्येन विधातव्यमिति गम्यते तादर्थ्यं च तत्साधनरूपसंबन्धे घटते न सामीधेनीस्वरूपसबन्ध इति स्वरूपातिक्रमेण साधनरूपलक्षणा तत्र लभ्यते, साप्तदश्यस्य तु रूपमात्रं गम्यते नापूर्वार्थत्वं, स्वरूपस्य च सामिधेनीस्वरूपेणापि संबन्धो घटत इति नान्वयोपपत्तये लक्षणा, किं तु विधीयमानस्य साप्तदश्यस्यानर्थक्यपरिहाराय प्रतिपन्नक्रतुसंबन्धसामिधेनीलिङ्गवशादविपरिवर्तमानमेव क्रत्वपूर्वं कथंचित् हृदयमागमय्य तादर्थ्यसिद्ध्यर्थं तत्साधनलक्षणाऽऽश्रयणीयेति क्रतुसंबन्धविप्रकर्षाद्दौर्बल्यम् । अतः पूर्वनिविष्टपाञ्चदश्यावरुद्धत्वात्तेनैव निराकाङ्क्षां प्रकृतिमलभमानं साप्तदश्यं विकृतिषु निवेक्ष्यते, तत्रापि न सर्वासु किं तु श्रुतसप्तदश्यासु मित्रविन्दादिष्वेवेति दशमे वक्ष्यते ॥

गोदोहनादीनां प्रकृतिगामिताऽधिकरणम् ।

सू॰ नैमित्तिकं तु प्रकृतौ तद्विकारः संयोगाविशेषात् ॥ ३ ॥

सप्तदश वैश्यस्येति यदि वै[1]श्यनिमित्तेन नैमित्तिकं साप्तदश्यं विधीयते तत्प्रकृतौ वा स्यादुत विकृताविति प्रकृतेः पाञ्चदश्यावरोधात्पूर्ववद्विकृतिषूत्कर्षे द्वयोर्वा प्रकरणाधीतत्वात्क्रत्वर्थत्वाच्च विकल्पे प्राप्ते ऽभिधीयते, नैमित्तिकं प्रकृतावेव नित्यं पाञ्चदश्यं विकृत्य निविशते तुल्यप्रकरणत्वात्तत्रोत्कर्षं तावदृच्छति "प्रकृतौ निविशेतास्तत्रापि न विकल्प्यते । पाञ्चदश्येन किं त्वस्य बाधकत्वेन वर्त्तते

१ यद्वैश्यनिमित्तेनेति पा॰ ।

नित्यं सामान्यतः पूर्वं सावकाशं विधीयते। नैमित्तिकं विशेषेण पश्चाच्चिरव-काशकम्। नैमित्तिकमतो हेतुत्रयान्नित्यस्य बाधकम्॥ सामान्येन हि सर्वप्रयोगाणां पाञ्चदश्यं तद्भावल्लक्षया वैश्यकर्तृकं प्रयोगं नास्कन्दति तावत्तत्रैव साक्षाद्विधीयमानं साप्तदश्यं बलवद्भवति तथा पूर्वमेव क्रतोः स्वाभाविकं नित्यं विधीयते तेन तदसंजातप्रतिपक्षत्वाच्च कस्यचिद्बाधकतयावगम्यते, नैमित्तिकं तु निमित्तसंयोगेन विधीयमानं विशेषणतया पश्चात्तनं भवति, ततश्च तदुत्पन्नप्रतिपक्षविज्ञानात्रस्यौत्पत्तिकत्वात्तद्बाधेनात्मानं नालं लब्धुं, लब्धव्यश्च तेनात्मा प्रत्यक्षवचनात्, अतः पूर्वगुणबाधकतयैवात्मानं लभते, सावकाशं च नित्यं विप्र—राजकर्तृके प्रयोगे, अतो न तेनावश्यं नैमित्तिकविषये निवेष्टव्यं नैमित्तिकमनवकाशं नित्याबाधेन न शक्यते विधातुं, विधीयते च तदिति बाधकत्वम्। एतेन काम्यस्यापि गोदोहनादेर्गुणस्य नित्यचमसादिबाधकत्वं व्याख्यातं, पूर्वपक्षस्तु नैमित्तिकेऽतिमन्द इति कृत्वा भाष्यकारः सूत्रितमपि नैमित्तिकमतिक्रम्य तुल्यन्यायं काम्यमुदाजहार। काम्यस्य हि क्रत्वर्थत्वाभावात्क्रत्वर्थश्चमसस्ततोभिन्नविषयत्वान्न तेन बाधितुं शक्यते, तद्बाधे च क्रतोर्वैगुण्यात्फलं न स्यात् विगुणक्रत्वाश्रितादपि गुणात्तन्न स्यात् यो हि मधुन्येव दत्तदृष्टिर्दुर्बलां शाखामधिरोहति तस्य विनिपात एव भवति तद्वदिहापि "मधुदृष्टिवदेवास्य गुणकामं प्रपश्यतः। क्रियाफलविनाशात्मा विनिपातः प्रसज्यते" तस्माच्च प्रकृतौ निवेशः सम्भवतीति विकृतिरेव गतिः। अथवा क्रतवे चमसेन प्रणीय पुनः पशुकामाय दोहनेन प्रणेतव्यं न तु बाधसम्भवः क्रतुवैगुण्यादिति भवत्येवाधिकाऽऽशङ्का तन्निराकरणाय काम्योदाहरणं, निराकरणहेतवश्च नैमित्तिकवच्चयोऽपि अत्रानुसंधेयाः "आसन्नपुरुषार्थत्वमपरं चापि कारणं येन काम्यं बलीयः स्यान्नित्यान्नैमित्तिकादपि पुरुषार्थप्रयुक्ता हि सर्वस्य प्रवृत्तिः, काम्यं च फलप्रत्यासन्नं शीघ्रं प्रयुज्यते गोदोहनं क्रत्वर्थस्तु चमसश्चिरेणेति दुर्बलः, अनेनैव च हेतुना नैमित्तिकादपि क्रत्वर्थात्साप्तदश्यात्पुरुषार्थस्यैकविंशत्याद्यनुवचनस्य बलीयस्त्वं भवतीति तस्मात्तेन साप्तदश्यं पाञ्चदश्यं च द्वयमपि बाध्यते सत्यपि भिन्नविष-

यत्वे प्रणयनादिद्वारतुल्यतयाऽस्ति विरोधः, ततश्च क्रत्वर्थस्य तस्मिन्प्रयोगे बाधः प्रयोगान्तरे त्वसाववस्थाप्यते, सामान्येन हि स श्रुतः पशुकामप्रणयनप्रयोगे तु वाक्यान्तरगतश्चसमः सन्निधिमात्रेण सम्बध्यते गोदोहनं तु तत्रैव वाक्ये श्रुतमिति बलीयः, तदुक्तं "पशुकामप्रयोगे तु क्रमेण चमसाङ्गता । श्रौताद्गोदोहनात्तत्र चमसस्य निराक्रिये"ति बाधितत्वादेव न तदानीं चमसादेरङ्गत्वमवघातादेरिव कृष्णलादौ, अतस्तल्लोपेऽपि नास्ति वैगुण्यं येन क्रियाफलविनाशस्तद्भयाच्च प्रणयनाभ्यासः स्यात् "गुणहानिर्हि वैगुण्यं न चास्य गुणता तदा । गोदोहनं च न गुणः क्रतोः कामाय चोदनात् । किं तु प्रणयनं द्रव्यहीनमङ्गं क्रतोस्तदा काम्यनैमित्तिके तस्मात्प्रकृतौ नित्यबाधके" ॥

आधानस्य पवमानेष्ट्यङ्गताऽधिकरणम् । सू० इष्ट्यर्थमग्न्याधेयं प्रकरणात् ॥ ४ ॥

आधानं पवमानेष्टयश्च मिथः सन्निहिताः समाम्नाताः, तत्र किमाधानमिष्ट्यङ्गमुत नेति तत्र प्रकरणादङ्गत्वम् । ननु फलवत्सन्निधावफलं तदङ्गं न चेष्टयः फलवत्य आधानं सफलमग्निनिष्पादकतयाऽतो न विपरीतमङ्गाङ्गित्वं, सत्यमेवं पूर्वपक्षवादी मन्यते अनयोऽतिदेशेनेष्ट्यङ्गम् आधानं चाग्निसंस्कारकमवगम्यमानं प्रकरणादिष्ट्यङ्गभूताग्नीनां संस्कारकमवगम्यमानं प्रकरणादिष्ट्यङ्गभूताग्निसंस्कारकतयाऽवघातादिवदिष्ट्यर्थम्, इष्टीनां तु विश्वजिदादिन्यायेन फलकल्पना भविष्यतीति, सिद्धान्तस्तु फलवदग्निहोत्राद्यर्थत्वादग्नयः फलवन्तः तदर्थं चाधानं श्रुतिसंयोगात्, इष्टयोऽपि प्राकरणिकेन वाक्येन फलवदग्न्यङ्गं प्रकरणाद्वाऽऽधानस्यैव फलवतोऽङ्गं विज्ञायमाना न कल्प्यफला भवितुमर्हन्ति विनैव कल्पनया सर्वेषामर्थवत्त्वात् । यत्त्वातिदेशिकमग्नीनामिष्ट्यङ्गत्वं तदौपदेशिकेनेष्टीनामग्न्यङ्गत्वेनाधानाङ्गत्वेन वा विरुध्यमानं बाध्यत इति वक्ष्यते, तस्मान्नेष्ट्यर्थमाधानम्, अनारभ्यवादप्रस्तावादाधानवाक्यस्यानारभ्यवादत्वमेवावस्थितम् ।

आधानस्य सर्वार्थताऽधिकरणम् । सू० तत्प्रकृत्यर्थं यथाऽन्येऽनारभ्यवादाः ॥ ५ ॥

स्थितेऽनारभ्यवादत्वे संप्रत्येतद्विचार्यते, "किमाधानं—प्रकृत्यर्थमग्निमात्रार्थमेव वा। तत्र मर्णमयीन्यायात्प्राप्ता प्रकृतिगामिता ॥ उच्यते श्रुतिसंयोगादाधानस्याग्निशेषता। प्रसिद्धक्रतुशेषत्वं प्रकृतावुपदिश्यते। पर्णत्वमन्यथा दोषोद्धिरुक्तिः स्यादितीह तु। न कस्य चित्क्रतोरङ्गमिदं श्रुत्याद्यभावतः वाक्यं लक्षणया स्याच्चेत्रानाम्न्यङ्गत्वोपपत्तितः॥ स्यादेतत् यथाऽनारभ्याधीतमपि पर्णमयीत्वं जुहूस्वरूपपरत्वे सत्यानर्थक्यात्क्रतुसाधनांशे लक्षणया विधीयमानं वाक्यादेव क्रत्वर्थं भवति एवमाधानमपीति, मैवं जुह्वादयो ह्याकृतिविशेषाः विनापि पर्णमयीत्वेन तदाकारसम्भवात्तत्स्वरूपार्थत्वे विध्यानर्थक्याद्युक्ता तत्र साधनांशलक्षणा, इह त्वाहवनीयादिस्वरूपस्यादृष्टत्वाच्छ्रुत्यवगततत्स्वरूपार्थत्वेऽपि विध्यानर्थक्याभावाच साधनांशलक्षणाया क्रत्वर्थत्वं युक्तमिति विशेषः। एतेन पवमानेष्टीनामप्यकर्मार्थत्वं व्याख्यातम्।

पवमानेष्टीनामसंस्कृतेऽग्नौ कर्तव्यताधिकरणम्।

सू० तासामग्निः प्रकृतितः प्रयाजवत् ॥ ६ ॥

प्रासङ्गिकमिदं पवमानेष्टिषु किं पवमानेष्टयः कर्तव्या? नेति "तत्र प्रकृतितस्तासु पवमानेष्टिसंस्कृतः। प्राप्नोत्यग्निस्तदर्थंन कार्यास्तास्विष्टयोऽपि ताः॥ ननु यास्तदर्थास्तासामप्यन्याः कार्यास्तासामप्यन्या इत्यनवस्थापत्तिः स्यात्, "उच्यते नैष दोषोऽस्ति सामर्थ्येन व्यवस्थितेः। यावतीः शक्नुयात्कर्तुं तस्मिन्नहनि तावतीः॥ कुर्वतो नाव्यवस्था स्यादिति प्राप्तेऽभिधीयते। न तावदतिदेशेन प्राप्तिस्तासामनङ्गतः। न हि ताः प्रकृतेरङ्गमिति प्रागेव दर्शितम्। प्रकृतिचोदनायां यत्कथंभावेन सङ्गतं तदेव चोदना लिङ्गाद्विकृतावतिदिश्यते[1]॥ चोदकेन ततस्तासां तासु प्राप्तिर्न विद्यते। अङ्गत्वे सत्यपि त्वासां नातिदेशोऽवकल्पते विधीयन्ते यदा ता न प्रकृतौ सन्ति तास्तदा। यदा हि पवमानेष्टयो विधीयमानाः कथंभावापेक्षिण्यः प्रकृतिमालोचयन्ति तदा प्रकृतेस्तच्छून्यत्वाच्च ततस्ताः शक्यन्ते ग्रहीतुमिति तदतिरिक्तामेवेतिकर्तव्यतां गृहीत्वा संतुष्टाः पवमानेष्टयो न पुन

१ अतिदेश्यते इति पा०।

रात्मानमपि गृह्णन्ति । यत्तूक्तमग्निप्राप्तेरर्थैतस्तासामपि प्राप्तिरिति अत्रो-
च्यते, सत्यं, प्राप्यन्तेऽग्नयस्ते त्वसंभवाद्बाध्यन्ते ते हीष्टीनां साधनभूताः
कथमिव तासां साधनीभवेयुः । नन्वत एवाग्न्यर्थमन्याः क्रियन्ते तत्साधितै-
श्चाग्निभिरन्या इष्टयः करिष्यन्ते इत्युक्तं, न सर्वथा तावत्प्रथमङ्काश्चि-
दिष्टयोऽग्निष्वेव कर्तव्याः ताभिश्च किमग्नयो जायन्ते न वा? यदि
नेत्याह किमर्थं ताः क्रियन्ते । अथ जायन्ते सिद्धेऽर्थे नान्याः कर्तव्याः अग्न्य-
र्थमेव हि ताः क्रियन्ते नैव[1] सिद्धा इति नान्याभिः प्रयोजनं, तस्माच्च पव-
मानेष्टिषु पवमानेष्टयः कर्तव्याः ॥

उपाकरणादीनामग्नी-
षोमीयधर्मताऽधिकरणम् ।

**सू॰ तुल्यः सर्वेषां पशुविधिः प्रकरणा-
विशेषात ॥ ७ ॥**

एवं प्रकरणस्य पूर्वैः सह विरोधविचारं सप्रासङ्गिकं समाप्या-
धुना स्थानस्य पूर्वैः सह विरोधाविरोधौ विचार्येते, पादाद्येन प्रकृति-
विकृतीनां समानासमानविधानत्वं विचारितम्, अत्रापि तदेवानुवर्तते
ज्योतिष्टोमे त्रयः पशवः तत्राग्नीषोमीयः क्रयसन्निधावुत्पन्नो वचनादौ-
पवसथ्येऽहन्यनुष्ठीयते, तस्मिन्नेवाहनि सवनीयाम्नानमाग्नेयः पशुरग्नि-
ष्टोम इत्यादि, तत्रैव पशुधर्मा यूपच्छेदादयः पठिताः, सौत्येऽहनि पुनः
सवनीयाम्नानम् आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयं
पशुमुपाकरोतीति, अनुबन्ध्यस्त्ववभृथान्ते समाम्नातः, तदिह विचार्यते किमे-
ते धर्मास्त्रयाणामपि पशूनां साधारण्येन विधीयन्ते? किं वा सवनीयस्यैव?
अथाग्नीषोमीयसवनीययो? उताग्नीषोमीयस्य? वेति तदर्थं च किमग्नीषोमी-
यस्य स्थानं ज्योतिष्टोमिकेन प्रकरणेन सवनीयावान्तरप्रकरणेन वा विरुध्यते?
नेति तत्सिद्ध्यर्थं च किं सवनीयानामौपवसथ्येऽह्नि प्रकरणमस्ति? नास्तीति
चिन्तनीयं, ततोऽप्येतद्विवेक्तव्यं किमौपवसथ्येऽह्नि सवनीयोत्पत्ति? उत
सौत्येऽहनीति तत्र प्रकरणाज्ज्योतिष्टोमगृहीता धर्मास्तदङ्गेषु पशुषु विज्ञाय-

१ ते च सिद्धा इति पा॰ ।

मातास्तत्प्रकरणाविशेषात्सर्वार्था भवन्ति, ज्योतिष्टोमद्वारेण हि पशूनां धर्मविधौ प्रकरणं न स्वतः कस्यचित्प्रकरणम् अग्नीषोमीयस्यापि स्थानमात्रं, तच्च प्रकरणाद्दुर्बलं सवनीयस्यापि सुत्यायामुत्पत्तिरिति तत्र गुणार्थं श्रवणमिति नास्त्येव विशेषतः प्रकरणम्, अनुबन्ध्यस्य त्वनाशङ्कनीयमेव। तस्मात्सर्वार्थाः। स्यादेवमविशिष्टं प्रकरणं यदि ज्योतिष्टोमद्वारं स्यात् सवनीयस्य तु स्वत एव विशेषतोऽवान्तरप्रकरणमस्ति सौत्येऽहन्याश्विनग्रहणोत्तरकालं गुणार्थं श्रवणम् औपवसथ्येऽहनि गुणाभावात्सवनीयानामुत्पत्तिः, अतः प्रकरणात्तदर्थाः। ये त्ववान्तरप्रकरणं नेच्छन्ति तेषां सूत्रभाष्यविरोधः। यच्चानिष्टप्रसञ्जनं समिदादिषु सौमिकधर्मप्राप्तिरिति तत्पितृयज्ञे साधिकारेऽपि तुल्यम् अथ तस्य तस्मात्पितृभ्यः पूर्वेद्युः क्रियत इति देवताविधेर्नाव्यक्तत्वं समिदादिष्वपि मन्त्रवर्णाद्देवताविधिरुपांशुयाजवदस्त्येव मा प्रापत्सौमिकधर्माः दार्शपौर्णमासिकधर्मास्तु प्राप्नुयुः वैमृधवदिति चेत् इदमपि पितृयज्ञे तुल्यम्। अथ तत्र द्रव्यदेवतादिसंनिपातिपौष्कल्यान्नातिदेशस्तत्समिदादिष्वपि तुल्यमिति दर्शितं प्रकरणाधिकरणे, तस्मादस्त्यवान्तरप्रकरणम् यदि चैतन्नेष्यते ततः स्थानादेव सवनीयार्थता वक्तव्या स्यात्तच्चाग्नीषोमीयस्याप्यविशिष्टमिति केवलसवनीयार्थत्वपक्षो ऽत्यन्तं निर्मूलः स्यात्। ननु तवाप्युभयार्थत्वपक्षो निर्मूलः, यथा न निर्मूलस्तथा वक्ष्यामः, तस्मात्सवनीयार्था इति द्वितीयः पक्षः, गृह्णीम एतत्सवनीयार्था इति स्थानादग्निषोमीयार्था अपि भवेयुः। ननु प्रकरणात्स्थानं दुर्बलं तत्कथं ततः स्थानात् अग्नीषोमीयशेषत्वं धर्माणां स्यात्तदुच्यते यद्यपि प्राकरणिकेन सवनीयार्थत्वेन धर्मा निराकाङ्क्षास्तथाऽप्यग्नीषोमीयस्य पशुधर्मापेक्षित्वात्तेनापि सम्बध्यते यथोपदेशावगतप्रकृत्यङ्गभावा धर्मा दुर्बलेनाऽप्यतिदेशेन विकृतेरपि भवन्ति एवमेतेऽप्युभयार्था इति प्राप्ते ब्रूमः 'अग्नीषोमीयशेषत्वं यदुक्तं सत्यमेव तत्। सवनीयार्थतां तेषामवजानीमहे कुतः॥ सवनीयस्य धर्मेषु नास्ति प्रकरणं यतः। न खल्वौपवसथ्येऽह्नि सवनीयो विधीयते। यतः प्रकरणं तत्र सवनीयस्य लभ्यते प्रचारविप्रकर्षाख्यगुणस्य तु विधित्सया। कीर्त्यते सवनीयोऽत्र सौत्ये त्वेष विधीयते। कर्मणश्च विधिर्यावत्तत्र प्रकरणं भवेत्। न तु

यत्र गुणार्थेन श्रवणं तत्र विद्यते । तस्माच सवनीयस्य प्रक्रिया गुणसन्निधौ यस्त्वौपवसथ्यवाक्ये गुणो नास्तीत्युक्तम्, अस्ति प्रचारविप्रकर्षः आग्नेयः पशुरित्याद्यनुकीर्त्य यथा वै मत्स्य इत्यादिना निन्दित्वा तत्परिहाररूपेण वपया प्रातः सवने चरन्तीत्यादिना प्रचारविप्रकर्षो विधीयते, शक्यते च सौत्येऽप्युत्पन्नं कर्मानूद्य प्रचारविप्रकर्षो विधातुमुपादेयत्वात्, सुत्यावाक्ये तु कालो गुणः, न चासावनुपादेयत्वादौपवसथ्योत्पन्नदूरस्थाविपरिवर्तमानकर्मानुवादेन विधातुं शक्यत इति तत्र तावत्कर्मोत्पत्तिर्विधातव्या । नन्वौपववसथ्येऽप्युत्पन्नं कर्मप्रचारोत्कर्षादुत्कृष्टं प्रातःसवने विपरिवर्तेत इति शक्यत एव कालविधिः, नैवं ये हि वपाप्रचारात्प्रत्यञ्चः पदार्थास्तेषामेव तदा दिवाभिसम्बन्धादिति न्यायेनोत्कर्षः स्यात्, अपूर्वत्वाद्वा तेषामपि न स्यात्, उपाकरणादीनां तु प्राचां पदार्थानां नास्त्येवोत्कर्षः, तस्मादुपाकरणस्य प्रातःसवने विपरिवृत्त्यभावाच तस्य कालविधिः सम्भवतीत्युत्पत्तिविधिरेवायम् इतरस्तु गुणविधिरिति प्रकरणाभावान्न सवनीयार्थत्वं स्थानात् त्वग्नीषोमीयार्थत्वम् । यत्तु महाप्रकरणेन स्थानं बाधित्वा ज्योतिष्टोमगृहीताः सर्वपशूनामित्युक्तं, तत्रोच्यते पशुधर्मा हि पशुयागमाकाङ्क्षन्ति, ज्योतिष्टोमस्तु सोमयागो न पशुधर्मान् गृह्णाति यदि न कश्चिदपि पशुधर्मान् ग्रहीतुं शक्नुयात् ततो गत्यभावाज्ज्योतिष्टोमगृहीताः सन्तस्तत्रानर्थक्यात् तदङ्गेष्ववतरेयुः, शक्नोति च स्थानादग्नीषोमीयो ग्रहीतुमिति तदर्था धर्माः न सर्वेषाममी, नापि सवनीयस्य, नोभयोः, अग्नीषोमीय एवातो विधेर्धर्मा व्यवस्थिताः अन्यत्र त्वतिदेशेन गच्छन्ति न विधानतः। विधिस्तु दैव एवेति सूत्रे विधिरुदाहृतः ॥

शाखाहरणादीनामुभयदोहधर्मताऽधिकरणम् ।

सू० दोहयोः कालभेदादसंयुक्तं शृतं स्यात् ॥ ८ ॥

दर्शपूर्णमासयोः सायं दोहः पूर्वेद्युः प्रातर्दोहश्चापरेद्युः दोहधर्माः शाखाहरणादयः पूर्वेद्युः क्रियन्ते ते किं सायं दोहार्थाः ? उतोभयार्थाः ? इति सन्देहे पूर्ववदनुष्ठानसादेश्यादवान्तरप्रकरणाद्वा सायं दोहार्था इति प्राप्ते

ऽभिधीयते प्रकरणाविशेषादुभयार्थाः, न हि स्थानं प्रकरणस्येष्टे, न च दधियागस्यावान्तरं प्रकरणमत्रास्ति, न च स्थानमपि प्रधानस्य विद्यते तस्यापरेद्युरेवानुष्ठानात्, दधिसिध्यर्थास्तु केचिद्धर्माः पूर्वेद्युः क्रियन्ते, न च तदर्थाः शाखाहरणादयः प्रधानार्थत्वात्, तस्मादुभयार्थो दोहधर्माः।

सादनादीनां सवनत्रयधर्मताऽधिकरणम्। सू० तद्वत्सवनान्तरे ग्रहाम्नानम् ॥ ९ ॥

ज्योतिष्टोमे प्रातःसवनसंनिधौ ग्रहधर्माः समाम्नाताः "उपोप्तेऽन्ये ग्रहाः साद्यन्तेऽनुपोप्ते ध्रुव" इत्यादयः ते किं प्रातःसवनिकग्रहार्था उत प्राकरणिकसर्वग्रहार्था? इति विचारः पूर्वत्र स्थानमपि नास्तीत्युक्तम् इह त्वसन्दिग्धं स्थानमिति विशेषाशङ्का प्रकरणाविशेषात्तु सर्वार्था इति सिद्धान्तः।

रशनात्रिवृत्त्वादीनां सर्वपशुधर्मताऽधिकरणम्। सू० रशना च लिङ्गदर्शनात् ॥ १० ॥

अग्नीषोमीये यूपपरिव्याणं विहितं परिव्ययत्यूर्ग्वै रशनेति सवनीये पुनः परिव्याणान्तरं विहितम्, आश्विनं ग्रहं गृहीत्वोपनिष्क्रम्य यूपम्परिव्ययतीति, परिव्याणसाधनभूता रशनातद्धर्माश्चाग्नीषोमीयक्रमे विहिताः त्रिवृद्भवति दर्भमयी भवति प्रपिष्ठानां कर्तव्येत्यादयस्ते किमग्नीषोमीयपरिव्याणार्था? उत सवनीयपरिव्याणार्था? अपीति संशयः, तत्र क्रमादग्नीषोमीयार्था इति प्राप्ते ब्रूमः "श्रुत्यैतद्यूपसम्बन्धिपरिव्याणाङ्गताङ्गताः। नाग्नीषोमीयधर्माः स्युस्तावतैवार्थवस्वतः सवनीयपरिव्याणमप्यतद्यूपसङ्गतम्। तस्मात्तत्रापि रशना सह धर्मैः प्रपत्स्यते॥ इति,

अंशवदाभ्ययोरपि सादनादिधर्मवत्त्वाधिकरणम्। सू० आराच्छिष्टमसंयुक्तमितरैस्सन्निधानात् ॥ ११ ॥

अतः परं प्रासङ्गिकी कथा, लक्षणसंगतिः स्पष्टैव, ग्रहधर्माणां साधारण्य पूर्वमुक्तं, ते किमनारभ्याधीतयोरंशवदाभ्ययोरपि भव? न्त्युत प्राकरणिकानामेव? ति संशयः, "तत्र प्रकरणादेते तद्वृत्तिग्रहमात्रगाः। नानारभ्य समाम्नाताः ग्रहार्थाः स्युरसंनिधेः। उच्यते "ग्रहाणां प्रक्रिया नास्ति यया धर्मव्यवस्थितिः।

१ समाम्नातग्रहार्था इति।

नापि प्रकरणं तेषां विशेषणा[1] तयेष्यते ॥ न ये सोमप्रकरणगतास्तेषाममी धर्मा इति किं तु यजेः प्रकरणं तेन प्रकृतेन विशेषणात् । धर्मास्तत्साधनानां हि ग्रहाणां शेषतामियुः, ये चानारभ्य विहिता ये च प्रकरणे ग्रहाः । सर्वे तत्साधनत्वात्तद्धर्मसम्बन्धमाप्नुयुः ।

चित्रिण्यादीष्टकानामग्न्यङ्गताऽधिकरणम् ।

सू॰ अग्न्यङ्गमप्रकरणे तद्वत् ॥ १२ ॥

अग्निप्रकरणे समाम्नाता इष्टकाधर्मा अखण्डाम् अकृष्णामित्यादयः, किं प्राकरणिकीनामेवेष्टकानां ? उताऽनारभ्याधीतानामपि चित्रिणीरुपदधातीत्येवमादीनां, पूर्ववदेव संशयपूर्वोत्तरपक्षाः पूर्वत्रांशुदाभ्ययोरनारभ्याम्नातयोरपि प्राकरणिकेन वाक्येन विनियोगोऽस्तीति प्रकरणसंस्पर्शाद्युक्तो धर्मसम्बन्धः, चित्रिण्यादीनां तु विनियोगोऽप्यनारभ्यवादेनैवेति प्रकरणसंस्पर्शाभावाच्च तद्धर्मसम्बन्ध इति विशेषाशङ्का, प्रकरणसंस्पर्शाभावेऽपि प्रकृतापूर्वसंस्पर्शात्तत्साधननिवेशिनो धर्मास्तासामपि भवन्तीति सिद्धान्तः ॥

मानोपावहरणादीनां सोममात्रधर्मताऽधिकरणम् ।

सू॰ नैमित्तिकमतुल्यत्वादसमानविधानं स्यात् ॥ १३ ॥

ज्योतिष्टोमे राजन्यवैश्यनिमित्तेन फलचमसश्चोदितः स चेज्याविकार इति स्थितं, सन्त्यभिषवादिसंस्कारास्ते किं नैमित्तिकस्यापि फलचमसस्य समानाः ? उत नित्यस्यैव सोमचमसस्य ? नैमित्तिके तु तद्विकार इति विचार्यते. तत्र "अपूर्वसाधनत्वांशे संस्कारविधयो यतः । तस्मान्नैमित्तिकेऽपि स्युः साधनत्वाविशेषतः" । सोममभिषुणोतीत्ययमर्थः अभिषुतेन यजेतेति, फलचमसेनापि चेज्यते, अतस्तस्याप्यभिषव उपदिष्ट एव भवति, "तेन व्रीहियवा नित्या समानविधयो यथा । नित्यनैमित्तिके द्रव्ये समानविधिनौ तथा" उच्यते साधनेनैव नित्यसंस्कारसङ्गतिः । सद्रूपेण त्वसंयुक्ता न विरूपेण युज्यते" संस्कारा हि निमित्तसंयोगाभावात्क्रतोः स्वाभाविकाङ्गत्वेन विधीयमानास्तदनुरूपमेव द्वारमाश्रयन्ते व्रीहिवच्च यवा अपि प्राप्तिरूपेण क्रतो

१ विशेषेण तयेष्यते इति पा॰ ।

नित्या एवेति धर्मविधेर्वैरूप्याच्छक्नुवन्ति द्वारतामुपगन्तुं यदप्यनुगानरूपेणानित्यत्वं तद्व्रीहीणामपि तुल्यमेवेति नित्यद्वाराभावादगत्याऽवघातादीनामनित्यद्वाराश्रयणं युक्तम्। आम्नानस्वरूपेण च नित्यत्वाद्व्रीहियवविध्योर्नित्यवदाम्नातसंस्कारविध्येकवाक्यत्वं शाब्दरूपसमानत्वात् युज्यते, शक्यते हि वक्तुमवहतैर्व्रीहिभिर्यवैर्वा यजेतेति, फलचमसस्तु निमित्तसंयोगादाम्नानेनैवानित्यः कथं नित्यैर्यावत्क्रतुभाविभिरभिषवादिभिरेकवाक्यतामुपेयात् विरुद्धं खल्वेतदभिप्रवेण नित्यं ज्योतिष्टोमम् उपकुर्यादनित्यफलचमसद्वारमिति तथा नित्येन फलचमसेन नित्यकर्तव्याभिषवसंस्कृतेन यजेतेति यद्यभिषुतेन फलचमसेनेत्युच्यते, ततः फलचमसोऽपि नित्याभिषवद्वारमिति नित्यः स्यात्, सोमस्त्वाम्नानतः प्रयोगत[1]श्चानित्यः, राजन्यवैश्यपक्षेऽपि यजमानच[2]मसादेव सोमो निवर्तते अन्यत्र तु सोमः स्थित एव, तस्मात्तत्रैवाभिषवादिविधिः। अपि च नित्यं नैमित्तिकं च न युगपद्विधीयते किंतु नित्यं विधाय पश्चान्नैमित्तिकं विधेयं, तद्धि निमित्ते सति क्रतोर्विशेषरूपेण चोद्यते निमित्ते त्वेतद्रूपः क्रतुरिति, एवं च स्वारसिकरूपे प्राक् सिद्धे शक्यते वक्तुं, तस्माद् यस्यां वेलायां क्रतोः स्वाभाविकं नित्याङ्गं विधीयते तस्यामेव संस्कारविधयः तद्विशेषणत्वेन स्वार्थं विधाय निवृत्तव्यापारा न भूयः शक्नुवन्ति नैमित्तिकेनापि सम्बन्द्धुम् आवृत्तिप्रसङ्गात्। तस्मान्नित्यार्था धर्माः, नैमित्तिकस्य त्वतिदेशेन भविष्यन्ति ॥

प्रतिनिधिष्वपि मुख्यधर्मानुष्ठानाधिकरणम्।

सू० प्रतिनिधिश्च तद्वत् ॥ १४ ॥

मुख्याभावे प्रतिनिधिर्वक्ष्यते स किं मुख्येन समानविधानोनेति मुख्याभावनिमित्तत्वात्पूर्ववदसमानविधौ प्राप्ते उच्यते, स्यादेवं यदि द्रव्यान्तरमिह यागस्य साधनत्वेनोपादीयेत व्रीह्यवयवास्त्विह सकलासम्भवाद्विकला उपादीयन्ते, नीवारगतास्तदनुषङ्गादवर्जनीयतया नीवारोपादानं न साधनतया, साधनत्वे प्रमाणाभावात्। व्रीह्यंशाश्च व्रीहिगता इव नीवारगता अपि संस्कारविध्यन्विता एवेति समानविधानता ॥

---

१ प्रयोगश्च नित्य इति पा०।

२ राजन्यचमसादेवेति पा०।

श्रुतेष्वपि प्रतिनिधिषु मुख्यधर्मानुष्ठानाधिकरणम् ।

सू० नियमार्था गुणश्रुतिः ॥ १५ ॥

अथ यत्र श्रुतः प्रतिनिधिः यथा यदि सोमं न विन्देत पूतिकान[1]-भिषुणुयादिति तत्र वचनेन पूतिकानामेव साधनत्वं विधीयते, न नीवारवदसाधनत्वम्, अतो द्रव्यान्तरमिदं सोमाभावे निमित्ते तत्साधनतापन्नं फलचमसवदसमानविधानं, मैवं न ह्यत्र पूतिका यागसाधनत्वेन विधीयन्ते सोमाभावे पूतिकैर्यागं कुर्यादिति, किं तर्हि सोमावयवोपलक्षणतया प्रतिनिधिनियमो ह्ययं, तेन सोमाभावे पूतीकैर्यागं कुर्यादिति नाभावे विधिरिति वक्ष्यते तदेषा वचनव्यक्तिः यत्सकलसोमावयवाभावे विकलावयवानुपाददीत तत्पूतिकागतानिति, तस्मादत्रापि सोमावयवानामेतत्साधनत्वात्पूर्ववत्समानविधानत्वम् ।

दीक्षणीयादिधर्माणामग्निष्टोमाङ्गताऽधिकरणम् ।

सू० संस्थास्तु समानविधानाः प्रकरणाविशेषात् ॥ १६ ॥

नैमित्तिकं क्रत्वर्थं नित्येन समानविधानं न भवति, नैमित्तिकस्यानित्यत्वात्तद्द्वारेण धर्माणां नित्यवत्क्रत्वर्थत्वानुपपत्तेरित्युक्तम्, इह काम्या गुणाश्चिन्त्यन्ते किमाश्रयभूतया क्रियया समानविधाना? उतासमानविधानास्तद्विकारा इति, तत्र काम्यस्य फलवत्त्वात्क्रतुवदेव स्वयमितिकर्तव्यातायाहित्वाच्च तद्द्वारेण क्रत्वर्थत्वमङ्गानां, येन नैमित्तिकवद्विरोधः स्यात्, अतो न गतार्थमिदं संस्याग्रहणं च प्रदर्शनार्थम् । अन्योऽपि दाक्षायणयज्ञादिरुदाहर्तव्यः, ज्योतिष्टोमस्य चतस्रः संस्थाः अग्निष्टोम, उक्थ्यः, षोडश्यतिरात्र, इति अग्निष्टोमस्यैव विधान्तरमत्यग्निष्टोम इति अत्र षोडशिग्रहणमत्यग्निष्टोमे राजन्यस्य गृह्णीयादिति वाजपेयश्च षोडशिन एव भेदः, आप्तोर्यामश्चातिरात्रस्य एतदभिप्रायं सप्त सोमसंस्था इति स्मरणं, तत्राग्निष्टोमस्य–संस्था क्रत्वर्था क्रतोस्तु फलं ज्योतिष्टोमेन स्वर्गकाम 'इति उक्थ्या[2]दयः संस्था ज्योतिष्टोमाश्रिताः फले विधीयन्ते "पशुकाम

---

१ पूतीकान् इति पा० ।

२ उक्थ्यादय इति पा० ।

उक्थ्यं गृह्णीयात्" "षोडशिना वीर्यकामः स्तुवीत" "अतिरात्रेण प्रजाकामो यजेत"इति । ननु ग्रहणादीनामत्र फले विधानं न संस्थायाः, उच्यते उक्थ्यशब्दोऽयं स्तोत्रविशेषवचनस्तत्सम्बन्धाद् ग्रहण उपचर्यते, न चेहोपचाराश्रयणं युक्तं समाप्तौ च स्तोत्रसम्बन्धिन्यां वाचक एव तत्संस्थाविशिष्टे क्रतौ प्रयोगादुक्थ्यो यज्ञ इति तत्र चाक्रत्वधिकरणन्यायाद्विशेषणभूता संस्थैवाभिधेया स्तोत्रसम्बन्धात्समाप्तावपि लक्षणेति चेत् न तत्सम्बन्धिक्रतुमात्रे प्रयोगाभावात्, अस्ति हि षोडशिसंस्थे यज्ञे अतिरात्रसंस्थे चोक्थसंज्ञस्तोत्रं, न च तत्र यज्ञे अस्त्युक्थ्यशब्दप्रयोगः, लक्षणा चेत्तत्रापि प्रयुज्येत तत्संस्थ एव प्रयोगादभिधेयैव संस्था, सैवात्र फलाय चोद्यते पशुकाम उक्थ्यं गृह्णीयात् उक्थ्यात्मिकां संस्थां कुर्यादित्यर्थः, ग्रहणं तु फलवत्समाप्त्यङ्गत्वेन वाक्यान्तरप्राप्तमनूद्यते, एवं षोडशि–शब्दस्यापि स्तोत्रवचनत्वं संस्थावचनत्वं च व्याख्येयं तत्र त्वियं व्यवस्था–यदा समाप्तिवचनः तदाश्रयतो लिङ्गलाभाद्यज्ञवत्पुंल्लिङ्गः । स्तोत्रवचनस्तु नपुंसकः फलवाक्ये च पुंल्लिङ्गः षोडशि–शब्दो वाक्यशेषादवगम्यत इति संस्थैव फले चोद्यते, स्तोत्रं तु पूर्ववदनूद्यते अतिरात्र इति तु रात्रिमतीत्य यः सन्तिष्ठते यज्ञः स उच्यते तत्र सत्यपि संस्थाविशिष्टयज्ञवचनत्वे विशेष्यस्य यज्ञस्य प्राप्तत्वादप्राप्ता संस्थैव विधीयते विधेयस्य च फलमिति संस्थैव फले साधनम् । एतदिह विचार्यते किं दीक्षणीयाद्यङ्गविधानं ज्योतिष्टोमस्य संस्थानां च समान? मुत ज्योतिष्टोमस्यैवे? ति, तत्र "तुल्यप्रकरणत्वेन सर्वेषां फलवत्त्वतः । तुल्यमङ्गविधानं स्यादिति प्राप्ते ऽभिधीयते । वैरूप्यमङ्गवाक्यानां प्रसज्येतोभयान्वये । संभवत्येकरूपत्वे नानारूपं न युज्यते । न च क्रतुमनादृत्य संस्थाभिर्घटतेऽन्वयः । संस्थाऽवधारणेनैव युज्यते क्रतुसङ्गतिः । संस्था त्वक्रियात्मकत्वाद्द्रव्यादिवदाश्रयभूतां क्रियामपेक्ष्य फलं साधयति, साधननिवेशि चाङ्गजातं तद्यदा संस्थाभिः सम्बन्द्धुं प्रस्थितं तदा तत्साधनत्वनिर्वाहिका क्रियापि तत्रैव दृश्यते

१ तत्संस्थाविशेषे इति पा· ।

सा च स्वयमपि फलवत्त्वात्संस्थार्थमपि प्रस्थितमङ्गजातं किमिति न गृह्णाति तस्मात्संस्थासम्बन्धवादिनोऽप्यवर्जनीयः क्रतुसम्बन्ध इति न केवलसंस्थार्थत्वं, क्रतुस्तु स्वयमेव फलसाधनत्वादनादृत्यैव संस्थां शक्नोत्यङ्गजातमात्मसात्कर्तुमिति तदर्थमङ्गविधानं न संस्थार्थम्, अत एवागृह्यमाणविशेषत्वादुभयार्थमित्यपि न शक्यं वक्तुं विशेषग्रहणात्, एवमपि संस्थार्थत्वं किं न भवति वैरूप्यादिति ब्रूमः, अङ्गविधयो हि न स्वार्थमात्रे पर्यवस्यन्ति आनर्थक्यप्रसङ्गात, प्रयोगवाक्ये तु विशेषणत्वेन स्वार्थं समर्पयन्ति तेन नित्यानित्यप्रयोगद्वयानुसारेण नित्यवदनित्यवच्च स्वार्थं बोधयन्तस्तात्पर्यभेदाद्भिद्येरन्, योज्योतिष्टोमेन फलं कुर्यात्स एवं यश्च ज्योतिष्टोमे कदाचित्संस्थाफलार्थी स एवमिति । किं च गुणः फलाय चोद्यमानः पूर्वप्राप्तां परप्रयुक्तां क्रियामाश्रित्य पश्चाच्चोद्यते अंशयुक्ता च क्रिया प्रयुज्यते, तत्र प्राक्तनक्रिया प्रयुज्यते तत्र प्राक्तनक्रियाविधिसमये व्यापृतानामङ्गविधानां पश्चात्तने ऽपि गुणफलविधौ व्याप्रियमाणानां विरम्य व्यापारः प्रसज्यते, अयं चापरो ऽत्र विशेषः सोमस्तावच्छ्रुत्या यागार्थस्तत्संस्कारार्थाश्च क्रयाभिषवग्रहणादयस्तद्द्वारत्वाद्यागार्था एव न संस्थाभिः सम्बध्येरन्, सर्वं च प्रकरणं सोमसंस्कारविधिमिश्रमिति तैरसम्बन्धिपदैर्विच्छिन्नं संस्थानां प्रकरणं न दीक्षणीयादिकमप्यङ्गमलं ग्रहीतुं तस्मादसमानविधानाः संस्थाः ॥

इति शास्त्रदीपिकायां तृतीयस्याध्यायस्य षष्ठः पादः ॥ ६ ॥



१ तदर्थमङ्गजातमिति ।

## तृतीयाध्यायस्य सप्तमः पाद आरभ्यते ॥

बर्हिरादीनां दर्शपौर्णमासतदङ्गोभयाङ्गताऽधिकरणम् । सू० प्रकरणविशेषादसंयुक्तं प्रधानस्य ॥१॥

समानासमानविध्यप्रसङ्गाद्वाक्यप्रकरणविरोधाविरोधविचारेण दर्शपूर्णमासयोर्वेद्यां हवींष्यासादयति वेदिं खनति बर्हिषि हवींष्यासादयति बर्हिर्लुनातीति श्रुता वेदिबर्हिर्धर्माः किमङ्गप्रधानहविषां साधारणाः? उत प्रधानहविषामेवे?ति चिन्त्यते, तत्र वाक्यस्वातन्त्र्ये सत्यानर्थक्यात्क्रत्वन्तरे चातिप्रसङ्गादवश्यं प्रकरणेनैकवाक्यत्वमपेक्षितव्यं प्रकरणं च प्रधानस्यैवेति प्रधानहविषामेव वेद्याद्यङ्गं न प्रयाजादिहविषामिति प्राप्ते ब्रूमः, सत्यं, प्रकृतैकवाक्यत्वं तत्तु व्यवच्छेदक[1]तया वाक्यस्यात्यन्तसङ्कोचप्रसङ्गात् प्रधानगृहीता हि वेदिस्तदर्थेष्वेव हविःषु स्यात्, तत्र वाक्यस्यात्यन्तसङ्कोचः स्यात्, तस्माचायं वाक्यार्थः प्रधानार्थं हविरासादनद्वारेण प्रधानापूर्वं वेद्यां कुर्यादिति, किं तर्हि यद्दर्शपूर्णमासोपकारिहविस्तद्वेद्यामिति, एवं हि नातिसङ्कोचः कृतः स्यात्, न चानर्थक्यम्, अङ्गहविरपि च प्रधानस्योपकारकमेवेति तत्रापि वेदिः स्यात् । अथ वाऽस्तु प्रधानस्य ग्राहकत्वं द्वारं तु न तदर्थमेव हविः किं तु तदुपकारिहविर्मात्रं वाक्यसङ्कोचपरिहारात्, संभवति चोपकारिमात्रस्यापि द्वारत्वम्, अतः प्रधानप्रयुक्तानामपि वेदिबर्हिस्स्तद्धर्माणां प्रयाजाद्यपूर्वस्वरूपनिर्वृत्तिद्वारेण तादर्थ्यं प्रयाजादीनामिव भविष्यतीति सिद्धं प्रयाजाद्यङ्गत्वं वेद्यादेः ॥

स्वामिसंस्काराणां प्रधानार्थताऽधिकरणम् । सू० फलसंयोगात्तु स्वामिसंयुक्तं प्रधानस्य ॥ २ ॥

ज्योतिष्टोमे केशश्मश्रुवपनादयो यजमानसंस्काराः किमङ्गप्रधानार्थाः? उत प्रधानार्था? एवेति संशयः, तदर्थं च किमेते कर्तृत्वांशपातिनः? किं भोक्तृत्वांशपातिन? इति तत्र भोक्तृत्वस्य प्रधानफलत्वात्तदर्थाः सन्तः संस्काराः प्रधानतुल्यकक्षतया न प्रधानार्था भवेयुः तादर्थ्यं

[1] न तु ग्राहकतया वाक्यस्येति पा० ।

च प्रकरणादवगतमतः कर्त्रर्थाः, कर्ता चाङ्गप्रधानार्थः संस्कारा अपि तद्गता अङ्गप्रधानशेषाः स्युरिति प्राप्तेऽभिधीयते "भोक्तृत्वस्य प्रधानत्वाददृष्टत्वाच्च तद्गुणाः । संस्काराः कर्तृभावस्तु गुणो दृष्टश्च सोऽन्यतः । प्रधानं हि भोक्तृत्वं गुणभूतं कर्तृत्वं भोक्तृत्वार्थत्वात्, संस्काराश्च गुणभूतास्ते प्रधानार्था एव युक्ताः, न गुणार्थाः, "गुणानां च परार्थत्वा"दिति न्यायात् अदृष्टं च भोक्तृत्वं शास्त्रगम्यमुपायमपेक्षते, कर्तृभावस्तु विनाऽपि संस्कारैरुत्पद्यमानः प्रमाणान्तरादेव दृष्ट इति न तादर्थ्यमेषां, न च भोक्तृत्वार्थानां प्रधानाङ्गत्वविरोधः, न हि ते फलं जनयन्ति यतः प्रधानतुल्याः स्युः किं तु तादृशं संस्कारं यजमाने कुर्वन्ति येन यजमाने प्रधानं स्वफलं जनयितुमलं तेन क्षेत्रसंस्काराणामिव बीजावपनार्थत्वं प्रधानार्थत्वं संस्काराणां, प्रधानफलं हि यजमानो भुङ्क्ते नाङ्गफलं तस्य क्रत्वर्थत्वात् ॥

सौमिकवेद्यादीनामङ्गप्रधानोभयाङ्गताऽधिकरणम् ।

## सू० चिक्रीर्षया च संयोगात् ॥ ३ ॥

सौमिकी वेदिः किं प्रधानार्था ? उताङ्गार्थाऽपीति चिन्ता तत्रेयमतिशक्या[1]महे ऽस्यां कर्तुमिति तुमुना चिक्रीर्षितार्थता गम्यते प्रधानं च फलवत्त्वाच्चिक्रीर्षितं नाङ्गानि, तस्मात्प्रधानार्था वेदिः स्थितं तावदपर्यवसितम् ॥

अभिमर्शनस्याङ्गप्रधानोभयाङ्गताधिकरणम् ।

## सू० तथा[2]प्रधानेन ॥ ४ ॥

संयोगादित्यनुवर्तते तल्लिप्सयाऽनन्तरोपक्रमः दर्शपूर्णमासयोर्हविरभिमर्शनार्थौ मन्त्रौ "चतुर्होत्रापौर्णमासीमभिमृशेत्पञ्चहोत्रामावास्या"मिति किं तावदङ्गप्रधानार्थावुत प्रधानार्थौ ? विति पौर्णमास्यमावास्या—शब्दयोः प्रधानवचनत्वात्प्रधानार्थत्वं स्थिताद्युत्तरं सत्यं, चिक्रीर्षितार्था वेदिः साङ्गं विचिक्रीर्षितं तद्धि फलाय पुष्कलं न करणमात्रम्, अतोऽङ्गप्रधानार्था वेदिरित्यग्नीषोमीयविकारे निरूढपशौ प्रवर्तते नन्वत्रेदिमतामियमग्नीषोमीयस्य तु प्राकृती वेदिरस्त्येवेति न तदङ्गमियं, नैतं वचनबलात्सर्वार्थत्वावगतेः प्राकृतीः न प्रयोक्ष्यते द्वितीयस्योत्तरं पौर्णमा-

१ शक्यामहे इति पा० ।
२ तथाऽभिधानेनेत्यपि पुस्तकान्तरे सूत्रपाठः ।

स्यमावास्या-शब्दो कर्मवचनौ, न च कर्मणोऽभिमर्शनं मन्त्रोक्तं, तस्माद् द्वितीयेयं सप्तम्यर्थे व्याख्यातव्या, पौर्णमासीप्रयोगे चतुर्होत्रामभिमृशेदमावास्याप्रयोगे पञ्चहोत्रेति हविर्मात्राभिमर्शनं वाक्यान्तरप्राप्तमासन्नानि हवींष्यभिमृशेदिति तस्मादङ्गप्रधानार्थौ मन्त्रौ ॥

दीक्षादक्षिणयोः प्रधानार्थताऽधिकरणम् ।

सू॰ दीक्षादक्षिणं तु वचनात्प्रधानस्य ॥ ५ ॥

ज्योतिष्टोमे दीक्षादण्डेन दीक्षयतीत्यादि दक्षिणा तस्य द्वादशशतं दक्षिणेति तद्दीक्षादक्षिणमङ्गप्रधानार्थमुत प्रधानार्थमेवेति तत्र दीक्षाणां यजमानसंस्कारत्वात्प्रधानार्थत्वे सिद्धेऽप्यग्नीषोमीयादौ दीक्षितविनियोगादङ्गप्रधानार्थत्वशङ्का, दक्षिणा तु प्रयोगाङ्गत्वादङ्गप्रधानार्थैव दीक्षाः सोमस्य दक्षिणाः सोमस्येति वचनं परम्परयाऽप्युपपत्तेर्नाङ्गार्थतां विहन्तीति प्राप्ते ब्रूमः, वचनात्प्रधानार्थत्वम्, अन्यथा हि वचनं न्यायप्राप्तानुवादमात्रमनर्थकं स्यात्, न च साक्षादपेक्षिताङ्गाङ्गिभावपरत्वेऽर्थवत्त्वे च संभवति परम्पराश्रयणमानर्थक्यं च युक्तं तस्मात्प्रधानार्थत्वम् ॥

अन्तर्वेदियूपानङ्गताऽधिकरणम् ।

सू॰ तथा यूपस्य वेदिः ॥ ६ ॥

यूपे श्रूयते अर्धमन्तर्वेदि मिनोत्यर्धमन्तर्वेदि मिनोत्यर्धं बहिर्वेदीति तत्र चिन्ता किमन्तर्वेद्येकदेशो यूपाङ्गत्वेन चोद्यते? उत बहिर्वेदिसहितो यूपस्य मानदेशं लक्षयति? तत्र लक्षणाया अन्याय्यत्वाद्वेद्येकदेशस्य श्रुतस्य यूपार्धाङ्गत्वेन विधेरर्धे च मीयमानेऽर्धान्तरं बहिरेव भवतीत्यर्थाद्बहिर्वेदीत्यनुवादः स्यात्, स्यादेवं यद्यर्धमेवान्तर्वेदीति वाक्यार्थः स्यात्, न त्वेवं परिसंख्यादोषात्, किं त्वर्धं तावदन्तर्वेदि मातव्यमिति, ततश्चार्धान्तरं न विहितञ्च प्रतिषिद्धन्तस्यान्तर्बहि र्वा मानं स्यात् तत्रार्धं बहिर्वेदीत्यपि विधातव्यं तत्र वाक्यभेदः पाक्षिकानुवादत्वे नित्यवच्छ्रवणविरोधः । नन्वर्धमिति विशेषणादर्धान्तरव्यावृत्तिः स्यात् सत्यं, विधितो व्यावृत्तिः यत्र हि विशेषणं श्रुतं तत एवान्यव्यावृत्तिर्भवति वेदिमानविधेश्चार्धं विशेषणमिति विधानादेवार्धान्तरं व्यावर्तते, इच्छातस्तु वेद्यामेव मानमर्धान्त-

रस्य को वारयेत् तस्मादङ्गं बहिर्वेदीत्यपि विधातव्यमिति वाक्यभेदः स्यात् उपलक्षितदेशे विधाने त्वेकार्थविधानादवाक्यभेदः, तदयमर्थः—यत्र मीयमानस्य यूपस्यार्धमन्तर्वेदि भवत्यर्धं च बहिर्वेदि तत्र मिनुयादिति लौकिक एव देशविशेषो विधीयते न संस्कृतो वेदिदेशः ॥

हविर्धानस्य सामिधेन्यनङ्गताऽधिकरणम् ।

सू० सामिधेनीस्तदन्वाहुरिति हविर्धानयोर्वचनात्सामिधेनीनाम् ॥ ७ ॥

उतयत्सुन्वन्ति सामिधेनीस्तदन्वाहुरिति यस्मिन्हविर्धाने भिषवस्तत्र स्थित्वा सामिधेनीरनुब्रूयादित्यर्थः तत्र संशयः किं हविर्धानं सामिधेन्यङ्गं ? उत तल्लक्षितो देशः इति तत्र पूर्ववद् वाक्यभेदाभावाल्लक्षणापरिहाराय हविर्धानमेवाङ्गमिति प्राप्तं तदुच्यते हविर्धानस्य हविर्धारणार्थत्वात्र प्रयोजनान्तरापेक्षा प्रकृतिश्चाहवनीयप्रत्यग्देशः सामिधेन्यङ्गत्वेन प्राप्तः, स च दक्षिणस्योत्तरस्य वा हविर्धानस्य समीपे भवति, तत्र नियममात्रं लाघवाद्विधेयं, हविर्धानस्य तु अत्यन्ताप्राप्तमङ्गत्वमनपेक्षितं च न युक्तं विधातुं, तदिहापि देशलक्षणा ॥

अङ्गानामन्यद्वारानुष्ठानाधिकरणम् ।

सू० शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात् तस्मात्स्वयं प्रयोगे स्यात् ॥ ८ ॥

प्रासङ्गिकी कथा वृत्ता समाख्यायास्त्वतः परं विविचारयिषुः पूर्वविरुद्धत्वाविरुद्धत्वे तदुपोद्घातरूपेण ज्योतिष्टोमादिकर्मसु नानाकर्तृसमावेशं वक्तुमारभतेऽधुना दर्शपूर्णमासे ज्योतिष्टोमादिकर्तृफलदक्षिणायुक्तं कर्म किं सर्वं यजमानेनैव कर्तव्यं ? उत द्रव्योत्सर्गमात्रे हविस्त्यागदक्षिणादानादिके यजमाननियमोऽन्यत्रानियमोयजमानोऽन्योवाऽथ वोत्सर्ग एव यजमानोऽन्यत्रान्य एवेति विचारः, तत्र स्वर्गकामो यजेतेति सामानाधिकरण्येनात्मनेपदेन च कर्तुरेव फलावगमादयोन्सर्वं कुर्यात् दक्षिणादानं तु धर्ममात्रम् । ननु प्रधानस्यैव सामानाधिकरण्यात्मनेपदाभ्यां फलार्थिकर्तृकत्वं नाङ्गानां तत्र भावनाया एव हि प्रत्ययवाच्यायास्ताभ्यां तत्कर्तृकत्व, सा च त्र्यंशेत्यङ्गानामपि स एव कर्ता, उच्यते सत्यमर्थिनः साङ्ग कर्तृत्वं तत्तु

प्रयोजकत्वेनापि सम्भवति "तत्प्रयोजको हेतुश्चे"ति स्मरणात् पङ्क्तिर्हलैः कृष-तीति च प्रयोगात् तत्रासति परम्पराप्रमाणे साक्षादेव कर्तृत्वं स्यात्, अस्ति तु प्रमाणं परिक्रयवचनं तच्च कर्त्रन्तरसद्भावे दृष्टार्थं भवति, सर्वश्च स्वय-मशक्तोऽन्येन कार्यं कारयति यजमानोऽपि शक्तः स्वयं कुर्यात् अशक्तस्त्व-न्येन कारयेत् परिक्रयश्चास्मिन्पक्षे भविष्यति द्रव्योत्सर्गं त्वन्यथा शक्यत्वात् स्वयमेव कुर्यादिति प्राप्ते ब्रूमः सम्भवति प्रयोजकत्वेनापि कर्तृत्वे परिक्र-यस्य नित्यवदाम्नातस्य पाक्षिकत्वायोगान्नित्यमुपसंहर्तुमुत्सर्गादन्यत्रान्यैनैव कारयितव्यम् ॥

परिक्रीतानामृत्विजां सं-ख्याविशेषनियमाधिकरणम्।

सू० तत्रार्थात्कर्तृपरिमाणं स्यादनि-यमोऽविशेषात् ॥ ९ ॥

उत्सर्गादन्यत्रान्य इत्युक्तं तत्र कति तेऽन्ये इति संशये विशेषाभा-वादनियमः सर्वथा परिक्रयसिद्धेः, अथवा यजमानस्यैव कर्तृत्वे प्राप्ते परि-क्रयवशादन्योपादानं, स चैकेनापि सिध्यतीत्येक एवान्यः स्यात, अध्वर्य्वादि संज्ञास्तु कर्मनिमित्ताः अध्वरं युनक्तीत्यध्वर्युः, आवाहयतीति होता, तथा-न्येऽपि, तथा च दर्शयति "यः एवामुमावहामुमावहेत्यावाहयति तदेव होतु-र्होतृत्व"मिति, ततश्चैकस्यापि तत्तत्कर्म कुर्वतः पाव[1]कलावकवदुत्प[2]त्ता ना-नासंज्ञाः, तस्मादेकः स्यात्, स्यादेवं यदि प्रवृत्तिसमये तदुत्तरकालं वैताः संज्ञाः श्रूयेरन् वरणान्त्वप्रवृत्ताभ्यर्थनं तत्रैताः श्रूयन्ते "स ब्रह्माणं वृणीत" इत्यादि न च तदा कर्मनिमित्तत्वं सम्भवतीति वरणनिमित्तत्वं, भिन्नानि च वरणा-"न्येकस्यैवं पुनः श्रुति"रिति न्यायात् न चैकस्मिन्पुरुषे बहूनि वरणानि सम-वयन्ति दृष्टार्थत्वात्, न हि वृतस्य वरणं दृष्टार्थं, तेन वरणानां तन्निमि-त्तानां च संज्ञानामसङ्कीर्णविषयत्वाद्यावद्वरणं यावत्संज्ञं च कर्तृभेदः कर्मा-ङ्गम्, अतस्तावत्संख्यैः कर्तृभिर्ज्योतिष्टोमस्य निर्वृत्तिः। किं पुनरिदं वरणम्? उक्तं प्रार्थनमिति, तत्र महर्त्विजां होत्रकाणां च मन्त्रेण "अग्निर्होताऽसौ मानुष" इत्यादिना, अन्येषां तु लौकिक्या वाचा प्रतिप्रस्थाता मे भवानित्व-

(१) पाचकेति पा०।
(२) उपपन्नेति तु युक्तः पाठः।

त्यादि, किमेतावता होत्रादित्वं भवति ? को दोषः ? न ह्येताः संज्ञाः प्राक्प्र-श्यन्ते वरणोत्तरकालं च य एवं वृतः स्वयं चैवमस्मीति मनसा सङ्कल्पयति, तत्र होत्रादिसंज्ञाः प्रसिद्धवद्वेदे याज्ञिकप्रयोगे च व्यवह्रियमाणा दृष्टाः, तस्माद्य एव वृतः य एवं च सङ्कल्पयति स एव होत्रादिसमाख्यां लभते, सत्त्रेषु तु दृष्टार्थत्वाद्वरणस्यार्थलोपाच्चिवृत्तिः तदभावे चाध्वर्युर्गृहपतिं दीक्षयित्वेत्यादिव्यवहारदर्शनात्सङ्कल्पादेव होत्रादित्वसिद्धिः, प्रकृतावपि हि सङ्कल्पो निमित्तमेव यो हि व्रियमाणो नेच्छति न स होतेत्युच्यते, तस्मात्प्रकृतौ वरणविधानात्तन्मिश्रः सङ्कल्पो निमित्तं, सत्त्रेषु तु सङ्कल्पमात्रं प्रयोगदर्शनात्, न चैवं वैरूप्यादशोभनमिति मन्तव्यं प्रमाणबलादीदृशस्यैव शोभनत्वात्. न हि सत्त्रे होत्रादिशब्दानां गौणत्वे किञ्चित्प्रमाणमस्ति । अथाप्यत्यन्तमैकरूप्येण कार्यं ततः सङ्कल्प एव निमित्तं, य एव क्रतुप्रक्रमे तदौपयिकं होत्रादिभावमात्मनः सङ्कल्पयति स एव होत्रादिशब्देरुच्यते तथा च वक्ष्यति "सत्त्रे तु स्वयं कर्तृकत्वाद्वरणभरणयोरनपेक्षितयोरग्रहणाद्विनैव ताभ्यामवैगुण्य"मिति योऽयतामात्रणाध्वर्युत्वादिसिद्धिरिति, । नन्वदृष्टमध्वर्युत्वादिकं कथमविहितेन सङ्कल्पेन जायते ? विहितमेव तु वरणं तस्य जनकं युक्तं यद्यदृष्टमध्वर्युत्वादिकं तदर्थं वरणं तत्र सत्त्रेऽपि तदनुयाज्यावरणवत् कर्तव्यमिति सुतरां तत्राध्वर्य्वादित्वसिद्धिः । न चादृष्टाध्वर्युत्वादिसद्भावे प्रमाणमस्ति, वरणविधिर्हि दृष्टार्थतयोपपत्तेर्नादृष्टकल्पनाक्षमः, यदि चादृष्टमिदं विहितोपायसाध्यं च ततो दर्शपूर्णमासयोर्होता वृतः सामिधेनीरन्वाहेति वचनात् प्रागेव वरणात्सामिधेनीषु प्रवृत्त[१]स्य प्रसिद्धहोतृभावस्य पश्चाददृष्टार्थं वरणं न होतृत्वापयोगीति होतृत्वं न स्यात्, तस्मादध्यवसायादेव होतृत्वमङ्गीकर्तव्यमिति सत्त्रेऽपि होत्रादित्वसिद्धिः । ननु होतृ—शब्दवाच्यः स्यामित्यध्यवसायादेव तद्वाच्यो भवतीत्येतदलौकिकमेव तच्छब्दवाच्यो भवेति प्रार्थनादेव तच्छब्दवाच्यो भवतीत्येतद्वा किं लौकिकं तत्सिद्धं संज्ञया कर्तॄणां भेदः । माभूत्संज्ञायां वरणानां तु बहूनां युगपत्प्रयोगवचनपरिगृहीतानां दृष्टार्थत्वेनैकपुरुषासमवायाद्भावद्वरणं वरीतव्याः कर्तारो भिद्यन्ते ॥

१ प्रसिद्धस्येति पा० ।

चमसाध्वर्यूणां पृथक्त्वाधिकरणम् ।

सू० चमसाध्वर्यवश्च तैर्व्यपदेशात् ॥ १० ॥

ज्योतिष्टोमे पूर्वाधिकरणे षोडश कर्तारः सिद्धाः सन्ति चमसाध्वर्यवो नाम ते किं तेषामेवान्यतमाः? उत तेभ्यो ऽन्य? इति यौगिकत्वात्संज्ञाया अध्वर्युपुरुषा एव चमसाध्वर्यव इति प्राप्ते ब्रूमः, "संज्ञानामस्तु योगेन वरणं तु पृथक् श्रुतम् । तत्तेष्वसम्भवात्तेषां तेभ्यो भेदं करिष्यति" एतेन सदस्यो व्याख्यातः तस्यापि वरणं समाम्नात् ॥

चमसाध्वर्यूणां बहुत्वनियमाधिकरणम् ।

सू० उत्पत्तौ तु बहुश्रुतेः ॥ ११ ॥

तेषु संदेहः कति चमसाध्वर्यव इति बहुवचनस्य संस्कार्यगतत्वेनाविवक्षितत्वादनियम—एको द्वौ बहवो वा, उच्यते वरणाङ्गतया सत्यमविवक्षितं बहुत्वं, क्रत्वङ्गतया तु तेषामुपादेयत्वाद्विवक्षितमेव बहुत्वं, न ह्यत्र[^3] सिद्धक्रतुसम्बन्धानुद्दिश्य वरणमात्रं ग्रहसंमार्गवद्विधीयते, किं त्वनेनैव वचनेन प्रकरणसहायेन वरणसंस्कारयुक्ताश्चमसाध्वर्यवः क्रतुं प्रति विधीयन्ते, वरणेन चमसाध्वर्यूणाम कर्तॄन् क्रत्वङ्गत्वेनोपादत्तेति तस्मादुपादेयत्वात्तेषां कर्माङ्गतया विवक्षितं बहुत्वं, तथा च स्वाध्यायोऽध्येतव्य इत्यध्ययनसंस्कार्यस्यापि स्वाध्यायस्यार्थावबोधं प्रत्युपादेयत्वाद्विवक्षिता संख्येति शाखान्तराधिकरणे दर्शितम् । एतेन "पुरोहितं वृणीत" इत्यत्राप्येकत्वविवक्षा व्याख्याता । तथाऽध्वर्युं वृणीत इत्यादावेकत्वमध्वर्युकार्यार्थम् अतः सर्वमाध्वर्यवमेकेन कर्तव्यमध्वर्युणा च कर्तव्यमित्यरुणैकहायनीन्यायेन मिथोनियमः पश्वेकत्वयोरिव, तथा होत्रादिकर्मापि, होत्रध्वर्य्वोस्तु मिथोभिन्नकर्तृत्वमङ्गं समाख्याभेदात् ॥

चमसाध्वर्यूणां दशसंख्यानियमाधिकरणम् ।

सू० दशत्वं लिङ्गदर्शनात् ॥ १२ ॥

स्थिते बहुत्वे कियन्तो बहव इत्यनियमे त्रित्वे वा प्राप्ते चमसदशत्वाद्दशभिस्तावद्भवितव्यम् आधिक्ये प्रमाणाभावाद्दशैव ॥

[^3]: (३) न ह्यन्यत्रेति पा० ।

शमितुरपृथक्त्वाधिकरणम् ।

सू० शमिता च शब्दभेदात् ॥ १३ ॥

अस्ति शमिता स किं प्रकृतेभ्योऽन्यस्तेषां वा ऽन्यतमः इति संशये संज्ञाभेदादन्यत्वं यौगिकत्वात्संज्ञाया वरणाभावाच्च तेषामेवान्यतमः तत्राध्वर्योः पराङ् वर्ततेऽध्वर्युस्तु पशोः संज्ञप्यमानादिति वचनादसामर्थ्यादन्ये तत्पुरुषाः संज्ञपयेयुः ॥

उपगस्यापृथक्त्वाधिकरणम् ।

सू० उपगाश्च लिङ्गदर्शनात् ॥ १४ ॥

सन्त्युपगाः ते किं प्रकृतेभ्यो ऽन्ये? उत त एवे? ति तत्र गातॄणां गुणभूता उपगातारो लोकवत् न चर्त्विजामृत्विजस्तुल्यकक्षा गुणभूता भवितुमर्हन्तीत्यन्ये इति प्राप्ते उच्यते—उत्पत्तौ वरणाभावात्संज्ञायाश्च यौगिकत्वादृत्विजामेव प्रैषप्रैषार्थकारित्ववत्परस्परोपकारसम्भवादृत्विज एवोपगायेयुः ॥

सोमविक्रेतुः पृथक्त्वाधिकरणम् ।

सू० विक्रयी त्वन्यः कर्मणो ऽचोदितत्वात् ॥ १५ ॥

अस्ति सोमविक्रयी स किं तेषामन्यतम? उतान्य? इति पूर्ववद्वरणाभावात्तेषाम~तमः, मैवं विक्रयस्याक्रत्वर्थत्वात्क्रत्वर्थोपात्ता ऋत्विजो न तं कुर्युस्तस्मादन्यो विक्रयी ॥

ऋत्विगिति नाम्नोऽसर्वगामिताऽधिकरणम् ।

सू० कर्मकार्यात्सर्वेषामृत्विक्त्वमविशेषात् ॥ १६ ॥

ब्रह्मादयश्चमसाध्वर्यवश्च बहवः कर्तारः समधिगता, ते सर्वे किमृत्विक्शब्दवाच्या? उत केचिदेवे? ति. तत्र "ऋतौ कार्यं हि सर्वेषां तेन तुयजनादमी । सर्वे तदभिधेयाः स्युरविशेषेण यष्टृवत्" क्रतुयजननिमित्तो ह्ययमृत्विक्शब्दः कृदन्तः, सर्वे च ते तत्कार्यकरणादृतौ यजन्तीति यष्टृशब्दस्येव ऋत्विक्शब्दस्याप्यभिधेयाः सप्तदशर्त्विज इति वचनमवयुत्याऽनुवाद इति प्राप्ते ब्रूमः "ऋतुयागनिमित्तत्वे भवेत्सर्वाभिधायिता । सङ्ख्याश्रुतिविरोधात्तु तन्नैवं संश्रयामहे । वरणं तन्निमित्तं स्याद्ब्रह्माध्वर्यादिशब्दवत् । ततो नातिप्रसङ्गः स्याद्वचनं ह्येवमर्थवत्" ॥

ऋत्विजो वृणीत इति यूपं छिनत्तीतिवद्वरणेनर्त्विजः कुर्यादित्यर्थः. न तु प्रसिद्धानृत्विजो वृणीत इति । ननु वरणनिमित्तत्वेऽप्यतिप्रसङ्गः स्यात् चमसाध्वर्यूणामपि वरणसद्भावात्, उच्यते न वरणमात्रं निमित्तं किं तु ब्रह्मादिगतो वरणविशेषः । ननु ब्रह्मादिष्वनुगतं चमसाध्वर्युभ्यो व्यावृत्तं वरणावान्तरसामान्यं न किं चित्. मा भूदवान्तरसामान्यं विशेष एव निमित्तं योऽयमृत्विक्शब्दो ब्रह्मादिशब्दवदेकैकस्यैव न वाचकः सोऽयं साधारणशब्दो न सामान्यशब्द इति यथाश्रुतभाष्यार्थः । नत्वेवं युक्तं क्लृप्तावयवशक्तिपरित्यागाऽदृष्टशक्त्यन्तरकल्पनाप्रसङ्गात्. स्मृतिविरुद्धं च—क्विबन्तत्वेन निपातनात् "कर्तरि कृदि"ति. वचनात् तथाऽन्यदपि स्मरणम् "ऋत्विग्यजकदुच्यत" इति एवमपि वरणनिमित्ताऽऽश्रीयेत यद्यन्यथा सप्तदशश्रुतिर्नोपपद्येत. सा तु यथावरणनिमित्तत्वे तद्विशेषनिमित्तत्वादुपपद्या तथर्तुयजनमपि ब्रह्मादिगतमेव ऋत्विक्शब्दस्य निमित्तम् इति हरिशब्दस्येव पशुगतं हरित्वम्, एवं च प्रसिद्धावयवशक्तिपरित्यागः स्मरणविरोधश्च न कृतो भवति, श्रुतिश्चोपपादिता वरणविधिश्चैवं प्रसिद्धपदार्थको भवति यावदुक्तं भवति याजकान् वृणीते इति तावदृत्विजो वृणीते इति तेन नाप्रसिद्धपदार्थकत्वं वरणनिमित्तत्वे तु यूपादिवदप्रसिद्धपदार्थकत्वं वचनव्यक्तिविपर्यासश्चैवं स्यात्, न चैतन्याय्यम्, अध्वर्य्वादिशब्दानां तु प्रसिद्ध्यभावाद्य एव च वरणेन प्रकारान्तरेण वाऽध्वर्युत्वेन क्रतुस्वामिभिः परिकल्पितः स एवाध्वर्युरिति युक्तम्, ऋत्विक्शब्दस्तु प्रसिद्धावयवत्वात्संख्याश्रुतेश्च क्रतुयजनविशेषनिमित्त इति विवेकः ॥

दीक्षादाक्षिणावाक्योक्तानामेव ब्रह्मादीनां सप्तदशर्त्विक्त्वाधिकरणम् ।

सू० नियमस्तु दक्षिणाभिः श्रुतिसंयोगात् ॥ १७ ॥

सप्तदशेत्युक्तं, के ते इत्यनियमे प्राप्ते ऋत्विग्भ्यो दक्षिणां ददातीत्युक्त्वाऽग्नीध्रे ददातीत्युक्त्वा ब्रह्मणे ददातीत्यादिना ब्रह्मादीनां षोडशानां कीर्तनात्तेषामृत्विक्त्वम् ॥

ऋत्विजां स्वामिसप्तदशत्वाधिकरणम् ।

सू० स्वामिसप्तदशाः कर्मसामान्यात् ॥ १८ ॥

अथ सप्तदशः किं सदस्य? उत यजमान? इति संशयः, तत्र कर्मकरत्वात्सदस्यः, न चासौ नास्तीति मन्तव्यं वरणाऽऽम्नात्, न च ब्रह्मण एवेदं वरणं तस्य हि ब्रह्माणं वृणीत इति वरणं विहितं न पुनर्विधातुं शक्यमनुवादे चानर्थक्यमध्वर्य्वादिष्वपि तथा प्रसङ्गः । न च सदस्यव्यतिरेकेण ब्रह्मवरणं नास्ति ब्रह्माणं वृणीत इति वरणवचनमृत्विग्बहुत्वसाधनाधिकरणे भाष्यकृतोदाहृतं, तस्मात्सदस्यः सप्तदश इति प्राप्ते ब्रूमः "सदस्यवरणमदृष्टार्थं न तु कश्चिदपि पदार्थस्तेन कर्तव्यो येन यजमानादन्य ऋत्विक् स्यात् तस्मात्स्वामी सप्तदशः ॥

आध्वर्यवादिषु अध्वर्य्वादीनां कर्तृता नयमाधिकरणम् । अग्नेः प्रकृतिविकृतिसर्वार्थताधिकरणं वा ।

सू० ते सर्वार्थाः प्रयुक्तत्वादग्नयश्च स्वकालत्वात् ॥ १९ ॥

नाना कर्तृषु सिद्धेषु सांप्रतं संप्रधार्यते किमव्यवस्थितं तेषां कार्यं किं वा व्यवस्थितं, तत्र प्रकरणाविशेषात्सामर्थ्याच्च यद्येन शक्यं कर्तुं तत् सर्वमव्यवस्थया कुर्यात्, दुर्बला हि लिङ्गप्रकरणाभ्यां समाख्या न तद्विरोधेन नियमं कर्तुमलं, ततः सर्वे सर्वार्थाः स्थितं तावदपर्यवसितम् अग्निषु चिन्ता ते ह्यनारभ्यवादेन यदाहवनीये जुहुतीत्यादिना होमार्थतया विहितास्ते किं प्रकृत्यर्थाः? उत वैकृतानामप्यामनहोमादीनां साधारणाः? इति पर्णतादिवत् प्रकृत्यर्थत्वं मन्यमानस्योत्तरम् अग्नयश्च सर्वार्था इत्यनुवर्तते तदनुवृत्त्यर्थं चान्तरा सूत्रकरणं, स्वकालत्वात्स्वतन्त्राम्नानादप्रकरणाधीतत्वादित्यर्थः । न चात्र द्विर्बद्धदोषः प्रकृतिसमकालमेव विकृतावप्युपदिष्टत्वाद्धोमस्य, यत्र तु यागमात्रे चोदिते प्रकृतित एव चतुरवत्तं जुहोतीत्येतदतिदेशात्प्राप्यमाणं प्रतीक्षितव्यं तत्र पर्णमयीन्यायः । उपदिष्टेषु तु वैकृतेष्वपि होमेषु समानमेवाग्निविधानं स्थितादुत्तरं लिङ्गप्रकरणाभ्यां हि न सर्वेषां समुदित[1]कर्तृत्वं प्राप्तं येन समाख्याविरोधः स्यात्, किं त्वनियमेन । तत्र किं केन इत्यस्ति व्यवस्थाऽपेक्षा तां च कुर्वती समाख्याऽनुगुणत्वान्न बाधितव्या । तस्माद्यथासमाख्यं नियमः

१ समुच्चितकर्तृत्वमिति ।

हौत्रं होत्रा आध्वर्यवं चाध्वर्युणा तथा किमेव एवोत्सर्गः सर्वं हौत्रं होत्राऽध्व-र्यवमध्वर्युणेति न, क्वचिदपोद्यते, यत्र प्रत्यक्षं वचनं यथा मैत्रावरुणः प्रेष्यति चान्वाहेति यत्र च विशेषसमाख्या यथा पोत्रीयं नेष्ट्रीयं याजमानमिति तत्र विशेषसमाख्याबलाद्वचनबलाच्च सामान्यसमाख्याऽपोद्यते, तदुक्तं "त-स्योपदेशसमाख्यानेन निर्देश" इति, तदिदं समाख्याविनियोगस्यैवातिप्रस-ङ्गनिवारणेन शेषीभूतं सूत्रं नाधिकरणान्तरम् अत एव तस्यैव लिङ्गं पश्चा-दुच्यते प्रातरनुवाके हौतृदर्शनादिकम् ॥

समुच्चितयोरनुप्रवचनप्रैषयोर्मैत्रावरुणकर्तृकत्वाधिकरणम् ।

सू० प्रैषानुवचनं मैत्रावरुणस्योपदेशात् ॥ २० ॥

उपदेशात्सिद्धे समाख्याबाधे तद्विशेषचिन्ता "मैत्रावरुणः प्रेष्यति चान्वाहे' ति किं प्रैषमात्रे ऽनुवचनमात्रे च मैत्रावरुणोपदेशेन हौत्रादिसमा-ख्याबाधो? ऽथ वा यानि प्रैषान्तान्यनुवचनानि होता यक्षदग्निमित्यादीनि तेष्वेवेति संशयः, "प्रैषानुवचनो देशात्साहित्यमविवक्षितम्। विधीयते प्रशा-स्ताऽतः समस्तव्यस्तयोस्तयोर्नैवं समस्तयोरेव मैत्रावरुणचोदना। अज्ञातक-र्तृकत्वेन व्यस्ते हि ज्ञातकर्तृके" प्रैषाणामध्वर्युरनुवचनानां च होता निर्ज्ञात इत्यने[1]नापेक्षितं कर्तृविधानं, यानि तु प्रैषान्तान्यनुवचनानि तेषु प्रैषांशे-नाध्वर्योरनुवचनांशेन होतुः प्राप्तेरेकमन्त्रत्वेन नानाकर्तृसमावेशासम्भवा-द्धोतुरध्वर्योश्च प्रच्युतानामज्ञातकर्तृकाणां मैत्रावरुणविधानमपेक्षितार्थं भवति तदधिकारे चेदं वचनमिति तत्रैव मैत्रावरुणविधिः ॥

चमसहोमेऽध्वर्योः कर्तृताऽधिकरणम् ।

सू० चमसांश्चमसाध्वर्यवः समाख्यानात् ॥ २१ ॥

चमसेषु संशयः किं तैश्चमसाध्वर्यवो जुहुयु? रुत अध्वर्यु? स्तत्रा-ध्वर्यवसमाख्यां सामान्यभूतां बाधित्वा विशेषसमाख्यया चमसाध्व-र्यव एव तैर्जुहुयुः मैवं "सामान्यनिरपेक्षो हि विशेषस्तस्य बाधकः। चम-साध्वर्युसंज्ञेयमध्वर्युप्राप्त्यपेक्षिणी चमसेऽध्वर्युवद्भावाच्चमसाध्वर्यवो यतः।

१ इत्यनपेक्षितमिति युक्तः पाठः।

ततः साऽध्वर्य्यपेक्षत्वाच्च तद्बाधेन वर्त्तते। तद्बाधे हि चमसाऽध्वर्युसंज्ञैव न स्यात् अतद्दृद्भावात् काममजुह्वतामेव तद्भावः स्यात्, अतो ऽध्वर्युर्जुहुयात् तस्य ग्रहहोमादिव्यापृतत्वेनाशक्तौ सत्यां ते जुहुयुः॥

श्येनवाजपेययोरनेककर्तृकताऽधिकरणम्।

सू० वेदोपदेशात्पूर्ववद्वेदान्यत्वे यथोपदेशं स्युः॥ २२॥

औद्गात्रे समाम्नातः श्येनो वाजपेयश्चाध्वर्यवे द्वावपि ज्योतिष्टोमविकारौ तत्र किं प्रधानवेदसमाख्यात उद्गाताऽध्वर्युश्चेतरश्चेतरत्र च सर्वपदार्थानतिदिष्टान् कुर्यात्? उत प्रकृतिवन्नाना कर्तारः? इति तत्र प्रधानविधिविधेयत्वादङ्गानां तत्समाख्यालाभात्तस्याश्चोपदेशरूपत्वेनातिदेशाद्बलीयस्त्वात्तत्समाख्यात एक एव कर्ता सर्वं कुर्यात्, प्रकृतौ तु प्रत्यक्षवचनैरेव नानात्वविधानात्सत्यामपि प्रधानद्वारेणाध्वर्यवसमाख्यायां नानैव कर्तारः, इह तु चोदकदौर्बल्यात्तद्बाधेन सामाख्याप्राप्त एक एव कर्ता स्यात्। अत्रोच्यते भवेदेवञ्चोदको यदि दुर्बलः, स तु प्रथमभावित्वात्समाख्यां बाधते बलात्। अङ्गानां हि समाख्यानं प्रयोगवचनाश्रयं चोदकप्राप्त्यपेक्षस्तु प्रयोगविधिसंग्रहः। प्राकृतानामङ्गानां वैकृतप्रयोगविधिसंस्पर्शोत्तरकालं तत्समाख्या भवेत् तत्संस्पर्शश्च चोदकप्रापितानां स्यात्, तेन च ते प्राप्यमाणाः सकर्तृका एव प्राप्यन्त इति कर्त्रपेक्षाभावादपेक्षानिबन्धनश्रुतिकल्पना समाख्या न कर्त्रन्तरमलं कल्पयितुम्। न चात्र "शरमयं बर्हि"रितिवत्प्राप्तबाधः, कल्प्यत्वात्समाख्याविनियोगस्य, कल्पनायाश्चापेक्षाधीनायास्तदभावेऽनुदयात्, अपि च पाठनिमित्ताध्वर्य्वादिसमाख्या न विधिनिमित्ता, न चौद्गात्रे पदार्थानां पाठः, तेन नास्ति समाख्यैषा विद्यमानाऽपि दुर्बला। श्येनादौ तेन नानैव कर्तारः प्रकृताविव॥

इति शास्त्रदीपिकायां तृतीयस्याध्यायस्य सप्तमः पादः॥

---

## अथ तृतीयेऽध्याये अष्टमः पाद आरभ्यते ॥

क्रयस्य स्वामिकर्मताऽधिकरणम् ।

सू० स्वामिकर्म परिक्रयः कर्मणस्तदर्थत्वात् ॥ १ ॥

अस्ति हि परिक्रयो ज्योतिष्टोमे द्वादशशतदानमाध्वर्यवे समाम्नातम् औद्गात्रे च दर्शपूर्णमासयोरन्वाहार्यदानमाध्वर्यवे तत् किमध्वर्य्वादिना कर्तव्यम्? उत यजमानेन? इति संशये समाख्यानादध्वर्य्वादिना यथाचाध्वर्युः स्वद्रव्येणेतरान् परिक्रीणीते तमुपायं यजमानः कुर्यादिति प्राप्तेऽभिधीयते स्वामिकर्तृकत्वे सर्वत्र प्राप्ते परिक्रयवशात्परम्परया यागकर्तृत्वमाश्रितं, न हि समाख्यामात्रात्साक्षात्कर्तृत्वं प्रधानवाक्यस्वरसावगतं शक्यते बाधितुं, न हि यः कामयेत वीरो म आजायेतेति स चतुर्होतारं जुहुयादित्यादिष्वध्वर्य्वाश्रयणमिति अतः परिक्रयात् प्रागध्वर्य्वादेरभावाच्च तत्कर्तृकत्वं परिक्रयस्य, यजमान एव कर्ता तस्य चात्मनि परिक्रयविरोधात्कर्त्रन्तराणि प्राप्नुवन्त्यन्यत्रैव भवन्ति नियममात्रं समाख्यया क्रियत इति न परिक्रयेऽध्वर्युः समाख्यया भवति । किं च सत्यपि कर्त्रन्तरप्रवेशे ऽवश्यं स्वयं यजमानेन किञ्चित्कर्तव्यं तन्नियम एवायं परिक्रयविधिर्लाघवादध्वर्य्वादिरत्यन्ताप्राप्त एव विधेयः तस्माद्याजमानं दानं यत्र तु वचनमस्ति य एतामिष्टकामुपदध्यात्स त्रीन् वरान्दद्यादित्यादि, तत्र च त्वन्यमपि स्यात्, वचनस्यातिभाराभावात्, अन्यत्र यजमानस्यैव ॥

वपनादिसंस्काराणां याजमानताऽधिकरणम् ।

सू० संस्कारास्तु पुरुषसामर्थ्ये यथावेदं कर्मवद् व्यवतिष्ठेरन् ॥ २ ॥

पुरुषसंस्काराः केशश्मश्रुवपनादयः किमाध्वर्यवाः? उत याजमाना एवे? ति समाख्यानादाध्वर्यवत्वे प्राप्ते ब्रूमः संस्काराः संस्कृतस्य कार्ययोग्यतामाधातुं क्रियन्ते, न च कश्चिद्योग्यताजननार्थं कर्तारं परिक्रीणीते स्वयमेव योग्यत्वात् स्वतश्च कार्यं प्रतिगुणभावेन परिक्रीणीते तेन गुणतयैव परिक्रीतानां कर्तॄणां प्राप्तेर्यथाप्राप्तानामेव च समाख्यया व्यवस्थानाद्यत्रैव पुरु-

याणां गुणभावस्तत्रैव समाख्यया नियमः, संस्कारास्तु याजमाना वचना-दृत्विजामपि भवन्ति हिरण्यमालिन ऋत्विज इतिवत् ॥

तपसो याजमानताऽधिकरणम् ।

सू० तपश्च फलसिद्धित्वाल्लोकवत् ॥ ३ ॥

अस्ति ज्योतिष्टोमे तपः कायशोषणं कर्म त्र्यहं नाश्नातीत्यादि तदा-ध्वर्यव? मुत याजमान? मिति समाख्यानादाध्वर्यवं दुःखात्मकत्वेन च कर्तृ-प्रतिकूलत्वाचासौ संस्कार इति मन्यते । दुःखात्मकत्वादस्य दुःखफलं कार्यविरोधिनमधर्मं चपयितुं योग्यताऽस्तीति क्रतुफलप्रतिबन्धकपापक्षप-णेनैवास्य क्रत्वर्थत्वं लिङ्गप्रकरणाभ्यामवगम्यते यजमाने च फलेनोत्पत्तव्यम अतोऽस्यापि फलिसंस्कारत्वाद्याजमानत्वं वचनादृत्विजामपि स्याद्यथर्त्विज उपवसन्तीति. ॥

आकाङ्क्षानिरासः, लोहितोष्णीषतादीनां सर्वर्त्विग्धर्मताऽधिकरणं वा ।

सू० गुणत्वाच्च वेदेन न व्यवस्था-स्यात्, ॥ ४ ॥

ये च संस्कारा एव वचनादृत्विजां जाता हिरण्यमालित्वादयः किं ते समाख्यया तत्पुरुषैः कार्या? उत सर्वर्त्विग्भि? रिति समाख्यया तत्पुरुषैरिति प्राप्ते ब्रूमः, यत्र पुरुषस्य गुणभावस्तत्र केन चिदेकेन तत्सि-द्धेः कः कुर्यादि? त्यपेक्षिते नियमः समाख्यया क्रियते संस्काराणां तु यावत्संस्कार्यमावृत्त्यवगमात्तद्विरुद्धमनपेक्षितं च नियमं न शक्नोति समाख्या कर्तुमिति सर्वविषयता ॥

वृष्टिकामनाया याजमानताऽधिकरणम् ।

सू० तथा कामोऽर्थसंयोगात् ॥ ५ ॥

ज्योतिष्टोमे सदोमाने गुणकामश्रुतयः "यदि कामयेत वर्षुकः पर्जन्यः स्यान्नीचैः सदो मिनुया"दिति स किमाध्वर्यवः? यदि कामयेताध्वर्युरिति उत याजमानः? यदि कामयेत यजमान? इति, तत्र मिनुयादित्यध्वर्योर्वच-नात्तत्सामानाधिकरण्यादाध्वर्यवे च प्रवचनेऽध्वर्योः समाख्याधिकृतत्वात्स एव कामयतिना निर्दिश्यते इति तस्यैवेदं फलं, नैवं मिनुयादिति परस्मै-पदश्रुत्याऽध्वर्युव्यापारः परार्थः श्रूयते तया श्रुत्या विरोधात् वाक्यगम्यं

१ नाश्नीयादिति पा० ।

तत्सामानाधिकरण्यं कामयतेर्बाध्यते। किं च अन्यो गुणो नित्यतया विहितः नाभिदघ्नः पर्यन्त इत्यादि स क्रत्वर्थत्वाद्यजमानस्य कर्तव्यः यद् यदि काम्योऽपि गुणस्तस्यैव चोद्यते ततः स तेन नित्यस्य बाधमनुमन्यते अध्वर्य्वर्थेन तु गुणेनात्मार्थस्य गुणस्य बाधं यजमानो नानुमन्येत[1], न हि तस्याध्वर्युस्थेन काम्यगुणज्ञानेनात्मस्थं ज्ञानं नित्यविषयं निवर्तते, तस्माद्यदि कामयेत यजमान इति सम्बन्धात् याजमानं गुणफलं. यत्र तु पृथगुपदेशो यथा"ऽऽत्मने यजमानाय वा यं कामं कामयेत एनमुद्गाता उद्गाये- दि"ति तत्र पृथग्यजमानग्रहणाद् वा-शब्दाच्चात्मने इत्युद्गातैवोच्यते वचनस्य चातिभाराभावात्तस्यैव फलम् ॥

आयुर्दादिमन्त्राणां याजमानताऽधिकरणम्। सू० मन्त्राश्चाकर्मकरणास्तद्वत् ॥ ६ ॥

इहाकरणभूताः प्रत्यगाशिषो मन्त्रा उदाहरणम्, "आयुर्दा अग्नेऽस्यायुर्मे देही"त्यादयः ते किमध्वर्युणा प्रयोक्तव्या? उत यजमानेने? ति समाख्ययाऽऽध्वर्यवत्वे प्राप्ते ब्रूमः कर्मफलमत्राशास्यं नर्त्विक्फलम्, अक्रत्वर्थत्वप्रसङ्गात्, यजमानाच्चर्त्विक्फलं दक्षिणालाभात्मकमाशास्यं नाग्नेः, कर्मफलं च यजमानगामित्वात्प्रत्यगात्मविषयत्वेन प्राप्यत इति लिङ्गात्समाख्यां बाधित्वा यजमान एव प्रयुञ्जीत।

द्व्याम्नातस्योभयप्रयोग्यताऽधिकरणम्। सू० द्व्याम्नातेषूभौ द्व्याम्नानस्यार्थवत्त्वात् ॥ ७ ॥

दर्शपूर्णमासयोः केचिन्मन्त्राः सामान्यरूपेणाध्वर्यवे पुनश्च विशेषरूपेण याजमाने काण्डे समाम्नाताः, 'वाजस्य माप्रसवेने'त्यादयः, ते किं येन केनचित्प्रयोक्तव्याः? उत यजमानेनैवा? ध्वर्युणैव? अथवोभाभ्या? मपीति संशयः, तत्र मन्त्रैकत्वादेकेनैव सिद्धे यः कश्चिद् ब्रूयाद्विशेषसमाख्यबलीयस्त्वाद्वा यजमान एवाऽथवार्थस्य स्रुग्व्यूहनादेराध्वर्यवत्वान्मन्त्रोऽपि तेनैव प्रयोक्तव्य इति प्राप्ते ब्रूमः; सत्यपि हि मन्त्रैकत्वे पाठद्वयं प्रयोगवचनेन गृहीतं कर्तारमपेक्षते, न च मन्त्रस्वरूपमेव प्रकरणिना गृह्यते, किन्तु पाठविशिष्टमेव

१ नानुमन्यते इति पा०।

तादृशस्यैव प्रकरणे विपरिवृत्तिः, अपेक्षितश्च मन्त्राणां प्रकाशनोपायः न ह्यप्रकाशिताः स्वार्थमभिदधति, तत्र पाठस्य विपरिवृत्तिस्तदतिक्रमे कारणं नास्तीति तत एव प्रयोगकाले मन्त्राणां पाठसिद्धिः । अन्यथा हि स्मृतिस्थेऽर्थप्रकाशनसम्भवाचैकान्तेनोच्चारणं सिध्यत्. अतो यत्र पाठद्वयं तत्र समाख्याद्वयेन कर्तृद्वयं प्राप्तमद्विर्वविषयत्वेनाविरोधात्समुच्चीयते ।

अभिज्ञस्यैव वाचयितव्यत्वाधिकरणम् ।

सू० ज्ञाते च वाचनं न ह्यविद्वान्विहितोऽस्ति ॥ ८ ॥

वाजपेये "क्लृप्तीर्यजमानं वाचयती"ति श्रुतं, तत्र किं ज्ञश्चाज्ञश्च द्वावपि वाचयितव्यौ? उत ज्ञ एव? अथवा अज्ञ एवे ति याजमानमन्त्रप्रसङ्गाच्चिन्त्यते तत्र "अविशेषादुभौ यद्वा स्वयमेव वदेद् बुधः । अज्ञस्तु वाच्यते नैवं न ह्यज्ञो विद्यते क्रतौ अधिकारो हि विदुषां नान्येषामिति निश्चयः ब्रूहीति स्मरणात् ज्ञस्य सम्भविष्यति वाचनम् ॥

द्वादशद्वन्द्वानामाध्वर्यवत्वाधिकरणम् ।

सू० याजमाने समाख्यानात्कर्माणि याजमानं स्युः ॥ ९ ॥

दर्शपूर्णमासयोर्वत्समुपावसृजत्युखामधिश्रयति व्रीहीनवहन्तीत्यादिभिः प्रत्येकं कर्माणि सामान्यरूपेणाध्वर्यवे विहितानि पुनश्च याजमाने वत्सं चोपावसृजत्युखाञ्चाधिश्रयतीत्याद्यनुकीर्त्य "तानि वै द्वादश द्वन्द्वानि दर्शयज्ञायुधानि दर्शपूर्णमासयोस्तानि सम्पाद्य यजेते"ति श्रुतं, तदेतेषां द्वाम्नातमन्त्रवदुभयकर्तृकत्वं न सम्भवति एकेन कृतानामितरेण कर्तुमशक्यत्वादत एकः कुर्यादिति स्थिते कः कुर्यादि? ति विशेषसमाख्यानाद्यजमान इति प्राप्ते उच्यते "कर्माणि यत्र चोद्यन्ते तत्रैषां कर्त्रपेक्षिता । आध्वर्यवे च चोद्यन्ते कर्माण्याध्वर्यवात्[१]यतः याजमाने तु द्वन्द्वतासम्पादनमात्रं विहितानां- निर्ज्ञातकर्तृकाणां विधीयते, द्वयोर्द्वयोर्मिथः प्रत्यासन्नत्वसम्पादनत्वमित्यर्थः । न तु कर्मणां विधिः, न चान्येन क्रियमाणानामन्येन द्वन्द्वत्वसम्पादनमशक्यम् । ननु द्वन्द्वानि सम्पाद्य यजे-

१ आध्वर्यवाद्यतः पा० ।

तेति क्त्वा-प्रत्ययेनात्मनेपदसमानकर्तृकत्वात् द्रुन्दुतासम्पादनं वचनादेव याजमानं तद्बुलात्कर्मणामपि स एव कर्ता स्यात् न, प्रयोजकत्वेनापि कर्तृत्वसम्भवात् अतोऽध्वर्युणैव क्रियमाणानां द्रुन्दुतां यजमानोऽध्वर्युं स्मारयिष्यतीत्यदोषः ॥

हौतुराध्वर्यवकरणानुष्ठानुत्वाधिकरणम् ।

**सू० विप्रतिषेधे करणः समवायविशेषादितरमन्यस्तेषां यतो विशेषः स्यात् ॥ १० ॥**

ज्योतिष्टोमेऽग्नीषोमीये पशौ युगपदध्वर्युणा होत्रा च प्रयुक्तौ परिव्याणकरणक्रियमाणानुवादिनौ "परवीरसि" "युवा सुवासा" इति मन्त्रौ चोदकपरम्परया कुण्डपायिनामयनसत्रे प्राप्तौ तत्र ऋत्विक्समासः समातः यो होतासोऽध्वर्युरिति. तत्रैको होता तौ प्रयोक्तुमशक्तः किं होत्रं ब्रूयादुताध्वर्यव ? मिति संशये अनियमोऽथवा होतुः सतोऽध्वर्युत्वविधानादपरित्यक्तस्वधर्मा होताऽध्वर्युधर्मैः सम्बन्धुमर्हति परिधिरिव स्वधर्माविरोधेन यूपधर्मैरिति, क्रियमाणानुवादिनमेव वदेत् एवं प्राप्ते ब्रूमः "प्रत्यक्षवचनात्प्राप्तिर्हौतुराध्वर्यवेषु हि। हौत्रेषु चोदकाद् वाक्यचोदकाद्बलवत्तरम् ॥ यो होता सोऽध्वर्युरिति मुख्यत्वाच्छ्रुतिवृत्तो होता जघन्याध्वर्युलक्षितेषु कार्येषु प्रत्यक्षेण वाक्येन विधीयते, हौत्रेषु तु चोदकतः प्राप्तिरिति वाक्यबलादाध्वर्यवमेव वदेत्, परिधौ पशुं नियुञ्जीतेति नियोजनमात्रे परिधिर्वचनेन विधीयते, न यूपधर्मेष्विति वैषम्यम् । यस्तु सत्रेषु होत्रादयो न सन्ति तदभावाच्च न हौत्रादिषु चोदकतः प्राप्तिरित्याह तस्य हौत्रेण होतुश्चोदकात्समवाय इति भाष्यविरोधः, सत्रं तु कुण्डपायिनामयनं, वक्ष्यति हि "सत्रे चोपायचोदना" दिति किं चैवं यो होता सोऽध्वर्युरिति वचनेन किं विधीयते ? न हि होताऽस्ति योऽध्वर्युकार्यं विधीयते । अथ हौत्रमाध्वर्यवं चैकः कर्ता कुर्यादित्येतावद्विधीयते तदोभयोरपि प्रत्यक्षवचनादिष्टत्वेन तुल्यबलत्वादाध्वर्यवस्य बलीयस्त्वं न स्यादित्यधिकरणविरोधः, प्रत्यक्षविधानादिष्टमिति च निबन्धनयन्यतो विवध्यते इत्यास्तां तावत् ॥

प्रैषप्रैषार्थयोः पृथक्कर्तव्यताऽधिकरणम् ।

सू० प्रैषेषु च पराधिकारात् ॥ ११ ॥

प्रोक्षणीरासादयाग्नीदग्नीन् विहरेत्यादयः प्रैषाः प्रोक्षण्यासादनाग्निविहरणादयः प्रैषार्थाः किमध्वर्युणैकेन कर्तव्याः? उतान्यः प्रैषितुस्तदर्थानां कर्तेति संशये समाख्यानादुभयत्राऽध्वर्युः प्राप्तकालतायाञ्च लोड् भविष्यति न प्रैषे समाख्याबलादिति प्राप्ते ब्रूमः—मध्यमपुरुषस्याग्नीदिति च संबोधनस्य चेतनान्तरविषयत्वाद्दृतेऽनुपपत्तेः प्राप्तकालताऽपि पुरुषान्तरं प्रति वक्तव्या तद्बुरं प्रैष एवायं प्रैषसमाख्यानात् स चात्मनि न सम्भवतीति लिङ्गेन समाख्यां बाधित्वाऽन्यः प्रैषिताऽन्यश्च प्रैषार्थः कर्ता ॥

प्रैषप्रैषार्थयोः यथाक्रममाध्वर्यवाग्नीध्रताऽधिकरणम् ।

सू० अध्वर्युस्तु[1]दर्शनात् ॥ १२ ॥

प्रैषितुरन्यः प्रैषार्थकर्त्तेति स्थितं, स किमध्वर्युः प्रैषार्थकर्ता? अग्नीच्च प्रैषिता उत विपरीत? मिति संशये अर्थानां प्रधानभूतत्वाद् भूयस्त्वाच्च न तत्राध्वर्युबाधो युक्तः प्रैषस्य त्वेकत्वात् गुणत्वाच्चाध्वर्युं बाधित्वाऽग्नीत्कर्ता भवत्विति प्राप्ते उच्यते—अध्वर्युः प्रैषिता स्यात् एवं हि तेनैव प्रयोजकत्वेन प्रैषार्था अपि कृता भवन्तीति न क्वचित्समाख्याबाधिता स्यात् इतरथा प्रैषेऽत्यन्तबाधिता स्यात्, न चाबाधसम्भवे तद्युक्तम् अतोऽध्वर्युः प्रैषमग्नीत् प्रैषार्थान्कुर्यादिति ॥

करणमन्त्रेषु स्वामिफलस्याशासितव्यताधिकरणम् । वर्चोन्यायः

सू० ऋत्विक्फलं करणेष्वर्थवत्त्वात् ॥१३॥

अकरणत्वात् प्रत्यगाशिषो मन्त्रा लिङ्गाद्याजमाना इत्युक्तं, ये तु करणमन्त्रा "ममाग्ने वर्चो विहवेष्व"त्यादयः ते प्रत्यगाशिषोऽपि क्रियाकरत्वाध्वर्युणैव वक्तव्याः न त्वन्येनोच्यमाना अध्वर्योः क्रियां प्रकाशयन्ति । न च मन्त्रवशेन प्रधानभूतायां क्रियायामध्वर्युबाधो युक्तः तेन मन्त्रस्तावदाध्वर्यव एव तद्गतं च वर्चः प्रभृति सूक्तवाकगतायुरादिवत्फलमिति स्थिते किं तत्फलमध्वर्यो? रुत यजमानस्ये? ति ममेति लिङ्गादध्वर्योरिति प्राप्ते

[1] अध्वर्युस्तद्दर्शनादिति पा० ।

प्रधानवाक्यगतात्मनेपदश्रुत्या साङ्गप्रधानभावनाविषयाङ्गफलभावनानामपि यजमानगामित्वमुक्तमिति तद्विरुद्धं लिङ्गं नर्त्विग्गामित्वं बोधयितुमलम् अतो ममेति यजमानव्यतिरिक्तजनिता षष्ठी मम यो यजमानस्तस्य वच्चे इति यजमान एव वोचारान्ममेति निर्द्दिश्यते अतस्तस्यैव फलम् ॥

काम्यमन्त्रेषु कर्मार्थफलस्य ऋत्विग्धर्मताऽधिकरणम् ।

सू० कर्मार्थं तु फलं तेषां स्वामिनं[1] प्रत्यर्थवत्त्वं स्यात् ॥ १४ ॥

यत्तु मामासन्ताप्तमित्यसन्तापनादिकं फलं कर्मानुष्ठानौपयिकं यजमानस्यात्मीयकर्माविघातार्थमृत्विग्गामित्वेनैवेष्टमित्यात्मनेपदानुगु- ण्यादृत्विग्गामीति युक्तम् ॥

सू० व्यपदेशाच्च ॥

यत्र व्यपदेशो भवति तवो सहेति तत्रापि द्विवचनस्यानुपपत्तेर्ऋ- त्विग्गामित्वम् ॥

द्रव्यसंस्कारस्याङ्गप्रधाना- र्थताधिकरणम् ।

सू० द्रव्यसंस्कारः प्रकरणाविशेषात्स- र्वकर्मणाम् ॥ १५ ॥

बर्हिर्धर्माणामङ्गप्रधानार्थत्वं पूर्वमुक्तमुत्तरविवक्षया प्राप्यते, अथ वा पूर्वपक्षसूत्रमिदं, यस्मात्प्रकृतावङ्गप्रधानार्था बर्हिर्धर्मास्तस्माद्विकृतावपि यूपावटास्तरणबर्हिषि कर्तव्या इति प्राप्ते सिद्धान्तसूत्रम् ।

अपूर्वप्राकृतधर्माणां वि- कृतावसंबन्धाधिकरणम् ।

सू० निर्देशात्तु विकृतावपूर्वस्यानधि- कारः ॥ १६ ॥

प्रकृतौ यद्बर्हिः कार्ये तत्प्रयुक्ता बर्हिर्धर्माः कार्यद्वारेण विकृतिं गच्छन्ति न स्वरूपतः तेन प्राकृतकार्यसाधना एव धर्मा विकृतौ कर्तव्याः, न च यूपावटस्तरणं प्राकृतं बर्हिः कार्यम् अतो न तत्साधने बर्हिर्धर्माः ।

विधृतिपवित्रयोः परिभो- जनीयबर्हिषा कर्तव्यताऽधिक- रणम् ।

सू० विरोधे च श्रुतिविशेषादव्यक्तः शेषे ॥ १७ ॥

१ स्वामिनं प्रत्यर्थवत्त्वादिति पा० ।

इदानीं प्रकृतावपि नातीव सर्वार्थतेत्युच्यते दर्शपूर्णमासयोर्विधृत्यर्थं पवित्रार्थं च यद्बर्हिस्तदपि धर्मवत्स्यात् अविशेषादिति प्राप्ते ब्रूमः धर्मवतः कृत्स्नस्य बर्हिषो यथाऽऽनूनस्य संनद्धस्यासादितस्यास्तरणे विनियोगाचान्यत्र विनियोगः संभवतीति बलादसंस्कृतादेव पवित्रादि कार्यम् ॥

प्राकृतपुरोडाशादीनां निधानाधिकरणम् ।

**सू० अपनयस्त्वेकदेशस्य विद्यमानसंयोगात् ॥ १८ ॥**

ज्योतिष्टोमाधिकारे पुरोडाशशकलमैन्द्रवायवस्य पात्रे निदधातीति आमिक्षामैत्रावरुणस्य धाना आश्विनस्य पात्रे इत्यादि, किं सन्निहितात्सवनीयपुरोडाशादपनीय शकलः पात्रे निधातव्यः? उत पुरोडाशान्तरमुत्पाद्य तच्छकलस्य निधान? मिति विचारे पूर्ववद्यागार्थस्य निधाने विनियोगासम्भवादन्योत्पादनं, स्यादेवं यद्यन्यत्र विनियोगः स्याद्यागार्थस्यैव तु शकलस्य संस्कारोऽयं द्वितीयानिर्देशात्, अतः प्रकृतैकदेशस्यायमपनयः, एवं पयस्यादिष्वपि पयस्याद्यर्थं चेदमधिकरणं पुरोडाशशकलावधानविधेरेकदेशद्रव्यत्वेनाप्रयोजकत्वस्य सिद्धत्वात् ॥

काम्येष्टिषु उपांशुत्वधर्मस्य प्रधानार्थताऽधिकरणम् ॥

**सू० विकृतौ सर्वार्थः शेषः प्रकृतिवत् ॥ १९ ॥**

यज्ञाथर्वणं वै काम्या इष्टयस्ता उपांशु कर्तव्या इति श्रुतमुपांशुत्वं किमङ्गप्रधानार्थम्? उत प्रधानार्थ? मिति संशयः, "तत्र मन्त्रोच्चारणसद्भावात् द्वयोरङ्गप्रधानयोः । तद्विशेष उपांशुत्वं बर्हिस्तद्धर्मवद् द्वयोः उच्यते, बर्हिषां धर्मा वाक्यादङ्गप्रधानगाः । उपांशुता च वाक्येन काम्यानामेव चोच्यते" कामप्रयोजनानि प्रधानान्येव काम्य-शब्देनोच्यन्ते इति तेषामेवोपांशुत्वं ननु प्रवर्ग्यशब्दसंयुक्तस्योच्चैष्ट्वस्यावभृथशब्दसंयुक्तानामप्यपामङ्गप्रधानार्थतेष्यते तयोपांशुत्वमपि स्यात् विषम उपन्यासः, तत्र ह्युच्चैः प्रवर्ग्येण प्रवरन्ति अप्स्ववभृथेन चरन्तीति तृतीयासंयोगात्प्रवर्ग्यावभृथकरणिकायां भावनायामुच्चैष्ट्वमापश्च विधीयन्ते तदन्तर्गतानि चाङ्गानि युक्तं यदुच्चैष्ट्वमापश्चाङ्गं लभन्ते अत्र तु काम्या उपांशु कर्तव्या इति कर्तव्यत्वनिर्देशात्प्र-

धानक्रियायामेवोपांशुत्वं विहितं न तत्करणिकायां फलक्रियायामिति विशेषः ॥

श्येनाङ्गानां नवनीताज्याधिकरणम् ।

सू० सन्निधानविशेषादसम्भवे तदङ्गानाम् ॥ २० ॥

श्येने श्रूयते दृतिनवनीतमाज्यं भवतीति किं प्रधानार्थं? सुताङ्गार्थं? मिति संशयः तत्राज्यस्याप्रकृतत्वात् तदनुवादेन दृतिनवनीतत्वं विधीयते किं तु दृतिनवनीतत्वविशिष्टमाज्यं विहितं, प्रकरणात्प्रधानार्थं सोमप्रत्याम्नायेनेति प्राप्ते उच्यते—विशिष्टविधिगौरवादुपदेशतोऽप्रकृतस्याप्याज्यस्यातिदेशतः प्राप्तिसम्भवात् न तदनुवादेन दृतिनवनीतत्वं गुणो विधीयते यदाज्यन्तद्दृतौ नवनीतं प्रकृतिर्यस्य तत् स्यात् अङ्गेषु चाज्यप्राप्तिरिति तत्रैव दृतिनवनीतत्त्वम् ॥

सर्वेषामेव श्येनाङ्गानां नवनीताज्याधिकरणम् ।

सू० तत्काले वा लिङ्गदर्शनात् ॥ २१ ।

स्थितमङ्गेषु दृतिनवनीतमिति किं सुत्याकालेष्वेवाङ्गेषु स्यात्? उत सर्वेष्वि? ति संशये सामान्यतोदृष्टात्सुत्या कालता पशुसाहित्यं हि सह पशूनालभत इति श्येनाङ्गत्वेन विहितं सुत्याकालं दृष्टमग्नीषोमीयानुबन्ध्यस्थानयोः पुरोडाशामिक्षाभ्यामनुग्रहवचनेन पशुशून्यत्वावगमात्तद्वद् दृतिनवनीतमपि श्येनवैशेषिकाङ्गत्वात्सुत्याकालमेव भवितुमर्हतीति, मैवं, न हि वाक्ये न सर्वार्थं गम्यमानमनुमानेन व्यावर्तयितुं शक्यम्, अप्रयोजकश्च हेतुः न हि पशुसाहित्यस्यैतदर्थत्वात्सुत्याकालता, किं तर्हि न्यायान्तरात् साहित्यमवश्य कस्य चिद्देकस्य स्थाने कर्तव्यं तत्प्रधानप्रत्यासत्तिलिप्सया सवनीयस्थाने कृतं न त्विहैव किं चित्कारणमस्तीति वाक्याविशेषात्सर्वार्थता ॥

सवनीयानां मांसमयताऽधिकरणम् ।

सू० मासं तु सवनीयानां चोदनाविशेषात् ॥ २२ ॥

शाक्यानामयनं नाम सत्रं षड्त्रिंशदाब्दिकम्, तत्रैतच्छ्रूयते वाक्यं संस्थिते संस्थितेऽहनि गृहपतिर्मृगयां याति स यान्मृगान्हन्ति तेषां तरसाः

सवनीयाः पुरोडाशा भवन्ती"ति किमिदं तरसं सर्वपुरोडाशानां ? मुत सवनीयानां ? मिति संशयः, तत्र "न ह्युद्दिश्यः पुरोडाशः सवनीयेन शक्यते विशेष्टुं ते न सर्वार्थं तरसं नवनीतवत्, । सवनीयपदन्त्ववयुत्याऽनुवादः सृष्टि-शब्दवद्व। लिङ्गसमवायेन सवनीयासवनीयेषु वर्तत इति प्राप्तेऽभिधीयते "पुरोडाशं समुद्दिश्य तरसम्बोध्यते यदि ।ततः स्यात्सर्वगामित्वमुद्देश्यस्याविशेषणात् ॥ उद्दिश्य सवनीयांस्तु मांसमत्र विधीयते। पुरोडाशापुरोडाशसमवाये तु लक्षणा। पुरोडाशपदं तद्धि जघन्यां लक्षणां व्रजेत्। प्रकृतौ चास्य दृष्टा,सा पुरोडाशानलंकुरु। सवनीयपदं मुख्यं न मुख्यार्थं परित्यजेत् दृष्टा च प्रकृतौ नैव सवनीयस्य लक्षणा। अव्यवायाच्च तेनैव युक्ता तरससङ्गतिः। तद्व्यवेतः पुरोडाश इति तेन न सङ्गतिः॥ सवनीयपदं खलु सन्निहितं तदतीत्य पदान्तरमेति न हि, । तरसः नवनीतविधर्मतया सवनीयहर्विर्विकरोति ततः । शेषो हेतुरतस्त्वद्धि नियोगे मानं श्रुत्याद्यत्र विरोधे परमानं पूर्वस्मात्स्यादुर्बलमत्रास्ति विरोधो नात्रेत्येवं शेषकथोक्ता परिपूर्णा ॥

इति श्रीपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां
तृतीयाध्यायस्याष्टमः पादस्तृतीयोऽध्यायश्च समाप्तः ॥

---

## अथ चतुर्थाऽध्याये प्रथमः पाद आरभ्यते ।

अथ प्रतिज्ञाधिकरणम् ।

सू० अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा ॥ १ ॥

"प्रसिद्धे शेषशेषित्वे प्रयुक्तिरधुनोच्यते । शेषिणैव च शेषस्य प्रयुक्तिरिति हेतुता" ॥ यद्यपि न सर्वः शेषी शेषस्य प्रयोजकः तुषोपवापादेः कपालादिप्रयोजकत्वाभावात्, तथाऽपि शेषिण एव तच्छेषाणां प्रयोक्तार इति भवति शेषलक्षणस्य प्रयुक्तिलक्षणं प्रति हेतुतेति, ततः परमारम्भः ॥ ननु विधिरेव प्रयोजकः सर्वश्च विधिः स्वविषयस्य प्रयोजक एव अप्रयोजकस्य विधित्वानुपपत्तेः, तदेकरसत्वाद्विधेः । अथ प्रधानविधिरेव प्रयोजको नाङ्गविधयः अन्यतः सिद्धत्वात् । तुल्यमिदमामि-

१ निरोधे इति पा० ।

त्वाविधेर्वाजिनविधेश्च द्वयोरप्यङ्गविधित्वादतः किमत्र चिन्त्यते ? । उच्यते सत्यम्, विधिरेव प्रयोजकः प्रयोजनाय तु कस्मै किमनुष्ठापयति कस्मै न किं दध्यानयविधिरामिक्षार्थतयैवानयनमनुष्ठापयति ? उत वाजिनार्थतयाऽपि ? एवं कपालादिष्वपि द्रष्टव्यम् । यदर्थत्वानुष्ठापयति तत्प्रयोजकमित्युच्यते । यत्तु साध्यमपि साधनमन्यतः सिद्धमुपजीवति न स्वयमनुष्ठापयति तदप्रयोजकमुच्यते । यद्वा विधिः क्रियायामेव साक्षात्प्रयोजको विशेषणेषु त्वर्थात् । तदत्र परप्रयुक्तमेव विशेषणत्वेनाङ्गीक्रियते, यथैकहायनीक्रयप्रयुक्तापदयहणस्य पुरोडाशकपालस्य पुरोडाशप्रयुक्तं तुषोपवापस्य तत्र तुषोपवापादिविधेः परप्रयुक्तविशेषणोपजीवित्वात्तद्विषया प्रयुक्तिशक्तिर्लुप्यते ॥ कपालेषु श्रपयति एकहायन्या क्रीणातीत्यादयस्तु विधयः स्वतन्त्रकपालैकहायन्यादिग्राहित्वात् भवन्ति प्रयोजकाः, तत्र किङ्कस्य प्रयोजकं ? किङ्कस्य ने ? ति युक्ता चिन्ता । सर्वस्मिंश्चाध्याये क्रत्वर्थपुरुषार्थादिविचारद्वारेण प्रयुक्तिरेव चिन्त्यते । तदेतत्प्रतिज्ञासूत्रम् । यदनभाष्ये श्रुत्यादिकीर्त्तनं तेनान्यत् शेषप्रमाणं तृतीयस्याविषयभूतमस्तीति गम्यते । अन्यथा हि नाना कर्मलक्षणं वृत्तमितिवत् शेषलक्षणं वृत्तमित्येवावक्ष्यत् । अथ तत्र द्वितीयेऽध्याय इत्यनुक्त्वा इह तृतीयेऽध्याय इति किमर्थमुक्तं ? वक्तृविवक्षावैचित्र्यात् । इदमेव श्रुत्यादिकीर्त्तनेऽप्युत्तरम् ॥ १ ॥

अथ क्रत्वर्थपुरुषार्थलक्षणाधिकरणम् ।

**सू० यस्मिन् प्रीतिः पुरुषस्य तस्य लिप्सार्थलक्षणाविभक्तत्वात् ॥ २ ॥**

वक्ष्यमाणयोः क्रत्वर्थपुरुषार्थयोर्लक्षणार्थमिदं सूत्रम् ॥ यद्भावनाकथम्भावपूरणार्थं विधीयते तत्क्रत्वर्थम् । अन्यत्करणं फलञ्च पुरुषार्थम् । अथवा फलांशस्य किं विधिः प्रयोजको ने ? ति चिन्त्यते । विधेयभावनाविशेषणत्वात्करणादिवत्फलस्यापि विधेयत्वशङ्का, रागतस्तु प्रवृत्तिसिद्धेरविधेयत्वम् । एवं वा दर्शपूर्णमासयोः श्रूयते । "गोदोहनेन पशुकामस्य प्रणये" दिति । तत्र संशयः किं गोदोहनं क्रत्वर्थमपि ? उत पुरुषार्थमेवे ? ति तत्र षष्ठीश्रुत्या पुरुषार्थं क्रतूपकरणत्वाच्च क्रत्वर्थमित्युभयार्थत्वम् । नैवम् ।

उपकारलक्षणशेषत्वनिराकरणात् । अन्यार्थस्यापि क्रतूपकारकत्वाविरोधात् । श्रुत्या पुरुषार्थमेवेति फलप्रयुक्तमेवैतच्च क्रतुप्रयुक्तम् । एवं वा किमिहोदाहरणम् ?। द्रव्यार्जनमेव द्रव्यस्य प्राप्तिरित्यर्थः । येयं पुरुषस्य तेन तेन नियमेन द्रव्यप्राप्तिः—ब्राह्मणस्य प्रतिग्रहादिना, राजन्यस्य जयादिना, वैश्यस्य कृष्यादिना, शूद्रस्य सेवादिना, सर्वेषां दायादिनेति, सैव चिन्त्यते । किं क्रत्वर्था पुरुषस्य द्रव्यप्राप्ति ? उत पुरुषार्था ? ति, तत्र "नियमस्यार्थवत्त्वाय क्रत्वर्थाद्द्रव्यसङ्ग्रहः । पुरुषार्थत्वपक्षे हि नियमोऽनर्थको भवेत्" । प्रतिग्रहाद्युपायनियमस्तावद् द्रव्यार्जनोद्देशेन ब्राह्मणादीनां विधीयमानस्तदङ्गं विज्ञायते, स्वरूपे कार्ये वोपयोगयङ्गम्भवति सोऽयन्नियमो-न तावदर्जनस्वरूपे उपयुज्यते, अन्तरेणापि नियममर्जनसम्भवात् । अतः कार्योपयोगी, पुरुषार्थत्वे च दृष्टमेव प्रयोजनं क्षुत्प्रतिघातादि द्रव्यार्जनस्य कार्यं स्यात्तदपि च विनापि नियमेन निष्पद्यत इति तादर्थ्ये सति अर्जनस्य नियमस्तदङ्गञ्च स्यात्, अतो नियमविध्यनुपपत्त्या नूनं द्रव्यप्राप्तिः क्रत्वर्थेत्यनुमीयते । तथा सति हि क्रत्वपूर्वस्यादृष्टत्वान्नियतोपायमेवार्जनं तन्निष्पादयतीति कल्पनाचानर्थक्यं नियमविधेः । न वाऽर्जनविशेषोद्देशेनायन्नियमविधिः, विशेषाश्रवणात्, प्रकरणाद्यभावाच्च, तस्मादर्जनमात्रोद्देशेन विधीयमानोनियमस्तन्मात्रस्य क्रत्वर्थत्वङ्गमयति तस्मात्सर्वमेव पुरुषस्य स्वं क्रत्वर्थम् । एवञ्च क्रत्वर्थैकान्तर्हिरण्यादिसम्बन्धात् स्रामवत्यादीनां खादिरवत् क्रत्वर्थत्वात् फलं न कल्पनीयम्भवति । तस्मात्सर्वं द्रव्यं क्रत्वर्थं, तथा च स्मृतिः । "यज्ञार्थं पशवः सृष्टाः" इति, एवं प्राप्ते ब्रूमः । "पुरुषार्थत्वमेतस्य प्रत्यक्षेणावगम्यते । क्रत्वर्थताऽनुमानेन प्रत्यक्षात्तच्च दुर्बलम् ॥ रागप्राप्तं तावदर्जनं न शास्त्रीयम् । रागतश्च पुरुषार्थतया प्राप्तिः । प्रत्यक्षेण चार्जितं द्रव्यं पुरुषं प्रीणयत् पुरुषार्थं विज्ञायते, न तदनुमानेन क्रत्वेकशेषतया शक्यं विज्ञातुं, तस्मात्पुरुषार्थं द्रव्यम् । क्रतुरपि पुरुषकार्याणामन्यतम इति कार्यान्तर इव क्रतावप्युपयुज्यते इत्येतावानविशेषः, न तस्यैवाङ्गं, तथा च सति जीवनलोपात्क्रतुरेव न संवर्त्तेत द्रव्यप्राप्तिमात्रादेव च क्रतूपक्रमात् "अपवा एष सुवर्गात् लोकादित्यनपक्रमद-

र्शनवैवोपपद्येत तस्मात्पुरुषार्थम् । एवन्दृष्टार्थम्भवति, नियमस्तु दृष्टकार्याभावात् काममदृष्टार्थः स्यात् । अदृष्टमपि पुरुषार्थार्जनविषयत्वान्नियमस्य तदङ्गमेव कल्प्यते, तेनासावुपायान्तरेणार्जयन् प्रत्यवैतीति कल्प्यते तस्मात्पुरुषार्थो द्रव्यपरिग्रहः । केचित्तु नियम एवात्र चिन्त्यत इत्याहुः ॥ तद्यथाभाष्यम् । तथा च सति पुरुषार्थस्यापि द्रव्यस्य पूर्वपक्षेऽपि सद्भावात् सिद्धान्तवत् पूर्वपक्षेऽपि क्षामवत्याः क्रत्वर्थता न सिध्यतीति तदुपन्यासो नावकल्प्येत । तथा द्रव्यार्जनप्रक्रमादेव क्रतुप्रक्रमे दोषो यः सिद्धान्तिना पूर्वपक्षिणं प्रत्यापादितः सोऽपि न स्यादित्यास्तां तावत् ॥ २ ॥

प्रजापतिव्रतानां पुरुषार्थताऽधिकरणम् ।

सू० तदुत्सर्गे कर्मणि पुरुषार्थाय शास्त्रस्यानतिशक्यत्वान्न च द्रव्यं चिकीर्ष्यते तेनार्थेनाभिसम्बन्धात् क्रियायाम्पुरुषश्रुतिः ॥ ३ ॥

तस्य व्रतमित्युपक्रम्य "नोद्यन्तमादित्यमीक्षेते"ति श्रुतं, तत्र विचार्यते किं क्रत्वर्थ ? मुत पुरुषार्थ ? मिति तथा किं प्रतिषेधः ? पर्युदास ? इति तत्र प्रतिषेधे श्रुतिशब्दः, पर्युदासे तु लक्षणा । प्रतिषेधश्च सन् प्राप्तिम्मार्गमाणः क्रतुं व्रजेत् पर्युदासे नञीक्षतिभ्यां क्रियान्तरं लक्ष्यते । प्रतिषेधे त्वाख्यातेन श्रुत्यभिहितामीक्षणकर्त्तव्यतां श्रुत्यैव नञ् प्रतिषेधतीति न लक्षणा । स च प्राप्त्यपेक्षो वैदिकत्वसामान्याद्वैदिकीमेव प्राप्तिं शीघ्रमेव गच्छति । तेन यत्र कर्माङ्गभूतमादित्येक्षणं विहितं तत्रोद्यतोऽस्तं यतश्च प्रतिषेधः फलञ्च न कल्प्यम् । अथापि पर्युदासस्तथाऽपि फलकल्पनाभयात्क्रत्वर्थ इति प्राप्ते ब्रूमः ॥ "उपक्रमे श्रुतं कर्मवाचिव्रतपदं यतः । तदन्वयबलात्कर्मविशेषोऽतोऽत्र चोद्यते ॥ तेन लक्षणयाऽप्यत्र पर्युदासः स च क्रतोः । बहिः श्रुतः फलाकाङ्क्षी पुरुषार्थत्वमृच्छति । श्रुत्यादिक्रतुसम्बन्धे प्रमाणं नात्र विद्यते । पुरुषापेक्षतार्थत्वं विधिना चावबोधितम् । साक्षादपेक्षितं तस्य फलमेव न तु क्रतुः । अतः फलार्थता तच्च वाक्यशेषादपक्षयः ॥ ३ ॥

यज्ञायुधानामनुवादताऽधिकरणम् ।

सू० द्रव्याणि त्वविशेषेणानर्थक्यात्प्रदीयेरन् ॥ ४ ॥

स्फ्यश्च कपालानि चेत्युपक्रम्य "एतानि वै दश यज्ञायुधानी"ति श्रुतं, किमयं प्रधानयागहविः-शब्देन स्फ्यादीनां विधिः? उत स्फ्येनोद्धन्तीत्यादिवाक्यप्राप्तानुवाद? इति संशये "अर्थवत्त्वाद्विधिर्न्याय्यो वादमात्रं ह्यनर्थकम्। यज्ञशब्दः प्रकरणादाग्नेयादिषु वर्तते ॥ गौणेनायुध-शब्देन तत्साधनतया ततः। स्फ्यादिद्रव्याणि चोद्यन्ते पुरोडाशादिभिः सह। समुच्चयोविकल्पो वा स्यादिति प्राप्त उच्यते। न ह्यत्राख्यात-शब्दोऽपि श्रूयते न तरां विधिः। विकल्पोऽपि न वैषम्यात्पुरोडाशादिभिः सह। समुच्चयोऽपि नैकार्थ्याचिरपेक्षश्रुतेरपि'। यज्ञायुधानि सम्भरन्तीति वाऽनन्तरश्रुतेन विधिनैकवाक्यत्वात्तच्छेषोऽयम् उद्धननादिद्वारप्राप्तयज्ञसाधनत्वानुवादः ॥ ४ ॥

पश्वेकत्वादेर्विव-क्षाधिकरणम् ।

## सू० तत्रैकत्वमयज्ञाङ्गमर्थस्य गुणभूतत्वात् ॥ ५ ॥

उपादेयभूतपश्वादिगता विभक्त्यभिहितैकत्वादिका संख्या किमयज्ञाङ्गमविवक्षिता? उत यज्ञाङ्गं विवक्षिते? ति संशयः। तत्र "श्रुत्या पश्वङ्गता तस्याः समानपदरूपया। पदान्तरस्ययागाङ्गभावो वाक्यात्प्रतीयते। दुर्बलञ्च श्रुतेर्वाक्यमित्ययज्ञाङ्गमेकता। तदभावेऽपि यज्ञावैगुण्यात्तदविवक्षितम्। उच्यते।-समानप्रत्ययस्थेन कारकेणात्मसात्कृता। क्रियायै नीयते संख्या न पश्वङ्गं पदाद्भवेत् ॥ समानप्रत्ययोपात्तेन प्रातिपदिकार्थादपि सन्निहिततरेण प्राधानभूतेन कारकेणावरुद्धमेकत्वं प्रातिपदिकार्थमनादृत्य क्रियाङ्गमवगम्यमानं वाक्यसमर्पितेन क्रियाविशेषेण सम्बध्य पश्चादरुणैकहायनीन्यायेन पशुना विशेषणत्वेनार्थात्सम्बध्यते तादर्थ्यन्तु यज्ञं प्रत्येवेति विवक्षितमेकत्वम् ॥ ५ ॥

लिङ्गस्य विवक्षितत्वाधिकरणम् ।

## सू० तथा च लिङ्गम् ॥ ६ ॥

एवं वा लिङ्गत्वलिङ्गे विपरीतलिङ्गे वृक्षादौ मक्षिकादौ च शब्दप्रयोगादशब्दार्थे इत्यविवक्षितत्वाशङ्का, सिंहःसिंहीत्यादावनन्यथासिद्धलिङ्गप्रतीतिः शब्दस्य वाचकत्वं कल्पयतीति शब्दार्थत्वात्सङ्ख्यावल्लिङ्गं विवक्षितम् ॥ ६ ॥

आश्रयिणामदृष्टार्थताधिकरणम् ।

सू० आश्रयिष्वविशेषेण भावोऽर्थः प्रतीयेत ॥ ७ ॥

उत्तमः प्रयाजः पशुपुरोडाशः स्विष्टकृदित्यादयोंऽशेन परकीयं द्रव्यदेवतं संस्कुर्वन्तः किन्तदर्था एव ? उत पूर्वार्था अपी ? ति चिन्त्यते "एकस्य कर्मणो युक्तमेकमेव प्रयोजनम् ॥ दृष्टे सति च नादृष्टं कल्प्यन्त्वापूर्वमस्त्यतः" । उच्यते—"देवतास्मरणं मन्त्रात् । प्रतपाद् द्रव्यसंस्कृतिम् । त्यागांशस्य तु नादृष्टादृते किञ्चित्प्रयोजनम् । तस्मात् त्यागांशेनादृष्टार्था अपीत्युभयार्थाः ॥ ७ ॥

प्रतिज्ञाधिकरणम् ।

सू० अर्थे समवैषम्यमतो द्रव्यकर्मणाम् ॥ ८ ॥

य एवं तावत्फलभूतं प्रयोजकाप्रयोजकत्वमाश्रित्य शेषशेषित्वमेव साक्षाच्चिन्तितम् ॥ अतः परमेतदेव साक्षाच्चिन्त्यते हेतुत्वेन तु शेषिविचारः क्वचित्करिष्यते । तदेतद् वृत्तवर्त्तिष्यमाणविवेककथनमात्रार्थं सूत्रम् ॥ ८ ॥

तप्ते पयसि दध्यानयनस्यामिक्षाप्रयुक्तताधिकरणम् ।

सू० एकनिष्पत्तेः सर्वसमं स्यात् ॥ ९ ॥

"तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिन"मिति श्रुतम् ॥ तत्र संशयः किमामिक्षायागेनैव दध्यानयनम्प्रयुज्यते ? उत वाजिनयागेनापी ? ति तदर्थं च किमुभयार्थं ? मुतामिक्षार्थं ? मिति, ततोऽपि पुनर्विचारयितव्यम् । किमामिक्षादधिपयोभ्यामर्थान्तरं वैश्वदेवयागस्य हविः ? उत पय एव दधिसंसृष्टमिति "मधुराम्लरसाऽमिक्षाघनरूपा च तेन सा । पयसोऽर्थान्तरन्तद्धि मधुरैकरसं द्रवम् । वैश्वदेवयागस्य तावदामिक्षा हविः सा च रूपरसान्यत्वात् अर्थान्तरं क्षीरादतोदध्यानयनमसंयुक्तमामिक्षया विहितं केवलन्तज्जननसामर्थ्याल्लिङ्गादामिक्षार्थं स्यात् । सामर्थ्यञ्च वाजिनेऽप्यस्तीति तादर्थ्यमपि युक्तम् । अत उभयप्रयुक्तमानयनमिति उच्यते—"पयस्तदा परामृष्टं वैश्वदेवं विधीयते । मन्त्रवर्णाच्च पयसो हविष्ट्वमवगम्यते पयस्त्वञ्च द्रवापेक्षं रसमात्रनिमित्तकम् । पय एव घनीभूतमामिक्षेत्यभिधीयते । आस्तान्तावदामिक्षापदं सा वैश्वदेव्यामिक्षेति यत्त-

च्छब्दपरामृष्टं तद्धविः, स च पयः परामृशति, तद्धि पूर्ववाक्ये प्रधानभूतम्, प्रकृतं तादर्थ्येनानयनविधानात्, कथन्तादर्थ्यमानयनं द्विकर्मकं यदानीयते तत्प्रथमकर्म यत्प्रत्यानीयते तद् द्वितीयं, तच्चेह पयः, तच्च प्रथमेन कर्मणा व्याप्यमानं प्रधानम् । प्रधानपरामर्शी च सर्वनामेति तच्छब्दः पय एव विश्वेदेवैः सम्बध्नातीति तदेव हविः । तथा च मन्त्रः "जुषन्तां युज्यम्पय"-इति, पय एव घनीभूतमामिक्षेत्यामिक्षापदं नित्यानुवादः । तत्सामानाधिकरण्याच्च सेति स्त्रीलिङ्गम् । सोऽपि नित्यानुवाद एव, न च पयस्त्वं द्रवापेक्षं, रसविशेषमात्रापेक्षं तत् । तापेन सान्द्रीभूतेऽपि पयस्त्वप्रतीतेः । यस्त्वम्लो रसः स संस्कारकस्य दध्नः न त्वसावामिक्षापदस्याभिधेयः, यस्त्वत्र मधुरः पयोंऽशः स एवामिक्षा, पयःप्रतिनिर्देशकतच्छब्दसामानाधिकरण्यान्मन्त्रवर्णाच्च । तस्मात्पय एवामिक्षा वैश्वदेवयागहविरिति वैश्वदेवयागप्रयुक्तमानयनं न वाजिनयागप्रयुक्तम् ॥ ९ ॥

गवानयनस्य पदकर्माप्रयुक्तताऽधिकरणम् ।

सू० पदकर्माप्रयोजकं नयनस्य परार्थत्वात् ॥ १० ॥

"एकहायन्या क्रीणाती"ति प्रकृत्य श्रूयते । "षट् पदान्यनुनिष्क्रामति सप्तमम्पदमध्वर्युरञ्जलिना गृह्णाति यर्हि हविर्धाने प्राची प्रवर्तयेयुस्तर्हि तेनाक्षमुपाञ्ज्यादिति तत्र संशयः किं यदेतदक्षाभ्यञ्जनं सप्तमपदसाध्यं तदर्थमप्येकहायनीनयनन्तेनापि प्रयुज्यते ? उत क्रयार्थमेव नयनन्तेनैव प्रयुज्यत ? इति, तत्र "द्वयोर्नयनसाध्यत्वाद्वाक्ये चाश्रवणाद्यथा । सन्निधानक्रयार्थत्वं तथैव पदशेषता । दध्यानयनमामिक्षासंयुक्तं न वाजिनेनानयनं तु द्वाभ्यामसंयुक्तं द्वयोरपि सन्निधानाच्चयनसाध्यत्वाच्चाविशेषः । नैवं तृतीयया तावत्क्रयार्थैवैकहायनी । यदर्था सा तदर्थश्च तत्संस्कारात्मकोनयः । नयनस्य परार्थत्वात्पदकर्माप्रयोजकम् । परार्थानुष्ठितं तत्तु पदकर्मोपजीवति ॥ १० ॥

कपालानां तुषोपवापाप्रयुक्तताऽधिकरणम् ।

सू० अर्थाभिधानकर्म च भविष्यता संयोगस्य तन्निमित्तत्वात्तदर्थो हि विधीयते ॥ ११ ॥

"पुरोडाशकपालेन तुषानुपवपती"ति "कपालेषु श्रपयती"ति श्रुतम्। तत्र संशयः। किम्पुरोडाशश्रपणं तुषोपवापश्च उभयं प्रयोजकं कपालस्य? उत तुषोपवापो न प्रयोजकः? इति, तत्रोपवापशेषत्वं कपालस्य तृतीयया निर्विवादमतः सोऽपि कपालस्य प्रयोजकः,"सत्यमस्ति तदङ्गत्वं तथाऽपि त्वप्रयोजकः पुरोडाशप्रयुक्तस्य कपालस्येह चोदनात् पुरोडाशार्थिनोपात्त-मासादितञ्च कपालं तुषोपवापे चोद्यते न कपालमात्रं, न च प्रयुक्तस्य पुनः प्रयुक्तिः सम्भवतीत्यप्रयोजकस्तुषोपवापः ॥ ११ ॥

शकृल्लोहितयोः पश्वा-
वप्रयोक्तृत्वाधिकरणम्।

सू० पश्वावनालम्भाल्लोहितशकृतोरकर्म-
त्वम् ॥ १२ ॥

"अग्नीषोमीयं पशुमालभेते"ति प्रकृत्य "हृदयस्याग्रेऽवद्यती"ति श्रुतम्॥ तथा शकृत्सं प्रविध्यति लोहितत्त्विरस्यतीति श्रुतम् तत्र संशयः किं हृदयादि शकृल्लोहितं च द्वयमपि पश्वालम्भस्य प्रयोजकम्? उत हृदयाद्ये-वे? ति, उभयत्र पशोरश्रवणात्प्रकृतसम्बन्धे चाविशेषादुभयं प्रयोजकं, नैवम् "यागार्थः पशुस्त्यक्तोहविः प्रकृतिभावतः। हवींषि हृदयादीनि तैरेवातः प्रयुज्यते। यद्यपि हृदयादिवाक्ये पशोरश्रवणं यागार्थतया तु श्रूयते ता-दर्थ्यं च न हविष्ट्वेन विशसनश्रवणात्किन्तु हविःप्रकृतित्वेन। हृदया-दीनि हवींषि नान्यदिति दशमे स्थितम्, अतस्तदर्थ एव पश्वालम्भः शकृल्लोहितकर्म तु प्रतिपत्तिमात्रम् ॥ १२ ॥

पुरोडाशस्य स्विष्टकृ-
दप्रयुक्तताधिकरणम्।

सू० एकदेशद्रव्यश्चोत्पत्तौ विद्यमान-
संयोगात् ॥ १३ ॥

उत्तरार्द्धात्स्विष्टकृते समवद्यतीति स्विष्टकृत् किमुत्तरार्द्धपुरोडाश-योरन्ययोः प्रयोजकः? उताग्न्यादिप्रयुक्तोपजीवी? ति संशये। "नान्यादर्थस्य हविषो देवतान्तरसङ्गतिः। कृत्वात्वन्यद्धविस्तस्मादवद्येतोत्तरार्धतः" उच्य-ते—"उत्तरार्द्धादिशब्दानां साकाङ्क्षार्थाभिधायिनाम्। ज्ञापेतणीयसम्बन्धा-त्प्रागर्थोऽध्यवसीयते॥ उत्तरार्द्धादिशब्दा न स्वातन्त्र्येणार्थं बोधयन्ति। स्ववाक्ये च न प्रतिसम्बन्धी श्रुतोऽस्योत्तरार्द्धादिति तेन विना साकाङ्क्षं वा-

वयं प्रकृतसम्बन्धे निराकाङ्क्षीभवति, प्रकृतं चाग्नेयादिप्रयुक्तं हविरिति तदुत्तराद्धग्रहणादप्रयोजकत्वम् । अन्यार्थस्याप्यन्यसम्बन्धोवचनात् प्रतिपत्तित्वाच्चाविरुद्धः ॥ १३ ॥

अभिघारणे शेषधारणतत्प्रात्रयोरननुष्ठानाधिकरणम् ।

सू० अभिघारणे विप्रकर्षादनुयाजवत् पात्रभेदः स्यात् ॥ १४ ॥

वाजपेये क्रतुपशवः प्राजापत्याश्च प्रातःसवने तन्त्रेणोपक्रम्यन्ते पर्यग्निकरणान्ते कृते प्राजापत्यानामालम्भोत्कर्षः श्रूयते । ब्रह्मसाम्न्या लभत" इति क्रतुपशवः प्रातःसवने एवालभ्यन्ते, प्रयाजाश्च तत्रैवानुष्ठिताः प्रकृतौ च प्रयाजशेषेण हवींष्यभिघारयतीति श्रुतम् ॥ तदिह प्राप्तं सन्दिह्यते किं प्रातः सवनानुष्ठितानां प्रयाजानां शेषो माध्यन्दिनकालप्राजापत्यवपाभिघारणाय धारयितव्यस्तदर्थञ्च पात्रान्तरमुत्पाद्यं जुह्वा व्यापृतत्वात् उत ने - ति तदर्थं च किं हविः संस्कारार्थमभिघारणं ? मुत शेषस्य प्रतिपत्ति? रिति, संस्कारत्वपक्षे प्राजापत्यवपासंस्कारो माविलोपीति धारणं स्यात् प्रतिपत्तित्वे तु सन्निहितास्वेव क्रतुपशुवपास्वभिघारणसिद्धेर्न तु धारणं तत्रोपयोक्ष्यमाणानां द्वितीयायोगिनां तथा हविषामिव संस्कारो न शेषस्य विपर्य्ययात्, उपयोक्ष्यमाणसंस्कारो ह्युपयुक्तसंस्कारादभ्यर्हितः, हवींषि च तथा शेषस्तूपयुक्तः किं तस्य संस्कारेण द्वितीयया च हविषामेव प्राधान्यं न शेषस्य विपरीतविभक्तिनिर्दिष्टस्य तस्मान्न्यायतः शब्दतश्च हविःसंस्कारोऽभिघारणं सत्यमेवं तथापीह शेषस्य प्रतिपादनं न्याय्यं दृष्टार्थतालाभादन्यथाऽदृष्टकल्पनात् । शेषस्य प्रतिपत्तिरपेक्षिता तादर्थ्योऽभिघारणं दृष्टार्थं भवति हविःसंस्कारस्त्वनपेक्षितो दृष्टं कल्प्येत, न च दृष्टे सति तद् युक्तम् अतः प्रयाजशेषं हविःषु चारयतीति वाक्यार्थः—हविराधारनियमात्तत्संस्कारोऽपि गम्यते, तस्मादुभयसंस्कारः स्विष्टकृत् सूक्तवाकवत् यस्तु हविःसंस्कारं नेच्छति प्रतिपत्तौ च द्रव्यस्याधारत्वादेकस्मिन्नेव हविषि सर्वेचारणं बहुवचनन्त्वनियमाभिप्रायमित्याह सकथं सर्वेध्रुवामेवाग्रेऽभिघारयति ततो हि प्रथमावाज्यभागौ यंक्ष्यन् भवतीति लिङ्गं समर्पयेत् ।

अनेन हविषां संस्कार्यत्वं समुच्चयश्चावगम्यते । प्रधानयागाद्युपयोगिनां हविषामपि प्रयाजशेषम्प्रति गुणत्वमत्यन्तानुपपन्नमित्यास्तान्तावत् ॥ १४ ॥

समानयनस्याज्यधर्मप्रयोजकताऽधिकरणम् । सू० समानयने तु मुख्यं स्याल्लिङ्गदर्शनात् ॥ १५ ॥

दर्शपूर्णमासयोराज्यग्रहणं प्रक्रम्य श्रूयते यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तत् यदुपभृतिप्रयाजानुयाजेभ्यस्तदिति तथातिहापेडोर्बर्हिः प्रतिसमानयति जुह्वामौपभृतमिति । तत्र विचारः यदेतच्चतुर्थप्रयाजोपक्रमे समानयनं तत्किमौपभृतस्याज्यग्रहणस्य प्रयोजक? मुत नेति । तदर्थं च किमुपभृति यत्प्रयाजार्थमाज्यं तस्येदं समानयनम्? उत यदनूयाजार्थन्तस्ये: ति तत्र सर्वार्थं हि प्रयाजार्थमविशेषाद्बहुश्रुतेः ॥ सर्वादौ तत्समानीतमिदानीन्नोपभृत्पदः ॥ प्रयाजानुयाजेभ्यस्तदित्यविशेषश्रवणात्सर्वप्रयाजार्थमौपभृतम् ॥ प्रयाज-शब्दाच्च विभक्त्यश्रवणात् ॥ अनूयाजशब्दापरा या विभक्तिः साऽनुषज्यते प्रयाजेभ्य इति च ततश्च बहुवचनात्सर्वार्थं न चतुर्थोत्तमयोरेव अतः सर्वप्रयाजादावानीतमिदानीमुपभृति न तदस्ति केवलमनुयाजार्थमेवास्ति तस्येदं समानयनमनुयाजप्रयुक्तस्य संस्कारमात्रादप्रयोजकमुभयोरपि जौहवौपभृतयोः प्रयाजार्थयोर्ग्रहणयोः सर्वप्रयाजविषययोरेकार्थत्वाद्विकल्पः उच्यते समानयनमुद्दिश्य कालमात्रं विधीयते । अदृष्टकल्पनानेकविधानञ्चान्यथा भवेत् ॥ यदुपभृति प्रयाजार्थं गृहीतं तस्य प्राप्तमेव जुह्वामानयनमनूद्य कालमात्रं विधीयते । अतिहापेडोबर्हिः प्रतीति तथा ह्यल्पार्थं विधानं दृष्टार्थं च समानयनम्भवति अनुयाजार्थस्य तु अदृष्टार्थमत्यन्ताप्राप्तं द्वारं विधीयते तस्य च काल इत्यनेकार्थविधिदोषोऽदृष्टकल्पना च स्यात् अतः प्रयाजार्थस्येदं समानयनं प्रयाजद्वयङ्कर्तुं क्रियत इति प्रयोजकमेवाज्यस्य प्रयाजानुयाजेभ्य इत्यविशेषश्रवणङ्कालविधिबलादुपरितनप्रयाजद्वयविषयमुपसंह्रियते । एवञ्च जौहवमाद्यानामेव त्रयाणाम्भवतीति विषयभेदात्समुच्चयः ॥ १५ ॥

औपभृतजौहवयोः क्रमेण उभयानुभयार्थताधिकरणम् । सू० तच्चोत्पत्तिरविभक्ता स्यात् ॥ १६ ॥

चतुर्जुह्वां गृह्णात्यष्टावुपभृति चतुर्ध्रुवायामित्युत्पन्नान्याज्यानि सर्वाणि किमविशेषेण सर्वकार्यार्थानि? उत जौहवं प्रयाजार्थमौपभृतमनुयाजार्थम्? अथवा जौहवं प्रयाजार्थमौपभृतमुभयार्थं ध्रौवन्तदतिरिक्तविषय?मिति संशये उत्पत्तावविशेषेण सर्वार्थप्रतिभोद्गमः । अवयुत्यानुवादश्च प्रयाजाद्यर्थतावचः । यदि तु यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तदिति वचनात् तत्केवलं प्रयाजार्थं स्यात् ततो यदुपभृति अनुयाजेभ्यस्तदितिवचनात्तदपि केवलानुयाजार्थं प्रसज्यते । अथ तदनुवादमात्रं प्रयाजवाक्यमपि तथाऽस्तु अविशेषादित्येतावानेव प्रथमपक्षः नानर्थकं वचोयुक्तमर्थवत्त्वस्य सम्भवे । तेन जुह्वा प्रयाजार्थमितरार्थं तथेतरत् । न हि प्रमाणबलादायातमनिष्टमिति शक्यमुत्स्रष्टुम् अतो भवत्वौपभृतं केवलानुयाजार्थं जौहवं च प्रयाजार्थमिति द्वितीयपक्षः । जौहवस्य प्रयाजैकशेषत्वं युक्तमितीरितम् । अनुयाजैकशेषत्वमितरस्य न मृष्यते ॥ यदुपभृति प्रयाजानुयाजेभ्यस्तदिति वचनादुभयार्थं तत् अनुयाजेभ्यस्तदिति वचनमगत्यावयुत्यानुवादः ॥ १६ ॥

उपभृति द्विचतुर्गृहीताचरणाधिकरणम् ।

सू० तदष्टसंख्यं श्रवणात् ॥ १७ ॥

अष्टावुपभृति गृह्णातीति किमष्टसंख्यैकग्रहणविधि? उत चतुःसंख्याग्रहणद्वयविधि?रिति विचारः विधीयतेऽष्टसंख्याकं ग्रहणं श्रूयते हि तत् लक्ष्यते तु चतुःसंख्याद्वयमत्राष्टसंख्यया, न च श्रुतिसम्भवे लक्षणा युक्ता चतुर्गृहीतं जुहोतीति सामान्यवचनं प्रयाजानुयाजयोः विशेषतोऽष्टगृहीतविधानात् बाध्यते उच्यते चतुर्गृहीतं होमाङ्गमष्टसंख्याश्रुतिः पुनर्ग्रहणं तेन होमाङ्गं चतुष्ट्वं बाधते न सा । ननु ग्रहणस्य होमार्थत्वादर्थात्तुल्यार्थतां प्राप्य बाधः स्यात् । केवलग्रहणाङ्गत्वे हि अष्टसंख्या निष्फला स्यात् उच्यते "प्रधानाङ्गं चतुःसंख्या ग्रहाङ्गमितरा पुनः । प्रधानाङ्गं च नाङ्गाङ्गमलं भवति बाधितुं" तेनेयमष्टसंख्या प्रधानाङ्गभूतां चतुःसंख्यां बाधितुमशक्नुवन्ती ग्रहणमात्राङ्गतां च निष्फलत्वादनासादयन्ती चतुः संख्याद्वयलक्षणार्था विज्ञायते ॥ १७ ॥

इति महामहोपाध्यायश्रीपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां चतुर्थस्याध्यायस्य प्रथमः पादः ॥ १ ॥

## अथ चतुर्थाऽध्याये द्वितीयः पाद आरभ्यते।

स्वरोऽच्छेदनाद्यप्रयोजकताधिकरणम्।

सू० स्वरुस्त्वनेकनिष्पन्नः स्वकर्मशब्दत्वात् ॥ १ ॥

अग्नीषोमीये पशौ श्रूयते यूपस्य स्वरुङ्करोति स्वरुणा पशुमनक्तीति तत्र विचारः किमेषः स्वरुर्यूयात् पृथक् निष्पन्नः छेदनादीनां यूपधर्माणाङ्खादिरादेश्च वृत्तस्य प्रयोजकः उत यूपमनुनिष्पन्नः शकलो ग्रहीतव्य इति तदर्थमिदं चिन्त्यते किं स्वरुङ्करोतीति स्वरुभावना विधीयते तस्याश्च करोतिकर्त्तव्यताकाङ्क्षायां यूपस्य स्वरुमित्यनेन यूपशब्दोलक्षणया खदिरादिवृक्षकरणत्वेन छेदनादीनि च कर्माणीतिकर्त्तव्यतात्वेन समर्पयति तथोत्पन्नश्च स्वरुणा पशुमनक्तीति विनियुज्यते उतानेन वाक्येनाञ्जनसाधनस्वरुरित्यवगते कुतोऽसावुपादेय इत्यपेक्षायां यूपस्य स्वरुमित्यनेन यत्स्वरुमुपादत्त तद्यूपादिति विधीयते तत्र करोतिर्भावनावाची सा च शुसाविधीयते। वाक्यार्थविधिरन्याय्यो लक्षणा चान्यथा भवेत् अञ्जनसाधनत्वेनावगतस्य हि स्वरोरर्थप्राप्तमादानमनूद्य यूपादिति विधौ वाक्यार्थविधानङ्करोतिश्चाभूतप्रादुर्भाववचनः सन्नुपादानं लक्षयेत् स्वरुभावनाविधिस्तु श्रुत्या भवति करोतिश्च श्रौत इति स एव न्याय्यः तस्याश्च करोति कर्त्तव्यता वाक्यगतेनैव यूप—शब्देन समर्प्यत इति प्रयोजकः स्वरुः, नैवम् "बह्वर्थविधिरेवं स्यान्मुख्यशब्दस्य लक्षणा। अल्पार्थविधिरस्माकं जघन्यस्य च लक्षणा। स्वरुभावनायां हि करोतिकर्त्तव्यता विशिष्टायां विधीयमानायामतिभाराद्वरं विशेषणमात्रविधानम्॥ मुख्यस्य च यूप—शब्दस्य त्वत्पक्षे लक्षणा मत्पक्षे जघन्यस्य करोतेः प्राप्तस्वरूपादानानुवादेन यूपानुनिष्पन्नशकलस्योपादानादप्रयोजकः स्वरुः ॥ १ ॥

शाखाया आहार्यताधिकरणम्। सू० शाखायां तत्प्रधानत्वात् ॥ २ ॥

शाखामधिकृत्य "प्राचीमाहरती"ति श्रुतं तत्र किमयं दिग्वाद? उत शाखावाद? इति संशयः तत्र "श्रुत्या दिग्वचनः शब्दः शाखायां लक्षणा भवेत्। आहर्त्तव्याभिधानात्तु शाखावादत्वनिश्चयः। प्राचीमाहर-

तीत्याहर्तव्यवचनः प्राची-शब्दः ॥ न च शक्या दिगाहर्तुम्, । अथ दिशं प्रत्याहरतीत्युच्यते प्रतिशब्दाध्याहार एव दोषः प्रकृतशाखापदसामानाधिकरण्याच्च शाखावाद एव अयं वृक्षस्य या प्राची शाखा तामिति ॥ २ ॥

छेदनस्य शाखाप्रयुक्तताऽधिकरणम् ।

सू० शाखायां तत्प्रधानत्वादुपवेषेण विभागः स्याद्वैषम्यं तत् ॥ ३ ॥

"शाखामाच्छिनत्ति शाखामाहरति मूलतः शाखां परिवास्योपवेषं करोति, उपवेषेण, कपालान्युपदधाति, शाखया वत्समपाकरोती"ति श्रूयते तत्र संशयः किं शाखाच्छेदनाहरणपरिवासनानां वत्सापाकरणं कपालोपधानञ्च द्वयमपि प्रयोजकम् ? उतोपधानमप्रयोजक ? मिति तदर्थमिदं मूलार्थमपि छेदनादिकम् ? उतायार्थमेवेति, तत्र "शाखा-शब्दः समूलस्य नाग्रमात्रस्य वाचकः । छेदनादि च शाखाऽर्थं द्वयं तस्मात्प्रयोजकम् । शाखां छिनत्तीति द्वितीयया शाखार्थं छेदनादिकं द्वयमपि मूलमग्रञ्च सहैव शाखा-शब्दोऽभिधत्ते नाग्रमात्रम् अतो यदुपवेषसंज्ञस्य मूलस्य कार्यमुपधानं यच्चाग्रकार्यवत्सापाकरणादिकं तयोरुभयोरपि छेदनादिकमङ्गम् परिवासनञ्च द्वयोर्विभागार्थं तस्मादुभयं प्रयोजकम्, उच्यते "मूलापादानकं ह्यत्र परिवासनमुच्यते । तच्चाग्रस्य न मूलस्येत्यग्रार्थं परिवासनम् । तद्विशेषणभूतत्वान्मूलस्यापि तदर्थता । अन्यार्थेन तु मूलेन कपालमुपधीयते । यद्यपि छेदनादिवाक्ये समूलमग्रमाचष्टे शाखा-शब्दः परिवासनवाक्ये तु अग्रमेव मूलतः परिवासनं हि तत्र विधीयते न परिवासनमात्रम् न च मूलस्य मूलतः परिवासनं सम्भवतीत्यग्रमेव परिवासनवाक्ये शाखा-शब्देनोच्यते तदर्थञ्च परिवासनं परिवासनविशेषणं च मूलं तद्द्वारेणाग्रार्थमेव, समूलस्य च छेदनमाहरणञ्च कथं नाम मूलतः परिवासनं शाखायाः स्यादित्येवमर्थम्, न ह्यनाहृते मूले मूलतः परिवासनं सम्भवति तस्मात् परिवासनं समूलाहरणं छेदनञ्च सर्वमग्रकार्यार्थं न च परिवास्येति क्त्वाप्रत्ययादुपवेषकरणार्थं परिवासनम् वाक्यसंयोगाद्वलीयस्या द्वितीयया शाखाभिधानाग्रार्थत्वावगमात् उपवेषं करोतीति सा-

काङ्क्षमन्यार्थेनुष्पत्वेन मूलेन निराकाङ्क्षीक्रियते, करोतिश्च पूर्ववदादाने वर्त्तते यदिदमयार्थपरिवासनानुनिष्पन्नं तत्कपालोपधानसाधनतयाऽवगतोपवेषत्वेनोपादत्त इति न शाखां परिवास्य मूलत उपवेषं करोतीत्यन्वयः येन मूलस्योपवेषार्थता लभ्येत व्यवहितकल्पनाप्रसङ्गात्, तस्मादयार्थत्वात्सर्वस्य तदेव प्रयोजकम् ॥ ३ ॥

शाखाप्रहरणस्य प्रतिपत्तिकर्मताऽधिकरणम् ।

सू॰ हरणे तु जुहोतिर्योगसामान्याद्द्रव्याणां वाऽर्थशेषत्वात्[1] ॥ ४ ॥

सूक्तवाकेन प्रस्तरं प्रहरतीति हरतिर्यागो मान्त्रवर्णिको देवताविधिरिति स्थितम् इदमपरं श्रूयते सह शाखया प्रस्तरं प्रहरतीति तत्र संशयः किं शाखाप्रहरणं यागस्यैवोपलक्षणं शाखायाः प्रयोजकम् अर्थकर्म उत प्रतिपत्तिरप्रयोजकमिति तत्र प्रस्तरतुल्यत्वाच्छाखा यागस्य साधनम् । निर्वापवच्च हरणं यागस्यैवोपलक्षणम् । प्रस्तरप्रहरणं तावद्यागः स चार्थकर्मतत्साधनभूतः प्रस्तरः शाखा च सहत्वशब्दात्प्रस्तरेण समाना गम्यते तेन सापि यागं प्रति गुणभूता, हरतिश्चाविवक्षितो निर्वापालम्भादिवत् यागोपलक्षणार्थः, तस्माच्छाखाप्रहरणं होमोऽर्थकर्म द्रव्यकर्मसंयोगन्यायादिति प्राप्त ऽभिधीयते यागे यदि सहत्वं स्यात्स्यादेवं हरतौ तु तत् । तत्र च प्रतिपाद्यत्वात्प्रस्तरस्य तथैव सा । सूक्तवाकेन प्रस्तरं प्रहरतीत्यत्र मान्त्रवर्णिकदेवताविधिबलाद्यागः कल्पितो न तु हरतिर्यागवचनोऽत्र तु हरणमात्रं श्रुतं सह शाखया प्रस्तरं प्रहरतीति, न च प्रहरणे सूक्तवाकः साधनं येन मान्त्रवर्णिकदेवताविधिबलाद्यागः स्यात्, तस्माद्धरतिमात्रे शाखायाः सहभावाद्धरतौ च प्रस्तरस्य प्रतिपाद्यत्वात् शाखाया अपि प्रतिपत्तिः यथा हरतौ सहभावे प्रतिपत्तिर्न गुणत्वं शाखायास्तथा षष्ठे वक्ष्यते, अत्र हरतावेव साहित्यं न याग इत्येतावत्स्थितम् ॥ ४ ॥

निनयनस्य प्रतिपत्तिकर्मताऽधिकरणम् ।

सू॰ उत्पत्त्यसंयोगात्प्रणीतानामाज्यवद्विभागः स्यात् ॥ ५ ॥

१ चार्थशेषत्वादिति पा॰ ।

दर्शपूर्णमासयोः अपः प्रणयतीति प्रयोजनासंयुक्ता प्रणीता उत्पाद्य तत्र श्रूयते "प्रणीताभिर्हवींषि संयौती"ति तथा "ऽन्तर्वेदि प्रणीता निनयति" इति, तत्र सन्देहः किमासां संयवननिनयनं चोभयं प्रयोजकमुभयार्थाः प्रणीताः ? उत संयवनार्थाः ? एवं तदेव प्रयोजकं निनयनं प्रतिपत्तिरिति "तत्रोत्पत्तावसंयोगात्कैमर्थ्यस्याभिलाषिणीः । स्वीकुर्वाते उभे तस्मादुभयार्थास्तदुच्यते हविःसंयवने तासां गुणभावस्तृतीयया । द्वितीयया निनयनं प्रतिपत्तिर्विधीयते । उत्पत्तावसंयुक्तानामपि प्रयोजनेन प्रणीतानां कैमर्थ्याभिलाषिणीनां तृतीयया संयवनार्थत्वं गम्यते, निनयनन्तु द्वितीयाश्रुत्या तासामेव प्रतिपत्त्यर्थमप्रयोजकम् ॥ ५ ॥

दण्डदानस्यार्थकर्मताऽधिकरणम् ।

सू० प्रासनवन्मैत्रावरुणाय दण्डप्रदानं कृतार्थत्वात् ॥ ६ ॥

दीक्षितस्य दण्डप्रदानं विधाय पुनराम्नातं क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छतीति किं मैत्रावरुणाय दण्डप्रदानं दण्डस्य प्रयोजकमर्थकर्म ? उत प्रतिपत्तिकर्माप्रयोजक? मिति, तत्र "द्वितीयाश्रुतिसंयोगात्कृतार्थत्वाच्च धारणे । मैत्रावरुणहस्तेऽस्य प्रक्षेपः प्रतिपादनम् ॥ दीक्षितधारणे कृतार्थो दण्डः प्रतिपत्त्यपेक्षः द्वितीयया च तत्प्राधान्यं गम्यते न दानस्य, अतो मैत्रावरुणहस्ते प्रक्षिप्यते उच्यते—"चतुर्थ्या सम्प्रदानत्वं प्रशास्तुरवगम्यते । कर्मणा यमभिप्रैति सम्प्रदानं तदुच्यते । तेन दीयमानेन दण्डेनाभिप्रेयमाणत्वान्मैत्रावरुणस्य तत्प्रधानं दानम् । उपयुक्तस्य संस्काराद्युपयोक्तव्यसंस्क्रिया गरीयसी प्रशास्तुश्च दृष्टं तेन प्रयोजनम् स्थित्वा हि प्रैषानुवचने कुर्वत आलम्बनम्भवत् दृष्टार्थ एव दण्ड इति मैत्रावरुणार्थे दण्डदानं प्रयोजकं दण्डस्येत्यग्नीषोमीयविकारे निरूढपशौ असत्यपि दीक्षिते मैत्रावरुणार्थेन दण्डोपादानसिद्धिः ॥ ६ ॥

पूर्वाधिकरणे आशङ्कानिरासः । तथाप्रासनस्य प्रतिपत्तिकर्मताधिकरणम् ।

सू० उत्पत्त्या येन संयुक्तं तत्तदर्थं[1] श्रुतिहेतुत्वात्तस्यार्थान्तरगमने शेषत्वात्प्रतिपत्तिः स्यात् ॥ ७ ॥

---

१ तदर्थन्तत् ।

"कृष्णविषाणया कण्डूयत" इति विधाय श्रूयते "चात्वाले कृष्णविषाणां प्रास्यतीति तत्र संशयः किं चात्वाले प्रासनमर्थकर्म ? उत प्रतिपत्ति? रिति तत्र न द्रव्यस्य कृतार्थस्य संस्कारेण प्रयोजनम् । प्रतिपत्तिरतो नेयमिडास्विष्टकृदादि च । चात्वाले प्रासनं मिडाभक्षणं स्विष्टकृदित्येवमादि यत्किञ्चित्कृतकरणद्रव्याश्रयं कर्म तत्सर्वमर्थकर्म निर्वृत्त्यऽर्थे संस्कारेण प्रयोजनाभावात्, उच्यते—कृतार्थमपि तु द्रव्यमाकीर्णकरमित्यतः । प्रतिपत्तिमपेक्षेत तद्विधानमतोवरम्" अपेक्षिततया प्रतिपत्तिविधौ निश्चिते तद्बलादेव तल्लोपे निर्वृत्तमपि प्रयोजनं विद्यत इति कल्प्यते ॥ ७ ॥

अवभृथगमनस्य प्रतिपत्तिकर्मताऽधिकरणम् ।

सू॰ सौमिके च कृतार्थत्वात् ॥ ८ ॥

"वारुणेनैककपालेनावभृथमभ्यवयन्तीति" विधाय पुनराम्नायते यत्किञ्चित्सोमलिप्तं तेनावभृथं यन्ती"ति किमवभृथसाधनं सोमलिप्तमुतावभृथदेशे नयनमस्य प्रतिपत्ति? रिति तत्रावभृथ—शब्देन श्रुत्या कर्माभिधीयते । तत्साधनतया सोमलिप्तमुक्तं तृतीयया "देशेऽवभृथ—शब्दस्य प्रकृतौ लक्षणा भवेत् । सोमलिप्तं हविष्ट्वेन चोद्यते ऽवभृथं प्रति" उच्यते—उत्पत्तिवाक्यविहितपुरोडाशविरोधतः हविष्ट्वेन तु सम्बन्द्धुं सोमलिप्तञ्च शक्नुयात्" यन्तीत्यनेन सोमलिप्तावभृथयोः सम्बन्धविधौ सति अत्यन्तवाक्यं स्यात् उद्दिश्य सोमलिप्तन्तु पानमात्रं विधीयते । धात्वर्थेऽवभृथपदं तं देशं लक्षयिष्यति" अवभृथदेशं गच्छन्तः सोमलिप्तान्यादाय गच्छेयुः तानि तद्देशे प्रक्षेप्तव्यानीत्यर्थः ॥ ८ ॥

कर्तृदेशकालविधीनां नियमार्थताऽधिकरणम् ।

सू॰ कर्तृदेशकालानामचोदनं प्रयोगे नित्यसमवायात् ॥ ९ ॥

दर्शपूर्णमासयोश्चत्वार ऋत्विजः समे यजेत पौर्णमास्यां पौर्णमास्या यजेत व्रीहिभिर्यजेत सोमेन यजेतेत्यादि यत्किञ्चित्कारकश्रवणं तत्सर्वमुदाहृत्य विचार्यते किमनुवादमात्र?मुत विधि? रिति तत्र "सर्वक्रियाविधेरेव कारकं प्राप्यते पुनः । ततस्तच्च विधातव्यमप्राप्ते ह्यर्थवान् विधिः । विषमादिनिवृत्त्यर्थं समादिश्रवणं यदि । परिसंख्या प्रसज्येत

नातोऽन्यास्ति विधेर्विधा । समादिस्वरूपं विषमादिनिवृत्तिर्वा विधीयेत स्वरूपन्तावच्च विधातव्यं प्राप्तत्वात्, विषमादिनिवृत्तिविधौ परिसंख्या-प्रसज्येत सा च त्रिदोषा, न च प्रकारान्तरं विधिरूपं लभामहे, येनैते परिसंख्यादोषमनासाद्यैव विधित्वं लभेरन्, तस्मादनुवादः । नैवं "नियमेन न हि प्राप्तिः समादीनां क्रियाविधेः । समे वा विषमे वापि सोमेनान्येन वा यजिः । प्राप्नोति तेन सोमादेः प्राप्तिर्न स्यादपि क्वचित् । यस्मिन्पक्षे न सोमादेः प्राप्तिस्तत्र विधिर्भवेत् । नैषामतोऽनुवादत्वम्परिसंख्या च नासजेत् । अप्राप्तिः पक्षसद्भावान्नियमार्थो विधिः स्थितः ॥ ९ ॥

द्रव्यगुणविधानस्य नियमार्थताऽधिकरणम् ।

सू० तथा द्रव्येषु गुणश्रुतिरुत्पत्तिसंयोगात् ॥ १० ॥

"श्वेतम्पशुमालभेत शुक्लानां व्रीहीणाञ्चरु"मित्यादौ गुणानाममूर्त्तानां क्रियासाधनभावासम्भवाच्च तादर्थ्येन नियमः सम्भवति द्रव्योपादानानुषङ्गप्राप्तानामनुवादमात्रं गुणश्रवणं शुक्लानाञ्चरुमित्यादौ चापरो विशेषः शुक्लस्य चरुविशेषणत्वात् शब्दतोऽपि न क्रियासम्बन्धो गम्यते इति असत्यपि साक्षात्क्रियान्वये द्रव्यद्वारेण तदुपपत्तेः, शुक्लविशिष्टचरोः क्रियार्थत्वादत्रापि नियमविधिः ॥ १० ॥

अवघातादि संस्कारविधानस्य नियमार्थताऽधिकरणम् ।

सू० संस्कारे च तत्प्रधानत्वात् ॥ ११ ॥

व्रीहीनवहन्तीति नावघातस्य यागार्थतया श्रवणं देशादिवत्, न च चरुवद्विशिष्टं द्रव्यं क्रियासम्बन्धि श्रूयत इति तण्डुलाक्षिप्तक्रियानुवादमात्रमित्यधिकाशङ्का उत्तरम् यद्यपि न श्रवणमस्ति तथाऽपि प्रकरणवशात् प्रधानसाधनं लक्षयित्वा तत्र विनियुक्तस्यावघातादेः प्रधानाङ्गत्वमस्त्येवेति तत्प्रयुक्तिर्विहितेति ॥ ११ ॥

यागस्वरूपनिरूपणाधिकरणम् ।

सू० यजतिचोदनाद्रव्यदेवताक्रियं समुदाये कृतार्थत्वात् ॥ १२ ॥

होमस्वरूपनिरूपणाधिकरणम् ।

सू० तदुक्ते श्रवणाज्जुहोतिरासेचनाधिकः स्यात् ॥ १३ ॥

यागाङ्गभूतानां देशादीनां नियमविधौ स्थिते तत्प्रसङ्गाद्यागादिलक्षणं क्रियते, देवतोद्देशेन स्वद्रव्यपरित्यागो यागः स एव प्रक्षेपाधिको होमः स्वीयस्य परकीयत्वापादनं दानमिति, आचार्यस्तु लोकसिद्धपदार्थव्यवहारिण्यां मीमांसायां तल्लक्षणमनुचितमिति यागाद्यनुष्ठानप्रकारकथनमिति व्याख्यातवान्। यो देवतामुद्दिश्य द्रव्यन्त्यजति तेन यागचोदनार्थः सम्पादितो भवति, प्रक्षेपन्त्वधिकं कुर्वता होमविध्यर्थ इति, एवञ्च चोदनाग्रहणमर्थवद्भवति न लक्षणपरत्वे प्रदेशान्तरे त्विदं सूत्रमन्यथा व्याख्यातम् आचार्येण पूर्वं दर्शादियागानुवादेन देशादयो नियम्यन्त इत्युक्तं, तन्नियमाशङ्का कथं नु दर्शादेर्यागत्वं, न ह्युत्पत्तिचोदनास्वाग्नेयादिषु यजिः श्रूयत इति तत्रेदमुच्यते द्रव्यदेवताक्रियं श्रूयमाणे यजतिचोदनेति मन्तव्यं तदविनाभावात्तस्येत्येकस्यार्थः, इतरस्य तु यजत्यभिहिते कर्मणि पुनर्जुहोतिश्रवणं चतुरवत्तं जुहोतीति तत्कथमुपपादनीयं यागहोमयोर्भेदादत आह आसेचनाधिकः स्यात्प्रक्षेपमात्रं तत्राप्राप्तं चतुरवत्तं संस्कारार्थं विधीयते, यागांशस्तु प्राप्तानुवाद इत्यक्षराञ्जस्यं सूत्रयोर्भवति ॥ १३ ॥

बर्हिष आतिथ्यादिसाधारण्याधिकरणम्।

सू० विधेः कर्मापवर्गित्वादर्थान्तरे विधिप्रदेशः स्यात् ॥ १४ ॥

यदातिथ्यायां बर्हिस्तदुपसदामिति किमिदमाच्छिद्य विधानं? मुत निरिष्टिकोपदेशः? अथवा धर्मातिदेशः? अथवा बर्हिःसाधारणविधि? रिति, "डित्थस्य गौर्डपित्थाय तत आच्छिद्य दीयताम्॥ ईदृग्वचनसारूप्यादाच्छिद्य विधिरिष्यते? एवञ्चाच्छिद्यमानस्य बर्हिषः स्यादनर्थकः। आतिथ्यायां विधिस्तस्मान्निरिष्टिकविधिर्वरम्। शिष्टाचारविरोधात्तु नैतदप्युपपद्यते। तस्माद्धर्मातिदेशोऽयमातिथ्यायां हि यादृशम्। अश्ववालादिभिर्बर्हिस्तादृगेवोपसत्स्वपि। बर्हिःशब्देन धर्माणां लक्षणैवं भवेदतः। साधारण्यविधिर्न्यायांस्तत्र दोषो न कश्चन। आतिथ्यार्थमुपादेयं यद्बर्हिस्तच्च केवलम्। तदर्थत्वेन सङ्ग्राह्यन्तदेवोपसदामपि। बर्हिर्धर्माश्च तद्द्वारा तद्वत्सर्वाङ्गमाययुः॥ १४ ॥

इति शास्त्रदीपिकायां चतुर्थस्याध्यायस्य द्वितीयः पादः ॥ २ ॥

## चतुर्थाध्यायस्य तृतीयः पाद आरभ्यते ॥

द्रव्यसंस्कारकर्मणां क्रत्वर्थतांऽधिकरणम् ।

सू० द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यात् ॥ १ ॥

"यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोती"त्यत्र संशयः किं पर्णमयीत्वं क्रत्वर्थ? मुत पुरुषार्थमाहोस्विदुभयार्थ? मिति, तत्र फलश्रवणात् पुरुषार्थत्वम्, यद्यपि चैवंजातीयकस्य फलविधित्वमौदुम्बराधिकरणे निराकृतं, तथाऽपि विहितस्य पर्णत्वस्य फलापेक्षायां क्रतुप्रयोगवचनात्स्वविहितमपापश्लोकश्रवणमेव रात्रिसत्रप्रतिष्ठावद्विपरिणामेन फलमाश्रयितुं युक्तम् । अथवा साधनांशमात्रमौदुम्बराधिकरणे विचारितं विधिरहितस्य भवतीत्येतावन्मात्रस्य साधनप्रतिपादकत्वञ्च सम्भवतीति विध्युन्मीलनायैवार्थवादत्वमूर्ज्जं पशूनाप्नोति न स पापं श्लोकं शृणोतीत्यादेराश्रयितव्यम् । इह तदुपेक्ष्याभ्युपेत्य वा साध्यांशो विचार्यते, तत्रैवंजातीयकमपि फलप्रतिपादकं लोके दर्शनात्, अतः पुरुषार्थमित्येकः पक्षः क्रत्वर्थजुहूद्देशेन विधीयमानं भवतु क्रत्वर्थं फलसंयोगात्तदर्थमपि स्यात् दध्यादिवदित्यपरः । सिद्धान्तस्तु युक्तं दध्नः संयोगपृथक्त्वादुभयार्थत्वम् । इह त्वेकवाक्यं तदुभयपरत्वे भिद्येत तत्र तावदुभयार्थं, न च शृणोतीति वर्त्तमानापदेशात्साध्यत्वं शक्यं प्रतिपत्तुं, न च विपरिणामेन फलपरत्वम्, यथास्थितस्वरूपहानप्रसङ्गात्, पर्णतायाश्च जुहूपस्थितक्रत्वर्थत्वेन निराकाङ्क्षत्वादयुक्तं शब्दस्वरूपस्य बाधनम्, न च पर्णत्वस्य फलं प्रति विधीयमानस्याश्रयः प्रकृतोऽस्ति तत्र वाक्येनैवाश्रये दीयमाने वाक्यभेदः, तस्मादपापश्लोकश्रवणस्य अर्थवादत्वात्क्रत्वर्थमेव पर्णमयीत्वम् ॥

नैमित्तिकानां वार्हद्गिरादीनामनित्यार्थत्वाधिकरणम् ।

सू० नैमित्तिके विकारत्वात्क्रतुप्रधानमन्यत्[1] ॥ २ ॥

अपः प्रणयतीति प्रकृत्य श्रूयते "मृन्मयेन प्रतिष्ठाकामस्य प्रणये"-

१ स्यादित्यधिकः पाठः ।

द्विति, तथा "वार्हद्गिरं ब्राह्मणस्य ब्रह्म साम कुर्या"दिति तत्र संशयः यदेतत्काम्यं मृन्मयन्नैमित्तिकञ्च वार्हद्गिन्तदेव नित्यार्थे उत अन्यदुपादेयमिति तत्र नित्येऽपि प्रयोगे प्रणयनब्रह्मसामादेः साधनापेक्षत्वादश्रुतसाधनान्तरकल्पनाद्वरङ्काम्यनिमित्तयोरपि श्रुतस्य मृन्मयादेः सन्निहितस्य नित्यार्थेऽप्युपादानम्, वारणाभीवर्त्तादिनित्यविधिमदृष्ट्वा पूर्वः पक्षः, भवन्ति हि ईदृशान्यप्यधिकरणानि ऐन्द्रवायवे तु वचनात्प्रतिकर्मभक्षः स्यादित्यादीनि नित्यविधिर्वा नास्तीति कृत्वा चिन्त्यते । अथ वारणो यज्ञावचर इति अभीवर्त्तो ब्रह्मसामेति च सामान्यविधिरयम् मृन्मयं वार्हद्गिरञ्च विशेषतः प्रणयने द्वादशाहे चातस्तदेव नित्यार्थेऽपि सन्निधिविशेषाद् युक्तमिति मन्यते ॥ "ब्राह्मणेन निमित्तेन वार्हद्गिरमिति श्रुतम्, "मृन्मयञ्च प्रतिष्ठायान्नित्ये स्यातामतो न तेन ह्यन्यत्र श्रुतं सन्निहितमपि अन्येन सम्बन्द्धुमर्हति साधनाकाङ्क्षा च नित्यस्यार्थाक्षिप्तेन सामान्यविहितेन वा निवर्त्तते न तु नैमित्तिकेन सन्निधिमात्रस्य सम्बन्धकारणत्वाभावात् । निमित्तश्रुतिविरोधाच्च, सति असति च निमित्ते क्रियमाणस्य कीदृशं नैमित्तिकत्वम्, तस्मादन्यन्नित्यार्थे ॥

दध्यादेर्नित्यनैमित्तिकोभयार्थताऽधिकरणम् संयोगपृथक्त्वन्यायः।

सू० एकस्य तूभयत्वे संयोगपृथक्त्वम् ॥ ३ ॥

अग्निहोत्रे "दध्नेन्द्रियकामस्य जुहुया"दिति श्रूयते तत्र किङ्कामार्थमेव दधि नित्येऽपि स्यात्? उत ततोऽन्यन् नित्यमिति संशये "पूर्वाधिकरणन्यायात्काम्यत्वेन श्रुतं हविः । न नित्यार्थमुपादेयमतोऽऽन्यन् नित्यमिष्यते ॥ नन्वत्र दध्नैव नित्यार्थे श्रूयते "दध्ना जुहोती"ति नैवमेतस्य वाक्यस्य कामवाक्यैकवाक्यता । गम्यते ऽतो न नित्यार्थे पृथग्दधि विधीयते । दध्नेन्द्रियं कुर्यादित्युक्ते किमाश्रितेनेत्यपेक्ष्यते, होमसंयुक्तस्य च दध्नः फलापेक्षा तयोरेवमाकाङ्क्षावशादेकवाक्यता यद्दध्नेन्द्रियं कुर्यात्तद्धोमाश्रितेन यच्च दध्ना जुहोति तदिन्द्रियार्थमिति, तस्मान्नित्ये दध्यविधानात्काम्यमेव तत्स्यात्, मैवम्, "द्वयोरेकस्य चाकाङ्क्षा भवेद्यदि ततस्तयोः । प्रकल्प्येतैक-

वाक्यत्वं निराकाङ्क्षन्त्विहोभयम् । कामवाक्यन्तावद्धिपरिवृत्तिलब्धहोमा-श्रयं नाश्रयसम्बन्धकरं प्रमाणमपेक्षते दधिस्वरूपमपि लोकसिद्धं नोक्ष्य-व्यूढादिवदलौकिकम्, अतो न तदर्थमन्यापेक्षम्, दध्नोऽपि फलवद्धोमसंयु-क्तस्य न फलान्तरापेक्षा तस्मात्पृथक्संयोगादुभयार्थन्दधि स्यात् ॥

पयोव्रतादीनां क्रतुधर्मता-ऽधिकरणम् ।

**सू॰ द्रव्याणान्तु क्रियार्थानां संस्कारः क्रतुधर्मः स्यात् ॥ ४ ॥**

ज्योतिष्टोमे पयोव्रतं ब्राह्मणस्येत्यादि श्रूयते तत्पुरुषार्थं क्रत्वर्थं-मिति संशये पुरुषसंयोगात् व्रतस्य पुरुषप्रीत्यर्थतया लब्धफलस्य नञ्जभ्य-मानमत्र वचनन्यायासम्भवात् पयोनियमस्यापि व्रतसंयुक्तस्य तत्फलनि-राकाङ्क्षत्वात् न प्रकरणग्रहणमिति पुरुषार्थत्वम् । उच्यते "नियमन्त्वन्त-रेणापि पुरुषप्रीतिदर्शनात् । नियमस्य फलङ्कल्प्यं तच्च प्रकरणात्क्रतोः । कल्प-नीये हि फले प्रकृतक्रतुफलसिद्धिरेव तदधिकृतसंस्कारद्वारेण पयोनिय-मस्य फलं युक्तमाश्रयितुमिति क्रत्वर्थता ॥

विश्वजिदादीनां सफल-त्वाधिकरणम् ।

**सू॰ चोदनायां फलाश्रुतेः कर्ममात्रं विधी-येत न ह्यशब्दं प्रतीयते ॥ ५ ॥**

विश्वजिता यजेतेत्यादिषु अश्रुतफलासु चोदनासु फलमस्ति नेति संशयः, "नास्त्येव फलमेतस्याश्चोदनायां फलाश्रुतेः । शब्दगम्यमदृष्टं हि फलन्तेन विना कथं प्रत्येतुं शक्यते तच्चेदध्याहारेण कल्प्यते ॥ परिपूर्ण-मिदं वाक्यं नाध्याहारमपेक्षते" । ननु यागेन कुर्यादित्युक्ते किङ्कुर्यादित्य-पेक्षणादध्याहारोऽवकल्प्यते, सत्यं, यदि यागेन कुर्यादित्युच्येत यागङ्कु-र्यादिति तूक्ते परिपूर्णत्वान्नाध्याहारापेक्षा, फलश्रवणे हि सति विध्यानु-गुण्यात् समानपदोपात्तधात्वर्थातिक्रमेण वाक्यसमर्पितं फलम्भाव्यत्वेन भावनाऽवलम्बते तदभावे तु धात्वर्थभाव्यत्वङ्को निवारयेत् । "तथा च सति सम्पूर्णं वाक्यत्वाध्याहृतिक्षमम् । नन्वेवं यागकर्तव्यतायामुच्यमा-नायां न कश्चित्प्रवर्त्तते सत्यङ्किन्दोषो विध्यानर्थक्ये तदपि भवतु निष्फ-लस्य कर्त्तव्यवचनमप्रमाणं स्यादित्येवमस्तु नेमोऽयं पन्था गच्छतु भवा-

नित्याद्यनाम्रवाक्यवल्लिङ्ङ्गुम्रः, न च कर्त्तव्यताबलादेव फलमुपकल्पयितुम् शक्यम् तदात्वे दुःखदर्शनात्प्रत्यक्षविरोधादापत्त्या च फलं न क्षणमात्रविनष्टेन यागेन शक्यते कर्तुं, न चापूर्वद्वारेण सम्भवति तदभावात्, श्रुते हि फले शृङ्ग्याहिकतया धात्वर्थस्य तत्साधनत्वे शब्देन प्रतिपादिते तद्बलाददृष्टमप्यपूर्वं कल्प्यते यागक्रियामात्रपर्यवसिते तु शब्दे कथमपूर्वसिद्धिस्तदभावे च कथङ्कालान्तरभाविफलकल्पनम्? तदितरेतराश्रयं भवति फलाधीनमपूर्वं तदधीनं च फलमिति, असत्यपि भाव्यापेक्षणे कस्य यागः कर्त्तव्य? इति नियोज्यापेक्षणात्फलकामस्याध्याहार इति चेत् नाध्याहारमन्तरेणापि तल्लाभात्, यथा निषेधाधिकारेषु अप्रवृत्तस्य निवर्त्तनासम्भवाच्चार्थावच्छेदकतयोपयुक्तापि प्रवृत्तिरेव विशेषणमिति तद्विशिष्टस्य नियोज्यत्वावगमात् न प्रयुक्तिलाघवमाश्रित्य फलकामोऽध्याह्रियते, तथा प्रवृत्त्युपदेशेऽपि अशक्तस्याजीवतश्च तदसम्भवात् शक्तो जीवँश्चाधिकारी लब्ध इति किमध्याहारेण? तस्मान्निष्फलमेवेदङ्कर्मेति प्राप्ते उच्यते "विधियुक्ता क्रिया नैव धात्वर्थम्भाव्यमृच्छति। भाव्येन च विना वाक्यं नैव तत्परिपूर्यते। वाक्यसम्पूरणायातः फलमध्याहरिष्यते"। असत्यपि फलश्रवणे चेतनप्रवर्त्तनात्मकविध्यविरुद्धा भावना धात्वर्थं तावच्च कथञ्चिद् भाव्यमङ्गीकरोतीति तदतिरिक्तभाव्यापेक्षणादतल्लाभादपरिपूर्णं वाक्यम्फलपदाध्याहारमपेक्षते, तच्च लौकिकमपि वेदवाक्यैकदेशतयाऽध्याहृतं वैदिकमेव भवति किमुत यदा वैदिकमेवान्यत्र स्थितमध्याह्रियते, कथम्पुनर्व्यपेतस्यानुषङ्गाभ्युपगमः, नायमनुषङ्गः किन्त्वध्याहारः, स च यत्र क्वचिदपि व्यवस्थितस्याविरुद्धः तेनाश्रुतफलानामप्यध्याहृतफलान्वयात् सर्वेषाङ्कर्मणामत्र फलवत्त्वमवस्थितम् ॥

विश्वजिदादीनामेकफलताऽधिकरणम् ।

सू० तत्सर्वार्थमनादेशात् ॥ ६ ॥

स्थिते फलार्थत्वे किं सर्वफलार्थं? श्रुतैकार्थं? मिति विशेषानिर्देशात्सर्वार्थत्वे प्राप्ते ऽभिधीयते "येनैवैकेन तद्वाक्यं साकाङ्क्षम्परिपूरितम् ॥ तेनैवतन्निराकाङ्क्षमिति नानेककल्पनम् ॥

विश्वजिदादीनां स्वर्गफलताऽधिकरणम् ।

**सू० स स्वर्गः स्यात्सर्वान्प्रत्यविशिष्टत्वात् ॥ ७ ॥**

एकमेकफलमित्युक्तम् । किन्त्वदेकमिति न ज्ञायते । अतः पुनरपि सर्वार्थत्वमप्रामाण्यं वाऽनध्यवसायोत् प्राप्नोति, तदुच्यते "स्वर्गोऽनतिशय प्रीतिरूपो दुःखविवर्जितः। भूयांसोऽभिलषन्त्येनमल्पे त्वल्पसुखचराः" ॥ सति सम्भवे शास्त्रस्य भूयोविषयत्वन्न्याय्यमविशेषप्रवृत्तस्यातिसङ्कोचपरिहारात्स्वर्गश्च दुःखासंयुक्तनिरतिशयसुखात्मकः सर्वेषामभिमतः पश्वादिसुखन्तु दुःखानुषक्तमल्पञ्च केचिदेव प्रार्थयन्ते । प्रत्यवायपरिहारस्तु सर्वाभिलषितोऽपि प्रत्यवायापेक्षया क्रियताऽपि विलम्बेन हृदयमागच्छति । "ततस्तु सुकरज्ञानं सुखमेव परम्फलम्, तच्चानतिशयत्वेन स्वर्गात्मकमिति स्थितम्" ॥

रात्रिसत्रन्यायः । रात्रिसत्रस्यार्थवादिकफलकत्वाधिकरणम् ।

**सू० क्रतौ फलार्थवादमङ्गवत्कार्ष्णाजिनिः ॥ ८ ॥**

"प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ती"ति श्रुतम् ॥ रात्रिशब्देन ज्योतिर्गौरित्यादिवाक्योत्पादितानि सौत्यानि कर्माण्युच्यन्ते तदिदं रात्रिसत्रं स्वर्गार्थं ? मुत प्रतिष्ठार्थं ? मिति संशयः, तदर्थञ्च प्रतिप्रतिष्ठन्तीति किमयम्फलविधि ? रुतार्थवाद ? इति "अपापश्लोकवत्तत्र वर्त्तमानापदेशतः । फलविध्यसमर्थत्वात्तद्वदेवार्थवादता ॥ १ ॥ अनादिष्टफलत्वेन तस्मात्स्वर्गफलार्थता । निर्देशात्तु प्रतिष्ठेव फलत्वेनात्र गम्यते ॥ जुहूवच्चैवकर्मैतन्निराकाङ्क्षम्फलं प्रति । कल्पनीयं फलं तत्र विना सोऽध्याहृतेर्वरम् ॥ स्वर्गस्याध्याहारे तत्स्वरूपन्तस्य च श्रुतकर्मसम्बन्धः फलत्वञ्च कल्प्यते प्रतिष्ठायास्तु स्वरूपमेकवाक्यत्वञ्च क्लृप्तम्फलत्वसिद्ध्यर्थं संततया विपरिणाममात्रं लघीयः, उपयन्तीत्यपि वर्त्तमानापदेशो विधिरूपेण विपरिणम्यते । यच्छब्दश्च व्यवहितान्वयः, तदयमर्थः ये प्रतितिष्ठासन्ति त एता रात्रीरुपेयुरिति, एवं हि धर्ममात्रकल्पनाल्लाघवमितरथा तु सम्बन्धस्यैवार्थवादत्वात्सकल एव विध्युद्देशोऽप्रतिपन्नफलविशिष्टः कल्पनीयः, स्वर्गकामा एता रात्रीरुपेयुरिति कल्पितोऽप्यसौ प्रतिष्ठार्थवादो न सुखं सङ्ग-

च्यते। यस्मात्प्रतितिष्ठन्ति तस्मात्स्वर्गकामा उपेयुरिति किञ्चिन्न सङ्कुच्यते। ततश्च यद्यप्यध्याहारः स्यात्तथाऽप्यर्थवादसङ्गत्यर्थम् प्रतिष्ठैवाध्याहर्त्तव्येति प्रतिष्ठार्थता॥

काम्यानां यथोक्तकाम्यफलकत्वाधिकरणम्।

**सू० काम्ये कर्मणि नित्यः स्वर्गो यथा यज्ञाङ्गे क्रत्वर्थः॥ ९॥**

यत्र स्वर्गादन्यत्फलं श्रुतं "सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकाम" इति तत्किं स्वर्गार्थश्रुतफलार्थं च? उत श्रुतफलार्थमेवे? ति संशयः, तत्र "विधिः सामान्यरूपेण सर्वेषां हि प्रवर्त्तकः। स्वर्गश्चाभ्यर्थितः सर्वैरिति तादर्थ्यनिश्चयः"॥ कतिपयाभिलषितब्रह्मवर्चसाद्यर्थत्वे विधेरविशेषतः सर्वपुरुषान् प्रति प्रवर्त्तकत्वमवगतम्बाध्येत सर्वाभिलषितस्वर्गाद्यर्थत्वे तु तदनुग्रहः स्यादिति स्वर्गार्थता, ब्रह्मवर्चसादिश्रवणं त्वन्वाचयत्वेन व्याख्येयम्, काष्ठाहरण इव शाकाहरणम्। सौर्येण स्वर्गं कुर्यात् ब्रह्मवर्चसमपि भवतीति एवञ्च विधित एव स्वर्गार्थत्वेन परार्थत्वाद्रात्रिसत्त्रे फलश्रवणमर्थवादः पर्णमयीन्यायादिति पूर्वाधिकरणमप्याक्षिप्तम्। अत्रोच्यते। "अविशेषप्रतीतिर्या पदमात्रेण जायते। पदान्तरैकवाक्यत्वात् विशेषे स्थाप्यते हि सा। ब्रह्मवर्चसकामादिविषयोऽयमतो विधिः। स्याच्चेदन्वाचयस्तस्य भवेदन्योन्यसंश्रयः। स्वर्गार्थत्वे हि निश्चिते स्यादन्वाचयः तन्निश्चये च सति फलान्तरापेक्षायां स्वर्गकल्पना। तस्माद् ब्रह्मवर्चसाद्येव फलम्॥

दर्शपूर्णमासादीनां सर्वकामार्थताऽधिकरणम्।

**सू० सार्वकाम्यमङ्गकामैः प्रकरणात्॥ १०॥**

सर्वेभ्यः कामेभ्यो दर्शपूर्णमासाविति किमयमनुवादो? विधि? रिति संशये विधिभावनयोरश्रवणात्तदभावे च साध्यसाधनसम्बन्धायोगात् वाजपेययूपयोरिव गोदोहनादिगुणकामैः पश्वादिभिर्दर्शपूर्णमासयोः सम्बन्धसद्भावात् तदपेक्षोऽयमनुवादो दर्शपूर्णमासस्तुत्यर्थ इति प्राप्ते ब्रूमः। "षष्ठीसम्बन्धमात्रेऽपि वर्त्तमाना न दुष्यति। तादर्थ्यञ्च चतुर्थ्यैस्तच्च प्राप्तञ्च केनचित्। स्यात्प्रधानफलार्थत्वमङ्गानान्तदनुग्रहात्। न त्वङ्गफल-

शेषत्वं प्रधानस्य कथञ्चन । सर्वकामार्थता तस्मादप्राप्तेह विधीयते कर्त्तव्याविति वाहार्ये विधिभावनयोः पदम् । उत्पत्तिचोदनाभ्यां वा प्रसिद्धे विधिभावने । आश्रित्य फलसम्बन्धमात्रमत्रोपदिश्यते" यत् दर्शपूर्णमासौ कर्त्तव्यौ तत्सर्वकामार्थेनेति । तस्मात्फलविधिः ॥

दर्शपूर्णमासादीनां प्रतिफलं पृथगनुष्ठानाधिकरणम् । एष एव योगसिद्ध्यधिकरणन्यायः ।

सू० तच्च सर्वे ऽविशेषात् ॥ ११ ॥

किमेकस्मिन्नेव प्रयोगे सर्वे कामा भवन्ति ? उत प्रयोगभेदेने ? ति संशये । "सर्वे युगपदेव स्युर्निमित्तस्याविशेषतः । यादृङ्निमित्तमेकस्य तादृगे-वापरस्य हि । कामनावशात् विशेषो यदेव यदा काम्यते तदेव तदा ना-न्यदिति चेत् न, अनङ्गत्वात् न हि कामना कर्मणः फलस्य वाऽङ्गं येन तद-भावे फलानुत्पत्तिः स्यात् । ननूपादेयभूतस्य कर्त्तुर्विशेषणभूता कामना कर्माङ्गमेव न कामिन उपादानम् । उद्दिश्य हि कामिनं कर्मोपदिश्यत इति षष्ठे वक्ष्यते । अत एव लिङ्गस्याविवक्षा । योऽपि कर्मण्यनुपादेयस्याऽपि कामिनोऽपूर्वं प्रति गुणभूतत्वात् कामनाऽपि नियोगसिद्धावङ्गमिति वदति तस्याऽपि लिङ्गविवक्षा दुर्वारैव । अत्रापरो विशेषः यत्फलकामो न श्रूयते फलान्येव चतुर्थ्यन्तेन निर्दिश्य तादर्थ्येन कर्म विधीयते । कामि-पदबन्धस्तु फलत्वसूचनार्थः न स्वयन्तन्त्रम्, अपि च ये युगपत्काम्यन्ते तेषा-मनिवार्यैव युगपदुत्पत्तिः स्यात् । तस्माद्युगपत्स्युरेवं प्राप्ते ब्रूमः "कामो-द्देशेन कर्मैव साधनत्वेन चोद्यते । तेषां चोद्दिश्यमानानां साहित्यच्च विवक्षितम् ॥ एकैकस्यैव कामस्य निरपेक्षस्य साधनम् । कर्मेदं चोद्यते तच्च सापेक्षत्वे विरुध्यते ॥ यादृशं हि कारणं यादृशस्य कार्यस्य निरपे-क्षस्य निष्पादकम् । तदेकमेव युगपज्जनयति यथा मृत्पिण्डो युगप-देकमेव घटमुत्पादयति नानेककामनावशाच्च विशेषः, विधिर्हि चेतनप्रव-र्त्तनात्मकः समीहितस्यैव फलत्वमुपकल्पयति न पश्वादिस्वरूपस्य । यद्यपि युगपत्कामनात्तेष्वपि कर्मणो युगपदसमर्थत्वात् यदुद्दिश्य यदा प्रयुज्यते तदा तदेव भवति नान्यत् । यथा ह्येकफलानि कर्माणि फलस्य स्वर्गस्य

पशोर्वा साधनत्वेन चोदितानि यद्येकमेव तथाविधं फलं जनयन्ति नाने कम्। इतरथा सकृदेव यावदिष्टफलं सिद्धमिति न काम्यमेककर्म पुनः प्रयुज्येत, दृश्यते च पुनः प्रयोगः तथेहाप्येकमेव युगपत्फलम्, न च साहित्येनैवात्र कामानां फलत्वमेकैकस्येति वाच्यं। साहित्यस्याविवक्षितत्वादित्युक्तम् अतः पर्यायेण कामः॥

समानमधिकरणम्। सू० योगसिद्धिर्वाऽर्थस्योत्पत्त्यसंयोगित्वात् ॥ १२ ॥

इदानीमैहिकामुष्मिकत्वं फलानाञ्चिन्त्यते। स्वर्गः सर्वदाऽऽमुष्मिक एव वृष्टिरभिचारो वैश्वानरफलञ्च पुत्रगतब्रह्मवर्चसाद्यैहिकमेव कामनावशात्, पश्वादयस्तु चिन्त्यन्ते किमामुष्मिकाः? एव उतानियताः?, तत्र "प्रतिग्रहादिकं दृष्टं पश्वादेः कारणान्तरम्। देहारम्भकतैवातश्चित्रादेः फलहेतुता। पश्वादिस्वरूपस्य प्रतिग्रहाद्युपायान्तरदर्शनाददृष्टानपेक्षत्वाद्देहस्य तु मातापितृसंयोगमात्रेणानुत्पत्तेः कारणान्तरानपेक्षणात् विशिष्टफलोपभोगार्हशरीरारम्भकत्वमेव चित्रादेः पश्वादिहेतुत्वमित्यामुष्मिकाण्येव पश्वादीनीति प्राप्तेऽभिधीयते "साध्यत्वमेव पश्वादेः शब्देन प्रतिपाद्यते। अमुत्र वेह वेत्येवचास्तिऽशब्दो नियामकः। देहारम्भमुखत्वञ्च फलानामप्रमाणकम्। विपाकः कर्मणां येषाम्प्राग् देहविनिपाततः। प्रात्यस्तानीह भुज्यन्ते ततोऽन्यानि भवान्तरे॥ दैवम्पुरुषकारश्च पश्वादेः कारणद्वयम्, तदुक्तंभाष्यकारेण, तच्चैव हि कारणं शब्दश्चेति तस्मादनियमः॥

सौत्रामण्यादीनां चयनाद्यङ्गताऽधिकरणम्। सू० समवाये चोदनासंयोगस्यार्थवत्त्वात् ॥ १३ ॥

"वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेते"ति 'किमङ्गप्रयोजनसम्बन्धोऽयं वाजपेयाङ्गत्वेन बृहस्पतिसवस्य? उत कालार्थः? संयोगोवाजपेयोत्तरकालत्वं बृहस्पतिसवस्योपदिश्यत इति संशये। "उभयोर्वाजपेयस्य बृहस्प-

तिसवस्य च । प्रज्ञातफलयोर्नैवमिथोऽगाङ्गित्वसम्भवः । न च कर्मान्तरं युक्तं लक्षणा हि तथा भवेत् । क्त्वाप्रत्ययेन कालस्तु श्रुत्यैवोक्तो न लक्षणा । प्रसिद्धस्य" तावद्बृहस्पतिसवस्य पुरोधआदिफलार्थत्वाच्च वाजपेयाङ्गत्वम्, तद्धर्मककर्मान्तरविधौ तु बृहस्पतिसव—शब्दो धर्मलक्षणार्थः स्यात्, कालविधौ तु तस्य क्त्वार्थत्वात् न काचिल्लक्षणा । तस्मात्प्रसिद्धस्य बृहस्पतिसवस्य वाजपेयपूर्वकत्वं विधीयत इति प्राप्ते ब्रूमः "वाजपेयश्रुतेरेव स्यादत्यन्तपरार्थता । तत्प्रक्रिया च बाध्येत न च दूरगतं प्रति । कालः शक्य उपादातुङ्काले कर्म हि चोद्यते । काले च चोद्यमानं सत्कर्मात्रिपरिवर्त्तनात् । प्रसिद्धात्कर्मणो भिन्नमनिर्ज्ञातप्रयोजनम् ॥ वाजपेयाङ्गभावेन वाक्येनैव विधीयते । वाजपेयप्रयोगं यथोक्तन्निर्वर्त्य न तावत्येव कृतो स्यात् इदमपरमङ्गन्तस्य पश्चात्कर्तव्यमिति । एवञ्च वाजपेये किञ्चिद्विधानात्तच्छब्दानुग्रहोऽन्यथा त्वसावत्यन्तपरार्थः स्यात्कालोपलक्षणार्थत्वात् वाजपेयप्रकरणञ्च बाध्येत, स्थिते च कर्मान्तरत्वे धर्मलक्षणाऽपि मासाग्निहोत्रवद्दोषः ॥

वैमृधादेः पौर्णमास्याद्यङ्गताऽधिकरणम् ।

## सू० उभयार्थमिति चेत् ॥ १४ ॥

"संस्थाप्य पौर्णमासीं वैमृधमनुनिर्वपती"ति किम्पौर्णमास्याः वैमृधस्य चाङ्गप्रयोजनसम्बन्धः पौर्णमास्यङ्गं वैमृधः ? उत कालार्थः संयोगः ? तस्मिन्काले क्रियमाणः प्रकरणादुभयोर्दर्शपूर्णमासयोरङ्गमिति संशये । संस्थासंयोगात्संस्थितस्य पुनरङ्गासम्भवात् । नाङ्गप्रयोजनसम्बन्धः, कालार्थस्तु संयोगः प्रकरणाविशेषादुभयार्थमिति प्राप्ते उच्यते "पौर्णमास्या हि संयुक्तो वाक्येनानेन वमृधः । तस्य प्रकरणचेष्टे तद्वसंयुक्तगोचरम् । यत्तु संस्थितायां नाङ्गं सम्भवतीति तदुभयाङ्गत्वेऽपि तुल्यम्, न चामावास्याङ्गमेवेदमिति युक्तं प्रकरणाविशेषादिति त्वयैवोक्तम् । अतो यद्दार्शपौर्णमासिकन्तन्त्रन्द्वयोः साधारणं विहितं तद्युक्तां पौर्णमासीं समाप्य पुनरिदमङ्गङ्कर्तव्यमिति वाक्यार्थः, तथा च वाक्यशेषः "वैमृधः पूर्णमासे तु निर्वाप्यो भवति तेन 'पूर्णमासः सेन्द्रोभवती'"ति इन्द्राभावेन पौर्णमास्या वैगुण्यमाशङ्क्य तत्समाधानार्थत्वान्दर्शयन्पौर्णमास्यङ्गत्वन्दर्शयति ॥

अनुयाजादीनामाग्नी-मारुतोर्द्धकालताऽधिकरणम्।

**सू० अनुत्पत्तौ तु कालः स्यात्प्रयोजनेन सम्बन्धात् ॥ १५ ॥**

आग्निमारुतादूर्द्धमनुयाजैश्चरन्तीत्यत्रापि कालार्थत्वेन संयोगस्यात्यन्तपारार्थ्ये स्यात् इत्यङ्गप्रयोजनसम्बन्धं मन्वानस्योत्तरम् आग्निमारुतस्य सोमार्थत्वेनोपदिष्टस्य अनुयाजानाञ्च पश्वर्थतया अतिदिष्टानां विपरिवर्तमानत्वाच्च कर्माङ्गत्वम्। तेषान्तु निर्ज्ञातप्रयोजनानामङ्गाङ्गित्वापेक्षाभावात् कालार्थः संयोगः ॥

सोमादीनां दर्शपूर्णमासोत्तरकालताद्यधिकरणम्।

**सू० उत्पत्तिकालविषये कालः स्याद्वाक्यस्य तत्प्रधानत्वात् ॥ १६ ॥**

ज्योतिष्टोमे श्रूयते "दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेते"ति। तत्र दर्शपूर्णमास–शब्दस्यात्यन्तपारार्थ्यपरिहारायाङ्गप्रयोजनसम्बन्ध एव न्याय्यः, नैवम् ॥ "दर्शोपलक्षिते काले सोमयागो विधीयते। स च प्रकृत एवेति न कर्मान्तरसम्भवः। दर्शोत्तरकालमनुपादेयं प्रत्युपादीयमानोऽपि सोमः "सन्निधौ त्वविभागादि"ति न्यायात् न कर्मान्तरम्। प्रकृतश्चासौ फलार्थत्वाच्च दर्शाङ्गतां प्रतिपद्यते। अतो न तावत्सोमस्य दर्शाङ्गत्वम्। नापि दर्शादेः सोमाङ्गत्वम् अविधीयमानत्वात्, न ह्यविधीयमानमङ्गम्भवति। न चात्र दर्शपूर्णमासौ विधीयेते विधायकाभावात्, दर्शोत्तरकाले हि सोमस्य विधिः न दर्शस्य, न चाकृतयोर्दर्शपूर्णमासयोस्तदुत्तरकाले सोमः शक्यते कर्त्तुमिति, अर्थात्तयोरपि विधिः स्यात् विध्यन्तरविहितयोस्तु तयोर्ल्लाभान्नानुपपत्तिः। तदुत्तरकाले तु सोमश्चोद्यमानोऽपि सन्निधेर्न कर्मान्तरमित्युक्तम्। तस्मात्सोमस्यायं कालविधिः ॥

वैश्वानरेष्टेः पुत्रगतफलकत्वाधिकरणम्।

**सू० फलसंयोगस्त्वचोदितेन स्यादशेषभूतत्वात् ॥ १७ ॥**

"वैश्वानरन्द्वादशकपालन्निर्वपेत्पुत्रे जाते" इति विधायाम्नायते यस्मिन् जात एतामिष्टिन्निर्वपति पूत एव स तेजस्वी अन्नाद इन्द्रियावी पशुमान्भवती"ति। तदिदम्पूतादिकं रात्रिसत्रप्रतिष्ठावत् फलमिति स्थितम्,

तत्किमिष्टिकर्त्तुः फलं पितु? रुत पुत्रस्ये? ति विचारे अन्यफले कर्मण्यन्यस्य प्रेरणासम्भवात्पितुरेव प्रेर्यत्वादाधानगतात् स्वात्मनेपदादग्निसाध्यकर्मफलानामाधातृगामित्वनियमात्पितुरेव फलम् । नैतदेवं "येनैव वाक्यशेषेण फलमेतत्प्रकल्प्यते । तेनैव पुत्रगामित्वप्रतिपत्तिरपि स्फुटा" । "यस्मिञ् जाते निर्वपति स पूतो भवती"ति स्पष्टम्पुत्रगामित्वम् । पुत्रफलमपि पितुरभिलषितमेवेति विधेरात्मनेपदस्य चाविरोधः, एवं वा इयमेव वैश्वानरीया चिन्त्यते किं जननानन्तरमेव कर्त्तव्या? उत कृते जातकर्मणी? ति निमित्तानन्तरं नैमित्तिकमुपसम्प्राप्तं विना कारणेन नातिक्रमितव्यम् अतोऽनन्तरमेव स्यात्, सत्यम्, इह त्वस्ति कारणम्पुत्रफलार्थं हीदङ्कर्म तस्य च कृते जातकर्मणि स्तनप्राशनं न पुनः प्राक्, अकृते हि जातकर्मणि इष्टिर्निरूप्यमाणस्तनप्राशनमुत्कर्षेत् ततः कुमारविप्रत्तिप्रसङ्गात् इष्टिरेवेयमनर्थिका स्यात्, तस्मात्कृते जातकर्मणि कर्त्तव्या । पुनश्चिन्त्यते किं जातकर्मानन्तरमन्तर्दशाह एव कर्त्तव्या? उताशौचापगमे स्वकाले वाऽऽगत इति "निमित्तानन्तरम्प्राप्ता प्रयोजनविरोधतः । उत्कृष्टा तदभावात्तु पुनर्नोत्क्रष्टुमर्हति । शौचाङ्गेन विनाऽप्येषा कर्त्तव्या च निमित्ततः ॥ अपि वाऽप्येकदेशे स्यादिति षष्ठे हि वक्ष्यते" । उच्यते "निमित्तस्वरसात्प्राप्तिर्या तावत्सा निवारिता । प्रयोजनविरोधेन तस्मादङ्गोपसङ्ग्रहः" । निमित्तानन्तर्यन्तावत्प्रयोजनविरोधादेव बाधितमित्युत्कृष्टेष्टिः उत्कृष्टा चेदवैगुण्याय शौचकालप्रतीक्षया । आशौचापगमे पौर्णमास्यादिकाले कर्त्तव्या ॥

सौत्रामण्याद्यङ्गानां स्वकालकर्तव्यताऽधिकरणम् ।

सू० प्रधानेनाभिसंयोगादङ्गानाम्मुख्यकालत्वम् ॥ १८ ॥

"वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेते"ति वाजपेयाङ्गत्वेन चोद्यमानो बृहस्पतिसवः किम्प्रधानकाले शरदि तेन सहैकप्रयोगः कर्तव्यः? उतातिदेशप्राप्ते स्वकाले वसन्त? इति संशयः, तत्र "साङ्गस्य हि प्रधानस्य विधानं देशकालयोः । अङ्गान्तरवदस्यापि तदङ्गत्वात्सह क्रिया । न हि वाजपेयः शरदि कर्त्तव्यश्चोद्यते किन्तु वाजपेयकरणको यः फलार्थी

व्यापारः प्रयोगः फलभावनाख्यस्तस्यायङ्कालविधिः शरदि वाजपेयेनेति तृतीयानिर्देशात्तस्यैव फलसामग्रीभूतस्य चिकीर्षितस्य कालापेक्षितत्वात् स च व्यापारोऽङ्गप्रधानव्यासक्त इति तुल्यः प्रधानस्याङ्गानाञ्च तत्कालयोग इति वाचनिककालविरोधादतिदिष्टः कालो बाध्येत। नन्वयङ्कालो बृहस्पतिसववर्जिताङ्गेषु कृतार्थ इति नातिदेशम्बाधितुमुत्सहते, अतिदेशोऽपि कालातिरिक्ताङ्गेषु कृतार्थ इति न वचनसङ्कोचायालम्॥ तस्मात्प्रधानकालत्वमेवम्प्राप्तेऽभिधीयते "सत्यं वाचनिकः कालो बाधेतैवातिदेशिकम्। बृहस्पतिसवे त्वेष शरत्कालो न चोद्यते। यस्य कालविधिस्तस्मात् बहिष्ट्वेन हि स श्रुतः"। वाजपेयकरणको यः स्वकार्यम्प्रति व्यापारः शरदि विहितस्तमेवेहापि समभिव्याहृतेन त्वाशब्देन प्रतिनिर्दिश्य ततः पश्चात्तनबृहस्पतिसवश्चोद्यमानस्तत्प्रयोगबहिर्भावाच्च तत्कालं लभते यदि परं वाजपेये कृते कर्त्तव्यः सत्यतिक्रमकारणाभावादनन्तरमेतत्क्रियेत, अस्ति त्वतिक्रमकारणङ्कालोपसंहारः। त्वा च पूर्वकालतायां स्मर्यते नानन्तर्ये, तस्मात्स्वकाले प्रयोगः, निर्वृत्तमपि च वाजपेयापूर्वमनेनाङ्गेन बलवत्क्रियते॥

इति शास्त्रदीपिकायां चतुर्थस्य तृतीयः पादः॥

---

## अथ चतुर्थाध्याये चतुर्थः पाद आरभ्यते।

राजसूयेज्यानां विदेवनाद्यङ्गकत्वाधिकरणम्।

सू० प्रकरणशब्दसामान्याच्चोदनानामनङ्गत्वम्॥ १॥

अनुमत्यादीनि विदेवनादीनि च यागायागकर्माणि प्रकृत्य श्रूयते "राजसूयेन स्वाराज्यकामो यजेते"ति तत्र संशयः किं सर्वाण्येव फलवन्ति समप्रधानानि पुरुषार्थानि? उतायागाः क्रत्वर्थाः? इति तत्र "सर्वेषामप्रकृतत्वेन फलापेक्षितया तथा। राजसूयपदस्यापि समानत्वात्फलान्वयः। राजसूयप्रातिपदिकं यद्यप्यप्रसिद्धं तथाऽपि तृतीयान्तत्वात्फलसाधनाभिधायित्वेन निर्णीतमप्रकृतानाम्फलापेक्षिणामविशेषात्सर्वेषामेवान्वय-

सीयते, एवं साधनेऽवगते स्वाराज्ये च फले भावनामात्रविधियुक्तादाख्या-तात्प्रतिपाद्यमपेक्षितमिति तन्मात्रपरमाख्यातं, केवलप्रत्ययप्रयोगासम्भवात्तु यत्र क्वचन धातावुपादातव्ये छत्रिन्यायेन यागायागसमुदाये यजिरनुवाद-भूतः प्रयुज्यते, ततः सर्वेषां फलान्वयात्प्राधान्यम् उच्यते "धात्वर्थानाम्फलै-र्योगो न नाम्नामिति हि स्थितम् । यजिश्च यागमेवाह यजेस्तेन फला-न्वयः ॥ राजसूयपदं चापि यज्यैकाधिकरण्यतः । यागनामैव तेनात्र यागानां स्यात्प्रधानता । इतरत्तु फलवत्सन्निधानात्तदङ्गम्भवति ॥

विदेवनस्य कृत्स्नराजसूयाङ्गताऽधिकरणम् ।

सू० मध्यस्थं यस्य तन्मध्ये ॥ २ ॥

स्थितमयागानामङ्गत्वम्, तत्र विदेवनाद्योऽभिषेचनीयाख्यसोम-यागविध्यनन्तरमाम्नातास्तदीयमाहेन्द्रस्तोत्रकाले ऽपकृष्टाः माहेन्द्रस्तोत्र-म्प्रत्यभिषिच्यत इति, अयं विदेवनादीनामभिषेकान्तानामपकर्ष इति ते इमे अभिषेचनीयाङ्ग ? मुत राजसूयाङ्ग ? मिति संदेहे कथम्भावगृहीतप्राकृ-ताङ्गमध्यपातादवान्तरप्रकरणेनाभिषेचनीयाङ्गतामाशङ्कमानस्योत्तरम्, तत्र "तत्र प्रयोजनोपेक्षाकर्मणां यत्र चोदना । विदेवनादिकानान्तु न मध्ये प्रकृतो विधिः" अभिषेचनीयानन्तरं विहिताः प्रयोजनापेक्षाः सन्निधिप्राप्ताभि-षेचनीयाङ्गत्वबाधेन प्रकरणाद्राजसूयाङ्गताचोताः नापकर्षसमये भूयः प्रयोजनमपेक्षन्ते येनावान्तरप्रकरणविषयतां प्रतिपद्येरन्, तस्माद्राजसू-याङ्गम् ॥

सौम्यादीनामुपसत्कालकत्वाधिकरणम् ।

सू० प्रकरणविभागे च विप्रतिषिद्धं ह्युभयम् ॥ ३ ॥

राजसूये एव "सौम्यञ्चरुम्बभ्रुर्दक्षिणे"ति विधाय श्रूयते । "पुर-स्तादुपसदां सौम्येन प्रचरन्ती"ति । किमयञ्चरुरुपसदामङ्गम् ? अङ्गप्रयोज-नसम्बन्धोऽयम् ? उत यागान्तरवत्फलार्थः कालार्थोऽयं संयोग ? इति चिन्त्यते "तत्र प्रकरणापेक्षात्सामान्यवचनादयम् । स्वाराज्ये विनियुज्येत साक्षादुप-सदङ्गता । न हि सौम्येनेति स्वशब्देन तृतीयान्तेन षष्ठीनिर्दिष्टोपसदङ्ग-त्वेन विनियुज्यमानः सौम्यः प्रकरणापेक्षया सामान्येन राजसूयवाक्येन फल-

सम्बन्धं लभते। पुरस्ताच्छब्दश्चाङ्गस्य तत्समीपेऽनुष्ठानात् यथाकथञ्चिदनुवादः। "अत्राभिधीयते नेयं षष्ठी तादर्थ्यवाचिनी। दिग्योगलक्षणा त्वेषा पुरस्ताच्छब्दयोगतः॥ अङ्गाङ्गिभावमात्रे हि पुरस्तादित्यनर्थकम्। प्रसज्येत पदं तस्मात्कालस्तावद्विधीयते। तथा च सति नाङ्गत्वं विधातुं शक्नुयाद्विधिः" न ह्यनुत्पत्तिविधयोऽनेकार्थव्यावृत्तिक्षमाः तस्मात्कालार्थ एव संयोग इति फलार्थः सौम्यः॥

आमनहोमानां सांग्रहायण्यङ्गताऽधिकरणम्।

**सू० फलवद्वोक्तहेतुत्वादितरस्य प्रधानं स्यात्॥ ४॥**

"वैश्वदेवीं साङ्ग्रहणीं निर्वपेत् ग्रामकाम" इति प्रकृत्यामनमस्यामनस्यामदेवा इति तिस्र आज्याहुतीर्जुहोती"त्यामनहोमा विहिताः किङ्ग्रामकामपदानुषङ्गेण साङ्ग्रहणीवत् फलार्थाः? उत साङ्ग्रहण्यङ्ग-मिति संशये साङ्ग्रहण्याः प्रकृताङ्गनिराकाङ्क्षायाः पुनरङ्गापेक्षाऽभावात् आमनहोमानाञ्च फलपदानुषङ्गेण प्रयोजनावाप्तेरनपेक्षत्वात्सम्भवति च प्राधान्येऽङ्गत्वायोगात्फलार्थत्वे प्राप्ते अनुषङ्गे सकृदाम्नातस्य पुनरनुसन्धानात् तथा च सति सकृदाम्नातरूपबाधात् अत्यन्तागतिकतया तदाश्रयणादिह चानपेक्षतया साङ्ग्रहण्याः प्रकरणाभावेऽपि सन्निधेरेव तदङ्गत्वसम्भवात् आमनहोमानाञ्च प्राकृताङ्गमध्यविहितत्वेन प्रकरणसंस्पर्शस्यापि सम्भवादगतित्वाभावादनुषङ्गानाश्रयणात्परिधिमन्त्रव्यवायाश्रयणे तदसम्भवादङ्गत्वमेव न्याय्यम्॥

दधिग्रहस्य नित्यताऽधिकरणम्।

**सू० दधिग्रहो नैमित्तिकः श्रुतिसंयोगात्॥ ५॥**

ज्योतिष्टोमे श्रूयते "यं वा अध्वर्युर्यजमानश्च देवतामन्तरितस्तस्या आवृश्चते प्राजापत्यन्दधिग्रहं गृह्णीया"दिति सोऽयं दधिग्रहः किं नैमित्तिकः? उत नित्यो नैमित्तिकश्च? अथ नित्य एवे?ति संशये "देवतान्तरिते यागेनिमित्तेऽयं विधीयते। तस्मान्नैमित्तिकः सत्यन्नित्योऽपि ज्येष्ठशब्दतः"। नैमित्तिक इति सत्यन्नित्योऽपि स्यात्। कुतः ज्येष्ठशब्दसंस्तवात् "ज्येष्ठो वा

एव ग्रहाणा"मिति प्रशस्तवचनो ज्येष्ठ—शब्दो नित्यश्च प्रशस्तो न चञ्चलः अथवा प्राथम्यनिमित्तं ज्येष्ठत्वं नित्यश्च सन्नयं पाठक्रमात् ग्रहान्तरेभ्यः प्रथमङ्गृह्यमाणो भवति ज्येष्ठः, नैमित्तिकस्तूपजाते निमित्ते क्रियमाणो न नियोगतः ज्येष्ठः स्यात् । "तस्मादुभयरूपः स्यान्न त्वेवचित्य एव सः । न तु नैमित्तिको यस्मान्निमित्तस्याश्रुतत्वतः । न ह्यन्तराणो निमित्तत्वेन श्रूयते यदि—शब्दाद्यभावात्, यच्छब्दस्य चाकर्तृसमानाधिकरणस्य तत्प्रतिपादकत्वाभावात् अर्थवादमात्रमन्तरायश्रवणमिति नित्य एव स्यात् ॥

वैश्वानरस्य नैमित्तिकत्वाधिकरणम् ।

सू॰ वैश्वानरश्च नित्यः स्यान्नित्यैः समानसङ्ख्यत्वात् ॥ ६ ॥

"यो वै संवत्सरमुख्यमभृत्वाऽग्निं चिनुते यथा सामिगर्भो विपद्यते तादृगेव तदार्तिमार्च्छेद्वैश्वानरं द्वादशकपालम्पुरस्तात् निर्वपे"दिति, अत्रापि पूर्ववदर्थवादमात्रं संवत्सराभरणमिति नित्यतां मन्यते । यच्छब्दस्तु कर्तृसभिव्याहृतो निमित्ततां संवत्सराभरणस्य प्रतिपादयति नैमित्तिकतैव स्थिता ॥

षष्ठ्याश्चितेर्नैमित्तिकत्वाधिकरणम् ।

सू॰ षट्चितिः पूर्ववत्त्वात्स्यात् ॥ ७ ॥

"योऽग्निं चित्वा न प्रतितिष्ठति पञ्च पूर्वाश्चितयो भवन्ति अथ षष्ठीचितिं चिनुते प्रतिष्ठित्या" इति किमियं षष्ठीचितिर्नित्या एवाग्निः षट्चितिकः? उत सपञ्चचितिक एव? इदन्तु चयनान्तरमेकचितिकम् अप्रतिष्ठायान्निमित्ते विधीयते तत्र "पूरणप्रत्ययो न स्यात्षट्सङ्ख्यापूरणाद्विना । पञ्चभिः सहिता चैषा पूरयेत्तां न केवला । न हि केवला चितिः षष्ठीति शक्या वक्तुम् । तस्मान्नित्य एवाग्निः षट्चितिकः, नैवम् । "यच्छब्दोऽप्रतिष्ठायाः स्पष्टमाह निमित्तताम् । अभिधानक्रियापेक्षं षट्सङ्ख्यापूरणम्भवेत् । नित्याः पञ्चचितयः प्रागभिहिताः ततः परमियं नैमित्तिक्यभिधीयते इत्यभिधानापेक्षं षष्ठीत्वमुपपन्नमिति न यच्छब्दावगतनिमित्तापह्नवः शक्यते कर्तुमिति नैमित्तिकीयम् ॥

पिण्डपितृयज्ञस्यानङ्गता-ऽधिकरणम् ।

सू० पितृयज्ञः स्वकालत्वादनङ्गं स्यात् ॥ ८ ॥

"अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ती"ति अनारभ्याधीतः पितृयज्ञः क्रत्वर्थः? उत पुरुषार्थे? इति संशये कर्मवचनेनामावास्या-शब्देन समभिव्याहारात्तदङ्गत्वम् । यद्यपि कालस्यापि साधारणोऽयं शब्दस्तथापि फलकल्पनापरिहाराय कर्मवाचितैवाङ्गीक्रियते, तस्मात् क्रत्वर्थ एवायमाहिताग्निः, अनाहिताग्नेरप्यनाहिताग्निना कार्यं इति विहितः, तस्य क्रत्वभावाद्भवतु पुरुषार्थः तथा च भगवता मनुना "न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मन" इति वदता दर्शाङ्गत्वं प्रदर्शितम् । अनङ्गं हि तेन विना क्रियते, तस्माद्दर्शाङ्गं "नैवं साधारत्वेऽपि सामानाधिकरण्यतः। कालवाचित्वमेव स्यात्तत्सापेक्षश्च कर्मणि"। यद्यपि तावत्साधारणोऽमावास्या-शब्दः तथाप्यपरान्हसामानाधिकरण्यलिप्सया कालवाचित्वमध्यवसीयते, न चायमतीव साधारणः काले हि निरपेक्षोऽयङ्कालसबन्धापेक्षया तु कर्मणि वर्त्तते ॥ तस्मात्कर्मसमभिव्याहाराभावादनङ्गम् । मनुवचनस्य त्वयमर्थः श्राद्ध-शब्देन मासि मासि श्राद्धमुच्यते । दर्श-शब्देनाप्यमावास्याकालः तदयमर्थः अमावास्यायामेवाहिताग्निः श्राद्धङ्कुर्याच्च तेन विना सर्वेष्वेवापरपक्षाहःसु क्रियमाणेऽपि पितॄन्प्रीणातीति स्मृत्यन्तरवशादन्येष्वप्यहःसु कुर्यादिति एवं च स्मृत्यन्तरमनाहिताग्निविषयम्भविष्यति तत्सिद्धं पितृयज्ञस्यानङ्गत्वम् ॥

रशनाया यूपाङ्गताधिकरणम् ।

सू० पश्वङ्गं रशना स्यात्तदागमे विधानात् ॥ ९ ॥

आश्विनङ्ग्रहङ्गृहीत्वा त्रिवृता यूपं परिवीय आग्नेयं सवनीयम्पशुमुपाकरोतीति येयं सवनीयस्याङ्गभूता रशना सा किं पशुबन्धनार्था? उत यूपसंस्कारार्थे? ति संशये "यूपार्था सत्यदृष्टार्था दृष्टार्था पशुबन्धनी अनपक्रमणात्तेन पश्वङ्गं रशना भवेत्" । न हि यूपस्य रशना किञ्चिद्दृष्टं करोति पशोस्त्वनपक्रमणङ्कुर्वती भवति दृष्टार्था तेन त्रिवृत्प्रातिपदिकाभिहिता रशना वाक्येन पशुयागाङ्गतया विधीयते त्रिवृद्गुणतया आग्ने-

यमुपाकरोतीत्ति, सा च दृष्टेनैव पश्वनपक्रमणेन तदङ्गतां प्रतिपद्यते या च त्रिवृच्छब्दे तृतीया या च यूपं परिव्ययतीति द्वितीया तत्सर्वं प्राप्तानुवादः। यूपे हि पशुर्बन्धव्यश्चोदकप्राप्तेः यश्च रशनया यूपे पशुम्बध्नाति सोऽवश्यं यूपे रशनां व्यापारयति, यश्च व्यापारयति स शक्यते तया यूपं परिव्ययतीति वक्तुम् अतोऽयमनुवाद इति पश्वर्था रशना चोदकप्राप्ता चान्या रशना ताभ्यामुभाभ्यां पशुर्बध्यते ततः पश्वर्था रशना तदर्थे च परिव्याणं यूपे तस्याः प्रतिमोचनम्। प्रतिमुक्ता हि सा अनपक्रमणाय कल्पते। यूपोऽपि स्थाणुस्थानीयः तदर्थ एवेति सर्वमेव दृष्टार्थं भवति, तस्मात्पश्वर्थत्येवं प्राप्ते ब्रूमः। "यद्यदृष्टार्थता यूपे स्यादेवङ्क्लिष्टकल्पना। यूपार्था सत्यपि त्वेषा दृष्टार्था दार्ढ्यजन्मनः। परिव्याणं हि यूपार्थं द्वितीयातोऽवगम्यते। रशना च परिव्याणशेषभूता तृतीयया। सर्वन्तद्विपरीतं स्यात्पश्वर्था रशना यदि। यूपार्था रशना तस्माद्द्वेव पशुबन्धनी। केचित्तु पूर्वपक्षेऽपि न पशुबन्धनार्था रशना यूपस्यैव परिव्याणं पशूपाकरणस्यारादुपकारकमिति पूर्वपक्षः, सिद्धान्तस्तु यूपसंस्कारार्थमित्येवमाहुः। तथा सति अनुष्ठानाविशेषाच्चिन्ताप्रयोजना चिन्ता स्यात् पशुगणे त्वेकयूपे सकृत्कृतमेव परिव्याणमगृह्यमाणविशेषत्वात्तन्त्रेण सर्वेषामुपकुर्यादिति प्रति पशु रशना कार्येति प्रयोजनन्न सिद्ध्येदित्यास्तां तावत्॥

स्वरोः पश्वङ्गताधिकरणम्। सू॰ स्वरुस्त्वप्येकदेशत्वात्॥ १०॥

"यूपस्य स्वरुङ्करोति स्वरुणा पशुमनक्ती"ति। किं यूपार्थः स्वरुः तस्य पश्वञ्जनं प्रतिपत्तिः? उत पश्वर्थः? तस्य यूपादुपादान? मिति संशये। यूपस्येति षष्ठ्या देवदत्तस्य गौरितिवत्तादर्थ्ये मन्यते "स्वरुणा पशुमित्येवं शेषशेषिविभक्तितः। स्वरोः पश्वञ्जनाङ्गत्वं पशोश्चापि प्रधानता यूपस्येत्यवयवव्यतिरेकजनिता षष्ठी न तादर्थ्यङ्गमयतीति पश्वर्थः स्वरुः॥

आवारादीनामङ्गताधिकरणम्। सू॰ दर्शपूर्णमासयोरिज्याप्राधान्यविशेषात्॥ ११॥

दर्शपूर्णमासयोः किं सर्वेषां यागानां प्राधान्यम्? उताग्नेयादीनामेककालयोगिनामितरेषां तदङ्गत्वमिति चिन्त्यते "य एवं विद्वानित्येवं संयु-

त्तावनुवादकौ न विधायकावित्यनुवादस्य तु प्रयोजनमाग्नेयादीनामेव प्राधान्यसिद्धिरित्येतावत्स्थितं द्वितीये, अधुना तु तदेव प्रयोजनं सिध्यति नेति चिन्त्यते। "तत्राख्यातानुसारित्वात्संज्ञाया राजसूयवत्। तस्या विशेषतो वृत्तिः सर्वयागप्रधानता नामधेयन्तावदाख्यातानुसारि यत्राख्यातं तत्र वर्तते न तु यत्र नाम तत्राख्यातम् आख्यातञ्च अविशेषात्सर्वानेव रूपवतः प्रकृतान् यागात् उपादाय फले विनियुङ्क्ते, अतो नामाप्युत्पन्नं द्विवचनान्तप्रतिरूपकं सर्वत्र वर्तत इति सत्यामप्यनुवादेन समुदायद्वयसिद्धौ सर्वेषां प्राधान्यम्, उच्यते "यद्वि नामाप्रसिद्धार्थं तदाख्यातवशम्भवेत्। इदं पुनः प्रसिद्धार्थमाख्यातस्य विशेषणम् प्रातिपदिकं तावत्कालद्वयसंयोगादाग्नेयादिषु प्रसिद्धार्थं द्विवचनमपि य एवं विद्वानित्येवं संयुक्तानुवादद्वयपरिकल्पितसमुदायद्वयाभिप्रायमप्रसिद्धार्थमेव। न च दर्शशब्दस्याप्रसिद्धार्थत्वमन्वारम्भणीयावाक्यशेषे ऽमावास्यापर्यायत्वेन प्रसिद्धार्थत्वात्। तदेवं प्रसिद्धार्थं विशिष्टवाचिनामधेयं शक्नोत्याख्यातं सामान्यवचनं स्वविषये स्थापयितुमिति प्रधानामेव प्राधान्यमितरेषां तु प्रकरणात्तदङ्गत्वम्॥

ज्योतिष्टोमे दीक्षणीयादीनामङ्गताधिकरणम्।

सू० ज्योतिष्टोमे तुल्यान्यविशिष्टं हि कारणम्॥ १२॥

दीक्षणीयाग्नीषोमीयादीष्टिपशुयागान् सोमयागञ्च प्रकृत्य श्रूयते। "ज्योतिष्टोमेन स्वर्गकामो यजेत" तत्र चिन्त्यते किं सर्वयागानां फलसम्बन्धेन प्राधान्यम्? उत सोमयागस्यैव इतरेषां तदङ्गत्वमिति "तत्राख्याताविशेषेण सर्वयागप्रधानता। नामधेयं प्रसिद्धार्थमाख्यातं विशिनष्टि हि। ज्योतिराख्या न हि स्तोमाः प्रसिद्धाः कस्यचिद्ध्वनेः। यत्रावयवशोवृत्तिर्नामधेयस्य गम्यते। त्रिवृदादिषु तच्छब्दस्तुतिमात्रतयोदितः। न तु स्तोमाभिधेयत्वं ज्योतिःशब्दस्य तावता। अस्तुवा त्रिवृदादीनां ज्योतिःशब्दाभिधेयता। तथापि सर्वयागानां तत्सम्बन्धात्प्रधानता। स्तोमाहि सर्वयागानामङ्गं स्युरविशेषतः। सर्वेषां फलवत्त्वेन प्रक्रिया न विशिष्यते अतः प्रकरणात्स्तोमाः सर्वयागाङ्गतामियुः। सोमयागेन संयुक्ताः स्तोमवाक्येन चैव तत्। ग्रहणास्तोत्रयोर्वाक्ये कालार्थो सङ्गतिर्यतः। द्वयोरपि कृता-

र्थत्वात्स्तोत्रस्य ग्रहणस्य च। स्तोत्राणि तावदाज्यैः स्तुवत इत्यादिवाक्योत्पन्नानि प्रकरणात् यागाङ्गानि कृतार्थानि ग्रहणमप्यैन्द्रवायवादिवाक्यविहितं सोमसंस्कारतया कृतार्थमेव, अतोऽत्र कालार्थ एव संयोगः "ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकुर्या"दिति न त्वङ्गाङ्गिभावोऽङ्गत्वन्तु प्रकरणाविशेषात्सर्वयागान् प्रत्यवगम्यते, स्तोत्रीया संख्या च स्तोत्रमशब्देनोच्यत इति तत्सम्बन्धः सर्वधर्मविशिष्टः । "तेनाख्याताविशेषेण नाम्नश्चाप्यविशिष्टतः प्राधान्यं सर्वयागानामिति प्राप्तेऽभिधीयते । ज्योतिष्टोमाभिधानस्य यागस्यात्र फलं श्रुतम् । ज्योतिष्टोमपदञ्चेदं वाक्यशेषे निरुच्यते ज्योतिष्टोमपदनिर्वचनार्थं ह्येतद्वचनम्, त्रिवृत्पञ्चदशः सप्तदश एकविंशः एतानि वाव तानि ज्योतींषि य एतस्य स्तोमा"इति। तदिह यदि त्रिवृदादिकस्तोत्रीयसङ्ख्याचतुष्टयस्य ज्योतिःशब्दो वाचकः अथापि न वाचकः सर्वथा तावत्तत्सम्बन्धिनि यागे ज्योतिष्टोमपदं नामतया वर्त्तत इत्येतत्तावद्विस्पष्टमवगतम् अतस्तत्सम्बन्धिन एव यागस्य फलमिदं नान्यस्य, न च दीक्षणीयादीनां फलवाक्यप्रवृत्तिवेलायां स्तोमसम्बन्धः प्रसिद्धो यागानां स्तोत्राणां च निष्फलत्वाविशेषेणाङ्गाङ्गिभावानिष्पत्तेः, फलसम्बन्धोत्तरकालभाविप्राकरणिकस्तोमसम्बन्धाभिप्रायं छेदनादिविधाविव यूपपदं ज्योतिष्टोमपदमित्याश्रयणीयं स्यात् तत्र प्रसिद्धनिर्द्देशरूपः शब्दो बाध्येत सोमयागस्यापि यद्यप्यनेनैव न्यायेनाङ्गाङ्गिभावः सम्बन्धः स्तोत्रैरसिद्ध एव तथापि सोमग्रहणस्य स्तोत्रोपाकरणस्य च कालार्थोऽपि तावत्संयोगः प्रसिद्धः "ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकुर्या"दिति । तावता च सोमयागस्य स्तोमानाञ्च सम्बन्धमात्रं सिद्धम् । तन्मात्रनिमित्तश्च बहुव्रीहिरिति शक्यते ज्योतिष्टोमपदेन सोमयागोऽभिधातुमिति तद्विशेषितो यजिस्तस्यैव फलसम्बन्धं करोति "प्रसिद्धरूपे सति सोमयागे न दीक्षणीयादिषु वर्त्तते यत् । ततः स एवेह फलान्वयेन प्रधानमन्ये तु तदङ्गभूताः ॥

इति महामहोपाध्यायश्रीपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां चतुर्थाध्यायस्य चतुर्थः पादः ॥

अध्यायः समाप्तः ॥

## अथ पञ्चमाऽध्याये प्रथमः पाद आरभ्यते ।

श्रुतिबलीयस्त्वन्यायः । सू० श्रुतिलक्षणमानुपूर्व्यं तत्प्रमाणत्वात् ॥ १ ॥

"प्रयुक्तिलक्षणे स्थितः प्रयोज्यवर्गनिर्णयः । प्रयोज्यगोचरः क्रमस्ततः परं निरूप्यते" ॥ प्रथमं तावच्छ्रुतिलक्षणो वेदविहित एव क्रमः पदार्थानामाश्रयणीयः, अथ वा ऽनियम ? इति संशये प्रयोगप्राशुभावादनियममाशङ्क्य वेदप्रामाण्यात्तद्विहित एव क्रमः समाश्रयणीय इति प्राक् सिद्धं चोदनाप्रामाण्यमेव बहुकृत्वोऽपि पथ्यं वदि[1]तव्यमित्येवं पुनः कथितमनेन सूत्रेण । अथवा भवति केषाचिन्मन्दधियामयं भ्रमः क्रम[2]स्याभावार्थत्वेन स्वतो विधिर्न सम्भवति, न च द्रव्यादिवत्तद्विशेषणतया, क्रमस्यैकैकपदार्थाश्रयत्वेनानवगमात्संघातविशेषणत्वात् तस्याविधेयत्वादशब्दाभिहितत्वाच्च क्रमस्य विध्यन्वयासम्भवादविधेय एव क्रम इति, तदपनोदनार्थमिदं सूत्रम्, आनुपूर्व्यं श्रुतिलक्षणं द्रव्यादिवत्क्रियाविशेषणत्वात्, न चासौ संघातविशेषणं तस्यैकत्वेनाक्रमभाजनत्वात्, पदार्थास्तु यद्यपि प्रत्येकं न क्रममनुभवन्ति परस्परमिलितास्तु संयोगादिवद्वित्ततिरूपं क्रमं बिभ्रति बहवश्च ते प्रयोगविधिना विधीयन्ते इति तद्विशेषणतया श्रुत्यादिसमर्पितः क्रमः सुखं विधीयते अनभिहितोऽपि कथंचिद्बुद्धिमागतोऽपेक्षितो योग्यश्चेति प्राकृतोपकारवद्विकृतौ शक्यते विधातुमिति विधिलक्षणमेवानुपूर्व्यमाश्रयितव्यं भवति । अथवा न सर्वः क्रमोऽत्र चिन्त्यते किन्तु श्रुतिक्रम एव क्वचिदुदाहरणे चिन्त्यते द्वादशाहे सत्त्रभूते श्रूयते "अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयती"ति तदिह किं दीक्षा विधीयते? क्रमस्तु पाठतो लभ्यते । अथवा क्रम एव विधीयते? श्रुतिक्रमोऽयमिति तत्र "वाक्यार्थविविधिरन्याय्यः श्रुत्यर्थविधिसम्भवे । तस्माद्दीक्षाविधिः पाठाद्दीक्षाणां लभ्यते क्रमः । उच्यते "सर्वेषां यजमानत्वाद्दीक्षा प्राप्तैव चोद-

१ वेदितव्यमिति तु पाठान्तरम् ।
२ भ्रमस्येति त्वपपाठः ।

कात् । क्रमस्तु नान्यतः प्राप्त इति सोऽत्र विधीयते" । कर्त्तृनियमः कस्माच्च भवति अध्वर्युरिमानिति चोदकप्राप्तत्वादेव । नन्विह यजमानानामेवार्त्विज्यकारित्वादध्वर्युर्नास्ति कथञ्चस्य दीक्षायां प्राप्तिः ? असतो वा कथं कर्त्तृनियमः ? अस्ति चाध्वर्युः सत्रे इति दर्शितं तृतीये, अध्वर्युदीक्षायां तु "चित्पतिस्त्वा पुनात्वि"ति मन्त्रलिङ्गविरोधादुत्तरेषु च "न पूतः पावये"दिति प्रतिषेधादध्वर्योः कर्त्तृत्वासम्भवादितरमन्यस्तेषां यतो विशेषः स्यादित्येवं प्रतिप्रस्यातुरध्वर्योर्वार्द्धेषु च प्राप्तिः, एवमेव तृतीयिषु पादिषु च नेष्टचेत्रोः प्राप्तिरतो विधेयान्तराभावाद्गृहपतिं दीक्षयति ब्रह्माणं दीक्षयतीत्येवमानुपूर्व्येण कीर्त्तितानां दीक्षाणां योवितितिविशेषः प्रतीयते स एव विधीयते, अनभिहितोऽपि प्रातिस्विकेन विधिना विधीयमानत्वाच्छ्रुतिक्रम इत्युच्यते, अर्थे[1]दिषु प्रयोगविधिमा[2]त्रमिति विवेकः एवं चाध्वर्युर्गृहपतिमित्यादि ब्रह्मचारी वाऽऽचार्यप्रेषित इत्येवमन्तं विततिविशेषैकार्यविधानादेकं वाक्यं, यदा तु पौर्वापर्यं क्रमस्तदा त्वा–शब्देन तदभिधानादनभिधानं नास्ति प्रतिदीक्षं च तद्भेदाचानावाक्यानीति विवेकस्तस्माच्छ्रुतिक्रमोऽयम् ॥

क्रमस्य क्वचिदार्थिकत्वाधिकरणम् । सू० अर्थाच्च ॥ २ ॥

"अग्निहोत्रं जुहोति यवागूं पचती"ति यवागूपाकहोमयोः किमनियमः ? अथवा पूर्वं पाकस्ततो होम ? इति नियमप्रमाणाभावाद् विध्योः पाकहोममात्रपर्यवसानाच्च क्रमोऽत्र पूर्ववद्विधीयते अतो ऽनियमः, प्रयोजनवशात्तु नियमः, होमद्रव्यं हि यवागूस्तदुत्पत्त्यर्थं श्रुत्या लिङ्गेन च पाकः स पश्चात् क्रियमाणोऽनर्थकः स्यात्, होमोऽप्यसति द्रव्ये न निवर्त्तेत अतः पक्त्वा होमः ॥

क्रमस्य क्वचिदनियमाधिकरणम् । सू० अनियमो ऽन्यत्र ॥ ३ ॥

अनियमोऽन्यत्र—यत्रोक्तवक्ष्यमाणनियमकारणाभावस्तत्रानियम एव क्रमस्य, यथा वसन्तमृतूनामित्यादीनामेकोममेका तस्येत्येवमादीनां च

१ अर्द्धादिषु इति पा० ।

२ प्रयोगविधिसंग्रहणमात्रमिति पा० ।

शाखाभेदेनाम्नातानां प्रयाजानुमन्त्रणानां यच्छाखागतेनानुमन्त्रणेन समित्प्रथममनुमन्त्रितस्तच्छाखागतेनैव तनूनपादपि प्रवृत्तिक्रमादिति चेन्न प्रत्यासत्त्यनुग्रहाय हि प्रवृत्तिक्रमो वक्ष्यते, न चेहानेकशाखागतानामनुमन्त्रणानां मिथः प्रत्यासत्तिर्विहिता यद्वशात्प्रवृत्तिराश्रीयेत अतोऽत्रानियमः ॥

क्रमस्य क्वचित्पाठानुसारिताऽधिकरणम् । अयमेव च पाठक्रमः ।

सू० क्रमेण वा नियम्येत क्रत्वेकत्वे तद्गुणत्वात् ॥ ४ ॥

"समिधो यजति तनूनपातं यजती" 'ति क्रमेण पठितानां यागानामनियमेनानुष्ठानमु? त पाठक्रमेणे? ति श्रुत्यर्थयोरभावात्पाठस्याविधायकत्वात् विधीनां च पदार्थमात्रपर्यवसानादनियम इति प्राप्ते ब्रूमः "यथापाठमनुष्ठानं तथैव प्रतिपत्तितः । स्मृतिः प्रयोगवेलायां वाक्यैरेव च कर्मणां क्रमपठितेषु हि पदार्थेषु गन्धपुष्पादिषु तथैवानुष्ठानं लौकिकाः प्रतिपद्यन्ते, वेदाच्चाध्ययनोपात्ताद्यत्प्रयोजनं शक्यते कर्त्तुं तस्य सर्वस्यार्थेन वेदोपादानं, शक्यते च विधिवाक्येभ्योऽपि सम्बन्धनिमित्तं स्मरणं प्रयोगकाले पदार्थानां कर्त्तुमिति तदपि प्रयोजनं स्वाध्यायविधिविहितश्च पाठक्रमो विध्यवस्थायामुपयुक्तः स्मृत्यवस्थायामुपयुज्यते, यथापाठं च क्रियमाणं स्मरणं तत्क्रममेव भवति, स्मृतिकार्यं चानुष्ठानमिति तस्यापि स एव क्रमः, तस्मात्पाठक्रमेणात्र क्रमनियमः ॥

क्रमस्य क्वचित्प्रथमप्रवृत्त्यनुसारिताऽधिकरणम् । अयमेव च प्रावर्त्तिकक्रमन्यायः ।

सू० प्रवृत्त्या तुल्यकालानां गुणानां तदुपक्रमात् ॥ ५ ॥

वाजपेये प्राजापत्याः पशवः सह क्रियन्ते तत्रोपाकरणनियोजनादयः संनिपातिनः प्रतिपश्वावर्त्तनीयास्तेषां चावृत्तिर्नैकस्य पशोः कार्त्स्न्येन कृत्वाऽपरस्यापि तथैव क्रियत इत्येवं, किं तर्हि सर्वेषामुपाकरणं यतः कुतश्चित्पशोरारभ्य कृत्वा ततोनियोजनमिति वक्ष्यामः, तत्रोपाकरणं यतः कुतश्चित्पशोरारभ्य क्वचित्समाप्यते, नियोजनादौ तु सन्देहः किं तत्राप्यनियमः? उत येन क्रमेणोपाकरणं प्रवृत्तं स एवोत्तरत्रापि, नियामकाभावा-

त्प्रथमद्वितीयादावप्यनियमः "प्रवृत्त्या वा नियम्येत प्रत्यासत्तेरनुग्रहात् । अन्यथा व्यवधानं स्यादनुज्ञाताधिकैरपि"। एकैकस्य हि पशोः पदार्था मिथः प्रत्यासन्नाः कर्त्तव्याः वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्तीति वचनावगतपशवन्तरसाहित्यबलादन्यदीयैः षोडशभिः पदार्थैर्व्यवधिमनुजानाति नाधिकैः प्रवृत्त्या च क्रमनियमे तावद्भिरेव व्यवधानं भवति, अन्यथाऽधिकैरपि स्यात्तस्मात्प्रवृत्त्या नियमः ॥

क्रमस्य क्वचित्स्थानानुसारिताऽधिकरणम् ।

सू० स्थानाच्चोत्पत्तिसंयोगात् ॥ ६ ॥

साद्यस्क्रे "सह पशून् आलभत" इति श्रुतं साहित्यं च सवनीयस्थाने इति स्थितं, तत्रोपाकरणादीनां प्रतिपशु भेदे किं नियमः क्रमस्य, उताग्नीषोमीयस्य ? प्रथममुपाकरण ? मथवा सवनीयस्ये ? ति नियामकाभावादनियमः प्रकृतिदर्शनाद्वा अग्निषोमीयस्य प्राथम्ये प्राप्ते सवनीयस्येत्याह "आश्विनग्रहणेनासौ पर्युपस्थाप्यते यतः। इतरश्चलितः स्थानान्नोपस्थाप्येत केनचित्" । अग्नीषोमीयप्रणयनानन्तरं ह्यग्नीषोमीयस्य स्थानं स तेनोपस्थितोऽपि सहालम्भवचनेन तस्मात्स्थानाच्चलितत्वादननुष्ठितोऽत्र तु न किञ्चित्तस्योपस्थापकमस्ति, सवनीयः स्वस्थानादस्खलितः सन् आश्विनग्रहणादुपस्थितत्वात्तदनन्तरमुपाक्रियते, ततः साहित्यवचनादितरोपाकरणम् अतः सवनीयस्यैव प्राथम्यम्, इतरयोस्तु मिथः क्रमे ऽनियम एव तयोरुप[1]स्थापने विशेषाभावात् । अथवा प्रकृतिदृष्टपौर्वापर्यमात्रमसति बाधके ऽनुग्रहीतव्यमित्यग्नीषोमीयमुपाकृत्यानुबन्ध्योपाकरणम् ॥

अङ्गक्रमस्य मुख्यक्रमानुसारिताऽधिकरणम् ।

सू० मुख्यक्रमेण चाङ्गा[2]नां तदर्थत्वात् ॥७॥

"सारस्वतौ भवतः" इति यागद्वयं विहितं स्त्रीपुंसदेवत्यम् "एतद्वै दैव्यं मिथुनमि"ति वाक्यशेषात् तत्र स्त्रीदेवत्यस्य प्रथममनुष्ठानं ततः पुन्देवत्यस्य याज्यानुवाक्यापाठक्रमात्, तत्र चोदकप्राप्तो निर्वापः किमनियमेन कर्त्तव्यः ? उत स्त्रीदेवत्यं निरूप्य ततः पुन्देवत्य ? मिति नियमकार-

१ उपस्थाने इति पाठान्तरम् ।
२ वाङ्गानामिति पा० ।

णाभावादनियमः, मुख्यक्रमात्तु स्त्रीदेवत्यं प्रथममिति स्थितम्। ननु च प्रवृत्त्या नियमः सिद्ध्यति येन क्रमेण याज्यानुवाक्ययोः प्रवृत्तिः स एव निर्वापादीनामुपाकरणक्रम इव नियोजनादीनां पूर्वपदार्थप्रवृत्त्या उत्तरेषां नियमः नोत्तरप्रवृत्त्या पूर्वेषामिति चेच्च प्रत्यासत्त्यनुग्रहाविशेषात्तन्निबन्धनत्वाच्च क्रमनियमस्य, सत्यं, मुख्यक्रमादपि क्रमनियमः सिद्ध्यतीत्युदाहृतम्, अन्यतोऽपि सिद्ध्यत्यर्थे किमर्थं कारणान्तरमुपन्यस्तं, यद्यपीह प्रमाणयोः सङ्करः न तु सर्वत्रैव प्रमाणे सङ्कीर्णे, अस्ति हि तदुदाहरणं यत्रासिद्ध्यन् प्रवृत्त्या नियमो मुख्यक्रमादेव सिद्ध्यति दर्शपूर्णमासयोर्दध्नः पूर्वं धर्माः प्रवर्त्तन्ते शाखाहरणादयः, तत आग्नेयस्य निर्वापादयः, याज्यानुवाक्ययोस्तु विपरीता प्रवृत्तिः पाठवशात्तत्र भूतभाविप्रवृत्तिद्वयवशात्प्रयाजशेषाभिघारणे ऽनियमः प्राप्नोति मुख्यक्रमात्त्वाग्नेयस्य प्रथममभिघारणं तदेतच्चतुर्थे पादे वक्ष्यामः, तस्मादनवद्यम्। किं पुनः कारणं मुख्यक्रमेणाङ्गानां नियमे प्रत्यासत्त्यनुग्रहः? एवं सत्यङ्गप्रधानयोर्यावदनुज्ञातमव्यवधानं भवति, इतरथा तु पश्चाद्भाविनः प्रधानस्य प्रथममङ्गं क्रियमाणं प्रधानेनात्यन्तव्यवहितं स्यात्, तस्मान्मुख्यक्रमेण नियमः, अत्र प्रधानप्रत्यासत्तिरङ्गानां नियमकारणं प्रवृत्तिक्रमे तु अङ्गानां मिथः प्रत्यासत्तिरित्येतावान्विशेषः॥

अङ्गेषु मुख्यक्रमापेक्षया पाठस्य बलवत्त्वाधिकरणम्।

सू॰ प्रकृतौ तु स्वशब्दत्वाद्यथाक्रमं प्रतीयेत॥ ८॥

दर्शपूर्णमासयोराग्नेयानन्तरमाज्यहविरुपांशुयाजः, ततोऽग्नीषोमीयः पुरोडाशहविः, तत्र किं मुख्यक्रमादाज्यनिर्वापः पूर्वं? उत पाठक्रमादाग्नीषोमीयनिर्वाप इति, "तत्र मुख्यक्रमादाज्यनिर्वापस्य पुरस्क्रिया पाठतस्त्वोषधस्यैव प्राथम्यमनपेक्षतः" मुख्यक्रमो हि मुख्ययोः क्रमं प्रथमं केनापि प्रमाणेनावगम्य तदपेक्षया तत्साहित्यसंपत्तयेऽङ्गेषु कल्प्यमानो

१ सर्वत्रैते इति पा॰।

२ प्रवृत्तिरूपवशादिति तु पा॰।

विलम्बते पाठतस्त्वन्यानपेक्षादङ्गानामेव क्रमावधारणात् बलीयस्त्वम्, अतः प्रथममौषधधर्मास्तत आज्यधर्माः ॥

ब्राह्मणपाठान्मन्त्रपाठस्य बलीयस्त्वाधिकरणम् ।

**सू॰ मन्त्रतस्तु विरोधे स्यात्प्रयोगरूपसामर्थ्यात्तस्मादुत्पत्तिदेशः सः ॥ ९ ॥**

इदानीं पाठयोरेव मन्त्रब्राह्मणगतयोर्बलाबलचिन्ता दर्शपूर्णमासयोरग्नीषोमीयस्य प्रथमं ब्राह्मणं तत आग्नेयस्य विपरीतं मन्त्राम्नातं तत्र "विधिक्रमबलीयस्त्वमुत्पत्तावचधारणात् । उत्पन्नेषु नियुक्तेषु मन्त्रे मन्त्रक्रमो भवेत् । विधिक्रमो[1]त्पत्तिदशायामेव पदार्थानां गम्यते मन्त्रक्रमस्तूत्पन्नेषु पदार्थेषु मन्त्रेषु च विनियुक्तेषु पश्चादिति दुर्बलः "नैवं स्मृतिक्रमेणैव ह्यनुष्ठानक्रमो भवेत् । स्मारकक्रमतश्चापि स्मृतीनां क्रम इष्यते मन्त्राश्चानन्यकार्यत्वात्स्मृत्यर्था विधयः पुनः । विधिनैव कृतार्थत्वाच्चावश्यं स्मारका मताः" । तस्मान्मन्त्रक्रमेणैवानुष्ठानं, तदभावे तु विधिरपि स्मारक इति, तत्रैव क्र[2]मस्य प्रामाण्यम् ॥

प्रयोगवचनात् चोदकस्य बलवत्त्वाधिकरणम् ।

**सू॰ तद्वचनात्तु विकृतौ यथाप्रधानं स्यात् ॥ १० ॥**

"आग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन्सरस्वत्याऽऽज्यभागा स्यात् बार्हस्पत्यश्चरु"रिति तत्रोपांशुयाजाग्नेयविकृत्योराज्यबार्हस्पत्योः कस्य धर्माः प्रथममनुष्ठेयाः? किं प्रयोजकविधिचोदिताङ्गप्रधानप्रत्यासत्त्यनुग्रहान्मुख्यक्रमेणाज्यधर्माणां प्रथममनुष्ठान?मुत चोदकवशादाज्यधर्मेभ्यः पूर्वं बार्हस्पत्यौषधधर्माः कर्त्तव्या? इति "तत्रोपदेशिकत्वेन प्रयोगवचनाश्रयः । मुख्यक्रमोऽतिदेशेन प्रापितं बाधते क्रमम् । नैवं "प्राप्तानां हि पदार्थानां विकृतौ क्रमचिन्तनम् । ते च सक्रमका एव प्राप्यन्ते चोदकादिह । नैराकाङ्क्ष्यात् क्रमस्तेषां न भूयोऽन्यः प्रकल्प्यते । शरवत्प्राप्तबाधोऽत्र कल्प्यत्वाच्चोपपद्यते । "शरमयं बर्हि"रिति क्लृप्तं शास्त्रं पूर्वप्राप्तकुशबाधेन प्रवर्त्तते ।

१ विधिक्रमो ह्युत्पत्तिदशायामेवेति पा॰ ।
२ तत्क्रमस्येति पा॰ ।

कल्प्यस्तु प्रयोगवचनाश्रयः क्रमः, कल्पना चाकाङ्क्षाधीना, निराकाङ्क्षाश्चेह पदार्था इति न कल्पनं सम्भवति ॥

विकृतौ क्वचित् प्रकृतिधर्मानतिदेशाधिकरणम् ।

सू० विकृतिःप्रकृतिधर्मत्वात्तत्कालः स्याद्यथाशिष्टम् ॥ ११ ॥

चातुर्मास्येषु साकमेधस्तृतीयं पर्व तत्र श्रूयते "अग्नये ऽनीकवते प्रातरष्टाकपालं निर्वपेन्मरुद्भ्यः सान्तपनेभ्यो मध्यन्दिने चरुं मरुद्भ्यो गृहमेधिभ्यः सायमो[1]दनमिति, किमेता द्व्यहकाला इष्टयः? उत सद्यस्काला? इति, "तत्रातिदेशतस्तासां प्राप्नोति द्व्यहकालता । प्रातःश्रुतेर्विरोधश्च नामावास्याश्रुतेरिव । "य इष्ट्वा पशुना सोमेन यजेत सोऽमावास्यायां पौर्णमास्यां वा" इति वचनं सामगा[2]नि कर्माणि अमावास्याकालं प्रत्युपाददानं द्वयोरह्नोस्तत्कालासम्भवाद्युक्तं यदाऽतिदेशिकं द्व्यहकालत्वं बाधते प्रातरादिश्रुतिस्तु अहर्द्वयेऽपि प्रातःकालसम्भवादतिदेशाविरोधिनी, न तद्बाधं कर्तुमुत्सहते । तस्मादद्यतनेषु प्रातरादिषु प्रक्रम्य श्वस्तनेषु प्रातरादिषु समापनीया इति प्राप्ते ब्रूमः, "साङ्गं प्रारिप्सितं कर्म प्रातः काले विधीयते । स चाविशेषात्तन्त्रेण सर्वस्यैको भविष्यति । चिकीर्षितार्थेन हि कालो विधीयते सर्वाङ्गप्रधानयुक्ता च भावना चिकीर्षिता नैकदेशमात्रम्, अतो य एवैकः प्रातरादिकालः प्रयोगाय संगृह्यते, स एव सर्वप्रारिप्सायां संगृह्यमाणः प्रारम्भापरनाम्नः प्रक्रमस्याविशेषात्तन्त्रेणैक एव सर्वाङ्गयुक्तप्रधानार्थेनोपात्तो भवति, न प्रातर्द्वयस्यावकाशः, तस्मादुपदेशात्सद्यस्कालाः ॥

अनुयाजाद्युत्कर्षप्रयाजाद्यपकर्षाधिकरणम् ।

सू० अङ्गानां मुख्यकालत्वाद्यथोक्तमुत्कर्षे स्यात् ॥ १२ ॥

अग्निषोमीये पशौ प्रकृतितो हविरासादनोत्तरकाले प्राप्तानां प्रयाजानामपकर्षः श्रुतः "तिष्ठन्तं पशुं प्रयजन्ती"ति तथोत्कर्षः "सवनीयेऽनूयाजानाम् आग्निमारुतादूर्द्ध्वमनुयाजैश्चरन्ती"ति तत्र किं श्रुतमात्रनिष्ठा-

१ "सायमिति" इति पा० ।

२ साङ्गानि इति पा० ।

वुत्कर्षापकर्षा? उत तदाद्युत्कर्षः तदन्तापकर्ष इति संशये "अतोत्कर्षापकर्षाभ्यां वचनस्योपपत्तितः । न तदन्ततदादीनां भवेतामप्रमाणके । प्रधानसंनिधिश्चैवं बाधितो न भविष्यति । ऊर्द्धपूर्वपदार्थानामेवं प्राप्तेऽभिधीयते । पूर्वेणोपस्थितं कार्यमुत्तरं कर्मचोदकात् । प्राप्तं तदन्यथाभावे क्रमलोपाद्विलुप्यते ॥ अनूयाजोपस्थितास्तदुत्तरकालं सूक्तवाकादयः कर्तव्याः अनुयाजेषूत्कृष्टेष्वनुत्कृष्टाः पूर्वे क्रियमाणा विगुणाः एवमाघारोत्तरकाले कर्त्तव्याः प्रयाजाः केवला अपकृष्यमाणाः क्रमलोपाद्दुष्येयुः तस्मात्तदादीनामुत्कर्षस्तदन्तानां चापकर्षः ॥

प्रवृत्त्या प्रोक्षणादीनां सोमिकपूर्वभावितोऽधिकरणम् ।

## सू० प्रवृत्त्या कृतकालानाम् ॥ १३ ॥

प्रातरनुवाकप्रैषं होत्रे दत्त्वा ऽनन्तरं प्रतिप्रस्थातः सवनीयान्निर्वपस्वेति प्रेष्यतीति विधायाऽनन्तरं प्रचरणीहोमादयः सोमिकाः पदार्थाः पठितास्तत्र प्रैषवशान्निर्वापस्तावत्तदैव कर्तव्यः तदनन्तरं सोमिकाः पदार्थाः कर्त्तव्याः अग्नीदग्नीन्विहरबर्हिस्तृणीहि पुरोडाशानलङ्कुर्वित्येतत्प्रैषपर्यन्तास्तत ऐष्टिकाः प्रोक्षणादयः? उत प्रोक्षणादीन् प्रागलङ्करणात्कृत्वा ततः सोमिका इति निर्वापः प्रतिप्रस्थातृकर्तृत्वाच्चाध्वर्योः प्रोक्षणमुपस्थापयति सोमिकानामपि निर्वापव्यवहितानां नास्त्युपस्थापकं, तस्मादनियमः, उच्यते "निर्वापेऽध्वर्योरपि कर्त्तृत्वमस्ति प्रयोजकत्वात्, अतोऽसौ प्रोक्षणादीन् उपस्थापयति, अतस्ते तावत्कर्त्तव्याः ततः सोमिकाः ॥

वैकृतयूपकर्ममात्रापकर्षाधिकरणम् ।

## सू० असंयोगात्तु वैकृतं तदेव प्रतिकृष्येत ॥ १४ ॥

ज्योतिष्टोमे अग्नीषोमीयप्रणयनात्परतो यूपच्छेदनं पश्वङ्गमाम्नातं तद्दीक्षासु यूपं छिनत्तीत्यपकृष्यमाणमग्नीषोमीयप्रणयनादीन् अपकर्षति? उत ने? ति संशये प्रयाजवदाघारादीनपकर्षतीति प्राप्ते उच्यते "सोमिकेन पदार्थेन पाशुकस्य न हि क्रमः । अङ्गं तदपकर्षेण सोमिकोनापकृष्यते" । आघारोत्तरकालत्वं प्रयाजादीनामङ्गं तन्मा बाधीति युक्तं यत्तदपकर्षे आघारोऽपकृष्यते पाशुकस्य तु यूपच्छेदनस्य न सोमि कान्नीषोमी प्रण

यत्रानानन्तर्यमङ्गं यत्सिद्ध्यर्थं प्रणयनमपकृष्येत भिन्नप्रयोगवचनपरिगृहीतत्वा-त्तयोः, एकप्रयोगान्तर्गतानां मिथः क्रमोऽङ्गं भवति तस्माच्छ्रुतमात्रापकर्षः

दाक्षिणाग्निकहोमा-नपकर्षाधिकरणम् ।

सू॰ प्रासङ्गिकं च नोत्कर्षेदसंयोगात् ॥ १५ ॥

सवनीयपशुतन्त्रं सवनीयपशुपुरोडाशेषु प्रसज्यते दाक्षिणाग्निकौ-तुयिष्टलेयफलीकरणहोमौ पशाववियमानौ पशुपुरोडाशार्थं कर्तव्यौ तौ पाशुकैरनुयाजैराग्निमारुतादूर्ध्वमुत्कृष्यमाणैरुत्कृष्येते न वेति संशये प्रकृतौ तत्परत्वेन दाक्षिणाग्निकयोः क्लृप्तक्रमत्वादुत्कर्षे प्राप्ते तत्रापि प्रयोगभे-दादनुत्कर्षः पाशुकैरनुयाजैर्न पौरोडाशिकयोर्होमयोः क्रमोऽङ्गं यत उत्कृष्येयातां पौरोडाशिकास्त्वनुयाजा नैव क्रियन्ते नोत्कृष्यन्ते यैर्दाक्षि-णाग्निकयोर्होमयोरुत्कर्षः तस्मात्तयोः स्वस्थानमेवानुष्ठानम् ।

पुरोडाशाभिवासनान्तस्य दर्शेऽनपकर्षाधिकरणम् ।

सू॰ तथाऽपूर्वम् ॥ १६ ॥

दर्शपूर्णमासयोर्हविरभिवासनोत्तरकाला वेदिराम्नाता पूर्वेद्युरमा-वास्यायामपकृष्यमाणा हविरभिवासनान्तान् पदार्थानपकर्षति नेति संशये एकप्रयोजनसम्बन्धित्वात्पाठतश्च क्रमक्लृप्तेरनपकर्षे क्रमलोपेन विगुणा-वेदिः स्यादिति प्राप्ते ब्रूमः "सामान्येन क्रमोऽङ्गं स्यात्पाठतः प्रक्रियाव-शात् । विशेषतः श्रुतं वाक्यादामावास्ये क्रमान्तरम् । हविरभिवासनो-त्तरकालता हि दर्शपूर्णमासयोः सामान्यप्राप्त्याऽमावास्यायां स्यात्, पाठश्च तस्य प्रमाणं प्रकरणाच्च विनियोगः पूर्वेद्युरनुष्ठानं त्वमावास्यायामेव विशेषतो विहितं, श्रौतश्चायं क्रमः वाक्येन चामावास्यायां विनियोगः तत्र यावदेव हविरभिवासनोत्तरकालतारूपः क्रमो दुर्बलप्रमाणको नैव कल्प्यते तावत्पूर्वेद्युरनुष्ठानं चोद्यमानमक्लृप्तक्रमस्य वेदिमात्रस्य चोद्यते न ततः प्राचां, तस्मादत्रापि श्रुतमात्रापकर्षः ।

सान्तपनीयाया अग्निहो-त्रानुत्कर्षकताऽधिकरणम् ।

सू॰ सान्तपनीया तूत्कर्षेदग्निहोत्रं सवनवद्वैगुण्यात् ॥ १७ ॥

"मरुद्भ्यः सान्तपनेभ्यो मध्यन्दिने चरु"मिति श्रुता सान्तपनीया मध्यन्दिने उपक्रान्ता दैवान्मानुषाद्वा प्रतिबलात्सायङ्कालं यावदुत्कृष्टा-

ऽग्निहोत्रमुत्कर्षति ने?ति संशयः, यद्यपि चात्र भिन्नप्रयोगयोः सान्तपनीयाग्निहोत्रयोर्न मिथः क्रमोऽङ्गं तथापि सायङ्काले द्वयोः सन्निपतितयोरवश्यं भाविनि पौर्वापर्ये सान्तपनीयां कृत्वा क्रियमाणस्य चाग्निहोत्रस्य कालातिपत्तिप्रसङ्गे सति किं न्याय्यमिति युक्ता चिन्ता, तत्र सान्तपनीया तावत्स्वकालं मध्यन्दिनमतिपन्नैव तस्याः कश्चिदुभयथाऽपि न विशेषः, अग्निहोत्रस्य तस्मिन्काले क्रियमाणस्य प्रणयनलोपः स्यात् उत्कर्षे तु काललोपः; तत्र कस्यानुग्रहः? कस्य लोप इति चिन्त्यते तत्र मुख्यत्वात्प्रणयनानुग्रहे साङ्गप्रयोगावधारणोत्तरकालप्राप्तेः कालस्य जघन्यत्वेन बाध इति प्राप्ते उच्यते कालस्यानुपादेयत्वेन निमित्तविशेषणत्वात्तस्मिन्प्राप्तमग्निहोत्रं किञ्चिदङ्गमपहायापि कर्तव्यं तस्मादग्निहोत्रं हुत्वा सान्तपनीया समापनीया॥

उक्थ्यानुरोधेन षोडश्युत्कर्षाधिकरणम्।

सू० षोडशी चोक्थसंयोगात्॥ १८॥

ज्योतिष्टोमे षोडशिनं प्रकृत्याऽऽमनन्ति तं पराञ्चमुक्थेभ्यो निर्गृह्णाति षोडशिनमिति तद्यदा दैवादुक्थ्यानामुत्कर्षो भवति किं तदा षोडश्युत्कृष्यते नेति संशयः, "तच्च नोत्कर्षणं युक्तं स्तोत्रकालोपसङ्ग्रहात्। उत्कर्षपक्षे हीयेत स्वकालात्स्तोत्रमस्य हि। यदि हि षोडशिग्रहयागाभ्यास उत्कृष्येत ततः प्रधानकालत्वादङ्गानां ग्रहं वा गृहीत्वा चमसं वा उन्नीय स्तोत्रमुपाकुर्यादिति वचनात् तदङ्गभूतं स्तोत्रमप्युत्कृष्येत तत्र "समयाध्युषिते सूर्ये षोडशिनस्तोत्रमुपाकरोतीति विहितः कालोबाध्येत। नन्वनुत्कर्षपक्षे ऽप्युक्थ्यपरभावोबाध्येत, बाध्यतां क्रममात्रं हि तत्कालस्तु बलीयानित्युक्तं तस्मादनुत्कर्षः उच्यते—"क्रमो ऽपि तु प्रधानाङ्गभूत * त्वाद्बलवानसौ। कालस्तोत्राङ्गभूतत्वाद्दुर्बलो बाधमर्हति"ति। तं पराञ्चमुक्थेभ्य इति वचनात् षोडशियागाभ्यासस्योक्थ्यपरभावोऽङ्गं सोऽनुत्कृष्यमाणे प्रधानाङ्गसद् बाध्येत, न चैतद्युक्तमतोवरमङ्गभूतस्तोत्राङ्गस्यैव कालस्य बाध इत्युत्कर्षः॥

इति शास्त्रदीपिकायां पञ्चमाध्यायस्य प्रथमः पादः॥ १॥

* विहितकालस्तु बलीयानिति पाठान्तरम्।

## अथ पञ्चमाऽध्याये द्वितीयः पाद आरभ्यते ।

---

पदार्थानुसमयन्यायः । वाजपेयपशूनां सर्वेषामेकैकोपाकरणादिधर्मानुष्ठानाधिकरणम् ।

**सू० संनिपाते प्रधानानामेकैकस्य गुणानां सर्वकर्म स्यात् ॥ १ ॥**

वाजपेये प्राजापत्याः पशवो वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्तीत्येतस्मिन्काले विहिताः सह प्रयोक्तव्याः तेषामाराद्धुपकारकाणां तन्त्रं द्रव्यसंस्कारास्तूपाकरणनियोजनादयः प्रति पशुभेदेन कर्त्तव्याः ते किमेकैकस्य कार्त्स्न्येन कृत्वा ततोऽपरस्य कर्त्तव्याः ? किं वोपाकरणं सर्वेषां कृत्वा ततो नियोजनमिति तत्र एकैको हि पशुः स्वाङ्गान्यव्यवेतान्यपेक्षते । "चोदकोऽप्येवमेवातः काण्डानुसमयो भवेत् । प्रयोगवचनावगतसाहित्यबलेन ह्येकैकस्य पशोर्धर्माः संश्लिष्टाः कर्त्तव्याः प्रकृतौ चोपाकरणादीनामानन्तर्यं कृतम् इहापि प्रतिकर्मावसायिना चोदकेन प्रतिपशु प्राप्यते अत एकस्योपाकरणादिकं सर्वं गुणकाण्डं कृत्वा ततोऽपरस्य कर्त्तव्यं, वाचनिकं तु साहित्यमाराद्धुपकारकतन्त्रत्वादप्युपपन्नम् उच्यते–"वचनेनैककालत्वं पशूनामिह चोदितम् । न तत्प्रयोगवचनात् चोदकाद्वापि बाध्यते । काल्पनिकं प्रयोगवचननिबन्धनं साहित्यं चोदकं चानुमानतः प्रत्यक्षवचनेन तु वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्तीत्येककालप्रयोगः पशूनामवगम्यते अतो यस्मिन्नेव क्षणे एकस्योपाकरणं कर्त्तव्यमापतति तस्मिन्नेवापरस्योपाकरणं कर्तव्यं तदशक्यतया केवलं न क्रियते द्वितीयक्षणे न कश्चद्धेतुर्येन पश्वन्तरं नोपाक्रियेत,अतः प्रथमं पदार्थं सर्वेषां कृत्वा ततो द्वितीयादिः कर्त्तव्यः एवं दर्शपूर्णमासादिषु अनेकप्रधानसमवाये पदार्थानुसमय एव न्याय्यो न काण्डानुसमय इति स्थितं, यत्र प्रधानविरोधो भवति पदार्थानुसमये तत्र काण्डानुसमय एवेति यथाऽश्वप्रतिग्रहेष्ट्यां शते सहस्रे वा पुरोडाशेषु श्रप्यमाणेषु यदि सर्वेषामधिश्रयणं कृत्वा ऽऽद्यस्योद्वासनं क्रियेत ततः स दह्येत तस्मात्तत्र प्रधानविरोधे पदार्थानुसमयः ।

मुष्टिकपालादीनां समुदायानुसमयाधिकरणम् ।

**सू० मुष्टिकपालावदानाञ्जनाभ्यञ्जनवपनपावनेषु चैकेन ॥ २ ॥**

दर्शपूर्णमासयोराग्नेयाऽग्नीषोमीयनिर्वापयोः पदार्थानुसमये स्थिते संशयः किमेकैकेन मुष्टिनाऽनुसमयः? उत चतुर्भिर्मुष्टिभिरिति, यद्येकैको मुष्टिः पृथक् पदार्थस्तत एकैकेनाऽनुसमयः । अथ चतुर्मुष्टिनिर्वाप एकः पदार्थस्तश्चतुर्मुष्टिभिरिति, "प्रतिमुष्टि यतीभावः पर्यवस्यन् हि दृश्यते । मुष्टिना मुष्टिरेवातोऽनुसमयो न संघशः उच्यते—"अङ्गत्वं चोदनागम्यं पदार्थश्चाङ्गमेव नः । चतुर्णां चेह मुष्टीनां निर्वापः शास्त्रचोदितः अङ्गपर्यायो हि पदार्थशब्दस्तेन ययोः प्रधानयोः सहानुष्ठानं तयोर्यदङ्गं तदेकस्य कृत्वाऽपरस्य कर्त्तव्यं चतुरो मुष्टीन्निर्वपतीति शास्त्राच्चतुर्मुष्टिनिवापोऽङ्गम् एकैकस्तु मुष्टिस्तदवयवो न पदार्थस्तस्या विधानात् पदार्थेन चानुसमयो न तदवयवैरतश्चतुर्भिरनुसमयः,एवं कपालोपधानेऽपि नैकैकेनानुसमयः किन्तु आग्नेयस्य कपालानि सर्वाण्युपधायाग्नीषोमीयस्योपधानम्, एवं द्विर्हविषोऽवद्यतीत्यत्रापि नैकावधानेनानुसमयः एवमाञ्जनादिष्वपि योज्यम् ॥

अवदानस्य प्रदानान्तानुसमयाधिकरणम् ।

**सू० संयुक्ते तु प्रक्रमात्तदन्तः स्यादितरस्य तदर्थत्वात् ॥ ३ ॥**

दर्शपूर्णमासयोर्द्विर्हविषोऽवद्यतीति श्रुतं तत्र नैकेनाऽवदानेनानुसमय इति स्थितमिदानीं तु किं द्वाभ्यामवदानाभ्यामनुसमयो ? ऽथवाऽवदानादि प्रदानान्तेनेति चिन्त्यते तत्र "वचनेन द्विसंख्याकमवदानं विधीयते । तावानेकः पदार्थोऽतस्तावताऽनुसमीयते नैवं होमविधेरर्थात् खण्डने प्रापिते सति विशेषमात्रं हविषो द्विरित्यत्र विधीयते । चतुरवत्तं जुहोतीत्यवत्तस्य होमो विधीयते, न चाकृत्वाऽवदानमवत्तहोमसम्भव इत्यर्थप्राप्तमवदानं न विधातव्यं द्विर्हविषोऽवद्यतीत्यर्थप्राप्तस्यावदानस्य विशेषमात्रस्य विधानं हविषो द्विरिति यद्यपि विधीयते तथाऽपि दृष्टार्थत्वाच्चतुरवत्तं जुहोतीत्यस्यावयवत्वेनैव विधेयं न स्वातन्त्र्येण अतोऽवदानादिप्रदानान्तेनानुसमयः ॥

अञ्जनादेः परिव्याणान्तानुसमयाधिकरणम् ।

सू० वचनात्तु परिव्याणान्तमञ्जनादि स्यात् ॥ ४ ॥

अग्नीषोमीये पशौ यूपधर्माः अञ्जनमुच्छ्रयणं संमानं परिव्याणमिति यूपगणे चोदकप्राप्ताः किमेकैकशोऽनुसमेतव्या? उताञ्जनादिना परिव्याणान्तेनानुसमय इति संशये पूर्वेण न्यायेन पदार्थानुसमयः । नन्वञ्जनादिपरिव्याणान्तं यजमानो यूपं नावसृजेदिति प्रकृतावनवसर्गश्चोदकेनेह प्राप्तः कथमेकैकशो ऽनुसमीयमाने शक्यते कर्त्तुम् एवं मन्यते प्रकृतावार्थिकोऽनवसर्गः यजमानेनाध्वर्योः साहाय्यमाचरताऽनुष्ठितस्तदनुवादमात्रं वचनं, न चार्थिकं चोदकः प्रतिदिशति अतः पदार्थानुसमयः नैवं "नियोगतोऽप्राप्तेरनुत्सर्गो विधीयते वाक्यं चार्थवदेवं स्याद्वादमात्रं त्वनर्थकं गणेऽपि चोदकेनातः प्राप्यते ऽनवसर्जनम् । तेनाञ्जनादिसंघोऽत्र संघेनानुसमीयते ॥

देवताद्यवदानेषु पदार्थानुसमयाधिकरणम् ।

सू० पशुगणे तस्य तस्यापवर्जयेत्पश्वेकत्वात् ॥ ५ ॥

अग्नीषोमीये पशाववदानानन्तरं प्रदाने प्राप्ते वचनमिदमाम्नायते "दैवतान्यवदाय न तावत्येव होतव्यं सौविष्टकृतान्यवद्यति सौविष्टकृतान्यवदाय न तावत्येव होतव्यम् ऐडान्यवद्यतीति तदेकतेषु पशुगणेषु विचार्यते किमेकस्य पशोर्दैवतसौविष्टकृतैडान्यवदायापरस्यापि त्र्यमवदातव्यम्? उत सर्वेषां दैवतानि अवदाय ततः सौविष्टकृतानि तत ऐडानीति, तत्र "प्रकृतौ देवतादीनामानन्तर्यमिहापि तत् । एकैकस्य पशोः कार्यः काण्डानुसमयस्ततः । यद्येकैकस्य पशोर्दैवतान्यवदीयेरन् ततः प्रथमस्य पशोर्यद्दैवतसौविष्टकृतानन्तर्यं चोदकप्राप्तं तद्बाध्येत, तस्मात्काण्डानुसमयः, नैवं पश्वैक्यात्प्रकृतावर्थादानन्तर्यमनुष्ठितम् इह त्वनेकसाहित्यात्स जात्यानुसमीयते यावन्तः पदार्थाः कर्त्तव्यास्ते मिथः संश्लिष्टाः कर्त्तव्याः इत्येतावत्प्रकृतौ विवक्षितं तत्रैकत्वात्पशोर्दैवतसौविष्टकृतानन्तर्यमर्थात्संजातं न तु तदिह प्राप्यते, क्रतुसाहित्यसम्पत्तये समानजातीयैः समानजातीयानामनुसमयो दैवतैर्दैवतानामित्येवं कर्त्तव्यः ॥

नानाबीजेष्टौ उलूखलादीनां तन्त्रताऽधिकरणम् ।

**सू० नानाबीजेष्वेकमुलूखलं विभवात् ॥ ६ ॥**

राजसूये नानाबीजेष्टिः 'अग्नये गृहपतये ऽष्टाकपालं कृष्णानां व्रीहीणां सोमाय वनस्पतये श्यामाकं चरुमित्यादि तत्र प्रकृतितः प्राप्तमुलूखलं किं तन्त्र ? मुत भिन्न ? मिति विचारः, फलविचारश्चायम् अधिकरणशरीरं तु किं कृष्णाजिनास्तरणोलूखलाधिवर्त्तमानबीजावापाऽवघातपरावपनविवेचनफलीकरणानि पृथक् पदार्थत्वादेकैकशोऽनुसमेतव्यानि ? उत कृष्णाजिनास्तरणादिफलीकरणान्त एकः पदार्थस्तावता चानुसमय ? इति "तत्र नानापदार्थत्वं विधिभेदेन मन्यते । तण्डुलीकरणांशत्वादपृथक्त्वं तु गम्यते" यद्यपि कृष्णाजिनमधस्तादवस्तृणाति शूर्पेण विविनक्तीति विधिभेदस्तथाऽपि तण्डुलभावनावयवत्वेन तद्विधानं न स्वातन्त्र्येणादृष्टार्थत्वप्रसङ्गादेका चासौ तण्डुलभावना कृष्णाजिनास्तरणादिफलीकरणपर्यन्तम्पतता इति तावानेकः पदार्थं इति तावताऽनुसमयः, संयुक्ते तु सूत्रप्रक्रमादित्यत्र चतुरवत्तचोदनयाऽर्थप्राप्तावदाने संख्यामात्रं द्विर्हविष इति विधीयते न तु द्वित्वविशिष्टमवदानमित्येवं पदार्थत्वं निराकृतम्, इह तु सत्यपि विधिभेदेऽवयवत्वेन विधानादनन्यत्वमुच्यते । यत्तु यत्र सत्यपि विधिभेदेऽन्यत्वं नास्तीत्युक्तं तदिह सिद्धमेवोक्तमित्यनवद्यम् ॥

अग्नीषोमीयपशौ प्रयाजानुयाजयोः पात्रभेदाधिकरणम् ।

**सू० विकारे त्वनुयाजानां पात्रभेदोऽर्थभेदात्स्यात् ॥ ७ ॥**

दर्शपूर्णमासयोरष्टावुपभृति गृह्णातीति प्रयाजानुयाजार्थं चतुर्गृहीतद्वयमेकस्यामुपभृति युगपद्गृहीतं तथैव पशौ प्राप्तं तत्रानुयाजानां द्रव्यविकारः श्रूयते "पृषदाज्येनानुयाजान् यजतीति प्रयाजाज्यन्त्वविकृतमेव तत्र द्वयोः सङ्करेऽवश्यं भाविनि चिन्त्यते किं कालभेदेन तस्यामेवोपभृति द्वयं ग्रहीतव्यम् ? उत तस्मिन्नेव काले पात्रभेदेनेति तत्र "पदार्थत्वाच्छ्रुतत्वाच्च पात्रैकत्वस्य संग्रहः । गुणत्वात्पाठकल्प्यत्वात् क्रममात्रं तु बाध्यते" अष्टा-

वृपभृति गृह्णातीति श्रुतमेकत्वं पदार्थश्च क्रमश्च पदार्थानाङ्गुणः पाठकल्प्यश्च, तत एकस्मिन्नेव पात्रे प्रयाजाज्यं गृहीत्वा प्रयाजेषु हुतेषु पश्चात्पृषदाज्यं ग्रहीतव्यमित्येवं प्राप्ते उच्यते उभयोर्ग्रहणाङ्गत्वात्पात्रैक्यस्य क्रमस्य च । विकृतौ चानुमानेन प्राप्तेस्तुल्यं बलाबलम् एवं चाविशेषे सति प्रयाजाज्यग्रहणेनोपस्थितस्यानुयाजपृषदाज्यग्रहणस्याकरणे न किञ्चित् कारणमस्तीति तदेव पात्रान्तरमुपादाय ग्रहीतव्यम् ॥

नारिष्टहोमस्योपहोमपूर्वताऽधिकरणम् ।

सू० प्रकृतेः पूर्वोक्तत्वादपूर्वमन्ते स्यान्नत्वचोदितस्य शेषाम्नानम् ॥ ८ ॥

अग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निर्वपेदिति नक्षत्रेष्टिं विधायोपहोमा विहिताः 'सोऽत्र जुहोति अग्नये स्वाहा कृत्तिकाभ्यः स्वाहेति प्रकृतौ च प्रधानानन्तरं नारिष्टहोमास्ते चोदकेनात्र प्राप्तास्तत्र संशयः किमुपहोमान् हुत्वा ततो नारिष्टहोमा विपरीतं वेति "तत्र प्रत्यक्षपाठेन प्रधानानन्तरश्रुतान् । उपहोमाननुष्ठाय नारिष्ठानामनुष्ठितिः" उच्यते क्लृप्तोपकारसाकाङ्क्षा विकृतिः प्राकृतं पुरः । गृह्णाति वैकृतिं पश्चात्तदाकाङ्क्षा वशीकृता । प्रकारापेक्षा हि विकृतिभावना प्रत्यक्षश्रुतमपि संनिहितमक्लृप्तोपकारं परित्यज्य प्राकृतं प्रकारमुत्पादकपदार्थविशिष्टं प्रथमं गृहीत्वा पश्चात्सन्निध्याऽऽम्नाताङ्गप्रयोजनापेक्षावशेन वैकृतं गृह्णाति, तेन यत्र प्राकृतवैकृतयोरेकस्थानपतितयोः क्रमापेक्षा तत्रावगतिक्रमानुसारेण प्राकृतं कृत्वा वैकृतं कर्त्तव्यम् । न च प्रत्यक्षपाठविरोधः प्रधानवाक्यशेषेण प्रकृतिवच्छब्देन प्रापितात् प्राकृतात्पश्चादेव वैकृतं पठितं भवति, तस्मान्नारिष्ठान्कृत्वा पश्चादुपहोमाः कार्याः ॥

विदेवनादीनामभिषेकपूर्वताऽधिकरणम् ।

सू० कृतदेशात्तु पूर्वेषां स देशः स्यात्तेन प्रत्यक्षसंयोगान् न्यायमात्रमितरत् ॥ ९ ॥

राजसूयेऽभिषेचनीयं सोमयागं विधायानन्तरं विदेवनादयोऽभिषेकान्ताः पदार्था विहितास्तत्राऽभिषेकोऽभिषेचनीयप्राकृताङ्गमध्येऽपकृष्टो

माहेन्द्रस्य स्तोत्रं प्रति अभिषिच्यत इति सोऽपकृष्यमाणः प्राचो विदेवनादीनपकर्षेन्न ने? ति संशयः, तत्र अपूर्वोह्यभिषेकोऽतो न तदन्तापकर्षं करोति वेदिवत्तस्मात्तन्मात्रमपकृष्यते तथाऽपूर्वमित्यत्र ह्येतदवस्थितम्, अपूर्वः पदार्थोऽपकृष्यमाणो न प्राचामपकर्षाय कल्पत इति तेन यथा पूर्वेद्युरमावास्यायां वेदिं करोतीति वेदिमात्रापकर्षोऽक्लृप्तक्रमत्वात्र पूर्वेषां तथाऽत्राप्यभिषेकस्यैवापकर्षो;ऽन्ये त्वन्ते तु बादरायण इति न्यायादभिषेचनीयसकलप्राकृताङ्गोत्तरकाले कर्त्तव्या इति प्राप्तेऽभिधीयते "अभिषेकेण पूर्वेषाङ्क्रमः प्रत्यक्षपाठतः । परत्वं प्राकृताङ्गेभ्यस्त्वनुमानेन गम्यते । यद्यप्यत्राप्रकृतिपूर्वत्वेन प्रयाजादिवैलक्षण्यादपकर्षावस्थायां वेदिवत् क्लृप्तः क्रमस्तथाऽप्यत्रैव क्रमकल्पनायामभिषेकपूर्वभावित्वं विदेवनादीनां प्रत्यक्षपाठनिमित्तमभिषेचनीयप्राकृताङ्गोत्तरकालता तु तेषामनुमानात्, तच्च दुर्बलमतः प्रत्यक्षपाठाद्विदेवनादीनामभिषेकात्पूर्वानुष्ठानात्तदन्तापकर्षः ॥

सावित्रहोमादीनां दीक्षणीयपूर्वप्रयोगाधिकरणम् । सू० प्राकृताच्च पुरस्ताद्यत् ॥ १० ॥

अग्नौ सावित्रहोमोखासम्भरणाद्यपूर्वपदार्थान् विधाय पश्चाद्दीक्षणीयादयः प्राकृताः सगुणाः श्रुताः, तत्र दीक्षणीयादीन् कृत्वा सावित्रादयः? उत विपरीतं वे? ति संदेहः तत्र "प्रकृतेः पूर्वविज्ञानात्प्राकृतानां पुरस्क्रिया पश्चात्तु वैकृतानां स्याद्बादरायणदर्शनात् । दीक्षणीयादिपुनःश्रवणात्तु गुणार्थत्वाच्च पश्चादनुष्ठानन्दीक्षणीयादीनाङ्गमयति गुणानां परतन्त्रत्वात् यत्र गुणी तत्र तेषां विधानम् अतः प्रकृताम्पूर्वानुष्ठानम् उच्यते "गुणार्थं श्रूयमाणानामपि प्रत्यक्षपाठतः । पश्चादवगतेस्तेषां युक्ता पश्चादनुष्ठितिः, गुणवाक्येपि कीर्त्यमानानां दीक्षणीयादीनां तत्र तावदवगतिर्जायते, सा च प्रत्यक्षपाठनिमित्ता गुणगुणिनोः समानसंस्थानत्वात्तत्रैव गुणिनामनुष्ठानं गमयतीत्यानुमानिकपाठनिमित्तं पूर्वानुष्ठानमनादरणीयम् ।

याजमानसंस्काराणां कक्रमप्रतिमोकात्पूर्वभाविताऽधिकरणम् । सू० सन्निपातश्चेद्यथोक्तमन्ते स्यात् ॥ ११ ॥

तत्रैव दीक्षणीयाद्यनन्तरं रुक्मप्रतिमोचनाद्याम्नातं, प्रकृतौ च दीक्षणीयानन्तरं दीक्षितसंस्काराः, तदिह रुक्मप्रतिमोचनादिं कृत्वा दीक्षितसंस्काराः कार्याः? विपरीतं वेति तत्र प्रत्यक्षपाठेन दीक्षणीयाद्यनन्तरं रुक्मादिकमनुष्ठेयं पश्चाद्दीक्षितसंस्कृतिः उच्यते दीक्षा दीक्षितसंस्कारानुपस्थापयति क्रमात् । तेषामुपस्थितानां च नाऽक्रियाहेतुरस्ति नः । प्रकृतिक्लृप्तक्रमवशेनानन्तरमुपस्थितान् दीक्षितसंस्कारान् कृत्वा पश्चात्क्रियमाणस्य रुक्मप्रतिमोचनादेः पश्चात्पाठोपपत्तौ नावश्यमनन्तरानुष्ठानमनन्तरपाठो ह्यवश्यं पठितयाऽप्युपपन्नो नानन्तर्यं गमयति सावित्रहोमादेः पश्चादनुष्ठाने पूर्वं न पाठः स्यादिति विशेषः ॥

इति शास्त्रदीपिकायां पञ्चमाध्यायस्य द्वितीयः पादः ॥ २ ॥

---

## ॥ अथ पञ्चमाध्यायस्य तृतीयः पादः आरभ्यते ॥

प्रयाजादीनामेकादशादिसंख्यायाः सर्वसंपाद्यताऽधिकरणम् ।

**सू० विवृद्धिः कर्मभेदात्पृषदाज्यवत्तस्य तस्योपदिश्येत ॥ १ ॥**

"एकादश प्रयाजान् यजन्ति षडुपसद इति प्राकृतानां संख्याविवृद्धिर्विकृतौ श्रूयते, सा किं प्रत्येकं भवति? उत सर्वसम्पादिनी? ति चिन्त्यते तत्रोद्दिश्य प्रयाजादि संख्या तस्योपदिश्यते । उद्दिश्यानां च साहित्यं शक्यते न विवक्षितुं तस्मात्प्रतिप्रयाजं प्रत्युपसदं च संख्या स्यादिति प्राप्ते उच्यते "प्रयाजादिस्वरूपे हि नेयं संख्या विधीयते । अशक्यत्वात्प्रयोगे तु लक्षिते सोपदिश्यते । न ह्येकैकशः समुदितानां वा स्वरूपेण संख्याऽन्वयः सम्भवत्येकस्य पञ्चानां चैकादशत्वासम्भवात्, अतः संख्यान्वयसिद्ध्यै प्रयाजाः स्वप्रयोगं लक्षयन्ति, ते च तं लक्षयन्तस्तत्राभिधानात्सहाग्रगतास्तथैव लक्षयन्ति, संख्या चेयमनेकवृत्तिस्वभावा समस्तलक्षितप्रयोगगतापि शक्नोति सर्वेषां प्रयाजानामुपकर्तुम्, अतः सर्वसम्पादिनी स्यात् ।

प्रथमादीनां तिसृणा मुपसदां स्वस्थानावृत्त्यधिकरणम् ।

सू॰ स्वस्थानात्तु विवृध्येरन्कृतानुपूर्वत्वात् ॥ २ ॥

षडुपसद इत्यत्र सर्वसम्पादनी संख्येत्युक्तम्, अतस्तिसृणामुपसदां द्विरभ्यासः, तत्र किं दण्डकलितवदावृत्ति ? उत स्वस्थानविवृद्धिरिति चिन्तायाम् आवृत्तिन्यायानां लोके त्रिरनुवाकः पठ्यतामित्यादौ दण्डकलितवदावृत्तिदर्शनादिहापि तथा स्यात्, अतः सर्वाः सकृत्कृत्वा पुनः स्यादादितः क्रिया । स्वस्थानात्तु विवृद्धेरन् क्रमबाधोऽन्यथा भवेत् तृतीयां कृत्वा प्रथमां क्रियमाणायां प्राकृतक्रमबाधः स्यात्, अतस्तदबाधाय स्वे स्वे स्थाने द्विर्द्विरभ्यसितव्याः ॥

सामिधेनीषु आगन्तुकानामन्ते निवेशाधिकरणम् ।

सू॰ समिध्यमानवतीं समिद्धवतीं चान्तरेण धाय्याः स्युर्द्यावापृथिव्योरन्तराले समर्हणात् ॥ ३ ॥

एकविंशतिमनुब्रूयादिति सामिधेनीविवृद्धिश्रुतावागमे कर्तव्ये सति आगम्यमानानामृचां देशश्चिन्त्यते, किमन्ते निवेशः ? अथवा समिध्यमानवतीं समिद्धवन्तीं चान्तरा ? उत धाय्याशब्दोक्तास्तास्तयोर्मध्ये अन्यास्तु आगन्तवोऽन्ते इति तत्रान्ते बादरायण इति न्यायात्सर्वाः प्राकृतीनामन्ते स्युरित्युपक्रममात्रेण प्रथमः पक्षः, इयं वै समिध्यमानवती असौ समिद्धवती तदन्तरा तद्धाय्या इति धाय्यानामाकाशत्वेन स्तवनं द्यावापृथिवीसंस्कृतयोः समिध्यमानसमिद्धवत्योर्मध्ये तासां विधानमनुमापयति सर्वाश्चागन्तवोऽधीतमानतया धाय्या इति सर्वासान्तन्मध्ये निवेश इति द्वितीयः पक्षः । सिद्धान्तस्तु न धीयमानमात्रवचनोधाय्या—शब्दः स्तुतशस्त्राद्यर्थतया धीयमानास्वपि तच्छब्दाभावात्, अतो यत्रैव धाय्याशब्दप्रयोगो वेदे दृष्टः पृथुपाजवत्यौ धाय्ये इत्यादिस्ता एव धाय्या न त्वागन्तुकमात्रं, यतस्तासामेव तन्मध्ये अन्यासां त्वागन्तूनामन्त एव निवेशः एवं च त्रैधातव्याया अधाय्याशब्दकायो अग्नेत्रीतिवाजिनेत्येतस्यास्त्रिष्टुभोऽन्ते

निवेशात् त्रिष्टुभा परिदधातीत्यादिदर्शनमुपपन्नं भवति, तस्माद् धाय्या-शब्दिकानामन्त एव निवेशः ।

बहिष्पवमाने आगन्तूनां पर्यासोत्तरकालताऽधिकरणम् ।

सू० स्तोमविवृद्धौ बहिष्पवमाने पुरस्तात्पर्यासादागन्तवः स्युस्तथा हि दृष्टं द्वादशाहे ॥ ४ ॥

ज्योतिष्टोमे बहिष्पवमाने त्रयस्तृचास्तोत्त्रियोनुरूपः पर्यासश्च ते विवृद्धस्तोमकेषु क्रतुषु प्राप्तास्तत्रागमेन सख्यापूरणं वक्ष्यते तत्रागम्य-मानानामृचामन्ते निवेशः प्राग्वा प्राकृतात् पर्यासा ? दिति संशयः तत्र प्रत्य-क्षपाठेन द्वादशाहे वृषण्वतां प्राक्पर्यासान्निविष्टत्वादन्यत्राप्यनुमीयते । द्वादशाहे षाडहिके द्वितीयेऽहनि विवृद्धस्तोमके प्राकृतौ स्तोत्रीयानुरूपौ पठित्वा तत आगन्तयोवृषण्वत्य ऋचः पठिताः ततः पश्चात्प्राकृतः पर्या-सः पठितः, तदनेन पाठेन प्राक्पर्यासादागन्तूनां निवेशदर्शनात् अन्यत्रापि सर्वत्र सर्वेषामागन्तूनां तत्रैव निवेश इति सामान्यतो दृष्टमात्रेण पूर्वप-क्षप्रतिभा पर्यास–शब्दश्चान्तवचनो लोके वेदे च प्रसिद्धः चैत्रपर्यासोनदी-पर्यास इत्येवमादि तद्यद्यागन्तवोऽन्ते स्युः पर्याससमाख्याप्राकृतस्य तृचस्य बाध्येत अतोऽपि प्राक्पर्यासान्निवेशः, उच्यते नेदृशेनानुमानेन शास्त्रार्थो-ऽध्यवसीयते । समाख्या प्रकृतावेव चरितार्थेति साध्यतेः । अन्ते निवेशमा-गन्तोर्न्यायप्राप्तं न बाधते द्वादशाहविकारेऽपि केवलानां वृषण्वतां प्राक्-पर्यासान्निवेशः स्यादतिदेशविधेर्बलात् ॥ अन्ये त्वागन्तवोऽन्ते स्युर्बादरा-यणदर्शनात् ॥

तत्रैवागन्तूनां साम्नामन्ते निवेशाधिकरणम् ।

सू० अन्ते तूत्तरयोर्दध्यात् ॥ ५ ॥

विवृद्धस्तोमकेष्वेव क्रतुषूत्तरयोर्माध्यन्दिनार्भवपवमानयोः समा-गमो वक्ष्यते तत्रागम्यमानानां साम्नां किमन्त्ये तृचे निवेशोऽथवा गायत्री-बृहत्यनुष्टुप्स्विव ? ति तत्रागन्तुत्वादन्त्ये निवेशः । यत्तु "त्रीणि ह वै यज्ञस्यो-दराणि गायत्री बृहत्यनुष्टुप् चात्र ह्येवावपन्ती अत एवोद्वपन्तीति तत्त्ववि-

धिरूपत्वाद्यथाकथंचिन्नेयमिति न अपूर्वत्वात्तु वचनमेवेदमनारभ्याधीतं सर्वयज्ञविषयमतोगायत्र्यादिष्वेव निवेशः । अथवा नैवात्र विचारः पूर्वोक्त-वहिष्पवमानग्रहणप्रत्युदाहरणमात्रमिदं वहिष्पवमान एवान्ते निवेशः उत्तरयोस्तु गायत्र्यादिष्वेव निवेशो वचनादिति ॥

ग्रहेष्टकादीनां क्रत्वङ्गनिरूपणाऽधिकरणम् । सू॰ ग्रहेष्टकमौपानुवाक्यं सवनचितिशेषः स्यात् ॥ ६ ॥

"अंशुं गृह्णाति अदाभ्यं गृह्णाति चित्रिणीरुपदधाति वज्रिणीरुपदधातीत्यनारभ्याधीतं ग्रहेष्टकं किं सवनचितिशेषः, अतश्च प्रतिसवनं प्रतिचिति आवर्त्तनीय ? मुत यागाभ्यङ्गं सकृदेव कर्त्तव्यमिति प्रत्यक्षेण ग्रहेष्टकाभिश्च सवनानां चितीनां चारम्भदर्शनात् ताद्थ्यं मन्यते पूर्वपक्षवादी न निष्फलत्वात्सवनचितीनां फलवज्ज्योतिष्टोमाङ्गत्वं ग्रहाणामिष्टकादीनाञ्च फलवद्गम्यङ्गत्वं युक्तम् । इष्टकाभिरग्निं चिनुत इति वाचनिकमेवाग्न्यङ्गत्वम् ॥

चित्रिण्यादीनां मध्यमचितावुपधानाधिकरणम् । सू॰ अन्ते स्युरव्यवायात् ॥ ७ ॥

स्थिते सकृदनुष्ठाने क्रमश्चिन्त्यते—किञ्चित्रिण्यादीनामुत्तमामायामुपधान ? मुत मध्यमाया ? मिति "क्लृप्तक्रमात्यवायार्थमन्तेऽनारभ्यचोदिताः । यां काञ्चिदिति वाक्यन्तु विधये न भवत्यलं सर्वासामिष्टकानां पठितेन कल्पितेन वा ब्राह्मणेन तद्वत्त्वात्सर्वासां च मध्यमायामुपधानासम्भवात् यासां मध्यमायामुपधानं प्राप्तं तदनुवादमात्रमिदं यां काञ्चिद् ब्राह्मणवतीमिष्टकामभिजानीयात्तां मध्यमायां चिता"विति न तु विधायकम्, अतः क्लृप्तक्रमाणां प्राकरणिकीनामव्यवायार्थमनारभ्याधीतानामुत्तमायां निवेशः—उच्यते "वचनान्मध्यमायां स्युः प्रत्यक्षब्राह्मणोदिताः । जानातिरभिपूर्वोऽयं प्रत्यक्षे वर्त्तते यतः ॥ वाक्यं चार्थवदेवं स्याद्वादमात्रं ह्यनर्थकं चित्रिण्यादेर्निवेशोऽतोमध्यमायां चितौ भवेत् ॥

लोकम्पृणातः पूर्वं चित्रिण्याद्युपधानाधिकरणम् । सू॰ प्राग्लोकम्पृणायास्तस्याः सम्पूर्णार्थत्वात् ॥ ८ ॥

स्थितं मध्यमायां निवेशः इति, तत्रापि किं प्राकरणिकीनामन्ते चित्रिण्यादीनां निवेशः ? । अथ वा लोकम्पृणायाः प्रागि ? ति तत्राम्नायार्थे-मन्ते स्युर्लोकम्पृणायास्तु यद्वेवास्योन' यच्छिद्रं तदेतया पूरयति लोकम्पृणा छिद्रं पृणेति यत्पूरणार्थत्वं तच्चित्यन्तरेऽपि सावकाशं न हि सा मध्यमामात्रविषया मन्त्रमात्रस्य प्रत्यक्षविधानादिष्टकायास्तु कल्प्यं विधानमतश्चित्यन्तरेऽपि सावकाशत्वेन न न्यायप्राप्तः चित्रिण्यादीनामन्ते निवेशः शक्यते बाधितुमित्यन्ते निवेशः, नैवमविशेषश्रुतस्य वचनस्य सावकाशत्वेन न्यायमात्रेण सङ्कोचासम्भवात् मध्यमायामपि चितावन्ते लोकम्पृणा भवेत् पूरणार्थेति तस्याः प्राक् चित्रिण्यादेर्निवेशनम् ॥

इष्टिसंस्कृतागनावग्निहोत्राद्यनुष्ठानाधिकरणम् ।

सू० संस्कृते कर्म संस्काराणां तदर्थत्वात् ॥ ९ ॥

आधानप्रकरणे पवमानहवींषि विहितानि तानि तान्याधानाद्विप्रकृष्यन्ते द्वादशसु रात्रिष्वनुनिर्वपेदित्यादिभिस्तत्राग्निहोत्रादीनि किमाधानानन्तरमेव प्रवर्त्तन्ते? उत तेषु कृतेष्वि ? ति विचारे कर्त्तव्यान्याहवनीयस्य निष्पन्नत्वादाधानमात्रस्य तन्निरपेक्षस्य तदुत्पादकत्वात् पवमानहविर्भिस्तु निष्पन्नस्यैवाहवनीयस्य संस्कारमात्रं क्रियते पूर्वमेव त्वाहवनीयादयो निष्पन्नाः निष्पन्नेषु तेषु भवितव्यं कर्मभिरिति प्राप्ते उच्यते न निरपेक्षमाधानमग्नीनामुत्पादकं पवमानहविषामपि तदुत्पादकत्वात्, न च विकल्पस्तेषामाधानोत्तरकाले विधानात्, अतः समुच्चितानां तदुत्पादकत्वाच्च तेभ्यः प्रागाहवनीयनिर्वृत्तिः, यदाऽप्याधानाङ्गपवमानहवींषि तदाऽप्यनङ्गेन प्रधानेन साध्यानिष्पत्तेस्तदुत्तरकालमेवाग्निनिष्पत्तिः । यत्तूक्तं निष्पन्नस्यैवाग्नेः संस्कारमात्रं हविर्भिरिति तथाऽप्यस्य संस्कारस्याहवनीयकार्योपयोगित्वात्तेन विना निष्पन्नस्याप्यग्नेरग्निहोत्रादिकार्याक्षमत्वाच्च तदुत्तरकाल एव कर्मणां प्रवृत्तिः ॥

अग्निचिद्वर्षणादिव्रतानां क्रत्वन्तेऽनुष्ठानाधिकरणम् ।

सू० सञ्चिते त्वग्निवद्युक्तं प्रापणान्निमित्तस्य ॥ १० ॥

अग्निर्विद्वृतानि "वर्षति न धावे"दित्यादीनि चयनानन्तरमेव भवन्ति ? क्रत्वन्ते वेति संशये "धात्वर्थश्चयनं भूतं निमित्तं तदनन्तरम् । व्रतान्यतः प्रवर्त्तेरन्नाहिताग्निव्रतादिवत् । नैवम्भावनाया निमित्तत्वं धातुस्तदुपसर्ज्जनम् । तस्याश्च फलनिर्वृत्त्या निर्वृत्तिरुपलक्ष्यते । न ह्यत्र चयनस्य स्वरूपनिर्वृत्तिर्निमित्तं तत्कारणिका त्वग्निकर्मिका भावना भूतानिमित्तं तस्याश्चाप्युपकारो भाव्यः, सोऽपि च क्रतुं साधयतोऽग्नेर्धारणं, तच्चा क्रतुसमाप्तेर्वितत्तं न ततः प्राग् निर्वृत्तं भवति तन्निर्वृत्त्या च विना न भावनानिर्वृत्तिः फलापवर्गित्वाद्भावनानामाधानस्य त्वग्निगतमदृष्टं भाव्यं, तच्चानन्तरमेव निर्वृत्तमिति विशेषः ॥

दीक्षाया इष्टिसिद्धताऽधिकरणम् । सू० परेणावेदनाद्दीक्षितः स्यात्सर्वैर्दीक्षाभिसम्बन्धात् ॥ ११ ॥

आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाण इतीष्टिः दण्डेन दीक्षयतीत्यादि च श्रूयते तत्र किं सर्वैर्दीक्षितो भवत्युतेष्ट्यैव ? दण्डादीनि तु तद्व्यञ्जनानीति सर्वेषां तादर्थ्यावगमाददृष्टार्थानां चैकप्रयोगविधिसंग्रहात्समुच्चयसिद्धेः सर्वान्ते दीक्षासंग्रह इति प्राप्तेऽभिधीयते "निरपेक्षेव वाक्येन दीक्षार्थेष्टिर्विधीयते। दण्डादि त्वक्रियारूपं तद्व्यञ्जनतयोच्यते। दीक्षिष्यमाण इति लृट् क्रियार्थायां क्रियामुपपदे विधीयते तेन दीक्षार्थत्वमिष्टेर्दीक्षा च क्रत्वङ्गभूतयमनियमसंग्रहस्तं करिष्यमाणस्य पुरुषस्य दीक्षिष्यमाणशब्दनिर्दिष्टस्य संस्कारार्थेष्टिः, सा च निरपेक्षाऽवगम्यते तद्यदि दण्डादिश्रवणमन्यथा नोपपद्यते ततो नैरपेक्ष्यं बाध्येत तत्तु व्यञ्जनतयाऽप्युपपन्नं न निरपेक्षश्रुतिं बाधितुं क्षमते । किञ्च दण्डादीनि द्रव्यरूपाणि नोदासीनानि संस्कारं जनयन्ति, न चैषामाश्रयभूतेतिकर्तव्यताभूता वा काचित् क्रिया श्रूयतेऽतः कथं दण्डादिभिः संस्कारो जन्यते इति न ज्ञायते, अभिव्यक्तिस्तु दृष्टत्वात्प्रमाणान्तरदृष्टसंयोगादिवशेनैव शक्यते सम्पादयितुं तस्मादिष्ट्यन्त एव दीक्षितस्याभिव्यञ्जनमात्रार्था दण्डादय इतीष्ट्यन्त एव दीक्षितधर्माः प्रवर्त्तेरन् ॥

काम्येष्टीनामनियमेनानुष्ठानाधिकरणम् ।

सू० अङ्गवत्क्रतूनामानुपूर्व्यम् ॥ १२ ॥

क्रत्वन्तराणामैन्द्राग्नादीनां काम्यानां नैमित्तिकानां च क्रमेण पठितानामङ्गानामिव पाठवशात्क्रमनियममाशङ्क्य पाठस्य स्वयमविधायकत्वाद्विधायकस्य चैषामेकस्याभावाच्चानाप्रयोगवचनैरेकैकश्येन विधीयमानानां मिथोऽनपेक्षणादनियमेन कामानां निमित्तानां चोपनिपाताच्चास्ति क्रमनियम इति स्थितम् ॥

यज्ञानामग्निष्टोमपूर्वकत्वाधिकरणम् ।

सू० य एतेनेत्यग्निष्टोमः प्रकरणात् ॥ १३ ॥

क्रत्वन्तराणामनियम इति स्थितं क्वचिद्वचनवशात्पौर्वापर्यं भवति तथा हि श्रूयते "एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः तस्मादेतेनेष्ट्वाऽन्येन यजेते"ति तत्र किमेतच्छब्दः सर्वसंस्थं ज्योतिष्टोमं निर्दिशति? उताग्निष्टोमसंस्थमेवे? ति "तत्राविशेषतः सर्वसंस्थोऽनेनाभिमृश्यते अग्निष्टोमस्तु नित्यत्वात्संस्था ह्यागन्तवो यतः । ज्योतिष्टोमस्य ह्यग्निष्टोमसंस्था नैजं रूपमिति तादृश एव प्रतीयते न संस्थान्तरयुक्तस्तेषामागन्तुकत्वात्, अपि च एतेनेति करणनिर्देशाज्ज्योतिष्टोमकरणिका भावना दृष्ट्वेति शब्देन कथ्यते, न च संस्थासु एतस्य करणत्वमाश्रयमात्रत्वात्, न च संस्थानां क्रतुभावानान्तर्भावः फलार्थत्वात्, अग्निष्टोमसंस्था तु क्रतुभावनान्तर्गतेति तत्संस्थस्यैव परामर्शः ॥

ज्योतिष्टोमविकाराणामग्निष्टोमपूर्वकत्वाधिकरणम् ।

सू० अथान्येनेति संस्थानां सन्निधानात् ॥ १४ ॥

एतच्छब्दार्थे निरूपिते तदपेक्षोऽन्य-शब्दः किं संस्थासु वर्त्तते? उताग्निष्टोमान्यमात्रे? इति संशये "संस्था एवान्यशब्देन कथ्यन्ते प्रकृता हि ताः । न त्वेवं स्यान्न संस्थानामस्ति प्रकरणं यतः । ज्योतिष्टोमाधिकारोऽयं वाक्यशेषे च कीर्त्तनात् यज्ञानामिति शब्देन सर्वे सन्निहिता हि ते । तस्माज्ज्योतिष्टोमान्यत्वाविशेषात्संस्थानामेकाहाहीनसत्राणां चायमन्यवाद इति सर्वेषां तेषां ज्योतिष्टोमात्पश्चाद्भावोऽनेन वाक्येन विधीयते ॥

सर्वेषामेकानेकस्तोमकानाम-
ग्निष्टोमपूर्वकत्वाधिकरणम् । सू० एकस्तोमे वा क्रतुसंयोगात् ॥१५॥

पूर्वोक्तेपेणेदमारभ्यते—न सर्वेनि¹र्देशः किं त्वेकस्तोमानां त्रिवृदग्निष्टोमः पञ्चदश उक्थः सप्तदश उक्थः एकविंशः षोडशीत्यादीनामेव, कुतः वाक्यशेषात् यो वै त्रिवृदन्यं यज्ञक्रतुमापद्यते इत्यारभ्याविशेषश्रवणं वाक्यशेषेण विशेषे स्थाप्यते न त्वेवमन्य—शब्देन ह्यविशेषः प्रतीयते, वाक्यशेषस्तु संयोगमात्रेणैवोपपद्यते, "यो वै त्रिवृदन्यं यज्ञक्रतुमापद्यते स तं दीपयती"ति विनापि व्याप्त्या संयोगमात्रेण त्रिवृदादीनामेकस्तोमकेष्वपि दीपकत्वं सम्भवतीत्यविशेषात्सर्ववाद इति स्थितम् ॥

इति शास्त्रदीपिकायां पञ्चमस्याध्यायस्य तृतीयः पादः ॥ ३ ॥

---

## ॥ अथ पञ्चमाध्यायस्य चतुर्थः पाद आरभ्यते ॥

पाठक्रमापेक्षया श्रुत्यर्थयोर्बलवत्त्वाधिकरणम् । सू० क्रमको योऽर्थशब्दाभ्यां श्रुतिविशेषादर्थपरत्वाच्च ॥ १ ॥

किं श्रुत्यर्थाभ्यां तुल्यबलः पाठ? उत दुर्बल? इति चिन्त्यते? तत्राश्विनो दशमो गृह्यते इति श्रुतं किमाश्विनस्य पाठक्रमात् ? तृतीयस्थाने ग्रहणं? मुत श्रुतिबलाद्दशमे? इति तथाऽग्निहोत्रं जुहोति यवागूं पचतीति किं पाठवशाद् हुत्वा पक्तव्यमुतार्थवशाद्विपर्यय? इति प्रामाण्याविशेषादनियमं मन्वानस्योत्तरं "क्रमे श्रुत्यैव विहिते पाठतः कोऽनुकल्पयेत् । प्रयोजनविरोधे वा कः पाठमनुरुध्यते । हुत्वा हि पचमानस्य भवेद् द्वयमनर्थकम् । प.क्श्चैव यवागूश्च तां पक्त्वा जुहुयादतः ॥

मुख्यक्रमेणाग्नेयस्य पूर्वमवदानाद्यनुष्ठानाधिकरणम् । सू० अवदानाभिघारणासादनेष्वानुपूर्व्यं प्रवृत्त्या स्यात् ॥ २ ॥

दर्शपूर्णमासयोः सान्नाय्यधर्माः पूर्वं प्रवर्तन्ते पश्चादाग्नेयधर्माः प्रदानं त्वाग्नेयस्य प्रथमं पश्चात्स न्नाय्य, ततः स्विष्टकृदवदानं प्रयाज-

(१) न सर्वातिदेश इति पा॰

शेषाभिघारणं वेद्यामासादनं च किं प्रवृत्तिक्रमात्साान्नाय्यस्य पूर्वे भवत्युत मुख्यक्रमादाग्नेयस्ये ? ति प्रवृत्तिमुख्ययोर्बलाबलाज्ञानात्सन्देहे सत्यनियमे प्राप्ते मुख्यक्रमोबलीयानित्याह तस्मिन्क्रियमाणे प्रथम एकः पदार्थः प्रधानाद्विप्रकृष्यते अन्ये सर्वे सन्निकृष्टा भवन्ति प्रवृत्तिक्रमे पुनराश्रीयमाणे बहूनां विप्रकर्षः, तस्मान्मुख्यक्रमो बलीयान्, न चात्र प्रधानावदानमुदाहरणमित्युक्तं तन्त्ररत्ने ॥

इष्टिसोमयोः पौर्वापर्यानियमाधिकरणम् । सू० वचनादिष्टिपूर्वत्वम् ॥ ३ ॥

इष्टि पूर्वत्वं सोमस्याम्नातं "दर्शपूर्णमासाविष्ट्वा सोमेन यजेते"ति तत्किं नियत ? मुत विपर्ययोऽपि लभ्यत ? इति वचनादिष्टिपूर्वत्वं सोमपूर्वस्यत्व तु नैवं साक्षाद्वचनमस्ति तस्मादिष्टिपूर्वत्वमेव स्यात्, सत्यं न साक्षादस्ति वचनमाधानानन्तर्यं तु सोमस्य श्रुतन्तद्वशाच्चार्थादिष्टेः सोमपूर्वत्वं संज्ञायते, न ह्याधानानन्तर्यं सोमस्येष्टिपूर्वत्वे सम्पादयितुं शक्यं, तच्च श्रुतं "सोमेन यक्ष्यमाणोऽग्निमादधीते"ति सर्वश्चादधानः सोमेन यक्ष्यमाण एव नित्यत्वात्सोमस्य, अतः सोमेनानन्तरं यक्ष्यमाण इत्येतदभिप्रायमिदम् अतः सोमपूर्वत्वमपि स्यात् ।

ब्राह्मणस्यापीष्टिसोमयोः पौर्वापर्यानियमाधिकरणम् । उत्कर्षाद्ब्राह्मणस्य सोमः स्यात् ॥ ४ ॥

स्थिते कल्पद्वये चिन्त्यते किं ब्राह्मणस्य सोमपूर्वत्वमेव ? उत तस्यापीतरवद् द्वावेव कल्पा ? विति तदर्थं चिन्त्यते किमाग्नेयो वै ब्राह्मणो देवतया स सोमेनेष्ट्वाऽग्नीषोमीयो भवति यदेवादः पौर्णमासं हविस्तत्तह्यनुनिर्वपेत्तर्हि स उभयदेवतो भवतीति, अनेन वचनेन कृत्स्नौ दर्शपूर्णमासावूर्द्धं सोमादुत्कृष्येते । अथवा कर्मान्तरविधिरय ? मुत पौर्णमासीमात्रोत्कर्षः ? अथवैकहविरुत्कर्ष ? इति यदि कृत्स्नोत्कर्षो ब्राह्मणस्य सोमपूर्वत्वमेव भवति, पक्षान्तरेषु तस्याप्युभौ कल्पाविति तत्र "इष्टेरुत्कर्षणं यस्माद् ब्राह्मणस्य विधीयते । तेनास्य सोमपूर्वत्वमुभयं क्षत्रवैश्ययोः" । यद्यपि यदेवादः पौर्णमासं हविरित्येकदेशोत्कर्षः श्रूयते तथाऽपि समस्तसाध्यत्वेन श्रुतं फलं नैकदेशात्तदुत्पत्तुमर्हति, न चाफलस्यानुष्ठान-

मस्तीति तस्याप्युत्कर्षः कृत्स्नोत्कर्षात्सोमपूर्वत्वमेव विप्रस्य क्षत्रियवैश्ययोरिव फलकल्पद्वयमिति पूर्वः पक्षः, अत्र सिद्धान्त्येकदेश्याह कर्मान्तरमिदं पौर्णमासीधर्मकं तन्नामकं वा विधीयते, एवं धात्वर्थविधिर्भवति, अश्रुतस्य चोत्कर्षः कल्पितो न भवति, न त्वेतत्कर्मान्तरं विशिष्टविधिगौरवाचाम्नश्चानेकार्थकल्पना धर्मलक्षणा वाऽयुक्ता, प्रकरणात्तु पौर्णमास्या एवायं कालविधिस्तत्संयोगात् दर्शस्यापि उत्कर्ष एव इत्येवमपर्यवसितेऽधिकरणेऽनन्तरोक्तोपजीवनेन पूर्वपक्षं वक्तुं चिन्तान्तरं क्रियते, सोमेन यक्ष्यमाणोऽग्निमादधीत नर्तुं पृच्छेन्न नक्षत्रमिति किमयमृतुनक्षत्रातिक्रम आधानस्य? उत सोमस्ये? ति प्रकरणादाधानस्येति प्राप्ते वचनान्तरेणास्यामेव शाखायां यदहरेवैनमित्यादिना आधानकालानादरस्योक्तत्वात्सोमकाल एवायं, यद्यपि शतपथेऽपहतपाप्मानो वा ऋतवोऽसौ खलु वाव आदित्य उद्यन्नेषां पाप्मानमपहन्ति तस्माद्यदा चैनं श्रद्धा चोपनमेत् अथादधीताथ यजेतेत्युक्तं तथाऽप्यस्यां शाखायामविहित इति तत्पर एवायं सोमेनाधानानन्तरं यक्ष्यमाण आदधीत तथा कुर्वन् सोमस्यर्तुं नक्षत्रं च संपदादिकं नाद्रियेत इति स्थितादुत्तरं न कृत्स्नोत्कर्षः पौर्णमासीमात्रश्रवणात्, यत्तु नैकदेशात् फलमिति समुदायादेव विततात्फलमित्यदोषः तस्मात्कृत्स्नोत्कर्षाभावात् ब्राह्मणस्याप्युभौ कल्पौ । सिद्धान्तस्तु गृह्णीम एतत्कृत्स्नोत्कर्षो विप्रस्यापि द्वौ कल्पाविति । यत्तु पौर्णमास्युत्कर्ष इति तत्र ब्रूमहे, न सकलपौर्णमास्युत्कर्षः किन्तु अदः—शब्दपरामृष्टमग्नीषोमीयमेव हि हविरुत्कृष्यते अन्यत्तु यथाप्राप्तमवस्थितं तन्मात्ररहितत्वेन विप्रस्यापि पुरा भवेत् । तेन तस्याप्युभावेव कल्पौ क्षत्रियवैश्यवत् ।

आज्यस्य सोमादनुत्कर्षाधिकरणम् ।

सू० पुरोडाशस्त्वनिर्देशे तद्युक्ते देवताभावात् ॥ ५ ॥

स्थितमग्नीषोमीयस्योत्कर्ष इति स किं पुरोडाशस्य? उताज्यस्यापी? ति चिन्तायां "तत्राग्नीषोमभिसम्बन्धादाज्यस्यापीति मन्यते । विष्णुप्रजापतिभ्यां तु सोमात्प्रागपि तद्भवेत्, यद्यप्यग्नीषोमौ यष्टुमनर्हौ यजमा-

नस्तथाऽपि नाज्यमुत्क्रष्टुमर्हति, स हि प्रागपि विष्णुं प्रजापतिं वा यक्ष्यति तस्मान्नाज्योत्कर्षः ॥

विकृतानामैन्द्राग्नादीनां सद्यस्कालताऽधिकरणम् ।

**सू० विकृतेः प्रकृतिकालत्वात्सद्यस्कालोत्तरा विकृतिस्तयोः प्रत्यक्षशिष्टत्वात् ॥ ६ ॥**

विकृतयो द्व्यहकालाः? सद्यस्काला वे? ति संशये प्रकृतिवद्द्व्यहकालाः न च वचनविरोधः प्रकृतिवदेव, प्रकृतौ हि "पौर्णमास्यां पौर्णमास्या यजेतेति वाचनिकं कालं वचनान्तरवशादेकदेशेन योजयित्वा द्व्यहकालत्वमेवाश्रितं, तथा विकृतावपि य इष्ट्या पशुनेत्यादिविहितकाल एकदेश एव स्यात् द्व्यहकालस्य प्रकृतितः प्राप्तत्वात्, वचनं त्विदं व्यवस्थानिवृत्त्यर्थं प्रकृतितो हि पौर्णमासीविकाराणाममावास्याविकाराणां च तद्वदेव कालव्यवस्थायां प्राप्तायामव्यवस्थार्थं य इष्ट्या पशुनेत्यादिवचनं सम्भवति च द्वयोरपि प्रकृतिविकृत्योर्द्व्यहकालत्वमेकस्याश्चतुर्दश्यामुपक्रमसम्भवादतो द्व्यहकालाः, उच्यते "न प्रत्यक्षश्रुतः कालः सङ्कोचं चोदकाद् व्रजेत् । सर्वाङ्गयुक्ता विकृतिः पञ्चदश्यामतो भवेत् ॥

सोमात्सान्नाय्यादीनामुत्कर्षाधिकरणम् ।

**सू० सान्नाय्याग्नीषोमीयविकारा ऊर्ध्वं सोमात्प्रकृतिवत् ॥ ७ ॥**

"नासोमयाजी सन्नयेदाग्नेयो वै ब्राह्मण"इति वचनाभ्यां सान्नाय्याग्नीषोमीययोः सोमोत्तरकालत्वं तद्विकाराणामप्यतिदेशात् तत्कालत्वमिति सुहृद्भूत्वोपदिष्टवान् ॥

सोमविकाराणां दर्शपूर्णमासात्पूर्वं कर्तव्यताऽधिकरणम् ।

**सू० तथा सोमविकारा दर्शपूर्णमासाभ्याम् ॥ ८ ॥**

इष्टिपूर्वत्वं सोमपूर्वत्वं चोभयमस्तीत्युक्तम्, अतः प्रकृतिवत्सोमविकाराणामपीष्टेः प्रागूर्ध्वं च सम्भवं मन्यते, न त्वेवं, न हीष्टेः प्रागनुष्ठानं सोमस्याहत्य चोदितम् । आधानानन्तरोक्त्या तु संज्ञातं प्राक्त्वमर्थतः आधानानन्तरत्वं च विकृतीनां न सिद्ध्यति । ज्योतिष्टोमोदूर्ध्वकालत्वात् द्वयोश्च तदसम्भवात् । एष वाव प्रथमो यज्ञानामित्यनेन वचनेन ज्योति-

ष्टोमानन्तरकालत्वाद्विकृतीनां नाथानानन्तर्यं सम्भवति, एकश्चायमनन्तरकालो न द्वाभ्यां प्रकृतिविकृतिभ्यामवरोद्धुं शक्यः, प्रत्यक्षवचनात्तु प्रकृत्या संगृहीत इति न विकृतेः सम्भवति तदसम्भवाच्च न विकृतयः प्रागभावमिष्टेर्लभन्ते, न चाहत्यप्रकृताविष्टिः; प्राकृत्वमुक्तं यदतिदिश्येत इष्ट्युत्तरकालत्वं तु साक्षादुक्तं प्रकृताविति तदेव विकृतिष्वतिदिश्यते। अतः सोमविकाराणां दर्शादेः परतः क्रिया। एवं निरूपिता सम्यक् षट्प्रमाणा क्रमस्थितिः॥

इति श्रीमहामहोपाध्यायश्रीपार्थसारथिमिश्रकृतौ शास्त्रदीपिकायां पञ्चमोऽध्यायः समाप्तः ॥ ५ ॥

---

## अथ षष्ठोऽध्याय आरभ्यते ॥

---

अधिकारन्यायः, यागादिक्रियायां स्वर्गफलसाधनताऽधिकरणम् ।

सू० द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसम्बन्धः ॥ १ ॥

"भेदादिलक्षणैरेवमनुष्ठेये निरूपिते ।
कोऽनेनार्थिक्रियेतेति साम्प्रतं सम्प्रधार्यते ॥
तद्रूपोद्घातरूपेण ता(१)वदेतद्विचार्यते ।
कर्मभिः पुरुषः कर्ता किमधिक्रियते न वा" ॥

सत्यधिकारे कस्य कुत्राधिकार इति चिन्तयितुं लक्षणमारब्धव्यमिति तत्सिद्ध्यर्थमधिकारसद्भावः प्रथमं प्रतिपाद्यते "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" "चित्रया यजेत पशुकाम" इत्यादिषु किं पुरुषस्याधिकारः स्वाम्यं कर्मजन्यफलभोक्तृत्वमस्ति न वे? ति चिन्त्यते तदर्थमिदं विचार्यते—येयं प्रत्ययोपात्ता भावना तस्यां किं धात्वर्थ एव भाव्यः प्रधानं स्वर्गादि तु साधनतया गुणभूतम्? । उत काम्यमानत्वेनोपात्तः स्वर्गादिरेव भाव्यस्तत्साधनं च धात्वर्थः? इति ततोऽप्येतद्विवेक्तव्यं योऽत्र क्रियायाः स्वर्गकामादेश्च पुरुषस्य क्रियाकर्तृरूपः सम्बन्धस्तत्र किं क्रिया प्रधानतः पुरुषो गुणतस्ततो विपरीतं वेति, यदि गुणतः पुरुषस्तस्य गुणभावं क्रियाक्षेपसिद्धमनूद्य स्वर्गादिद्रव्यं साधनत्वेन विधीयते काम-

(१) त्वादावेतद्विचार्यते इति पा० ।

यतिश्च साधनकामंनानुवादः; तदयमर्थः स्वर्गं साधनत्वेन कामयमानो यजेत—स्वर्गाय यागं कुर्यादित्यर्थः । यद्वा स्वर्गकाममेव समुद्रमनोध्यानवत् गुणभूतकर्तृविशेषणं सती यागाङ्गमुपदिशतीत इति द्वेधा पूर्वः पक्षः । अथ प्रधानतः पुरुषस्तस्यात्मार्था स्वर्गादिगोचरा प्रवृत्तिः प्रत्ययेन विधीयते साधनतया च याग उपदिश्यते स्वर्गकामो यागेन कुर्यादात्मार्थां प्रवृत्ति-मिति स्वर्गकामस्यात्मार्था प्रवृत्तिः स्वर्गविषयैवेति स्वर्गभावनैवानेन प्रका-रेणोपदिष्टा, तदयमर्थः स्वर्गं यः प्राप्तुमिच्छति स यागेन कुर्यादभिलषितं स्वर्गश्च तस्याभिलषित इति स्वर्गं भावयेत् यागेनेत्युक्तं भवति, स्वर्ग-कामोदाहरणे तु प्रथमः पूर्वपक्षोपयिकत्वादिदमपि चिन्त्यते स्वर्गशब्दो द्रव्यवचनः प्रीतिवचनो वेति, प्रीतिवचनत्वे तु तस्याः साधनत्वासम्भवा-दत्यन्तानालम्बनः प्रथमः पूर्वपक्षः स्यादिति तत्र पूर्वः पक्षः ।

धात्वर्थस्यैव भाव्यत्वं पदश्रुत्या प्रतीयते ।
स्वर्गादेः खलु वाक्येन श्रुते वाक्यं च दुर्बलम् ॥
भूतं च स्वर्गपश्चादि द्रव्यं भाव्याय कर्मणे ।
उपदेश्यं न भूताय भा[2]व्यकर्मोपदेशनम् ॥

स्वर्गशब्दश्चन्दनादिषु प्रयोगाद् द्रव्यवचन इति न साधनत्वा-सम्भवः पश्वादेस्त्वसन्दिग्धमेव द्रव्यवचनत्वम् । अथवा स्वर्गादिकाममेव यागाङ्गमिति सर्वथा याग एव भाव्यो न तेनान्यत्फलमसति च फलेऽधि-काराभावादनारम्भणीयमधिकारलक्षणम् । न चैवमफले कर्मणि कः प्रव-र्तेत, मा प्रवर्तिष्ट किं नः छिन्नं, नैतावता शक्यं फलमुपगन्तुम् अफलस्य च कर्मणो धर्मत्वं न भवतीत्येतदपि भवतु तथा च "चोदनालक्षणो-ऽर्थो धर्म" इत्येतदपि प्रत्यु[3]द्धृतं स्यादित्येतदपि सत्यं तदधीनं च सकलं शास्त्रमिति सकलशास्त्राक्षेपेणेदमधिकरणमारब्धं विधिरपि पुरुषं प्रवर्त-यति न तु फलवत्तां गमयति, न च प्रवर्तितोऽपि कश्चिदफले प्रवर्तेत इति व्यर्थ एव विधिरिति प्राप्तेऽभिधीयते ।

(१) त्रेधेत्यपि पाठः ।
(२) भव्यकर्मोपदेशनमिति पा० ।
(३) प्रत्युक्तं स्यादिति पा० ।

"पदश्रुतेर्बलीयस्या विधिश्रुत्या हि भावना ।
अवरुद्धा न यागादिभाव्यमालम्बितुं क्षमा ॥
स्वर्गादिः कामनायोगात्फलत्वेनैव गम्यते ।
स्वारस्यात्पुरुषाणां हि कामना फलगोचरा ॥"

लिङादयो विधिं भावनां चाभिदधति तेन प्रकृत्युपात्तयागसम्बन्धात्पूर्वमेव विधिसम्बन्धो भावनायाः प्रतीयते प्रवर्त्तनारूपश्च विधिः, प्रवृत्तिरूपश्च[1] व्यापारः प्रवर्त्तना तद्योगिता चापुरुषार्थभाव्यायां भावनायां न सम्भवतीति यागातिक्रमेण पुरुषार्थस्यैव भाव्यत्वं विधिश्रुतिबलादध्यवसीयते कस्य पुनरसौ प्रवर्तनारूपो व्यापारः? शब्दस्येति ब्रूमः तस्य सन्निहितत्वादन्यस्य चाप्रतीतेः, यद्यपि चास्याचेतनत्वादाज्ञादिव्यापारासम्भवः तथापि योऽस्य व्यापारः सम्भवति तस्यैव यथा प्रवर्त्तनारूपत्वं सम्पद्यते तथा यतितव्यम् अंशत्रयविशिष्टभावनाप्रतिपादनं चास्य व्यापारः, तत्र यदि भाव्यांशे पुरुषार्थ उपनीयते ततस्तत्प्रतिपादनं प्रवृत्तिहेतुर्भवति नान्यथा तेन शब्दकर्तृकस्यार्थप्रतिपादनरूपस्य व्यापारस्य प्रवर्तनारूपत्वं सम्पादयितुं तद्विषयभूताया भावनायाः पुरुषार्थभाव्यत्वं निश्चीयते स्वर्गादिश्च कामनायोगात् भाव्यतया गम्यते, भाव्यविषया हि मुख्यरूपेण कामना साधनेषु तु तत्सम्बन्धनिमित्ता गौणी, न चात्र गौणग्रहणे प्रमाणमस्ति, तस्माद्विधिश्रुतेः कामनायोगाच्च स्वर्गपश्वादीनामेव भाव्यत्वं, यागश्च तत्र साधनं प्रीतिवचनः स्वर्गशब्दस्तामनभिधाय तद्विशिष्टद्रव्याभिधानासम्भवात् द्रव्यस्वरूपमात्रेणा[2]प्रयोगादतः स्वर्गादिकामस्य पुरुषस्य तद्भावना यागादिविशिष्टा विधीयते, यद्यपि च स्व कामस्यार्थान्तरविषयापि प्रवृत्तिः शेषत्वेन सम्भवति तथापि पुरुषान्तरशेषत्वस्यापि सम्भवात्स्वर्गकामस्य कदाचित्फलान्तरमनिच्छतस्तच्छेषित्वासम्भवाच्च स्वर्गकामार्थप्रवृत्तित्वेन निर्द्दिश्यते, यैव हि स्वर्गकामेषु शेषत्वेनानुस्यूता पुरुषान्तरेभ्यश्च व्यावृत्ता स्वर्गार्था प्रवृत्तिः सैव स्वर्गकामप्रवृत्तिरित्येवं विशेषणं

१ प्रवृत्तिहेतुश्च इति पा० ।
२ द्रव्यस्वरूपमात्रे चाप्रयोगादिति पा० ।

सहते, अतः स्वर्गकामार्थप्रवृत्त्युपदेशात्तत्साधनत्वेनैव विहितो यागः स्वर्गसाधनत्वेनैव विहितो भवति फलसाधने च कर्मणि फलभागिनः पुरुषस्य सिद्धोऽधिकार इति लक्षणमारब्धव्यम् ॥

यागादिषु मनुष्यस्यैवाधिकाराधिकरणम् ।

सू० फलार्थत्वात्कर्मणः शास्त्रं सर्वाधिकारं स्यात् ॥ २ ॥

सिद्धोऽधिकारे स किमनुष्ठानसमर्थानामसमर्थानाम् अन्धवधिरपङ्गुमूकदेवतिरश्चामपि ? किं वा समर्थानां मनुष्याणामेवे ? ति संशयः, तत्र यदि यथाधिकारमङ्गविनियोगस्ततः सर्वेषामपि, अथ यथाविनियोगमधिकारस्तदा समग्रानुष्ठानसमर्थानामेवेति "तत्र प्रधानवाक्येन सर्वेषामधिकारधीर्जायते । तद्वशेनाङ्गवाक्यानामुपवर्णनम्, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति प्रधानवाक्येन सर्वेषां स्वर्गकामाधिकारं कर्मावगतं तदनुसारीणि चाङ्गवाक्यानि न तत्सङ्कोचायालम्, अतश्चक्षुष्मन्तम्प्रत्याज्यावेक्षणविधिरचक्षुष्मतस्तु विध्यभावात्तद्रहितमेव फलसाधनम्, एवं वधिरस्य वाचनहीनं, मूकस्य मन्त्रोच्चारणरहितं पङ्गोश्च विष्णुक्रमणरहितमिति सर्वेषामर्थिनामशक्याङ्गरहितकर्मानुष्ठानात्सिद्धोऽधिकारः, स्यादेवमर्थिनां, तिरश्चान्तु साम्परायिकफलकामनाऽभावात्कथमधिकाराशङ्का तेषामपि चतुर्दश्युपवासादिदर्शनादस्त्येवादृष्टार्थितेति मन्यते । अत्रोच्यते "नैवाज्यावेक्षणादीनां पुरुषं प्रति चोदना । यतोऽसमर्थस्तच्छून्यं कर्म कृत्वाऽधिकारभाक् ॥ पुरुषम्प्रति विधीयमानमसमर्थं प्रत्यविहितत्वादनङ्गमेवेति तद्रहितमेव कर्माविगुणं समग्रं फलं साधयेत् "क्रतुं प्रति विधिस्तेषां तादृशं तच्च शक्नुवत् । कृत्वा फलमवाप्नोति ततोऽन्यस्यानधिक्रिया" न हि स्वातन्त्र्येणाङ्गवाक्यानि पुरुषैः सम्बन्ध्यन्ते प्रधानवाक्यशेषत्वात्तेषां, तत्प्रयुक्तेन तु प्रधानवाक्येन तदङ्गैन युक्तः क्रतुः पुरुषैः संयुज्यमानोऽसमर्थानपहाय समर्थान् प्रति विज्ञा[1]प्यते, अतोऽन्धस्य क्रतुरेव अविहितोन त्वाज्यावेक्षणमेवाविहितमितरच्च विहितमिति मन्तव्यं, न च प्रधानवाक्यविरोधात्सर्वाधि-

१ विज्ञाप्यते इति पा० ।

कारनिश्चयः, विशेषाभावाद्धि सर्वाधिकारः स्यादस्ति चात्र विशेषोऽङ्गोपसंहारसामर्थ्यम्, अतः समर्थानामेवाधिकारः। यत्र तु प्रधानवाक्यविरोधो यावज्जीवादौ तत्र भवत्येव यथाशक्ति प्रयोगादपि फलमिति वक्ष्यते, तदविरोधे तु सर्वाङ्गयुक्तकर्मानुष्ठानादेव फलं, तिरश्चां तु प्रधानमात्रे ऽप्यसामर्थ्यान्न क्वचिदधिकारः, ऋषीणां त्वनादौ संसारे पूर्वपूर्वभृग्वादिवरणसम्भवात् अस्त्येवाधिकार इति, ऋष्युदाहरणमनादेयं, देवतानां त्वात्मोद्देशेन त्यागासम्भवाद्ग्रहाभावाच्चाशक्तेरनधिकारः ॥

यागादिषु स्त्रीपुंसयोरुभयोरधिकाराधिकरणम् ।

सू॰ लिङ्गविशेषनिर्देशात् पुंयुक्तमैतिशायनः ॥ ३ ॥

इदानीं किं पुंस एवाधिकारः? उत स्त्रिया अपी? ति संशयः, "तत्र पुँल्लिङ्गनिर्देशात्पुंस एवाधिकारिता। प्रकृत्यर्थतया लिङ्गं संख्यावच्चाविवक्षितम्" विभक्त्यर्थस्य हि संख्याया ग्रहाधिकरणे ऽविवक्षितत्वमुक्तं, लिङ्गं तु प्रातिपदिकार्थो ग्रहवत् विवक्षितम्" उद्देश्योऽपि फलकामोविवक्षितलिङ्गः पुमानेव स्यात् अद्रव्यत्वाच्च स्त्रिया द्रव्यत्यागात्मकयागानुष्ठानासम्भवादननुष्ठाने चाधिकारासम्भवादनधिकारः, तथा भार्या पुत्रश्च दासश्च त्रय एवाधनाः स्मृताः इति स्मरणादतः पुंस एवाधिकारः, उच्यते "प्रकृत्यर्थो ऽपि खल्वेतदुद्देश्यस्य विशेषणं संख्यया तुल्यनीतित्वाच्च विवक्षां प्रपद्यते" ग्रहस्तूद्देश्यत्वाद्धि विवक्षितो न प्रातिपदिकार्थत्वाल्लिङ्गं तु प्रातिपदिकार्थोऽप्युद्देश्यविशेषणत्वादविवक्षितं वाक्यभेदप्रसङ्गात् अनपेक्षितपरिच्छेदत्वाच्चोद्दिश्यमानस्य, न चायं प्रातिपदिकार्थो विभक्तिविकाराणां टाबादीनां चान्वयव्यतिरेकाभ्यां लिङ्गाभिधायित्वात् अतः संख्यावदविवक्षितमिति स्त्रिया अप्यधिकारः, न चाद्रव्यत्वमस्याः, कर्तनादिभिरर्जनसम्भवात्, पित्रादि दत्तसम्भवाच्च दायादिसम्भवात् पुत्राभावे दुहितेत्यादिस्मरणात् पत्याऽर्जितस्य चोभयसाधारणत्वात् "धर्मे चार्थे च कामे च नातिचरितव्या पाणिग्रहणात्तु सहत्वं कर्मसु तथा पुण्यफलेषु द्रव्यपरिग्रहे चेत्यादिवचनात् ये यज्ञपत्नीं वर्द्धानित्यादिमन्त्रवर्णेभ्यश्च स्पष्टः

स्त्रिया अधिकारः पत्नीशब्दस्य स्वामिवचनत्वात्, भार्या पुत्रश्चेति वचनं तु श्रुतिस्मृतिविरुद्धत्वादस्वातन्त्र्यपरं व्याख्येयम् ॥

यागे दम्पत्योः सहाधिकाराधिकरणम् ।

सू० स्ववतोऽस्तु वचनादैककर्म्यं स्यात् ॥ ४ ॥

सिद्धे द्वयोरधिकारे किं दम्पती पृथग् यजेयाताम् ? उत सहे ? ति चिन्तायामाख्यातोपात्ताया: सङ्ख्याया: गुणभूतोपादेयकर्तृगामित्वेन विवक्षितत्वादेकैकशः प्रयोगे प्राप्ते सहेति ब्रूमः, तथा हि कर्मसमयं भवतीतरथा वैगुण्यं स्यात् यजमानप्रयोगे पत्न्यवेक्षणान्वारम्भादिलोपात्तत्प्रयोगे च यजमानावेक्षणादिलोपात्, न चर्त्विक्परिक्रयेण यजमानः पत्नीं, सा च तमुपादातुं शक्नुतः स्वामिवचनत्वात् पत्नीयजमानशब्दयोः स्वामिनश्च परिक्रयेणासम्पत्तेरतोऽङ्गसाकल्यालोचनया सह प्रयोगमध्यवस्यामः संसृष्टद्रव्यत्वाच्च तयोर्विभागप्रतिषेधाच्च न पृथग् यष्टृत्वसम्भवः परस्परसापेक्षयोरेवाग्नीषोमयोरिव देवतात्वं दम्पत्योः कर्तृत्वं कर्तृरूपैक्याद्वाख्यातोपात्तैकसङ्ख्याऽग्नीषोमौ देवतेतिवत्सहप्रयोगेऽप्यविरुद्धा, तस्मात्सहप्रयोगः ॥

एकस्यैव पुंस आधानाधिकरणम् ।

सू० ह्याधानं च द्वियज्ञवत् ॥ ५ ॥

आधानं प्रकृत्य "क्षौमे वसानावग्निमादधीयाता"मिति श्रुतं तत्र संशयः किमाधानं द्वौ पुमांसौ सस्त्रीकौ सह कुर्यातम् ? उतैकः ? इति तत्र "पूर्वत्राख्यातसंख्यायाः कर्तृरूपान्वयः स्थितः । तेनेह कर्तृरूपस्य भेदोद्विवचनाद्भवेत् ॥ वसानाविति चौकारात् पुंद्वयं सम्प्रतीयते । द्वित्वपुंस्त्वे हि तद्वाच्ये नियम्येते च ते मिथः ॥ यद्यपि पुंद्वयवत् स्त्रीपुंसयोरपि द्विवचनमौकारान्तं दृष्टं कुक्कुटश्च कुक्कुटी च कुक्कुटाविति तथाऽप्युभयाव्यभिचारात्पुंस्त्वं द्वित्वं चास्याभिधेयं तयोश्चाभिहितयोरसति स्त्रीसद्वितीयप्रमाणे परस्परनियमात् पुमांसावेव द्वौ गम्येते तयोश्चोत्पत्तावप्राप्तेस्तद्विधानार्थमेवेदं वचनम् उत्पत्तिवाक्यस्य त्वाधानविधिपरत्वेनार्थवत्त्वादेकवचनं निर्देशमात्रार्थं भविष्यति, क्षौमशब्दश्च टुक्षु शब्द इत्यस्मादुत्पन्नः शब्दवत्त्वादनुवादः, मलिनत्वेन क्षौमसादृश्याद्वा गौणस्तस्माद् द्वौ पुमांसावेवञ्चात्यन्तसन्निकृष्टार्थविधानात् श्रुत्यनुग्रहः क्षौमवसनसम्बन्धविधाव-

त्यन्तमनुपपन्नं स्याद् वाक्यं स्यादिति प्राप्तेऽभिधीयते एक एव कुतः "क्षौमशब्दो न मुख्यस्सन् मुख्यमर्थं परित्यजेत्। नापि धात्वर्थयोगेन वर्तते रूढिसम्भवात्॥ वसनक्षौमशब्दौ च न[1] च स्यातामनर्थकौ द्वित्वमात्रविधायित्वात्तस्मात् क्षौमं विधीयते॥ तद्विधाने च पुंद्वित्वं विधातुं नैव शक्यते। उत्पत्तिवाक्यादन्यत्र नानेकार्थविधिर्यतः॥ सन्निकर्षश्च शब्दस्य धर्मो न तदनुग्रहात्। प्रधानभूतशब्दार्थपरित्यागोऽवकल्पते॥ कर्तृरूपस्य चैक्येऽपि तदधिष्ठानभेदतः। युक्तं द्विवचनं यद्वदग्नीषोमौ हि देवते॥ अप्राप्तत्वात्तु वसने यदा क्षौमं विधीयते। वसानावादधीयातामित्येतावनुवादकौ॥ अनुवादो यथाप्राप्ति सा च स्त्रीपुंसयोर्द्वयोः। तेन प्राप्तिवशाच्छब्दाविमौ तावेव वक्ष्यतः॥ एक एव पुमांस्तस्मादादधीत सह स्त्रिया। उत्पत्तिवाक्ये ह्येकत्वमुपादेयं विवक्षितम्॥

पत्न्यायावदुक्ताशीर्ब्रह्मचर्यादावेवाधिकाराधिकरणम्।

सू॰ तस्या यावदुक्तमाशीर्ब्रह्मचर्यमतुल्यत्वात्॥ ६॥

दम्पत्योः सहप्रयोगः स्थितः तत्र पत्न्यवेक्षत इत्यादिषु पत्न्येव कर्त्री यजमानोऽन्वारभत इत्यादिषु चोपादेयस्य यजमानस्य विवक्षितलिङ्गत्वात् पुमानेव कर्त्ता, ये तु फलिसंस्कारावचनेनापि न व्यवस्थापितास्ते द्वयोरपि फलित्वादावर्तन्ते, अतो न तेषु चिन्ता, यानि तु परार्थान्युपस्थानानुमन्त्रणादीनि याजमानसमाख्यया यजमानकर्तृकाणि तेषु किं दम्पत्योरन्यतरः कर्ता? उत पुमानेवे? ति चिन्त्यते तत्र "याजमान[2]समाख्यानं यजमानपदादृथा। निष्पद्यते तथैवैतद् यजमानपदादपि॥ तेन समाख्यानाविशेषादविशिष्टं द्वयोरपि कर्तृत्वं, विद्वत्त्वाद्वा पुमानेव कुर्यादविदुषीतरा वेदाध्ययनशून्यत्वात्। प्रतिषिद्धं हि तत्स्त्रियाः। यद्यप्युपनयनमष्टवर्षस्यसंस्कार्यत्वेनाविवक्षितलिङ्गत्वात् स्त्रिया अपि भासते अत एवाध्ययनमप्यनिर्दिष्टकर्तृकत्वात्प्रकृतमुपनीतं कर्तारमाश्रयेत् स्त्रिया अपि स्यादित्यधिकारः

१ तव स्यातामिति पा॰।

२ याजमानपदाख्यानमिति पा॰।

बुद्धिर्भवति तथाऽऽप्याहत्य स्त्रीणामध्ययनप्रतिषेधादविदुषी स्त्री न शक्ता मन्त्रोच्चारणं कर्त्तुं, न च तदन्यथाऽनुपपत्त्या तस्या अपि विद्वत्ता सम्पादयितुं शक्यते संपन्नविद्येन पुंसा तेषामनुष्ठानसिद्धेरतः पुमानेव कर्त्ता ॥

याग शूद्रस्यानधिकाराधिकरणम् ।

## सू० चातुर्वर्ण्यमविशेषात् ॥ ७ ॥

किमग्निहोत्रादिषु चतुर्णामपि वर्णानामधिकारः? उतापशूद्राणां त्रयाणा?मिति तदर्थमिदं विचार्यते किं कामश्रुतिप्रयुक्तं विद्यार्जनम्? उत स्वाध्यायविधिसिद्धविद्योपजीविन्यः कामश्रुतय? इति द्विधा चात्र पूर्वः पक्षः एकस्तावत्स्वाध्यायाध्ययनं क्रत्वनुष्ठानज्ञानौपयिकतया विहितं क्रत्वङ्गं क्रतुविधिभिरेव प्रयाजादिवत्प्रयुज्यते क्रतवश्चाविशेषेण चातुर्वर्ण्यमधिकुर्वाणाश्चतुर्णामध्ययनं प्रयुञ्जते, तत्र त्रयाणां वसन्ते ब्राह्मणमुपनयीतेत्यादिभिरुपनयनसंस्कारोऽध्ययनाङ्गत्वेन विहितश्चतुर्थस्तु विध्यभावादनुपनीत एवाधीत्य विद्यां लब्ध्वाऽधिक्रियत इति, द्वितीयस्तु न क्रत्वङ्गमध्ययनं श्रुत्याद्यभावादक्षरग्रहणादिदृष्टकार्यपरम्परया वाक्यार्थज्ञानं यावद्गतं ज्ञानस्यानुष्ठानौपयिकत्वेन स्वयमेव फलत्वोपपत्तेस्तत्रैवाध्ययनं स्वविधिना विनियुज्यते न तद्द्वारेण क्रतौ तेनाधानमिवाग्न्यर्थं ज्ञानाङ्गं न क्रत्वङ्गम्, अतस्तेन विनापि क्रतूनामवैगुण्यादनधीतवेद एव शूद्र उपद्रष्टृवचनादनुतिष्ठन्नधिक्रियते, क्रतवो ह्यविशेषेण चतुरोऽप्यधिकुर्वाणास्त्रयाणामध्ययनविधिसिद्धविद्यत्वाद्विद्यार्जनं न प्रयुञ्जते, शूद्रस्य त्वन्यतः सिद्धविद्यत्वाभावात्तदर्जनमपि प्रयुञ्जते, अतो यद्यपि स्वाध्यायविधिरनिर्द्दिष्टकर्तृकत्वात्कर्तारमपेक्षमाणः प्रकृतोपनयनसंस्कृतान्किमर्थं वयमाचार्यसमीपमानीता इत्येवं प्रयोजनमपेक्षमाणान्ब्राह्मणादीनेव कर्तृत्वेन स्वीकुर्वंस्तेषामेवाध्ययनं विधत्ते न शूद्रस्य, तथाऽप्यसावविहितेनैवाध्ययनेनोपायान्तरेण वा विद्यां लब्ध्वाऽधिक्रियेतेति "सत्यमध्ययनं नाङ्गं तत्कृता त्वङ्गमर्थधीः । तद्वतः क्रतवो लब्ध्वा न तुर्यस्याक्षिपन्ति ताम् ॥ क्रतुविधयोऽन्यथाऽनुपपत्त्या विद्यार्जनमाक्षिपन्ति, यदा तु स्वाध्यायविधिविहिताध्ययनोपात्तविद्यान् द्विजन्मनो लभन्ते तदा तैरेव लब्धात्मानोऽनुपपत्तिक्षयात्

न चतुर्थस्य विद्यामाक्षिपन्ति, यदा चैवं विहितोपायसिद्धज्ञानवत एव विधयोऽधिकुर्वन्ति तदा तदेव ज्ञानमकर्मकालोपात्तमपि अग्निवत्क्रतूनामङ्गमिति तच्छून्यस्य स्वाच्छन्द्येन विद्यामर्जयतोऽपि न सिध्यत्यधिकारः, मन्त्रवत्सु च अनधीतवेदस्य कुतोऽधिकारः कुतस्तरां चानयेरग्निसाध्येषु तस्मात्त्रयाणामधिकारः ॥

यागे निर्धनस्याप्यधिकाराधिकरणम् ।

सू॰ त्रयाणां द्रव्यसम्पन्नः कर्मणो द्रव्यसिद्धित्वात् ॥ ८ ॥

किं त्रयाणामपि मध्ये द्रव्यवत एवाधिकारः? उताद्रव्योऽपि? कर्मार्थेन द्रव्यमर्जयित्वाऽनुतिष्ठन्नधिक्रियत इति संशये पुरुषार्थोपात्तद्रव्यवतां लाभाच्चाद्रव्यस्य तदर्जनं क्रतुभिराक्षिप्यते, अतो विदुषामिव द्रव्यवतामधिकारः, नैतत्तुल्यं विद्या हि प्रत्यक्षविधिसिद्धा त्रयाणामिति तैरेवोपपन्नाः क्रतवो न शूद्रस्य ताक्षिपन्तीति युक्तं, द्रव्यार्जनं तु सर्वपुरुषाणां द्रव्यकार्यैरेवाक्षेप्यं तत्राविशेषात् भोजनादिवत्, क्रतूनामपि तदाक्षेपकत्वं न वार्यते, अतोऽद्रव्योऽपि द्रव्यमर्जयित्वा कुर्यात् ॥

यागेऽङ्गहीनस्याप्यधिकाराधिकरणम् ।

सू॰ अङ्गहीनश्च तद्धर्मा ॥ ९ ॥

अङ्गहीनोऽपि द्रव्यहीनवत्तत्प्रतिसमाधानेन कुर्यात् द्रव्यहानिर्बहिरङ्गमधिकारं व्यरौत्सीत् अङ्गहानिस्त्वन्तरङ्गं विरुणद्धीति विशेषाशङ्का, अथवा द्रव्यहीनवदङ्गहीनस्य सिद्धमेवाधिकारमुत्तरविवक्षयाऽनुवदतीत्यपौनरुक्त्यम् ॥

अचिकित्स्याङ्गवैकल्यस्य यागानधिकाराधिकरणम् ।

सू॰ उत्पत्तौ नित्यसंयोगात् ॥ १० ॥

यस्य त्वप्रतिसमाधेयमङ्गवैकल्यं स न कथंचिच्छक्नोति कर्तुमिति न काम्येष्वधिक्रियते, नित्येषु त्वाहिताग्निश्चेद्यथाशक्ति कुर्वन्नधिक्रियत एव ॥

दर्शपूर्णमासयोः त्र्यार्षेयस्याधिकाराधिकरणम् ।

सू॰ अत्र्यार्षेयस्य हानं स्यात् ॥ ११ ॥

दर्शपूर्णमासयोरार्षेयं वृणीत इति विधाय पुनः श्रुतम् "एकं वृणीते

द्वौ वृणीते त्रीन्वृणीते न चतुरो वृणीते न पञ्चातिवृणीते" इति तत्र विचारः किं दर्शपूर्णमासयोरेकार्षेयद्व्यार्षेययोरप्यधिकार? उत त्र्यार्षेयस्यैवे? ति तत्रार्षेयं वृणीत इति वरणमात्रे विहिते चतुर्णां षडादीनां च प्रतिषेधे कृते ऽर्थादेकद्वित्रिपञ्चानां प्राप्तं वरणमिति तच्छ्रवणमनुवादः। अथवाऽर्षेयं वृणीत इति सामान्यं यथा त्रीन्वृणीत इत्यनेन त्वत्पक्षे विशेष्यते तथैकं वृणीते द्वौ वृणीत इत्याभ्यामपि विशेषाभावादुभयथा द्वित्वैकत्वयोस्त्रित्वेनाविशेषादेकं द्वौ त्रीन् पञ्च वा वृणानोऽधिक्रियेतेति प्राप्ते ब्रूमः "असङ्ख्याकविधौ तावत्प्रतिषेधद्वयाश्रयात्। वाक्यद्वयं प्रसज्येत त्रीनित्येतच्च पाक्षिकम्॥ एकद्वित्रिविधानं चेत्ततो वाक्यत्रयं भवेत्। विकल्पश्च भवेत्तस्मात् त्रित्वमेव विधीयते"॥ एकं वृणीत इत्यादौ विध्यश्रवणादर्थवादेन विधिः कल्प्यते, तत्र यदि वरणमात्रे विहिते चतुर्णां षडादीनां च प्रतिषेधः ततः प्रतिषेधद्वयश्रवणाद्वाक्यद्वयं कल्प्यं स्यात्तदेकादिपक्षे च त्रयाणामपि[1] भावात् त्रीनिति नित्यश्रवणमुपरुध्येत, अथैकादिभिः सर्वैर्विशेष्येत तथाऽपि सङ्ख्यात्रयविधानाय वाक्यत्रयं कल्प्यं त्रित्वस्य च पाक्षिकत्वं तदवस्थमेव त्रित्वमात्रविधौ त्वेकार्थविधानादेकवाक्यत्वं तदन्तर्गतत्वाच्च द्वित्वैकत्वश्रवणं नित्यानुवादः, चतुरादिप्रतिषेधश्चानुवाद एव, तस्मात्त्रित्वविशिष्टवरणविधानादेकवाक्यत्वं तदुपसंहारसमर्थस्यैवाधिकारः॥

रथकारन्यायश्चैष एवेति चतुर्वर्णातिरिक्तस्य रथकारस्याधानाधिकरणम्।

सू० वचनाद्रथकारस्याधानेऽस्य सर्वशेषत्वात्॥ १२॥

"वसन्ते ब्राह्मणोऽग्निमादधीत ग्रीष्मे राजन्यः शरदि वैश्य" इति विधाय श्रूयते "वर्षासु रथकारोऽग्निमादधीते"ति किं ब्राह्मणादीनामेव रथकरणे निमित्ते वर्षाभिधान? मुत रथकारसंज्ञस्यावान्तरवर्णस्याधानान्तरविधान? मिति संशये द्विजानां विद्वत्त्वात्कालमात्रविधानेन लाघवात्तेषामेव कालविधिर्नाविदुषोऽवान्तरवर्णस्य विशिष्टाधानविधानमिति प्राप्ते "रूढिबलेन योगबाधादुक्तबलाच्चाविदुषोऽप्यधिकारप्रतीतेरविधा-

१ त्रयाणामभावादिति पा०।

नात् ऋभूणां त्वेति च मन्त्रवर्णात् ऋभुसौधन्वानपर्यायस्यावान्तरवर्णस्य रथकारस्येदमाधानं विधीयते ॥

निषादस्थपतिन्यायः । त्रैवर्णिकभिन्नस्य निषादस्य रौद्रयागेऽधिकाराधिकरणम् ।

सू० स्थपतिर्निषादः स्याच्छब्दसामर्थ्यात् ॥ १२ ॥

"ऐन्द्रं वास्तुमयं चरुं निर्वपे"दिति प्रकृत्य श्रुतम् ' एतया निषादस्थपतिं याजये"दिति तत्र संशयः किं द्विजातिरेव यो निषादानामाधिपत्यं करोति तस्यात्राधिकारः षष्ठीसमास एवायम् ? उत निषाद एव स्थपतिस्तस्य, कर्मधारयश्चायमिति तत्र "पक्षद्वयेऽपि शब्दोऽयं योगादेव प्रवर्तते। तत्र षष्ठीसमासत्वेऽपि विदुषः स्यादधिक्रिया । आहिताग्नेश्च यदि तु कर्मधारय इष्यते । अनाहिताग्नेरज्ञस्य प्रसज्येताधिकारिता । तेन षष्ठीसमासोऽयमिति प्राप्तेऽभिधीयते । निषादपदमेवं तु स्थपतौ लक्षणां व्रजेत् । न हि षष्ठी श्रुता येन न तत्सम्बन्धी विधिर्भवेत् । निषादपदमेवातः षष्ठ्यर्थं लक्षयेदिदम् । कर्मधारयपक्षे तु न काचिदपि लक्षणा । निषाद एव स्थपतिरतः श्रुत्या प्रतीयते तेन श्रुतिबलादज्ञोऽनाहिताग्निश्च सन्नपि निषाद एव स्थपतिः कर्मण्यत्राधिकारभाक् ॥

इति शास्त्रदीपिकायां षष्ठस्याध्यायस्य प्रथमः पादः ॥ १ ॥

---

## अथ षष्ठाऽध्याये द्वितीयः पाद आरभ्यते ॥

सत्रे प्रत्येकस्य सत्रिणः फलसम्बन्धाधिकरणम् ।

सू० पुरुषार्थैकसिद्धित्वात्तस्य तस्याधिकारः स्यात् ॥ १ ॥

अनेककर्तृकेषु कर्मसु "ऋद्धिकामाः सत्रमासीरन्नि"त्यादिषु किमेकैकस्य कृत्स्नं फलं भवति अतश्च प्रत्येकं कृत्स्नफलकामानामधिकारः? उत समुदायस्य, कृत्स्नं फलं प्रत्येकं तु फलावयवः ततश्च फलावयवकामानामधिकार इति संशयः, तत्र "समुदायस्य कर्तृत्वात् तस्य कृत्स्नफलान्वयः फलावयवयोगः स्यात्प्रत्येकं समुदायिनाम् ॥ यद्यपि कामपदे बहुत्व-

मुद्देश्यपरत्वाद्विवक्षितमिति कामिनः प्रधानभूतामुद्दिश्य गुणत्वेन विधीयमानं कर्म प्रतिप्रधानावृत्तेरेकैकस्य स्वफलं साधयतीति प्रतिभाति तथाऽप्याख्यातोपात्तस्य कर्तृबहुत्वस्योपरितनाऽधिकरणन्यायेन विवक्षितत्वात्संहत्यकामिभिः कर्तव्यं, न चैकस्मिन्कर्मणि बहूनां प्रत्येकं कर्तृत्वं सम्भवति एकेन कृते परस्य कर्तृत्वायोगात्, अतः समुदितानां व्यासज्यकर्तृत्वं कर्तृगामि च फलम्। अतस्तदपि समुदायस्यैव तदंशन्तु समुदायिनः प्राप्नुवन्तीत्यवयवकामानामधिकार इति प्राप्तेऽभिधीयते "समुदायस्य कर्तृत्वं यद्यपि स्यात्तथाऽपि तु प्रत्येकमधिकारित्वात्तथैव फलमाप्नुयुः ॥ यद्यथाऽवगम्यते तत्तथैवाङ्गीकर्तव्यम् इह चाधिकारावस्थायां साहित्यस्याविवक्षितत्वात्प्रत्येकमधिकारः प्रतीयते, कर्तृत्वं च संहतानामतः संहत्यप्रयुक्तं कर्म प्रत्येकं फलं साधयतीति स्वीकर्तव्यं, न चैवमत्यन्ताकर्तृगामित्वं तेष्वेव व्यासज्यवृत्ति कर्तृत्वं प्रत्येकवृत्ति फलमिति प्रकारभेदमात्रं कर्तृत्वमपि चैतेषां प्रत्येकमवगम्यते "कर्तृगामि बहुत्वं हि द्रव्यगाम्यन्यथा भवेत् ॥ कर्तृबहुत्वं साक्षादभिधीयते न कर्त्राश्रयद्रव्यबहुत्वं व्यासज्यवर्तिनि च कर्तृत्वेन कर्तृणां बहुत्वं स्यात् किन्तु द्रव्यमात्रस्य तत्र कर्तृबहुत्वाभिधानमनञ्जसं स्यात्सम्भवति च सर्वेषां प्रत्येकं युगपत् कर्तृत्वं, पर्याये हि विरोधः स्यात्, एकेन कृते परस्य कर्तृत्वायोगात् न यौगपद्येन तस्मात्प्रत्येकमधिकारिणः ॥

दर्शादौ कर्त्रैक्यनियमाधिकरणम् ।

सू० प्रयोगे पुरुषश्रुतेर्यथाकामी प्रयोगे स्यात् ॥ २ ॥

दर्शपूर्णमासादिषु किमेको द्वौ बहवो वा कर्तारः ? उत एक एवे ? ति संशयः, तदर्थं च किमाख्यातोपात्ता कर्तृसङ्ख्या विवक्षिता ? नेति चिन्त्यते "तत्र फलार्थिनं समुद्दिश्य कर्मणामुपदेशनात्। उद्देश्यगामिनी सङ्ख्या यहवन्न विवक्षिता ॥ स्यान्मतं यद्यपि कामपदगता सङ्ख्या उद्देश्यगतत्वात् ग्रहगतलिङ्गवत् यहैकत्ववच्चाविवक्षिता तथाऽप्याख्यातोपात्ता सङ्ख्या विधीयमानक्रियाऽऽक्षिप्तगुणभूतकर्तृगामित्वाद्विवक्षितेति तदसत् अविधेय

त्वात् क्रियायाः यागेन स्वर्गं प्राप्नुयादित्येतावदुच्यते नानुष्ठानं न[1] त्वर्थ-प्राप्तं, स्वर्गप्राप्तौ च पुंसः प्रधानत्वादविवक्षिता सङ्ख्या, यदि स्वर्गं कुर्यादित्युच्येत तदा अन्यस्यापि स्वर्गः स्यात् न कर्तुः, यद्यपि स्वर्गं कुर्यादित्युच्यते तथाऽप्यविधेयैव क्रिया, यो हि यदिच्छति स तत्करोतीत्येवं फलकामस्य फलविषया क्रिया प्राप्तैव तां प्रत्ययेनानूद्य प्रकृत्यर्थोयागादिः करणं विधीयते, प्रत्ययार्थश्च कर्तृसङ्ख्या तेनासावनुवाद्यगतत्वादविवक्षिता, न ह्येकेन प्रत्ययेन फलकामस्य रागप्राप्तां फलभावनामुद्दिशता कर्तृसङ्ख्या भावनां यागं वा प्रत्युपादातुं शक्यते वैरूप्यप्रसङ्गात् । अथ मतं यद्यपि फलक्रिया प्राप्तैव तथाऽपि यागक्रियाया अप्राप्तत्वेन विधेयत्वात्तद्विशेषणभूता सङ्ख्या विधेयगतत्वाद्विवक्षितेति तदप्ययुक्तं यद्यपि यागानुरक्ता क्रिया न प्राप्ता तथाऽपि क्रियास्वरूपं तावत्प्राप्तमेव तत्र विशिष्टक्रियाविषयोऽपि विधिः श्रूयमाणः प्राप्ताप्राप्तविवेकेन यागानुरागमात्रपरो भवति, न हि फलक्रियातः क्रियान्तरं यागेनानुरज्यते, सा चेत्प्राप्तैव तद्विशेषणं च सङ्ख्या न साक्षाद्यागगता प्रत्ययार्थत्वात् तस्मादविवक्षितेति । अत्राभिधीयते "रागप्राप्ता फलप्राप्तिर्न सा शब्देन चोद्यते । प्रत्ययश्च क्रियावाची न प्राप्तिं प्रतिपादयेत् ॥ प्रतिग्रहविशेषाच्च नाकर्तुः फलसङ्गतिः । विधेश्चैवमतोऽन्यस्य न फलप्राप्तिसम्भवः ॥ स्वर्गादिकाममुद्दिश्य क्रियैवेह विधीयते । यागादियुक्त्या सङ्ख्या च तद्गतत्वाद्विवक्षिता ॥ फलक्रियानियोगेन न हि पुंसां फलार्थिनाम् । रागप्राप्ता यतो नैषा शब्देन तु विधीयते ॥ अर्थिपदेन तावदर्थितामात्रमुच्यते न प्रवृत्तिराख्यातमपि यच्छब्दाद्युपबन्धाभावात् यागादिविशिष्टभावनाविधिपरमेव स्वरसादवगम्यते, ततश्च स्वर्गो मे स्यादित्येवं यः कामयते स तं यागेन भावयेदिति भावनैव सर्वविशेषणविशिष्टा फलोपायत्वेन कामिनो विधीयते, न चावश्यमर्थिनस्तद्विषया प्रवृत्तिः प्राप्ता येन तद्बलात्तत उत्तार्य विधिर्यागाद्यनुरागमात्रपरत्वेनैव व्यवस्थाप्येत, न च फलकामः प्राग्व-

१ तदर्थप्राप्तमिति पा० ।

चनादिदं जानाति प्रवृत्तस्य मे स्वर्गः सिद्ध्यति न त्वप्रवृत्तस्य दैवात्का-रणान्तराद्वेति तदज्ञानात्स्वर्गप्राप्तिमभिलषंस्तद्विषयप्रवृत्त्यप्रवृत्त्योर्मध्यस्थ उदास्ते, यदा तु वचनमस्य यागादिविशिष्टं व्यापारं विधत्ते तदा तस्ये-प्सितोपायतां विधिप्रामाण्यादवगम्य तत्र प्रवर्तते तस्माद्विधेयैव भावना यागादिविशिष्टा सङ्ख्या च तद्विशेषणमिति विवक्षितैव, लिङ्गं तु काम-पदगतमुद्देश्यविशेषणत्वादविवक्षितमिति विशेषः । ये तु स्वर्गकामस्यानु-ष्ठानमनूद्य यागस्तस्योपायत्वेन विधीयते वेदैवासौ मयैवैतत्कर्तव्यमिति "स्वयमेव हि जानन्ति कर्तव्यं पुरुषाः सदा" इत्यादिभाष्यवार्तिकयथाश्रुतग्र-हणात् भावनाया अविधानमाहुस्तेषामनूद्यमानविशेषणस्याविवक्षितत्वा-दिदमधिकरणं विरुध्यते, सर्ववाक्येषु च क्रियामविधाय गुणमात्रविधानात् चोदिते हि तदर्थत्वात्तस्य तस्योपदिश्येतेत्येवमनेकगुणविधानं क्वचिदपि न स्यात्. ततश्च रेवतीषु वारवन्तीयं कृत्वा पशुकामो यजेतेत्यादिषु प्राप्त-भावनोद्देशेन यागस्य रेवतीवारवन्तीयसम्बन्धस्य च विधानात् गुणविधि-पक्षवद् वाक्यभेदः स्यात्, न च यागविशेषत्वं गुणानां येन तस्यैकस्य विशि-ष्टस्य विधानाद्वाक्यभेदः परिह्रियेत सर्वेषां भावनागामित्वात्, यथोक्तं धात्वर्थकारकाणामश्वैकहायन्यादिवत्परस्परेणासम्बध्य भावनासम्बद्धा-नामुत्तरकालं परस्परोपकारित्वमिति सप्तमनवमाद्ययोर्वक्ष्यतीति, तस्माद्भा-वनाविधिकृतमेवानेकगुणविधानं प्रस्तुतं चाधिकरणं समर्थनीयं यथाह यदा हि भावनारूढं विधित्वं भावनार्थत्वेनैव गृह्यते तदार्थाद्विशेषण-विधौ सत्यवाक्यभेदः, यदा तु तद्विशेषणार्थं तदाऽनेकविशेषणयोगे सति यदर्थं विधित्वं तस्यैवैकस्य विधानं नेतरस्येति वाक्यभेदः स्यादिति अल्पं चेदमुच्यते सर्वत्र भावनाविध्यभिधानात्तस्माद्वेदैवासौ मयैतत्कर्तव्यं स्वयमेव हि जानन्ति कर्तव्यं पुरुषाः सदेत्यादिभाष्यस्वरूपप्राप्त्यभिप्रायं न भावनाभिप्रायमिति व्याख्येयम् । अतो भावनाया विधेयत्वात्तद्विशेषणभूता कर्तृसङ्ख्योपादेयगतत्वाद्विवक्षितेति सिद्धम् ॥

आरब्धकाम्यकर्मणोऽपि समाप्ति नियमाधिकरणम् ।

सू० प्रक्रमात्तु नियम्येतारम्भस्य क्रियानिमित्तत्वात् ॥ २ ॥

काम्यकर्मकामार्थेन प्रक्रान्तं वीतायां फलेच्छायाम् अवाप्ते वा फले किं नियोगतः समापनीयं नेति चिन्त्यते "तत्राभीप्सितसिध्यर्थं साधनेषु प्रवर्तते। सिद्धे तस्मिंस्तदिच्छायां वीतायां किं प्रवर्त्तते॥ यदि मन्येत न फलार्थं कर्म किन्तु फलकामनायां निमित्ते कर्मैव कर्त्तव्यं, तस्य हि भाव्यता पदश्रुत्यैवावगम्यते वाक्यात्कामस्य तच्च दुर्बलं न चोपक्रममात्रेण चोदितं कृतं भवति समाप्तेः शास्त्रार्थत्वात्, न च पूर्वाधिकरणोक्तरीत्या नित्यानित्यसंयोगविरोधः काम्यानां नित्यत्वाभावात् अतः कामे निष्पन्ने निवृत्तेऽपि तन्निमित्तं कर्म कर्तव्यमिति, तैतदेवं न ह्यपुरुषार्थं कर्म भाव्यं भवतीत्युक्तं, न च फलान्तरं कल्पयितुं शक्यं श्रुत-हान्यश्रुतकल्पनयोरन्याय्यत्वात्, शिष्टविगर्हणान्तु अनृतवादभ्रान्तिः निमित्तं न च परमार्थतोऽनृतमस्ति शास्त्रार्थस्य सङ्कल्पितत्वान्निवृत्तायां च कामना-यामशास्त्रार्थत्वात्तस्मादसमापनीयमिति प्राप्ते ब्रूमः "न हि सम्भावनामा-त्राद्भ्रान्तिः कल्पयितुं क्षमा। सर्वस्मृतिषु तुल्यत्वादप्रामाण्यप्रसञ्जनात् तथा च निन्दावचनं प्रायश्चित्तं च युज्यते, तस्मात्क्रतुमुपक्रान्तं नियोगेन समापयेत्, तैत्तिरीया हि समामनन्ति "देवताभ्यो वा एष आवृश्च्यते यो यक्ष्य इत्युक्त्वा न यजते त्रैधातवीयेन यजेत न देवताभ्य आवृश्च्यत" इति।

आरब्धलौकिककर्मणः समाप्तेरनियमाधिकरणम्।

सू० लोके कर्माणि वेदवत् ततोऽधिपुरुषज्ञानम् ॥ ४ ॥

रथ्यगृहकर्मादि प्रक्रान्तं किमवश्यं समाप्यं नेति संशये तेषामपि शास्त्रीयत्वात् विहितमुपक्रान्तं नियमेन समापनीयमिति श्रुतिकल्पनाद्दे-वताभ्यो वा एष आवृश्च्यत इति देवताश्रयव्यापारमात्रस्य अवश्यसमा-पनीयत्वावगमात् गृहादीनामपि प्रक्रान्तानामावश्यकं समापनमिति प्राप्तेऽभिधीयते "अशास्त्रादेव हि प्राप्तिर्दृष्टार्थेषु गृहादिषु। तेन शास्त्रं न कल्प्येत पुरुषार्था हि देवता पुरुषार्था हि देवता गृहप्रदेशेषु निवेश्यते न तु गृहकर्मदेवताश्रयं तस्मान्न समापननियमः॥

कलञ्जन्यायः प्रतिषिद्धकर्मणामनुष्ठाने अनिष्टापाताधिकरणम् ।

सू० प्रतिषेधेष्वकर्मत्वात् क्रिया स्यात्प्रतिषिद्धानां विभक्तत्वादकर्मणाम् ॥ ५ ॥

"न कलञ्जमभक्षये"दित्येवमादिषु संशयः किं प्रजापतिव्रतवत्पर्युदासाश्रयणेनाभक्षणं भक्षणाभावसङ्कल्पः कल्प्यफलो विश्वजिदादिवद् विधीयते? उत भक्षणं प्रतिषिध्यते? प्रत्यवायपरिहारायेति यदि नञ्विशिष्टं भक्षणं विधिना सम्बध्यते ततः पर्युदासः । अथ नञ्विध्योः सम्बन्धस्ततः प्रतिषेधः, तत्र "भक्षणाव्यवधानेन नञ्विध्योर्नास्ति सङ्गतिः । भक्षणन्तु नञा युक्तमव्यवायाद्विधीयते ॥ श्रुत्या च विधिसम्बन्धो भक्षणस्य नञः पुनः पदान्तरत्वाद्वाक्येन श्रुतेर्वाक्यं च दुर्बलम् । तस्माद्भक्षणमेवेह नञा युक्तं विधीयते । तत्र भक्षणाभावोऽननुष्ठेयत्वादविधेय इति तद्धेतुः सङ्कल्पो विधीयते, स चाश्रुतफलः कल्प्येन फलेन सम्बध्यते. अतः फलकामाधिकारमेवंजातीयकमिति निष्कामानां याथाकाम्यम्, अत्रोच्यते "नञभक्षयत्योरिवन्तु स्वार्थहानिः प्रसज्यते । सङ्कल्पलक्षणा ह्यत्र श्रुतेरत्यन्तबाधनम् ॥ मत्पक्षे पुनः प्रत्यासत्तिमात्रबाधनं. न वा तदपि, किं तर्हि भक्षयेदिति पदं परिपूर्णं नञा सम्बध्यते भक्षयेच्चेति, भक्षयेदिति च भक्षणभावनायां प्रवर्तना गम्यते नञा सम्बद्धेन विधिना तद्विपरीतनिर्वर्तनाप्रतीतिः निवर्त्तना च निवृत्तिफलो व्यापारः, न च प्रेक्षापूर्वकारी पुरुषो रागतः प्रवर्तमानोऽसति प्रत्यवायफलत्वे निवर्तयितुं शक्यते इति श्रुतनिवर्तनान्यथानुपपत्त्या विषयीभूतभक्षणव्यापारस्य प्रत्यवायपरत्वं कल्प्यते, अतस्तत्परिहाराय सर्वेषामेवंजातीयकं वर्जयितव्यम् । ये तु नञर्थविषयस्य नियोगस्य भक्षणे प्रवृत्तस्य नियोज्यस्य लब्धत्वात् न प्रत्यवायकल्पना प्रमाणवतीत्याहुस्ते श्रुतार्थापत्तेः प्रमाणत्वोपपादनाच्चिरस्ताः । किञ्च भक्षणं नञर्थविशेषणत्वेनोक्तीर्णं न नियोज्यविशेषणम् आख्यातेन कर्तुरनभिधानात् उभयविशेषणत्वे चावृत्तिप्रसङ्गात् । ननु न ब्रूमः श्रुत्या नियोज्यविशेषणत्वं नञर्थविशेषणस्यैवार्थान्नियोज्यविशेषणतामाचक्ष्महे भक्षण-

प्रवृत्त एव हि तदभावे नियोक्तुं शक्यते नान्यः सत्यमेवं तथापि न नियोज्यविशेषणत्वे भवनस्य प्रमाणमस्ति यदि ह्येतावतैव नियोज्यविशेषणत्वमाश्रीयते ततः सर्वत्र जीवनं शक्तिश्च नियोज्यविशेषणे स्यातां, ततश्च तदवच्छिन्नस्य नियोज्यस्य लब्धत्वाद्विश्वजिदादौ स्वर्गकामादेरकल्पनं स्यात्, तत्र यत्किञ्चित्केन चिदुच्यते प्रयुक्तिलाघवाय फलकल्पनमिति तद्विधेधाधिकारेष्वपि समानमित्यास्तां तावत् ॥

गुर्वनुगमनादीनामुपनयनोत्तरकालकर्तव्यताधिकरणम् ।

सू० तस्मिंस्तु शिष्यमाणानि जननेन प्रवर्तेरन् ॥ ६ ॥

स्मार्ता यमनियमाः प्राङ्मुखो भुञ्जीत उदङ्मुखो मूत्रं कुर्यादित्येवमादयः किं जननप्रभृति प्रवर्तन्ते जाता यदा शक्नुयात्तदेत्यर्थः? उतोपनयनप्रभृती? ति संशयेऽनग्निसाध्यत्वादमन्त्रसाध्यत्वाच्चैषां शक्तमात्राधिकारत्वे प्राप्ते ब्रूमः उपनयनप्रभृति स्युरिति कुतः स्मरणात् स्मरन्ति हि उपनयनादिर्नियम इति तस्मादुपनीताधिकारः ॥

अग्निहोत्रन्यायः । अग्निहोत्रादियावज्जीवकर्मणां स्वकालकर्तव्यताऽधिकरणम् ।

सू० अभ्यासोऽकर्मशेषत्वात्पुरुषार्थो विधीयते ॥ ७ ॥

"यावज्जीवमग्निहोत्रं जुहोती"ति यावज्जीवं दर्शपूर्णमासाभ्यां यजेतेति श्रूयते तत्र संशयः किं सातत्येनानुष्ठानम्? उत सायं प्रातरग्निहोत्रं पौर्णमास्यमावास्ययोश्च दर्शपूर्णमासाविति संशयः तत्र जीवने निमित्ते कर्मविधानान्नैमित्तिके चासम्भाविताङ्गत्यागेऽप्यवैगुण्यात्कालस्य चाङ्गत्वात्तल्लोपेन सन्ततानुष्ठानं न्याय्यमिति प्राप्ते ब्रूमः "अङ्गत्वेऽपि च कालस्य न त्यागोऽन्याङ्गवत्कुतः । अनुपादेयरूपत्वात्तस्मिन्कर्मविधिर्यतः ॥ यद्धि प्रयोगविधिवशादुपादेयं तद्धि यथाशक्तीत्युपबध्यते कालस्य पुनरनुपादेयत्वादेषा हि । तत्र वचनव्यक्तिरस्मिन्काले प्राप्ते कर्मकर्तव्यमिति ततश्चार्थात्तत्कालमेव जीवनं निमित्तमिति, न कालान्तरानुष्ठानमेतेनाग्निविद्धे व्याख्याते, तयोरप्यध्ययनाधानविधिसिद्धयोः स्वीकरणात्प्रयोगविधिनाऽननु-

ष्ठाप्यत्वादेषा वचनव्यक्तिरग्निमान् विद्वांश्चाधिक्रियेतेति प्रत्यक्षमेव विद्यावतोऽधिकारश्रवणं "य एवं विद्वानग्निहोत्रमिति सर्वत्र श्रवणात्तस्मात्काले प्राप्ते विदुषोऽग्निमतश्चाङ्गान्तराणि यथासम्भवमुपसंहृत्यानुष्ठानम् ॥

अग्निहोत्रादिकर्मणां स्वकालावृत्त्या आवृत्त्यधिकरणम् ।

**सू० तेषामौत्पत्तिकत्वादागमेन प्रवर्तेत ॥ ८ ॥**

यदि कालशास्त्रानुरोधेन निमित्तसंकोचस्ततः कालशास्त्रस्य सकृदनुष्ठानेन सम्पादितत्वात्तद्वशेन सकृदेव सायंप्रातःकालयोः पौर्णमास्यमावास्ययोश्च कृतः शास्त्रार्थ इति न पुनः पुनरनुष्ठानं स्यात्, मैवं न हि कालशास्त्रवशाज्जीवनस्य निमित्तत्वं हीयते किन्तु तत्कालीनमेव जीवनं न कालान्तरीयमित्येतावत्, ततश्च तादृशस्यैव जीवनस्य पुनः पुनरावृत्तौ शास्त्रमपि पुनः पुनर्नैमित्तिके पुरुषं नियुङ्क्ते अतो निमित्तावृत्तावावृत्तिर्नैमित्तिकानाम् ॥

दर्शादौ भेदाद्यावृत्त्या होमावृत्त्यधिकरणम् ।

**सू० तथाऽन्तःक्रतुसंयुक्तानि[1] ॥ ९ ॥**

युक्तं नैमित्तिकेषु पुरुषार्थेषु निमित्तावृत्तावावृत्तिरिति, तत्र प्रत्यावृत्तिफलमन्यदन्यच्च निष्पत्स्यते क्रत्वर्थेषु तु भेदेन होमादिषु क्रतूपकारस्यैव साध्यत्वात्सकृत्कृतेनैव तत्सिद्धेरेकस्मिन्प्रयोगे भेदानावृत्तावपि न होमावृत्तिरिति विशेषं मन्यमानस्योत्तरं क्रत्वर्थेष्वपि शास्त्रेण निमित्तावृत्तावावृत्त्यवगमादावृत्तौ निमित्तस्यावृत्तेनैव होमेन सगुणः क्रतुः स्वफलाय पर्याप्नोतीति कल्पनादेषामपि निमित्तावृत्तावावृत्तिः ॥

गुर्वनुगमनादीनां प्रतिनिमित्तमावृत्त्यधिकरणम् ।

**सू० आचाराद्गृह्यमाणेषु तथा स्यात् पुरुषार्थत्वात् ॥ १० ॥**

गुर्वनुगमनादीनामाचारप्रमाणकानां गुरुगमनादिनिमित्तकानां किं निमित्तावृत्तावावृत्तिः स्यान्ने? ति संशये तत्र दृष्टार्था ह्येते अनुगमनाभ्युत्था-

---

१ क्रतुप्रयुक्तानि इति पाठान्तरम् ।

नाभिवादनादिभिः प्रीतो गुरुः सम्यग् विद्यां ददातीति तत्र यथाऽनुष्ठिते प्रीतिर्भवति तथा कर्तव्यं सकृदसकृद्वा न त्ववश्यमावर्तनीयमिति प्राप्तेऽभिधीयते "दृष्टार्थेष्वपि नियमाददृष्टाभ्युपगमात्तस्य च शास्त्रप्रमाणकत्वात्तद्वशेन निमित्तावृत्तावावृत्तिः ॥

ब्राह्मणत्रयविषयसोमविद्याप्रजाख्यत्रयाणां नित्यताधिकरणम् ।

सू० ब्राह्मणस्य तु सोमविद्याप्रजमृणवाक्येन संयोगात् ॥ ११ ॥

"सोमेन यजेत" "स्वाध्यायमधीयीत" "प्रजामुत्पादये"दिति श्रुतं सोमविद्याप्रजं किं नित्य? मुतानित्य? मिति संशयः तत्र यावज्जीवादितुल्यनिर्देशाभावात् ज्योतिष्टोमेन स्वर्गकामो यजेतेति च फलश्रवणाद्वसन्ते वसन्ते ज्योतिषा यजेतेति चास्य कालविधिपरत्वादध्ययनप्रजयोस्तु विश्वजिद्वत्स्वर्गकल्पनात्सप्तमे ब्रह्मवर्चसकाम इत्येवमादीनां चोपनयनगतानां फलानामुपनयनस्याध्ययनाङ्गत्वेन स्वयम्फलानपेक्षत्वादध्ययनफलत्वमेव न्याय्यम् । अतः फलकामाधिकारत्वमेवैषामिति प्राप्तेऽभिधीयते नित्यानीति कुतः "वीप्सायुक्तो वसन्तो हि निमित्तत्वेन गम्यते । यावद्वसन्तं नियमः सोमस्यातोऽवगम्यते ॥ यावद्वसन्तमभ्यासः काम्यस्यैवाथ चोद्यते यजेतेति पदेनैवं प्राप्नोत्यभ्यासलक्षणा ॥ तस्माद्वसन्ते निमित्ते विधानादागत आगते वसन्ते नियमेन सोमः कर्तव्य इति नित्यः, अध्ययनमप्यश्रुतफलमक्षरग्रहणादिना क्रमेण धर्माधर्मावबोधफलत्वात्तस्य चावश्यकत्वादावश्यकं ब्रह्मवर्चसादिकं त्वध्ययनाङ्गभूतोपनयनाश्रितसप्तवर्षादिगुणफलत्वादध्ययनफलमनाशङ्कनीयमेव, प्रजोत्पादनमपि अमृतानृणत्वफलश्रवणादनु"त्पाद्य तथा सुतानधोगच्छती"ति प्रत्यवायस्मरणान्नित्यमेव सोमविद्याप्रजम्, ऋणश्रुतिरपि सोमादीनामावश्यकत्वं दर्शयति, न च तत्र ब्राह्मणश्रवणात्तद्विषयमेवावश्यकत्वं विधिवाक्येषु विशेषाश्रवणात् ब्राह्मणग्रहणस्योपलक्षणार्थत्वादतस्त्रयाणामप्यावश्यकाः सोमादयः ॥

इति शास्त्रदीपिकायां षष्ठोध्यायस्य द्वितीयः पादः ॥ २ ॥

## अथ षष्ठाऽध्याये तृतीयः पाद आरभ्यते ॥

अथ नित्ये यथाशक्त्यङ्गानुष्ठानाधिकरणम् ।

सू० सर्वशक्तौ प्रवृत्तिः स्यात्तथाभूतोपदेशात् ॥ १ ॥

"यावज्जीवमग्निहोत्रं जुहुयात्" यावज्जीवं "दर्शपूर्णमासाभ्यां यजेत" "वसन्ते ज्योतिषा यजेतेति किमत्र सर्वाङ्गोपसंहारेणैवाधिकारः? उत यदा यावन्त्यङ्गानि शक्नोत्युपसंहर्तुं तदा तावद्भिरुपेतं प्रधानं कुर्वन्नधिक्रियेते? ति संशयः तत्र "समुच्चितानामङ्गानामित्थम्भावेन सङ्ग्रहः । सर्वाङ्गयुक्तमेवातः प्रधानं फलसाधनं" न चाफलसाधनेऽधिकारोऽस्ति अतो न हीनाङ्गस्य प्रयोगः उच्यते "नैमित्तिकं नियोगेन कर्तव्यमवगम्यते । निमित्तेन ततोऽशक्यहानेनापि प्रयुज्यते ॥ यावच्छब्दोपबद्धं हि जीवनं धातुसम्बन्धविहितेन णमुल्प्रत्ययेन सम्बन्धान्तरासम्भवान्निमित्तत्वेन यागानुरक्तभावनां प्रत्यवगम्यते दर्शपूर्णमासविशेषितश्च यजिः कालयोगिनामाग्नेयादीनामेव वाचकोनाङ्गानां निमित्तस्य चैतद्रूपं यत्तस्मिन्सति नैमित्तिकमवश्यं कर्तव्यम्, अतः प्रधानानुरक्ता भावना स्ववाक्यश्रुतनिमित्तवशप्राप्तवाश्यकत्वानुरोधेन यथासम्भवमङ्गानि गृह्णाति तावतैव शास्त्रवशात् फलसिद्धिरिति यथाशक्ति प्रयोगेणैवाधिकारः, स चायं न्यायस्तन्त्ररत्ने न्यायरत्नमालायां च प्रपञ्चितस्तीर्थान्तरं च निराकृतमित्युपरम्यते ॥

अङ्गवैकल्ये काम्यस्य निष्फलत्वाधिकरणम् ।

सू० काम्येषु चैवमर्थित्वात् ॥ २ ॥

काम्यानि कर्माण्यैन्द्राग्नमेकादशकपालं निर्वपेदित्यादीन्युदाहरणं प्रकृतावपि काम्यः प्रयोगः उदाहरणमेव, तत्रापि किं यथाशक्ति प्रयोगेणाप्यधिकारः? उत सर्वाङ्गोपसंहारेणैवे? ति विचारः तत्रासत्यपि निमित्ते प्रजाकामादिशब्दैरविशेषप्रतीतेरसमर्थानामप्यधिकार इति स्थितेऽपि तिर्यगधिकरणे पूर्वाधिकरणोपजनिताङ्गलोपकालुष्यबुद्धिः काम्येष्वपि लोपं मन्यते

अत्रोच्यते प्रज्ञाकामादिशब्दाः समर्थेऽप्यविरुद्धाः, न च कामना निमित्तं येनावश्यकत्वं शाब्दं स्यात् अङ्गानि तु शाब्दानि न शक्यन्ते बाधितुं नैमित्तिके पुनः शाब्दमावश्यकत्वं प्रधानस्येति तदविरोधेनाङ्गानि यथाशक्ति गृह्यन्त इति विशेषः ॥

द्रव्यभेदेऽपि कर्माभेदाधिकरणम् ।

सू० क्रियाणामाश्रयत्वाद् द्रव्यान्तरे विभागः स्यात् ॥ ३ ॥

अतः परमतिप्रसङ्गनिराकरणेन नैमि[1]त्तिके स्थापितस्य यथाशक्ति प्रयोगस्य शेषत्वेन प्रतिनिधिविचाराः प्रस्तोष्यन्ते तदुपोद्घातत्वेन त्विदं चिन्त्यते किं दर्शपूर्णमासादिषु नीवारादिद्रव्यान्तरं क्रियमाणं कर्मान्तरत्वमापादयति? उत द्रव्यान्तरेऽपि तदेव कर्म? ति यद्यन्यत्ततो न प्रतिनिधिरथ तदेव तदा द्रव्यान्तरं प्रतिनिधाय प्रयोक्तव्यं कर्म तत्र "द्रव्यस्यैव क्रिया नाम रूपं नार्थान्तरं ततः । तदात्मनश्च तद्भेदे न भवेद्भिन्नता कथम् उच्यते "तदाऽऽत्मनोऽपि त्वस्त्येव व्यतिरेकः क्रियानपि । जातिवद्गुणवच्चातस्तद्भेदेऽपि न भिद्यते" क्रियापि जात्यादिवद्देवदत्तादिभेदेऽपि चलति यजति दर्शपूर्णमासावनुतिष्ठतीत्येवमेकबुद्धिवेदनीया न भेदं प्रतिपद्यते न ह्यत्यन्ताभिन्नत्वं द्रव्यात् क्रियायाः येन तद्भेदाद्भेदः स्यात्, भेदोऽपि त्वस्त्येवानैकान्ताभ्युपगमात् अतो द्रव्यान्तरेऽपि क्रियाभेदाभावात्सिद्धः प्रतिनिधिः ॥

नित्यकर्मणोऽनित्यप्रारब्धकर्मणश्च द्रव्यापचारे प्रतिनिधिना समापनाधिकरणम् ।

श्रुतिप्रमाणत्वाच्छिष्टाभावेऽनागमोऽन्यस्याशिष्टत्वात् ॥ ४ ॥

दर्शपूर्णमासयोः श्रुतद्रव्यापचारे द्रव्यान्तरं प्रतिनिधाय प्रयोगः कर्तव्यो नेति विचारे न कर्तव्य इत्याह सर्वशक्त्यधिकरणे अशक्याङ्गत्याग उक्तः, न पुनरङ्गान्तरागमः, न च द्रव्यान्तरागमे प्रमाणमस्ति कर्मचोदना तावन्न द्रव्यं प्रयुङ्क्ते, यत्तु द्रव्यस्य प्रयोजकं व्रीहिभिर्यजेतेति तद् व्रीहीणामेव प्रयोजकं नान्यस्यातो नान्यागमः, स्यादेवं यदि व्रीहिशास्त्रं द्रव्यस्य

(१) नैमित्तिकेष्वपीति ।

विधायकं स्यात्कर्मचोदनया त्वाक्षिप्तं द्रव्यं व्रीहिशास्त्रेण नियम्यते "यदा त्वलाभात् व्रीहीणामुदास्ते व्रीहिचोदना। कर्मशास्त्रं तदा द्रव्यमन्यदाक्षिपति ध्रुवं" तस्मादस्ति प्रतिनिधिः ॥

देवतामन्त्रक्रियाणामपचारे प्रतिनिध्यभावाधिकरणम्।

सू० न देवताग्निशब्दक्रियमन्यार्थसंयोगात् ॥ ५ ॥

देवताऽग्नीन्द्रादिः, अग्निराहवनीयादिः शब्दो मन्त्रः क्रिया प्रयाजप्रोक्षणादिरदृष्टार्था दृष्टार्थेषु त्ववघातादिषु अस्त्येव प्रतिनिधिः नखनि[१]र्भेदनादिभिरपि तत्कार्यसिद्धेः, तदेवं देवतादीनामपि विस्मरणादिनाऽपचारे किं देवतान्तरमग्न्यन्तरं शब्दान्तरं क्रियान्तरं च प्रतिनिधेय? मुत नेति पूर्वेण न्यायेन प्रतिनिधौ प्राप्ते ऽभिधीयते यत्र हि प्रतिनिधीयमानं मुख्यस्य कार्यं साधयति तत्र प्रतिनिधिर्न चेह तथा सम्भवति, देवता तावद्विधिचलणा न चान्या नीयमाना देवता भवति, न चादेवतायै सङ्कल्प्यमाने यागो भवति, अतो न देवताकार्यमन्यतः सम्भवति, तथाऽऽहवनीयादिरदृष्टार्थो विनाऽऽप्याधारेण प्रक्षेपसम्भवात्, न च तददृष्टमन्येन सिध्यतीति प्रमाणमस्ति नीवारादिना तु पुरोडाशनिर्वृत्तिः प्रत्यक्षेणोपलभ्यते, मन्त्रस्तु यद्यपि प्रकाशनार्थत्वात् दृष्टार्थस्तथाऽपि तस्य ध्यानादिनाऽपि सिद्धेर्न मन्त्रान्तरं शब्दान्तरं वा प्रतिनिधेयम् अवश्यं हि तदर्थप्रकाशकं शब्दान्तरं प्रतिनिदधता पूर्वं तदर्थस्तु स्मर्तव्यः तस्मिंश्च स्मृते कृतकरत्वाच शब्दान्तरं प्रतिनिधेयम्। ये तु मन्त्रनियमकृतमदृष्टं न तदन्येन सिध्यतीत्यप्रतिनिधिमाहुः तेषां व्रीह्यपचारेऽपि तत्कृतनियमस्यान्यथासिद्धेर्द्रव्यान्तरप्रतिनिधिर्न सिध्येत् प्रयाजादिकार्यस्याप्यन्यतः सिद्ध्यनवगमान्नास्ति प्रतिनिधिः ॥

प्रतिषिद्धद्रव्यस्य प्रतिनिधित्वाभावाधिकरणम्।

सू० प्रतिषिद्धं चाविशेषेण हि तच्छ्रुतिः ॥ ६ ॥

"अयज्ञिया वै माषा वरकाः कोद्रवा" इति प्रतिषिद्धयज्ञसाधनभा-

(१) नखनिर्लुञ्चनादिभिरिति पा०।

वानां माषादीनां प्रतिनिधित्वेनोपादानं न वेति संशयः यज्ञाङ्गत्वं माषादीनां प्रतिषिध्यते, प्रतिनिधित्वे तु न माषस्य यज्ञाङ्गत्वं किन्तु तद्गतस्य व्रीह्याद्यंशस्यातः प्रतिनिधेया माषादयः, नैतदेवम् अयज्ञिया इति यज्ञार्हतामात्रं प्रतिषिध्यते प्रतिनिधित्वे चावर्जनीयं साधनत्वम्, अतो न तेषां प्रतिनिधित्वम् ॥

स्वामिनः प्रतिनिध्यभावाधिकरणम् ।

सू० तथा स्वामिनः फलसमवायात्फलस्य कर्मयोगित्वात् ॥ ७ ॥

प्रोषिते कार्यान्तरव्यापृते मृते वा यजमाने याजमानपदार्थकरणाय पुरुषान्तरं प्रतिनिधेयम्? उत नेति, प्रतिनिधौ प्राप्ते उच्यते मृते तावत्कः पुरुषान्तरं प्रतिनिदध्यात्को वाऽध्वर्य्वादीन् प्रवर्त्तयेत् स्वयं प्रवर्तमानेषु च तेषु न मृतस्याकर्त्तुः फलं सिध्यति, यदि तु प्रतिनिहित एव फलमपि लभते ततोऽसौ मुख्य एव स्यान्न प्रतिनिधिः, पत्नी त्वस्वतन्त्राऽनग्निश्च मृते पत्यौ पुरुषान्तरमप्रतिनिधाय प्रयो[1]क्ष्यतीत्यनाशङ्कनीयमेव प्रोषितेऽन्यत्र व्यापृते वा यजमाने ये तावत्परार्था अन्वाधेयणादयः तेषु यथासमाख्यमध्वर्य्वादय एव कर्त्तार इति न प्रतिनिधिना कार्यं, फलिसंस्कारास्तु अन्येन क्रियमाणा न यजमानस्य योग्यतां जनयन्तीत्यनर्थकः प्रतिनिधिः ॥

सत्रन्यायः । सत्रे कस्यचित्स्वामिनोऽपचारे प्रतिनिध्यादानाधिकरणम् ।

सू० बहूनां तु प्रवृत्तेऽन्यमागमयेदवैगुण्यात् ॥ ८ ॥

सप्तदशावराः सत्रमासीरन्निति सप्तदशसु प्रवृत्तेषु यदा कश्चिन्म्रियते तदा तत्स्थानेऽन्यः प्रतिनिधेयः? उत नेति न स्वामिनः प्रतिनिधिरित्युक्तम् एवं प्राप्तेऽस्ति प्रतिनिधिरित्याह काम्यमपि कर्म यदा प्रवृत्तं भवति तदाऽवश्यं समापनीयमित्युक्तम्, आवश्यकत्वाच्च यथाशक्ति प्रयोक्तव्यम् अतो यद्यपि ये यजमानास्ते ऋत्विज इति यजमानशब्दस्य स्वा-

(१) प्रयोक्ष्यते इत्यात्मनेपदघटितस्यैव साधुत्वे प्रयोक्ष्यतीति सर्वपुस्तकपाठो भ्रष्टः "प्रोपाभ्यां युजेरयज्ञपात्रे"ष्विति पाणिनीयानुशासनोपरोधात् ।

मिभूतकर्तृत्ववचनत्वादेक[1]वचनोपात्तयोः स्वामित्वकर्तृत्वयोरार्त्विज्योद्देशेन विधिसम्भवात्स्वामिभिरेवार्त्विज्यं कर्त्तव्यम् आनीयमानश्चोपरितनाधिकरणन्यायेन स्वामी न भवति तथाऽपि तन्मात्रं हित्वा कर्त्रंशे साप्तदश्यं समापयितुमागमयितव्यं पुरुषान्तरम् ॥

सत्रे प्रतिनिहितस्यास्वामित्वाधिकरणम् ।

सू॰ स स्वामी स्यात्तत्संयोगात् ॥ ९ ॥

योऽसावानीतः स किं स्वामी फलभागी स्यात्? उत कर्त्तैव? इति संशये स्वामिस्थानोपनिपातात्स्वामित्वं मन्यमानस्योत्तरं योऽह्यारभ्य समापयति तस्य फलम् अयं पुनर्मध्ये प्रविष्टो न फलं प्राप्तुमर्हति, न चासौ र्विधिवशात्प्रवृत्तो येन विधिप्रामाण्यात्फलं लभेत इतरैस्तु स्वामिभिरसौ सामादिभिः संख्यासम्पत्त्यर्थमानीतः तस्मान्नास्य स्वामित्वम् ॥

सत्रे प्रतिनिहितस्य यजमानधर्मग्राहित्वाधिकरणम् ।

सू॰ स तद्धर्मा स्यात् त[2]त्कर्मसंयोगात् ॥१०॥

किमानीतस्य फलिसंस्काराः कर्त्तव्या नेति विचारः फलप्रतिग्रहणयोग्यतासंजननार्था हि ते न चानीतस्य फलमित्युक्तम्, अतो नास्य फलिसंस्कारा इति, सत्यं नास्य फलम् इतरेषां तु सप्तदशकर्तृकैः संस्कारैर्योग्यता जन्यते सर्वत्र कर्त्रंशे साप्तदश्यनिवेशादतस्तत्सिद्ध्यर्थं प्रतिनिधिरपि संस्कारान्कुर्यात् ॥

श्रुतद्रव्यापचारे तत्सदृशस्यैव प्रतिनिधित्वाधिकरणम् ।

सू॰ सामान्यन्तच्चिकीर्षा हि ॥ ११ ॥

श्रुतापचारे प्रतिनिध्युपादानं स्थितं तत्र यत्किञ्चित्प्रतिनिधातव्यम्? उत सदृशमेवे? ति संशयः, तत्र आग्नेयचोदना तावद्यत्किञ्चिद् द्रव्यमाक्षिपेत् व्रीहिशास्त्रं पुनर्व्रीहिविषयं नान्यगोचरम् अतः केन प्रमाणेन सदृशस्योपसंग्रहः "व्रीहिचोदनया सत्यं व्रीहिजातिर्विधीयते। सा च द्रव्य-

(१) एक पदोपात्तयोरिति पा॰ ।

(२) कर्मसंयोगादिति पाठान्तरम् ।

परिच्छेदद्वारेणाङ्गत्वमृच्छति । तच्च द्रव्यं परिच्छिन्नमनेकावयवात्मकम् अवयवा एव ह्येकद्रव्यतामापन्ना अवयविशब्दाभिधेया जात्या परिच्छिद्यन्ते न त्वत्यन्तमर्थान्तरम्, अतस्तैरेवावयवैर्जात्याश्रयभूतैः कर्म साधनीयं तत्र यदि सदृशमुपादीयते ततस्तेषामवयवानां कतिपया लभ्यन्ते जातिमात्रमवयवान्तरमात्रं च परित्यक्तं भवति, विसदृशोपादाने पुनः समस्तपरित्यागः स्यादतो व्रीहिशास्त्रमपि यथासम्भवमनुपपादयितुं सदृशोपादानम्, एवं सुसदृशलाभे मन्दसदृशस्योपादेयं सुसदृशे बह्ववयवानुग्रहात् ॥

द्रव्यापचारे वैकल्पिकद्रव्यान्तरानुपादानाधिकरणम् ।

निर्देशात्तु विकल्पे यत्प्रवृत्तम् ॥ १२ ॥

वैकल्पिकेषु व्रीहियवादिषु एकेन व्रीहिणा प्रक्रान्ते प्रयोगे यदि तस्यापचारो भवति तदा किं वैकल्पिकान्तरमुपादेयम् ? उत व्रीहिसदृश ? मिति संशये मुख्ये सति प्रतिनिध्ययोगाद्यवोपादाने प्राप्ते ब्रूमः "वैकल्पिकेषु यावदेकमनुपक्रान्तं तावदितरेषां प्राप्तिरुपक्रान्ते तु तस्मिंस्तदेवाङ्गमितरदनङ्गमेव व्रीहिभिश्च सङ्कल्प्य यवैः कुर्वाणो नानृतं वदेदिति कत्वङ्गभूतं प्रतिषेधमतिक्रामेदतो व्रीहीणामेवाङ्गत्वात्तत्सदृशमेवोपादेयम् ॥

पूतीकस्य सोमप्रतिनिधित्वाधिकरणम् ।

सू॰ वचनाच्चान्याय्यमभावे तत्सामान्येन प्रतिनिधिरभावादितरस्य ॥ १३ ॥

"यदि सोमं न विन्देत पूतीकानभिषुणुया"दिति किमयमयमभावे विधिः सोमाभावे पूतीकैर्यागं कुर्यादिति सोमजातिरिव पूतीकजातिर्यागसाधनपरिच्छेदकत्वेन विधीयते ? उत प्रतिनिधिनियमः ? यः सोमजातिपरिच्छिन्नात्सकलानवयवानुपादातुमशक्तो विकलानुपादित्सते स पूतीकगतानिति पूतीकत्वं सोमावयवोपलक्षणं न साधनोपलक्षणमिति तत्राभावे विधिरिति प्राप्ते नियम इत्याह "साधनत्वं हि पूतीकानामत्यन्ताप्राप्तं विधातव्यं प्रतिनिधिनियमे तु पाक्षिकप्राप्तानां नियममात्रं विधीयत इति

लाघवं भवति । ननु सुसदृशानामन्येषां सम्भवादीषत्सदृशाः पूतीकापचे नैव प्राप्नुवन्तीति कथं नियम्यन्ते उच्यते सौसादृश्यं हि न प्रतिनिधेः प्रापकं किं तर्हि नियामकं मुख्याभावात्तु प्रतिनिधिप्राप्तिस्तस्यां चावस्थायः यावन्न्यायेन सदृशं नियन्तुमुपक्रम्यते तावद्वचनेनासुसदृशाः पूतीका नियाम्यन्ते अतः प्रतिनिधिनियमोऽयम् ॥

प्रतिनिध्यपचारे उपात्तद्रव्यसदृशस्य पुनःप्रतिनिधित्वाधिकरणम् ।

सू० न प्रतिनिधौ समत्वात् ॥ १४ ॥

यदा प्रतिनिधिना प्रयोगे प्रक्रान्ते तस्यापचारो भवति तदा किं प्रतिनिधिसदृशमुपादातव्यम्? उत मुख्यसदृशमिति संशये वैकल्पिकन्यायेन प्रक्रान्तस्यैव तत्र प्रयोगङ्गत्वात्तत्सदृशमेवोपादातव्यं न मुख्यसदृशं नैवं, न हि नीवाराणामङ्गत्वमस्ति प्रमाणाभावात्, व्रीह्यवयवांस्तु तद्गतानुपाददानो नान्तरीयकतया नीवारानुपादत्ते नाङ्गतया अतस्तदपचारे पुनरपि श्रुतावयवलाभाय व्रीहिसदृशमेवोपादेयं ॥

श्रुतस्यापि प्रतिनिधेरपचारे उपात्तसदृशस्य पुनः प्रतिनिधित्वाधिकरणम् ।

सू० स्याच्छ्रुतिलक्षणे नियतत्वात् ॥ १५ ॥

यद्यपि प्रमाणाभावान्नीवाराणामनङ्गत्वं श्रुतिलक्षणस्य पूतीकादेरङ्गत्वात्तस्य प्रक्रान्तस्यापचारे तत्सदृशमेवोपादेयं न सोमसदृशं नैवं न हि श्रुतिः पूतीकानामङ्गत्वमाह तद्गतानां सोमावयवानां प्रतिनिधिनियमो ह्ययं नाभावे विधिरित्युक्तम्, अतस्तदपचारेऽपि सोमसदृशदृशमेवोपादेयम् ॥

मुख्यापचारे तत्प्राप्तौ तस्यैवोपादानाधिकरणम् ।

सू० मुख्याधिगमे मुख्यमागमो हि तदभावात् ॥ १६ ॥

यदा मुख्यमलभ्यं मत्वा प्रतिनिधिमुपादातुं प्रस्थितो यद्यन्तरा मुख्यं लभते तदा किं मुख्यमेवोपाददीताथ वा प्रतिनिधि? मिति प्रतिनिधेः सङ्कल्पितत्वाल्लब्धमुख्यमनादृत्य प्रतिनिधिमेवोपाददीतान्यथा मिथ्यासङ्-

त्वापत्तेः । उच्यते यथाशक्ति शास्त्रार्थं सम्पादयामीत्येवं सङ्कल्पयितव्यं न प्रतिनिधिस्वरूपं, न च मुख्ये सति प्रतिनिधिः शास्त्रार्थो भवति अतो मुख्याधिगमे तदेव स्यात् ॥

प्रतिनिधिना प्रारब्धे कर्मणि मुनद्रव्यलाभेऽपि प्रतिनिधिनैव समापनाधिकरणम् ।

सू० प्रवृत्तेऽपीति चेत् ॥ १७ ॥

यदा पुनर्मुख्यं खदिरमलब्ध्वा प्रतिनिधिं कदरमुपादाय तक्षणादिषु कतिपयेषु संस्कारेषु कृतेषु प्राक् पशुनियोजनात् खदिरं लभते तदा किमुपात्तेन प्रतिनिधिना कार्यं कुर्यात्? उत तत्त्यागेन मुख्यमुपादाय संस्कारांश्च पुनः कृत्वा तत्रैव पशुं नियुञ्जीते? ति संशयस्तत्रोपात्ते प्रतिनिधौ निवृत्तव्यापारं शास्त्रं नान्यदुपादापयति तस्माच्च मुख्यसंग्रह इति प्राप्तेऽभिधीयते नोपादानपरं शास्त्रं येन तस्मिन् कृते निवृत्तव्यापारं स्यात् प्रधानानुष्ठानार्थं शास्त्रं तच्च प्रधानं सति मुख्ये प्रतिनिधिना क्रियमाणं विगुणं स्यात् अतः संस्कृतमपि कदरं हित्वा खदिरे एव पशुर्नियोज्य, एवं व्रीह्यादिषु द्रष्टव्यम् ॥

सू० नानर्थकत्वात् ॥ १८ ॥

कृते प्रतिनिधिना नियोजने यदा मुख्यमुपलब्धं तदा कृतमपि नियोजनं साद्गुण्याय पुनः खदिरे कर्तव्यमिति हि मन्वानस्योत्तरं कृते नियोजने लब्धोऽपि खदिरोऽनर्थक एव नियोजनार्थं हि तदुपादानं तच्च कृतं न गुणानुरोधेनावर्त्तयितव्यम् अतो नादर्तव्यः खदिरः अथवा सूत्रद्वयमिदमेकाधिकरणं प्रवृत्तेऽपि प्रधाने मुख्योपादानमिति चेन्नार्थकत्वादिति ॥

सत्यपि संस्कारयोग्येऽमुख्ये मुख्यस्यैवोपादानाधिकरणम् ।

सू० द्रव्यसंस्कारविरोधे द्रव्यं तदर्थत्वात् ॥ १९ ॥

यदा पुनस्तनुत्वात्तक्षणादिसंस्काराणामयोग्यः खदिरो नियोजनमात्रे योग्यः कदरश्च महान्संस्कारयोग्यस्तदा कस्योपादानमिति खदिरोपादाने संस्काराणां बहूनामत्यन्तहानिः, कदरे तु तेषामनुग्रहः खदिर-

शास्त्रमपि किञ्चिन्न्यूनं सम्पादितं भवति ततस्तस्योपादानं, नैतदेवं बहवोऽपि हि द्रव्यार्था एव संस्कारास्तेषां नान्यत्प्रयोजनं तद्वशेन ततो द्रव्यपरित्यागो न युज्यते । "ततः संस्कारहानेऽपि खदिरे स्याद्वियोजनं तक्षणादीनि लुप्येरन् प्रधानेन विरोधतः" ॥

प्रयोजनायोग्यस्य मुख्यस्य सत्त्वेऽपि प्रतिनिध्यादानाधिकरणम् ।

सू० अर्थद्रव्यविरोधेऽर्थो द्रव्याभावे तदुत्पत्तेर्द्रव्याणामर्थशेषत्वात् ॥ २० ॥

यदा पुनरपि [१] तनुत्वाद्वियोजनस्याप्ययोग्या खदिरलता भवति तदाऽपि किं मुख्यत्वात्सैवोपादेया नेत्याह न हि तयोपात्तयाऽपि कश्चिदर्थः कार्याक्षमत्वात् अतस्तादृशे लब्धेऽपि तदनादरेण प्रतिनिधिरेव कदरः कार्यक्षम उपादातव्यः ॥

प्रधाननिर्वाहकत्वेऽङ्गनिर्वाहापर्याप्तस्यापि मुख्यस्योपादानाधिकरणम् ।

सू० विधिरप्येकदेशे स्यात् ॥ २१ ॥

दर्शपूर्णमासयोर्यदा श्वशफपरिमाणाय शेषकार्येभ्यश्चापर्याप्ताः पुरोडाशजातिमात्राभिव्यक्तिसमर्था व्रीहयो ऽल्पा लभ्यन्ते तदा किं तैरेव पुरोडाशः कर्तव्य? उत नीवारैरिति संशयः तत्र "भूयसां शेषकार्याणां माभूदत्यन्तबाधनम् । एकस्य व्रीहिशास्त्रस्य किञ्चिद्बाधस्तु युज्यते" । नीवारोपादाने व्रीहिशास्त्रमेकं विकलं भवति व्रीह्युपादाने पुनर्भूयसामत्यन्तबाधः, न च व्रीहीणां प्रधानाङ्गत्वं येन द्रव्याङ्गभूतेभ्यः शेषकार्येभ्यः अङ्गगुणविरोधन्यायेन बलीयस्त्वं स्यात् व्रीहीणामपि पुरोडाशप्रकृतितया तदङ्गत्वात्, उच्यते "व्रीहयोऽपि पुरोडाशभूता यागस्य साधनम् । तद्वैकल्ये प्रधानस्य गुणहानिः प्रसज्यते" व्रीह्यवयवा एव पुरोडाशभावापन्ना यागं साधयन्ति ते च नीवारोपादाने विकलाः स्युस्ततश्च प्रधानवैगुण्यं स्यात्, तस्माच्छेषकार्याण्यनादृत्य व्रीहिभिरेव पुरोडाशः कर्त्तव्यः ॥

इति शास्त्रदीपिकायां षष्ठाऽध्यास्य तृतीयः पादः ॥ ३ ॥

---

[१] यदा पुनरति तनुत्वादिति पा० ।

## अथ षष्ठाध्यायस्य चतुर्थः पाद आरभ्यते ॥

अवत्तनाशे पुनरवदानार्थं प्रतिनिध्यादानाधिकरणम् ।

**सू० शेषाद् द्व्यवदाननाशे स्यात्तदर्थत्वात् ॥१॥**

पूर्वस्मिन्पादे यथाशक्ति प्रयोगगतो विचारो वृत्तः, अतः परं पादद्वयेन प्रायश्चित्ताधिकारश्चिन्त्यते कीदृशेन निमित्तेन कस्मिन्नैमित्तिके प्रायश्चित्तेऽधिक्रियत इति, तत्र तावदिदं चिन्त्यते दर्शपूर्णमासयो"र्मध्यादवद्यति पूर्वार्द्धादवद्यती"ति श्रूयते यदा चावत्तस्य नाशदोषापहारादि भवति तदा किं यस्य सर्वाणि हवींषि नश्येयुर्दुष्येयुरपहरेयुर्वा आज्येनैता देवताः परिसंख्याय यजेतेति हविर्विनाशादिनिमित्तेन चोदिताज्ययागेनाधिक्रियते? उत तस्यामवस्थायां शेषादेव पुनरवदेयम्? आज्यं तु निःशेषनष्टे हविषि चोद्यत इति, किं प्राप्तं विनष्टे द्व्यवदाने पुनर्मध्यपूर्वार्द्धसम्भवात् तावन्मात्रस्य च शास्त्रार्थत्वात्तत एवावदेयं, न हविरन्तरापेक्षा हविरन्तरापेक्षायां चाज्यं विधीयते न स्थित एव हविषि आज्यचोदना तस्माच्छेषादवदेयम् एवं प्राप्ते ब्रूमः "कृत्स्नं खलु पुरोडाशं प्रकृत्य श्रूयते वचः । मध्यादवद्यतीत्येतद्विकलाचावगम्यते ॥ कृत्स्नस्य हि पुरोडाशस्य यो मध्यदेशस्तदपादानको यस्तस्योपरितनोऽङ्गुष्ठपर्वमात्रो ऽवयवः सोऽवदातव्यः । यस्तु तस्याधस्तनोऽवयवः सोऽवदेयस्यापादानभूतः, न त्वसाववदेयः, अतो नासौ हविः । यत्तु हविस्तद्विनष्टं तद्विनाशे च हविरन्तरमुत्पाद्यं यदाऽपि समस्तपुरोडाशसाध्योयागस्तदापि द्व्यवदाननाशे तस्य विकलत्वादविकलं हविरन्तरमुत्पाद्यं तत्तु न्यायतः पुरोडाशान्तरं वचनात्त्वाज्यं भवति न च यस्य सर्वाणीति वचनात्सर्वेषां हविषां विनाश आज्यमिति भ्रमितव्यं हविर्विनाशस्य निमित्तत्वात् सर्व-शब्देनाविशेषणात् ॥

स्विष्टकृदर्थस्यावत्तस्य नाशे पुनरवदानाधिकरणम् ।

**सू० अपि वा शेषभाजां स्याद्विशिष्टकारणत्वात् ॥ २ ॥**

स्विष्टकृदिडार्थस्य नाशः किं शेषावदानस्य निमित्त? मुत नेति तत्र तन्नाशे शेषादवदेयं यागशेषप्रतिपत्त्यर्थत्वात् विनष्टेऽपि तद्द्रव्ये पुन

शेषसद्भावात्पुनरवदाय संस्कर्तव्यं सत्यं, विद्यते शेषः स त्वागामिप्रतिपत्त्यन्तरगृहीतत्वात् न नष्टावयवपूर्वप्रतिपत्त्या सम्बध्यते, यस्त्वंशस्तस्य प्रतिपाद्यः स विनष्टः, न च द्रव्यान्तरोत्पत्त्या शङ्का शेषप्रतिपत्त्यर्थानां द्रव्यान्तरे क्रियमाणानामानर्थक्यात, स्विष्टकृत्तु यद्यप्यपूर्ववाँस्तथाप्येकदेशद्रव्यत्वात् द्रव्यान्तरस्याप्रयोजकः, वाचनिकेन तु हविर्विनाशादिनिमित्ते चोदितेनाज्येन तदनुष्ठानमिष्टमेव, इडाद्यर्थगृहीतस्य तु हविष्ट्वाभावात्प्रतिपत्तिव्यतिरिक्तापूर्वाभावाच्च लोप एव न्याय्यः ॥

ऋत्विजामेव शेषभक्षणाधिकरणम् । सू० निर्देशाच्छेषभक्षोऽन्यैः प्रधानवत् ॥ ३॥

शेषप्रसङ्गादिदमधिकरणं दर्शपूर्णमासयोः शेषभक्षास्ते किम् ऋत्विग्भ्योऽन्यैः कर्तव्याः? उत ऋत्विग्भिरे? वेति संशयः तत्र कर्मकरत्वात् ऋत्विजां सर्वभक्षेषु प्राप्तानामिडायां पुनः श्रवणमस्ति "यजमानपञ्चमा इडां भक्षयन्ती"ति तद् भक्षान्तरपरिसंख्यार्थमिडामेव ते भक्षयन्तीति तस्मादन्येष्वन्ये भक्षयितार इत्याशङ्क्य निराक्रियते यजमानस्याकर्मकरत्वेनाप्राप्तस्य प्रापकमिदं वचनम् अतोऽपरिसंख्यातत्त्वात् भक्षान्तराणान्तेष्वपि प्रकृता एव कर्तारः ॥

कृत्स्नैकदेशभेदे प्रायश्चित्तानुष्ठानाधिकरणम् । सू० अर्थसमवायात्प्रायश्चित्तमेकदेशेऽपि ॥ ४ ॥

दर्शपूर्णमासयोः कपालमधिकृत्य श्रूयते "भिन्ने जुहोती"ति तत्र संशयः किं कृत्स्नभेदो निमित्तम्? उतैकदेशभेदनमुतोभय? मिति "तत्रैकदेशभेदस्य नित्यत्वान्न निमित्तता । कादाचित्कस्तु कृत्स्नस्य भेदोगच्छेन्निनिमित्तताम् ॥ भिदुराणां हि द्रव्याणां मिथः संघर्षणेन नित्यः केनाप्यंशेन भेद इति न निमित्तत्वं सम्भवति, अतः कृत्स्नभेद एव निमित्तं, नैवं, न हि संघर्षणमात्रात् भिन्नबुद्धिर्भवति संघृष्टमिति हि तदा मतिर्भवति, न भिन्नमिति, भेदनं चेह निमित्तं तच्चैकदेशेऽप्यनित्यत्वान्निमित्तं, भवत्येव, द्वितीयपक्षवादी तु मन्यते "होमोऽयं भिन्नसंस्कारो भेददोषनिवर्हणात् । सन्निपत्योपकारित्वं तथा सति हि लभ्यते । आरादुपक्रियातश्च न्याय्या स्यात्सन्निपा-

तिता। सन्निपातित्वपक्षे तु वाक्यं स्याद्विनियोजकम्। आरादुपक्रियात्वे तु प्रक्रिया विनियोजिका। कार्यक्षमश्च संस्कार्यः कृत्स्नभिन्नं न तत्क्षमम्" न हि सर्वथा भिन्नं कपालम् अधिश्रयणयोग्यं भवति अकार्योपयोगिनश्चानर्थकः संस्कारस्तस्मात्तत्कार्याविरोधेन यदा कियताऽप्यंशेन भेदो भवति तदैव होमो भवति इति प्राप्ते ब्रूमः "संस्कारत्वे भवेदेवं न त्वियं भिन्नसंस्क्रिया। संस्कार्यत्वे हि भिन्नस्य निमित्तत्वं न लभ्यते। निमित्ताभावतो होमो नित्यमङ्गं क्रतोर्भवेत्। नित्यश्चानित्यसंस्कार्यसम्बन्धं लभते कथम्"॥ यदा हि भिन्नं संस्कार्यत्वेनोद्दिश्य तत्संस्कारार्थत्वेन होमो विधीयते तदा भिन्नशब्दस्य संस्कार्यप्रतिपादनोपक्षयान्न निमित्तपरत्वं स्यात्, असति च निमित्ते होमोऽयं नित्याङ्गं स्यात्तदेवमापद्यते, नित्यं च दर्शपूर्णमासयोर्होमेनोपकुर्याद्भिन्नकपालसंस्कारद्वारेणेति, न चैतत्सम्भवति भिन्नस्य कादाचित्कत्वेन नित्यवत् क्रत्वङ्गभावात्सोऽयं नित्यानित्यसंयोगविरोधः, तस्माद्भेदननिमित्ते होमो विधीयते, स चाविशेषादेकदेशभेदकृत्स्नभेदेऽपि स्यात्॥

क्षामेष्टिन्यायः। क्षामे सर्वदाहे प्रायश्चित्तानुष्ठानाधिकरणम्।

सू॰ क्षामे तु सर्वदाहे स्यादेकदेशस्यावर्जनीयत्वात्॥ ५॥

"यस्य पुरोडाशः क्षायति तं यज्ञं निर्ऋतिर्गृह्णाति यदा तद्धविः संतिष्ठते। अथ तदेव हविर्निर्वपेद्यज्ञो यज्ञस्य प्रायश्चित्ति"रिति पुरोडाशक्षाणनिमित्तः पुनःप्रयोगः कृत्स्नैकदेशक्षाणयोरविशेषेण भेदनहोमवत्स्यादिति प्राप्तेऽभिधीयते क्षामे हविषि यत्प्रायश्चित्तं तत्र पूर्ववत्किन्तु सर्वदाहे स्यात्कुतः एकदेशक्षाणस्यावर्जनीयत्वेन नित्यत्वान्निमित्तत्वयोगात्। अथावर्जनीयदाहातिरिक्तोदाह एकदेशेऽपि वर्तमानो निमित्तं स्यादित्युच्यते तत्र अपरिज्ञानादिहावर्जनीयोदाहोनाधिक इति तस्मात्सर्वक्षाणमिह निमित्तम्॥

एकहविरार्त्तावपि पञ्चशरावनिर्वापाधिकरणम्।

सू॰ यथाश्रुतीति चेत्॥ ६॥

दर्शपूर्णमासयोर्दोहौ प्रकृत्य श्रूयते "यस्योभयं हविरार्तिमार्च्छेदैन्द्रं पञ्चशरावमोदनं निर्वपे"दिति अत्र संशयः किमुभयार्तौ पञ्चशरावः? उत

अन्यतरार्तावपी?ति यद्यधिकरणन्यायेनोद्देश्यस्य निमित्तस्य विशेषणमविवक्षितमिति स्थितमेव न तु निमित्तस्वरूपमप्यविवक्षितमिति, इह तु यथा नार्तिमात्रं निमित्तं न हविर्मात्रं, मिलितं तु निमित्तमेवमुभयशब्दाम्नानात् त्रयमपि मिलितं निमित्तमस्तु. तस्मादुभयार्तौ पञ्चशराव इति प्राप्ते ब्रूमः "यच्छब्दोपक्रमं यावन्निमित्तं पर्यवस्यति। तावद्ग्राह्यं ततोऽन्यत्तु श्रुतमप्यविवक्षितम्॥ यस्यार्तिमार्च्छेदित्येतावता यत्किञ्चिदार्तिं गम्यते तच्च नित्यं निमित्तं न भवितुमर्हति सर्वस्य हि सर्वदा यत्किञ्चिदार्तिं भवति अन्ततश्चिन्तितनिर्मिषितादि तथा यस्य हविरिति हविषोऽपि नित्यत्वादतोऽवश्यमार्त्या हविर्विशिष्टव्यं, तावता च निमित्तप्रतीतिपर्यवसानादुभयपदं न निमित्तरूपे न प्रविष्टम्। अथोभयविशिष्टमेव हविर्निमित्तं नार्तिविशिष्टमित्युच्येत तदपि नित्यम्। अथ यस्योभयमार्त्तमित्यार्तिविशिष्टमुभयं तद्विशिष्टा वार्त्तिर्निमित्तं न हविः तदयुक्तं यस्योभयमार्तमिति किं तदुभयमित्याकाङ्क्षा स्यात्, तस्माद्धविःशब्दार्तिशब्दौ तावदवश्यं विवक्षितौ भवतु हविर्विवक्षा तत्तु उभयपदसन्निधानात्तद्विशिष्टं सदार्त्या सम्बध्यते न स्वरूपेणेति चेन्न यथैव हविःशब्द आर्च्छेदित्यनेनाख्यातेन सम्बध्यते तथोभयपदमप्यसमस्तत्वात्तेनैव सम्बध्यते न हविषा नामपदानां परस्परासम्बद्धानामाख्यातेन सम्बन्धात् तत्र यदि यस्य हविरार्त्तं यस्योभयमार्त्तमिति द्वयं निमित्तीकृत्य पञ्चशरावो विधीयेत तथा सति निमित्तयोरुपादेयानामिवारुणादीनां क्रियया वशीकारासम्भवात् निमित्ताभ्यामेव वशीकृतायाः क्रियायाः प्रत्येकसम्बन्धनिमित्तो वाक्यभेदः पुनरपि हविरार्तिश्चान्यतरार्तावविशिष्टेति तत्रापि नैमित्तिकं स्यादिति सिद्धं नः समीहितम्,। उभयार्तिमात्रमनिरूपितं न निमित्तं भवतीत्यविवक्षैवावशिष्यते, यद्यपि चोभयपदमाख्यातं हित्वा हविषा सम्बध्यते तथाऽपि यदि हविःस्वरूपमुभयपदेन सम्बध्यते हविःस्वरूपं चार्त्या तथा सति हविरार्त्तिसम्बन्धस्य निमित्तत्वात्पुनरस्मत्पक्षसिद्धिः। अथ तूभयपदानुरक्तमार्त्या सम्बध्यते तदनुरक्तं चोभयपदेन तन्न न हि पदद्वयं हविषा सम्बध्यमानमितरसम्बन्धं यावद्विलम्बते कारणाभावाद्धविः—

स्वरूपेणैव संबन्धसम्भवात् । अथार्तिरेवोभाभ्यां विशिष्टा निमित्तं स्यात्तथा-प्येकैकेनेतरेतरनिरपेक्षेण विशेषणान्निमित्तत्वेन चाविवक्षितसाहित्यत्वाद्दु-विरार्तिमात्रमुभयार्तिमात्रं च निमित्तं स्यात्, अन्यतरानुरक्तायास्त्वन्यतरेण सम्बन्धे द्विरुच्चारणाद्वाक्यभेदः स्यात्, अतो नोभयं निमित्तसंनिपाति तत्र चान्तं हविर्मात्रमुद्दिश्य पञ्चशरावे विधीयमाने यद्युभयत्वं हविषि विधीयेत ततो वाक्यभेदः, परिच्छेदकत्वेन च विधीयमानं विधीयेत यावन्निमित्तं च नैमित्तिकानुष्ठानस्य निश्चितत्वान्न परिच्छेदकाकाङ्क्षा निश्चिते च सर्वत्र नैमित्तिके विधीयमानमप्युभयत्वं परिसंख्यार्थं स्यात्, न चैकेन वाक्येन विधिः परिसंख्या च सम्भवतीत्यादि दूषणजातं यहाधिकरणोक्तमनुसन्धा-तव्यं, तस्माद्दुविरार्तिमात्रं निमित्तम्, उभयपदं त्वेवं योज्यं न सायन्दो-हार्तिरेव निमित्तं न प्रातर्दोहार्त्तिरेव किं तूभयमपि परस्परानपेक्षनिमित्त-मिति ॥

होमाभिषवोभयकर्तुरेव भक्षणाधिकरणम् ।

**सू० होमाभिषवभक्षणं च तद्वत् ॥ ७ ॥**

ज्योतिष्टोमे श्रुतम् "अभिषुत्य हुत्वा भक्षयन्ती"ति तत्र किमभिष-वोहोमश्च प्रत्येकं भक्षस्य कारणम् ? उत संहत्ये ? ति "उद्देश्यत्वान्न साहित्यं तयोः शक्यं विवक्षितुम् । ततः प्रत्येकमेवाभ्यां भक्षणं प्रतिभूयते ॥ न ह्येकेनैव वाक्येनाभिषवहोमौ निमित्तत्वेनोद्दिश्य भक्षणं विदधता तत्साहित्यमपरं शक्यं विधातुं वाक्यभेदप्रसङ्गात्, अतः प्रत्येकमेव निमित्तत्वम् "उच्यते "निमित्तत्वे भवेदेवमेकैकस्य निमित्तता । होमाभिषवकर्त्ता तु भक्षाङ्गत्वेन चोच्यते" ॥ द्वितीयानिर्दिष्टसोमसंस्कारार्थो भक्षस्तं प्रति प्रयोजनान्तरप्रयु-क्ताभिषवहोमकर्ता गुणत्वेनोपादीयमानो विवक्षितविशेषणो भवति, तत्रा-र्थिकं होमाभिषवयोर्निमित्तत्वं न शाब्दम्, अभिषवहोमसमानकर्तृकं तु भक्षणं शाब्दं तेनाभिषवसमानकर्तृकत्वं होमसमानकर्तृकत्वं च द्वयं वि-वक्षितसाहित्यं भक्षणाङ्गम्, अतो येनोभयमनुष्ठितं स एव भक्षयेत् ॥

पुनराधानं प्रति वन्ह्यनुगमद्वयस्य निमित्तताऽधिकरणम् ।

**सू० पुनराधेयमोदनवत् ॥ ८ ॥**

"यस्योभावग्नी अनुगतावभिनिम्लोचेदभ्युदियाद्वा पुनराधेयं तस्य प्रायश्चित्ति"रिति किमुभयानुगमो निमित्तम्? उतान्यतरानुगमोपी:ति समस्तपञ्चशरावन्यायेनान्यतरानुगममात्रं निमित्तमिति प्राप्तेऽभिधीयते 'सत्यं निमित्तवेलायामुभावित्यविवक्षितम्। नैमित्तिकं तु नैवैतदेकस्योत्पादनक्षमम्" पुनराधेयं हि वाक्यान्तरेण यादृशमवगतं तादृशमेव गार्हपत्याहवनीययोरुदयाभिनिम्लोचनवेलायामनुगतयोरुत्पादकत्वेन चोद्यते, तच्च सहितयोरेव तयोरुत्पादकमवगतं नान्यतरस्य अतस्तादृशमेवात्र विधीयमानमन्यतरानुगमेन कार्यं कर्तुं क्षममिति उभयानुगमे स्यात् ॥

पञ्चशरावनिर्वापस्य कर्मान्तरताऽधिकरणम्।

सू० पञ्चशरावस्तु द्रव्यश्रुतेः प्रतिनिधिः स्यात् ॥ ९ ॥

"यस्योभयं हविरार्तिमार्च्छेदैन्द्रं पञ्चशरावमोदनं निर्वपे"दिति किमार्त्तदोहप्रतिनिधित्वेन पञ्चशरावो ऽमावास्याकर्मण एव साधनत्वेन विधीयते? उत कर्मान्तरं हविरार्त्तौ निमित्ते चोद्यत? इति "आर्तत्वाद् द्रव्ययोरन्यत्कर्मणो द्रव्यमीप्सितम्। लाघवं च विधेरेवमतो द्रव्यविधिर्भवेत्"॥ ननु पञ्चशरावपरिमाणमोदनद्रव्यमिन्द्रश्च देवतेति बहवोऽर्थाः प्राप्ते कर्मणि[1] कथं विधीयेरन् पञ्चशरावशब्दार्थमेकं विधास्यामः तेन बहुव्रीहिणा अत्र अन्यपदार्थे ओदन एव परिमाणविशिष्टो विधीयते साचाय्यस्थानापत्त्या च तद्देवताप्राप्तेरैन्द्रपदं नित्यानुवादस्तस्माद् द्रव्यविधिः, उच्यते "स्थानापत्त्या हि नैकान्तात्प्राप्तिरिन्द्रस्य लभ्यते। महेन्द्रस्यापि सद्भावात्तस्मादिन्द्रो विधीयते ॥ प्राप्ते कर्मणि नैकेन विधिना द्रव्यदेवते शक्ये विधातुं ताभ्यां तु विशिष्टं कर्म चोद्यते ॥

पञ्चशरावयागस्य नैमित्तिकदर्शयागाङ्गताऽधिकरणम्।

सू० स प्रत्यामनेत्स्थानात् ॥ १० ॥

तदिदं कर्मान्तरं किममावास्यां प्रत्यामनेत्? उत तस्या एवाङ्ग? मिति संशयः, तत्र पञ्चशरावः कार्यमपेक्षते दोहयोश्चार्तत्वादमावास्यानिवृत्ति-

---

१ कर्मण्येवं विधीयेरन्निति पाठान्तरम्।

स्तत्कार्यं साधनमपेक्षते तयोराकाङ्क्षावशात् सम्बन्धः तस्मादामावास्ये कार्यं विधीयमानः पञ्चशरावयागस्तस्याः प्रत्याम्नायः स्यात्, "स्यादेवं यद्यमावास्या निवृत्ता, न तु सा तथा। पूर्वद्रव्यविनाशेऽपि द्रव्यस्यान्यस्य सम्भवात्" सम्भवति पयोऽन्तरे दध्यन्तरे च नामावास्यानिवृत्तिः अनिवृत्तायां च तस्यां न तत्कार्यं साधनमपेक्षते द्रव्यविनाशोपजनितवैगुण्यसमाधानं त्वपेक्षितव्यम्, अतस्तदुपकारेणामावास्याङ्गं पञ्चशरावः ॥

सत्त्रायागूर्यप्रवृत्तस्य विश्वजिदावश्यकताऽधिकरणम् ।

सू॰ विश्वजित्त्वप्रवृत्ते भावः कर्मणि स्यात् ॥ ११ ॥

"यः सत्त्रायागुरते स विश्वजिता यजेते"ति किमागूर्य प्रवृत्तस्य विश्वजि? दुताप्रवृत्तस्यो? तोभयोरपी? ति संशयः "द्वयोरपि भवेत्कस्माद्विशेषस्याश्रुतत्वतः। प्रवृत्त एव वा कुर्यात्सत्राङ्गं हि तथा भवेत्" ॥ तत्र फलं न कल्पयितव्यं भवति निमित्तश्रुतिवैयर्थ्याच्च त्वेतदपि युज्यते 'साधारण्ये च वैरूप्यं क्रत्वर्थपुरुषार्थतः ॥ यच्छब्देन ह्यागुरणं निमित्तं प्रतीयते प्रवृत्तस्य चागुरणं नित्यं निमित्तं न भवितुमर्हति तत्र निमित्तश्रुतिरुपरुध्येत साधारण्यपक्षे तु प्रवृत्तं प्रति क्रत्वर्थत्वादप्रवृत्तं प्रति पुरुषार्थत्वाद्वैरूप्यं स्यात् । अथोभौ प्रति पुरुषार्थत्वेन विधीयेत तथा सति फलकल्पना तावदवश्यं भाविनी तत्र प्रवृत्तस्यानपेक्षितविधानं स्यात्, न हि सत्रमागूर्य कुर्वतः किंचिदपेक्षितं यस्तु सत्रफलाय सत्रमागूर्य कुतश्चित्कारणात्तत्राप्रवृत्तस्तस्य सत्रफलप्राप्तये प्रारब्धाकरणदोषपरिहाराय च साधनमपेक्षमाणस्य विश्वजिद्विधानमपेक्षितार्थं भवति तस्मात्सत्रमागूर्याकुर्वतः प्रायश्चित्तमिदम् ।

वर्हिषेत्यादिश्रुतेर्व्रतकालविधानार्थताऽधिकरणम् ।

सू॰ वत्ससंयोगे व्रतचोदना स्यात् ॥ १२ ॥

कः प्रायश्चित्ताधिकारेऽस्य सम्बन्धः? उच्यते विश्वजित्सत्रे प्रवृत्तस्याथाप्रवृत्तस्येति विचारिते तत्प्रसङ्गाद्वत्सापाकरणलक्षितोव्रतकालः किं साक्षाप्ये प्रवृत्तस्य? उतासाक्षाप्ययाजिनोऽपी? ति चिन्ताऽऽपतिता तदुपोद्घातत्वेन प्रथमं काललक्षणैव प्रतिपाद्यते बर्हिषा पूर्णमासे व्रतमुपैति वत्सैर-

मावास्यायामिति किमयं वत्सविशिष्टव्रतविधि? उत व्रतानुवादेन वत्सविधिः? उत वत्सापाकरणं व्रतकालोपलक्षणम्? मिति संशयः, तत्र वत्सविशिष्टव्रतविधानं रागप्राप्तत्वाद्वा भोजनस्य तदनुवादेन वत्सविधिः, न वत्सस्य व्रते पाण्यादिवत्करणत्वं सम्भवति। अथ वत्समेव व्रतयेत् तदशक्यं विशसने च वत्सव्याघातः, विध्यन्तरञ्च पुरा वत्सानामपाकर्त्तोर्दम्पती अश्नीयातामिति विद्यते तेनैतदेकवाक्यम् अतो व्रतोपायनस्य वत्सापाकरणेन कालो लक्ष्यते॥

बर्हिषेत्यादिश्रुत्युक्तकालस्य सन्नयदसन्नयदुभयसाधारणताऽधिकरणम्।

सू० कालश्चेत्सन्नयत्पक्षे तल्लिङ्गसंयोगात्॥ १३॥

किमयं कालः सान्नाय्ययाजिन एव? अथासान्नाय्ययाजिनोऽपी? ति विचारः, तत्रासान्नाय्ययाजिनो वत्सापाकरणाभावात् न तल्लक्षितकालसम्भवः। ननु चैकपुरोडाशायामपि अनपायो हि कालस्येति वक्ष्यते तेन एव गतार्थं सत्यं तत्राग्नीषोमीयाभावेऽपि आग्नेयेन तदुपलक्षणसम्भवः; इह वत्सापाकरणमेवोपलक्षणं तदभावे केन कालो लक्ष्येतेति विशेषाऽऽशङ्का उच्यते सर्वथा तावदुपलक्षणमेव वत्सापाकरणं तच्च स्वकालद्वारेण व्रतकालं लक्षयति, तदयमर्थः योवत्सापाकरणकालस्ततः पूर्वकाले व्रतमिति, स चायमग्न्यन्वाधानात्पश्चात्तनः कालो ऽसान्नायिनोऽपि सम्भवति, तस्मात्तस्याप्यनेन कालेनाधिकारः॥

सह शाखयेत्यस्य कालविधानार्थताऽधिकरणम्।

सू० प्रस्तरे शाखाश्रयणवत्॥ १४॥

"सह शाखया प्रस्तरं प्रहरती"ति वचनं किं प्रस्तरप्रहरणाङ्गत्वेन शाखां विधत्ते? उत शाखाप्रतिपत्तिः प्रहरणं प्रस्तरप्रहरणकाले विधीयत? इति प्रहरणाङ्गत्वे सन्नयताऽपि शाखा हर्त्तव्या प्रतिपत्तित्वे तु नेति चतुर्थे हरतेर्यजतिरूपत्वात्तत्र प्रस्तरस्य गुणभावात् शाखाया अपि सह-शब्देन तत्तुल्यत्वावगमाद्गुणभावमाशङ्क्य न शाखाया यज्ञे साहित्यं प्रहरणमात्रे श्रवणात् हरतौ च प्रस्तरस्य प्राधान्यात् शाखाया अपि प्राधान्यमित्युक्तम्, इह पुनर्भवतु प्रहरणे सहभावस्तथाऽपि न प्राधान्यम् अयं हि वाक्यार्थः

यत्प्रस्तरं प्रहरति तत्सह शाखया नान्ययेति शाखासंसर्गः प्रस्तरस्य प्रक्रियमाणस्याङ्गं मैत्रावरुणग्रहस्येव पयःसंसर्गः, यदि प्रस्तरहरणकाले शाखाप्रहरणं विधित्सितं तदा प्रस्तरेण सह शाखां प्रहरेदितीदृशं वचनं स्यात्, तस्मात्प्रस्तराङ्गं शाखा, ततश्चासन्नयताऽपि प्रस्तरार्थत्वेन शाखा हर्तव्येति पूर्वपक्षः, सिद्धान्तस्तु प्रस्तरं प्रहरेदित्यर्थः प्रस्तरं प्रहरणेन प्रतिपादयेत् सह शाखयेति, यदि च शाखापि प्रतिपाद्यते ततः शाखया सह प्रस्तरः प्रतिपादितो भवति नान्यथा, तेन शब्दस्वारस्यात्तावच्छाखापि प्रतिपाद्येति गम्यते, न च प्रकारान्तरमस्ति येन प्रतिपत्तिर्बाध्येत । किञ्च तत्र तत्रोपयुक्ता शाखा प्रतिपत्तिमपेक्षते नोपयोगान्तरमतोऽपि प्रतिपत्तिः, प्रस्तरग्रहणं तु तत्काले प्रतिपत्तिः शाखायाः कथं स्यादित्येवमतः सन्नयत एव शाखाप्रहरणमिदमपि प्रासङ्गिकमेवाधिकरणं व्रताकालोऽसन्नयतोऽपीत्युक्तं, शाखाहरणं तु नैवं किन्तु सन्नयत एवेति । यद्वा वत्सापाकरणं कालोपलक्षणमित्युक्तं प्रस्तरप्रहरणमपि कालोपलक्षणमित्युच्यते ॥

इति शास्त्रदीपिकायां षष्ठस्य चतुर्थः पादः ॥ ४ ॥

---

## अथ षष्ठाध्यायस्य पञ्चमः पाद आरभ्यते ॥

दर्शाऽभ्युदयेष्टौ नैमित्तिकदेवताऽपनयाधिकरणम् ।

सू० अभ्युदये कालापराधादिज्याचोदना स्याद्यथा पञ्चशरावे ॥ १ ॥

अकाले प्रक्रान्ते दर्शे प्रायश्चित्तमाम्नातं "यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदियात्स त्रेधा तण्डुलान्विभजेद्ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्याद्ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुं येऽणिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुमिति, तत्र संशयः किं कर्मान्तरमिद ? मुत प्रक्रान्तस्यैव दर्शस्य देवताभ्योपनयो देवतान्तरसंयोगश्च चोद्यत ? इति, "अनेकार्थविधायित्वात्कर्मान्तरविधिर्भवेत् । प्राप्तकर्मानुवादेन नानेकार्थविधिः क्षमः" । अग्न्यादयो देवतास्तद्गुणाश्च दातृत्वादयोदधिशृतयो-

श्चाधिकरणत्वं स्यविष्ठाणिष्ठादीनां च चरुत्व मिति बहवोऽर्था नापूर्वविधिमन्तरेण शक्यन्ते विधातुं, तस्मात्कर्मान्तरमेवाकालोपक्रमप्रायश्चित्तत्वेन विधीयत इति प्राप्ते उच्यते "प्रकृतप्रत्यभिज्ञानाच कर्मान्तरचोदना। प्राकृतीभ्यस्तदा च्छिद्य द्रव्यमन्याभ्य इच्यते" ॥ न तावत्सम्भवन्त्यां गतौ प्रकृतहानाप्रकृतकल्पना विशिष्टविधानापूर्वकर्मान्तरकल्पनं न्याय्यं 'सम्भवति चात्र प्रक्रान्त एव गुणविधानं, तथा हि त्रेधा तण्डुलान्विभजेदित्यनेन तावन्मध्यमादिभावेन तण्डुलानां विभागो न विधीयते मध्यमादिविनियोगवशेनैवार्थसिद्धत्वात्, अतस्तण्डु-शब्देन प्रकृतं हविस्त्रयमुपलक्ष्य तस्यापरित्यक्तयागान्वयस्य पूर्वदेवताभ्यां विभागोपनयो विधीयते, ततश्चापनीतानां हविषां देवतान्तरसंयोगोऽपेक्षितोमध्यमादिश्रवणैर्विधीयते मध्यमानां तण्डुलानामग्निर्दाता स्यविष्ठानां दध्नश्चेन्द्रः प्रदाता, अणिष्ठानां शृतस्य च विष्णुः शिपिविष्टः, न चानेकार्थविधानं दातृप्रदातृशिपिविष्ट-शब्दानां यौगिकानां श्रुत्यैवाग्न्यादिपदसामानाधिकरण्यात् पदद्वयप्रतिपादितं विशिष्टं देवताकारकमेकेन विधिना शक्यं विधातुम्, अभ्युदयेष्टिप्रकरणे च "सह श्रपयती"ति वचनमस्ति तेन सम्प्रतिपन्नदेवताकयोर्दधिस्यविष्ठयोः शृताणिष्ठयोश्च सहपाकादर्थप्राप्तं चरुत्वं दधिशृतयोश्चाधिकरणत्वमिहानूद्यते, तस्मादवाक्यभेद इत्यकर्मान्तरत्वम् । एवं चातञ्चनाभ्यासदर्शनमुपपन्नं भवति, तथा हि श्रूयते यदि बिभियादभिमोदिष्यतीति महारात्रे हवींषि निर्वपेदित्यु[1]रीकृतैस्तण्डुलैरुपासीत अर्धं दधि हविरातञ्चनार्थं निदध्यात् अर्धं न यद्यभ्युदियात् तेनातच्य प्रचरेद्यदि न प्रातरन्येद्युस्तेन ब्राह्मणं भोजयेदिति तद्यदि कर्मान्तरमभ्युदितेष्टिस्ततस्तत्र दधिशृतयोरधिकरणत्वेन प्रणीताकार्ये विधानादुपादेयत्वेन प्रकृतग्रहणे प्रमाणाभावात् लौकिक-एव दधिश्रपणं कृत्वा सायं दोहेनाकालेऽपि प्रक्रान्तेन प्रायश्चित्तनिर्हृतकालापराधदोषेणैकान्तरितोऽपि दर्शः कर्तव्यो न दध्यन्तरमुत्पाद्यं तत्रातञ्चनमनर्थकं तत्र प्रक्रान्तस्य दध्नस्त्यागे दध्यन्तरोत्पादे चादृष्टद्वयं

१ फलीकृतैरिति पा० ।

कल्प्यम्, अस्मत्पक्षे तु तेन दध्ना प्रक्रान्तस्य प्रयोगस्यानुष्ठितत्वादवश्यं श्वो-दध्यन्तरमुत्पाद्यमित्यर्थवदातञ्चनं, तत्र सायंदोहाद्वैवान्तञ्च्याद्नान्येनेत्येतावद्विधेयमिति लाघवं, तस्मादकर्मान्तरम् ॥

उपांशुयागेऽपि देव-तापनयाधिकरणम् । **सू० उपांशुयाजेऽवचनाद्यथा प्र[१]कृतौ ॥ २ ॥**

तत्रैव चिन्ता किमुपांशुयाजद्रव्यस्याप्याज्यस्य प्राकृतीभ्यो देवताभ्योऽपनयोनेति अमावास्यायामप्युपांशुयाजोऽस्तीति कृत्वा चिन्तेयं, न त्वमावास्यायामुपांशुयाजोऽस्ति, वाचनिको हि तस्य पौर्णमासीकालः उपांशु पौर्णमास्यां यजन्निति कालविधिपरं हीदं वचनमिति सूत्रकारस्यैतिः तदुक्तं सूत्रकारेणामावास्यायामुपांशु याजमनिच्छता एतदेव पौर्णमासीविधिपरत्वेनोपन्यस्तमिति, तथा च त्रयोदशामावास्यायामिति लिङ्गमुपपद्यते, अन्यथा चतुर्दशत्वापत्तेस्तदप्युक्तं पौर्णमास्यां यदा तिस्रोद्वे दर्शविषये सदा प्रधानाहुतयस्सन्ति तदा सङ्ख्योपपद्यते तस्मात्कृत्वा चिन्तैवेयम् । उपवर्षस्तु वृत्तिकारो बह्वृचब्राह्मणेऽमावास्यायामप्युपांशुयाजो विहित इति, तदभिप्रायेणेयं चिन्तेत्याह-तत्राज्यस्य देवतान्तरसंयोगावचनाच्च प्राकृतीभ्योऽपनयनं तण्डुलग्रहणेन तु प्रकृतहविर्मात्रस्य अप्राकृतीभ्योऽपनयनविधानादाज्यस्याप्यस्त्येवापनयस्तच्च ताऽभ्योपनीतं देवतान्तरेण वचनाभावादसंयुक्तं प्रहीणं भवति, न च देवता ऽभावे यागः सम्भवतीत्युपांशुयाजो लुप्यते ।

अनिरुप्तेऽप्यभ्युदयेष्ट्यधिकरणम् । **सू० निरुप्ते स्यात्तत्संयोगात् ॥ ३ ॥**

यदा निरुप्ते हविषि चन्द्राभ्युदयोजायते तदैव किं प्रायश्चित्तम्? उत कर्मोपक्रममात्र इति तत्रावश्यं तावद्धविषा चन्द्रोदयो विशेष्यः, न च तदुदासीनं तस्य विशेषणं भवतीत्यवश्यं या काचित्क्रियाऽपेक्षिता तत्र निर्वापस्य श्रुतत्वात्तद्विशिष्टमेव हविरभ्युदयविशेषणमिति नानिरुप्ते प्रायश्चित्तं, नैवं हविरभ्युदियादित्येतावतैवाप्रवृत्तस्याभ्युदयसम्बन्धासम्भवात् प्रवृत्तं हविरिति ज्ञायते, तावता च निमित्ततोपपत्तेरविवक्षितो

---

१ यथा प्रकृति इति पा० ।

हविरुभयत्ववचनिर्वापः, तस्मादकालप्रवृत्तिमात्रं निमित्तमिति प्रागपि निर्वादभ्युदये ज्ञाते कर्तव्यमेव नैमित्तिकम् ॥

अनिरुप्तेऽभ्युदये वैकृतीभ्यो-निर्वापाधिकरणम् ।

सू॰ अनिरुप्तेऽभ्युदिते प्राकृतीभ्यो निर्वपेदित्याश्मरथ्यस्तण्डुलभूतेष्वपनयात् ॥ ४ ॥

कर्मप्रवृत्तिमात्रं निमित्तमिति स्थितं, नैमित्तिकस्तु देवताऽपनयो देवतान्तरसंयोगश्च किं निर्वापोत्तरकालं तण्डुलावस्थे हविषि कर्त्तव्यो निर्वापस्तु प्राकृतीभ्य एव स्यात् ज्ञातेऽप्यभ्युदये ? उत वैकृतीभ्य एव निर्वाप ? इति संशये तण्डुलग्रहणात्तदवस्थस्यैवापनयः, नैतदेवं हविर्मात्रोपलक्षणार्थं तण्डुलग्रहणं न स्वरूपेण विवक्षितं, तद्विवक्षायां हि दधिशृतयोरनपनयात् देवतान्तरसंयोगवचनमनुपपन्नं स्यात्तस्मात्प्राङ् निर्वापादभ्युदये वैकृतीभ्य एव निर्वापः ॥

किञ्चिन्निरुप्तेऽभ्युदयेऽवशिष्टस्य तूष्णीं निर्वापाधिकरणम् ।

सू॰ विनिरुप्ते न चतुर्मुष्टीनामपनयस्तद्गुणत्वात् ॥ ५ ॥

एकस्मिन्द्वयोर्वा मुष्ट्योः प्राकृतीभ्यो निरुप्तयोर्यदाऽभ्युदयोऽवगम्यते किं तदा शेषं प्राकृतीभ्योनिर्वप्तव्यम् ? उत वैकृतीभ्यो ? ऽथवा तूष्णीमिति संशये "प्राकृतीनां प्रवृत्तत्वात्ता एवावशिष्टेऽपि स्युः निमित्तानन्तरं नैमित्तिकोपनयस्संयोगश्च कर्तव्यस्तस्माद्वैकृतीभ्यः शेषं द[1]द्यात्, सत्यं, निमित्तानन्तरं नैमित्तिकं तत्र विभागस्य संयोगमात्रापेक्षत्वेनावयवेऽपि सम्भवादवशिष्टो निर्वापांशः प्राकृतीभ्यस्तावदपनेतव्य इत्येतद्गृह्णीमः, वैकृतीभ्यस्तु संयोगोऽस्यामवस्थायां न सम्भवति ताहि प्राकृतीनां स्थाने संयोज्याः पदार्थेन च प्राकृतीनां संयोगो विहितो नावयवेन तेन वैकृत्योऽपि पदार्थेन संयोजयितव्या नावयवेन न च सामिकृते निर्वापे वैकृतीनां पदार्थसंयोगः सम्भवति तस्मात्प्राकृतीभ्योऽपनीतो वैकृतीभ्यश्चासंयुक्तोऽवशिष्टो-निर्वापांशस्तूष्णीं कर्त्तव्यः ॥

१ स्यादिति पा॰ ।

सत्रयदसत्रयदुभयस्यै-वाभ्युदये प्रायश्चित्ताधिकरणम् ।

सू॰ सान्नाय्यसंयोगान्नासन्नयतः स्यात् ॥ ६ ॥

किमियमभ्युदयेष्टिः सन्नयत एव स्या? दुतासन्नयतोऽपी ? ति संशये श्रुते चरुं दधनि चरुमिति श्रवणादसन्नयतश्च दधिशृतयोरभावात् नास्ति नैमित्तिके सामर्थ्यं तस्मात्संशन्नयत एवाधिकारः सत्यं यदि दधिशृते चरोर-धिकरणत्वेन चोद्येयातां न त्वेवं वाक्यभेदप्रसङ्गात् न ह्येकं वाक्यं स्थवि-ष्ठांस्तण्डुलानुद्दिश्य देवतान्तरं दध्यधिकरत्वत्वञ्च शक्नो विधातुम् अत-स्तण्डुलान्दधिशृते चोद्दिश्य देवतामात्रं विधीयते, न चोद्दिश्यानां साहित्यं विवक्षितमतो ऽसन्नयतोदधिशृता भावेऽपि तण्डुलानां देवतान्तरसंयोगः कर्त्तव्यः ॥

सत्राय प्रवृत्तमात्रस्य विश्वजिदधिकरणम् ।

सू॰ साम्युत्थाने विश्वजित्क्रीते विभाग-संयोगात् ॥ ७ ॥

यदि सत्राय दीक्षितानां साम्युत्तिष्ठासेत्सोममयभज्य विश्वजिता यजेते"ति किमयं विश्वजित्क्रीतराजकस्यैवोत्थाने? उताक्रीतराजकस्यापी? ति विचारः, "नैमित्तिकमिदं सोमविभागेन विशेषितम् । नाक्रीतराजकस्यैत-च्छक्यं क्रीते भवेदतः । उच्यते यदि सोमविभागोऽयमङ्गत्वेन विधीयते तत एवं भवेदेष त्वर्थे प्राप्तो न चोद्यते क्रीतराजकस्य तावदर्थप्राप्तः सोमवि-भागोऽर्थान्तरविभागवच्च विधातव्यः अक्रीतराजकस्य त्वशक्यत्वादेव विधेयो विभागः तस्माद्रागप्राप्तद्रव्यविभागानुवादमात्रमिदं सोमग्रहणं तु प्रदर्शनार्थं विश्वजिन्मात्रं तु विधीयत इत्यक्रीतराजकस्यापि स्यात् ॥

दीक्षापरिमाणस्य द्वाद-शाहत्वनियमाधिकरणम् ।

सू॰ दीक्षापरिमाणे यथा काम्यवि-शेषात् ॥ ८ ॥

नैमित्तिकप्रसङ्गाद् दीक्षानिमित्ता धर्माः क्रियन्तं कालमनुवर्तन्त इत्येवमर्थं दीक्षापरिमाणं चिन्त्यते; ज्योतिष्टोमे श्रुतानामेका दीक्षातिस्रोदीक्षा द्वादशदीक्षा इत्येवमादीनां सर्वेषां किं ज्योतिष्टोमे विकल्पेन निवेशः? उत

द्वादशपरिमाण ? मेव तत्र स्यादेकादीनां तूत्कर्षो विकृतिष्विति संशयः तत्र भाष्यकारो यथाकाम्यविशेषादित्यनेन पूर्वपक्षमुक्त्वा द्वादशाहस्तु लिङ्गादित्यनेन द्वादशरात्रीर्दीक्षितो भृतिं वन्वीतेति श्रुतस्य भृतिवननस्य पक्षान्तरेष्वसम्भवाद् द्वादशपरिमाणमेव सिद्धान्तितवान् वार्त्तिककारस्त्वयुक्तमिदमिति मत्वा सूत्रद्वयमपि द्वयोरधिकरणयोरुत्सूत्रपूर्वपक्षयोः सिद्धान्तसूत्रत्वेन व्याचख्यौ, तत्र भृतिवननसामर्थ्यात् द्वादशाहपरिमाणं मत्वानस्योत्तरं, न हि प्रत्यक्षश्रुतानामेकादिपक्षाणां भृतिवननवचनवशेन दौर्बल्यं येन तदनुग्रहार्थमुत्कृष्येरन्, तस्माद्यथा काम्येव स्यात्, भृतिवननं तु द्वादशपक्षे भविष्यति। यद्वा दीक्षितो भृतिं वन्वीतेत्येतावद्विधीयते, द्वादशग्रहणं तु प्रदर्शनार्थमिति व्याख्येयम् ॥

सू० द्वादशाहस्तु लिङ्गात्स्यात् ॥ ९ ॥

द्वादशाहे किं दीक्षापरिमाणानां विकल्पः ? उत द्वादशपरिमाणमेवे ? ति प्रकृतिवद्विकल्पे प्राप्त उच्यते । "षट्त्रिंशदहोवा एष यद् द्वादशाह" इति लिङ्गादुपसत्सुत्यानां च प्रतिस्वन्द्वादशत्वाद्दीक्षा अपि द्वादशेति गम्यते तथा भीन्धत एव दीक्षाभिरिति दीक्षाबहुत्वं व्याख्याय तद्वाक्यशेषे द्वाभ्यां लोम वद्यति द्वाभ्यां त्वचं द्वाभ्यामसृक् द्वाभ्यां मांसं द्वाभ्यामस्थि द्वाभ्यां मज्जानमिति षण्णां द्विकानामनुक्रमणाद्विध्युद्देशगतं बहुत्वं द्वादशस्वेव स्थाप्यते ॥

गवामयने माघपौर्णमास्याः पुरस्ताद्दीक्षाऽधिकरणम् ।

सू० पौर्णमास्यामनियमोऽविशेषात् ।१०॥

दीक्षाप्रसङ्गादिदमधिकरणं गवामयते चित्रापूर्णमासे दीक्षेरन्मुखं वा एतत्संवत्सरस्य यच्चित्रापूर्णमासस्तस्य न काचन निर्या भवति इत्येवं चैत्रीस्तुत्वाततुक्तं "चतुरहे तु पुरस्तात् पौर्णमास्यै दीक्षेरन् तेषामेकाष्टकायां क्रयः सम्पद्यत" इति तत्र संशयः किमेषां या काचित्पौर्णमासी किं वानन्तरश्रुती चैत्री उत माघीति तत्राविशेषाद्याकाचित्स्यात् चैत्री स्तुतिस्तु चित्रापूर्णमासे दीक्षेरन् इत्यस्य शेषो न चतुरहे पुरस्तादित्यस्य न चैकाष्टकाश्रुतिवशान्माघीविषयत्वं द्वादशाहामपि कृष्णाष्टमीनामेकाष्टकाशब्दवाच्यत्वात्तथाहि श्रूयते द्वादशपौर्णमास्यो द्वादशैकाष्टका इति तस्मा-

द्विशेषः सत्यमेकाष्टकाशब्दो न विशेषकः चैत्र्यास्त्वनन्तरमेव कीर्तितत्वात् सामान्यविषयः पौर्णमासी-शब्दः तद्विषयो भवति तस्माच्चैत्री स्यात् स्यादेतदेवं यद्येकाष्टका-शब्दः सर्वत्र स्यात् स च माघ्याः पौर्णमास्या उपरितने कृष्णपक्षे याऽष्टमी तस्या एव वाचको वृद्धव्यवहारे प्रसिद्धोऽन्यासु तु गौणः प्रयोगः किं चोपक्रम "एकाष्टकायां दीक्षेरन् एषा वै संवत्सरस्य पत्नीति" तस्यां दीक्षामुक्त्वा तत्र दोषमभिधायान्ते चतुरहे पुरस्तात्पौर्णमास्या दीक्षेरन् इत्युक्त्वा दीक्षातः प्रच्युतामेकाष्टकां क्षयसम्पत्यानुगृह्णाति तेषामेकाष्टकायां क्षयः सम्पद्यते तेनैकाष्टकां न छंबट्कुर्वन्तीति संवत्सरपत्नी च माघ्याः पौर्णमास्या उपरितन्येवाष्टमी नान्यास्तद्विषयो हि मन्त्रः श्रूयते "याञ्जनाः प्रतिनन्दन्ति रात्रिं धेनुमिवायतीं संवत्सरस्य या पत्नी सानो अस्तु सुमङ्गलीति" किं चार्त्तं वा एते संवत्सरस्याभिदीक्षन्ते परात्काष्टकायां दीक्षन्ते तच्चामानावृत् भवत इति शिशिरगतामष्टमीमेकाष्टकां दर्शयति तस्मान्माघ्याः पौर्णमास्याः पुरस्ताच्चतुरहे गवामयनिकी दीक्षेति ।

दीक्षोत्कर्षे तच्चियमानामप्युत्कर्षाऽधिकरणम् ।

**सू० दीक्षाकालस्य शिष्टत्वादतिक्रमे नियमानामनुत्कर्षः प्राप्तकालत्वात् ॥ ११ ॥**

दीक्षितस्याग्निहोत्रादयो निषिद्धाः अवभृथे कृते दीक्षातो मुक्तिः । तद्यदा केनचित्कारणेनाव भृथोत्कर्षो भवति तदा किमग्निहोत्रादि कर्त्तव्यं न वेति संशयः । तत्रादीक्षितो न जुहोतीति यावन्तं कालं शास्त्रवशेन दीक्षानुवृत्तिस्तावत् न जुहोतीति शास्त्रार्थं मत्वाऽवभृथोत्कर्षेण शास्त्रकृता दीक्षानुवृत्तिः अतः कर्त्तव्यमग्निहोत्रादि मन्यते । न काललक्षणायां प्रमाणमस्ति दीक्षाया एव प्रतिषेधनिमित्तत्वोपपत्तेरतो येन केनापि हेतुना दीक्षानुवर्तमाना प्रतिषेधमप्यनुवर्त्तयति । तस्मादकर्त्तव्यमग्निहोत्रादि प्रागवभृथात् ।

ज्योतिष्टोमोत्कर्षे प्रतिहोमानुष्ठानाधिकरणम् ।

**सू० तत्र प्रतिहोमो न विद्यते यथा पूर्वेषाम् ॥ १२ ॥**

---

१ नियतानामिति पा० ।

अवभृथोत्कर्षकृता दीक्षानुवृत्तिः पुरुषापराधकृता न विधिकृता। अतस्तत्काले पुरुषापराधकृतमग्निहोत्राननुष्ठानमिति प्रतिहोमः कर्तव्यः। नैवं यथा तथावादीक्षातावदनुवृत्ता तावता चानधिकारादग्निहोत्रमकर्तव्यं कर्तव्याकरणे च प्रतिहोमः तस्माच्च प्रतिहोमः ॥

उदवसानीयोत्कर्षेऽपि प्रतिहोमाननुष्ठानाधिकरणम्। सू० प्रतिहोमश्चोर्ध्वमवभृथादिष्टेः॥१३॥

कृतेऽवभृथे यद्युदवसानीयोत्कर्षो दैवाद् भवति तदा किमग्निहोत्रं कर्तव्यमकरणे च प्रति होमः स्यात् अथवा न कर्त्तव्यं प्रतिहोमश्च न कर्त्तव्य इति तत्रावभृथस्य दीक्षोन्मोचनत्वात्तदुत्तरकालकर्त्तव्यमाग्निहोत्रमकरणे च प्रतिहोमः स्यात् सत्यं, दीक्षा निवृत्ता तथाऽप्येतया पुनराधेयसंततियेष्ट्वाऽग्निहोत्रं जुहोतीति वचनेन कृतोदवसानीयस्याग्निहोत्राधिकारप्रतिपादनात्ततः प्रागधिकाराभावादकर्त्तव्यमग्निहोत्रम्। अकृते च न प्रतिहोमः।

दीक्षोत्कर्षे तच्चियमानामप्युत्कर्षाधिकरणम्। सू० दीक्षाकालस्य शिष्टत्वादतिक्रमे नियमानामनुत्कर्षः प्राप्तकालत्वात् ॥१४॥

दीक्षितस्याग्निहोत्रादयः प्रतिषिद्धाः अवभृथे कृते दीक्षातो मुक्तिस्तद्यदा केनापि कारणेनावभृथोत्कर्षो भवति तदा किमग्निहोत्रादि कर्त्तव्यं? न वेति संशयः तत्रादीक्षितो न जुहोतीति यावत्कालं शास्त्रवशेन दीक्षानुवृत्तिस्तावन्न जुहोति इति शास्त्रार्थं मत्वाऽवभृथोत्कर्षेण न शास्त्रकृता दीक्षानुवृत्तिः अतः कर्तव्यमग्निहोत्रादि मन्यते न काललक्षणायां प्रमाणमस्ति दीक्षाया एव प्रतिषेधनिमित्तत्वोपपत्तेरतो येन केनापि हेतुना दीक्षाऽनुवर्तमाना प्रतिषेधमप्यनुवर्तयति तदकर्तव्यमग्निहोत्रादि प्रागवभृथात्, तत्र प्रतिहोमो न विद्यते यथा पूर्वेषाम् अवभृथोत्कर्षकृता दीक्षानुवृत्तिः पुरुषापराधकृता न विधिकृता अतस्तत्काले पुरुषापराधकृतमग्निहोत्राननुष्ठानमिति प्रतिहोमः कर्तव्यः, मैवं यथा तथा वा दीक्षा तावदनुवृत्ता तावता चानधिकारादग्निहोत्रमकर्तव्यं कर्तव्याकरणे च प्रतिहोमस्तस्मान्न प्रतिहोमः ॥

उदवसानीयोत्कर्षेऽपि प्रतिहोमाननुष्ठानाधिकरणम् । सू॰ प्रतिषेध[1]श्चोर्ध्वमवभृथादिष्टेः॥१५॥

कृतेऽवभृथे यद्युदवसानीयोत्कर्षो दैवाद्भवति तदा किमग्निहोत्रं कर्तव्यमकरणे च प्रतिहोमः स्यादथवा न कर्तव्यं प्रतिहोमश्च न कर्तव्य इति, तत्रावभृथस्य दीक्षोन्मोचनत्वात्तदुत्तरकालं कर्तव्यमग्निहोत्रमकरणे च प्रतिहोमः स्यात् सत्यं, दीक्षा निवृत्ता तथाऽप्येतया पुनराधेयसंमितये-ष्ट्याऽग्निहोत्रं जुहोतीति वचनेन कृतोदवसानीयस्याग्निहोत्राधिकारप्रतिपादनाच्च ततः प्रागधिकाराभावादकर्तव्यमग्निहोत्रम् अकृते च न प्रतिहोमः ॥

प्रतिहोमे सायमग्निहोत्रप्रभृत्यारम्भाधिकरणम् । सू॰ प्रतिहोमश्चेत्सायमग्निहोत्रप्रभृतीति हूयेरन् ॥ १६ ॥

षोडशिसंस्थे प्रातरग्निहोत्रप्रभृत्यनुष्ठानाधिकरणम् । सू॰ प्रातस्तु षोडशिनि ॥ १७ ॥

इत्वाचिन्त्येयं यदि होमाः स्युः कस्तेषां क्रम इति युगपदुपस्थितानामनियमः, येनैव क्रमेणातिपन्नास्तेनैव कर्तव्यास्तेनाग्निष्टोमादिषु सायमग्निहोत्रप्रभृतयः प्रतिहोमाः षोडशिनि प्रातः प्रभृतयः ॥

भेदनादिनिमित्तकहोमस्य दर्शपूर्णमासाङ्गताऽधिकरणम् । सू॰ प्रायश्चित्तमधिकारे सर्वत्र दोषसामान्यात् ॥ १८ ॥

गतं प्रासङ्गिकं पुनः प्रायश्चित्ताधिकारमनुसन्धत्ते दर्शपौर्णमासयोः श्रुतो "भिन्ने जुहोती"ति होमः किं यत्र यत्र भेदस्तत्र तत्र सर्वत्र स्यात् ? उत प्रकरण एव निविशत? इति सन्देहे वाक्येन यावन्निमित्तं नैमित्तिकमवगम्यमानमशक्यं प्रकरणेन प्रकृतेऽवस्थापयितुं तस्मात्सर्वत्र स्यादिति मन्वानस्योत्तरं नैमित्तिकस्यापि तावदवश्यं फलेन भवितव्यं तदभावे विध्ययोगात् तत्राप्रतीतफलकल्पनात् प्रकृतेश्च वाक्यतेव बलीयसीति तत्रैव निवेशः ।

व्यापन्नशब्दार्थनिर्णयाधिकरणम् । सू॰ व्यापन्नस्याप्सुगतौ यदभोज्यमार्याणां तत्प्रतीयेत ॥ १९ ॥

---

१ प्रतिषेधाच्चोर्ध्वमवभृथादिष्टेः । इति पा॰ ।

"व्यापन्नमप्सु प्रहरती"ति श्रूयते तत्र व्यापन्न-शब्देन किमुच्यत इति प्रश्नेनैवोपक्रमः तत्रोत्तरं यदार्याणामभोज्यं केशकीटावपन्नादि तद् व्यापन्नं प्रतीयेत ॥

अपच्छेदयौगपद्येऽपि प्रायश्चित्ताधिकरणम् ।

सू० विभागश्रुतेःप्रायश्चित्तं यौगपद्ये न विद्यते ॥ २० ॥

ज्योतिष्टोमे बहिष्पवमानं सर्पतां "यदि प्रस्तोताऽपच्छिन्द्याद्ब्रह्मणे वरं-दद्याद्यदि प्रतिहर्त्ताऽपच्छिन्द्यात्सर्ववेदसं दद्याद्यद्युद्गाताऽपच्छिन्द्याददक्षिणं तं यज्ञमिष्ट्वा तेन पुनर्यजेत तत्र तद्दद्याद्यत् पूर्वस्मिन् दास्यन्स्या"दिति तद् यद्युद्गातृप्रतिहर्त्रोरपच्छेदो युगपद्भवति तदा किं प्रायश्चित्तं कर्तव्यं न वे? ति संशयः तत्रोभाभ्यां क्रियमाणोऽपच्छेदो नैकेन व्यपदेष्टुं शक्यते तस्माद्यौगपद्ये निमित्तविघातात् प्रायश्चित्तं न कर्त्तव्यम्। "स्यादेवं यदि कर्तृत्वं सापेक्षमुभयोर्भवेत् । एकैकस्य तु यत्नेन निरपेक्षेण जायते ॥ विच्छेदस्तेन कर्तृत्वं द्वयोः प्रत्येकमस्ति नः । कालमात्रं तु तत्रैकं प्रायश्चित्तमतो भवेत् ॥

यौगपद्ये ऽदाक्षिण्यसर्वस्वदाक्षिण्यविकल्पाधिकरणम् ।

सू० तच विप्रतिषेधाद्विकल्पः स्यात् ॥ २१ ॥

यौगमपद्ये प्रायश्चित्तद्वयमापतति तत्किं समुच्चीयतेऽथ विकल्प इति विचारः, तत्र विकल्पस्यान्याय्यत्वात् तेन पुनर्यजेतेति प्रयोगद्वयसंभवात् । पूर्वस्मिन्नदाक्षिण्यम् उत्तरस्मिन् सर्ववेदसमिति उभयसम्भवात्समुच्चयः नैतदेवं, यत्र हि प्रयोगे निमित्तं तस्यैव नैमित्तिकं प्रायश्चित्तमङ्गं न प्रयोगान्तरे क्रियमाणेन प्रायश्चित्तेन निमित्तवतः प्रयोगस्य साद्गुण्यं भवति तस्मादेकस्मिन्नेव प्रयोगे द्वयमापतति तदशक्यं समुच्चेतुमिति विकल्पः ॥

आनुपूर्व्येणापच्छेदे उत्तरापच्छेदनिमित्तप्रायश्चित्तानुष्ठानाधिकरणम् ।

सू० पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत् ॥२२॥

१ अपन्न-शब्दः शकन्ध्वादित्वात्साधुः दुष्टान्नमिति तु तदर्थः ।

यत्रानुपूर्व्येणोद्गातृप्रतिहर्त्रोरपच्छेदो भवति तदा किं पूर्वोत्पन्ननिमित्तं प्रायश्चित्तं कार्य ? मुतोत्तरनिमित्त ? मिति संशयः, तत्र पूर्वनिमित्तमसंजातविरोधं निर्विघ्नमवगम्यते, तद्विरुद्धत्वादशक्यमवगन्तुमुत्तरम्, अतः पूर्वबलीयस्त्वम् एवं प्राप्ते अत्राभिधीयते नात्र पूर्वेणोत्तरस्य ज्ञानस्योत्पत्तिः शक्यते निरोद्धुं प्रत्यक्षेण वाक्येन तदेव[1]मुत्पाद्यत एव तच्चोपजायमानं स्वविरुद्धं पूर्वज्ञानं बाधमानमेवोत्पद्यते, तेनोत्पन्नमपि पूर्वप्रायश्चित्तज्ञानं मिथ्या भवति, बाधितत्वादुत्तरस्य तु न किञ्चिद्बाधकमस्ति, न हि पूर्वविज्ञानमुत्तरबाधेनोत्पद्यते तस्यामवस्थायामुत्तरस्यानुपजातत्त्वात् जाते तूत्तरविज्ञाने जायमानेनैव तेन बाधितं पूर्वविज्ञानमसत्त्वात् कर्मीभूतं नोत्तरं बाधितुं क्षमते तस्मात्पूर्वदौर्बल्यम् । नैमित्तिकशास्त्राणां ह्ययमर्थः प्रागन्यथाकर्तव्योऽपि क्रतुर्निमित्ते सति अन्यथा कर्तव्य इति, ततश्च यथा नित्यं द्वादशशतज्ञानमुत्पन्नं पाश्चात्येनैव नैमित्तिकेन सर्ववेदसदानादिज्ञानेन बाध्यते तथा नैमित्तिकमपि पूर्वं निविष्टमुत्तरेण बाध्यते ॥

उद्गातुरुत्तरापच्छेदेऽपि सर्वस्वदक्षिणादानाधिकरणम् ।

सू० यद्युद्गाता जघन्यः स्यात् पुनर्यज्ञे सर्ववेदसं दद्याद्यथेतरस्मिन् ॥ २३ ॥

पौर्वापर्ये जघन्यनिमित्तं प्रायश्चित्तमिति स्थितं तद्यदोद्गाता जघन्यो भवति तदा पुनर्यज्ञे किं सर्ववेदसं देय ? मुत द्वादशशत ? मिति संशयः, तत्र यत्पूर्वस्मिन् दास्यन् स्यादिति यदेव क्रतुस्वभावतोदेयं तदेव प्रतीयते तच्च द्वादशशतं तस्मात्तदेव पुनः प्रयोगे देयमित्येकः पूर्वपक्षः, पूर्वस्मिन् प्रयोगे प्रथमं द्वादशशतं दास्यन्नासीत्प्रतिहर्तरि त्वपच्छिन्ने सर्ववेदसमत उभयमपि पुनः प्रयोगे यत् पूर्वस्मिन् दास्यन् स्यादिति शक्यं वक्तुं तस्माद्विकल्प इति द्वितीयः ॥ सिद्धान्तस्तु द्वादशशतं सर्ववेदसेन बाधितमतो न तद्दास्यन् भवति सर्ववेदसमेव तु दास्यन् भवति, तस्मात्तदेव पुनः प्रयोगे स्यात् । ननु तदप्युद्गातृच्छेदेन बाधितं, नेति ब्रूमः, न ह्युद्गात्रपच्छेदेन पूर्वदक्षिणा बाध्यते किं तर्हि पूर्वस्मिन्प्रयोगे दातव्या

(१) तदवश्यमुत्पाद्यत इति सर्वत्र पा० ।

सती दक्षिणा ततः उत्कृष्य उत्तरस्मिन् प्रयोगे निक्षिप्यते पूर्वप्रयोगे चोद्गात्रपच्छेदवेलायां द्वादशशतं बाधित्वा सर्वत्रेदसमेव दातव्यमासीत् अतस्तदेव पुनः प्रयोगे देयम् ॥

अहर्गणे अपच्छेदेन सर्वेषामावर्तनाधिकरणम्।

सू० अहर्गणे यस्मिन्नपच्छेदस्तदा वर्तेत कर्मपृथक्त्वात् ॥ २४ ॥

द्वादशाहादिष्वहर्गणेषु यदा कस्मिँश्चिदहन्युद्गात्रपच्छेदो भवति तदा किं कृत्स्नस्याहर्गणस्यावृत्तिः? उत तदेवाहरावर्तेत? इति संशये साधननिवेशित्वाद् धर्माणां गणस्य च साधनत्वात् तस्यैवादक्षिणस्य संस्थापनं पुनः प्रयोगश्चेति प्राप्तेऽभिधीयते "अशब्दत्वात् समूहस्य न फलं प्रतिचोदना। यागस्य चोदना तत्र यागाः प्रत्येकमेव ते। अतोमिथोऽनपेक्षास्ते यागाः स्वाङ्गसमन्विताः फलं संहत्य कुर्वन्ति स्वापूर्वद्वारमाश्रिताः। तेन यस्मिन्नपच्छेदस्तदावृत्तिगुणान्वितः अनावृत्तिगुणैरन्यैः संहत्य कुरुते फलम्" ॥

इति शास्त्रदीपिकायां षष्ठस्य पञ्चमः पादः ॥ ५ ॥

---

## अथ षष्ठाध्याये षष्ठः पादः प्रारभ्यते ॥

---

सत्रे समानकल्पानां सत्राधिकाराधिकरणम्।

सू० सन्निपाते ऽवैगुण्यात् प्रकृतिवत्तुल्यकल्पा यजेरन् ॥ १ ॥

दर्शपौर्णमासयोः पुरुषभेदेन कल्पभेदः समाम्नातः "राजन्यवासिष्ठादीनां नाराशंसो द्वितीयः प्रयाजस्तनूनपादन्येषामित्यादिः, स दीक्षणीयादिष्वनिर्दिष्टः सत्रेष्वनेककर्तृकेषु प्राप्तस्तत्र संदिह्यते ॥ किं भिन्नकल्पा अपि संहत्य सत्रमासीरन्नुत तुल्यकल्पाः? एत्रेति तदर्थमिदं विचार्यते किं वासिष्ठादयो नाराशंसाद्यङ्गत्वेन कर्तारो विधीयन्ते? ॥ उत वासिष्ठानुद्दिश्य नाराशंसादि तादर्थ्येन विधीयते? इति, तत्र वासिष्ठार्थत्वेन विधाने फलकल्पनात्प्रकरणबाधाच्च वासिष्ठादय एव नाराशंसाद्यङ्गत्वेन विधी-

यन्ते, षष्ठी च सम्बन्धभाविनी सत्रेषु च सत्रिणां प्रत्येकमेव कर्तृत्वमिति स्थितम् ॥ अतस्तत्र वासिष्ठावासिष्ठैः क्रियमाणो नाराशंसो वासिष्ठेनापि तावत् क्रियत एवेति, अग्निगुणस्तथा तनूनपादप्यन्यैरतोऽयं कश्चित्कल्पमाश्रित्य भिन्नकल्पा अप्यधिक्रियेरन् इत्येवं प्राप्ते ब्रूमः वासिष्ठादीन् स्वामित्वेनोद्दिश्य तादर्थ्येन नाराशंसादि विधीयते, तादर्थ्यं च क्रतूपकारद्वारेणाऽप्युपपन्नमिति न फलकल्पनापत्तिः, एवं च धात्वर्थस्यात्र विधानात्सं निकृष्टविधिर्भवति प्रयाजोद्देशेन तु वासिष्ठादिविधौ धात्वर्थेऽऽन्यस्य विधानाद्विप्रकृष्टार्थविधानं स्यात्. अतः सत्रेऽन्यतरकल्पाश्रयणेऽन्येषां तेन क्रतूपकारालाभाद्विगुणः क्रतुर्न फलं साधयेत्, तस्मात्तुल्यकल्पानामेवाधिकारः ॥

भिन्नकल्पयोरपि राज्ञः पुरोहितस्य च कुलाययज्ञेऽधिकाराधिकरणम् ।

**सू० वचनात्तु द्विसंयोगस्तस्मादेकस्य पाणित्वम् ॥ २ ॥**

"एतेन राजपुरोहितौ सायुज्यकामौ यजेयाता"मित्यत्र संशयः किमयं षष्ठीतत्पुरुषैकशेषः राज्ञः पुरोहितो राजपुरोहितः राजपुरोहितश्च राजपुरोहितश्च राजपुरोहिताविति, ततश्च राजद्वयसम्बन्धिनोर्द्वयोः पुरोहितयोरधिकारः? उत कृतैकशेषेणोत्तरपदेन तत्पुरुषो, राज्ञः पुरोहितौ राजपुरोहिता? विति, ततश्चैकराजसम्बन्धिनोर्द्वयोरधिकारः? उत कर्मधारयः? राजात्मकौ पुरोहिताविति, अथवा द्वन्द्वो राजा च पुरोहितश्चे? ति, तत्र युगपदधिकरणे द्वन्द्वः, तेन पदद्वयमपि लक्षणावृत्ति स्यात्, अतस्तत्पुरुषोऽयं समासादुत्पन्नं द्विवचनं तदर्थस्यैव द्वित्वमाह तस्माद् राजद्वयसम्बन्धिनौ द्वौ। यद्वा पुरोहितपदाद् द्विवचनं तदर्थस्यैव द्वित्वमाह राज्ञः पुरोहितौ द्वाविति, एतस्मिँस्तु पक्षद्वये पूर्वपदं लक्षणावृत्ति स्यात् । किञ्च नैकस्य राज्ञः पुरोहितद्वयमस्ति पुरोहितं वृणीत इत्युपादीयमानस्यैकत्वस्य विवक्षितत्वात्. प्रथमपक्षे राजपदमनर्थकं राज्ञ एव पुरोहितोऽस्ति नान्यस्य अतोऽव्यभिचारादविशेषणं सद्नर्थकं राजपदं स्यात्, अतः कर्मधारयोऽस्तु सोऽपि न राज्ञः पुरोहितत्वाभावात्, ब्राह्मण एव पुरोहितत्वेन वरीतव्य इति श्रूयते, तस्माद् द्वन्द्व एवायं, न च तत्र कस्यचिल्ल-

तथा युगपदधिकरणे द्वन्द्व इत्यस्यापवादादित्युक्तं तन्त्रत्वे, तस्माद् राज्ञः पुरोहितस्य चात्र भिन्नकल्पयोरेव सतोर्वचनाद्धिकारः ॥

सत्रे ब्राह्मणमात्रस्याधिकाराधिकरणम् ।

सू॰ सत्राणि सर्ववर्णानामविशेषात् ॥ ३ ॥

सत्रेषु किं त्रयाणामपि वर्णानामधिकार? उत ब्राह्मणस्यैवे? ति विचारः, तदर्थं किं ये यजमानास्त ऋत्विज इत्यनेनार्त्विज्यं यजमानसंस्कारत्वेन विधीयते? उत यजमाना आर्त्विज्याङ्गत्वेने? ति चिन्त्यते "सत्राणि सर्ववर्णानां भवेयुरविशेषतः। ऋद्धिकामादिवाक्येषु विशेषः श्रूयते न हि॥ प्राप्तेषु त्रिषु वर्णेषु यच्छब्देनोपबन्धनात्। संस्कारार्थतया तेषामार्त्विज्यमुपयुज्यते॥ प्रधानभूतैरेव च तैः क्रियमाणमार्त्विज्यं न गुणभूतानध्वर्यून् कर्तॄनपेक्षते गुणकर्तृपरिच्छेदेन ब्राह्मण्यमार्त्विज्याङ्गं तदभावे तदपि द्वाराभावान्न सत्रे प्राप्नोति, तस्मात् त्रयाणामधिकार इति प्राप्ते ब्रूमः "नार्त्विज्यं यजमानानां संस्कारत्वेन चोद्यते। तथा ह्यप्रकृतं कार्यमार्त्विज्यस्य प्रसज्यते"। तेन यच्छब्दयोगेऽपि नो द्वेषः स्वामिनामिह। आर्त्विज्यमेव तूद्दिश्य यजमानविधिर्भवेत्" ॥ प्रकृतितश्च द्वौ धर्मावार्त्विज्याङ्गत्वेन प्राप्तौ अन्यकर्तृकता ब्राह्मणकर्तृकता च, तत्रान्यकर्तृकता ये यजमानास्त ऋत्विज इत्यनेन बाधिता, ब्राह्मणकर्तृकतायास्तु न किञ्चिद् बाधकमस्ति, ऋद्धिकामादिशब्दानां ब्राह्मणत्वाविरोधात् तस्मात्प्रकृतितः प्राप्तं ब्राह्मणकर्तृकत्वं वाचनिकं च यजमानकर्तृकत्वम् उभयं सम्पादयितुं ब्राह्मणा एव सत्राण्यामासीरन्निति ॥

सत्रे विश्वामित्रतत्समानकल्पानामेवाधिकाराधिकरणम् ।

सू॰ वासिष्ठानां वा ब्रह्मत्व[1]स्य नियमात् ॥ ४ ॥

ब्राह्मणानामपि किं सर्वेषामधिकार? उत वासिष्ठानां तत्समानकल्पानां च? अथवा वैश्वामित्राणां तत्समानकल्पानां चे? ति संशयः, तत्राविशेषात्सर्वेषां वासिष्ठो ब्रह्मेति प्रकृतौ वचनात् ब्रह्मत्वस्यावैगुण्यायाऽवश्यं वासिष्ठेन भवितव्यम्, अतस्तत्समानकल्पानामधिकारः, य एव कश्चि-

(१) ब्रह्मत्वनियमादिति पा॰ ।

त्स्तोमभागमधीयीत स एव वासिष्ठ इत्यवासिष्ठस्यापि स्तोमभागविदो ब्रह्मत्वस्यानुज्ञानाच्चावश्यम्भावी वासिष्ठः, वैश्वामित्रो होतेति वचनात् हौत्रमवश्यं वैश्वामित्रेणैव कर्त्तव्यं, न च भिन्नकल्पनामधिकारोऽस्तीति स्थितमाद्ये, तस्माद्वैश्वामित्रस्य तत्समानकल्पानां च सत्रेऽधिकारः ॥

सत्रे आहिताग्नेरेवाधिकाराधिकरणम् ।

सू० विहारस्य प्रभुत्वादनग्नीनामपि स्यात् ॥ ५ ॥

किमनाहिताग्नीनामपि सत्राऽधिकार उताहिताग्नीनामेवे? ति संशयः तत्राग्नीनां पदार्थत्वाद्यस्य कस्य चिदग्निषु साधितं कर्म सर्वेषां फलं साधयति ध्रुवम् औदुम्बरीव येन केनचिद्यजमानेन संमिता, तस्माद्येनकेनचिदाहिताग्निना संहत्याऽनाहिताग्नयोऽप्यासीरन्, नैवम् दृष्टिपूर्वकृता सोमविकाराणामवस्थिता। दृष्टौ चानाहिताग्नीनां न कथञ्चिदधिक्रिया। आधातुरग्नयः कार्यं नान्येषां साधयन्ति च। उपग्राहविशेषेण कर्तुरेव फलान्वयात् आदधीतेत्यात्मनेपदादाधातुरेवाधानफलेन भवितव्यं, कर्मयोग्यता चाग्नीनां फलमतोऽन्येनाहिता अन्यस्य कर्म न साधयन्ति, तस्मादनाहिताग्नीनामनधिकारः, यजमानसंमितौदुम्बरी तु शास्त्रार्थो येन केनचिदपि प्रकृतप्रयोगगतेन यजमानेन सम्पाद्यत इति वैषम्यम् ॥

जुह्वादीनां साधारण्याधिकरणम् ।

सू० जुह्वादीनामप्रयुक्तत्वाद्यथाकामी प्रतीयेत ॥ ६ ॥

जुह्वादिपात्रेषु चिन्ता, किं यस्य कस्यचित्पात्रैः सत्रं प्रयोक्तव्यम्। उतान्यानि साधारणानि उत्पाद्यानी? ति, तत्राग्निवदुपग्राहविशेषविरोधाभावात् यस्य कस्यचित्पात्राणि भवेयुः सत्यमयं विरोधो नास्ति किं त्वाहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च दहन्तीति तथा दक्षिणे हस्ते जुहूमासादयेदित्यादिवचनैः पात्राणां दाहे गुणभावः सादनप्रतिपत्तिश्च विधीयते, तद्यदि कस्यचित्पात्रैरुपक्रान्ते प्रयोगे तस्य यजमानस्य द्विष्टगतिः स्यात् ततस्तस्य संस्कारः पात्राणां च प्रतिपत्तिर्हीयेत, यदि तु तैर्दह्येत तदा प्रक्रान्तः प्रयोगो विगुणः स्यात्, तस्मात्साधारणान्युत्पाद्येरन् ॥

विकृतसप्तदशसामिधेनीषु वर्णत्रयाधिकाराधिकरणम् ।

सू० पुरुषकल्पेन वा विकृतौ कर्तृनियमः स्याद् यज्ञस्य तद्गुणत्वादभावादितरान् प्रत्येकस्मिन्नधिकारः स्यात् ॥ ७ ॥

यास्त्विष्टिषु अध्वरकल्पादिषु, सप्तदशसामिधेनीरनुब्रूयादिति श्रुतं तासु किं वैश्यस्यैवाधिकारः ? उत त्रयाणामपी? ति संशये दर्शपौर्णमासप्रकरणपठितेन सप्तदश वैश्यस्येति वाक्येन साप्तदश्याङ्गत्वेन वैश्यो विधीयते कर्ता, न च प्रकृतौ साप्तदश्यमस्तीति यत्राध्वरकल्पादौ तद्विहितं तत्रैव वैश्यविधिस्तेन वैश्यकर्तृकसाप्तदश्याङ्गत्वादध्वरकल्पादौ वैश्यस्यैवाधिकारः, मैवं "प्रकृतौ हि श्रुतं वाक्यं ततोनोत्कर्षमर्हति । तस्माद्वैश्यानुवादेन साप्तदश्यं विधीयते" तच्च वैश्यनिमित्तत्वात्पाञ्चदश्यस्य बाधकं वैकृतैर्वचनैः साप्तदश्यं क्रत्वङ्गमुच्यते, तदनैमित्तिकत्वेन त्रयाणां न विशिष्यते, तस्मादध्वरकल्पादौ त्रयाणामधिकारिता ॥

इति शास्त्रदीपिकायां षष्ठस्य षष्ठः पादः ॥ ६ ॥

---

## अथ षष्ठस्य सप्तमः प्रारभ्यते ॥

विश्वजिति पित्रादीनामदेयत्वाधिकरणम् ।

सू० स्वदाने सर्वमविशेषात् ॥ १ ॥

विश्वजिति "सर्वस्वं ददाती"ति श्रुतं, तत्र किं ज्ञात्यादीनामपि स्व-शब्दवाच्यानां दान? मुत धनस्यैव यत्रास्य स्वामित्वमिति संशये सर्वेषां स्व-शब्दवाच्यानां दानमविशेषात्, शक्यन्ते च पित्रादयोऽपि परविधेयाः कर्तुं परस्वत्वापादनं हि दानम्, अतः पित्रादयोऽपि देयाः, नैतदेवं, न हि शक्यन्ते दातुं स्वत्वत्यागपूर्वकं हि परस्वत्वापादानं दानं, न च दीयमानोऽपि पिता न पिता भवति, यत्र तु प्रभुत्वयोगेन स्व-शब्दवृत्तिस्तच्छक्यं दातुं, तस्मिन् हि दत्ते पूर्वस्य स्वामित्वं निवर्तते परस्य च स्वामित्वमुपजायते, किञ्चायं स्व-शब्दोऽपि भिन्नया शक्त्या ऽऽत्मात्मीयज्ञातिधनेषु वर्तते तत्रैकस्मिन् प्रयोगेऽस्यैक एवार्थः, तत्र धनस्य दानसम्भवात्तद्विषय एव स्वशब्दस्तस्माद्धनस्यैव दानं न पित्रादीनाम् ॥

विश्वजिति पृथिव्या अदेयत्वाधिकरणम् ।

सू॰ न भूमिः स्यात्सर्वान्प्रत्यविशिष्टत्वात् ॥ २ ॥

येयं महापृथिवी सा देया नेति सापि सार्वभौमस्य धनमिति मन्यमानो दानमाह नासौ कस्यचित् स्वं, राज्यं हि स्वविषयपरिपालनकण्टकोद्धरणवृत्तित्वेन कर्षकादिभ्यः करादानं दण्ड्येभ्यश्च दण्डादानमिति एतावान् सम्बन्धः, न स्वामित्वमतो न सार्वभौमो महापृथिवीं दद्यान्माण्डलिकश्च मण्डलम् ॥

विश्वजिति अश्वादीनामदेयताधिकरणम् ।

सू॰ अकार्यत्वा[१]त्ततः पुनर्विशेषः स्यात् ॥ ३ ॥

विश्वजित्येव "न केसरिणो ददाती"ति हि श्रुतं तत्र केसरिणो दानं नेति विहितप्रतिषेधात् पक्षे दानं पर्युपादासस्त्वयम् अपि तु वाक्यशेषः स्यादित्यनेन न्यायेन अयं च तस्यैव न्यायस्य प्रपञ्चः प्रसङ्गादिहोक्तः ॥

विश्वजिति विद्यमानानामेव सर्वस्वानां दानाधिकरणम् ।

सू॰ नित्यत्वाच्चानित्यैर्नास्ति सम्बन्धः ॥ ४ ॥

"सर्वस्वं ददाती"ति किं यत्पुरुषस्योपभोग्यं स्वं कुप्याकुप्यशयनासनगवादि तत्सर्वं ददातीति शास्त्रार्थः, ततश्च यस्यापि यन्नास्ति सोऽपि तदर्जयित्वा दद्यात्? उत यद्यस्य विद्यते तत्सर्वं ददाती? ति संशये यत्सर्वं स्वं तद्दद्यादिति श्रुत्यर्थविधिलिप्सया दानविधिं मन्यते, चोदकेन तु दानस्य प्राप्तत्वाद्यस्य यदस्ति स तस्मिन् द्वादशशतमात्रं दातुं प्रवृत्तः सन् सर्वं दद्यादिति सर्वता विधीयते, किञ्चायं सर्व-शब्दः प्रसिद्धस्वत्वेष्वेव सर्वेषु उपपद्यतेऽत्राचाऽसिद्धस्व त्वानानामाक्षिपत्यर्जनं, तस्मान्नार्जयित्वा देयम् ॥

विश्वजिति धर्मार्थसेवकशूद्रस्यादेयताधिकरणम् ।

सू॰ शूद्रश्च धर्मशास्त्रत्वात् ॥ ५ ॥

धर्मार्थं परिचारकत्वेन यजमानमुपास्यतो यः शूद्रः स किं देयो न वेति, सर्व-शब्दानुग्रहात्परविधेयीकरणसम्भवाच्चादेयः, स्वत्वाभावादनिच्छया परवश्यत्वानभ्युपगमसम्भवाच्चादेयः, दासस्तु देय एव ॥

(१) अकार्यत्वाच्चेति पा॰ ।

विश्वजिति दक्षिणाकाल-विद्यमानानामेव सर्वस्वानां देयताधिकरणम् ।

सू० दक्षिणाकाले यत्स्वं तत्प्रतीयेत तदा न संयोगात् ॥ ६ ॥

किं दक्षिणाकालात्प्रागेव प्राप्तोपयोगमपि धनमनुपयुज्य प्रयत्नेन धारयित्वा देयं? यदपि भावित्वेन निश्चितं तदसदपि देय? मुत यद्दक्षिणा-कालेऽवस्थितं तदेव देय? मिति संशये, सर्व-शब्दानुग्रहाय भूतभाविनोरपि दानं दक्षिणाकालीने एव सर्वत्वोपपत्तेर्न धारणप्रयुक्तिर्भाविनश्च तदानीं स्वत्वाभावादशक्यमेव दानम् ॥

विश्वजिति दक्षिणोत्तराङ्गा-नामनुष्ठानाधिकरणम् ।

सू० अशेषत्वात्तदन्ते[1] स्यात्कर्मणो द्रव्य-सिद्धित्वात् ॥ ७ ॥

प्रकृतौ कर्मारम्भ एव त्रिधा यजमानेनात्मीयं धनं वचनबलाद् व्यव-स्थापितम्, इदं मे भक्षार्थमिदं क्रत्वर्थमिदं दक्षिणार्थं त्रयं दक्षिणार्थं तन्मध्ये द्वादशशतं दत्तम्, इह तु किं त्रिविधमपि दातव्यं कर्मशेषं चोत्स्रष्टव्यम्? उत यावता क्रतुशेषं निर्वर्तते तावच्छिष्ट्वाऽन्यत्सर्वं देय? मुत यद्दक्षिणार्थं नि-हितं तदेव सर्वं देय? मिति संशयः, "प्रत्यक्षवचनादिष्टसर्वदानविरोधतः चोदकावगतं कर्म शेषं लभ्येत दुर्बलम् ॥ प्रधानत्वात्क्रतोर्नैव दानं तद्-बाधनक्षमम् । किञ्चित्तु क्रतवे शिष्ट्वा सर्वमन्यत्प्रदीयते ॥ दक्षिणार्थेन निर्दिष्टं प्राप्तं द्रव्यमनूद्य तु । विधेयं सर्वतामात्रं लाघवं हि तथाविधेः ॥

अहर्गणस्थेऽपि विश्वजिति-सर्वस्वदानाधिकरणम् ।

सू० अहर्गणे च तद्धर्मः स्यात्सर्वेषाम-विशेषात् ॥ ८ ॥

अस्त्यष्टरात्रोऽहीनः तस्य विश्वजित्प्रथममहस्ततोऽभिप्लवः षडह-स्ततोऽभिजित्तत्र विश्वजिति संशय, किं द्वादशशतं दक्षिणा स्या? दुत सर्वस्वं दक्षिणे? ति, तत्र "गणेषु द्वादशाहस्य विध्यन्तः स्थापयिष्यते । द्वाद-शं शतं ज्योतिष्टोमात्तत्रातिदिश्यते । विश्वजित्यपि सैव स्याद्दक्षिणा गणव-र्तिनी । नामातिदेशप्राबल्यात्सर्वस्वं त्वेव दक्षिणा । इदं च प्राप्तिमात्र-

१ तदन्तः स्यादिति पा० ।

परमधिकरणं, प्राप्तं विश्वजिति सर्वस्वं बाधित्वा इतरेषां सप्तानामन्हां द्वादशशतदक्षिणानां भूयसां साधर्म्याद् द्वादशशतमेव देयमेकैव च तन्त्रेण सर्वेषामेकप्रयोगवर्तिनां दक्षिणा, न पृथक् पृथक् प्रदातव्या, तस्माद् भूयोऽनुग्रहाय द्वादशशतमेव देयम् ॥

विश्वजिति द्वादशशतन्यूनधनस्यानधिकाराधिकरणम्।

सू॰ विकारः सन्नुभयतोऽविशेषात् ॥ ९ ॥

सर्वस्वदान एव संशयः किं यस्य द्वादशशतान्न्यूनं धनं सोऽपि तावन्मात्रं सर्वस्वं दत्त्वाऽधिक्रियते? उत यस्याधिकं स एवेति "ततो न्यूनेऽधिके वापि सर्व—शब्दोपपत्तितः। उभयोरधिकारः स्यान्न न्यूनाधिकदायिनोः। इदं तु प्रकृतेः प्राप्तं सर्वदानं नियम्यते। तत्र चानतिसिद्ध्यर्थमधिकं सर्वमीरितम्" ॥ ज्योतिष्टोमे हि द्वादशशतं विधाय पश्चादुक्तं यद्येतावता ऋत्विजो न नमेयुरपि सर्वस्वेनेति द्वादशशतादसिद्धां वा नतिं ततोऽधिकामेव सर्वस्वं साधयितुं शक्नुयान्न न्यूनमतः प्रकृतौ तावद् द्वादशशताधिकमेव सर्वस्वं, यच्च प्राकृतं तस्यैव नियममात्रमिह क्रियते, तस्मादधिकदानेनैवात्राधिकारः ॥

आधानेऽपरिमितं देयमित्यनेन सङ्ख्यान्तरविधानाकरणम्।

सू॰ अपरिमाणे[1] शिष्टस्य सङ्ख्याप्रतिषेधस्तच्छ्रुतित्वात् ॥ १० ॥

आधाने श्रुतम् "एका देया षड् देया द्वादश देयाश्चतुर्विंशतिर्देयाः शतं देयं सहस्रं देयमपरिमितं देय"मिति, तत्रापरिमितं देयमिति किं पूर्वोक्तैकादिपरिमाणप्रतिषेध? उतायमपि सङ्ख्यान्तरविधि? रिति संशयः, तत्रावयवव्युत्पत्त्या परिमाणशून्यमुच्यते, न च परिमाणशून्यस्य दानं सम्भवति, अतः प्रकृतपरिमाणशून्यमुच्यते ततस्तस्य प्रतिषेधः, उच्यते बह्वर्थवचनोऽयं समुदायप्रसिद्ध्या, सा चावयवप्रसिद्धेर्बलीयसी, न चालब्धात्मिका रूढिः सुज्ञातपरिमाणेष्वपि बहुत्वमात्रेणापरिमित—शब्दप्रयोगात् तस्मादयमपि सङ्ख्यान्तरविशिष्टदानविधिः ॥

१ अपरिमिते शिष्टस्येति पा॰।

अपरिमित-शब्देन सह-स्राधिकस्य ग्रहणाधिकरणम् ।

सू० अनियमो, विशेषात् ॥ ११ ॥

बहुत्वविधिरपरिमित-शब्दे प्रयोगात् तस्मादयमपि इति स्थितं, किं तत्सहस्राच्यूनमधिकं वा? उताधिकमेवे? ति संशये अर्वागपि बहुत्व-सम्भवादनियमः, नैवम् "आपेक्षिको हि बह्वर्थः सहस्रापेक्षया भवेत् । तस्या-नन्तरनिर्दिष्टशतात्सहस्राद्‌धिकस्ततः ॥

इति हस्मेत्यादिपरकृतिपु-राकल्पानामर्थवादताधिकर-णम् ।

सू० परकृति–पुराकल्पमनुष्यधर्मः स्यादर्थाय ह्यनुकीर्तनम् ॥ १२ ॥

दर्शपौर्णमासयोः श्रुतम् इति ह स्माह बर्कुर्वार्ष्णिर्माषानेव मह्यं पचतेति स विधि? रुतार्थवाद? इति संशये विधिरर्थवत्त्वाद्वादमात्रं ह्यन-र्थकमित्यौदुम्बराधिकरणपूर्वपक्षे स्थितं तमेव पूर्वपक्षं मनुष्यधर्मः स्यादिति स्मारयित्वा क्त्वाचिन्तया ऽधिकारश्चिन्त्यते यदा विधिस्तदा किं वृष्णि-गोत्राणाम्? उत सर्वेषा? मिति वार्ष्णिकर्तृकत्वसंस्तवात् तद्गोत्राणामेव स्यात्, मैवं स्तुत्यस्य विधिर्न स्तुत्युपायस्य, न चात्र वार्ष्णिकर्तृकोमाषपाकः स्तूयते अन्यस्य स्तावकस्याभावात्, किन्तु वार्ष्णिकृतत्वेन कारणेन माष-पाकः स्तूयते अन्यस्य स्तावकस्याभावात् किन्तु वार्ष्णिकृतत्वेन कारणेन माषपाकस्य स्तुतिरतो माषपाकमात्रविधानात् सर्वपुंसामधिकारः अर्थ-वादो वेति क्त्वाचिन्तोद्घाटनम् ॥

सहस्रसंवत्सर-शब्दस्य सहस्रदिनपरताधिकरणम् ।

सू० सहस्रसंवत्सरं तदायुषामसम्भवान्मनुष्येषु ॥ १३ ॥

पञ्चपञ्चाशतस्त्रिवृतः संवत्सराः पञ्चपञ्चाशतः पञ्चदशाः पञ्चपञ्चाशतः सप्तदशाः पञ्चपञ्चाशत एकविंशाः विश्वसृजामयनं सहस्र संवत्सरमिति, किमस्मिन् सत्रे ये गन्धर्वादयः सहस्रायुषस्तेषामधिकारः? उत मनुष्याणा? मेव यदा मनुष्याणां तदा किं रसायनादिसम्पादितसहस्रा-युषा? मुत कुलकल्प? उत विश्वसृजामयनं कुर्वतां सहस्रायुषद्धपञ्चार्द्ध-तृतीयानां शतानामधिकारः? उत मासेषु संवत्सरशब्दमाश्रित्य सुखेनायं

मनुष्याधिकारः? उत द्वादशरात्रिषु संवत्सरशब्दः? उत दिवसेष्वि? ति पक्षाः तत्र मनुष्याणां सहस्रायुष्ट्वासम्भवात् श्रुतिबलाद्रसायनानामधिकारः तेषां त्वाप्युपसंहारासामर्थ्यान्मनुष्याणामेव रसायनलब्धसहस्रायुषां रसायनस्यै- तावदायुःसम्पादनासामर्थ्याच्छतायुः पुरुष इति श्रुतेः कुलकल्पः "शास्त्र- फलं प्रयोक्तरी"ति न्यायात्समयकर्मानुष्ठायिनां फलं न त्रिकालानुष्ठायि- नाम् अतो न कुलकल्पः, सत्रारम्भादेव तु सहस्रायुष्ट्वं कल्पनामितीदमयो- सम्भवादेवानुपपन्नं तस्मात्पञ्चपञ्चाशत इति यजमानाभिप्राया सङ्ख्या, एकोऽपि त्रिवृत्स्तोमकयागयुक्तः सम्वत्सरः पञ्चपञ्चाशत्सङ्ख्याकैः प्रत्येकं कर्तृभूतैः सम्बध्यमानस्तत्सङ्ख्या भवति तथा पञ्चदशादयोऽपीति, तेन चतुस्सम्वत्सरमिदं सत्रम् अर्द्धतृतीयैर्यजमानशतैः क्रियमाणं सहस्रसम्वत्स- रमिति कथ्यते अयममपि पक्षो बुद्धावत्यन्तमनारूढः "चतुर्विंशतिपरमाः सप्तदशावराः सत्रमासीर"न्निति वचनविरुद्धोद्दुरभ्युपगमः, तस्मात्सङ्ख्या-श- ब्दं सम्वत्सर-शब्दं वा गौणमाश्रित्यात्र मनुष्याधिकारः समाश्रयितव्यः, तत्रा- पि सङ्ख्याशब्दस्य मुख्यत्वादेकार्थनिश्चयसामर्थ्याच्च न स्वार्थत्यागः, सम्वत्स- रपदं तु जघन्यत्वात् सौरचान्द्रमसाद्यनेकार्थसाधारण्येनार्थनिश्चयासाम- र्थ्याद्गौणं भवति, तत्र योमासः स संम्वत्सर इति दर्शनान्मासेषु, तत्राप्य- शक्तिस्तदवस्थैव न ह्याधानादूर्ध्वं सहस्रमासं जीवनं सम्भवति, तस्मात्सम्व- त्सरप्रतिमा वै द्वादशरात्रय इति प्रयोगात् द्वादशरात्रिषु सम्वत्सरशब्दः प्रतिमाविशेषणं चात्र सम्वत्सर-शब्दः, न तस्य द्वादशरात्रिषु प्रयोग- तस्मात् त्रिवृदादिशब्दसामञ्जस्याद्दिवसेषु सम्वत्सर-शब्दः त्रिवृदादि- पदैः स्तोमविशिष्टमहरुच्यते, नाहः सङ्घस्ततोऽहस्सु गौणी संवत्सराभिधा ॥

॥ इति शास्त्रदीपिकायां षष्ठस्य सप्तमः पादः ॥

---

## अथ षष्ठाऽध्यायस्याष्टमः पादः आरभ्यते ।

अथानाहिताग्नेरेव चतुर्हो- तृहोमाधिकाराधिकरणम् ।

सू० इष्टिपूर्वत्वादक्रतुशेषो होमः सं- स्कृतेष्वग्निषु स्यादपूर्वोऽप्याधानस्य सर्वशेषत्वात् ॥ १ ॥

सन्ति चतुर्होतृसंज्ञका मन्त्रा स्तैर्जपहोमाः पुरुषार्थतया विहिताः "चतुर्होतारं प्रयुञ्जीत चतुर्होत्राप्रजाकामो जुहुया"दिति ये होमास्ते कि- माहिताग्न्यधिकाराः आहवनीये कार्याः? उतानाहिताग्न्यधिकारा लौकिके ऽग्नौ स्युरथवोभयाधिकाराः? इति, संशयः तदर्थमिदं विचार्यते एषा वा अना- हिताग्निरिष्टिरिति वचनं जपाभिप्रायमनुवादमात्रमनाहिताग्निर्वा होमे- ष्वधिकारप्रदर्शनपरमिति, तत्र विध्यश्रवणादनुवादो जपविषयः, इष्टिश- ब्दश्च जपविषय एव स्तुत्यर्थतया प्रयुक्त[1]स्तथैव वचनव्यक्तिः यैषाऽनाहि- ताग्नेः क्रिया जपात्मिका सेष्टिरिति, सत्यमेषा वचनव्यक्तिरियमपि तु सम्भवति यैषा चतुर्होत्रहोमात्मिकेष्टिः साऽनाहिताग्नेरिति, पूर्वस्यामा- हिताग्न्यधिकारा होमा उत्तरस्यामनाहिताग्न्यधिकाराः, न चान्यतरा नि- र्द्धार्यन्ते तस्मादुभयाधिकारा इति प्राप्ते उच्यते, "वचनस्यार्थवत्त्वायाना- हिताग्नेरधिक्रिया ॥ आहत्य च तदर्थास्ते चोदिता नान्यगामिनः षष्ठी- श्रुत्या ऽनाहिताग्नेः शेषत्वेन गम्यमानानार्थसामार्जिकमाहिताग्निमालम्बते, तस्मादनाहिताग्न्यधिकाराः ॥

अनाहिताग्निपूपनयनहोमाधिकरणम् ।

सू० उपनयन्नादधीत होमसंयोगात् ॥ २ ॥

उपनयनाङ्गभूता माणवककर्तृका आचार्यकर्तृकाश्च होमाः किमाह- वनीये स्युः? उत लौकिकाग्नाविति संशये पूर्ववद्वचनादाहवनीये स्युः माणव- कार्थाश्च ते होमास्तदधिकाराः अध्ययनाङ्गभूतोपनयनार्थत्वादत एव च ते माणवकाग्नौ कर्तव्या इति माणवकः प्रागुपनयनादादधीत तदूर्द्धं च भार्या- मुद्वहेत्, या तु "स्नात्वा भार्यामधिगच्छे"दिति स्नानोत्तरकाला दारक्रिया साऽपत्यार्था भविष्यतीति प्राप्ते ब्रूमः ॥ आधानस्य विद्वदधिकारित्वाद्विद्या- याश्चोपनयनाधीनत्वान्नोपनयनात्प्रागाधानाधिकारसम्भवः । किञ्च कर्मा- र्थैरेव दारैरपत्यमपत्यार्थः कर्म सिध्यतीति नार्थः पृथग् दारक्रियया, य एव त्वपत्यकर्मार्थेन दारसंग्रहः प्राप्तस्तस्यैवायं कालविधिः स्नात्वा भार्या-

---

[1] तत्रैषा वचनव्यक्तिः ।

मधिगच्छेदिति, तस्माच्च प्राग् दारसंग्रहः, तदभावे चाधानासम्भवाल्लौकिक एवाग्नौ उपनयनहोमः ॥

अनाहितेऽग्नौ स्थपतीष्ट्यधिकरणम् ।

सू॰ स्थपतीष्टिः प्रयाजवदग्न्याधेयं प्रयोजयेत्तादर्थ्याच्चापवृज्यते ॥ ३ ॥

"एतया निषादस्थपतिं याजये"दिति स्थपतीष्टिः किमाहितेष्वग्निषु स्यात्? उत लौकिके? इति संशये प्रकृतेराहवनीयादिप्राप्तेराहवनीयादीनां चाधानाधीनत्वादसत्यपि स्थपतेराधानविधावियमेवेष्टिराधानं प्रयोजयेत् इति प्राप्त उच्यते यदा ह्याधानस्य न साक्षाद्विधिरभविष्यत्तदा याज्ञिकलोकप्रयोगाद्वक्तं गार्हपत्यमादधाति दिवाऽऽहवनीयमित्यादिवेदवाक्यपर्यालोचनया धानक्रियानिमित्तत्वं पाचकादिवदाहवनीयादिशब्दानामाश्रित्य स्थपतिराहवनीयार्थमाधानमकरिष्यत्, यदा तु वसन्तादिविधानानि आधानविधायकानीति द्वितीये स्थितं, तदा तद्विहिताधानजन्याग्निगतसंस्कारवाचित्वादाहवनीयादिशब्दानां स्थपतिकृतेन चाधानेनाविहितेन तत्संस्कारविधानावगमाच्चाधानाक्षेपसम्भवः, तस्माल्लौकिके स्यात् ॥

अनाहितेऽग्नाववकीर्णिपश्वनुष्ठानाधिकरणम् ।

सू॰ अवकीर्णिपशुश्च तद्वदाधानस्याकालत्वात् ॥ ४ ॥

"यो ब्रह्मचार्यवकिरेत्स नैर्ऋतं गर्दभं पशुमालभेते"ति किमयं याग आहवनीयादिषु? उत लौकिक इति संशयः ब्रह्मचारिणस्त्रैवर्णिकत्वाद्विद्यावत्त्वाद्भार्याधिगमसम्भवादाधानमुपपन्नम्, अत आधायाग्निं प्रायश्चित्ते प्रवर्तेत, नैवं न ह्यस्यावकरकृतं ब्रह्मचर्यस्य विप्लवमवसमाधाय गार्हस्थ्यप्रवेशः सम्भवति "अविप्लुतब्रह्मचर्यो गृहस्थाश्रममाविशे"[1]दिति विधानाच्चापनीकस्याधानमस्तीति लौकिकेऽग्नावयं पशुर्लौकिकश्चाचारात्प्राप्तः ॥

देवकर्मणामुदगयनादिकालताधिकरणम् ।

सू॰ उदगयनपूर्वपक्षाहः पुण्याहेषु दैवानि स्मृतिरूपान्यार्थदर्शनात् ॥ ५ ॥

१ गृहस्थाश्रममावसेदिति पा॰ ।

उपनयनचौलादीनि किं सर्वकाले स्युः? उतोदगयनादिष्विति संशये ऽविशेषात्, सर्वदैवाधिकारः, स्मृतेस्तु उदगयनादिष्वेव स्युर्दैवानि ॥

पित्र्यकर्मणोऽपरपक्षादिकालताधिकरणम् ।

सू० इतरेषु तु पित्र्याणि ॥ ६ ॥

पित्र्याणि तु श्राद्धादीनि अपरपक्षादिषु स्मृतेरेव ।

ज्योतिष्टोमाङ्गयाच्ञाक्रययोर्नित्यताधिकरणम् ।

सू० याच्ञाक्रयणमविद्यमाने लोकवत् ॥ ७ ॥

ज्योतिष्टोमे याच्ञाक्रयणमाम्नातं "द्वादशरात्रीर्दीक्षितो भृतिं वन्वीते"ति याच्ञा "अरुणया पिङ्गाक्ष्या क्रीणाती"ति क्रयः, तत्र संशयः किं यस्य दक्षिणाद्रव्यं नास्ति सोमश्च तस्येदं याच्ञाक्रयणम्? उत विद्यमानेऽपी? ति तत्र द्रव्यार्थं याच्ञाक्रयणमविद्यमानद्रव्यस्य स्यात् द्रव्यवतस्त्वनर्थकं, तस्मान्न तस्य याच्ञादावधिकारः, स्यादेवं यदि द्रव्यमात्रप्रयुक्तं स्यादपूर्वप्रयुक्तं त्विदम् अतो ऽनेन विना ऽपूर्वमेव वैगुण्यान्नोत्पद्यते, तस्मान्नित्यं याच्ञाक्रयणम् ॥

ज्योतिष्टोमादिषु पयोव्रतादीनामपि नित्यताधिकरणम् ।

सू० तथा भक्षप्रैषाच्छादनं संज्ञप्तहोमद्वेषम् ॥ ८ ॥

"पयोव्रतं ब्राह्मणस्ये"ति भक्षः किमविद्यमाने भक्षान्तरे? उत भक्षसद्भावेऽपि? तथाऽग्नीदग्नीन्विहरेति प्रैषः किमन्यतो ऽनवबुद्धे प्रैषार्थे "अहतं वासः परिधत्त" इति वासोऽन्तराभावे तथा यत्पशुर्मायुमकृतेति संज्ञप्तहोमो मायुकरणे, तथा योऽस्मान् द्वेष्टि ऽयं च वयं द्विष्म इति मन्त्रो द्वेष्यसद्भावे? उत सर्वमिदं नित्यमिति संशये सामर्थ्यादेषां निमित्तसद्भावेऽनुष्ठानमिति निमित्ताश्रवणात् सत्यपि चान्यस्मिन् नियमादृष्टसिद्धेरनन्योपायत्वान्नित्यम् ॥

अपररात्रे व्रतस्यानियमाधिकरणम् ।

अनर्थकं त्वनित्यं स्यात् ॥ ९ ॥

यदा पुनर्वृत्यमानं पयो न जीर्यतीत्याशङ्क्यते तदाऽपि किमवश्यं व्रतयितव्यं नेत्याह तदा हि यजमानस्य रोगोत्पत्त्या क्रतुविरोध एव सम्भाव्येत तेन प्रधानविरोधाच्च व्रतयितव्यं नेत्याह ॥

छागस्यैवाग्नीषोमीयपशुताधिकरणम् ।

सू० पशुचोदनायामनियमो विशेषात् ॥ १० ॥

"अग्नीषोमीयं पशुमालभेते"ति किं यः कश्चित् पशुरालब्धव्यः ? उत छाग एव ? चोदनायां सामान्यश्रवणात् मन्त्रवर्णे च छागस्य वपाया मेदसोऽनुब्रूहीति छाग–शब्दश्रवणात् संशयः, तत्र "सामान्यावसिता तावच्चोदना वाक्यभेदतः । मन्त्रस्तदविरोधेन पाक्षिको यौगिकोऽपि वा विधिस्तुत्यैकवाक्यत्वात् प्राक्स्तुतेरपर्यवसितोऽञ्जनविधिरर्थवादगतघृतविषय एव पर्यवस्यति, मन्त्रचोदनयोस्तु वाक्यभेदादप्रतिद्वन्द्विविधिवाक्यं पशुसामान्ये पर्यवसितं न मन्त्रानुरोधेन शक्यं विशेषे नेतुं, मन्त्रस्तु चोदितार्थप्रकाशनात्परतन्त्रवृत्तिश्चोदनावगतं गवाश्वादिजातं निगमादिवशलब्धावयवयोगेन प्रकाशयिष्यति, यदा वा छागस्तदा प्रयोक्ष्यते, तस्मादनियमः उच्यते ।

चोदना पशुसामान्यमङ्गत्वेनावबोधयेत् ।
छागेऽप्यविकलं तत्तु प्रतिव्यक्ति समाप्तितः ॥
मन्त्रः प्रकरणाम्नानाचित्यमङ्गं प्रतीयते ।
कृप्तया रूढिशक्त्या च यच्छागस्यैव वाचकः ॥
तेन तं तादृशं यह्णन्विधिरात्मा विरोधिनम् ।
विधत्ते छागमेवाङ्गं तस्माच्छागोपसंग्रहः ॥

अधिकृतिरिति सिद्धा भेदशेषप्रयुक्तिक्रमनियमविचारैरेतया चाधिकृत्या ।
सुविदित उपदेशोऽनन्तरं चातिदेशो विकृतिषु तत ऊहोबाधतन्त्रप्रसङ्गाः ।

इत्युपाध्यायपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां षष्ठाध्यायस्याष्टमः पादः ॥ समाप्तश्चायमध्यायः ॥

---

## अथोत्तरषट्के सप्तमाध्यायस्य प्रथमः पाद आरभ्यते ।

अथ प्रयाजादिधर्माणामपूर्वप्रयुक्तताऽधिकरणम् ।

सू० श्रुतिप्रमाणत्वाच्छेषाणां मुख्यभेदे यथाधिकारं[1] भावः स्यात् ॥ १ ॥

---

१ यथाऽधिकारः स्यादिति पा० ।

उपदेशविचारे समाप्तेऽधुना तदधीनसिद्धिरतिदेशविचारः प्रस्तोष्यते, तदुपोद्घातत्वेन प्रथमिदं विचार्यते, ये धर्मा दर्शपूर्णमासयोर्ज्योतिष्टोमस्य च प्रकरणे समाम्नाताः प्रयाजादयो दीक्षणीयादयश्च ते किं सर्वयागार्थत्वेनोपदिश्यन्ते? उत यथा प्रकरणं व्यवतिष्ठन्ते? इति, यदि सर्वार्थास्ततः सौर्यश्येनादीनामप्युपदेशत एवाङ्गलाभसम्भवान्नातिदेशविचार आरब्धव्यो भवति, व्यवस्थितेषु तु सौर्यादीनां साकाङ्क्षत्वादतिदेशेन धर्मसद्भावः, तद्विशेष–तदूह–तद्बाधादिविचारार्थमुत्तरोऽध्यायगण आरब्धव्यः, तदर्थमिदं विचार्यते, किं यजिप्रयुक्ता धर्माः यज्यर्थाः प्रथमं यजिभावनोद्देशेन विहिताः सन्तः पश्चात्तत्करणिकया पूर्वभावनया तद्द्वारेण सम्भन्त्स्यन्ते? उतापूर्वप्रयुक्ता अपूर्वार्थाः? अपूर्वभावनया प्रथममित्थम्भावेनान्विताः पश्चात्करणभूतस्य यजेरनुग्राहका भवन्तीति, किं प्राप्तं? "धर्माणां करणाङ्गत्वे विवादो नैव विद्यते। भावनान्वयपक्षे च तादर्थ्यं नावकल्पते" अपूर्वभावनया हि सम्बध्यमाने करणेतिकर्त्तव्यते तुल्यकल्पे स्यातां, न करणाङ्गत्वमितिकर्त्तव्यतायाः स्यात्तस्मात्करणोद्देशेन विधातव्याः, केन पुनः करणमुद्दिश्यते? केचिदाहुः प्रकरणाम्नानानुमितेन वाक्येनेति। ननु तेन प्रकृतस्यैव दर्शपूर्णमासादेरुद्देशात्कथं सर्वार्थता? उच्यते प्रकृतस्याप्युद्देशकत्वेन यजतिरेवात्र कल्प्यः, स च स्वसामर्थ्यात्सर्वयागानुपस्थापयन्सर्वयागार्थतां नयति, न चैतस्मिन्पक्षे दर्शपौर्णमासवाक्यस्य समिदादिवाक्यानां चैकवाक्यता सम्भवति, येन सर्वैः संहत्य समिदादिविशिष्टदर्शादिविधानाद्यागान्तरे धर्मा न स्युस्तथा सति करणस्य फलं[1] प्रति चोद्देशाद्वैरूप्यं स्यात्तस्मात्फलवाक्ये फलं प्रतियागं विधाय पर्यवसिते पृथग्वाक्यैः समिदादिभिरनुमितयज्युद्देशकशब्दयुक्तैरङ्गानि विधीयन्ते, न च प्रकरणादुद्देश्यो यजिर्विशेष्टुं शक्यते आकाङ्क्षारूपस्य प्रकरणस्याविशेषकत्वात्संनिधेश्च यजिश्रुतिजनिताविशेषप्रत्ययेन बाध्यमानत्वात्, तस्मात्सर्वार्था इति। भाष्यानुसारिणस्त्वाहुः "दर्शपौर्णमासवाक्यमेव यजीनामु-

१ प्रत्युपादानादङ्गानि इति पु०।

द्दिशकं, न हि तद्यागोत्पत्तिपरमाग्नेयादिवाक्यैरेवोत्पन्नत्वात्, न च फलसंयोगार्थं "सर्वेभ्यो दर्शपूर्णमासौ" "सर्वेभ्यो ज्योतिष्टोम" इति च स्वर्गकामार्थत्वस्यापि सिद्धत्वात्, तस्मादनन्यार्थत्वादनेन फलवतो यागानुद्दिश्य धर्मा विधीयन्ते, न चोद्देश्यं दर्शपूर्णमास-शब्दः स्वर्गकाम-शब्दो वा शक्नोति विशेष्टुं, तस्मादधिकृतमात्रोपलक्षणं दर्शपूर्णमास-शब्दः स्वर्गकाम-शब्दोऽत्र दर्शपौर्णमास-शब्दश्च प्रायेण पर्वकालत्वाद्यागानामनुवादः, न च सविधेराग्नेयादीनामेवोद्देशः श्रुतिजनिताविशेषप्रत्ययविरोधादित्युक्तं प्राक्, तस्माद्यजिप्रयुक्ता धर्माः सर्वार्थाः । किञ्च व्रीह्यादिभिर्द्रव्यैः प्रत्यक्षं यजिर्निर्वर्त्यते नापूर्वम्, अवघातादयोऽपि यजिनिर्वृत्तावेव व्रीह्यादीनामेवोपकुर्वन्ति, तस्मात्ते तावद्यज्यर्थास्तत्सामान्यादितरेषु तथात्वं, यद्यपि यजिविशेषं प्रति धर्मविधिर्यद्यपि च भावनया सम्बन्धस्तथाऽपि पारिप्लवः तद्रूपत्वाद्यागान्तराणां भावनान्तराणां च, यथा लोके वाहीकोऽयमतिथिर्यवाग्वेन परिवेष्टव्य इत्युक्ते यद्यपि वाहीकविशेषं प्रति यवाग्वं श्रुतं तथाऽप्यन्येषामपि वाहीकानां यवाग्वप्रियत्वं गम्यते, तद्वद्यजिरूपस्य व्यक्तिविशेषस्य यजिकरणस्य च भावनाविशेषस्योक्ता धर्मास्तद्रूपाणामन्येषामपि साधारणा इति शक्यमवगन्तुं, तस्मात्सर्वार्था धर्मा इत्यनारभ्योऽतिदेशविचार इति प्राप्तेऽभिधीयते । "प्रधानविधिवाक्यं खल्वङ्गवाक्यसमन्वितम् । अङ्गप्रधानसंयुक्तां विधत्ते पूर्वभावनाम् ॥ भावनान्वयतः पश्चादंशयोरार्थिकोऽन्वयः । ततः कर्मान्तराङ्गानां प्राप्तिराशङ्क्यते कुतः ॥ भावनान्वयितामात्रं नांशयोस्तुल्यकल्पना । अपरित्यक्तरूपत्वाद्गुणप्राधान्यसम्भवात् ॥ यथाफलं भावनायामप्यन्वीयमानं फलं चापरित्यागात्प्राधान्यं प्रतिपद्यते, तथा करणमपि करणात्मना सम्बन्द्धुं फलं प्रति गुणत्वमितिकर्त्तव्यतां प्रति प्राधान्यम्, इदमेव हि करणं यत्फलोद्देशेन प्रवृत्तकर्त्तुर्व्यापारेण फलसाधनतामापद्यते, इतिकर्त्तव्यता तु येन व्यापारविशेषेण करणस्य फलसाधनरूपत्वमुपजन्यते सा उच्यते तस्माच्च तुल्यकल्पत्वं, न च यजिः स्वयमित्थंभावापेक्षो, नापि यागभावना निर्ज्ञा-

१ अन्यासामपीति पा० ।
२ सबद्धमिति पा० ।

तत्प्रकारत्वात्, अपूर्वभावनायास्त्वनिर्ज्ञातप्रकारत्वात् तद्भावना कीदृशीति न ज्ञायते यागेनापूर्वं कुर्यादित्ययमर्थः, यथा[1] व्याप्रुते यागादपूर्वं भवति तथा व्याप्रियेतेति कीदृशोऽसौ व्यापार इति भवति व्यापारविशेषापेक्षा, तद्विशेषत्वेन समिदादिव्यापारविधानमपेक्षासन्निधियोग्यत्वैरध्यवसीयते, तस्मात्प्रकृतभावना[2] शेषत्वात्समिदादीनां न पारिप्लवत्वं, व्रीह्यादिद्रव्यमपि फलभावनांशेन सम्बध्यते, यया हि क्रियया यागात्स्वर्गापूर्वं भवति सा फलभावना यागस्वरूपसम्पादनमपि तद्व्यापार एव अनिष्फलस्य फलसाधनत्वाभावात्, अवघातादयोऽपि तत्रैव व्रीहीणां योग्यतामादधाना भावनार्था एव, न च वाहीकयवाचवत्साधारण्यानुमानं, लोके हि प्रमाणान्तरवशात् तथाऽवगम्यते शब्दैकप्रमा[3]णकेषु विशेषान्वये शब्देनावगम्यमाने पारिप्लववाक्यं साहसमात्रं, तस्माद्यथाप्रकरणं व्यवस्थिता धर्माः, ततश्चानुपदिष्टधर्मकेषु सौर्यादिषु अतिदेशेन धर्मसद्भावादि विचारयितव्यं, तथा चोक्तं "प्राकृतात्कर्मणो यस्मात्तत्समानेषु कर्मसु । धर्मप्रदेशो येन स्यात्सोऽतिदेश इति स्मृत" इति, अत्रायमन्वयः प्राकृतात्कर्मणो धर्मप्रदेशो येन स्यात्सोऽतिदेशः । क्व धर्मप्रदेश इत्यपेक्षायामाह "यस्मात्तत्समाने"ष्विति, यस्मात्प्राकृतादाग्नेयादेर्धर्माः प्रदिश्यन्ते तत्समानेषु कर्मसु सौर्यादिष्विति, त्रिविधश्चातिदेशः प्रत्यक्षवचनान्नामधेयाच्चोदनालिङ्गानुमितवचनाच्चेति, तत्र प्रत्यक्षवचनात्तावच्चिन्त्यते ॥

समानमितरच्छ्येनेनेति श्रुत्या इषौ श्येनीयविशेषधर्मातिदेशाधिकरणम् ।

सू० समाने पूर्ववत्त्वादुत्पन्नाधिकारः स्यात् ॥ २ ॥

इषावेकाहे ज्योतिष्टोमविकारे "इषुं विष्टुतिं करोति स[4]प्ताहं भवती"ति प्राकृतानां स्तोत्राणां विकारं विधाय श्रूयते समानमितरच्छ्येनेनेति, तत्र संशयः किमयमनुवादः ? उत श्येनवैशेषिकाणामतिदेशविधि ?-

१ यथा वृत्ते इति त्वपपाठः ।
२ भावनाविशेषणत्वादिति पा० ।
३ शब्दैकप्रमाणे इति पा० ।
४ सप्ताहमिति पाठान्तरं तु न सम्यक् ।

रिति, तत्रेतर-शब्दः सन्निहितवचनत्वाच्छ्येनवैशेषिकाणां चासन्निहित त्वाच्च तद्वाचकः, चोदकप्राप्तास्तु ज्योतिष्टोमधर्मास्ते च श्येनेऽपि विद्यमानास्तत्सादृश्यमिषोरापादयन्तीति, तदपेक्षोऽयमनुवाद इति प्राप्ते ब्रूमः सत्यमितर-शब्दः सन्निहितमभिधत्ते न तु तन्मात्रं, किन्तु पूर्वनिर्द्दिष्टसदृशं सन्निहितं च यद् द्वयं तदभिधत्ते तदिह यत्सन्निहितं ज्योतिष्टोमिकं तत्पूर्वोक्तसदृशम् अप्राकृतानां सप्ताहादीनां पूर्वमुक्तत्वात् । यत्त्वप्राकृतं लोहितोष्णीषादि श्येनवैशेषिकं तद्यद्यप्यसन्निहितं तथाऽपि सादृश्यमस्तीत्यवश्यं हातव्येऽन्यतरस्मिन् वचनार्थवत्त्वाय सन्निधिं हित्वा सादृश्यपरिग्रहेण श्येनवैशेषिकाणां वादः । यद्वा चोदकप्राप्तानां विष्टुत्यादीनां वि[1]कार इषुं विष्टुतिमित्यादिना पूर्वं विहितस्तत इतरच्चोदकप्राप्तमितर-शब्देनोद्दिश्य तस्य लोहितोष्णीषादिविकारः श्येनादतिदिश्यते, एवं सन्निहितवचनत्वमर्थवत्त्वं च वचनस्य भविष्यति ॥

एतद्ब्राह्मणानीत्यादिना पञ्चहविःषु सार्थवादविध्यतिदेशाधिकरणम् ।

सू० पञ्चसञ्चरेष्वर्थवादातिदेशः सन्निधानात् ॥ ३ ॥

चातुर्मास्येषु चत्वारि पर्वाणि वैश्वदेवं, वरुणप्रघासाः, साकमेधाः, शुनासीरियमिति, तत्र वैश्वदेविकानामाद्यानां पञ्चानां हविषां यद्ब्राह्मणं तद्वारुणप्रघासिकेषु पञ्चस्वतिदिष्टं तद्ब्राह्मणान्येव पञ्चहवींषीति, तत्र संशयः किं यस्तेषामर्थवादः "वार्त्रघ्नानि वा एतानि हवींषी"त्यादि तन्मात्रस्यायमतिदेशः सैषां प्रशंसेति? उतार्थवादस्याङ्गविधीनां च? नव प्रयाजा इत्यादीनामतिदेश इति "पूर्वेषां ब्राह्मणं यत्तदुत्तरेष्वतिदिश्यते । चोद्यन्ते येन वाक्येन तत्तेषां ब्राह्मणं मतम् ॥ अङ्गविधिभिः स्वाङ्गान्येव विधीयन्ते, न हवींषि सार्थवादकं तु वाक्यं तेषां विधायकमिति भवत्यर्थवादस्य तत्सम्बन्धः, तस्मात्तन्मात्रातिदेशः, नैवं, यद्यपि ह्यङ्गविधिभिर्हविषां न विधेयता । तथाऽप्यस्त्येव सम्बन्धस्तत्सम्बन्ध्यङ्गचोदनात् । किन्त्वाङ्गवाक्यैकवाक्यतामापन्नं प्रधानवाक्यं हविषां सम-

[1] विचार इषुं विष्टुमित्यादिना इति तु पा० ।

यायां विधायकमिति विधायकेनाप्यस्त्येवाङ्गविधीनां सम्बन्धः, तस्मात्सर्वेषामतिदेशः ॥

एतद्ब्राह्मण इत्यनेन एककपालैन्द्राग्नयोः सार्थवादविध्यतिदेशाधिकरणम्।

सू॰ एककपालैन्द्राग्नौ च तद्वत् ॥ ४ ॥

वैश्वदेवे तावद् द्यावापृथिव्य एककपालो वरुणप्रघासेषु कार्य एककपाल ऐन्द्राग्नो द्वादशकपालश्च, ततस्साकमेधेषु श्रूयते ऐन्द्राग्न एकादशकपालो वैश्वदेवकर्मण एककपाल" इति तत एतद्ब्राह्मण ऐन्द्राग्नः एतद्ब्राह्मण एककपाल इति श्रुतं तत्पूर्ववत् सार्थवादकस्य साङ्गविधिकस्य कृत्स्नकाण्डस्यातिदेशकमित्युत्तरविवक्षया प्राप्यते ॥

साकमेधे वारुणप्रघासिकैककपालातिदेशाधिकरणम्।

सू॰ एककपालानां वैश्वदेविकः प्रकृतिराग्रयणे सर्वहोम[1]पर्यावृत्तिदर्शनादवभृथे च सकृद्द्व्यवदानस्य वचनात् ॥ ५ ॥

"एतद्ब्राह्मण एककपाल" इति किं वैश्वदेविकस्यैककपालस्य ब्राह्मणमतिदिश्यते? किं वा वारुणप्राघासिकस्ये? ति संशये वारुणप्राघासिकेऽल्पमप्राकृतं वैश्वदेविके बहु तस्मात्तदतिदेशोऽयं वचनस्य बहुफलत्वायेति प्राप्ते ब्रूमः वारुणप्रघासिकस्याव्यवहितत्वादेतद्ब्राह्मण ऐन्द्राग्न इत्यनेन निःसन्दिग्धवारुणप्रघासिकब्राह्मणनिर्द्देशेन समभिव्याहाराद्वैश्वदेविकस्य तु व्यवहितत्वात्तद्धर्माणां च स्वरसामैककपालामिक्षमिति वक्ष्यमाणादेव न्यायाल्लाभात्तद्विषयत्वे वचनानर्थक्यप्रसङ्गात्, वारुणप्रघासिकस्यैककपालब्राह्मणस्यायमतिदेशः ॥

इति शास्त्रदीपिकायां सप्तमस्य प्रथमः पादः ॥ १ ॥

---

## अथ शास्त्रदीपिकायां सप्तमाध्याये द्वितीयः पादः।

---

अथ रथन्तरादिशब्दस्य गानविशेषार्थताऽधिकरणम्।

सू॰ साम्नोऽभिधानशब्देन प्रवृत्तिः स्याद्यथाशिष्टम् ॥ १ ॥

---

१ सर्वहोमापरिवृत्तिदर्शनादिति पा॰।

"कवतीषु रथन्तरं गायती"त्यत्रानेन रथन्तर-शब्देन किं कवतीष्वतिदिश्यत इति परिज्ञानार्थं रथन्तरादिशब्दाः किं गीतिविशिष्टाना"मभित्वा शूर नो नुम" इत्यादीनां वाचकाः? उत गीतिमात्रस्ये? ति चिन्त्यते, द्वितीये तु मन्त्रलक्षणं कुर्वता गीतिः सामेत्युक्तं, न तूपपादितम् इह त्वतिदेशविषयसिद्ध्यर्थं गीतिविषयत्वमेव न्यायेन दृढीक्रियते तत्र गीतिविशिष्टायामृचि प्रयोगादृग्वचनत्वं विशिष्टवचनत्वे विशेषणभूतगीत्यभिधानस्यावश्यकत्वात्तदभिधाने च तत एव तदविनाभूतायामृचि प्रतिपत्तिसिद्धेरभिधानशक्तिकल्पनानुपपत्तेर्गीतिमात्रमेषामभिधेयम् । अतोऽभिवत्यां यो गीतिविशेषस्तस्य कवत्यादिष्वतिदेशः ॥

इति शास्त्रदीपिकायां सप्तमाध्यायस्य द्वितीयः पादः ॥ २ ॥

---

## अथ शास्त्रदीपिकायां सप्तमाध्याये तृतीयः पाद आरभ्यते ॥

अग्निहोत्रादिनाम्ना धर्मातिदेशाधिकरणम् ।

**सू० उक्तं हि क्रियाभिधानं तच्छ्रुतावन्यच विधिप्रदेशः स्यात् ॥ १ ॥**

इदानीं नामातिदेशः प्रस्तूयते, कुण्डपायिनामयने श्रूयते "मासमग्निहोत्रं जुहोती"ति तत्रैयमिकाग्निहोत्रात्कर्मान्तरमिति स्थिते संशयः किमयमग्निहोत्र-शब्दः? नैयमिकाग्निहोत्रधर्माणामतिदेशकः? उत ने? ति, "उभयोरविशेषेण सामानाधिकरण्यतः । नामधेयमिदं तस्माच धर्मानतिदेक्ष्यति ॥ एकस्य त्वभिधेयत्वे गौणत्वेनापि सम्भवात् । नान्यस्याप्यभिधेयत्वमनेकार्थत्वदोषतः ॥ न चाग्न्यमाणविशेषत्वं नैयमिकेऽग्नये होत्रमित्येवं प्रवृत्तिर्निमित्तं सम्भवति, इतरस्य त्वग्निदेवत्यत्वं नावगतम्, अधर्मकश्च कौण्डपायिनस्तद्वचनत्वे सति न गौणत्वं नैयमिकस्य युज्यते, नैयमिकस्तु धर्मवात् ततस्तवामेदं तत्सादृश्यविधित्सयाऽन्यत्र प्रयुज्यते सादृश्यं च धर्मनिमित्तम् अतो धर्मातिदेशोऽयं मासमग्निहोत्रं जुहोतीति ॥

प्रायणीयेति नाम्ना धर्मानतिदेशाधिकरणम् ।

सू॰ अपि वा सच्चकर्म्मणि गुणार्थैषा पुनः श्रुतिः स्यात् ॥ २ ॥

"द्वादशाहे प्रथममहः प्रायणीयोऽतिरात्रः गवामयनेऽपि प्रथमेऽहनि वैश्वानरो ज्योतिष्टोमः प्रायणीयमहर्भवती"ति प्रायणीय-शब्दः प्रयुज्यमानः किं द्वादशाहिकधर्मानतिदेशेन्वे? ति संशये पूर्वं वदतिदेशे प्राप्तेऽभिधीयते—"प्रायणीयपदं येन निमित्तेन प्रवर्त्तते । प्राथम्येन तदस्त्येव गवामयनिकेऽपि नः । तस्मात्सिद्धनिमित्तेन श्रुत्या नामत्वसम्भवात् । न गौणत्वेन धर्माणामतिदेशोऽवकल्पते ॥

सर्वपृष्ठ-शब्देन षट्पृष्ठानामतिदेशाधिकरणम् ।

सु॰ विश्वजिति सर्वपृष्ठे तत्पूर्वकत्वात् ज्यौतिष्टोमिकानि पृष्ठान्यस्ति च सर्वपृष्ठ-शब्दः ॥ ३ ॥

"विश्वजित्सर्वपृष्ठो भवती"त्यत्र संशयः किमयं सर्वपृष्ठ-शब्दोऽनुवादः? उत बृहद्रथन्तरयोर्विकल्पेन प्राप्तयोः समुच्चयविधि? रथवा षाडहिकानां रथन्तरबृहद्वैरूप्यवैराजशाक्वररैवतानामतिदेश? इति, तत्र ज्योतिष्टोमे माहेन्द्रादिषु चतुर्षु स्तोत्रेषु सप्तदशानि पृष्ठानीति पृष्ठ-शब्दप्रयोगात्सर्वेषां पृष्ठत्वं तेषां चेह चोदकप्राप्तेः सर्वपृष्ठत्वं निर्ज्ञातमेव विश्वजितः, तस्मादयमनुवादः, नैवं बृहद्रथन्तरसाध्यमाहेन्द्रस्तोत्रवचन एव पृष्ठ-शब्दो न लिङ्गसमवायाच्चतुर्षु प्रयुक्तः, तस्माच्च तेषां पृष्ठशब्दवाच्यत्वम् इत्यप्राप्ता सर्वपृष्ठता चोदकेन अतो नानुवादः, चोदकेन तु विकल्पेन प्राप्तयोर्बृहद्रथन्तरयोः पृष्ठयोः सर्वत्वं समुच्चयो विधीयेत, नैवमपि युक्तं सर्व-शब्दस्य बह्वपेक्षत्वात्, द्वयोरप्रवृत्तेस्तस्मात्साडहिकानां पृष्ठानां ज्योतिष्टोमविकार एव विश्वजिति वचनादतिदेशः कः पुनर्वचनातिदेशस्यात्र सम्बन्धः,? न हि सर्वपृष्ठ-शब्दः षडहनामधेयं सदिह गुणवृत्त्या प्रयुक्तं यतस्तन्निमित्तोनिर्देश इति [1]सङ्कुच्येत सत्यमेवं, कर्मसमा-

१ इह सङ्कुच्येतेति पा॰ ।

धिकरणपदनिमित्तोऽयमतिदेश इति नामाधिकारे चिन्तितः, परमार्थतस्तु वाचनिक एवायमतिदेशः ॥

अवभृथनाम्ना सौमिकधर्मातिदेशाधिकरणम् । **सू॰ तथाऽवभृथः सोमात् ॥ ४ ॥**

वरुणप्रघासेषु श्रूयते "वारुण्या[1] निष्कापेण तुषैश्चावभृथं यन्ती"ति, तत्र किमवभृथ-शब्देनापां व्युत्सेकं दार्शपौर्णमासिकं चोदकप्राप्तमनूद्य तत्र तुषनिष्कासं विधीयते । अथवा सौमिकावभृथधर्मकं कर्मान्तरं विधीयत इति संशये अपां व्युत्सेकेऽप्यवभृथ-शब्दप्रयोगात्तदनुवादः । ननु तत्र गौणोऽवभृथ-शब्दः, न चेह गौणग्रहणं न्याय्यं, तुल्यमिदं तवापि गौणत्वम्, अपि च ममानुवादे गौणः तव तु विधौ तस्मादपां व्युत्सेके गुणविधिः सत्यं, ममापि तुल्यत्वमस्ति तत्तु प्रमाणवत्कर्मान्तरे प्रयुक्तत्वाद्भवतस्त्वप्रमाणकं गौणत्वं न हि शब्दस्य स्वरसादवगम्यते "अर्थान्तरे प्रयोगे तु निश्चिते गौणता भवेत्, न चेहापां व्युत्सेकपरत्वेऽवभृथ-शब्दस्य प्रमाणमस्ति, यन्तीत्यनेन तु प्रकरणान्तरन्यायेन कर्मान्तरं विधीयते, तत्र प्रयुज्यमानोऽवभृथ-शब्दो मुख्यावभृथसादृश्यं बिदधत्तद्धर्मानतिदिशतीति न्याय्यम् ॥

वारुणप्राघासिकाभृथस्य तुषनिष्कासद्रव्यकत्वाधिकरणम् । **सू॰ द्रव्यादेशे तद्द्रव्यश्रुतिसंयोगात्पुरोडाशस्त्वनादेशे तत्प्रकृतित्वात् ॥ ५ ॥**

यदिदं कर्मान्तरं तत्किं पुरोडाशद्रव्यकम्? उत तुषनिष्कासद्रव्यक? मिति विचारः, तत्रावभृथ-शब्देन प्रत्यक्षेण पुरोडाशादिधर्मप्राप्तेस्तद्विशिष्टकर्मविधिपरेण च तुषनिष्कासस्य वाक्यभेदाद्विधातुमशक्तेः पुरोडाश एव द्रव्यं स्यात्, "अपूर्वकर्मविधिनाऽनेकेषामपि चोदना । अन्यथा तुषनिष्कासपदानर्थक्यदोषतः । तद्विशिष्टविधिस्तेन पुरोडाशस्य बाधनं श्रुत्या हि तुषनिष्कासं विशेषेण च चोद्यते, अवभृथ-शब्देन तु गौणत्वेन सर्वावभृथधर्मसाधारणेन च पुरोडाशस्य प्राप्तिस्तस्मात्तस्य बाधः ॥

---

१ वारुणीनिष्कापेणेति पा॰ ।

वैष्णवशब्दादातिथ्ये धर्मानतिदेशाधिकरणम् ।

सू॰ गुणविधिस्तु न गृह्णीयात्सम-
त्वात् ॥ ६ ॥

"आतिथ्यायां वैष्णवो नवकपालो भवती"ति श्रूयते तत्राश्ववालादयः केचिद्धर्मा विहिताः राजसूये त्रैष्णवस्त्रिकपाल इति श्रुतेः[1] वैष्णव-शब्दः किमातिथ्याद्विधर्मानतिदिशति? ने? ति संशयेऽग्निहोत्रन्यायेनातिदेशं मन्वानस्योत्तरं "श्रुत्या वैष्णव-शब्दोऽयं देवताया विधायकः। न गौणवृत्तिमाश्रित्य धर्मानतिदिशत्यतः ॥

निर्मन्थ्यादिशब्दैर्धर्मानतिदेशाधिकरणम् ।

सू॰ निर्मन्थ्यादिषु चैवम् ॥ ७ ॥

"निर्मन्थ्येनेष्टकाः पचन्ति बर्हिषा यूपावटमवस्तृणाति आज्येन यूपमनक्ती"ति बर्हिराज्यनिर्मन्थ्य-शब्दाः पाशुकस्य निर्मन्थ्यस्य दार्शपौर्णमासिकयोश्च बर्हिराज्ययोर्धर्मानतिदिशेयुर्न? ति संशये, वैष्णव-शब्दस्यानतिदेशकत्वेऽपीष्टित्वेन दर्शपूर्णमासधर्मलाभात् युक्तमनतिदेशकत्वं, बर्हिरादिशब्दानां त्वनतिदेशकत्वेऽन्यतोधर्माधर्मालाभात्साकाङ्क्षाविधयः स्युः, तस्मादतिदेशका इति विशेषा[2]काङ्क्षा लोकतोऽपि मन्थनादिप्रकारलाभाच्च श्रुत्यर्थविधिसंभवे गौणत्वं न्याय्यम् ॥

द्वयोः प्रणयन्ति इत्यनेन सौमिकधर्मानतिदेशाधिकरणम् ।

सू॰ सौमिके तु प्रणयनमवाच्यं हीत-
रत् ॥ ८ ॥

चातुर्मास्येषु चत्वारि पर्वाणि, तत्र श्रूयते "द्वयोः प्रणयन्ती"ति तस्माद् द्वाभ्यामेतीति तत्र भाष्यकारः सौमिके तु प्रणयनमित्यादिभिः सप्तभिः सूत्रैरधिकरणद्वयं व्याचख्यौ, प्रथमं तावदिदं चिन्त्यते किं सौमिकमिदं प्रणयन? मुत प्राकृत? मिति तत्र प्राकृतस्य चोदकप्राप्तत्वेन वचनानर्थक्यात्प्रणयनमात्रवचनोऽपि शब्दोऽर्थवत्त्वाय सौमिकधर्मवति प्रणयने लक्षणया वर्तते, तस्मात्सौमिकमिति प्राप्ते ब्रूमः प्राकृतं स्यान्न हि प्रणयति-शब्दः सौमिकस्य नामधेयं, येन तद्रुपस्यापयेत्, प्रणयनमात्रं तु

१ श्रुतौ वैष्णवशब्द इति पा॰ ।
२ विशेषाशङ्केति पा॰ ।

ब्रूते तच्च चोदकत एव प्राप्तं, तस्मात्प्राकृतस्यैवायमनुवादः स किमर्थः परिसंख्यार्थो वा द्वयोः प्रणयन्ति न चतुर्ष्विति, गुणविधानार्थो वा परिसंख्यायास्त्रिदोषत्वात् अर्थवादार्थो वा, तस्माद् द्वाभ्यामेतीति गुणश्रवणादर्थवादस्य प्रयोजनमुत्तराधिकरणे वक्ष्यामः ॥

द्वयोः प्रणयन्ति इत्यनेन मध्यमयोर्द्वयोः प्रणयनाधिकरणम्।

सू॰ प्रथमोत्तमयोः प्रणयनमुत्तरवेदिप्रतिषेधात् ॥ ९ ॥

तत्रैवं चिन्त्यते कतरयोर्द्वयोरिदं प्रणयनं? किमनियम? उत प्रथमोत्तमयो? उत मध्यमयो? रिति विशेषाभावादनियमः, न' वैश्वदेवमुत्तरवेदिमुपवयन्ति न शुनासीरीय" इति उत्तरवेदिप्रतिषेधस्य प्रथमोत्तमयोर्दर्शनात् तयोरेवेदं प्रणयनं प्रणयनाङ्गमुत्तरवेदिः, तद्यदि प्रथमोत्तमयोरिदं प्रणयनं स्यात्ततस्तयोरुत्तरवेदिः प्राप्नोति प्राप्तौ सत्यां प्रतिषेधो घटते नान्यथा, तस्मात्प्रथमोत्तमयोरिति प्राप्तेऽभिधीयते मध्ययोः स्याद् गत्यर्थवादवाक्यशेषात्, तस्माद् द्वाभ्यामेतीति गतिसाधनभूतयोरिदं प्रणयनमिति गम्यते, गतिसाधनत्वं च मध्यमयोः पर्वणोरुरुसंस्तवादवगतं, तस्मान्मध्यमयोरिदम्, एतदर्थवादस्य प्रयोजनं, तद्वशेन हि मध्यमयोः प्रणयनं व्यवतिष्ठते, भवतु व्यवस्थानं किमर्थं तु प्राप्तस्य प्रणयनस्य मध्यमयोरनुकीर्त्तनं, गुणार्थमिति ब्रूमः. अस्मिन् हि प्रणयने उत्तरवेद्यामग्निं निदधातीति श्रुतं यदा चैतदर्थवादवशान्मध्यमयोः प्रणयनं व्यवस्थापितं तदोत्तरवेद्यामग्निं निदधातीति एतदपि मध्यमयोरेव स्यात् अन्यथा चतुर्ष्वपि स्यात्, तस्मादुत्तरवेदिं मध्यमयोरुपसंहर्त्तुं सार्थवादकस्य प्रणयनस्य पुनःश्रवणम् यत्तु "न वैश्वदेव उत्तरवेदिमुपवयन्ति न शुनासीरीय" इति तदुपावपन्तीति वचनान्तरेणाविशेषविहितोत्तरवेदेः प्रथमोत्तमयोः प्रतिषेधायेति न किञ्चिदनर्थकम्। इदं तु व्याख्यानं वार्त्तिककारो नानुमेने यत्तावदुक्तमर्थवादार्था पुनः श्रुतिरिति, तत्र नाविधीयमानेऽर्थवादः सम्भवति "विधिना त्वेकवाक्यत्वादि"ति न्यायादविधिशेषस्यानर्थक्याच्च चोत्तरवेद्युपसंहारः प्रयोजनं तदसम्भवात्, सत्यपि हि द्वयोः पर्वणोः सार्थवादप्राकृतप्रणयनानुवादे वाक्यान्तरेणाग्निनिधानानुवादेन विनियुज्यमानोत्तरवेदिश्चतुर्ष्वपि

चोदकप्राप्ताग्निनिधानसम्भवात्सर्वेषु स्यात्, अपि चोपात्रवयन्तीत्ययमुत्तरवेद्युत्पत्तिविधिरनारभ्याधीतोऽपि न वैश्वदेव उत्तरवेदिमुपवपन्ति न शुनासीरीये इत्यनेन प्रथमोत्तमाभ्यां पर्युदस्तोमध्यमयोरेव व्यवस्थितः, उत्पत्त्यपेक्षश्च विनियोग इति उत्तरवेद्यामग्निं निदधातीत्ययमपि विधिर्मध्यमयोरेव व्यवतिष्ठत इति नार्थो द्वयोः प्रणयन्तीत्यस्य। यस्तु प्रणयनान्तरमिदं प्रकृत्यर्थवादं समर्थयते तस्यापि तुल्यमेवानर्थक्यं, यत्तु न वैश्वदेव उत्तरवेदिमुपवपन्ति इत्येवं प्रतिषेधः पर्युदासो वा न सम्भवतीति प्रलप्यते तद्बालसंमोहनमात्रत्वादुपेक्षणीयं, यदि च कथञ्चिद् द्वयोः प्रणयन्तीत्यनेनोत्तरवेद्युपसंहारः सिध्यति तत उपात्रवयतीत्ययमपि विनियोगापेक्षत्वाद्विनियोगव्यवस्थया मध्यमयोरेव व्यवतिष्ठते न प्रथमोत्तमयोः, ततश्च न वैश्वदेव उत्तरवेदिमिति वचनमनर्थकं स्यात्, अस्त्विति चेन्न "औत्तरवेदिकोऽनारभ्यवादप्रतिषेध" इति सूत्रविरोधात्, इदं हि तत्प्रयोजनकथनार्थं सूत्रं, तस्मात्सर्वमिदमेकमधिकरणमेवं वर्णयितव्यं "द्वयोः प्रणयन्ती"ति किम्प्राकृतं प्रणयन ? मुत सौमिक ? मुतापूर्व ? मिति त्रिधा संशयः, तत्र प्रणयनमात्रश्रवणात्तस्य चातिदेशतः प्राप्तेस्तस्यैवेयं पुनःश्रुतिः परिसंख्यार्था गुणार्था अर्थवादार्था वा परिसंख्याद्यसम्भवात् आनर्थक्यपरिजिहीर्षया सामान्यवचनोऽपि प्रणयन–शब्दः सधर्मकं सौमिकं प्रणयनं लक्षणया प्रतिपादयति, तथा चोत्तरवेदिप्रतिषेधोऽवकल्पते न वैश्वदेव इति, न चायमुपात्रवयन्तीत्यस्य प्रतिषेधः, तस्यावान्तरप्रकरणेन केवलवरुणप्रघासविषयत्वात्प्रथमोत्तमयोरप्राप्तेः प्रतिषेधानर्थक्यात्, अस्मिंश्च पक्षे प्रथमोत्तमयोरिदं सौमिकं प्रणयनमुत्तरवेदिप्रतिषेधस्य तद्विषयत्वाद्यदि च मध्यमयोः स्यात् ततस्तद्वशेनैव मध्यमयोरुत्तरवेदिसिद्धेरुपात्रवयन्तीति अयं प्रथमोत्तमविषय एव स्यात्, तयोरेव च प्रतिषेध इति व्याघातः स्यात्तस्मात्प्रथमोत्तमयोः, सौमिकं प्रणयनं पर्युदस्तोत्तरवेदिकं विधीयत इति प्राप्तेऽभिधीयते, "न ह्नि प्रणयन्तीत्येतत्सौमिकस्याभिधायकम्। प्राकृतस्यानुवादे च वचनं स्यादनर्थकं, तस्मात्प्रणयन्तीत्येतदप्राकृतमसौमिकम् अपूर्वमग्नेर्नयनं वदत्याहवनीयतः"। यद्यपि प्रणयनमात्रं श्रुतं तथाऽपि शाखा-

न्तरे आहवनीयाद् द्वावग्नी प्रणयत इति वचनात्तदेकार्थत्वादनेन वचनेन प्राकृतप्रणयनोत्तरकालमाहवनीयादग्न्यन्तरप्रणयनं पशुबन्धवद्विधीयते, तच्च गत्यर्थवादवशान्मध्यमयोः पर्वणोर्भवति परिसंख्यार्थमित्यादि सूत्रत्रयं त्रयाणामपि पक्षाणां यथाक्रमेण प्रयोजनकथनार्थम् उत्तरवेदिप्रतिषेधस्तूपात्रवयन्तीत्यस्य सामान्यविषयस्य पर्युदासार्थः, सामान्यविषयत्वं चास्य भाष्य एव दर्शितम् ॥

स्वरसामादिशब्देन धर्मातिदेशाधिकरणम् ।

सू० स्वरसामैककपालामिक्षं च लिङ्गदर्शनात् ॥ १० ॥

गवामयने स्वरसामान उक्थ्याः सप्तदश स्वरसामान इति, अन्यत्रापि श्रूयते "पृष्ठः षडहो द्वौ स्वरसामाना"विति, किमेतौ स्वरसामानाविति गवामयनिकस्वरसामविकारा? उत न, तथा वैश्वदेवे पर्वणि वैश्वदेव्यामिक्षा द्यावापृथिव्य एककपालः" अन्यत्रापि मैत्रावरुण्याऽऽमिक्षा वारुण एककपाल इत्यादावेककपालामिक्षा वैश्वदेविकैककपालामिक्षाविकारा? उत ने? ति संशये स्वरसामादिशब्दानां गुणविधित्वाद्वैष्णवशब्दवदनतिदेशकत्वात् न तद्विकारत्वमिति प्राप्ते ब्रूमः अनन्यगतिभ्यो लिङ्गेभ्यः स्वरसामादिचोदनाशब्दोपबृंहितेभ्यस्तद्विकारत्वं, लिङ्गानि भाष्य एव दर्शितानि ॥

वासो ददातीत्यादौ वासआदिशब्दानामाकृतिनिमित्ताधिकरणम् ।

सू० कर्मजे कर्मयूपवत् ॥ ११ ॥

कर्मनामधेयानामग्निहोत्रादीनामुक्तमतिदेशकत्वं यौगिकानां प्रायणीयादिशब्दानां गुणविधीनां च वैष्णवादिशब्दानां लिङ्गविशेषशून्यानां नास्त्यतिदेशनिमित्तत्वमित्युक्तं कर्मनामवदेव संस्कारनाम्नां यूपादीनां सिद्धमेवातिदेशकत्वम्, इदानीं वासःप्रभृतीनां संस्कारनिमित्तत्वमेवास्ति नास्तीति चिन्त्यते, "वासो ददाति अन्नो ददातीति किं वाऽनन्तवयनं च कृत्वा वासोऽनश्च निष्पाद्यैव दातव्य? मुत यथा सिद्धमेव दातव्य? मिति संशयः, तत्र वानतत्त्वणक्रियायां सत्यां शब्दप्रयोगात् क्रियानिमित्तो वा-

सः–शब्दो ऽनः–शब्दश्च क्रियामेव दानाङ्गतया विधत्तः, तस्मात्साऽनुष्ठेया दानं कुर्वता, एवं प्राप्ते ब्रूमः जातिशब्दावेतौ जात्यन्वयव्यतिरेकानुविधानाज्जातिस्तु क्रियाऽभिव्यङ्ग्येति तदुत्तरकाले शब्दप्रयोगो न तु शब्दः क्रियावाची, तस्माच्च क्रियातिदेशकत्वं शब्दयोः ॥

गर्गत्रिरात्रे लौकिकेऽग्नौ उपनिधानाधिकरणम् ।

सू० विप्रये लौकिकं स्यात्सर्वार्थत्वात् न वैदिकमर्थनिर्देशात् ॥ १२ ॥

"अग्निमुपनिधाय स्तुवीते"ति किमाधानसंस्कृतोऽग्निराहवनीयादिरूपविधेय? उत लौकिक? इति संशये संस्कृतस्य प्रयोजनापेक्षत्वात्सामान्यवचनोऽप्यग्नि–शब्दस्तद्विषयत्वेन गम्यमानः संस्कारमुपनिधानाङ्गत्वेनातिदिशतीति प्राप्ते ब्रूमः "वन्हिमात्राभिधायित्वाच्च संस्कारातिदेशनम् । होमादिभिः फलापेक्षा संस्कृतानां निवर्त्तिता"यदाहवनीये जुहोति गार्हपत्ये हवींषि श्रपयतीत्यादिभिराहत्य प्रयोजननिर्द्देशाच्च प्रयोजनान्तरमाहवनीयादयोऽपेक्षन्ते, अग्नि–शब्दोऽपि जातिमात्रवचनत्वात्तज्जातीयं यत्किञ्चिदाक्षिपन् लोकसिद्धमेवोपादाय कृतार्थो न संस्कृतमपेक्षते, तस्माल्लौकिक उपनिधेयः ॥

उपशयो यूपो भवति इत्यादौ यूपशब्दस्य संस्काराप्रयोजकताधिकरणम् ।

सू० संस्कृतं स्यात्तच्छब्दत्वात् ॥ १३ ॥

"उपशयो यूपो भवती"त्यत्र संशयः किमुपशये यूपसंस्काराः परिव्याणादयः कार्या न? ति, तत्र यूप–शब्दः उपशये प्रयुज्यमानस्तानतिदिशेत्सत्यं, यदि यूपत्वं विधीयते विधायकाभावाद् वर्त्तमानाप[1]देशोऽयं यूपो भवतीति, तस्मादनुवादोऽयमुपशयस्तुत्यर्थोन संस्कृतिमपेक्षते, तस्माल्लौकिका यूपधर्माः केचिच्छेदनादय उपशये वचनादनुष्ठीयन्ते तेन निमित्तेन गौणोऽयं वादः ॥

पृष्ठैरुपतिष्ठन्ते इत्यादौ पृष्ठशब्दस्य ऋग्द्रव्यवाचिताधिकरणम् ।

सू० कर्मणः पृष्ठशब्दः स्यात् तथाभूतोपदेशात् ॥ १४ ॥

अग्नौ श्रूयते पृष्ठैरुपतिष्ठत इति किं पृष्ठ–शब्दो ज्योतिष्टोमिकपृष्ठधर्मातिदेशकः पृष्ठधर्मकाणि कर्माणि कुर्यादि? ति तानि पृष्ठसाद्-

१ वर्तमानापदेशोऽयमिति पा० ।

श्यादेव स्तुत्यात्मकानि भवन्ति? उत पृष्ठसाधनेषु रथन्तरादिषु पृष्ठ–श-ब्दस्तैरग्नेरभिधानं चोद्यत इति, तत्र "उपतिष्ठतिना तावदपूर्वं कर्म चोद्यते। पृष्ठ–शब्दोऽपि तस्यैव विधत्ते पृष्ठतुल्यताम्। उपतिष्ठतिधातुः समीपस्थि-तिवचनः प्रत्ययो भावनावाचकः, तदयमर्थः अग्निसमीपे तिष्ठन् पृष्ठस-दृशैः कर्मभिः कुर्यादिति, यदि त्वभिधानं विधीयते तदा उपतिष्ठतिः समीपस्थितिवचनः सन्नभिधानं लक्षयेत्, पृष्ठ–शब्दोऽपि तत्साधनमित्यु-भयोर्लक्षणा स्यात्। अस्मत्पक्षे पुनः पृष्ठ–शब्द एव धर्मलक्षणेति ज्याया-नयं पक्षः। उच्यते "जघन्यवृत्तिता पृष्ठ–शब्दस्येहोभयोः समा। उपतिष्ठति-धातुश्च समीपस्थितिवाचकः"। न वयं धातुनाऽभिधानं लक्षयामः किन्तु समीपस्थितिरेव धातुनाऽभिधीयते, सा तु समीपस्थितिरभिधानार्थेति ब्रूमहे, कथं मन्त्र[1]करणेऽर्थे वर्त्तमानादुपपूर्वात्तिष्ठतेरात्मनेपदं भवति, समी-पस्थितिश्चानेनाऽभिधीयते, न यथा समीपस्थितौ मन्त्रः करणं तथा यतितव्यं, न चाभिधानादन्यत्र साक्षान्मन्त्रः करणं, तद्यदीयं समीपस्थि-तिरभिधानार्था स्यात्ततोऽस्याः करणं मन्त्रः सम्पद्यते, प्रधानाधीनं हि तदङ्गानुष्ठानं भवति अतोऽभिधानार्थत्वं समीपस्थानं कुर्वन्मन्त्रः समी-पस्थितेः करणमिति शक्यं वक्तुम्, अतोऽभिधानाय समीपस्थितिं वदन् उपतिष्ठतिर्मन्त्रकरणार्थो भवन्नात्मनेपदं लभेतेत्यात्मनेपददर्शनादुप-स्थान प्रयोजनभूतमभिधानमनुमीयते। तदयमर्थः पृष्ठसाधनैरथन्तरादिभिः समीपे स्थित्वाऽग्निमभिदध्यादिति, तस्मादभिधानचोदनेति सिद्धम्॥

इति शास्त्रदीपिकायां सप्तमस्य तृतीयः पादः॥ ३॥

---

## अथ शास्त्रदीपिकायां सप्तमाध्यायस्य चतुर्थः पाद आरभ्यते॥

---

अथ सौर्ये चरौ इति-कर्त्तव्यतावत्त्वाधिकरणम्।

सू० इतिकर्त्तव्यताविधेर्यजतेः पूर्वव-त्त्वम्॥ १॥

---

[1] करणेऽर्थे वर्तमानादिति पा०।

गतो नामातिदेशः, इदानीमानुमानिकेन वचनेनातिदेश उच्यते "सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकाम" इत्याद्युदाहरणं, तत्र प्रथमं तावदिदं चिन्त्यते—किमत्र कुतश्चिद्धर्माः प्रदिश्यन्ते ? नेति प्रमाणाभावान्नातिदेशः, उच्यते यागेन भावयेद् ब्रह्मवर्चसमिति भावनामितिकर्त्तव्यतापेक्षामुपदिश्य श्रुत्याद्युपदेशेन तस्या इतिकर्त्तव्यताया असमर्पणान्नूनमन्यतः सिद्धेतिकर्त्तव्यता ऽत्र शास्त्रेणाङ्गीकृतेति निश्चीयते. अस्ति चान्यत्र लौकिके पार्वणस्थालीपाकादौ वैदिके च दर्शपूर्णमासादौ तयोरन्यतराविह प्रदिश्यते इति स्थिते इह चिन्त्यते "लौकिकी वैदिकी वेति वैदिकी हि निबद्धत्वान्नेतुं नान्यत्र शक्यते। लौकिकी त्वनिबद्धत्वात्सर्वत्रैवानुषज्यते॥ वैदिकीतिकर्त्तव्यता प्रत्यक्षेण शास्त्रेण दर्शपूर्णमासादिषु निबद्धा नान्येन संबन्द्धुं शक्यते, न हि श्रुतमितिकर्त्तव्यता ब्राह्मणं दर्शपूर्णमासयोरितिकर्त्तव्यतां विधाय पुनः सौर्यादावपि विदधातीति संभवति। न च साधारण्येन विधानं प्रकरणेन व्यवस्थितत्वाद्विधानस्य, न च शास्त्रमन्तरेणेतिकर्त्तव्यतान्वयः सम्भवति, तस्मान्न वैदिकी, लौकिकी तु पार्वणाष्टकादिषु बहुष्वनुवृत्तासाधारणं शास्त्रमनुमापयति तेन सैव सौर्यादिषु स्यात्, प्रयाजादिदर्शनं तु यत्र नित्यानुवादवचनानीत्येवं परिहृतं, तस्माल्लौकिकीति प्राप्त उच्यते "वैदिकी वैदिकत्वेन सामान्येनोपतिष्ठते। लौकिकी त्वसमानत्वान्नोपस्थास्यत्यपेक्षिता। वैदिकस्य तु कर्मणः कथंभावापेक्षायां वैदिक एवेत्थं—भावः शीघ्रमुपतिष्ठते तदतिक्रमेणानुपस्थितलौकिकग्रहणमयुक्तं, "यद्यप्यनुमिताद्वेदाल्लौकिको ऽपि तु वैदिकः। प्रत्यक्षवेदविरहाच्चैवासौ सदृशो मतः"। ननु सो ऽपि वेदः केषांचित्प्रत्यक्ष एव नित्यानुमेयमूलनिराकरणात्। सत्यं, तथा ऽप्यसदृश एव कथं वैतानिककर्माधिकारे हि त्रयी प्रवर्त्तते तन्मध्ये तु प्रसङ्गादवैतानिकं किञ्चिदुच्यते, तेन दर्शपूर्णमासादीनां सौर्यादीनां च तदधिकारेण त्रयीप्रवृत्तिर्नामावान्तरसादृश्यमस्तीति वैदिकस्योपस्थानम्। किञ्च सौर्यादीनि वैतानिके ऽग्नौ प्रवर्त्तन्ते लौकिकी त्वितिकर्त्तव्यता चाराद्युपासने कर्त्तव्या, तत्र प्रधानवैदेश्यमङ्गानामापद्येत तस्मादपि वैदिकी। न च निबद्धत्वादसौ नान्यत्र नेतुं शक्येति मन्तव्यं,

समानविधानत्वे ह्ययं दोषः स्यात्, अतिदेशेन त्वन्यत्र गतौ निबद्धत्वं गुण एव, न हि क्वचिदनिबद्धान्यत्रातिदेष्टुं शक्यन्ते, न चानुमानेन लौकिकी शक्या कल्पयितुं गणयागादिषु तदभावेनानैकान्तिकत्वात् । तस्माद्वैदिक इत्थंभावः सौर्यादिष्वतिदिश्यते, स चावघातप्रयाजादिपदार्थजन्यदृष्टादृष्टोपकारवर्गरूपितस्तेषामुपकाराणां पदार्थानां च प्रापको भवति, तद्विधायि च शास्त्रमर्थात्सौर्यादिवाक्यशेषत्वमुपगतं भवतीत्यनेनाभिप्रायेण विध्यन्तो वा प्रवर्तेत चोदनायामित्युक्तम्, अस्तु वा विध्यन्तस्यैवात्रातिदेशस्तथाऽपि प्रकृतसंबन्धितया निरूपितरूपस्यातिदेशो न तु यथापाठमेव शास्त्रं प्रकृतिवद्विकृतेरपि सम्भवति, यत ऊहबाधौ न स्यातामिति चोद्येत, यत्रापि ब्राह्मणमेव साक्षादतिदिष्टम् "एतद् ब्राह्मणान्येव पञ्च हवींषी"ति तत्राप्यन्यसंबन्धिनः सतस्तेनैव रूपेणातिदेशादूहादिसिद्धिः । यदि "अग्नये जुष्टं निर्वपामी"त्यनेन रूपेण सौर्ये प्राप्यते ततोऽग्निपदस्य देवतापदस्य च संप्रतिपन्नरूपत्वादेव देवतापदविवक्षयैव तत्पठितमग्निपदं रूपं त्वविवक्षितमिति न शक्यमास्थातुम् । अग्निपदरूपमेव विवक्षितमित्यापद्येत, ततो न सूर्यपदं प्रक्षिप्येत, नाग्निपदं बाध्येत, अतो नोहः सिध्येन्न बाधः । यदि तु प्रकृतौ निरूपितरूपस्य शास्त्रस्य विकृतिसम्बन्धस्तदा प्रकृतावग्निपदस्य देवतापदरूपसंप्रतिपत्तेर्देवतापदरूपमात्रं विवक्षितं दृष्टार्थत्वाच्चाग्निपदरूपम्, अदृष्टार्थत्वाद्देवतापदादिजिज्ञासया नान्तरीयकत्वादग्निपदमधीतमिति निश्चीयते, तत्र सौर्ये तादृग्रूपमन्त्रातिदेशादग्निपदस्य चातद्रूपत्वात्स्वरूपस्य चाविवक्षितत्वात्तन्निवृत्तौ सत्यां देवतावाचिनः सूर्यपदस्य प्रक्षेपादूहबाधौ सिद्धौ भवतः, तस्माद्वैदिकातिदेशः ॥

गवामयने ऐकाहिकेतिकर्तव्यतानुष्ठानाधिकरणम् ।

सू० द्वादशाहिकमहर्गणे तत्प्रकृतित्वादैकाहिकमधिकागमात्तदाख्यं स्यादेकाहवत् ॥ २ ॥

इदानीमानुमानिकवचननामधेययोर्बलाबलं चिन्त्यते, गवामयने ज्योतिर्गौरायुरित्यादिसंज्ञा युक्ता यागा उत्पन्नास्तेषां गणान्तःपातित्वात्

गरोषु द्वादशाहस्येति द्वादशाहविध्यन्तः प्राप्तः, नामधेयाच्च-ज्योतिराद्येकाहविध्यन्तः, तत्राविरुद्धा द्वयेऽपि क्रियन्ते, विरुद्धेषु किं द्वादशाहिकाः कर्त्तव्याश्चोदकोबलवान्? उत नामबलीयस्त्वादैकाहिका? इति संशये, विशेषाभावादनियमः। अथवा चोदकोबलवान्फलसम्बन्धोत्तरका चेतिकर्त्तव्यताकाङ्क्षा, प्रयोगवाक्ये च फलसम्बन्धाच्च तु तत्र नामानि श्रूयन्ते यान्यपेक्षितविध्यन्तमतिदिशेयुः, गणसामान्यात्तु द्वादशाहिकधर्मातिदेश एव-तत्रावगम्यते। यासु तूत्पत्तिचोदनासु नामानि श्रुतानि तत्रालब्धफलत्वादसत्यामित्थंभावापेक्षायां नातिदेशः, फलसम्बन्धं तु प्रतीक्ष्य पश्चादतिदिशदपि नामधेयं पूर्वावगतगणधर्माविरोधेन प्रवर्त्तते, तस्माच्चोदको बलीयानिति प्राप्तेऽभिधीयते "प्रत्यक्षं श्रूयते नाम चोदकस्त्वानुमानिकः। न प्रत्यक्षविरुद्धार्थमनुमानं प्रवर्तते। यद्यपि फलसम्बन्धाधीनेतिकर्तव्यताऽऽकाङ्क्षा प्रयोगवाक्ये प्रस्तूयते, तथाऽपि प्रयोगवाक्यमुत्पत्तिचोदनावगतरूपाणि कर्माणि आलोच्य फले विनियुङ्क्ते तानि चालोच्यमानानि संज्ञाविशिष्टान्येवालोच्यन्ते इति तन्निमित्तातिदेशः प्रत्यक्षनिमित्तत्वाच्छीघ्रं गम्यते किं चोत्पत्तिवाक्येष्वपि भावनास्वाभाव्याज्जायत एवापेक्षा, तस्मान्नाम बलीयः,। वचनादभिधानतस्तथा विदितं कृत्स्नमिहातिदेशनम्। अनुमावचसाऽपि सत्तया भविता तस्य विशेषचिन्तनम्॥

इति शास्त्रदीपिकायां सप्तमस्य चतुर्थः पादः समाप्तः॥
समाप्तोऽयमध्यायश्च॥

---

## अथ शास्त्रदीपिकायाम् अष्टमाध्यायस्य प्रथमः पाद आरभ्यते॥

अथ प्रतिज्ञाधिकरणम्। सू० अथ विशेषलक्षणम्॥ १॥

विध्यन्ताधिकरणे सौर्यादिषु आनुमानिकेन वचनेन वैदिकीतिकर्त्तव्यताऽस्तीत्युक्तम्। तस्यैवेदानीं विशेष उच्यते, कस्य विध्यन्तः? क्व प्रवर्तत

इति? प्रथमं तावदिदं चिन्त्यते किमेकस्मिन्कर्मणि सर्वधर्मातिदेश? उत नेति। ननु विध्यन्ताधिकरण एव लौकिकवैदिकविध्यन्तसमुच्चयमाशङ्क्य मिथो विप्रतिषेधा[1]दित्यनेन सूत्रेण कथम्भावापेक्षायामेकेनैवेत्यम्भावपूरणाच्च द्वयोः सह प्रवृत्तिरित्युक्तं, तेन गतमेतत्सत्यं, समुच्चयस्तत्र निराकृतः, इह तु सर्वविध्यन्तानामेकत्र विकल्पेन प्राप्तिरिति पूर्वः पक्षः उत्तरस्तु नियत एव एकस्मिन्नेकः प्रवर्त्ततेऽन्यथा ह्यव्यवस्थितः शास्त्रार्थः स्यात्तस्मान्नियमेनैकस्यैव दर्शपूर्णमासादेर्विध्यन्त एकस्मिन्सौर्यादौ प्रवर्त्तते सत्यमेवं युक्तं, कथन्त्विदमवगम्यतेऽस्य विध्यन्तोऽत्र प्रवर्त्ततेऽस्य नेति, तदभिधीयते—

विशेषकर्मणोधर्मातिदेशाधिकरणम् ।

**सू० यस्य लिङ्गमर्थसंयोगादभिधानवत् ॥ २ ॥**

यस्य कर्मणो लिङ्गं चिह्नमुपस्थापकं शब्दगतमर्थगतं वा यस्यां विकृतौ दृश्यते तस्य विध्यन्तस्तस्यां प्रवर्त्तते यथाऽऽग्नेयस्य सौर्ये, तथा हि निर्वपतिस्तद्धितेन देवतानिर्देश एकदेवत्यत्वमौषधद्रव्यकत्वमित्याग्नेयचोदनया दृष्टसम्बन्धीनि सौर्यवाक्ये विध्यन्तापेक्षे दृश्यमानानि तामुपस्थापयन्ति, सा च स्वार्थं, त्र्यंशा च भावना तस्याः स्वार्थः, ततःसाध्यसाधनांशाविहानपेक्षितत्वादनादृत्य तृतीयोंऽश इत्यम्भावरूपोऽपेक्षासन्निधियोग्यत्वैर्वाक्यशेषत्वेनात्र सम्बध्यते, तदयमर्थः यथाऽऽग्नेयेन स्वर्गः कृतः तथा सौर्येण ब्रह्मवर्चसमिति, एवमनेकदेवतेष्वग्नीषोमीयैन्द्राग्नविध्यन्त आज्यद्रव्यकेषूपांशुयाजस्य पयोदध्यामिक्षादिषु दैक्षपशौ च सान्नाय्यस्य पश्वन्तरेषु दैक्षस्य एकादशिनेषु सवनीयस्य, पशुगणान्तरेषु ऐकादशिनस्य, अन्यक्रतुषु सोमस्य, अहर्गणेषु सत्रेषु अहीनेषु च द्वादशाहस्य, संवत्सरादिषु गवामयनिकस्येत्यादि द्रष्टव्यम्, एवमिह विशेषातिदेशः उत्तरस्त्वस्यैव प्रपञ्चः।

सोमे ऐष्टिकधर्मानतिदेशाधिकरणम् ।

**सू० प्रवृत्तत्वादिष्टेः सोमे प्रवृत्तिः स्यात् ॥ ३ ॥**

१ प्रतिषेधः स्यादित्यनेनेति पा० ।

अग्निहोत्रे दर्शपौर्णमासयोः ज्योतिष्टोमे च दोहनावघाताभिषवादीनि दृष्टार्थान्यङ्गानि निराकाङ्क्षीकरणसमर्थानि तैश्च निराकाङ्क्षत्वादतिदेशो नास्ति तथाऽपि सोमे दर्शपौर्णमासिकधर्मातिदेशं केनचिद्धेतुना शङ्कमानं निराकर्त्तुमिदमधिकरणं कः पुनरसौ हेतुर्दीक्षणीयादिष्ववभृथपर्यन्तास्विष्टिषु पशुषु च दर्शपौर्णमासविध्यन्तोऽतिदेशेन प्राप्यमाणो मनसि विपरिवर्त्तते तन्मध्यवर्त्तित्वाच्च सोमस्य तत्रापि तदन्वयं शङ्कते "तस्यैकशतं प्रयाजानुयाजा" इति च दर्शनमवकल्पते, तस्मादिष्टिः सोमे प्रवर्ततेति सोऽयंनिराक्रियते नानपेक्षे प्रवृत्तिर्युक्ता प्रयाजादिकं तु दीक्षणीयाद्यङ्गवर्ति वाजपेययूपत्यायेनैकशतसङ्ख्यां प्राप्तामनूद्यत इति नास्ति सोमेऽतिदेशः ॥

ऐन्द्राग्नादौ ऐष्टिकधर्मातिदेशाधिकरणम् ।

**सू० इष्टिषु दर्शपौर्णमासयोः प्रवृत्तिः स्यात् ॥ ४ ॥**

"सौर्यं चरुं निर्वपे"दित्यादिषु इष्टिषु निर्वपत्यादिसामान्येन दर्शपौर्णमासविध्यन्तोपस्थापनात्तस्यातिदेशः । इदं च यस्य लिङ्गमित्यस्य प्रपञ्च इति नातीव पूर्वपक्षे यतितव्यम् उत्तरत्रापि सर्वत्र ॥

अग्नीषोमीयपशौ दार्शपौर्णमासिक धर्मातिदेशाधिकरणम् ।

**सू० पशौ च लिङ्गदर्शनात् ॥ ५ ॥**

पशावप्यग्नीषोमीये तद्धितेन देवतानिर्देशः, आलभतिश्च दर्शपौर्णमाससादृश्यम् इष्टावप्यालभतिर्विद्यते ईषामालभेतेति, दृश्यते च पशोरालम्भनादिदृष्टार्थाङ्गसिद्धयेऽतिदेशापेक्षा, तस्मात्तत्रैष्टिकोविध्यन्तः ॥

सवनीयादिपशौ अग्नीषोमीयधर्मातिदेशाधिकरणम् ।

**सू० दैक्षस्य चेतरेषु ॥ ६ ॥**

इतरेषु सवनीयनिरूढादिषु पशुषु प्राणिद्रव्यकत्वसाम्या[1]द्विशसनादिद्रव्यसंस्कारलाभाच्च दैक्षस्याग्नीषोमीयस्य विध्यन्तः ॥

---

१ सादृश्यादिति पा० ।

ऐकादशिनपशौ सवनधर्मातिदेशाधिकरणम् । सू० ऐकादशिनेषु सौत्यस्य द्वैरश्यस्य दर्शनात् ॥ ७ ॥

ऐकादशिनेषु पशुषु सुत्याकालत्वसामान्यातिरेकाद् द्वैरशन्यदर्शनाच्च द्वे द्वे रशने यूपमृच्छत इति सवनीयस्य विध्यन्तः ॥

पशुगणेषु ऐकादशिनधर्मातिदेशाधिकरणम् । सू० तत्प्रवृत्तिर्गणेषु स्यात् प्रतिपशु दर्शनात् ॥ ८ ॥

यूपसौत्रामण्यादिषु पशुगणेषु गणत्वसामान्याधिक्यादैकादशिनविध्यन्तः ॥

अव्यक्तयजतौ सौमिकधर्मातिदेशाधिकरणम् । सू० अव्यक्तासु तु सोमस्य ॥ ९ ॥

"विश्वजिता यजेते"त्यादिष्वेकाहादिषु द्वादशाहे च किं दर्शपौर्णमासिको विध्यन्त? उत सौमिक? इति संशये विशेषाभावादनियमे प्राप्ते उच्यते सौमिकः स्यादव्यक्तत्वसामान्यात्कोयमव्यक्तता यागार्थतया विनियुक्तदेवताविरहः, यत्र तद्धितचतुर्थी मन्त्रवर्णैर्यागार्थतयैव देवताविनियुक्तास्तद्व्यक्तम् इतरत्त्वव्यक्तं तथा च विश्वजिदादयः सोमश्च । ननु ऐन्द्रवायवं गृह्णातीति तद्धितेनैव देवताऽपि सोमे विहिता न यागे देवताऽनेन विधीयते, किन्तु ग्रहणे तद्गतायास्तु पश्चादार्थिको यागसम्बन्धोन तु प्रथममेव यागान्वय इत्यव्यक्तत्वम्, अतः सोमविध्यन्तो विश्वजिदादिषु ॥

अहर्गणेषु द्वादशाहिकधर्मातिदेशाधिकरणम् । सू० गणेषु द्वादशाहस्य ॥ १० ॥

द्विरात्रादिष्वहर्गणेषु अव्यक्तत्वं गणत्वं चाधिकं विद्यते तस्माद् द्वादशाहविध्यन्तः, एवञ्च पत्नीसंयाजान्तान्यहानि सन्तिष्ठन्ते इत्यादयो गणधर्मा लभ्यन्ते ।

संवत्सरसत्रेषु गवामयनिकधर्मातिदेशाधिकरणम् । सू० गव्यस्य च तदादिषु ॥ ११ ॥

संवत्सरसत्रेष्वादित्यानामयनप्रभृतिषु संवत्सरसत्रत्वसामान्यात्संवत्सरनियमलिप्सया च गवामयनविध्यन्तः ।

निकायिनामुत्तरेषु पूर्वनिकायिधर्मातिदेशाधिकरणम् ।

सू० निकायिनां तु पूर्वस्योत्तरेषु प्रवृत्तिः स्यात् ॥ १२ ॥

साहस्राः साद्यस्क्रा इत्येकसंज्ञया युगपत्प्रस्तुत्य पश्चात्क्रमेण विहिता यागा निकायिन इत्युच्यन्ते तेषां प्रथमोधर्मवानुत्तरेषु किन्ततो धर्माः प्रवर्त्तन्ते ? उत सौमिका इति ? संशये अव्यक्तत्वात् सौमिका इति प्राप्ते एकनिकायवर्त्तित्वमेकनामकत्वञ्चावान्तरसामान्यमधिकमस्तीति पूर्वचिध्यन्त उत्तरेषु तथा यावदस्य साहस्रस्येत्यादिसाहस्राद्धिधर्मदर्शनं पूर्वधर्मप्राप्तिं दर्शयति ॥

फलादीनामनतिदेशाधिकरणम् ।

सू० कर्मणस्त्वप्रवृत्तित्वात्फलनियमकर्तृसमुदायस्यानन्वयस्तद्बन्धनत्वात् ॥ १३ ॥

फलं स्वर्गः, नियमो यावज्जीवकता, कर्ता स्वर्गकामः समुदाय आग्नेयादीनां षण्णां मिथः साहित्यं किमेते विकृतिषु सौर्यादिषु मिथः प्रदिश्यन्ते नेति संदेहः, तत्र प्रकृतिसम्बन्धाद्विकृतावतिदेशनं प्रयाजादिवदेतेषामिति प्राप्तेऽभिधीयते । "प्रकृत्यैव निबद्धत्वाद्विकृत्या सह नान्वयः । न चातिदेशतः प्राप्तिरित्थंभावान्वयादृते" ॥ कथं भावापेक्षा हि विकृतिभावना यदेव प्रकृतावित्थंभावेन गृहीतं तदेवापेक्षते, न च फलादीनामित्थंभावान्वयः फलनियमयोः पुरुषार्थत्वात्स्वर्गकामोऽपि न कर्मार्थः कर्मैव तदर्थमित्युक्तं स्वर्गकामाधिकरणे, तथाऽग्नेयादीनि षडपि तुल्यवत्फलं प्रति करणत्वेनोपदिष्टानि नान्योन्यस्याङ्गं तेनैकस्योपकारेऽन्यानि प्रवर्त्तन्ते, न चाप्रवर्त्तमानेषु तत्साहित्यं भवति तस्माच्च फलादीनामतिदेशः, माभूदित्थंभावांशेनातिदेशः फलापेक्षयैव विश्वजिदादिषु अश्रुतफलेषु फलमतिदिश्यतामिति चेन्नैवं, तद्धि फलं विकृतावतिदेशेन विधीयमानमङ्गमेव स्यात् न च फलं विकृतिं प्रति विधीयते फलमेव प्राकृतं यथावस्थितमुद्दिश्य विकृतिर्विधीयतामिति चेच्च तस्य विकृतिः

साधनं भवितुमर्हति प्रकृत्यैव स्ववाक्यावगतयाऽवरुद्धत्वात्तस्माच्च विकृतेः प्रकृति[1]फलसम्बन्धः॥

गुणकामानां गोदोहनादी-नामनतिदेशाधिकरणम्।

सू॰ गुणकामेष्वाश्रितत्वात्प्रवृत्तिः स्यात्॥ १४॥

इह सगुणफलानि "गोदोहनेन पशुकामस्य प्रणये"दित्येवमादीनि तत्साधनभूताश्च गोदोहनादयः किं विकृतिषु प्रवर्त्तन्ते नेति संशयः तत्र प्रधानफलं प्रधाननिबन्धनत्वात्तस्य च विकृतिष्वप्रवृत्तेर्मा नाम प्रवर्त्तिष्ट, गुणफलं तु गुणप्रवृत्त्या प्रवर्त्तितुमर्हति। तथा हि प्रणयनं तावदतिदिश्यते तत्साधनभूतञ्च गोदोहनमनङ्गमपि साधनत्वाच्चमसवत्प्रवर्त्तते तत्प्रवृत्त्या च तत्साध्यं फलमपि प्रवर्त्तेत यथा प्रधानाश्रितदध्यादिसाध्यमिन्द्रियादि दध्यादेर्होमसाधनत्वेन विकृतिषु प्रवृत्तेः प्रवर्त्तते, उच्यते "न हि गोदोहनादीनामित्थंभावेन संग्रहः। इत्थंभावातिदेशेन तेषां नातोऽतिदेशधीः॥ न हि यत्किञ्चिद्यथाकथञ्चिदपि प्रकृतेः साधनं, तत्सर्वमतिदिश्यते कथंभावापेक्षा हि विकृतिचोदना सादृश्योपस्थापितां प्रकृतिचोदनामालोच्य तस्यास्त्र्यंशायाः साध्यसाधनांशावनाकाङ्क्षितत्वादनादृत्य तृतीयमित्थंभावांशं वाक्यशेषत्वेन गृह्णाति, तत्र यत्प्राकृत्यां चोदनायाम् इत्थंभावरूपेणागृहीतं प्रमाणान्तरेण कथंचित्साधनभावमुपनीतं गोदो[2]हनादि तस्य कः प्रसङ्गो विकृतौ माभूदतिदेशः प्रणयनस्य त्वाश्रयभूतस्य विकृतावपि सद्भावात् तदाश्रितं गोदोहनमपि पुरुषः कामनावशात्प्रयुञ्जीतेति चेच्च वैगुण्यात् अतिदिष्टस्याङ्गभूतस्य चमसस्य विना शास्त्रेण पुरुषेच्छामात्रेण युक्तो बाधः, तद्बाधे हि वैगुण्यं स्यात् अवैगुण्ये तु भवतु कामस्यापि प्रवृत्तिः, यथाह भाष्यकारः "तस्मिंश्च प्रवर्त्तमाने कामोऽपि प्रवर्तेत" इति, किञ्च यद्दर्शपौर्णमासापूर्वसाधनभूतं प्रणयनं तदेवाश्रयस्तादृशस्यैव प्रकृतत्वात्, न च विकृतौ तादृगस्ति, तस्मादाश्रयाभावादपि न गोदोहनतत्फलयोः प्रवृत्तिः॥

---

१ प्राकृतफलसम्बन्ध इति पा॰।
२ दधिगोदोहनादीति पा॰।

सौर्ये चरावभिमर्शनद्वयस्य विकल्पाधिकरणम् ।

सू० एककर्मणि विकल्पोऽविभागो हि चोदनैकत्वात् ॥ १५ ॥

सौर्ये आग्नेयविकार इति वक्ष्यते आग्नेयश्च पौर्णमास्यमावास्याकालयोरुत्पन्न उभयसंज्ञः, तेन चतुर्होत्रा पञ्चहोत्रा च तस्य कालद्वयेऽभिमर्शनं तत्र सौर्ये मन्त्रद्वयं किं पौर्णमास्यमावास्याकालयोर्व्यवस्थया प्रयोक्तव्य? मुताव्यवस्थये?ति "व्यवस्था प्रकृतौ दृष्टा प्राप्यते विकृतावपि । प्रकृतावार्थिकी त्वेषा विकृतौ नातिदिश्यते" । चतुर्होत्रा पौर्णमासी पञ्चहोत्रामावास्या इति समुदायद्वारेण मन्त्रयोरुपदेशः प्रकृतत्वाच्च कालद्वारेण तस्याप्रकृतत्वात्, अतः समुदायद्वयवर्त्तिन आग्नेयस्यैव मन्त्रावङ्गम्, एकार्थत्वाच्च विकल्प्येते तत्र पौर्णमासीकाले पौर्णमासिकैर्हविरन्तरैः सहाभिमृश्यमानमाग्नेयमविरोधाच्चतुर्होत्राभिमृष्टम्, एवममावास्याकाले पञ्चहोत्रा न तु कालकृता व्यवस्था तत्र शास्त्रार्थः, तस्माद्विकृतावव्यवस्था ॥

सौर्ये चरावाग्नेयधर्मातिदेशाधिकरणम् ।

सू० लिङ्गसाधारण्याद्विकल्पः स्यात् ॥ १६ ॥

इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिरित्युक्तं, तत्र षण्णामाग्नेयादीनां कस्य क्व प्रवृत्तिः? विशेषाभावादनियमः सादृश्यविशेषात्त्वेकदेवत्ये सौर्यादावेकदेवत्यस्याग्नेयस्य प्रवृत्तिः, अनेकदेवतेषु अग्नीषोमीयैन्द्राग्नयोराज्यादिद्रव्यकेषु उपांशुयाजादेः कथं पुनरेकदेवत्यत्वमाग्नेयसौर्ययोर्वाक्यशेषादिति दर्शितं भाष्ये ॥

हविर्देवतयोः सन्निपाते हविःसामान्यस्य बलीयस्त्वाधिकरणम् ।

सू० विप्रतिपत्तौ हविषा नियम्येत कर्मणस्तदुपाख्यत्वात् ॥ १७ ॥

ऐन्द्रे पुरोडाशे किं देवतासामान्यात् सान्नाय्यविध्यन्तः? उत हविःसामान्यादौषधविध्यन्त? इति संशये तथाऽऽग्नेये पयसि देवतासामान्यादौषधस्य हविःसामान्याद्वा सान्नाय्यस्येति देवतासामान्यहविःसामान्ययोः किं बलीय इति चिन्त्यते, विशेषाभावादनियमः, प्रथमश्रुतत्वप्राधान्याभ्यां वा देवतायाः प्राबल्यं मन्वानस्योत्तरं "हविषस्त्याज्यमानत्वात्प्रत्यासत्तिर्हि

कर्मणि । उद्देश्यमात्ररूपत्वाद्देवताऽऽरादुपस्थिता । यच्च प्रत्यासन्नत्त्वेनैवोपस्थितं विध्यन्तमासाद्य निराकाङ्क्षं कर्म न बहिरङ्गभूतदेवतोपस्थापितमपेक्षते । यद्यपि प्रातिपदिकार्थत्वाद्देवता मुख्या तथाऽपि तत्स्वरूपवेलायामाकाङ्क्षाविरहादनतिदेशः, कर्मविध्युत्तरकालं तु प्रत्यासत्तेर्हविःसामान्यं बलीयः प्राधान्यन्तु देवतायां नवमे निराकरिष्यते, किं चौषधे साचाय्यधर्मास्तत्र चौषधधर्माः सर्वे बाध्येरन्, असम्भवाद्यथायथन्तु प्राप्तौ न कस्यचिद्बाधः, तस्माद्धविःसामान्यं बलीयः ॥

शतकृष्णलाख्यहिरण्ये औषधधर्मातिदेशाधिकरणम् । सू० हिरण्यमाज्यधर्मस्तेजस्त्वात् ॥१८॥

कृष्णलचरौ आज्यौषधयोः कस्य विध्यन्तः स्यात् उज्ज्वलसामान्यादाज्यस्य विशदत्वादौषधवाचिचरुशब्दसंयोगाच्च तद्धर्माः[१] ॥

मधूदके च उपांशुयाजीमाज्यधर्मातिदेशाधिकरणम् । सू० मधूदके द्रव्यत्वसामान्यात्पयोविकारः स्यात् ॥ १९ ॥

दधिमधुघृतं धानाः तण्डुला उदकमित्यत्र मधूदकयोः पयः प्रवर्त्ततेताज्य? मिति संदेहे स्वाभाविकद्रवत्वसामान्यात्पयः, नैवम् असत्यपि च स्वाभाविकद्रवत्वेऽग्निसंयोगादाज्येऽपि द्रवत्वसद्भावाद्वर्णसामान्याधिक्यात्पयोधर्माणां च दोहनादीनामसम्भवादुत्पवनादीनाञ्च सम्भवात् आज्यविध्यन्तः "वर्णसाम्यस्य चाधिक्याद् द्रवत्वस्याविशेषतः । अनुग्रहाच्च धर्माणामाज्यधर्ममधूदकम्" ॥

इति शास्त्रदीपिकायामष्टमस्य प्रथमः पादः ॥ १ ॥

---

## अथ द्वितीयः पाद आरभ्यते ॥

---

ऐहिकसौत्रामण्योरैष्टिकधर्मातिदेशाधिकरणम् । सू० वाजिने सोमपूर्वत्वं सौत्रामण्यां च ग्रहेषु ताच्छब्द्यात् ॥ १ ॥

---

१ औषधधर्माः ।

वाजिनयागे सौत्रामण्यङ्गभूतेषु चाश्विनादिग्रहेषु किं सौमिको विध्यन्त? उतैष्टिक? इति संदेहे "सोमो वै वाजिनं सुरासोम इत्यसोमे सोम–शब्दस्तद्धर्मातिदेशार्थोऽग्निहोत्र–शब्दवत्तस्मात्सौमिकः, प्रशंसार्थ-स्त्वयं सोम–शब्दो न विधानार्थः, विध्यश्रवणात् तद्धविःसामान्यादैष्टिको वाजिने पयोविध्यन्तः सुराग्रहेषु चोषधः ॥

पशौ सांनाय्यधर्मातिदेशाधिकरणम् ।

**सू० पशुः पुरोडाशविकारः स्याद्देवतासामान्यात् ॥ २ ॥**

पशावग्नीषोमीये दर्शपौर्णमासयोः प्रवृत्तिरित्युक्तं, तत्र देवतासामान्यादग्नीषोमीये पुरोडाशः प्रवर्त्तते हविःसामान्यमपि पुरोडाशे नैव विद्यते द्वयोरपि घनत्वात् सांनाय्यं वा प्रवर्तते हविःसामान्यात्सांनाय्यं हि पशुतः प्रभवति, पशुरपि पशुप्रभवः संबन्धित्वाच्च पशुसांनाय्ययोः पशुः प्रतीतः सांनाय्यमुपस्थापयति, सांनाय्यपात्रं चोखा पशौ दृश्यमाना तत्प्रकृतित्वं सूचयति ॥

पशौ पयोधर्मातिदेशाधिकरणम् ।

**सू० दध्नः स्यान्मूर्त्तिसामान्यात् ॥ ३ ॥**

तत्रापि दध्नो विकारः स्याद्घनत्वसामान्यात् पयसो वा, तद्धि साक्षात्पशुप्रभवं, दधि तु तद्व्यपेतं, पशुरपि साक्षात्पशुप्रभवः गतिमत्त्वं च पशुपयसोस्तुल्यं तदधिकं दधितः पयसः ॥

आमिक्षायां पयोधर्मातिदेशाधिकरणम् ।

**सू० आमिक्षोभयभाव्यत्वादुभयविकारः स्यात् ॥ ४ ॥**

आमिक्षायागः सांनाय्यविकारः इत्यसंदिग्धं दध्नः पयसो वेति चिन्त्यते "दधि क्षीरं च संसृष्टमामिक्षेत्यभिधीयते । उभयोश्च रसस्तस्यां दृश्यतेऽतो द्वयात्मिका। विशेषाग्रहणात्तस्मादुभयोर्विकृतिर्भवेत्। तप्ते पयसि वाक्ये तु सप्तम्या गुणतः पयः । दधि द्वितीयानिर्द्देशात्प्रधानत्वेन सा पदं दध्येव प्रतिनिर्द्दिश्य तेन बध्नाति देवतां। दध्येवातोहविस्तस्मात्सायं दोह-

विकारता । पयसस्तु प्रधानत्वं तत्र कर्मसमाप्तितः । दध्ना हि नीयमानेन तदेव व्याप्यते पयः । कर्मतोऽपि प्रधानत्वं तस्य स्यात्संप्रदानवत् । सर्वनाम्ना परामर्शस्तस्यैवातोऽवकल्पते । यदेव दधिसंयोगाद्धनीभूतमतो हविः ॥ तस्यैव देवतायोग आमिक्षाऽपि तदेव नः ॥ प्रातर्दोहविकारत्वमामिक्षायास्ततः स्थितम् ॥

द्वादशाहे सत्राहीनयोर्व्यवस्थया धर्मातिदेशाधिकरणम् ।

सू० सत्रमहीनश्च द्वादशाहस्तस्योभयथा प्रवृत्तिरैककर्म्यात् ॥ ५ ॥

गणेषु द्वादशाहस्येत्युक्तं, द्विविधाश्च गणाः सत्राण्यहीनाश्च द्वादशाहोऽप्युभयात्मा तस्योभयविधस्याप्यनियतात्मना सर्वत्र प्रवृत्तिर्विशेषाभावात्, "सत्रस्यैव तु सत्रेषु प्रवृत्तिः सत्रसाम्यतः ॥ तथाऽहीनेष्वहीनस्य सुसदृक्त्वादिति स्थितम् ॥

पञ्चदशरात्रादिषु सत्रधर्मातिदेशाधिकरणम् ।

सू० अन्यतरतोऽतिरात्रत्वात्पञ्चदशरात्रस्याहीनत्वं कुण्डपायिनामयनस्य च तद्भूतेष्वहीनत्वदर्शनात् ॥ ६ ॥

पञ्चदशरात्रस्य कुण्डपायिनामयनस्य च किं सत्रविकारत्व?मुताहीनविकारत्व?मिति चिन्त्यते तदर्थं च किमनयोरहीनत्व?मुत सत्रत्वमिति? विचार्यते, "तत्रोपर्यतिरात्रत्वाद् द्विरात्रादिवदेतयोः । अहीनत्वम्भवेन्नैवमासनोपायचोदनात् । सत्रसंज्ञातकाण्डे च समाम्नातमिदं द्वयं तस्मात्सत्रमतः सत्रविध्यन्तोऽत्र प्रवर्तते ॥

इति शास्त्रदीपिकायामष्टमस्य द्वितीयः पादः ॥ २ ॥

---

## अथ तृतीयः पाद आरभ्यते ॥

---

शुचिदेवते आग्नेयस्याग्नावैष्णवे च आग्नीषोमीयस्य धर्मातिदेशाधिकरणम् ।

सू०. हविर्गणे परमुत्तरस्य देशसामान्यात् ॥ १ ॥

"आग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन्सारस्वतीमाज्यस्य चरुं बार्हस्पत्यं चरुमिति तत्र सन्देहः। किं प्रथमस्याग्नेयविध्यन्तस्तृतीयस्याग्नीषोमीयविध्यन्त? उत विपरीत? मिति स्थानसामान्यात् प्रथमतृतीययोः प्रथमतृतीयविध्यन्तप्राप्तौ उच्यते—प्रथमस्य द्विदेवत्यत्वादाग्नीषोमीयविध्यन्तः तृतीयस्य चैकदेवत्यत्वादाग्नेयविध्यन्तः देवतासामान्यमुत्पत्तिवेलायामेव शीघ्रं गम्यते स्थानसामान्यं तु न्यायापेक्षत्वाद्विलम्बितत्वाद् दुर्बलं, तस्माद्देवतासामान्यात्प्रथमतृतीययोस्तृतीयस्य प्रथमविध्यन्तः॥

जनकसप्तरात्रे त्रिवृत्स्वहः सु द्वादशाहधर्मातिदेशाधिकरणम्।

सू० गणचोदनायां यस्य लिङ्गन्तदा वृत्तिः प्रतीयेताग्नेयवत्॥ २॥

जनकसप्तरात्रे श्रूयते चत्वारि त्रिवृत्यहान्यग्निष्टोममुखानीति तत्र किमेषु पार्ष्णिकस्याद्यस्याह्नस्त्रिवृतो विध्यन्तश्चतुर्ष्वप्यावर्तते? उत त्रिवृदादीनां चतुर्णामपि प्रवृत्तिश्चतुर्षु क्रमेणे? ति संशये पूर्ववत्संघातसामान्यस्य च दुर्बलत्वात् त्रिवृत्त्वसामान्येनैवाद्यस्यैव प्रवृत्तिः, नैवमिह सह चोदितानां संघातोऽपि शाब्दस्त्रिवृत्त्वमपि तत्र संघातसामान्यं प्रधानगतं तदङ्गभूतस्तोत्रीयागतात् त्रिवृत्त्वाद्बलीय इति तद्वशेन चतुर्णामपि पृष्ठ्याद्यानां चतुर्षु प्रवृत्तिरेवं चाग्निष्टोममुखानीत्येष वादो युज्यते, अन्यथा सर्वेषामग्निष्टोमत्वं स्यात्, आद्यस्याग्निष्टोमत्वात्तत्राग्निष्टोममुखानीति न घटते॥

षट्त्रिंशद्रात्रे षडहधर्मातिदेशाधिकरणम्।

सू० काला[१]भ्यासे च बादरिः कर्मभेदात्॥ ३॥

षट्त्रिंशद्रात्रे श्रूयते "षडहा भवन्ति चत्वारो भवन्ती"ति तत्र विचार्यते किमेतेषु चतुर्विंशत्यामहःसु द्वादशाहिकस्य दशरात्रविध्यन्तस्य प्रवृत्तिः? उत षडहस्यैव चतुरावृत्ति? रिति, तत्र "चतुर्विंशतिरेतानि चत्वारः षडहा इति। चोद्यन्तेऽहानि तेनैषु द्वादशाहः प्रवर्त्तते। उच्यते चतुर्विंशति-

१ कालाभ्यासेऽपि इति पा०।

संख्योऽत्र गणः साक्षान्न चोद्यते। चतुःसंख्यैस्तु षडहैरनुमानेन गम्यते। चतुःसंख्यास्तु षडहाः प्रत्यक्षेणैव चोदिताः । तस्मात्षडहविध्यन्तः शीघ्रमत्रावगम्यते ॥

संस्थागणेषु द्वादशाहिकधर्मातिदेशाधिकरणम् ।

सू० संस्था गणेषु तदभ्यासः प्रतीयेत कृतलक्षणग्रहणात् ॥ ४ ॥

शतोक्थ्यं भवति शता[1]त्रिरात्रं भवति, इति श्रुतं तत्र संशयः किं ज्योतिष्टोमस्य शतकृत्वोऽभ्यासः ? उत द्वादशाहप्रवृत्ति ? रिति तत्रोक्थ्यादिशब्दानां ज्योतिष्टोमनामत्वं मन्वानस्तमेव दूरस्थमप्यनूद्य शताभ्यास उपादेयो गुणो विधीयते इति मन्वानस्तस्यैवाभ्यासमाह "संस्थानिमित्तास्त्वेतेन क्रतोः कस्यापि वाचकाः । सन्निध्यभावतः संस्थाविशिष्टगणचोदना । तस्माद्द्वादशाहविध्यन्तः ॥

शतोक्थ्यादौ ज्योतिष्टोमात् स्तोत्रोपचयाधिकरणम् ।

सू० गणादुपचयस्तत्प्रकृतित्वात् ॥ ५ ॥

"शतोक्थ्यं भवती"त्यत्र द्वादशाहिको दशरात्रो दशकृत्वः प्रवर्तेत इत्युक्तं, तस्मिंश्च दशरात्रे ऽभितो द्वावग्निष्टोमौ तत्र शतोक्थ्ये प्रतिदशकं द्वौ द्वावग्निष्टोमौ उक्थ्यसंस्थया वर्द्धयितव्यौ तत्रागम्यमानेषूक्थ्यस्तोत्रेषु संशयः, किं द्वादशाहिकोक्थ्यस्तोत्रविकारास्तेषु हि केचिद्विशेषाः प्राकृतेभ्यः स्तोत्रेभ्यो विद्यन्ते ? उत ज्योतिष्टोमोक्थ्यविकारा ? इति तत्र द्वादशाहविकारत्वादस्य गणस्य तदीयेषूक्थ्याहस्सु यान्युक्थ्यस्तोत्राणि तद्विकारत्वमेवास्मिन्नागन्तूनामुक्थ्यस्तोत्राणां युक्तं, नैतद्युक्तं ज्योतिष्टोमेत्युक्थ्यस्तोत्राणामुत्पत्तिः, द्वादशाहे त्वतिदेशप्राप्तानां तेषामेव विशेषा विहिताः । यत्र चोत्पत्तिस्तत एवागमनं युक्तं न यत्रातिदिष्टानि, न हि भिक्षुकोभिक्षुकान्तरं याचितुमर्हति सत्यन्यस्मिन्नभिक्षुके, तस्माज्ज्योतिष्टोमिकानामेवोक्थ्यादीनां प्रवृत्तिः ॥

---

[1] शतातिरात्रमिति ।

गायत्रमेतदहर्भवति इत्यादावुत्पत्तिगायत्रीणामागमाधिकरणम् ।

सू० गायत्रीषु प्राकृतीनामवच्छेदः प्रकृत्यधिकारात्संख्यात्वादृग्निष्ठामवद्व्यतिरेकात्तदाख्यत्वम् ॥ ६ ॥

बृहस्पतिसवे प्रकृतितो गायत्रत्रैष्टुभादिषु नानाछन्दस्सु प्राप्तेषु छन्दोऽन्तराणि व्युदस्य गायत्री नियता गायत्रमेतदहर्भवतीति तत्र संशयः किं त्रिष्टुबादिष्वेव चोदकप्राप्तेषु अक्षरलोपं कृत्वा गायत्री संपादयितव्या? उत दाशतयीभ्य उत्पत्तिगायत्र्य आनेतव्या? इति तत्र संख्यामात्रवाचकत्वाद् गायत्री-शब्दस्य प्राकृतीष्वेव चोदकप्राप्तास्वक्षरलोपो न विरुध्यते, तस्मात्तास्वेवाक्षरलोपः । तथा तिस्रोऽनुष्टुभश्चतस्रो गायत्र्य इत्याद्युपपद्यते, अत्रोच्यते-संख्यामात्राभिधायित्वे सर्वत्रैव प्रसज्यते । मन्त्रान्तरे घटादौ च तस्मात्संख्यान्वितामृचम् । अष्टाक्षरैस्त्रिभिः पादैर्युक्तामभिदधात्यसौ । तिस्रोऽनुष्टुभ इत्यत्र गौणः शब्दो न मुख्यतः, । तस्मादुत्पत्तिगायत्र्य आनेयाः । पूर्वाधिकरणे उपचयश्चिन्तितः, तत्प्रसङ्गादपचयोऽयं चिन्तितः ॥

इति शास्त्रदीपिकायामष्टमाध्यायस्य तृतीयः पादः ॥ ३ ॥

---

## अथ चतुर्थः पाद आरभ्यते ॥

---

दर्विहोम-शब्दस्य कर्मनामधेयताधिकरणम् ।

सू० दर्विहोमो यज्ञाभिधानं होमसंयोगात् ॥ १ ॥

प्रपञ्चितेऽतिदेशे ह्यपवादविवक्षया दर्विहोमा हृदयमागताः, तत्प्रसङ्गेन च यदेकया जुहुयाद्दर्विहोमं कुर्यादित्यर्थवादगतो दर्विहोम-शब्दो हृदयमागतः किं गुणविधिर्नामधेयं वा, नामापि किं लौकिकानामेवोत वैदिकानामपि? किं यज्युत्पत्तीनामपि किं वा जुहोत्युत्पत्तीनामेवे? ति प्रसङ्गाच्चिन्त्यते तत्र होम-शब्दसंयोगात्तस्य च कर्मवचनत्वात्तत्प्रधानत्वाच्च

समासस्य कर्मनामत्वं तत्र लौकिकानां स्थालीपाकादीनां कर्त्तरि दर्विहोमिकशब्दप्रयोगात्तेषां नाम स्यात्, वैदिकेऽपि वाऽस्तु होमे प्रयोगाद्धोमत्वाविशेषाच्च वैदिकानामपि तत्र यज्युत्पत्तीनामपि "चतुरवत्तं जुहोती"-त्यादिना होमत्वापत्तेस्तेषामपि न यागस्य होमत्वापत्तिः, यागात् कर्मान्तरं प्रोक्षणादिवत्संस्काररूपं विधीयते अतो जुहोत्युत्पत्तीनामेवाग्निहोत्रादीनां नाम स्यात् । यत्तु गुणविधित्वमाशङ्कितं तच्चोद्यमात्रं तत्प्रख्यन्यायसिद्धमेवोत्तरमुपसंहृतम् ॥

दर्विहोमशब्दस्यापूर्वताधिकरणम् ।

सू० तस्मिन्सोमः प्रवर्त्तेताव्यक्तत्वात् ॥ २ ॥

प्रासङ्गिकं परिसमाप्य किं दर्विहोमाः पूर्ववन्तः? उतापूर्वाः? इति विचार्यते, तत्राश्रुतेतिकर्तव्यताकत्वादव्यक्तत्वाच्च सौमिको विध्यन्तः प्रवर्तेत यागहोमत्वेनात्यन्तविसदृशत्वाद्धोमानामेवाग्निहोत्रनारिष्टादीनां धर्मवतां सद्भावाच्च तदतिक्रमेण सोमयागनाश्रयणं युक्तम् । अस्तु तर्हि तत्प्रकृतित्वमेव नैकं नारिष्टाङ्गभूतानामिध्मादीनां त्र्यम्बकहोमेष्वभावहेतुदर्शनाल्लिङ्गान्तराणि च दर्शितानि दर्विहोमानापूर्वत्वं सूचयन्ति, तस्मादपूर्वाः । संक्षेपविस्तारकः सापवादः सद्धकृत्वानुमानात्तथा नामधेयात् । अधीताश्च वाक्यात्प्रसिद्धोऽतिदेशः करिष्यामहेऽतः परन्तूहचिन्ताः ॥

इति श्रीपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायाम् अष्टमस्य चतुर्थः पादः समाप्तः ॥ ४ ॥

समाप्तो ऽष्टमोऽध्यायः ॥

## अथ नवमोऽध्याय आरभ्यते

अग्निहोत्रादिप्रयुक्तानां धर्माणामपूर्वप्रयुक्तत्वाधिकरणम् ।

सू० यज्ञकर्म प्रधानं तद्धि चोदनाभूतं तस्य द्रव्येषु संस्कारस्तत्प्रयुक्तस्तदर्थत्वात् ॥ १ ॥

सिद्धे ऽतिदेशेऽधुनाऽतिदिष्टानां पदार्थानां मन्त्रसामसंस्काराणां द्वारान्तरसम्बन्धनिमित्तोऽन्यथाभावात्मक ऊहश्चिन्त्यते, तस्य चातिदिष्टविषयत्वादतिदेशोत्तरकालमारम्भः, अतिदेशाधीनत्वमेव दर्शयितुं सप्तमाद्यसिद्धमपूर्वप्रयुक्तत्वं धर्माणामनेन सूत्रेण स्मारयति, यजिप्रयुक्तत्वे हि पारिप्लवा धर्माः सर्वत्रोपदिष्टा नान्यथा कर्तुं शक्यन्ते, अपूर्वप्रयुक्तत्वे तु प्रतिकरणं व्यवस्थिता धर्माः दशमाद्यन्यायेन कार्यमुखेनातिदिष्टा युक्तं यदूहं भजन्ते, तस्मादूहविवक्षयाऽपूर्वप्रयुक्तिः स्मारिता तदीयौ पूर्वोत्तरपक्षौ तत्रैव प्रदर्शिताविति नेह प्रदर्श्यते, तथाऽन्यदिह चिन्त्यते किमवघातमन्त्रादयो विवक्षितव्रीह्या[१]भ्यादिद्वारा ऽपूर्वस्योपकुर्वन्ति? उताविवक्षिततत्स्वरूपाः साधनविशेषमात्रद्वारे? ति, स्वरूपविवक्षायां हि तदभावान्नीवारादिषूहो न स्यात्, अविवक्षितत्वे तु नीवारादावपि साधनविशेषसद्भावात्सिध्यत्यूहः । ननु साधनस्यापि दार्शपौर्णमासिकस्य द्वारत्वात् विकृतौ च तदभावात्कथमूहः, यस्यापूर्वस्यावघातोऽङ्गन्तदीयसाधनं नीवारमिति चेत्तथा सत्यौषधाज्यसान्नाय्यानां धर्मसङ्करः स्यात्, त्रयाणामपि प्रदेयसाधनत्वात् । अथाग्नेयादिद्वारभेदेन साधनत्वभेदाद् व्यवस्था, ततो विकृतौ तद्द्वाराभावादवघातादेरप्रवृत्तिः, उच्यते—अवहतैरपूर्वं कुर्यादिति शास्त्रार्थः साधनप्रयुक्तिपक्षे तद्वत्कुर्यादित्यतिदेशे अवहतैः कुर्यादित्यर्थो भवति तस्मात्सिध्यति विकृतावघातः, तेन यस्यापूर्वस्यावघातोऽङ्गमित्यादिकुशकाशावलम्बनमनर्थकं, यदि परं धर्मसाङ्कर्याय स्यादित्यास्तां तावत् एवं प्रोक्षिताभ्यामुलूखलमुसलाभ्यामित्यत्रागन्म सुवः सुवरगन्मेत्यत्रावहन्तिस्वरूपं स्वर्गस्वरूपञ्च संस्कारमन्त्रयोरपूर्वार्थयोर्द्वारमुतापूर्वसम्बन्धिविशेष इति तुल्यो विचारः, तत्र व्रीह्यादीनां श्रुतानामविवक्षाकारणाभावात्तद्द्वारेणैवापूर्वार्थत्वं साधनरूपस्यावर्जनीयत्वादन्यथाऽवघातादेरानर्थक्यात्तन्मात्रमेवविवक्षितमिति सिद्धान्तः, तदेतदिह संक्षिप्तमुपरितनैस्त्रिभिरधिकरणैः प्रपञ्चयिष्यते, सेयं द्वितीयस्य वर्णकस्यैका व्याख्या, तथाऽन्यापि

१ व्रीहित्वादिद्वारेति पाठान्तरम् ।

सप्तमाद्ये हि यज्ञ्यर्थत्वेऽपि धर्माणामपूर्वविशेषनिमि¹त्ततामात्रेण व्यवस्थासिद्धेर्नैकान्ततोऽपूर्वार्थत्वं व्युत्पादनीयमिह त्वपूर्वार्थत्वमन्तरेणोहासिद्धेरपूर्वार्थत्वम्प्रतिपाद्यते, यज्ञिस्वरूपार्थत्वे हि तुल्यन्यायत्वादवघातादीनां व्रीह्यादिस्वरूपार्थत्वं स्यात्तदभावाच्च नीवारादावूहो न स्यादिति तस्यैवापरा व्याख्या सप्तमाद्ये साधारण्येनापूर्वार्थत्वमिह त्वारादुपकारकाणामपूर्वार्थत्वम्प्रकरणात्स्यात्सन्निपातिनान्तु श्रुत्यादिसंयुक्तव्रीह्याद्यर्थत्वावगमात् न तत्प्रयुक्तत्वमित्याशङ्क्य तेषामपि व्रीह्यादिस्वरूपपर्यवसायिनामानर्थक्यात्तद्द्वारेणापूर्वार्थतेति प्रतिपाद्यते, तदेतेषु त्रिष्वपि पक्षेषु अथवेत्यादिभाष्यन्तन्त्रत्वे एवास्माभिर्व्याख्यातम्। अथवाऽन्यामित्यादिनाभाष्येण पुनर्वर्णकान्तरमारब्धं तदुच्यते सप्तमाद्ये ऽपूर्वार्थत्वं सिद्धम्, इह तु किमपूर्वार्थानां धर्माणां यज्ञिर्निमित्तम्? । उतानिमित्तमथापूर्वमेवे? ति चिन्त्यते । नन्वनिमित्ता प्रवृत्तिः कादाचित्कत्वात् येन विचार एव न स्यात्तत्रापूर्वस्यासाध्यत्वान्निमित्तता न युक्ता, तस्माद्यज्ञिरेव निमित्तं तत्तुल्यन्यायत्वाच्चावघातादीनामपि व्रीह्यादिस्वरूपमेव निमित्तमिति तदभावान्नीवारादिषु न स्यादिति प्राप्ते ब्रूमः "यज्ञेस्तावन्निमित्तत्वं न केनचिदिहेष्यते । अपूर्वस्यापि तत्रोक्तमर्थात्तस्य निमित्तता । साध्यं हि साधनानुष्ठानेऽनिमित्तम् अनिष्पन्नमपि मनसि साध्यतया विपरिवर्त्तमानं, तस्मादपूर्वार्था धर्मास्तन्निमित्ताश्च विकृत्यपूर्वमपि तेषां धर्माणामतिदेशेन साध्यमवगतं तत्साधनभूतनीवाराद्यङ्गत्वेनावघातादीननुष्ठापयतीति सिध्यत्यूहः ॥

प्रोक्षणस्यापूर्व्वप्रयुक्तत्वाधिकरणम् ।

सू० संस्कारे प्रयुज्यमानानां तादर्थ्यात्तत्प्रयुक्तं स्यात् ॥ २ ॥

पूर्वाधिकरणे धर्माणाम् अपूर्वार्थत्वं सप्तमाद्यसिद्धं स्मारितं, तत एव च द्रव्यसंस्कारो ऽपि तत्प्रयुक्त इति संक्षेपतः प्रतिज्ञामात्रेणोक्तम्, इदानीं तु तदेव श्रुत्यादिविरोधान्न सम्भवतीत्याशङ्क्योपपाद्यते तत्रेह

१ निष्टतामात्रेणेति पा०

वाक्यसंयुक्तानां फलदेवतयोश्चेत्यत्र लिङ्गसंयुक्तानां द्रव्यसंख्याहेतुसमुदाय-मित्यत्र श्रुतिसंयुक्तानामपूर्वार्थत्वम्प्रतिपाद्यते दर्शपूर्णमासयोः श्रूयते "प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति", प्रोक्षिताभ्यां दृषदुपलाभ्यां पिनष्टी"ति तत्र प्रोक्षित—शब्देन विशेषणप्रधानेन तृतीयान्तेनान्यसाधनभूतयोरुलूखलमुसलयोर्दृषदुपलयोश्च संस्कारकं गम्यमानं प्रोक्षणं यत्तयोः साध्यन्तदर्थमित्यविवादम्। इदन्तु चिन्त्यते यत्तयोर्हन्तिपिषिसाधनत्वं तदर्थं सत्प्रोक्षणं हन्तिपिष्यर्थं? मुत यदपूर्वसाधनत्वं तदर्थत्वादपूर्वार्थं? मिति तत्र "अवहन्तिश्रुतेस्तावदवघातः प्रतीयते । तत्साधनत्वमेवातस्तृतीयातोऽवगम्यते ॥ सामानाधिकरण्याच्च प्रोक्षणं तद्विशेषणम् । एवं हन्त्यर्थतापूर्वशेषत्वं प्रक्रियावशात्" । न च वाक्यसंयुक्तस्य प्रकरणमीष्टे, हन्तिपिषिद्वारेणापूर्वार्थत्वादुभयमविरुद्धमिति चेन्न उभयान्वयासम्भवान्न हि प्रकरणाधीनत्वमात्रेण प्रकृतार्थता सम्भवति, किं तर्हि प्रकृतेनैकवाक्यतां कल्पयित्वा, न चावहन्तिपदेन प्रधानवाक्येन च युगपदेकवाक्यता सम्भवति तत्रान्यतरेऽवहातव्ये प्रकरणं बाधित्वा हन्तिनैवान्वयमध्यवस्यामः, न च प्रोक्षणस्यानर्थक्यं हन्तेरपूर्वार्थत्वात्तदर्थमपि प्रोक्षणमपूर्वस्योपकरोत्येव यथाऽऽधानमग्निद्वारेण क्रतूनामुपकारकमपि क्रतुविधिभिर्न गृह्यते, तथा प्रोक्षणमपूर्वार्थस्य हन्तेरङ्गमपि तत्स्वरूपपर्यवसायित्वेन विधीयमानं न क्रतुविध्येकवाक्यतां गच्छति । यच्च प्रधानवाक्यशेषभूतं तदेव विकृतिष्वतिदिश्यते, ततश्चावघातः क्रत्वङ्गत्वादतिदिश्यते न प्रोक्षणमतच्छेषत्वात् अवघातस्तु गच्छन्स्वाङ्गभूतं प्रोक्षणमपकर्षतीति कृत्वा विकृतिषु प्रोक्षणमनुष्ठीयते, नखनिर्भिन्न तु चरावघाताभावान्न प्रोक्षणस्याकर्षकमस्तीति न नखेषु प्रोक्षणमूहितव्यम् । अथाप्यवघातद्वारेण क्रत्वङ्गम्प्रोक्षणं तथाऽपि तत्स्वरूपमेव द्वारमिति तदभावान्नखेषु नास्ति प्रोक्षणमिति प्राप्तेऽभिधीयते। "अवघातावसायं सत्प्रोक्षणं स्यादनर्थकम्। विनापि प्रोक्षणं हन्तिरूपनिष्पत्तिदर्शनात्। तद्द्वारेण त्वपूर्वार्थं भवन्नानर्थकं भवेत् ॥ न हि तेन विना तस्य निष्पत्तिरवगम्यते" । तेनावघातमात्रेण प्रयोजनानवाप्तेर्वाक्यसंयुक्तमप्यवघातमतिक्रम्यापूर्वार्थतां प्रकरणादर्थ्यते, न च तदेकवाक्यतामन्तरेण

तादर्थ्यं सम्भवति। न च हन्तिनाऽपूर्वेण च पृथक् पृथगेकवाक्यता संभवति प्रोक्षिताभ्यां हन्ति प्रोक्षिताभ्यामपूर्वं भावयेदिति वाक्यं हि तथा भिद्येत तस्मादेवं द्रष्टव्यं हन्तेर्द्वे रूपे हन्तिरूपं तण्डुलनिर्वृत्तिप्रणाड्या चापूर्व-जननव्यापारविशेषता, तत्र वाक्यात्प्रोक्षणं प्रति प्राधान्यमापद्यमानोऽव-घातः श्रौतस्य स्वरूपस्यान्यथाऽपि सम्भवात्तेनात्मना प्राधान्यासम्भवादः पूर्वजननव्यापारात्मना प्राधान्यं प्रतिपद्यते तद्रूपस्य विना प्रोक्षणेन निष्पत्त्यनवगमात्तत्स्वरूपप्रतिपत्तिपरश्च हन्ति–शब्दः, एवमुलूखलमुस-लयोरपि द्रष्टव्यं स्वरूपं हन्तिसाधनरूपं च विनापि प्रोक्षणं सम्भव-तीति यत्तयोर्हन्तिशब्दावगतापूर्वव्यापारविशेषं प्रति साधनत्वं तेनात्मना प्रोक्षणसंस्कार्यत्वं गम्यते, तदेवं वाक्यार्थः, येन व्यापारेण तण्डुल-निर्वृत्तिप्रणाड्याऽपूर्वं क्रियते तं व्यापारम्प्रोक्षितेन साधनेन कुर्यादिति तत्र नखनिर्भिन्ने चरौ दलनस्यावघातवत्तण्डुलनिष्पत्तिप्रणाड्याऽपूर्वजनन-व्यापारत्वान्नखानाञ्च तत्साधनत्वात् प्रोक्षणं सिध्यति । नन्वेवमवह-न्ति–शब्द उलूखलमुसलशब्दौ च लक्षणावृत्त्या स्युः सत्यम्, आनर्थक्याद्वरं लक्षणा, तस्मादपूर्वप्रयुक्तं प्रोक्षणम्। एवं "यावत्या वाचा कामयीत तावत्या दीक्षणीयायामनुब्रूया" इति श्रुतः स्वरविशेषः किं ज्योतिष्टोमापूर्वप्रयुक्तः? उत दीक्षणीयापूर्वप्रयुक्त? इति विचारः, "तत्र फलवत्परमापूर्वं तच्छेषत्वं ततो भवेत् । स्वापूर्वं क्रतुशेषत्वाच स्वयं फलवद्यतः ॥ फलवच्छेषता युक्ता न तु निष्फलशेषता, । तस्मात्तत्साधने रूपे स्वरभेदो विधीये ॥ उच्यते। एवमा-श्रीयमाणे हि भवेल्लक्षितलक्षणा। स्वापूर्वं लक्षणामात्रं तस्मात्तच्छेषतावरं तच्छेषत्वेऽपि धर्मस्यानानर्थक्यं प्रसज्यते॥ तस्याप्यदृष्टरूपत्वात्फलापूर्वोप-योगतः। फलवत्परमापूर्वोपयोगित्वाद्यजमानसंस्काररूपं दीक्षणीयापूर्वं फ-लवदेव न तादर्थ्येऽप्यानर्थक्यम् । अदृष्टरूपत्वाच्च तद्रूपस्य विना धर्मैर-वघातादिवत्सिद्ध्यनवगमात्सम्भवति प्रयोजकत्वमिति तादर्थ्यमेव युक्तं, दीक्षणीया हि केनात्मना धर्मं गृह्णातीत्यपेक्षायां स्वापूर्वसाधनत्वं शीघ्रं गम्यते, तद्द्वारन्तु परमापूर्वसाधनत्वं बिलम्बितं, तस्मादवान्तरापूर्वप्रयुक्ता एवं जातीयकाः, एतेन प्रोक्षणाद्यङ्गानामुत्पवनादीनान्तज्जन्यव्रीह्यादि-

समवेतापूर्वप्रयुक्तत्वं व्याख्यातम् । आरादुपकारकप्रयाजाद्यङ्गानान्तदपूर्वप्रयुक्तत्वं "संस्कारोऽपि ह्यदृष्टत्वादपूर्वमिति गीयते ॥ प्रयाजापूर्ववत्तस्मादुभयं स्यात्प्रयोजकम्" ॥

फलदेवतासम्बद्धधर्माणामप्यपूर्वप्रयुक्तताधिकरणम् ।

सू० फलदेवतयोश्च ॥ ३ ॥

"अगन्म सुवः सुवरगन्म" "अग्नेरहमुज्जितिमनूज्जेषमि"ति दर्शपूर्णमासप्रकरणपठितौ मन्त्रौ किं स्वर्गस्वरूपाग्निस्वरूपप्रयुक्तौ? उत यद्दर्शपूर्णमासापूर्वसाध्यं स्वरूपं फलस्याग्नेश्च तदीयदेवतास्वरूपं तच्छेषौ सन्तौ मन्त्रावपूर्वप्रयुक्ताविति "तत्र स्वर्गादिशेषत्वं भवेल्लिङ्गेन मन्त्रयोः । फलस्यादृष्टरूपत्वात्प्रधानत्वाच्च सर्वतः ॥ अग्न्यादेर्योज्यमानस्य फलदायित्वसम्भवात् । तादर्थ्यमेव मन्त्रस्य युक्तं नापूर्वशेषता ॥ सत्यं, फलस्य सर्वस्मात्प्राधान्यं न तु तावता । मन्त्रस्तद्रूपशेषः स्याद्वानर्थक्यप्रसङ्गतः ॥ न हि मन्त्रेण प्रकाशितमात्रं फलं भवतीति प्रमाणमस्ति, तेन क्रतुर्मा तल्लब्धस्वर्गार्थत्वं तावन्मन्त्रस्यानाशङ्क्यं प्रकरणाम्नानात्प्रकृतक्रतुशेषः[1] संस्कारद्वारेण फलार्थः स्यात्, ततश्च क्रत्वपूर्वप्रयुक्ततामेवापद्यते, न हि क्रत्वङ्गत्वदूपत्रातिलङ्घनेन फलं यावत्नेतुं युक्तम् । एवमग्न्यादेरपि फलदायित्वे सत्यपि मन्त्रेण प्रकाशितमात्रात्फललाभो निष्प्रमाणक एवेति क्रत्वन्वयित्वेनैव प्रकाश्यत्वमङ्गीकर्त्तव्यं, तस्मादेवं वक्तव्यं मन्त्रप्रकाशितफलदेवतः क्रतुः स्वापूर्वं साधयतीति, ततश्च विकृतौ फलान्तरदेवतान्तरवत्यामगन्म ब्रह्मवर्चसं सूर्यस्याहमुज्जितिमनूज्जेषमित्यूहनीयन्तथा हि प्रकृतिवत्कृतं भवतीति ॥

धर्माणामदेवताप्रयुक्तत्वाधिकरणम् ।

सू० देवता वा प्रयोजयेदतिथिवद्भोजनस्य तदर्थत्वात् ॥ ४ ॥

एवं तावत्फलदायित्वेऽपि न देवतायाः प्रयोजकत्वं स्वरूपेणोक्तम्, इदानीं तु नास्या फलदायित्वं, नापि प्राधान्यमिति प्रतिपाद्यते, सर्वं पूर्वाक्षेपेणेदमारभ्यते ऽपूर्वापह्नवात्तद्धितैर्द्विचार्यते किं यागो

१ सिध्यतीति पा० ।
२ संस्तद्द्वारेण इति ।

देवताराधनार्थः अस्याश्चाराधितायाः फलम् ? उतापूर्वद्वारं यागस्य साधनत्व ? मिति, तत्र "इन्द्रादेः सम्प्रदानत्वात्कर्मणोऽपि प्रधानता । यागः पूजा तदङ्गं स्यादतिथेर्भोजनं यथा ॥ कर्मकारकं हि क्रिययेप्सिततमप्रधानत्तेनापि व्याप्यमानं संप्रदानं ततोऽपि प्रधानं संप्रदानं च देवता, तस्मात्प्रधानं यागश्च देवतापूजा, सा च लोके पूज्यमानार्था अतिथिभोजनादिवत्, अतो देवताराधनार्थो यागः, सा चाराधिता फलमाराधयित्रे ददातीति युक्तम् । एवञ्च लौकिकप्रसिद्धपदार्थस्वभावो नातिक्रान्तो भवति, अवश्यं च यागस्यापि फलसाधनत्वं केनचिद् द्वारेणाश्रयितव्यं स्वरूपस्य भङ्गुरत्वात्तत्र रात्रिसत्रन्यायेन वाक्यशेषमन्त्रवर्णाद्यवगता देवतातृप्तिरेव द्वारमिति कल्पयितुं युक्तं, न त्वत्यन्ताप्रतीतापूर्वकल्पनं, श्रूयते हि "तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयती"ति "दधत्पोषं रयिं मयि" इति, शब्दवगम्यत्वाच्च देवताप्रसादस्य, स एवापूर्ववद्धर्माणां प्रयोजकः फलसाधनं चेत्येवं प्राप्ते ब्रूमः "यागस्यैव पदश्रुत्या फलसाधनतोच्यते । देवतायाश्च तादर्थ्यं तन्निर्वृत्त्युपयोगतः ॥ यागश्च साध्यरूपत्वात्साधनत्वेन देवताम् । गृह्णाति सिद्धरूपा च देवता तस्य साधनम्" ॥ प्रत्ययाभिहिता हि भावना पुरुषार्थभाव्यमपेक्षमाणा पदगतमपि यागमयोग्यत्वादुपेत्य वाक्यादुपनीतं स्वर्गादि गृहीत्वा तस्य साधनमाकाङ्क्षन्ती समानपदश्रुत्युपनीतं यागमविरोधात्करणं गृहीत्वा इत्थम्भावापेक्षायां द्रव्यदेवतभूतं भव्ययागनिर्वर्तनसमर्थं तादर्थ्येन गृह्णन्ती देवतां यागार्थां करोति, न च प्रागवगतं देवतायाः फलार्थत्वं येन तदाराधनाय यागविधिः स्यादेवं शब्देन तावत् यागात्फलं गम्यते यत्त्वतिथिवदित्युक्तं युक्तं तत्र प्रमाणान्तराद्भोजनस्य तादर्थ्यावगमात्, अपि च तत्रापि नातिथिर्भोजयितुः फलं ददाति प्रीयमाणोऽपि न ह्यसौ स्वर्गादिप्रदानायेष्टे तस्माद यागवद्भोजनादेव फलम्, एवं विशिष्टसम्प्रदानकदानेऽपि तथा यागेऽपि, यद्यपि देवता विग्रहवती प्रतिगृह्य भुक्त्वा तृप्यति प्रसीदति च तथापि यागादेव फलं विग्रहवती चाज्ञित्या स्यात्ततश्च नित्यवेदविषयत्वं न स्यात्, सत्यपि विग्रहे प्रत्तस्य हविषो देवताया भोगःप्रत्यक्षविरुद्धोऽशक्योऽभ्युपगन्तुं, न चाभुञ्जाना प्रसीदतीति युक्तम्, अत

एवापतिपचा पूर्वत्यागेन देवताप्रसादादेव फलमित्येतदपि निरस्तं, न हि तस्याः प्रसादः सम्भवतीत्युक्तं, यत्त्वस्या यागसाधनद्वारा फलनिर्वृत्त्युपयोगित्वं तदभिप्रायादेव देवतायाः फलदायित्ववादाः, सेनापतिना ग्रामो दत्त इत्यादिवत् तत्तन्मन्त्रार्थवादेतिहासपुराणेष्वपि देवतानामपि तपश्चरणकृत्वनुष्ठानब्रह्मास्त्रादिमन्त्रतश्च समीहितसिद्ध्यनुकीर्तनात्कर्मणा एव फलं गम्यते, । मन्दधियस्तु श्रद्धालवस्तात्पर्यमजानाना भ्राम्यन्तु नाम, किञ्च स्तोकमण्डूकादीनां तिरश्चामचेतनानां चौषधिवनस्पतीनामश्वानां गवां च हनुदन्तानामश्वरूपाणाञ्च कृष्णाश्वेतादीनामश्वचरितानां चेङ्कारशङ्कत्करणादीनां देवतात्वेन होमेषु श्रूयमाणानां को नाम फलदायित्वं श्रद्दधीत । किञ्च सैवाग्निहोत्रदेवता दध्ना पूज्यमानेन्द्रयं ददाति पयसा पशुमिति को हेतुरन्यदतो वस्तुस्वभावात्, पावकभोजनानशनादिभिश्च किमिति देवतास्तृप्यन्ति, किमिति वा सुरापानादिभिः कुप्यन्ति, येनाभ्युदयं प्रत्यवायं च कुर्वन्ति कर्त्तुः । अथैवमादिषु कर्मणा एवापूर्वद्वारं फलं तथा सर्वत्रास्तु तस्मादपूर्वप्रयुक्ता धर्माः ॥

प्रोक्षणादीनामपूर्वप्रयुक्तत्वाधिकरणम् ।

सू० द्रव्यसंख्याहेतुसमुदायं वा श्रुतिसंयोगात् ॥ ५ ॥

वाक्यसंयुक्तानां लिङ्गसंयुक्तानां चापूर्वप्रयुक्तिर्व्याख्याता यत्त्वत्यन्तबलीयस्या श्रुत्या संयुक्तं तस्य प्रकरणादपूर्वार्थत्वमत्यन्तान्याय्यमिति मन्यमानान्प्रति श्रुतिसंयुक्तानामपि अपूर्वार्थता प्रतिपाद्यते । अथवा स्वरूपातिक्रमेण साधनसम्बन्धे स्रुवादिष्वतिप्रसङ्गमाशङ्क्य निराक्रियते दर्शपूर्णमासयोः श्रूयते "व्रीहीन्प्रोक्षती"ति तत्र संशयः किं व्रीहिद्रव्यप्रयुक्तं प्रोक्षणम्? उतापूर्वप्रयुक्त? मिति, यद्व्रीहिपदाभिधेयं स्वरूपं तन्मात्रपर्यवसितं प्रोक्षणं विधीयते तन्मात्रं च क्रत्वङ्गम्? उत यत्तेषां साधनरूपं व्रीहिभिर्यजेतेत्यनेनावगतन्तेन प्रोक्षणं सम्बध्यते प्रोक्षितैर्यजेते? ति, स्वरूपपरत्वे प्रधानविधिविशेषणत्वाभावादतद्विशेषणस्य "तद्विकारेष्वतिदेशाभावाच्च प्रोक्षणस्य विकृतिष्वतिदेशः, व्रीहिमात्रं त्वतिदिश्यते तदतिदिष्टं स्वाङ्गभूतं प्रोक्षणमनुष्ठापयतीति विकृतिष्वपि सत्सु व्रीहिषु प्रोक्षणं स्यादेव, नीवारादिभिस्तु

विनिवर्त्तितेषु व्रीहिषु प्रोक्षणमुपदेशातिदेशयोरभावान्नीवारादिष्वननुष्ठेयं भवति, यदा तु साधनविशेषद्वारेण प्रधानविधेरेव विशेषणं प्रोक्षणं तदाऽयमर्थः प्रोक्षितैर्व्रीहिभिः साध्यमानेन यागेनापूर्वं कुर्यादिति तत्र नैवारहविष्कायां भावनायां तद्वच्छब्देन प्राकृतभावनेत्थंभावे सकले ऽतिदिश्यमाने नीवारैर्व्रीहिमात्रे निवर्तिते ऽन्यस्य तद्रूपस्यैवावस्थानान्नीवाराणां च व्रीहिस्थाने निवेशाद्वेषो ऽर्थो भवति—प्रोक्षितैर्नीवारैर्यजेतेति, ततश्च नीवारेषु प्रोक्षणं सिद्धं भवति, तथा त्रीन्परिधीनिति मन्त्रः किं त्रित्वसंख्याप्रयुक्तः? उतापूर्वीयपरिधीयत्ताप्रकाशनार्थः सन्नपूर्वप्रयुक्त? इति, इदं तु लिङ्गविनियोगत्वादिहानुदाहरणम्, अतिप्रसङ्गनिराकरणपक्षे तु भवत्येवोदाहरणं, तथा चतुर्होत्रा पौर्णमासीमभिमृशेत्पञ्चहोत्राममावास्यामिति अभिमर्शनं पौर्णमास्यामावास्यासमुदायप्रयुक्तम्? उतापूर्वप्रयुक्त? मिति, तथा चातुर्मास्येषु श्रूयते "शूर्पेण जुहोति तेन ह्यन्नं क्रियत" इति किमचकरणप्रयुक्तो होमो ऽचकरणातां शूर्पदर्विपिठरादीनामङ्गम्? उताराादुपकारको ऽपूर्वार्थः इति विचारः। ननु तृतीयानिर्देशादिह द्रव्यस्य न तत्संस्कारार्थता होमस्य शङ्कितव्या उच्यते तेन ह्यन्नं क्रियत इति हेतुनिर्देशोऽयं हि—शब्दश्रुत्या गम्यते व्याप्यश्च हेतुर्भवति प्रधानं चाङ्गेन व्याप्यते नाङ्गं प्रधानेन, यत्र प्रधानं तत्राङ्गं न यत्राङ्गं तत्र प्रधानं, तस्माद्धेतुश्रुत्या व्याप्यत्वेन धूमवदवगम्यमानमन्नकरणं प्राधान्येनावसीयत इति होमस्तदर्थ इत्याशङ्क्य, तत्र श्रुतिबलीयस्त्वाद् व्रीह्यादिद्रव्यशेषता प्रक्रियाऽवगतापूर्वशेषत्वस्यावबाधिनी व्रीह्यादिरूपशेषरूपत्वे सत्यानर्थक्यमापतेत्। प्रोक्षणस्य विना ऽप्यस्मात्तत्स्वरूपस्य सिद्धितः। तस्मात्साधनरूपं यद् व्रीहीणां शास्त्रचोदितम्। तेन रूपेण संबन्धः, प्रोक्षणादेर्विधीयते॥ शक्नुवन्ति व्रीहयः शास्त्रान्तरा[1]वगतमात्मीयमपूर्वसाधनत्वं हवीरूपत्वं लक्षणया ऽवगमयितुं, तेनात्मना प्रोक्षणं गृह्णन्ति हवीरूपस्य च विवक्षितत्वान्नातिप्रसङ्गः। यदि पुनरेकेनैव वाक्येन संस्कारो द्रव्यञ्च विधीयते प्रोक्षितैर्व्रीहिभिर्यजेतेति, तदापि किं सिध्यति साधनरूपान्वयः प्रोक्षणस्य सुतरां सिध्यतीति ब्रूमः, न हि तत्र व्रीहिसं-

[1] शास्त्रान्तरावगमात् इति पा०।

बन्धः प्रोक्षणस्य साधनत्वेनैवोपदिश्यमानं द्रव्यं संस्कारेण व्रीहित्वेन च शिष्यत इति व्यक्तः साधनसम्बन्धः, अयं हि तत्रार्थः—व्रीहिजातीयमप्रोक्षणसंस्कृतं च यत्तेन यजेतेति, ततश्च यवनीवारादिषु विरोधाद् व्रीहिसाधनत्वे निवर्त्तितेऽपि प्रोक्षितसाधनता न निवर्त्तत इति सिद्धं तत्रापि प्रोक्षणं, यत्र तर्हि संस्कारवाक्ये द्रव्यं निर्दिश्य सर्वनाम्ना च तद् द्रव्यं परामृश्य यागे विनियुज्यते "तप्ते पयसि दध्यानयति सा वैश्वदेव्याऽऽमिक्षे"ति तत्र कथं तत्रापि यद्यपि प्राक् पयसः साधनत्वं विदितं नापि संस्कारवेलायां गम्यते, तथाऽपि भाविविनियोगावगम्यसाधनत्वापेक्ष एवायं संस्कारविधिरन्यथाऽऽनर्थक्यात् । ननु साधनत्वं पूर्वानवगतं कथं पयसा लक्षयितुं शक्यते न पदं प्रवृत्तिवेलायामेव स्वार्थं हित्वा साधनविशेषं लक्षयित्वा संस्कारान्वयं प्रतिपादयतीति ब्रूमः, किं तर्हि प्रथमं पयः-शब्दः स्वार्थस्य स्कारान्वयितारूपं वाक्यार्थं प्रतिपादयति तद्रूपस्य च कार्यान्तरोपयिकतामन्तरेणानुपपत्तेस्तदाकाङ्क्षायामुपरितनेन वाक्येन संस्कारविशिष्टस्यैव पयसस्तच्छब्दपरामृष्टस्य कार्ये विनियोगः क्रियते, तदर्थश्च पूर्वं विहितः संस्कार इति पश्चादवगम्यते, तदयमर्थः—दध्यानयनसंस्कृतं पयोवैश्वदेवमिति, न ह्यवश्यं पूर्वलक्षित एव साधनरूपे संस्कारा विधातव्याः, साधनरूपार्थाः संस्कारा इत्येतावच्चः प्रतिपाद्यं, तच्चैवंविधेष्वयवेनैव सिध्यति श्रुत्यैव संस्कारस्य साधनरूपान्वयात्, व्रीहीनित्यादिकन्तु लाक्षणिकं रूपम् । नन्वेवं श्रुत्यर्थस्यैव पयसः संस्कारात्कथं लक्षणा वाचोयुक्तिः, सत्यं, व्रीहिपयःप्रभृतीनां द्रव्याणामेव संस्कारस्स तु साधनरूपसिद्ध्यर्थः तत्तु रूपमशाब्दमित्येतावता लक्षणावाचोयुक्तिः, तच्च रूपं यवेषु नीवारादिषु चाविशिष्टमिति तत्रापि प्रोक्षणादयः सिद्धा भवन्ति, तस्मात्सर्वेषामेव भूतभवद्भाविनियोगानां द्रव्यादीनां संस्कारा अपूर्वभावनाशेषभूतास्तद्विकृतिषु प्राकृतार्थकरेषु द्रव्यान्तरेषूहितव्याः, शूर्पहोमस्तु तृतीयानिर्दिष्टद्रव्यकरणकत्वादारादुपकारक[1] इति दूरापास्तं, तस्य द्रव्यप्रयुक्तत्वमचकरणत्वं त्वर्थवादो न हेतुरित्युक्तम् ॥

१ संस्कारत्वेन इति पा० ।

अग्निष्टोमे उपांशुत्व-स्य प्राचीनपदार्थप्रयुक्त-त्वाधिकरणम् ।

सू० देशबद्धमुपांशुत्वं तेषां स्याच्छ्रुतिनिर्देशात्तस्य च तत्र भावात् ॥ ६ ॥

ज्योतिष्टोमे श्रूयते "त्सरा वा एषा यज्ञस्य तस्माद्यत्किंचित्प्राचीनमग्नीषोमीयात्तेनोपांशु चरन्ती"ति तत्र संशयः किमिदमुपांशुत्वं सोमयागस्य यः प्राग् भागस्तद्धर्मः सन्परमापूर्वप्रयुक्तं, ततश्च विकृतिषु तद्भागारम्भके अप्राकृतेऽपि पदार्थे ऊहितव्यम्? उताग्नीषोमीयात्पशोर्ये प्राचीनाः? पदार्था दीक्षणीयादयस्तेषां धर्मस्तदवान्तरापूर्वप्रयुक्तं, ततश्चाप्राकृते पदार्थे यूपावटस्तरणबर्हिर्धर्मवन्नोहितव्यम् इति, तत्र वाग्यमनवदवान्तरापूर्वप्रयुक्तत्वे प्राप्ते पूर्वपक्षोऽभिधीयते यज्ञस्येति शब्दः प्राचीन–शब्दस्य विशेषणं व्यवहितोऽपि प्रवृत्तिविशेषकरत्वं विधिविशेषणशेषत्वे स्यात् त्सरा–शब्दविशेषणत्वे हि अप्रवृत्तिविशेषकरः स्यात्तस्माद्यज्ञस्य यत्प्राचीनं तदुपांश्विति सम्बन्धः ततश्च यज्ञभागधर्मता, प्राचीन - शब्दोऽपि देशं निमित्तीकृत्य पदार्थेषु वर्तमानो वर्तते तथा च सति प्रथमं देशे वर्तितुमर्हति तदतिक्रमे कारणाभावात्तद्धर्म एवोपांशुत्वं, वाग्यमनन्तु यज्ञसंयोगाभावादवान्तरापूर्वप्रयुक्तं, तदिदमुक्तं प्रणीतादि तथेति चेन्न यज्ञस्याश्रुतत्वादिति । अथवाऽनेन सूत्रद्वयेनाधिकरणान्तरं प्रकृताधिकरणसिद्धान्तस्य दृष्टान्तसिद्ध्यर्थं तदीयपूर्वपक्षन्यायेन च, पूर्वपक्षं वक्तुम् अन्तरा गर्भिणीन्यायेन विचार्यते दर्शपूर्णमासयोः श्रूयते "यज्ञं तनिष्यन्तावध्वर्युयजमानौ वाचं यच्छतः यदध्वर्युयजमानौ वाचं यच्छतस्तत्प्रजापतिभूयं गतौ यज्ञं तन्वाते तस्मात्प्रणीताः प्रणेष्यन्वाचं यच्छन्तीति तत्रायं वाग्यमः किं परमापूर्वप्रयुक्तः? उतावान्तरापूर्वयुक्तः? इति संशयः किं यज्ञभागधर्मोऽयं परमापूर्वप्रयुक्तः? उत प्रणीताप्रणयनादूर्ध्वं हविष्कृदाह्वानात्प्राग्ये पदार्थाः प्रोक्षणादयस्तत्तदपूर्वप्रयुक्त इति, यज्ञसंयोगाद् यज्ञार्थत्वे प्राप्ते ब्रूमः यज्ञस्यात्र विस्तारेण संबन्धो न वाग्यमविषयविशेषणत्वं यज्ञस्य यो भागस्तत्र वाग्यम इति, किं तर्हि यज्ञन्तनितुं वाचं यच्छेदिति वाग्यम इति वाग्यमश्च प्रणिधानेनाविकलानुष्ठानार्थोऽङ्गं तदङ्गैरपि चाविकलैर्यज्ञस्य विस्तारो भवत्युपपन्नोऽङ्गार्थत्वेऽपि यज्ञसंयोगः, अतस्तद्देशानां पदार्थानां साक्षादवैकल्यकरणेनोपकुर्वन्वाग्यमस्तदङ्गमेव स्यात्, भाष्येऽपि

हविष्कृता वाचं विसृजति प्रथम् इति यदुक्तमित्यादिना नात्रयज्ञ–शब्दः श्रूयत इत्यन्तेन तत्र्यनुभाषणत्वेन तत्परिहारत्वेन सूत्रद्वयं व्याख्याय नन्वित्यादिनाऽन्तरागर्भिणीत्वेन व्याख्यातम्। एवं हि स्थितादुत्तरमित्यादि भाष्यमुपपद्यते नान्यथा, तत्र नन्वित्यादिना पूर्वव्याख्योक्तयज्ञसंयोगाभावाक्षेपेणान्तरागर्भिणीत्वेन पूर्वपक्षमाह यज्ञसंयोगोऽत्राप्यस्तीति उच्यत इत्यादिना सिद्धान्तं दर्शितवान्, स्थितादुत्तरमुच्यते यज्ञ–शब्दोऽत्र त्सराशब्दविशेषणम् अव्यवधानाच्च प्राचीनशब्दस्य विशेषणं व्यवधानादपि च भागस्यैकत्वाद्यत्किञ्चिदित्यनेकापेक्षः शब्दो नात्रकल्पते, तस्मादग्नीषोमीयात्प्राचीनानामङ्गानामुपांशुत्वम् अग्निधर्मः, ॥

इष्टकासु सकृद्द्विकर्षणानुष्ठानाधिकरणम्।

सू० अग्निधर्मः प्रतीष्टकं संघातात्पौर्णमासीवत् ॥ ७ ॥

अग्नौ श्रूयते "हिरण्यशकलैरग्निं प्रोक्षती"ति किं प्रोक्षणं सकृदेव स्यात्। उत प्रतीष्टकं भेदेने?ति यदीष्टकातिरिक्तोऽवयव्यग्नि–शब्दाभिधेयस्ततः सकृत्, अथेष्टका एव संहता अग्निधारणार्थेन स्थापिता अग्नि–शब्देनाभिधीयन्ते ततस्तदर्थं प्रोक्षणं प्रतीष्टकं कर्त्तव्यं यत्रैकावयवाकर्षणेनावयवान्तरमाकृष्यते सन्धिश्च न दृश्यते तत्रैव देवदत्तघटादौ अवयव्यभ्युपगम्यते, न चेहैकेष्टकाकर्षणेऽन्यासामपकर्षणं सन्धिश्चात्र गुरीपच्छचानामपीष्टकानामनुमानेन दृश्यते तस्माचात्र्यवयवी, पक्वामसंयोगे च द्रव्यान्तरारम्भ इति काश्यपीयाः, तस्मादिष्टकार्थं प्रोक्षणं प्रत्येकं स्यात् नैवमेकबुद्धिरेव हि देशकालादिभेदेऽपि अबाधितावयविद्रव्यसाधनी, सा चेहापि विद्यते वृक्षादिषु चावयविसद्भावेऽप्याकर्षणं न दृष्टमित्यतन्त्रम् अवयविसद्भावेऽपि सन्धिदर्शनं च पटादावनैकान्तिकं, तस्मात्प्रत्यक्षबलात्पक्वामसंयोगेऽप्यस्त्यभ्यवयवीति तस्येदं प्रोक्षणं सकृदेव कर्त्तव्यं पूर्वाधिकरणे ग्रहयज्यभाससमुदायात्मकज्योतिष्टोमप्रयुक्तिर्विचारिता, समुदायप्रसङ्गात् प्रोक्षणं विचार्यते इति प्रासङ्गिकी सङ्गतिः ॥

उत्तमान्यानामङ्गं पत्नीसंयाजसंस्थाधिकरणम्।

सू० पत्नीसंयाजान्तत्वं सर्वेषामविशेषात् ॥ ८ ॥

द्वादशाहे श्रूयते "पत्नीसंयाजान्तान्यहानि सन्तिष्ठन्ते न बर्हिरनुप्रहरन्ति असंस्थितो हि तर्हि यज्ञ" इति, तत्र संशयः, किं सर्वेषामपह्नां पत्नीसंयाजान्तत्वम्? उतोत्तमवर्जं? मिति, "तत्राविशेषात्सर्वेषां पत्नीसंयाजसंस्थितिः। असंस्थावचनं गौणं यज्ञस्य चिरसंस्थितेः। स्यादेतत् असंस्थितो हि तर्हि यज्ञ इति यज्ञस्यासंस्था पत्नीसंयाजान्तत्वे हेतुः, सा च नोत्तमे ऽहनि तस्माद्धेतुवशात्पूर्वेषामेव स्यात्। अथाप्ययमर्थवादः तथा ऽपि वाक्यशेषवशादेवान्त्यवर्जं पत्नीसंयाजान्तता व्यवस्थाप्यते, अञ्जनमिव घृत नैवम् असंस्थित—शब्दस्य चिरसंस्थाभिप्रायत्वेनोपपत्तेर्नाविशेषप्रवृत्तो विधिः सङ्कोचमर्हति, यथा लोके यश्चिरेण भुङ्क्ते तत्र वक्तारो भवन्ति नास्य भोजनं परिसमाप्यत इति तथेहापि दीर्घकालोऽसौ यज्ञो न सन्तिष्ठत इति यावत् अतो लाघवार्थं पत्नीसंयाजात् परं शेषं लुप्यते समयानुष्ठाने ह्यतिविलम्बः स्यादित्येतावानभिप्रायः, तस्मात्सर्वेषां पत्नीसंयाजान्ततेति प्राप्ते ब्रूमः "अपेक्षितविधानाय प्रागुत्तममयं विधिः। मुख्यत्वसम्भवाद्वाक्यशेषस्य, न च गौणता। द्वादशयागाः सह कर्त्तव्यास्तत्र पूर्वमहः कस्मिंश्चित्पदार्थे व्यवस्थाप्य परमुपक्रमितव्यं, तत्र कुत्र पदार्थे ऽवस्थानमित्यपेक्षायां पत्नीसंयाजान्तानि पूर्वपूर्वाण्यहानि कृत्वोत्तरमुत्तरमारभेतेत्येवं विधीयमाने ऽपेक्षितविधिर्भवति, चोदकश्च न बाध्येत शेषलोपस्तु चोदकबाधेनानपेक्षितश्च विधीयते, तस्मादयमर्थः पत्नीसंयाजान्तान्यहानि सर्वाणि कृत्वा हारियोजनाद्यहः शेषं तन्त्रेण सर्वेषामुपरिष्टादनुष्ठेयमिति, तस्मात्प्रागुत्तमात्पत्नीसंयाजान्तता, तथा चासंस्थित—शब्दो ऽपि मुख्यो भवति अविशेषप्रवृत्तो ऽपि हि विधिर्वाक्यशेषस्य मुख्यत्वाय विशेषे स्थाप्यते किमुत यदा तस्यापि न्यायादेव विशेषविषयत्वं, कः पुनरूहोपयोगश्चिन्तायाः पूर्वपक्षे विकृतिषु नोहः सिद्धान्ते द्विरात्रादिषु द्वादशाहविकारेषु यदन्त्यमहर्द्वितीयं तृतीयं वा तत्प्रकृतौ पत्नीसंयाजान्तमपि अनुष्ठितमूहित्वा सकलमनुष्ठीयते ॥

त्रिःप्रथमामन्वाह इत्यादिषु स्थानधर्मताधिकरणम्।

सू० अभ्यासः सामिधेनीनां प्राथम्यात् स्थानधर्मः स्यात् ॥ ८ ॥

दर्शपूर्णमासयोः सामिधेनीः पञ्चदश विधाय एकादशर्चः पठित्वा त्रिःप्रथमामन्वाह त्रिरुत्तमान्ताः पञ्चदश सम्पद्यन्ते इति श्रुतं, तत्र संशयः किमयं त्रिरभ्यासः प्राथम्यलक्षितायाः ऋचः प्रवोवाजीयाया धर्मस्तत्कार्यार्थस्ततश्च यत्र तत्र स्यात्प्रवोवाजीया त्रिरभ्यसितव्या ? उत प्रथमस्थानधर्मस्तत्स्थानगतकार्यप्रयुक्तस्ततश्च प्रवोवाजीयाया अन्यापि या विकृतिषु प्रथमं पठ्यते साऽप्यूहेन त्रिरभ्यसितव्येति, "तत्र स्त्रीलिङ्गनिर्देशादाद्याऽनेनाभिधीयते, । तस्या एव त्रिरभ्यासम्बन्धोऽत्र विधीयते" उच्यते "श्रुत्या प्रथमशब्देन प्राथम्यमभिधीयते । ऋक् तु लक्षणयोच्येत तस्मात्प्राथम्यधर्मता । प्राथम्यैकार्थसमवेतस्त्रिरभ्यासो विधीयते तत्प्रथम उच्यते तत्त्रिरिति तच्च प्राथम्यमृगाश्रयत्वेनैव प्राप्तं गुणवचनानाञ्च शब्दामानाश्रयतोलिङ्गवचनानि भवन्तीति नित्यानुवादः स्त्रीलिङ्गनिर्देशः, न च प्राथम्यसम्बद्धपदमात्रस्य पादमात्रस्य वा त्रिरभ्याससम्बन्धसम्भवात् न नित्यानुवादत्वं स्त्रीलिङ्गस्येति मन्तव्यम्, सर्वस्यर्च एव कार्यसमर्थायावचनस्य प्राप्तत्वात्ताः पञ्चदश सम्पद्यन्त इति च वादात्तस्मात्स्थानधर्मः ॥

यावज्जीवं दर्शपूर्णमासयोरारम्भणीयेष्टेः सकृदनुष्ठानाधिकरणम् ।

सू० इष्ट्यावृत्तौ प्रयाजवदावर्त्तेतारम्भणीया ॥ १० ॥

दर्शपूर्णमासप्रकरणेऽन्वारम्भणीया ऽऽम्नाता, "आग्नावैष्णवमेकादशकपालं निर्वपेद्दर्शपूर्णमासावारप्स्यमानः सरस्वत्यै चरुं सरस्वते चरुमि"ति, सा किं दर्शपूर्णमासावृत्तावावर्त्तेत ? उत सकृदेवादौ स्या ? दिति संशयः, "आवृत्तौ हि प्रधानानामङ्गावृत्तिरसंशया । दर्शाद्यङ्गमियन्तस्मादावर्त्तेत प्रयाजवत्" । उच्यते "आरम्भद्वारकं त्वेतदङ्गं साधारणश्च सः । तस्य साधारणत्वेन सापि साधारणी भवेत्", आरप्स्यमानसंयोगादारम्भाङ्गमिष्टिर्न साक्षाद्दर्शपूर्णमासाङ्गम्, आरम्भश्चेदं मया कर्त्तव्यमित्यध्यवसायः, स च सर्वप्रयोगसाधारणः सर्वो ह्यग्नीनाधायैवमध्यवस्यति यावज्जीवं मया दर्शपूर्णमासौ पर्वणि पर्वणि कर्त्तव्याविति, तस्मादारम्भसाधारण्यात्तदङ्गभूतान्वारम्भणीयाऽपि साधारणी न प्रतिप्रयोगमावर्त्तनीया, एवं वृत्तिकारमते-

नाधिकरणं व्याख्याय तत्रापरितोषाद् व्याख्यानन्तरं भाष्यकारेण कृतं कस्य हेतोरपरितोषः, नाध्यवसायवचनोऽयमारम्भ-शब्दः प्रथमप्रवृत्तिवाची हि लोके प्रसिद्धः, यद्यपि नाध्यवसायवाची स्यात्तथापि यद्यदा कार्यमुपस्थितं तस्यैव तदाऽध्यवसायो न च यावज्जीविकाः प्रयोगा युगपदुपस्थिताः, न ह्ययमेकः प्रयोगोऽभ्यस्तरूपः पूर्वकालीनन्तु जीवनं दर्शानुष्ठाने निमित्तं तस्मिन्नागते नैमित्तिकं समाप्तं कृत्वा चरितार्थे पुरुषे पुनस्तादृशनिमित्तवशात् नैमित्तिकमापतितमिति पुनः क्रियते, यथैकस्मिन्पुत्रे जाते वैश्वानरीं निरूप्य पुत्रान्तरजन्मन्यपि पुनर्निर्वपति तादृगेतत्, तस्मात्प्रतिप्रयोगमध्यवसायभेदात्तदङ्गमारम्भणीयाऽऽप्यावर्ततेति तत्सिद्धान्तसिद्धिस्तस्मादेवं व्याख्यायते किं प्रथमस्यान्वाधानात्मकस्य पदार्थस्याङ्गमिय? मुत दर्शपूर्णमासावारम्भमाणस्य प्रथमं प्रवर्तमानस्य पुरुषस्याङ्गमिति तत्र। "पुरुषार्थत्वपक्षे हि फलक्लृप्तिः प्रसज्यते। तेनान्वाधानशेषः स्यात्स ह्यारम्भोऽनयोर्यतः। तस्यावृत्तौ तदङ्गत्वादेषाऽऽप्यावृत्तिमश्नुते। प्रधानवशवर्तित्वादेवं प्राप्तेऽभिधीयते न खल्वारम्भ-शब्देन पदार्थः कश्चिदुच्यते। यदेव ह्यप्रवृत्तस्य कर्त्तुराद्यं प्रवर्तनम्। तत्रायं वर्तते शब्दस्तद्योगात्तु पदार्थधीः। आरप्स्यमानशब्दस्तत्कर्तुः श्रुत्यैव वाचकः। लृट्प्रत्ययोऽपि श्रुत्यैव तदर्थस्याभिधायकः। आद्या प्रवृत्तिरेकैव बह्व्यो नैकस्य कर्मणः॥ प्रथमप्रवृत्तिविषयतया ह्यन्वाधानमेव प्रतिपाद्यते न श्रुत्या, न च श्रुतिसम्भवे लक्षणा युक्ता, तस्मान्नान्वाधानेन सम्बन्धः, दर्शारम्भकर्त्तुः पुरुषस्य शानचाऽभिहितस्य संस्कारिकेयम्, आरम्भार्थतया लृट्प्रत्ययेन क्रियार्थायां क्रियायामुपपदे विहितेनेयं प्रतिपाद्यते, अतो न पुरुषार्थत्वेऽपि फलकल्पना, न चैकस्य कर्मणो बह्व्यः प्रथमप्रवृत्तयः सम्भवन्ति, किं त्वेकैव। ननु द्वितीयादीनपि प्रयोगानसावारभत एव सत्यं, प्रयोगानारभते न तु दर्शपूर्णमासावारभते दर्शपूर्णमासारम्भाङ्गं त्वियं प्रथमप्रवृत्तिश्चारम्भः, न च द्वितीयादि प्रयुञ्जानः

१ पर्वकालीनं तु इति पा०।
२ न सिद्धान्तसिद्धिरिति।

प्रथमं प्रयुङ्क्ते इति शक्यते वक्तुं, तस्मादारम्भाङ्गत्वात्तस्य चावृत्त्यभावादारम्भणीया नावर्तते ॥

निर्वापमन्त्रे स-
वित्रादिशब्दानाम-
नूहाधिकरणम् ।

सू० अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यात्तचाचोदितमप्राप्तं चोदिताभिधानात् ॥ ११ ॥

दर्शपूर्णमासयोर्निर्वापमन्त्रः "देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामी"ति तत्र सवितृ-अश्वि-पूष-शब्दाः किं समवेतदेवताप्रकाशनार्थास्ततश्च विकृतावूहितव्या? उतासमवेतवचना निर्वापविशेषणमात्रार्था नोहितव्या? इति,"तत्र दृष्टार्थतालाभाद्देवतावाचिता भवेत्। निर्वापस्य प्रशंसार्थाः सन्तोदृष्टार्थतामियुः। सवित्रादिपदैस्तस्मादग्न्यादिरभिधीयते। अग्निना वा विकल्प्येत सविता मान्त्रवर्णिकः। उत्पत्तौ तद्धितोक्तेन न मन्त्रोक्तो विकल्पते। वैषम्याच्च सवित्रादिपदमग्नेश्च वाचकम्। मन्त्रवाक्यानि चैतानि भिद्येरन् प्रतिदैवतम्। जुष्टनिर्वाप-शब्दौ च भजेतामनुषङ्गिताम्। सर्वश्च निर्वपाम्यन्त एकमन्त्रः प्रतीयते। जुष्टादिः सकृदाम्नातो न सहेतानुषञ्जनम्। तस्मान्निर्वापमेवैते प्ररोचयितुम् अनुष्ठानकाले प्रशंसितुं प्रकाशयन्तीति नोहितव्याः ॥

अग्नये जुष्टमिति मन्त्रे
अग्नि-शब्दस्य विकृतावूहा-
धिकरणम् ।

सू० गुणशब्दस्तथेति चेत् ॥ १२ ॥

तस्मिन्नेव मन्त्रे ऽग्नये जुष्टं निर्वपामीत्यग्नि-शब्दोऽपि किमसमवेतवचनो नोहितव्य? उत समवेतवचन ऊहितव्य? इति तत्रायं समवेतोऽग्निरस्मिन् कर्मणि यद्यपि मन्त्रे त्वत्राग्नि-शब्दो न समवेताभिधायकः जुष्टमिति भूतकालनिर्देशादग्निना यत्सेवितं तदुच्यते, न च निर्वापवेलायामग्निना सेवितं द्रव्यं तस्माज्जुष्ट-शब्दस्तावदसमवेतवचनः, तद्विशेषणं चाग्निपदम् अतोऽसमवेतवचनं सवित्रादिपदवत्प्रशंसार्थं कीर्तितमित्यनूह-उच्यते "नात्र जुष्टस्य निर्वापो मन्त्रेणानेन कथ्यते। निर्वापकरणात्त्वत्र कीर्त्यते जुष्टभावना"। नायमर्थः यज्जुष्टन्तस्य निर्वापं करोमीति, किं तर्हि निर्वा-

पेष्ठाग्नये जुष्टं करोमीति यथा जुष्टं भवति तथा करोमीत्यर्थः, तस्मात्स-मवेतवचनत्वादग्नि—शब्दस्योहः, एवं वा यस्तु मुख्यवृत्त्या समवेतं न वदति यथा धान्यमसि धिनुहि देवानि"ति तण्डुलेषु धान्य—शब्दस्तुषद्रव्यवचनः स किमसमवेतवचनत्वानूह्य? उतोह्य? इति संशये, समवेतप्रकाशनासाम-र्थ्यादवृष्टार्थोऽयं तस्मादनूह्यः, लक्षणया तु प्रकृतिवदुपचाराद्विकृतिं प्रकाश-यत्वावृष्टार्थः कल्पयितुं न्याय्यः, तस्मात्तण्डुलानेव प्रकृतिशब्देन शालयो भुज्य-न्त इतिवत्प्रकाशयति इति इतरथमये हविषि वाक्यानामयनेमां समसीत्यू-हितव्यमार्थिकी च प्रकृतौ धान्यशब्दाम्नानाल्लक्षणा न तु सैव विवक्षिता वि-कृतौ लक्षणा कारणाभावान्मुख्य एव मांस—शब्दः प्रयोक्तव्यो। न मृग—शब्दः॥

इडोपह्वानमन्त्रे यज्ञपति-शब्दस्यानूहाधिकरणम् ।

सू० चोदिते तु परार्थत्वाद्विधिवद्विकारः स्यात् ॥ १३ ॥

दर्शपूर्णमासयोरिडानिगदे श्रुतम्, उपहूता मनुष्या ये यज्ञपतिं वर्धा-नि"ति किमेते यज्ञपतिर्वृद्धिप्रकाशनेन प्रोत्साहकरणेन तत्संस्कारार्थं सद-नेकयजमानकेषु कर्मसूहितव्य? मुतेडास्तुत्यर्थो यज्ञपति—शब्दो नोहितव्य? इति, "इडामन्त्रैकवाक्यत्वादिडास्तुत्यर्थता भवेत्। स्वामिवृद्ध्यर्थता त्वस्य सामर्थ्येनावगम्यते॥ वाक्याच्च बलवल्लिङ्गं दृष्टं चेह प्रयोजनम्। उत्साह-करणात् स्तुत्यामदृष्टार्थत्वमापतेत्। यजमानेषु बहुषु सर्वसंस्कारसिद्धये ऊहो यज्ञपतीन्वर्द्धानित्येवं प्राप्त उच्यते। "प्रत्यक्षादेव वचनादिडोपह्वानशेषता कृत्स्नस्य निगदस्योक्ता तन्मध्या[1]पतितं ततः। न पृथग् भवितुं शक्तमतः स्तु-त्यर्थता वरं वृद्धिप्रकाशे कल्प्यं लिङ्गेन विनियोजनम्। यच्छब्देन च पारार्थ्यं वृद्धेः श्रुत्याऽभिधीयते। लिङ्गादपि ततोवृद्धेर्न स्वार्थेन प्रकाशनं सत्रेषु चैकयजमानवृद्धिप्रकाशनेनेडास्तुतिसिद्धेर्नोहः, यत्र पुनर्यजमानस्य प्रा-धान्यं न पारार्थ्यं यथा सूक्तवाके यं यजमान आयुराशास्त इति भवत्ये-वोहः, तदिदमुक्तं विकारस्तत्प्रधाने स्यादिति, तदिदं पूर्वस्य परार्थग्रहणस्य प्रत्युदाहरणार्थं सूत्रम्॥

१ तन्मध्यपतितमिति पा०।

अथवाऽधिकरणान्तरं सूक्तवाके यं यजमान ·
आयुराशास्त इति यजमानशब्दः

किं सत्रेषूहितव्यो नेति प्रहरणाङ्गत्वात्सूक्तवाकस्य तद्गतमायुरादिकीर्तनं यज्ञपतिशृद्धिवत्स्तुत्यर्थमतो नोहः, उच्यते सर्वाण्येतानि आयुरादीनि श्रुतिविनियुक्तसकलसूक्तवाककरणत्वान्यथानुपपत्त्या प्रस्तरप्रहरणस्य फलानि कल्प्यन्ते. क्रियान्तरसम्बन्धि वा प्रकाशयतो मन्त्रस्य करणताऽवकल्पते. तस्मात्प्रहरणसाध्ययजमानफलप्रकाशनमस्य कार्यं सत्रेषु यस्यैव यजमानस्य फलं नोच्यते तस्यैव न सूक्तवाकः करणं स्यात्, न च फलं प्राप्नुयात् तस्मादूहः ॥

सुब्रह्मण्यायामाह्वाननिगदे हरिवच्छब्दस्यानूहाधिकरणम् ।

सू॰ असंयोगात्त[१]दर्थेषु तद्विशिष्टं प्रतीयेत ॥ १४ ॥

ज्योतिष्टोमे देवताप्रकाशनार्थः सुब्रह्मण्यानिगद इन्द्र आगच्छ हरि व आगच्छेत्यादिः सोऽग्निष्टुत्यतिदिष्टस्तत्राग्नेयी सुब्रह्मण्येति वचनादिन्द्रपदस्थानेऽग्निपदं निक्षिप्यते हरिवदादिशब्दा अपि किमूहितव्या? नेति संशयः, तदर्थं च किं समवेतवचना ने? ति तत्र पूर्वपक्षापरपक्षो वा इन्द्रस्य हरी इत्यादिभिरेते गुणा इन्द्रे सन्तीति गम्यते, सन्ति चेत्स्वगुणद्वारेणेन्द्रमेव प्रकाशयितुममीषामुच्चारणं दृष्टार्थं भवति, तेनाग्निरपि स्वगुणद्वारेण प्रकाश्यत इति हरिवदादिशब्दानपोद्धृत्य रोहितवदादिशब्दा ऊहितव्या इति प्राप्ते ब्रूमः "सत्स्वेतेषु गुणेष्वेवन्तत्सद्भावे तु न प्रमा । वाक्यशेषास्त्वदुक्ता ये स्तुतिमात्रपरा हि ते । इति तस्माददृष्टार्थमेवाविद्यमानैरेव गुणैः सम्बध्येन्द्रः प्रकाश्यत इत्यग्निरपि तैरेव गुणैः सम्बन्द्धव्य इत्यनूहः । अथवेदमन्यदुदाह्रियते । ज्योतिष्टोमे एकहायन्या मन्त्रः तस्यै शतन्तस्यै दधीत्यादिः स साद्यस्के त्रिवत्सेऽतिदिष्टः किमूहितव्यो ने? ति संशये यद्यप्येकहायन्यवस्थायां न विद्यन्ते

१ असंयोगात्तदर्थेषु इति पा॰ ।

श्वतादयस्तथापि भावित्वेनापि तावत्सम्भवद्भिः स्वगुणैरेकहायन्येव प्रकाश्यते दृष्टार्थत्वात्, त्रिवत्से तु अभावादूहः, नैतदेवं कर्माङ्गभूतायामेकहायन्यवस्थायां तावच्च सन्त्येव, भावित्वमपि नैकान्तिकमरणसम्भवात् अतो यथाकथंचित्प्ररोचनार्थं कीर्त्यन्ते, तावच्च साण्डेऽपि सम्भवति साण्डादपि या गौर्जनिष्यते तस्या एते ऽवाप्यमानाः साण्डादेवावाप्ता भवन्तीति, तस्मादनूहः॥

सारस्वत्यान्मेष्यामध्रिगुवचनाभावाधिकरणम्।

सू० लिङ्गविशेषनिर्देशात्समानविधानेष्वप्राप्ता सारस्वती स्त्रीत्वात्॥ १५॥

ज्योतिष्टोमे सवनीयाः पशव आग्नेयमजमग्निष्टोम आलभेत ऐन्द्राग्नमुक्थ्ये द्वितीयमैन्द्रं वृष्णिं षोडशिनि तृतीयं सारस्वतीं मेषीं चतुर्थीमतिरात्र इति तत्र पशुधर्मा यदा सर्वेषां साधारणास्तदा किमध्रिगुवचनं मेष्यां भवति उत नेति संशये प्रकरणाविशेषात् "अस्मा अग्निं भरते"ति पुंल्लिङ्गस्यास्मै–शब्दस्य नियतलिङ्गपशुशब्दाभिधेयपशुत्वाभिप्रायेण प्रास्मै पशव इत्येवं स्त्रियामप्युपपत्तेर्लिङ्गविरोधाभावात् तस्यामपि स्यादध्रिगुवचनमिति प्राप्ते ऽभिधीयते। "पशुशब्दश्रुतावेवं भवेन्न त्विह स श्रुतः। तस्मात्प्रयोगकाले यद्परोक्षतया स्थितम्। द्रव्यं तत्र प्रयुक्तोऽयं पुंल्लिङ्गं वदितुं क्षमः न स्त्रीद्रव्यमतोमेष्यामशक्तेर्न प्रवर्त्तते तेन समानविध्यपूर्वपक्षे ऽध्रिगोर्मेष्यामप्रवृत्तिः, सिद्धान्ते त्वग्निषोमीयार्थत्वाद्धर्माणामतिदेशेन पश्वन्तरगमनादूहेन प्रवृत्तिः॥

यज्ञायज्ञीये गिरा–शब्दस्य स्थाने इरापदस्यैव कर्तव्यताधिकरणम्।

सू० आम्नानादन्यदधिकारे वचनात्तद्विकारः स्यात्॥ १६॥

साम्नामिदानीमूहमारिप्समानस्तदुपोद्घातं चिन्तयति तानि ह्यक्षरान्तरेषु समाम्नातानि अक्षरान्तरेषूह्यन्ते, तत्रेह गिरापदगीतेरिरापदे स्थानापत्त्या प्राप्तिं वक्तुं स्थानापत्तिमेव चिन्तयति, ज्योतिष्टोमे यज्ञायज्ञीये श्रूयते "न गिरा गिरेति ब्रूयादैरं कृत्वोद्गेयमि"ति किमिरापदस्य

गिरापदस्यानापत्तिः पाक्षिकी गिरापदमिरापदं वा प्रयोक्तव्यम् ? उत नियता स्यानापत्तिरिरापदमेव प्रयोक्तव्य ? मिति, "तत्रेरापदमात्रं वचनेन विधीयते । नोद्गानसम्बन्धः स्तोत्रसम्बन्धो वा प्रकरणात्तु स्तोत्राङ्गता भवति तदङ्गभूतस्य च तत्साधनभूतयज्ञायज्ञीयगानसम्बन्धः प्राप्त एवानूद्यते, ततश्च काल्पनिकमेव स्तोत्राङ्गत्वं गानसम्बन्धश्च, गिरापदस्यापि चास्त्येव काल्पनिकमस्त्येवाङ्गत्वमित्यविशेषादुभयोर्विकल्पः, नैतदेवम् इरापदस्य हि प्रकरणसनाथया श्रुत्या ऽग्निष्टोमस्तोत्रसाधनभूतोद्गानसंम्बन्धित्वेन विधीयमानस्य श्रुत्या गानसम्बन्धः प्रकरणाच्च स्तोत्राङ्गत्वं, गिरापदस्य तु प्रगाथैकवाक्यतया गानसम्बन्धः स्यात् क्रमाच्च स्तोत्राङ्गत्वं, स्तोत्रक्रमेण हि ज्योतिष्टोमप्रकरणे पठ्यमानासु ऋक्षु यज्ञायज्ञीयप्रगाथोऽग्निष्टोमस्तोत्रक्रमे पठ्यते इति तदेकदेशस्य गिरापदस्यापि क्रमात्तदङ्गत्वं क्रमाच्च प्रकरणं बलीयः श्रुतिश्च वाक्यात् बलीयसी, अपि च गिरापदस्याम्नानमात्रं न विधिः, इरापदं तु प्रत्यक्षविहितम्, अतोऽपि बलवत् । ननु च यज्ञायज्ञीयेन स्तुवीतेति प्रत्यक्षमेव यज्ञायज्ञीयं स्तोत्राङ्गत्वेन विहितं, सत्यं, साम्नः प्रत्यक्षम् ऋचस्त्वनुपपत्त्या कल्प्यम् एतद्धि हि साम्नः स्तुतिसाधनत्वं यद्गुणाभिधानपराणामृगक्षराणामभिव्यक्तिः, अतो यज्ञायज्ञीयेन स्तुवीतेत्यस्यायमर्थः—यज्ञायज्ञीयाभिव्यक्तैरृगक्षरैः स्तुवीतेति, तत्रापि सामाम्नानसिद्धाक्षराभिव्यक्तिरेव सति सम्भवेऽङ्गीकरणीया नान्यकल्पनं युक्तमिति यज्ञायज्ञीयप्रगाथस्यैवायं स्तुतौ विनियोग इति प्रकल्प्यते, तत्रापि सर्वपदानां साधारण्येन विनियोगो न विशेषतो गिरापदस्यैव, इरापदस्य तु साक्षाद्विशेषरूपेण साक्षाद् विनियोग इति बलवत्ता ॥

इरापदस्य प्रगीतताधिकरणम् ।

सू० अप्रगाणाच्छब्दान्यत्व तथाभूतोपदेशा[१]त् ॥ १७ ॥

नियतमिरापदमिति स्थिते, किं तदप्रगीतं प्रयोक्तव्य ? मुत प्रगीतमिति संशयः, तत्र "न प्रगाणं भवेत्कस्मादप्रगीतस्य चोदनात् । प्रगीता तद्वि-

१ तथाभूतोपदेशः स्यादिति पा० ।

तोत्पत्तावपौरीयं प्रसज्यते । यदि तावदैरमिति स्वार्थे तद्धितस्तत इरां कृत्वोद्गेयमित्येतावानर्थः स्यात्, अप्रगीतात् खल्विरापदादयन्तद्धितः प्रगीतात्तु तदुत्पत्तौ वृद्धं तालव्यं प्रथमस्वरं चेत्येवमिकारस्यायीभावे सति वृद्धाच्छ इति छप्रत्ययोत्पत्तेरायीरियमिति रूपं स्यात्, ऐरमिति रूपमप्रगीता-दुत्पत्तौ सिध्यति, तस्मादप्रगीतस्यैवोपदेशादप्रगाणम् । अथापि विकारार्थी-यन्तद्धितस्तथाऽपि प्रगाणाप्रगाणयोरुभयोरप्यत्तरविकारत्वादन्यतरावधार-णप्रमाणमन्यन्मृग्यन्ततश्चैरापदे विहिते यत्प्राप्तं प्रगाणमप्रगाणं वा तस्यैवा-यमनुवाद इत्यापद्यते, । तद्विधि[1]ना चाप्रगाणमेव प्राप्तं तथाभूतस्योपदेशात्, तस्मादप्रगाणम् । उच्यते, "गिरापदस्य यत्स्थानं तत्र हीदं विधीयते । इरा-पदमतस्तस्य या गीतिस्तां लभेत तत् । सत्यमप्रगीतात्तद्धितो न त्वप्रगाणं विधीयते । पदोत्त[2]रविधिपरं हीदं वाक्यं नाप्रगाणं प्रगाणं वा स्पृशति, तत्तु पदान्तरं गिरापदस्थाने विहितं स्थानापत्त्या तद्गीतिं लभमानं न केन-चिद्वार्यते यज्ञायज्ञीयसाध्या हि स्तुतिः समस्तञ्च साम यज्ञायज्ञीयं नैक-देशविकलं, तत्र गिरापदे पदान्तरोपदेशान्निवृत्तेर्यस्तद्गतोगीत्यंशः स गेयम-पेक्षते, इरापदमपि सामसाध्यस्तुतौ सामसंस्कार्यतामन्तरेण साधनी-भवितुमशक्तं संस्कारकं सामांशमपेक्षते तयोर्नष्टाश्वदग्धरथवत्सम्बन्धः तस्मात्प्रगीतं प्रयोक्तव्यम् ॥

इति शास्त्रदीपिकायां नवमस्य प्रथमः पादः ॥

---

## अथ द्वितीयः पाद आरभ्यते ॥

---

गीतीनां सामनामता-धिकरणम् ।

**सू॰ सामानि मन्त्रमेके स्मृत्युपदे-शाभ्याम् ॥ १ ॥**

साम-शब्दस्तद्विशेषवचनाश्च रथन्तरादिशब्दा न प्रगीतमन्त्रस्य

---

१ तद्विधानाच्च प्रगाणमिति पा॰ ।
२ पदान्तरविधिपरमिति पा॰ ।

वाचकाः किन्तु गीतिमात्रस्यैवेति सप्तमे यदुक्तं तदेवेदमुत्तरविवक्षया स्मार्यते, एवं वा योऽयमूहो नामग्रन्थविशेषश्छन्दोगैः पठ्यते कयानश्चित्र आभुवो वा" इत्यादिः स किं नित्योऽथानित्यो वा पौरुषेय इति, कर्तृस्मरणाभावादध्यायानध्यायाद्याचाराच्छूश्रूषाराधितगुरुमुखाच्च प्रतिपत्तेर्वेदत्वप्राप्तावुच्यते ऊहसमाख्यानादनित्यत्वं, न ह्यध्ययनसिद्धस्योहत्वं घटते, किं च यद्योन्यां तदुत्तरयोर्गायतीत्यतिदेशवचनाद्योनावध्ययनसिद्धस्योत्तरयोरनुष्ठानावगमात् पौरुषेयत्वं विस्पष्टं, न हि तिसृष्वप्यधीतस्य यद्योन्यां तदुत्तरयोरिति वादो घटते, कर्तुस्तु अस्मरणमनादरादप्युपद्यते, न ह्यत्र पुरुषप्रत्ययाधीनमनुष्ठानं वचनादेवोत्तरयोर्गानसिद्धेः, ऋक्सामानाञ्च पृथक् पृथक् वेदत्वात्सत्यपि संसर्गस्य पौरुषेयत्वे ऽध्यायाद्यादरः, तस्मात्पौरुषेयत्वाच्चाप्यं संग्रहान्याय्यं त्यक्तव्यमिति न्यायतः कीदृशमनुष्ठानं भवतीति चिन्तनीयम् ॥

साम्नः ऋक्संस्कारकर्मताधिकरणम् ।

## सू० कर्म वा विधिलक्षणम् ॥ २ ॥

सामानि किमृचं प्रति प्रधानभूतानि? उत तत्संस्कारार्थानि गुणभूतानी ऽति विचारः, तत्राकर्मकालप्रयोगात् प्राधान्यं संस्कारार्थत्वे ह्यक्षराभिव्यक्तिरेषां कार्यं स्यात्सा च कर्मकाल एवोपयुज्यत इति अकर्मकाले प्रयोगो न स्यात् । ननु वचनादकर्मकाले गानं भविष्यति "गर्भाष्टमे वर्षे उपनयीत श्रावण्यां पौर्णमास्याम् उपाकृत्य स्वाध्यायमधीयीते"ति एवं तद्दृष्टार्थतैव बलादापद्यते न ह्यकर्मकाले प्रयुक्तं साम कर्मोपयिकीमभिव्यक्तिमलं भवति कर्तुम् ॥ अथादृष्टरूपः संस्कारस्ततो ऽकर्मकाले संस्कृतानां कर्मकाले पुनः संस्कारो ऽनर्थक इति क्रतुमध्ये सामानि न प्रयुज्येरन् । अथाकर्मकाले प्राधान्यं कर्मकाले तु संस्कारस्तदाऽर्द्धवैशसन्तस्मात्प्रधानकर्म सामबहिः प्रयोगः फलार्थः, क्रतुमध्ये तु क्रतोरारादुपकारक[1] इति प्राप्ते उच्यते "अक्षराणामभिव्यक्तिः साम्नां दृष्टं प्रयोजनम् । अक्षरैश्चाप्यभिव्यक्तैः स्तुतिः क्रत्वङ्गवादिता । एवं दृष्टे फले लब्धे नादृष्टफलकल्पना । ननु चाविनियुक्त-

[1] क्रतावारादुपकारक इति पा० ।

त्वादक्षराणां न संस्क्रिया सक्तूनामिव होमेन नैवं दृष्टफलत्वतः । प्रयोजनं न सक्तूनां दृश्यते श्रूयते ऽपि वा । यथोक्तं भाष्यकारेण "न होमसंस्कृतानां सक्तूनां प्रयोजनं श्रूयते नापि दृश्यत" इति, दृश्यते त्वक्षराणां प्रयोजनमिति वैधर्म्यं प्रयोजनवत्त्वं संस्कार्यत्वे हेतुर्न विनियोगः, तथाच यहणावेक्षणस्यग्ज़रणानामविनियुक्तानामपि मन्त्रप्रकाशनसंस्कार्यत्वमिष्टम् । अपि चोत्तरायन्ये कन्वर्थेन स्तोत्रक्रमेण वा पाठादस्त्येव विनियोगः तस्मात्संस्कारकर्माणि सामानीति, यत्त्वक्रमेकाले गानं वाचनिकं तच्छेषार्थतया रथहस्त्यादियोग्यावत् ॥

तृचे प्रत्यृचं कृत्स्नसाम्नः समापनाधिकरणम् ।

**सू० तृचे स्याच्छ्रुतिनिर्देशात् ॥ २ ॥**

"एकं साम तृचे क्रियते स्तोत्रीयमि" ति श्रूयते तत्र संशयः किं व्यासज्य तिसृषु गान ? मुत प्रत्यृचं परिसमाप्त ? मिति, तदर्थं च विचार्यते किमिदं त्रित्वं साम निर्वृत्त्यङ्गम्? मुत स्तोत्राङ्ग ? मिति, तत्र साम क्रियत इत्येवं सामनिर्वृत्तिरुच्यते तामुद्दिश्य ऋग्गीतं त्रित्वमङ्गत्वेन विधीयते प्रधानभूतानामप्यृचामार्थिकं सामसाधनत्वमस्त्येवेति तद्गतस्य त्रित्वस्य युक्तमेव सामाङ्गत्वं, वचनबलाच्च प्रतिप्रधानावृत्तिं बाधित्वा व्यासज्य गेयं, न हि प्रत्यृचं गीयमानस्य त्रित्वमङ्गं भवति, क्रियत इत्यनेनाभ्यासलक्षणा च स्यात् प्रत्यृचं गाने, तस्माद्व्यासज्येति प्राप्ते उच्यते । "स्तोत्रीयस्य हि साम्नोऽत्र तृचसम्बन्ध उच्यते । स्तोत्रसाधनभूतं च स्तोत्रीयमिति भण्यते । साम्नः स्तोत्राङ्गभावश्च स्तोत्रसाधनसंस्कृते स्तोत्रसाधनता चर्चां प्रत्येकं न तु संघशः । यदि त्रित्वसम्पादनाय व्यासज्य गीयते ततो रथन्तरं पृष्ठं भवति यज्ञायज्ञीयेन स्तुवीतेत्यादिभिर्यत्साम्नां स्तोत्रसाधनत्वं विहितं तन्न घटते स्तोत्रसाधनभूतशब्दाभिव्यक्त्या च साम्नः स्तोत्राङ्गत्वं, वाक्यं च स्तुतिबुद्धेः साधनं न वाक्यसमुदायः, तस्मात्प्रत्यृचं गेयम्, एवं च त्रित्वं सामाङ्गत्वेनाघटमानं स्तोत्रसाधनपरिच्छेदेन विधीयमानं स्तोत्रस्यैवाङ्गत्वेन विधीयते, तद्विधानेन प्राप्तं तिसृषु गानं तृचे क्रियत इत्यनेनानूद्यते, अनुवादत्वाच्च करोतेरभ्यासलक्षणा न दोषः ॥

समास्वेव तिसृषु ऋक्षु गानाधिकरणम् ।

सू० तदभ्यासः समासु स्यात् ॥ ४ ॥

तिसृषु प्रत्येकं गीयमानं किमनियमेन समासु विषमासु वा गेयम्? उत समच्छन्दस्कास्वेवे? ति संशये विशेषाश्रवणात् अनियमः संशर-विलेशपरिहाराय तु समास्वेव स्यात् ॥

उत्तरयोर्गायतीत्यत्र उत्तराग्रन्थसमधीतयोरेव ऋचोर्ग्रहणाधिकरणम् ।

सू० नैमित्तिकन्तू[1]त्तरार्थमानन्तर्यात्प्रतीयेत ॥ ५ ॥

"यद्योन्यान्तदुत्तरयोर्गायती"त्यत्र संशयः, किं योन्युत्तरयोरुत्तराग्रन्थाधीतयोर्वा गेय? मुतोत्तराग्रन्थाधीतयोरेवे? ति तत्रोत्तरा-शब्दस्य सम्बन्धिशब्दत्वाद्योव योनेः परतः पठिता सैवोत्तरा, ततश्च योनिपाठापेक्षया रथन्तरयोनेः परतो बृहद्योनेः पठितत्वात्त[2]स्यां गानम् उत्तराग्रन्थे तु रथन्तरस्य योनेः परतो न त्वा वाम् अन्यो दिव्य इत्यस्याः पाठात्तस्यां गानम्, अतो विकल्पः, द्वयोरपि रथन्तरयोन्यपेक्षयोत्तरत्वादिति प्राप्ते ब्रूमः, यद्यप्येवं सम्बन्धिशब्दो लोके तथाऽप्युत्तराग्रन्थे संज्ञारूपेण प्रसिद्धिस्तत्र संज्ञाशब्दस्यान्यानपेक्षवृत्तित्वात्सापेक्षवृत्तेः सम्बन्धिशब्दाद्बलीयस्त्वं प्रकरणपाठाच्चोत्तराग्रन्थः क्रत्वङ्गं, तस्मादुत्तराग्रन्थाधीतास्वेव गेयम्, एवं वा द्वादशाहे पार्ष्ठिकं चतुर्थमहः एकविंशः षोडशी वैराजं सामेति श्रुतं, तत्र च त्रैशोकं नाम ब्रह्मसामातिज[3]गतीषु स्तुवत" इति श्रूयते, तच्चातिजगत्यामुत्पन्नं विश्वाः पृतना इति उत्तरे द्वे बृहत्यौ नेमिं नमन्ति चक्षसेत्याद्ये तत्र तृचे गाने क्रियमाणे संशयः किमतिजगत्यौ द्वे आनीय समासु गानम्? उत बृहत्यावेवादाय विषमासु गान? मिति, संशरविले[4]शपरिहारायातिजगतीषु स्तुवत इति चातिजगती बहुत्वानुग्रहाय समासु गानम्, बृहत्योस्तूत्तराग्रन्थपठितयोः क्रत्वर्थत्वात्तत्परित्यागे तयोरानर्थक्यादेकविंशसम्पत्तये च एकैकस्या-

१ नैमित्तिकं तूत्तरात्वमानन्तर्यादिति पा० ।
२ तस्यां गानमिति तु पा० ।
३ जगतिषु इति इति पा० ।
४ अत्रैकस्मिन् पुस्तके संशरविलेशयपरिहारायेति दृश्यते पाठस्तथापि संशरविलेशपरिहारायेत्येव युक्तः पाठो माधवोक्तार्थानुरोधाद् भाष्यानुसारित्वाच्च ॥

मृचि सप्तछन्दस्योऽभ्यस्यमानायामभ्यासापेक्षयाऽतिजगतीबहुत्वादनुवादस्व-
रूपस्य वर्त्तमाननिर्देशस्योपपत्तेर्विषमासु गानम्, ॥

बृहतीपङ्क्त्योरेव प्रग्रथनेन रथन्तरस्य गानाधिकरणम् । सू० प्रागाथिकं तु ॥ ६ ॥

ज्योतिष्टोमे बृहद्रथन्तरे बृहत्योरुत्पन्ने अभित्वा शूर नोनुमस्त्वा-
मिद्धि हवामह" इति, तयोः पङ्क्ती उत्तरे नत्वा वाम् अन्यो दिव्यो
न पार्थिवः स त्वं नश्चित्रेति, तत्र श्रूयते न वै बृहद्रथन्तरमेकच्छ-
न्दो यत्तयोः पूर्वा बृहतीककुभावुत्तरे इति, तत्र किं पङ्क्ती परित्यज्य द्वे ककु-
भावानेतव्ये? उत योनिमुत्तराञ्च प्रग्रथ्य ककुभावुत्तरे सम्पादनीये इति संशयः,
तत्र प्रग्रथनेन मुख्यककुप्संपत्त्यभावात् अक्षरसामान्यमात्रेण गौणत्वापत्तेस्तृच-
गानस्यच[1] क्रयमन्तरेणासामञ्जस्यादन्यासां ककुभामानयनम्, उच्यते प्रगा-
थस्मरणात्प्रगाथसमाख्यानात्पङ्क्तेश्चोत्तरात्वेन पाठस्यात्यन्तानर्थक्यापाता-
त्पादं पुनरारभत इति च दर्शनात्तृचगानस्य च सामान्येन विहितस्यात्र प्र-
गाथेऽप्यत्यन्तदोषाभावात्प्रग्रथनम्, एवं वा रौरवयौधाजये वार्हते तृचे भवतः
तयोश्च पूर्वा बृहती, उत्तरा विष्टारपङ्क्तिरिति, तत्रापि पूर्ववदुत्पत्तिर्बृहत्या-
वानीय तृचसम्पादन? मुत पठितयोरेव प्रग्रथन? मिति संशये तत्रैव विशेषत-
स्तृचे भवत इति तृचश्रवणादन्यागमनं प्रगाथस्मरणसमाख्योत्तरापाठलिङ्गद-
र्शनैस्तु प्रग्रथनम्, एवं वा श्यावा[2]श्वान्धीगवे आनुष्टुभे तृचे भवत इति
तयोः पूर्वानुष्टुवुत्तरे द्वे गायत्र्यौ, तत्राप्यन्ययोरनुष्टुभोरागमनं पठिताना-
मेव वा प्रग्रथनेनानुष्टप्त्रयं संपाद्यमिति विचारः, लिङ्गान्तरप्रदर्शनार्थं त्विदं
व्याख्यानान्तरं न तु काचिदधिका शङ्काऽस्ति, एवं वा गवामयने श्रूयते "चतुः-
शतमैन्द्रावार्हताः प्रगाथा" इति, तत्र किं तिसृषु ऋक्षु गान? मुत द्वयोर्द्वयोः
प्रग्रथनेने? ति संशये तृचप्रापिचोदकानुग्रहाय तिसृषु स्यात्प्रगथने हि न सम-
ञ्जसं तृचत्वम्, असति प्रगथने कथं प्रगाथवचनम्—ऐन्द्रावार्हताः प्रगाथा
इति ऋक्प्रग्रथनाभिप्रायमिति ब्रूमः, प्रथमे तृचे गीत्वा, तस्मात्तृचादेकैका-
मृचमुपादायापरे द्वे ऋचौ गृहीत्वा गीयते पुनरप्येवन्तथा सति तृचगानं

१ तृचगानस्य च ऋक्क्रयमन्तरेणेति युक्तः पाठः ।
२ श्यावाश्वान्धीगवे इति तु पा० ।

प्रगाथ-शब्दश्चोभयमनुगृहीतम्भवति नैतदेवम् "अन्या अन्या ऋचो भवन्ती"ति वचनाचैकस्यामृचि द्विर्गानं सम्भवति, तस्माद् द्वयोः प्रग्रथनम् ॥

गीतिसम्पादकानामन्तर-विकारादीनां विकल्पाधि-करणम् ।

**सू० अर्थैकत्वाद्विकल्पः स्यात् ॥ ७ ॥**

छान्दोग्ये तलवकारादिसहस्रसामशाखागतानां गीतिप्रकाराणामेकार्थत्वाद्युगपत्प्रयोगासम्भवात्तदनुरोधेन च सामावृत्तेरन्याय्यत्वात्सिद्ध एव विकल्पः सामप्रसङ्गाद्विस्पष्टीकाराय दर्शितः ॥

ऋचा स्तुवते साम्ना स्तुवते इति विधिना साम्नैव स्तवविधानाधिकरणम् ।

**सू० अर्थैकत्वाद्विकल्पः स्यादृक्सामयोस्त[1]दर्थत्वात् ॥ ८ ॥**

क्वचिद्विकृतिविशेषे कानिचिदप्राकृतानि स्तोत्राणि विहितानि तेषां च न प्रकृतितः किञ्चित्साधनं प्राप्नोति प्राकृतानां गायत्ररथन्तरादिसाम्नां प्राकृतेषु बहिष्पवमानादिस्तुतिषु निबद्धानामप्राकृतेषु प्राप्त्यभावात् तेन तानि साकाङ्क्षाणि, तत्रेदं श्रूयते "यदृचा स्तुवते तदसुरा अन्ववायन् यत्साम्ना स्तुवते तदसुरा[2]नन्ववायन् य एवं विद्वान् साम्ना स्तुवीतेति तत्रर्ग्ग्रहणमप्रगीतऋक्परं प्रगीतायाः सामोपदेशेनैव सिद्धत्वात्, साम्ना ह्यक्षराभिव्यक्तिद्वारैव स्तुतिः क्रियते न साक्षात्तेन साम्ना स्तुवीतेति सामाभिव्यक्तैरक्षरैः स्तुवीतेत्यर्थः, एवं चेदप्रगीतपरमृ[3]क्पदं तत्र संशयः किमृचा साम्ना वा स्तोतव्यम्? उत साम्नैवे? ति द्वयोर्वचनाद्विकल्पप्राप्तौ उच्यते साम्नाम् उपसंहारे विस्पष्टप्रशंसावचनेन विधेयत्वावगमादृक्कीर्त्तनमसुरागमनिन्दया सामप्रशंसार्थं, तस्मात्साम्ना स्तोतव्यम् एवं वा सामवेदे किञ्चित्प्रकृत्य अयं सहस्रमानव इतीयं प्रगीतापि पठिता अप्रगीतापि तत्र श्रूयते "अयं सहस्रमानव इत्येतयाऽऽहवनीयमुपतिष्ठत"इति तत्र प्रगीतया अप्रगीतया वोपस्थातव्यम्?। उत प्रगीतयैवे? ति विचारे विशेषाभावादनियमः अप्रगीतायाः प्रगानार्थ एव पाठः, न ह्यनवधारितस्वरूपायां सुखं गानं सम्भवति, प्रगीता त्वन-

---

१ ऋक्सामयोस्तत्परत्वादिति पा० ।
२ तदसुरानान्ववायंचिति पा० ।
३ मगवचनमिति

स्यार्था तेन सा प्रयोजनमपेक्षमाणा क्रतुना गृह्यते, उपस्थाने च विनियुज्यते एतयेति सर्वनाम्ना परामृश्यते, तस्मात्प्रगीतैव ग्राह्या, एवं वा सामप्रसङ्गान्मन्त्राणां स्वरश्चिन्त्यते मन्त्रा हि क्वचिच्चैस्वर्येणाधीताः क्वचिच्चातुःस्वर्येण, तत्र कर्मसु किन्त्रैस्वर्यचातुःस्वर्ययोः समुच्चयः विकल्पो वा। अथोभयहानेनैकश्रुत्या प्रयोग इति संशयः, तत्र समुच्चय इत्युपक्रममात्रं गीत्युपायवच्चिरस्तत्वात् तद्वदेव तु विकल्प इति पूर्वः पक्षः, ताने यज्ञकर्मणीति स्मृत्यनुमितात्द्वचनादैकश्रुत्यम्, अर्थावगमार्थं तु स्वराध्ययनं स्वरविशेषाधीनत्वादर्थविशेषाणां, "बहुव्रीहौ प्रकृत्या पूर्वपद"मित्यादिवचनात्तस्मात्तानेन प्रयोगः ॥

रथन्तरमुत्तरयोर्गायतीत्यादौ उत्तरावर्णवशेन गानाधिकरणम्।

सू० सामप्रदेशे विकारस्तदपेक्षः स्याच्छा[१]स्त्रकृतत्वात् ॥ ९ ॥

उपोद्घातं समाप्य प्रकृतमिदानीं साम्नामूहं विचारयति रथन्तरयोर्गायतीत्यादिभिः ऋगन्तरे गीयमानानि किमूहितव्यानि? उत ने? ति, यदि योनिवर्णवशेन गानं यस्मिन् प्रदेशे योनावा[२]यीभावस्तस्मिंन्नेवासत्यपि संध्यक्षरे उत्तरयोरायीभावस्ततो नोहः । अथ तूत्तरावर्णवशेन गाने यस्मिन् प्रदेशे संध्यक्षरवशेन योनावायीभावोयोनौ ततः प्रदेशान्तरे यत्र संध्यक्षरन्तत्रायीभावस्तत्र ऊहः किं प्राप्तं योनिवर्णवशेन, कुतः योनावेकारं निवर्त्याकार ईकारश्चोच्चारितः तत उत्तरयोरपि तद्भागपतितं वर्णं निवर्त्याकारेकारावुच्चार्यौ, किं च नात्र कार्यमुखेन साम्नः प्राप्तिः रथन्तरादिस्वरूपस्यैवातिदेशात्तेन दशमाद्यपूर्वपक्षन्यायेन सामस्वरूपमुत्तरयोः प्रापितमविकृतस्वरूपमेव सत्प्राकृतमप्राकृतं दृष्टमदृष्टं वा कार्यं कुर्यात्तस्मान्नोहः साम्नामिति प्राप्ते ब्रूमः, यदि ह्येकारं लुप्त्वा ऽवर्णवर्णावुच्चारितौ ततो भवेत् यथा भवानाह, न त्वेतत्किं तर्हि एकारो नाम न वर्णान्तरम् अवर्णवर्णौ संहतावेक[३]भावमापन्नावायीभावेन विश्लेषितौ दर्शितौ प्रत्यक्षं ह्यवर्णवर्णावेकारे प्रत्यभिज्ञायेते, तस्मादुत्तरयोरप्येकार एव, यत्र तत्रस्थोऽप्यायी-

१ प्रकृत्वादिति तु पा० ।
२ आईभावः इति तु युक्तः पाठः ।
३ संहतावेभावमापन्नाविति तु युक्ततमः पाठः ।

भावेन विश्लेषणीयः एवमृगक्षराभिव्यक्त्या स्तोत्रं साम्ना संपाद्यते नान्यथा। यद्यपि च सामस्वरूपस्यातिदेशस्तथाऽपि स्तोत्रसाधनतयाऽतिदिश्यते, "एकं साम तृचे क्रियते स्तोत्रीय"मिति वचनात्स्तोत्रसाधनता चाक्षराभिव्यक्तिद्वारा, न च सत्यक्षरादन्यस्यायीभावः क्रियमाणोऽक्षराभिव्यक्तिं करोति, एवं सर्वत्र, तस्माद्योनिवर्णवशेन गानादस्त्यूहः साम्नाम् ॥

उत्तरयोः स्तोभातिदेशाधिकरणम्।

सू० स्तोभस्यैके द्रव्यान्तरे निवृत्तिमृग्वत् ॥ १० ॥

सामातिदेशे किं स्तोभानामतिदेशोऽस्ति नेति संशये सामभ्यो भिन्नत्वात्स्तोभानामृगक्षराणामिव नातिदेशः भिन्नानामपि गीतिकालपरिच्छेदकत्वेन सामाङ्गत्वात्तदतिदेशादेवातिदेशः, सामानि हि येनैयेनांशेनाक्षराण्यभिव्यञ्जयन्ति तेन दृष्टमेव स्तुतेरुपकारं कुर्वन्ति स्तोभाक्षराभिव्यक्तिनिर्वर्त्येन त्वंशेन स्तुत्यौपयिकमेवादृष्टं कुर्वन्ति, तद्यदि स्तोभा नातिदिश्येरन् तन्निर्वर्त्यस्य गीत्यंशस्य लोपात्तत्कृतोपकारस्य हान्या वैगुण्यं स्यात्, तस्मादतिदिश्येरन्, ऋगक्षराणां तु प्रधानत्वाच्च सामवशादतिदेशः ॥

स्तोभलक्षणाधिकरणम्।

सू० अधिकं च विवर्णं च जैमिनिः स्तोभशब्दत्वात् ॥ ११ ॥

प्रसङ्गात्स्तोभलक्षणमुच्यते यदृगक्षरेभ्योऽधिकं विवर्णं च किंचित्तत्स्तोभ-शब्देनोच्यते ॥

नीवारादिषु प्रोक्षणावघातानुष्ठानाधिकरणम्।

सू० धर्मस्यार्थकृतत्वाद् द्रव्यगुणविकारव्यतिक्रमप्रतिषेधे चोदनानुबन्धः समवायात् ॥ १२ ॥

प्रकृतिषु व्रीह्यादिषु श्रुताः प्रोक्षणावघातादयो न तत्स्वरूपप्रयुक्तास्तन्मात्रापर्यवसायिनः किं तु व्रीहिभिर्यजेतेत्यादिविहितसाधनविशेषद्वारेणापूर्वभावनार्थाः, तथा हि आग्नेयोऽष्टाकपाल इति पुरोडाशद्रव्यको-

ऽग्निदेवत्योयागो विहितः तदनुवादेन व्रीहयो विहिताः पुरोडाशप्रकृतित्वम्प्रतिपद्यन्ते,–तदयमर्थः व्रीहिभिः पुरोडाशं कृत्वा तेन यजेतेति ततः पुनराह यैर्यजेत तान्व्रीहीन्प्रोक्षतीति, ततश्च सर्वैरुपसंह्रियमाणैरयमर्थः सम्पद्यते प्रोक्षणसंस्कृतैरवघातवितुषीकृतैश्च व्रीहिभिः पुरोडाशं कृत्वा तेन यजेतेति, अयमेव वाक्यार्थः पारमार्थिकः, व्रीह्यादिवाक्यार्था अस्यैवोपायभूताः पदार्थस्थानीयाः, एवं चेदाग्नेयादिभावनायाः शेषभूतः प्रोक्षणादीत्थंभावस्तद्विकारेष्वतिदेशेन नीयते, तत्र नैवारे चरौ पुरोडाशसंस्थाने चरोर्निवेशात् व्रीहिस्थाने च नीवारनिवेशात् इतरस्य समस्तस्य यथाऽतिदेशमवस्थानान्नैवारं चरुं निर्वपेदाग्नेयवदित्यस्य श्रुतानुमितैकदेशनिष्पन्नस्य नैवारचरुविधेरयमर्थो भवति प्रोक्षितैरवघातवितुषीकृतैर्नीवारैश्चरुं कृत्वा तेन यजेतेति, तेन व्रीह्यादिस्थानापन्नेषु नीवारादिषु सिद्ध ऊहः । स्थानापत्तिस्तु कथमवगम्यते इदमस्य प्राकृतस्य कार्ये वर्त्तेत इदमस्येति तत्प्रदर्शनार्थमिदमधिकरणं, तत्र पूर्वपक्षवादी नीवारमध्वशननखपरिधीरापदानां व्रीहिषडहोलूखलमुसलयूपगिरापदस्थानापत्तौ प्रमाणमपश्यन्न तेषु तद्धर्मा भवन्तीति मन्यते, सिद्धान्तस्तु नीवाराणां तावत्प्रत्यक्षमेव व्रीहिकार्ये तण्डुलनिर्वृत्तौ सामर्थ्यं, सामर्थ्यानुसारी च शब्द इति नैवार इति तद्धितो विकारार्थ इति निश्चीयते, चरुश्च देवतासंयोगात् पुरोडाशस्थानापन्न इति तत्प्रकृतिभूता नीवारा व्रीहिस्थानापन्ना भवन्ति, तथा मध्वशनं षडहाभावे तत्कार्यस्य साधनापेक्षायां विधीयमानं कार्यापेक्षं सत् षडहकार्यमेवावलम्बते, इदं च षडहाभावे मध्वशनं विधीयत इति कृत्वा चिन्तितं, तेनाभावे विधिरपि कार्यापत्तौ प्रमाणं, तथा नैर्ऋतश्चरुर्नखावपूतानामिति किं नखैरवपनमन्यतस्तुषविमोचनादतो नखानामुलूखलमुसलकार्यापत्तिः परिधौ पशुं नियुञ्जीतेति तु विस्पष्टमेव यूपकार्ये नियोजने परिधिर्विधीयते तथा यत्प्रतिषिध्य यद्विधीयते न गिरा गिरेति ब्रूयादैरं कृत्वोद्गेयमिति तस्यापि तत्कार्यापत्तिः गिरापदेऽपि हि निवृत्ते तत्कार्ये साधनमपेक्षते, इरापदमपि विधीयमानं कार्यापेक्षं गिरापदकार्येण साधनापेक्षेण सम्बध्यत इति गिरापदस्थानापन्नमिरापदं तत्संस्कारिकां गीतिं लभते ॥

परिधौ यूपधर्मानुष्ठानाधिकरणम् ।

सू० तदुत्पत्तेस्तु निवृत्तिस्तत्कृतत्वात्स्यात् ॥ १३ ॥

परिधौ पुनराक्षेपः. नीवारादयो हि कार्यार्थतया विधीयमाना युक्तं यत्कार्यार्थान् व्रीहिधर्मान् लभन्ते, परिधिः पुनरग्निपरिधानार्थेनोत्पन्नो न नियोजनार्थेन परिधानार्थ एव तु तस्मिन् बचनात्पशुर्नियुज्यते प्रकृतौ च कार्यार्था धर्मास्तच्छेषभूते साधनेऽनुष्ठिता नाशेषभूते परिधौ भवितुमर्हन्ति यूपोत्पत्त्यर्थाश्च परिव्याणादयो, न चेह यूपो ऽस्ति अयूप एव हि परिधौ पशुर्वध्यते तेनार्थलोपादपि न परिधौ खले वाल्यामिव यूपधर्माः कर्तव्या इति प्राप्ते ब्रूमः—यद्यपि परिधानार्थेन परिधिरुत्पादितस्तथाऽपि नियोजने विनियोगात्पुरोडाशकपालस्येव तुषोपवापशेषत्वमस्त्येव, यद्यपि तादर्थ्यं नास्ति तथापि नियोजनसाधनत्वात्साधननिवेशिनो धर्मान् लभेतैव, न हि तादर्थ्यप्रयुक्तधर्माः किन्तु साधनत्वप्रयुक्ताः व्रीहिभिर्यजेत यूपे पशुं बध्नातीत्यादिभिर्हि साधनत्वेन विधीयमाना व्रीह्यादयो धर्मैः प्रोक्षणपरिव्याणादिभिः सम्बध्यन्ते, तादर्थ्यं तु सदप्यशाब्दं न धर्मान्वयं भजते, न चोपयुज्यते तादर्थ्यं धर्माणां कार्यं गच्छतां तत्साधनमेव द्वारमपेक्षितमस्ति च परिधेरपि साधनत्वं, न च यूपाख्यमेकं किञ्चिदस्ति यदुत्पत्त्युपयोगिनः परिव्याणादयः परिधौ लुप्तार्थाः स्युः, छेदनादिविधयो हि सर्वे परस्परानपेक्षाः काष्ठगतं दृष्टमदृष्टं वा यथायथं कार्यं गमयन्ति, सर्वाणि च तानि कार्याणि नियोजनस्याङ्गं, तत्र परिधावसम्भवतां छेदनादीनां लोपेऽपि सम्भवन्तः परिव्याणादयो न लोपनीयाः खले वाल्यामपि अञ्जनपरिव्याणादयो भवन्त्येवेति वक्ष्यते, तस्मात्परिधौ यूपधर्माः कर्त्तव्याः ॥

घृतादौ प्रणीताधर्मानुष्ठानाधिकरणम् ।

सू० परार्थेन त्वर्थसामान्यं संस्कारस्य तदर्थत्वात् ॥ १४ ॥

---

१ लभत इति पा० ।

अभ्युदयेष्ट्यां दधिशृतयोः किं प्रणीता धर्माः कर्त्तव्या न ? इति चिन्तायां प्रणीताकार्ये अपणे तयोः परिधेरिव नियोजने विनियोगाभावादकरणमुत्पवनादीनामसत्यपि विनियोगेऽर्थादपि तावत्साधनत्वमस्तीति साधननिवेशिनो धर्माः कर्त्तव्याः ॥

बृहद्रथन्तरयोर्धर्मव्यवस्थाऽधिकरणम् ।

**सू० एकार्थत्वादविभागः स्यात् ॥ १५ ॥**

ज्योतिष्टोमे बृहद्रथन्तरे पृष्ठसाधनत्वेन विहिते तयोर्धर्माः रथन्तरे प्रस्तूयमाने सम्मीलयेद्बृहति प्रस्तू[1]यमाने समुद्रं मनसा ध्यायेदित्यादयः किमुभयेऽपि धर्माः उभयत्र कर्त्तव्याः ? उत यथाश्रुती ? ति संशये "उभयोरेककार्यत्वात्कार्यसाधनगोचराः । धर्मद्वयोर्द्वयेऽपि स्यु र्व्रीहिधर्मा यवेष्विव"। ननु चान्यथा रथन्तरेण स्तुतिः साध्यते शूरादिप्रकारेण अन्यथा च बृहता चित्रादिप्रकारेण तेन साधनभावप्रकारभेदात् साधननिवेशिनो धर्मा न सङ्कीर्यन्ते, यथा व्रीहिधर्माः स्रुवादिष्वेककार्येष्वपि न संभवन्ति कारकभेदादेवमिहापि, नैतदेवं यदेव हि हि रथन्तरं पृष्ठं भवतीति शास्त्रविहितं साम्नोऽक्षराभिव्यञ्जकत्वेन साधनत्वं तेनांशेन सम्मीलनादिधर्माः सम्बध्यन्ते साधनविधिना हि सम्बध्यमाना धर्मविधयो यदेव विधौ विवक्षितं साधनरूपं तेनैव सम्बध्यन्ते, शूरादिप्रकारभेदस्तु अविवक्षितो वस्तुस्वभावकृतो न धर्मव्यवस्थायां हेतुर्भवितुमर्हति । किं चायमभिव्यज्यमानानामृचां भेदो यच्छूरादिरूपता साम्नस्त्वक्षराभिव्यक्त्यात्मकमेकरूपमेव साधनत्वं तस्मात्सङ्कर एवात्र युक्तो व्रीहियवादिधर्माणामिव संमीलनादीनामिति प्राप्ते ब्रूमः—"साम्नोर्व्यवस्थाया यस्माचिह्नंशो मीलनादिषु । तस्माच सङ्करो युक्तो न त्वेवं प्रोक्षणादिषु" ॥ व्रीहिग्रहणं कारकविशेषोपलक्षणमिति कृत्वा यवेष्वपि प्रोक्षणादयः क्रियन्ते, तद्विहापि यदि रथन्तरग्रहणं साधनमात्रोपलक्षणं स्यात्तत एकमेव रथन्तरं बृहद्वा सर्वधर्मविधिषु गृह्येत यतस्तु क्वचिद्रथन्तरं क्वचिच्च बृहद्गृह्यते तन्नूनमिह रथन्तरादिस्वरूपमपि

[1] प्रसूयमाने इति पा० ।

विवक्षितमिति गम्यते, तस्माद्व्यवस्था, किं च नानयोरेककार्यत्वम् अन्यद्धि पृष्ठं रथन्तरेण साध्यते, अन्यच्च बृहता। ननु पृष्ठैःस्तुवत इति वाक्योत्पन्नपृष्ठानुवादेन बृहद्रथन्तरयोर्विधानादेककार्यत्वमनयोर्नैवं यदि पृष्ठैःस्तुवत इत्युत्पत्तिः स्यात्तत उत्पत्तिगतया बहुत्वसङ्ख्यया बहूनि पृष्ठानि स्युः, तत्र सप्तमे यत्सूत्रभाष्यकाराभ्यां ज्योतिष्टोमे पृष्ठबहुत्वं नास्तीत्युक्तं तद्विरुध्येत, तस्माद्रथन्तरं पृष्ठं भवतीति रथन्तरविशिष्टं पृष्ठं विधीयते पृष्ठ-शब्दस्य स्तुतिवाचित्वं वाक्यशेषाद्गुणवाक्यैश्चावगम्यते, तस्माद्भिन्नस्तोत्रसाधनत्वात्साम्नोस्तन्निबन्धनानां धर्माणामाज्यौषधादिधर्माणामिव व्यवस्थासिद्धिः, स्तोत्रयोश्चादृष्टार्थत्वात् प्रयाजादेरिव नैकार्थ्ये नानाकार्ययोश्च स्तोत्रयोर्वचनवशाद्विकल्पः, तस्मान्न[1] धर्मसङ्करः॥

कण्वरथन्तरे बृहद्रथन्तरधर्मसमुच्चयाधिकरणम्। ८

सू० अप्राकृते तद्विकाराद्विरोधाद्व्यवतिष्ठेरन्॥ १९॥

टी० वैश्यस्तोमे श्रूयते "कण्वरथन्तरं पृष्ठं भवती"ति तत्र संशयः किं कण्वरथन्तरबृहद्रथन्तरयोः स्थानापन्नं कार्यप्रयुक्तान् रथन्तरधर्मान् बृहद्धर्मांश्च गृह्णद्विकल्पेन गृह्णाति? उत समुच्चयेने? ति "विकल्प एव तेषां स्यात् प्रकृतावसमुच्चयात्। मिथो ऽनपेक्षैस्तद्धर्मैः प्रकृतौ साधिता स्तुतिः॥ उच्यते "पृथङ्निर्देशसामर्थ्याद्व्यवस्था प्रकृतौ कृता। इदं त्वप्राकृतं साम द्वयोः कार्ये विधीयते, तच्च द्वयोरपि कार्यं कुर्वद्धर्मानपि समुच्चयेन गृह्णातीति भाष्यकारः, वार्त्तिककारस्तु विकल्पमेव मन्यते, तथा हि यद्यपि तावत्प्रकृतावेकैव पृष्ठस्तुतिर्धर्माणां प्रयोजिका तथाऽपि तेषां सामद्वारत्वात्साम्नोश्च वैकल्पिकत्वाद्धर्माणां च पृथङ्निर्देशेन व्यवस्थितत्वात् केचिद्धर्मा रथन्तररूपसाधनद्वारेण स्तुत्यपूर्वं साधितवन्तः केचिद्बृहद्द्वारेण, एवमेव विकृतावप्यतिदेशेन कदाचिद्रथन्तरं स्वधर्मयुक्तं पृष्ठसाधनं कदाचिद्बृहत्, एवं प्राप्ते कण्वरथन्तरतयोः कार्ये विहितमपि यथाप्राप्तयोः कार्ये विधाना-

1 च संस्कार इति पा०।

त्कदाचिद्रथन्तरकार्यं कदाचिद्बृहत्कार्यं विहितम्भवति न सर्वदा द्वयोः कार्यं, ततश्च कदाचित्कस्यचिद्धर्मान् गृह्णाति न सर्वदा सर्वान्, स्तुतिरपि प्रकृतावन्योन्यनिरपेक्षैर्धर्मैः साधिता, विकृतावपि न समुच्चयमपेक्षते किमुत यदा द्वे स्तुती प्रकृतौ वचनाद्विकल्पेनानुष्ठिते विकृतावपि तथैव प्राप्ते तयोश्च वचनाद्विकल्पेनानुष्ठीयमानयोः साधनत्वेन विधीयमानं कण्वरथन्तरमन्यतरधर्मान् गृह्णातीति व्यक्तमेतत्तस्माद्विकल्पः ॥

द्विसामके बृहद्रथन्तरधर्मयोर्व्यवस्थाधिकरणम् ।

सू० उभयसाम्नि चैवमेकार्थापत्तेः ॥ १७ ॥

यत्र बृहद्रथन्तरयोः प्रकृतितोविकल्पे प्राप्ते समुच्चयो विधीयते "संस्रव उभे कुर्यादि"त्यादौ तत्र किमुभयोरथन्तरधर्मा उभयोश्च बृहद्धर्माः कर्त्तव्या ? उत रथन्तरे रथन्तरधर्माः बृहति च बृहद्धर्मा एवे ? ति संशये द्वाभ्यामपि संहत्यैकैकस्य कार्यं साध्यत इति द्वयोरपि द्व्यधर्मप्राप्ता उच्यते यद्यैकैकस्य कार्यं द्वयं विधीयेत ततः स्यादेवं चोदकेन विकल्पेन प्राप्तयोः पृष्ठयोरिह । स्वधर्मयुक्तयोरेव समुच्चयविधिस्त्वयम् ॥ एवं हि समुच्चयमात्रविधानाल्लाघवमप्राकृतकार्यता च साम्नोर्न कल्पिता भविष्यति । तस्मात्प्रकृतिवदिहापि धर्मा व्यवस्थिताः ॥

सौर्यादिषु पार्वणहोमाद्यनुष्ठानाधिकरणम् ।

सू० पार्वणहोमयोस्त्वप्रवृत्तिः समुदायार्थसंयोगात्तदभीज्या हि ॥ १८ ॥

"स्रुवेण पार्वणौ होमौ जुहोती"ति तद्धितश्रुत्या पर्वदेवत्यौ होमौ किं विकृतिष्वतिदिश्येते ने ? ति संशयस्तदर्थमिदं विचार्यते—किं पर्व-शब्दः कालवचनः कालोऽस्य देवता तस्य चासंस्कार्यत्वादारादुपकारको होमौ ? उताग्नेयादिसमुदायवचनः समुदायदेवत्यौ होमौ? तत्संस्कारार्थौवेति "तत्र काले शब्दस्य मुख्यत्वात्कालाभीज्येह गम्यते । पृणातेर्दानकर्मत्वात्कर्मण्यपि च मुख्यता" ॥ पृणातेर्दानकर्मणः पर्व-शब्दः स च दीयतेऽस्मिन्नित्यधिकरणव्युत्पत्त्या कालेऽपि मुख्यः, भावव्युत्पत्त्यां कर्मण्यपि, तत्र प्रकरणात्सामवायिकत्वालाभाच्च कर्मवचनमङ्गीकृत्य तत्संस्कारार्थतां होमयोरध्यवस्यामः,

तेषां च कर्मणान्तन्त्रेणाभिहितानामग्नीषोमयोरिव व्यासक्तं देवतात्वं नैकैकशः तेन समुदायस्य देवतात्वात्तस्य च विकृतिष्वभावादतद्विकारत्वाच्च सौर्यादेस्तत्र होमयोरप्रवृत्तिः, समुदायिविकारा हि सौर्यादयो न समुदायविकाराः ॥

दर्शपूर्णमासयोर्होमद्वयस्य-व्यवस्थाधिकरणम् ।

सू० उभयोरविशेषात् ॥ १९ ॥

किमेतौ होमावुभावप्युभयोः पौर्णमास्यमावास्ययोः कर्त्तव्यावुत विभज्य पौर्णमास्यां पौर्णमासीदेवत्योऽमावास्यायाममावास्यादेवत्य? इति तत्र प्रकरणाविशेषादुभावप्युभयत्रेत्याशङ्क्य संस्कार्यवशत्वात् संस्काराणां सूक्तवाकन्यायेन निष्कर्षस्तेनैव च न्यायेन गतत्वाच्चेदमधिकरणान्तरं, पूर्वस्यैव तु प्रयोजनसूत्रद्वयमिदमुभयोरविशेषात् यदभीज्या वा तद्विषयाविति ऊहसिध्यर्थमवान्तरकार्यनिरूपणं प्रस्तुतमिति तत्प्रसङ्गात्पार्वणयोरवान्तरकार्यं निरूपितम् ॥

समिदादीनां यागनामधेयताऽधिकरणम् ।

सू० प्रयाजेऽपीति चेत् ॥ २० ॥

समिधो यजति तनूनपातं यजतीत्यत्रापि किं कर्मसम्बन्धिनः समिदादीन् देवतात्वेनोद्दिश्य तत्संस्कारार्थं यागविधानम्? उतारादुपकारकयागविधान? मिति संशये पूर्ववत्सामवायिकत्वलिप्सया संस्कारविधिः, द्वितीया च देवताऽभिधाने समर्थैव "विष्णुं यजती"त्यादिदर्शनादिति प्राप्ते ब्रूमः "उद्देशपूर्वकस्त्यागो यजिना ह्यभिधीयते । त्यागे च नास्ति कर्मत्वं देवतायाः कथंचन उद्देशांशगतं तु कर्मत्वं[1] च यागेऽप्युपचर्य विष्णु यजतीत्यादिनिर्द्देशनं, न चेह विधावुपचारो युक्तः यागास्त्विह केवलं विधीयन्ते, तेषां च श्रुत्यादिभिः कार्यविशेषानवगमात् प्रकरणेनारादुपकारकत्वं समिदादिशब्दास्तु मन्त्रवर्णप्राप्तदेवतां निमित्तीकृत्य नामधेयानि देवता एव चानुवदन्ति न चानुवाद उपचारो दोषस्तस्मादारादुपकारकाः प्रयाजाः ॥

इति शास्त्रदीपिकायां नवमस्य द्वितीयः पादः ॥

१ त्यागेऽप्युपचर्येति पा० ।

# अथ तृतीयः पाद आरभ्यते॥

विकृतौ मन्त्रगतव्रीह्यादिशब्दानामूहाधिकरणम्।

**सू० प्रकृतौ यथोत्पत्तिवचनमर्थानां तथोत्तरस्यां ततौ तत्प्रकृतित्वादर्थे चाकार्यत्वात्॥ १॥**

मन्त्राणामिदानीमूहश्चिन्त्यते "अग्नये जुष्टं निर्वपामी"ति "व्रीहीणां मेधसुमनस्यमान" इत्येतौ मन्त्रौ किं सौर्यादिषु नीवारादिषु च ऊहितव्यौ? उत नेति संशये "प्रकृतौ यादृशो मन्त्रश्चोदकेन हि तादृशः। प्राप्यते विकृतौ तस्मान्नोहस्तत्रावकल्पते॥ ननु कार्यद्वारेण मन्त्राः प्राप्यन्ते कार्यं चापूर्वीयदेवताप्रकाशनं नाग्निस्वरूपप्रकाशनमित्युक्तं फलदेवतयोश्चेत्यत्र, तस्मादिहापि सूर्य एव प्रकाशयितव्यः, न चाग्निपदं तत्प्रकाशने समर्थमिति सूर्यपदं प्रक्षेप्तव्यम्, उच्यते सत्यं, सूर्य एव प्रकाश्यः, स तु चोदकप्राप्तेनाग्निपदेनैव गुणवृत्त्या प्रकाश्यते तद्यथैन्द्र्या गार्हपत्यमुपतिष्ठत इति वचनादिन्द्रपदेनैव गुणवृत्त्या गार्हपत्यम् उपस्थीयते, तथेहापि प्राकृतस्यैवाग्निपदयुक्तस्य मन्त्रस्य सूर्यप्रकाशनाय चोदकेन विनियुक्तत्वात्तेनैव सूर्यं प्रकाशयिष्यामः, अन्यथाऽर्थवशेन मन्त्राणामन्यथाभावकरणे गार्हपत्यवशादैन्द्रोऽपि मन्त्र ऊहितव्यः स्यात्तस्मादेतावानेव मन्त्राणामन्यथाभावो यत्प्रकृतावग्निः प्रकाशितो विकृतौ सूर्य इति, न तु पठितपदोद्धारः पदान्तरप्रक्षेपश्च युक्त इति प्राप्तेऽभिधीयते "प्रकृतौ यादृशं रूपं मन्त्राणां हि विवक्षितम्। तादृगेवातिदेष्टव्यं विकृतौ नाविवक्षितम्॥ प्रकृतावग्निपदं न स्वरूपविवक्षया पठितमग्निपदयुक्तो मन्त्रः कथं नाम स्यादिति यदि ह्येवं भवेत् ततस्तेनैव यथा कथंचित्प्रकाश्येत सूर्यः, देवतावाचिपदविवक्षया त्विदं पठितं देवतावाचिपदयुक्तो मन्त्रः कथं नाम स्यादित्येवमभिसन्धायाग्निपदं पठितं तस्यैव प्रकृतौ देवतावाचित्वात् अवश्यं हि देवतापदयुक्तमन्त्रमधिजिगांसमानैरग्निपदमेवाध्येतव्यम्, अतस्तद्रूपविवक्षयाऽग्निपदं पठितं तथा दृष्टार्थं भवति स्वरूपविवक्षायां त्वदृष्टार्थतैव

स्यादेवं च विकृतावपि देवतावाचिपदयुक्तमन्त्रप्रयोग एव कर्त्तव्यः, न चाग्नि-पदस्य तादूप्यमस्ति, अतः सूर्यपदप्रक्षेपः, एवं व्रीहिपदमपि हविःप्रकृति-द्रव्यवाचिपदाभिप्रायं न स्वरूपाभिप्रायमिति नीवारादिषूहसिद्धिः बहुषु तद्वाचिषु सत्सु व्रीह्यादिपदमेव पठितं ततो नियमादृष्टमात्रं कल्प्यते अवघातादिवत्, स्वरूपं त्वपूर्वीयसाधनविशेषवाचिपदविवक्षया प्रयुक्तं दृष्टार्थत्वात्तस्मादूहः, ऐन्द्री तु स्वरूपेणैव गार्हपत्ये विनियुज्यत इति वैषम्यम् ॥

पौण्डरीकेषु बर्हिःषु स्तरणमन्त्रस्योहाधिकरणम् ।

सू० जातिर्नैमित्तिकं यथास्थानम् ॥ २ ॥

क्वचिच्छ्रूयते "पौण्डरीकाणि बर्हींषि भवन्ती"ति प्रकृतावस्ति बर्हिर्मन्त्रः "दर्भैः स्तृणीत हरिते"ति तत्र दर्भ–शब्दस्थाने पुण्डरीकपदमूहितव्यं, पूर्वेणैव न्यायेन हरितपदस्थाने ऽपि किं रक्तपदमूहितव्यं ने? ति संशयः दर्भ–शब्देनैव सिद्धे प्रकाशने हरिताभिधानमदृष्टार्थं प्रकृतौ तस्माद्विकृतावपि हरितपदमेवादृष्टार्थमभिधातव्यमित्यनूहः, स्यादेवं यद्यदृष्टार्थं स्याद-नेनापि तु गुणद्वारेण स्तरणद्रव्यमेव प्रकाश्यते अर्थाभिधानपरत्वान्मन्त्राणामतः पुण्डरीकाण्यपि स्वगुणद्वारेण प्रकाशयितुं रक्तपदं प्रयोक्तव्यम् ॥

अग्नीषोमीयपशौ लौकिकयूपस्पर्शप्रायश्चित्ताधिकरणम् ।

सू० लौकिके दोषसंयोगादपवृक्ते हि चोद्यते निमित्तेन प्रकृतौ स्याद-विभागित्वात् ॥ ३ ॥

प्रासङ्गिकमिदमधिकरणं यद्येकं यूपमुपस्पृशेत् एष ते वायो इति, ब्रूयाद्यदि द्वावेतौ ते वायू इति, यदि बहून् एते ते वायव इत्यादि, वाक्यं लिङ्गदर्शनत्वेन पूर्वाधिकरणे प्रस्तुतं तत्रेदं विचार्यते किं वैदिके यूपोच्छ्रयणादिविषये स्पर्शे प्रायश्चित्तम्? उत लौकिके? उतोभयत्रे? ति विशेषाश्रवणादनियमः प्रकरणात्फलकल्पनापरिहाराच्च वैदिक एवेति प्राप्ते उच्यते "दोषनिर्हरणायेदं प्रायश्चित्तं विधीयते । दोषश्च प्रतिषिद्धे स्यात्प्रतिषेधश्च लौकिके" ॥ यूपो वै यज्ञस्य दुरिष्टमामुञ्चते तस्माद्यूपो नोप[1]स्पृ-

१ नोपस्पृश्य इति पा० ।

श्यते इति प्रतिषिध्य पश्चादिदमुच्यते यद्येकमुपस्पृशेदित्यादि प्रतिषेधश्च रागप्राप्ते लौकिके वैदिकस्य विहितत्वेन प्रतिषेधानर्हत्वात्प्रतिषेध्यानुष्ठाने प्रत्यवायोत्पत्तेः प्रतीकारापेक्षायां प्रायश्चित्तविधिरपेक्षितार्थो भवति तस्माल्लौकिके प्रायश्चित्तम् ॥

द्विपशुयागे पाशमन्त्रयोरेकवचनान्तबहुवचनान्तपदयोर्द्विवचनान्तेनोहाधिकरणम् ।

सू° अन्यायस्त्वविकारेणादृष्टप्रतिघातित्वादविशेषाच्च तेनास्य ॥ ४ ॥

अग्नीषोमीयपशावेकवचनान्तः पाशमन्त्रः "अदितिः पाशं प्रमुमोक्त्वेत"मिति तथा बहुवचनान्तो ऽपि "अदितिः पाशान्प्रमुमोक्त्वेतानि" इति तयोरग्नीषोमीये निवेशमुपरितने ऽधिकरणे वक्ष्यति तयोर्द्विपशुकेषु मैत्रं श्वेतमालभेत वारुणं कृष्णमित्यादिषु चोदकेन प्राप्तयोर्भवति संशयः किमेकवचनान्तस्याप्रवृत्तिः? बहुवचनान्तस्यानूहेन प्रवृत्तिः? उत बहुवचनान्तस्याप्रवृत्तिरेकवचनान्तस्योहेन प्रवृत्तिः? उतवोभावपि यथायथमूहेनानूहेन च प्रवर्त्तेते? किं वोभयोरपि द्विवचनेनोहितयोः प्रवृत्ति? रिति तत्रैकवचनस्य समवेताभिधायित्वेन विकृतावपि द्विसंख्यां वक्तुं विकारः स्याद् बहुवचनस्य त्वेकस्मिन्नसमवेताभिधायित्वेन निर्देशमात्रार्थत्वाद् विकृतावपि तथैव सम्भवादनूहः, न चाविकारसम्भवे विकारोयुक्तः, तस्मादेकवचनान्तस्याप्रवृत्तिरितरस्य त्वविकारेण प्रयोग इति प्रथमः पक्षः, सकलाभिधानसम्भवे विकलाभिधानमन्याय्यं, तस्मात्संख्याविशिष्टपाशप्रकाशनार्थमेकवचनान्तस्योहितस्य प्रवृत्तिः, बहुवचनान्तस्य त्वविवक्षितसंख्याकपाशमात्रप्रकाशनेनासमग्राभिधानत्वादप्रवृत्तिरिति द्वितीयः पक्षः, द्वयोरपि चोदकेन प्राप्तयोर्यथायथमूहेनानूहेन च विकल्पेन प्रयोग इति तृतीयः, गृह्णीम एतद्-द्वयोः प्रवृत्तिरिति न तु बहुवचनस्यानूहस्तदपि द्वयोरसाधुत्वादूहितव्यं प्रकृतावेकस्मिन् पाशे छन्दसि बहुवचनस्य प्रयुक्तत्वात्तथैवाङ्गीकृतं न त्वेवं द्वयोः प्रयोगः छन्दसि दृष्टः, तस्मात्स्वायत्ते प्रयोगे सत्यसाधुप्रयोगासम्भवात् द्विवचनं प्रक्षेप्तव्यं तस्मादुभयोरूह इति सिद्धान्तः ॥

अग्नीषोमीयपशौ पाशैकत्वपाशबहुत्वाभिधायिमन्त्रयोर्विकल्पाधिकरणम् ।

सू० विप्रतिपत्तौ विकल्पः स्यात्समत्वाद्गुणे त्वन्याय्यकल्पनैकदेशत्वात् ॥ ५ ॥

पशावग्नीषोमीये पाशमन्त्रावेकवचनबहुवचनान्तौ तत्र बहुवचनान्ते संदेहः किं प्रकृतावेवाग्नीषोमीये निविशते? उत बहुपाशकेषु पशुगणेषूत्कृष्यत? इति एकस्मिन् बहुवचनस्या[1]समर्थत्वादुत्कर्षे प्राप्ते ऽभिधीयते "प्रकृत्यर्थस्य पाशस्य विभक्त्यर्थस्य कर्मणः । उभयोः प्रकृतौ भावाचोत्कर्षोऽस्यावकल्पते । पाशप्रातिपदिकार्थान्वितं विभक्त्यभिहितं कर्मकारकं प्रकृतावपि पाशकर्मकोन्मोचनाभिधानेन सम्भवचोत्कर्षं सहते, संख्यामात्रं त्वसम्भवदपि गुणत्वाच प्रातिपदिकं प्रधानभूतं कारकं वाऽलमुत्कष्टुम्, अविवक्षिता चेह संख्या पाशकर्माभिधानमात्रेण व्यवहारसिद्धेः, अतो निर्देशमात्रार्थं बहुवचनं कर्ममात्रं तत्र विवक्षितम्, अतो ऽपि न संख्यावशेन मन्त्रोत्कर्षः बहुवचनस्य त्वेकस्मिन् प्रयोगोऽवयवबहुत्वाभिप्रायेण छान्दसः ॥

दर्शपूर्णमासयोर्द्विपत्नीकेप्रयोगे पत्नीं सन्नह्येतिमन्त्रस्यानूहाधिकरणम् ।

सू० अपूर्वे त्वविकारोऽप्रदेशात्प्रती[2]येत ॥ ६ ॥

दर्शपूर्णमासयोः "पत्नीं संनह्य"ति मन्त्रः किमेकद्विबहुपत्नीकेषु प्रयोगेषु सर्वेष्वविकारेण प्रयोक्तव्य? उत द्विबहुपत्नीकप्रयोगयोर्द्विवचनबहुवचनाभ्यामूहितव्य? इति संशयः, तत्रैकपत्नीके समवेताभिधायित्वसम्भवावैकवचनमन्याय्यनिगदत्तस्माद् द्वित्वबहुत्वयोरूहः, नैतदेवं, यद्येकपत्नीप्रयोगाभिप्रायमाम्नातं स्यात्तत एकवचनस्य समवेतसंख्याभिधानरूपस्य सम्प्रतिपन्नरूपत्वात्समवेतसंख्याभिधानमिह विवक्षितमिति कृत्वा द्विपत्नीके बहुपत्नीके च प्रयोगे समवेतसंख्याभिधानार्थमूह्येत, सर्वप्रयोगाणां तु समानावधानत्वात्सर्वाभिप्रायेणेदमाम्नातं द्वयोर्बहुषु चैकवचनस्य सम्प्रतिपत्त्यभावाच समवेतसंख्याभिधानरूपेण प्रयुक्तमिति शक्यमध्यवसातुं निर्देश-

१ बहुवचनस्यासमवेतार्थत्वादिति पा० ।
२ प्रतीयते इति पा० ।

मात्रार्थन्तु एकवचनमदृष्टार्थं चैकत्वमभिधातुं प्रयुक्तमित्यापद्यते, ततश्च द्विबहुपत्नीके प्रयोगे एकवचनमेव प्रयोक्तव्यमित्यविकारः, न चैकवचनानुरोधेनैकपत्नीप्रयोगे मन्त्रोनान्यत्रेति वक्तव्यं पाशवत्प्रातिपदिकबलेन सर्वत्र प्रवृत्तेः संख्यायाश्चाविवक्षितत्वेनानेकपत्नीकात्प्रयोगान्मन्त्रं व्यावर्त्तयितुमसमर्थाः तस्मात्सर्वत्राविकारेण प्रयोगः ॥

द्विपत्नीके विकृतिप्रयोगेऽपि पत्नीसन्नह्येति मन्त्रस्यानूहाधिकरणम् ।

सू० विकृतौ चापि तद्वचनात् ॥ ७ ॥

विकृतौ पत्नी—शब्दः किं द्विपत्नीकबहुपत्नीकप्रयोगयोरूहितव्यो नेति संशये प्रकृतौ द्वयोर्बह्वीषु च पत्नीषु एकवचनाम्नानसामर्थ्यात्तत्प्रयुक्तं विकृतौ त्वाम्नानाभावात् द्विबहुत्वयोरेकवचनमसाधुत्वाच्च प्रयोक्तव्यं, तस्मादूहः नैवं निर्द्देशमात्रार्थमदृष्टार्थं चैकवचनं न तत्समवेतसंख्याभिधानार्थमित्युक्तम्, अतो विकृतावपि तथैव कर्त्तव्यमित्यनूहः, न चासाधुत्वं द्वित्वबहुत्वयोरेकवचनस्य छान्दसत्वात्, पाशे तु द्वयोर्बहुवचनप्रयोगस्य छान्दसत्वाभावादसाधुत्वं स्यादिति विशेषः ॥

सवनीयपशूनामग्नीषोमीयसमानविधानत्वं प्रास्मै अग्निमिति मन्त्रेऽनूहाधिकरणम् ।

सू० अध्रिगुः सवनीयेषु तद्वत्समानविधानाश्चेत् ॥ ८ ॥

तृतीये ऽध्याये संस्थापशवः समानविधाना इति पूर्वपक्षे समानविधानत्वं यदुक्तं तस्येदं प्रयोजनं पूर्वाधिकरणसिद्धमनेन सूत्रेण कथ्यते यदा समानविधानास्तदैकादश्यादिषु द्विबहुपशुकेऽपि सवनीयगणे प्रवर्त्तमानः प्रास्मा इत्यध्रिगुप्रैषगत एकवचनान्तः शब्दः पत्नी—शब्दवदेव नोहितव्यः, विकारपक्षे तूहितव्यः । ननु समानविधानत्वे यथा प्रास्मा इति पुँल्लिङ्गनिर्द्देशात्सारस्वत्यामप्रवृत्तिस्तथैकवचननिर्द्देशात् द्विबहुष्वप्रवृत्तिः स्यात्, नैवं पुँल्लिङ्गस्य मेष्यामत्यन्तासम्भवात् युक्ता निवृत्तिरेकवचनन्तु प्रतिव्यक्तिगतैकत्वाभिप्रायेण गणेऽपि सम्भवात् नात्यन्तानुपपन्नं, पाशानिति बहुवचनमिवावयवाभिप्रायेणैवोपपन्नमिति नेतव्यम् । अपि च "जात्याख्यायामेकस्मिन् बहुवचनं बहुषु चैकवचनं स्मर्यते

अतोऽपि न वचनयोरनुपपत्तिः, लिङ्गं त्वन्यलिङ्गे ऽत्यन्तानुपपन्नमिति वैषम्यम् ॥

नीवाराणां व्रीहिप्रतिनिधित्वे मन्त्रे व्रीहि-शब्दस्यानूहाधिकरणम् ।

सू॰ प्रतिनिधौ चाविकारात् ॥ ९ ॥

श्रुतस्य द्रव्यस्यापचारे नीवारादिषु प्रतिनिहितेषु व्रीहीणां मेधस्सुमनस्यमान इति व्रीहि-शब्दः किमूह्येत नेति संशये नीवारादिषु व्रीहिशब्दस्यासामर्थ्यादूहप्राप्तावुच्यते यदि नीवारा व्रीहिवत्साधनं भवेयुस्ततस्तत्प्रकाशनार्थं नीवारपदं प्रक्षिप्येत न त्वेवं किं तर्हि नीवारगता ये व्रीह्यंशास्ते ऽत्र साधनमित्युक्तं, ते च व्रीहिगता इव नीवारगता अपि व्रीहिशब्देनैव शक्यन्ते प्रकाशयितुमित्यविकारेण प्रयोगः ॥

द्विपशुयागे सूर्यं चक्षुर्गमयतादिति मन्त्राणामनूहाधिकरणम् ।

सू॰ संसर्गिषु चार्थस्यास्थितपरिमाणत्वात् । ॥ १० ॥

ज्योतिष्टोमे ऽग्नीषोमीये पशावध्रिगुप्रैषः तत्र संसर्गिणोऽर्थाश्चक्षुरादयः "सूर्यं च चक्षुर्गमयतादित्यादयस्ते द्विपश्वादिषु पशुगणेषु किं द्विवचनबहुवचनाभ्यामूहितव्या नेऽति संशये सर्गिणां तेजःप्रभृतीनां स्वतः सङ्ख्याव्यवहाराभावात् औपाधिको भेदव्यवहारः, तदिह चक्षुःशब्दस्य तेजोवचनत्वादसति स्वतः सङ्ख्याभात्त्वे ऽधिष्ठानापेक्षत्वे च तयोर्द्वित्वेन द्विवचनप्रसङ्गात् पशूपाधिकमेकवचनम् अस्य शब्देन पशोरुपात्तत्वात्तदौपाधिकमेव विज्ञायते, अतः पशुभेदेन पशुसङ्ख्यावशेनोह इति प्राप्त उच्यते अधिष्ठानान्निर्गतं तेजः प्रदीपप्रभावदेकीभवतीति तदभिप्रायादेकवचनं न त्वौपाधिकं न चाधिष्ठानाभिप्रायश्चक्षुः शब्दस्तयोः सूर्यगमनासम्भवात् द्वित्वात्तयोरेकवचनानुपपत्तेः, तस्मान्निर्गततेजोऽभिप्रायं बहूनामपि च पशूनां सन्निहितानि निर्गतानि चाक्षुषाणि तेजांसि अनेकप्रदीपप्रभावदेकीभवन्ति तस्मादनूहः ॥

द्विपशुयागे अध्रिगुप्रैषे एकधेत्यस्य शब्दस्याभ्यासाधिकरणम् ।

सू॰ एकधेत्येकसंयोगादभ्यासेनाभिधानं स्यादसर्वविषयत्वात् ॥ ११ ॥

तत्रैव एकधास्य त्वचमाच्छ्यतादिति श्रुतं, तत्रैकधा—शब्दः पशुगणेषु किमविकारेण प्रयोक्तव्य? उताभ्यासेन विकर्त्तव्य? इति संशयः, तदर्थमिदं विचार्यते, किं प्रकृतौ येन प्रकारेणाभिधानं कृतं तेनैव प्रकारेण विकृतावपि कर्त्तव्य? मुतान्यथापि सम्भवन्ति इति, ? तत्र यद्यपि प्रकृतावेकत्वात् त्वचः साहित्याभिधानं न सम्भवतीत्येकप्रयत्नसाध्यत्वम् एकधा—शब्देनोक्तं नावयवश आच्छ्यतात्किं त्वेकधा एकेन प्रयत्नेनेति, तथाऽपि विकृतावार्षचोदकानुग्रहाय वह्वीनान्त्वचान्देशतः कालतो वा साहित्यमेकधा गाः पाययतीति वदभिदधदविकारेणैव त्वगाच्छेदनं प्रकाशयिष्यतीति प्राप्ते ब्रूमः "प्रकृतौ यस्य शब्दस्य यादृशोऽर्थो निरूपितः। तादृगेवातिदेशेऽऽपि स हि कार्यपरो यतः" ॥ कार्यप्रधानो ह्यतिदेशो न शब्दस्वरूपपरः तेन प्राकृतमेकप्रयत्नसाध्यत्वं प्रत्येकं त्वचामभिधातुमेकधैकधेत्येवमभ्यसितव्यम् ॥

द्विपश्वादिपशुविकृतौ मेधपतिशब्दस्य देवतानुसारेणोहाधिकरणम्।

सू॰ मेधपतित्वं स्वामिदेवतस्य समवायात्सर्वेच च प्रयुक्तत्वात्तस्य चान्याय्यनिगदत्वात्सर्वत्रैवाविकारः स्यात् ॥ १२ ॥

तत्रैव श्रुतम्, "उपनयत मेध्यादुर आशासानामेधपतिभ्यां मेधमि"-ति केषांचित्तु मेधपतये मेधमिति तत्र चतुर्द्धा संशयः किमुभयोर्विकृतिष्वविकारः? उत द्विवचनस्य? देवतापर ऊहः? एकवचनस्य तु यजमानपरः? अथवोभयोर्यजमानपर? एव, अथवोभयोरपि देवतापर ऊह? इति तत्र मेधपति—शब्देन मेधस्य पशोः स्वामी यजमानो देवताभूतौ चाग्नीषोमौ उभयेऽप्यभिधीयन्ते, तेन द्विवचनमेकवचनं चोभयमप्यन्याय्यनिगदन्तस्मादनूह इति प्रथमः पक्षः, सम्भवत्यर्थवत्त्वे नान्याय्यनिगदता युक्ता, तस्माद् द्विवचनान्तो देवतावचनस्तेनासौ देवताविवृद्धावूहितव्यः, एकवचनान्तस्तु स्वामिवचनः स्वामिविवृद्धाविति द्वितीयः, एकोऽयं मन्त्रः शाखाभेदेन किंचिद्भिवः समाम्नातस्तत्र यजमानपरत्वे मेधपतये यो मेधस्त, माशासाना इति सम्बन्धः, देवतापरत्वे मेधपतिभ्यामाशासाना इति,

नेदमेकस्य वाक्यस्य वचनव्यक्तिद्वयं सम्भवति, तस्मादुभाभ्यामपि यजमानस्य देवताया वा नियमेनाभिधानं, तत्र देवतापरत्वे सत्यग्नीषोमयोर्द्वित्वात् एकवचनमनुपपन्नं, यजमानपरत्वे तु द्विवचनं पत्न्यभिधानपरत्वेनावकल्पते, तस्मात्स्वामिपरावुभावपि स्वामिवशादूहितव्याविति तृतीयः, सिद्धान्तस्तु मेधमाशासाना इत्युक्ते किमर्थमाशासाना इत्यपेक्षा भवति, तत्र मेधपतिभ्यामाशासाना इत्यपेक्षितार्थपूरणाय सम्बध्यते, न च यजमानायाशास्यते तस्यैव हि स देवताभ्यां आशास्यते, तस्माद्देवतावचनमेकवचनन्तर्हि कथम् अग्नीषोमयोरुभयोर्व्यासक्तं देवतात्वं तेन देवतात्मना तयोरेकत्वात्तदभिप्रायमग्नीषोमौ देवतेति द्विवचनं त्वधिष्ठानापेक्षन्तेन द्विवचनम् अधिष्ठानसङ्ख्यावशादेकवचनं च देवतासङ्ख्यावशाद्विकृतिषूहितव्यमिति ॥

बहुदेवत्यपशावपि एकवचनान्तमेधपतिशब्दस्य अविकल्याधिकरणम् ।

सू० नियमो बहुदेवते विकारः स्यात् ॥ १३ ॥

वैश्वदेवादिषु बहुदेवत्येषु पशुषु द्विवचनिगदस्य मेधपति--शब्दस्योहो ऽसन्दिग्ध एकवचनिगदोऽपि तद्वदेवोह्यः, एकवचनान्तता तु निवर्तते? उताविकारेण प्रवर्त्तेत? इति चिन्तायामेकवचनस्य बहुष्वसामर्थ्यादूहो देवतारूपैकत्वात्तु प्रकृतिवदनूह इति पूर्वाधिकरणप्रयोजनमात्रमिदमधिकरणं न तु किंचित्प्रतिपाद्यमस्ति यद्वोत्तराधिकरणोपोद्घातत्वेन पूर्वाधिकरणसिद्धमेवानुकीर्त्तितम् ॥

एकादशिन्याम् एकवचनान्तमेधपति--शब्दस्योहाधिकरणम् ।

सू० अर्थान्तरे विकारः स्याद्देवतापृथक्त्वादेकाभिसमवायात्स्यात् ॥ १४ ॥

आग्नेयः कृष्णग्रीवः सारस्वती मेषीबभ्रुः सौम्य" इत्यादिषु पशुगणेषु किमेमवचिनगदस्याविकार? उत विकारेण प्रयोग? इति संशये गणाभिप्रायेण पूर्ववदनूहं मन्वानस्योत्तरं "देवतात्मन एकत्वादविकारः पुरोदितः। तद्रूपस्य तु भिन्नत्वे कोनामोहं निवारयेत् ॥

॥ इति शास्त्रदीपिकायां नवमस्य तृतीयः पादः ॥

## अथ चतुर्थः पादः आरभ्यते ।

षड्विंशतिरस्य वङ्क्रय इत्यादौ समस्योहाधिकरणम् ।

सू॰ षड्विंशतिरभ्यासेन पशुगणे तत्प्रकृतित्वाद्गणस्य प्रविभक्तत्वादविकारे[1] हि तासामकार्त्स्न्येनाभिसम्बन्धो विकारान्न समासः स्यादसंयोगाच्च सर्वाभिः ॥ १ ॥

तत्रैव षड्विंशतिरस्य वङ्क्रय इति श्रुतम्, तद्धि पश्वादिषु पशुगणेषु चोदकप्राप्तं पञ्चधा संदिह्यते, किं षड्विंशतिरस्येत्युभयपदाभ्यासः? उताविकारेण प्रयोगः? उत षड्विंशतिपदगतमेकवचनं द्विवचनं बहुवचनाभ्यामूहितव्य? मथवा ऽस्येत्येतत्पदमभ्यसितव्य? माहोस्वित्सर्वपशुगता वङ्क्रीः समस्य तासामियत्ता वक्तव्ये? ति, तत्र षड्विंशतिसङ्ख्याया अस्य-पदाभिधेयस्य च पशोर्यः सम्बन्धस्तत्प्रधानमिदं वाक्यं, ततः प्रतिपशु तत्सम्बन्धं प्रकाशयितुं षड्विंशतिपदमस्य-पदं चाभ्यसनीयम्, अयमेवात्र प्रधानतः पूर्वपक्षः, इतरे तु सम्भवमात्रेणोपन्यस्य दूष्यन्ते, तत्र द्वितीयः पक्षः, अकरणभूतोऽयमदृष्टार्थो मन्त्रस्तस्मादविकारः, तृतीयस्तु यद्यप्यकरणः तथाऽपि शमितॄणामन्यूनावदानोद्धरणाय पार्श्वयोः साकल्यं स्मारयन्दृष्टार्थ एव, तत्र षड्विंशतिसङ्ख्या प्राधान्येन प्रकाश्या, तेन द्वयोः पश्वोः षड्विंशतिसङ्ख्ये प्रकाशयितुं षड्विंशती अनयोर्वङ्क्रय इति, ननु षड्विंशति-शब्दे सङ्ख्याप्रधाने सङ्ख्येयेषु वङ्क्रिषु षष्ठी स्यात्सत्यं, यथा सिद्धान्ते वङ्क्रीणां प्राधान्ये सङ्ख्याशब्दस्य लक्षणया सामान्याधिकरण्यन्तथा सङ्ख्याप्राधान्ये वङ्क्रि-शब्दो लक्षणया सङ्ख्यासामानाधिकरण्यं प्रतिपत्स्यते, चतुर्थस्तु पशुप्रधानमिदं स हि चोदितः सङ्ख्या त्वचोदिता, तस्मात् षष्ठ्यन्ताभिधेयः पशुरेवात्र प्रधानं, तद्विशेषणं सङ्ख्या वङ्क्रयश्च षड्विंशतिवङ्क्रिकोऽयं पशुरिति ततश्चैकैकं पशुं भेदेन प्रकाशयितुमस्य-पदमभ्यसितव्यं, सिद्धान्तस्तु "वङ्क्रीयत्ता प्रकाश्येह पार्श्वसाकल्यसिद्धये । ता इति प्रतिनिर्देशादपि तासां प्रधा-

१ अविकारोहीति पा॰ ।

नता। वङ्क्र्योऽत्र प्रधानन्ता एव षड्विंशति-शब्देनेयत्तया प्रकाश्यन्ते, अन्यू-नयोः पार्श्वयोरवद्यतीति वचनाद्यद्यपि पशुश्चोदितस्तथाऽप्यसौ हृदयादि-द्वारेणैव साधनं न साक्षादिति वक्ष्यामः, तस्माद् वङ्क्रयः प्रधानन्तथा च ता अनुष्ठेयोच्यावयतादिति तासामेवात्तत्र प्रतिनिर्द्देश उद्धरणं चोच्यते पशुप्रा-धान्ये हि तमिति स्यात्, सङ्ख्याप्राधान्ये तामिति, तस्माद्वङ्क्रीयत्तापरत्वात्सम-स्याभिधानम्। ननु यद्यपि वङ्क्रीयत्तापरमिदं तथाऽपि प्रतिपशुभेदेन वङ्क्री-णामुद्धरणात् भेदेनैव पशोर्वङ्क्रय इयत्त्वेन वक्तव्या इति षड्विंशतिपदा-भ्यास एव न्याय्यस्तथा चाश्वलायनादयो यज्ञसूत्रकारा मन्यन्ते, नेति भगवान् जैमिनिः, स हि मन्यते, यथैव प्रकृतौ द्वयोः पार्श्वयोस्त्रयोदशत्रयोदशसु वङ्क्रिषु पृथक् पृथ[1]गुद्ध्रियमाणास्वपि समस्तानामेवेयत्तोक्ता षड्विंशतिरस्य वङ्क्रय इति, तथा विकृतिष्वप्युद्धारभेदमतन्त्रीकृत्य प्रयोगसमवेतसमस्त-वङ्क्रीयत्ता मन्त्रेण प्रकाशयितव्या, तस्माद् द्विपञ्चाशदनयोर्वङ्क्र्योऽष्टस-प्ततिरेषां वङ्क्रय इत्येवं समस्ताभिधानमेव न्याय्यम्॥

चतुस्त्रिंशद्वाजिन इत्यनेन आश्वमेधिकसवनीयाश्वस्य चतुस्त्रिंशद्वङ्क्रिरूपविशेषवच-नाधिकरणम्।

सू॰ अश्वस्य चतुस्त्रिंशत्तस्य वचनाद्वै-शेषिकम्॥ २॥

अश्वमेधे श्रूयते "अश्वस्तूपरो गोमृगस्ते प्राजापत्या" इति तस्याश्वस्य चतुस्त्रिंशद्वङ्क्रयस्तत्र वैशेषिको मन्त्रः पठितः, चतुस्त्रिंशद्वाजिनो देवबन्धोर्व-ङ्क्रीरश्वस्य स्वधितिः समेती"ति तत्रेदं वचनमामनन्ति न "चतुस्त्रिंशदिति ब्रू-यात्|षड्विंश[2]तिरित्येव ब्रूयादिति, तत्र भाष्यकारोऽश्वस्य चतुस्त्रिंशदित्येव-मादिसूत्रपञ्चकमेकाधिकरणत्वेन व्याख्यातवान्। वार्त्तिककारस्तु एतत्सूत्रं पृथक्कृत्य प्राप्तिसूत्रत्वेनाधिकरणान्तरत्वेन व्याख्यातव्यमित्युक्तवान्। तत्रा-धिकरणान्तरमेवं द्रष्टव्यं, वैशेषिक्या ऋचः प्रतिषेधोऽयं न चतुस्त्रिंशदिति ब्रूयादिति उत्तराधिकरणे वक्ष्यति। इदं त्वत्र चिन्त्यते, किं निषिद्धमपि वैशे-षिकं पक्षे स्या? दुत सर्वदा प्राकृतमेवे? ति तत्र पाठप्राप्तं वैशेषिकं गिराप-

१ पृथक् पृथगुद्धार्यमाणास्विति पा॰।
२ विंशतिरित्येव ब्रूयादिति पा॰।

दवत् प्रत्यक्षवचनबलान्नित्यवद्बाधितत्वात्प्राकृतमेवाध्रिगुवचनमिरापदवत्स-वेदा वक्तव्यमिति प्राप्ते ब्रूमः इरापदं हि प्रत्यक्षेण वचनेनाङ्गिरापदस्थाने विहितं युक्तं यत्पाठप्राप्तं वैशेषिकं गिरापदं बाधते, तस्मिन् बाधितेऽनुवाद एव गिरापदप्रतिषेधः, न त्वेवमिह षड्विंशतिरित्येवं ब्रूयादित्येतदेवकारोपहतविधिशक्तित्वात्प्राकृतस्य विधौ समर्थमतोऽत्र न चतुस्त्रिंशदित्येवं प्रतिषेधं विधत्ते, तस्मिंश्च प्रतिषिद्धे षड्विंशतिरित्येव ब्रूयादिति चोदकप्राप्तानुवाद एव न त्वेवं गिरापदप्रतिषेधादिरापदं प्राप्नोति येनानूद्येत, तस्यापि विधौ वाक्यभेदः, तेन तत्रेरापदविधिरेव वाक्यार्थः, इह तु प्रतिषेध एव विधेयः, स च प्राप्तिपूर्वकः, प्राप्तिश्च न शास्त्रमन्तरेण सम्भवतीत्यतोऽवश्यं वैशेषिकवचनस्य प्रापकं प्रकरणपाठानुमितं वाक्यं लाघवाय काममङ्गीक्रियतां अङ्गीकृते चास्मिन्नुभयोर्विधिप्रतिषेधयोः शास्त्रत्वाविशेषाद्विकल्पः, तस्माद्वैशेषिक[1]वचनमपि कर्त्तव्यम् ॥

आश्वमेधिकसवनीयाश्वस्य न चतुस्त्रिंशदिति ब्रूयात् इत्यनेन समस्ताया एव ऋचो निषेधाधिकरणम् ।

सू० तत्प्रतिषिध्य प्रकृतिर्नियुज्यते सा चतुस्त्रिंशद्वाच्यत्वात् ॥ ३ ॥

तत्रैव संशयः किमश्वस्य पठितमेव चतुस्त्रिंशद्वाजिन इति वैशेषिकं कर्त्तव्यम्? उत प्राकृत?मपि, यदाऽपि प्राकृतं तदापि किन्तूपरगोमृगयोरश्वस्य च समस्य वचनं षडशीतिरेषां वङ्क्रय इति,? उत तूपरगोमृगयोः सामासिकं वचनं कृत्वाऽश्वस्य षड्विंशतिरस्य वङ्क्रय इति, एवमयथार्थमध्रिगुवचनं कर्त्तव्यमिति, तत्र न, चतुस्त्रिंशदिति ब्रूयात्षड्विंशतिरित्येव ब्रूयादित्यनेन पठितायामेवर्चि गिरापदवत् चतुस्त्रिंशदिति पदं प्रतिषिध्य षड्विंशतिपदमिरापदवद्विधित्सिष्यते न त्वयं समा[2]म्नातायां ऋचः प्रतिषेधः, तस्मात्षड्विंशतिपदयुक्ता वक्तव्येति चोदकप्राप्ताध्रिगुवचनस्य निवृत्तिरिति प्राप्ते उच्यते "एवकारोपवद्धत्वाच्च षड्विंशतिचोदना । चतुस्त्रिंशन्निषेधे च नानुवादोऽस्य सम्भवी । ऋच एव निषेधोऽतस्तथा सति च चोदकात् । प्राप्तं

[1] वैशेषिकमपि इति पा० ।
[2] समस्ताया ऋच इति पा० ।

षड्विंशतिरिति ब्रूयादित्यनुकीर्त्यते ॥ न चतुस्त्रिंशदिति ब्रूयात् षड्विंशतिरित्येव ब्रूयादित्येकमिदं वाक्यं तेनैकोऽत्र विधिरितरोऽनुवादः, तत्र यदीरापदवत्षड्विंशतिर्विधीयेत ततश्चतुस्त्रिंशत्प्रतिषेधो गिरापदप्रतिषेधवदनूद्येत न त्वत्र षड्विंशतिपदमिरापदवच्छक्यं विधातुम् एवकारोपबन्धात्, एवकारार्थविशेषणं हि ब्रूयादिति न स्वयं विधित्वमेवकारार्थश्च निवृत्तिस्तस्मात् षड्विंशतिपदव्यतिरिक्तस्य निवृत्तिरिह विधीयते, एवं कृत्वोद्देश्यमिति तु शक्नोति विधातुमिति विशेषः, तेन चतुस्त्रिंशत्प्रतिषेधोऽत्र विधीयते, तद्यदि पदमात्रं प्रतिषिध्येत न षड्विंशतिपदमनुवदितुं शक्यते प्राप्त्यभावात्, न हि पठितायामृचि चतुस्त्रिंशत्पदे प्रतिषिद्धे षड्विंशतिपदस्य प्राप्तौ प्रमाणमस्ति तस्मात्समस्ताया ऋचः प्रतिषेधः तथा सति हि षड्विंशतिरित्येव ब्रूयादिति चोदकप्राप्तत्वात्सम्भवत्यनुवादः, शक्नोति च चतुस्त्रिंशदिति प्रतीकग्रहणेनर्चं प्रतिषेद्धुं, गिरापदेन त्वनाद्यत्वात् ग्रहणं न शक्यमिति वैषम्यं, द्वितीयपूर्वपक्षवादी त्वाह प्राकृतेऽपि वचने क्रियमाणे षड्विंशतिरिति ब्रूयादिति वचनादेवमेव वक्तव्यमश्वेन समस्य वचनमिति, तदिदं मन्दं, न ह्यनेन षड्विंशतिपदं विधीयते चतुस्त्रिंशन्निषेधपरत्वाद् वाक्यस्य, तद्विधौ वाक्यभेदादेव शब्दोपबन्धाच्चाशक्यमिदं विधातुमित्युक्तं, तस्मादेषोऽत्र वाक्यार्थः—न चतुस्त्रिंशदिति पठितं ब्रूयात्किन्तु यथाप्राप्तमध्रिगुवचनमेवेति, तस्मात्समस्य वचनं, पक्षे च वैशेषिकमृग्वचनम् ॥

अग्नीषोमीयपशावुरूक-शब्देन वपाभिधानाधिकरणम् ।

सू॰ वनिष्टुसन्निधानादुरूकेण वपाभिधानम् ॥ ४ ॥

वनिष्टुमस्यमाराविष्टोरूकं मन्यमाना इति किमुलूक-शब्देनोलूकस्याभिधानं तत्सादृश्यबुद्ध्या वनिष्ठोर्लवनं प्रतिषिध्यते?। उत वपाभिधानम् उरूक-शब्दः वपोद्धरणकाले वपां मन्यमानावनिष्टुं माराविष्टेति । तत्र रलयोरेकत्वादुलूकाभिधाने प्राप्ते ब्रूमः ॥ न तावद्वनिष्ठोर्लवित[1]व्यस्य लवनं शक्यं निषेद्धुं सादृश्यबुद्धिनिषेधस्यादृष्टार्थत्वात् । तस्मादवयवव्युत्पत्त्या वपाभिधानं दर्शिता चावयवव्युत्पत्तिर्भाष्ये वपोद्धरण-

१ लवितस्य लवनमिति पा॰ ।

काले सन्निधानाद्भ्रान्त्या वनिष्टोर्लवनं प्रसक्तमाशङ्क्य तन्निवारणार्थवचनं दृष्टार्थं भवति तस्माद्वपाभिधानमिति वपाविवृद्धावूहः ।

अधिगी प्रशसावाहू इत्यत्र प्रशसा-शब्दस्य प्रशंसापरत्वाधिकरणम् ।

सू० प्रशसास्यभिधानम् ॥ ५ ॥

"प्रशसावाहू कृणुता"दिति किं प्रशसेति तृतीयान्तमस्यभिधानं असिना बाहू छेत्तव्या ? विति उत द्वितीयाद्विवचनस्याकारादेशेच्छान्दसे चौकारलोपे कृते प्रशंसावचनोऽ?मिति । तत्र प्रशास-शब्दस्यासौ प्रसिद्धत्वात्तद्वचनं मन्यते न स्वधितिसाधने छेदने शक्यमसेः करणत्वं प्रकाशयितुं मान्त्रवर्णिकद्रव्यकल्पनायां चातिगौरवम् । तस्मात् प्रशंसावचनत्वं प्रशस्तौ वाहू कृणुतादविकलावित्यर्थः । एवं दृष्टार्थता भवति, तस्माद्बाहुविवृद्धावूहः ।

अधिगी श्येनमस्य वक्ष इत्यादौ श्येनादिशब्दानां कार्त्स्न्यवचनाधिकरणम् ।

सू० श्येन-शल्म-कश्यप-कवष-स्रेकपर्णेष्वाकृतिवचनं प्रसिद्धसन्निधानात् ॥ ६ ॥

श्येनमस्य वक्षः कृणुतादिति श्येनसदृशमित्यर्थः तत्र संशयः किं सादृश्यमेवात्र विवक्षितम्? उत साकल्य?मिति तत्र सादृश्यमेवामी पिष्टपिण्डाः सिंहाः क्रियन्तामितिवत् विधीयते, तेन वक्ष उद्धृत्य कर्तनाद्युपायेन पक्षचरणचञ्च्वादिसम्पादनेन श्येनसंस्थानं कर्त्तव्यं, नैतद् युक्तम् अदृष्टार्थताप्रसङ्गात् कर्तने च वक्षसो वैकल्याद्धविर्विनाशः स्यात् अतः साकल्यमत्र विधीयते अविकलं हि वक्षः श्येनसदृशं भवति तदनेन प्रकारेणावैकल्यमेवोच्यते दृष्टार्थत्वात्, एवं शलादोपणीकश्यपे वासो कवषोरुस्रे कपर्णाष्टीवन्तीत्यपि साकल्यमेव ॥

दर्शार्थोद्धृताग्निलोपे प्रायश्चित्तरूपज्योतिष्मत्या अननुष्ठानाधिकरणम् ।

सू० प्रासङ्गिके प्रायश्चित्तं न विद्यते परार्थत्वात्तदर्थं हि विधीयते ॥ ७ ॥

अग्निहोत्रे श्रूयते "अग्नये ज्योतिष्मते पुरोडाशमष्टाकपालं निर्वपेद्यस्याग्निरुद्धृतो ऽग्निहोत्र उद्वायेदि"ति तत्र संशयः यदा दर्शार्थे नोद्धृतो

ग्निरग्निहोत्रकाले उद्वाति किं तदा ज्योतिष्मतीष्टिः कर्तव्या नेति तदर्थ-मिदं विचार्यते किमग्निविशिष्टोद्वाननिमित्तमिदं कर्माग्निहोत्रस्यारादुप-कारकम्? उतोद्वानपरीताग्निनिमित्तं तस्यैवाग्नेरुत्पादकं सामवायिकम्? मिति किं प्राप्तम् "उद्वापेदिति लिङ्श्रुत्या धात्वर्थस्य निमित्तताम्। वदत्यग्नेस्तु वाक्येन तस्मादारादुपक्रिया"। यदा हि वाक्यगम्याग्निनिमित्तत्वं तिर-स्कारेण पदश्रुत्योद्वा[1]सनस्य निमित्तता तत उद्वासनस्य क्रत्वनङ्गत्वेनासं-स्कार्यत्वादग्नेस्तु विशेषणत्वेन कार्यान्वयाभावात् आरादुपकारकत्वमेवेति निमित्तस्य च प्रकरणेन विशेषणासम्भवाद्दर्शार्थस्याप्युद्धृतस्याग्नेरुद्वानेस-ञ्जाते निमित्तमिति कर्त्तव्येऽष्टिरिति प्राप्ते ब्रूमः "उद्वानस्याग्नियुक्तस्य नित्यत्वान्न निमित्तता। न च तस्याग्निना व्याप्तिः कदाचिदपि विद्यते। अग्निसम्बन्धस्तावदुद्वानपर्यायस्य विनाशस्यावयवशः सर्वदा विद्यमानो न निमित्तं भवति, न च विनाशस्य चिन्तितनिर्मिपितादिषु सर्वदा वर्त्तमानस्याग्निना वा व्याप्तिः सम्भवति यो निमित्तं स्यादुद्वानपरीतस्य त्वग्नेर्निमित्तता युक्ता, कादाचित्की हि तेनाग्नेर्व्याप्तिर्न तु सदातनी, यद्य-प्यग्नेरुद्वानसम्बन्धो नित्यः तथापि व्याप्तिरनित्या तेनाग्निरेवात्रोद्वान-व्याप्तो निमित्तं तस्योद्वानपरीतस्य कार्यायोग्यस्योत्पत्त्यर्थेयमिष्टिरग्निहो-त्राङ्गम्। अग्निहोत्रार्थस्य चाग्नेरुद्धृतस्योद्वातस्योत्पादनं कुर्वती अग्निहो-त्राङ्गं स्यात् नान्यार्थस्य, तस्माद्दर्शार्थेनाग्ना उद्धृत उद्वानेनैतत्प्रायश्चित्तम्॥

धार्योद्वाने प्रायश्चित्तरूपज्योतिष्मत्यननुष्ठानाधिकरणम्।

**सू० धारणे च परार्थत्वात्॥ ८॥**

इदमाम्नायते "धार्यो गतश्रियः आहवनीय" इति तत्र यदा ध्रियमा-णोऽग्निहोत्रकाल उद्वाति तदा किमिष्टिः कार्या? उत नेति संशये अग्नि-होत्रार्थे उद्वाते प्रायश्चित्तमिदं श्रुतं धार्यस्य चास्ति तादर्थ्यं सर्वार्थं धार्य-ते ह्यसौ। सर्वकर्मणां धार्यमाणोऽग्निः प्रत्येकमङ्गम् अतोऽग्निहोत्रार्थता-ऽप्यस्तीति तदुद्वाने कर्तव्येष्टिः, नैवम् "अन्यार्थमुद्धृतो ह्येष गतश्रीत्वेन धार्यते। धारणस्य निमित्तं तच्चोद्वारस्याश्रुतत्वतः"॥ न हि गतश्रीत्वेन पुरुष-

[1] पदश्रुत्योद्वानस्येति पा०।

स्याग्न्युद्धरणं श्रुतं येनोद्धरणमुद्धृतोवाऽग्निः सर्वार्थः स्यात् किं तु धारणमात्रं तेन यदा यं कञ्चित्कर्मविशेषमधिकृत्याग्निमुद्धरति तदा तस्य धारणमात्रं गतश्रीत्वेन करोति यस्मिंश्च कर्मण्युपसम्प्राप्तेऽग्निरुद्धृतस्तदर्थमेवोद्धरणम् उद्धृतश्चाग्निस्तदर्थ एव निमित्तवशाद्धार्यमाणः प्रसङ्गादग्निहोत्रस्योपकरोति इति न तदुद्धाने प्रायश्चित्तम् ॥

दर्शार्थस्योद्धरणस्यामन्त्रकत्वाधिकरणम् ।

सू० न तूत्पन्ने यस्य चोदनाऽप्राप्तकालत्वात् ॥ ९ ॥

दर्शोपक्रमेऽग्न्युद्धरणे क्रियमाणे किमग्निहोत्राङ्गभूत उद्धरणमन्त्रो वाचा त्वाहोत्रेत्यादिः प्रयोक्तव्यो ने? ति संशयः तत्र "दर्शार्थेऽप्युद्धृते वह्नावग्निहोत्रं प्रवर्त्तते। साधनत्वप्रयुक्तश्च धर्मो नाङ्गमपेक्षते" ॥ तेनाग्निहोत्रानङ्गभूतेऽप्युद्धरणे तदुपकारकत्वमात्रेण यागार्थयोर्दधिपयसोः प्रणीताधर्मा इव कर्त्तव्य एव मन्त्रः कालमनादृत्य, कालस्य गुणत्वेनासम्भवेऽपि मन्त्रस्यालोपो न्याय्यः। अथवोद्धरणमप्येतदग्निहोत्रस्याप्यङ्गमकालेऽपि क्रियमाणमन्यथाऽग्निहोत्रस्य प्रणयनलोपाद्वैगुण्यं स्यादिति प्राप्त उच्यते "काले खल्वनुपादेये प्राप्ते कर्म विधीयते। साङ्गं तस्मात्कालात्प्राङ्नाधिकारोऽस्ति कर्मणि"। अनधिकारिणा च क्रियमाणं निष्फलं स्यात्, तस्माच्चाप्राप्ते कालेऽग्निहोत्राङ्गमुद्धरणं तन्मन्त्रो वा कर्तव्यः ॥

प्रायणीयचरौ प्रदानधर्माणामननुष्ठानाधिकरणम् ।

सू० प्रदानदर्शनं श्रपणे तद्धर्मभोजनार्थत्वात् संसर्गाच्च मधूदकवत् ॥ १० ॥

"आदित्यः प्रायणीयः पयसि चरु"रित्यत्र संशयः किमेतत् पयश्चरुणा तुल्यं तद्दैवतासम्बन्धिप्रदेयद्रव्यत्वेन विधीयते ततश्च प्रदेयधर्मैर्वत्सापाकरणादिभिः संबध्यते? उत चरोरिव श्रवणार्थे प्रणीता कार्यं विधीयते ततश्च न प्रदेयधर्मान् लभेतेतीति तत्र "चरोर्दैवतया योगं पयसा चरुसङ्गतिं विदधद्। भिद्यते वाक्यमर्थद्वयविधानतः ॥ द्रव्यद्वयविशिष्टदेवतासम्बन्धविधौ त्वेकार्थविधानं तस्मात्पयः प्रातिपदिकार्थोऽपि देवतासम्बन्धी सप्तम्यर्थस्तु सह श्रपणादर्थसिद्धोऽनूद्यते अभ्युदितेष्टिवत् इति प्राप्ते ब्रूमः "चरुणा

धारभूतेन पयसा च विशेषितः। द्रव्यदेवतासम्बन्ध एकार्थोऽत्र विधीयते" पयस्यादित्यश्चरुरित्युभयविशिष्टद्रव्यदेवतासम्बन्धविधानान्नास्ति वाक्यभेदः, तत्र चरु प्रथमानिर्देशाद्धविः पयस्तु सप्तमीनिर्देशादाधारत्वेन सम्बध्यते, एवमवाक्यभेदे सति सप्तमीनिर्देशस्याविवक्षामङ्गीकृत्य तुल्यकल्पफलत्वमयुक्तमभ्युपगन्तुं तस्मान्न पयसि प्रदेयधर्माः॥

अभ्युदयेष्टौ दधिशृतयोः प्रदेयधर्मानुष्ठानाधिकरणम्

सू॰ अभ्युदये दोहापनयः स्वधर्मो स्यात्प्रवृत्तत्वात्॥ ११॥

अभ्युदयेष्टावपि ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधश्चरुं येऽणिष्ठास्तान्विष्णवे शिपिविष्टाय शृते चरु"मिति दधिशृतयोः सप्तमीनिर्देशात्पूर्ववत्प्रदेयधर्मा न कर्तव्या इति प्राप्तं तत्रोच्यते नापूर्वकर्मविधानादृतेऽनेकार्थविधिः सम्भवति न चेहापूर्वकर्मविधिः किन्तु पूर्वप्रवृत्तदर्शकर्मणि निमित्ते पूर्वमेपापनीतानां हविषां देवतान्तरसम्बन्धमात्रं विधीयत इति स्थितं षष्ठे, तद्यदि तण्डुलानां देवतान्तरसम्बन्धे दधिशृतयोश्च प्रणीतार्थे विधिः स्यात्ततः प्राप्ते कर्मणि अनेकार्थविधानाद्वाक्यं भिद्येत, तस्मात्प्रदेयत्वेनैव प्रवृत्तयोर्दधिशृतयोर्देवतान्तरसंयोगमात्रं तण्डुलवद्विधीयते इति कर्त्तव्याः प्रदेयधर्माः॥

पशुकामेष्टौ दधिशृतयोः प्रदेयधर्मानानुष्ठानाधिकरणम्।

सू॰ अपनयो वार्थान्तरे विधानात् चरुपयोवत्॥ १२॥

"यः पशुकामः स्यात्सोऽमावास्यायामिष्ट्वा वत्सानपाकुर्यात् ये मध्यमास्तान् विष्णवे शिपिविष्टाय शृते चरुं ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुमिति श्रुतं तत्राभ्युदयेष्टितुल्यश्रुतित्वात्तद्वदेव दधिपयसोः प्रदेयत्वं मन्वानः प्रदेयधर्मानमन्यते अपूर्वकर्मविधानादप्राप्तप्रदानयोर्दधिपयसोः सप्तम्या अपणार्थमादित्यचरुपयोवद्विधानमित्यकर्त्तव्याः प्रदेयधर्माः॥

ज्योतिष्टोमे अपणानां प्रदेयधर्मानानुष्ठानाधिकरणम्।

सू॰ अपणानां त्वपूर्वार्थे[१]त्वात्प्रदानार्थे विधानं स्यात्॥ १३॥

(१) त्वपूर्वत्वादिति पा॰।

ज्योतिष्टोमे श्रूयते "पयसा मैत्रावरुणं श्रीणाति सक्तुभिर्मन्थिन"मित्यादि, तत्र संशयः किं पयःप्रभृतयः प्रदेयत्वेन सोमवद्विधीयन्ते ततश्च प्रदेयधर्माः क्रमादयः कर्त्तव्या? उत सोमसंस्कारार्थत्वेन विधानादकर्त्तव्या? इति, तत्र पयसा सोमस्य मिश्रणं श्रूयते किमर्थं कथं तु नाम सोमे प्रदीयमाने पयोऽपि प्रदीयेतेति, एवं हि यागनिर्वृत्तिर्दृष्टमेव प्रयोजनं सोमसंस्कारार्थत्वे तु अदृष्टार्थता स्यादिति एतावता प्रदेयत्वं मन्यते, "द्वितीयया प्रधानत्वं सोमस्यात्रावगम्यते। तृतीयया च तादर्थ्यं पयसः प्रतिपाद्यते ॥ श्रुतेश्चादृष्टसंस्कारकल्पना नैव दुष्यति। तस्मात्प्रदेयधर्माणां न पयःप्रभृतौ क्रिया ॥

अश्वमेधे ईशानाय परस्वत इत्यनेन यागान्तरविधानाधिकरणम्।

सू० पर्यग्निकृतानामुत्सर्गे तादर्थ्यमुपधानवत् ॥ १४ ॥

अश्वमेधे "ईशानाय परस्वत आलभत"इति प्रकृत्य श्रूयते "पर्यग्निकृतानारण्यानुत्सृजती"ति तत्र सन्देहः किमीशानायालभत इत्यालम्भमात्रं विधीयते तेषां चालब्धानां पर्यग्निकरणविशिष्ट? उत्सर्गस्त्यागः पर्यग्निकरणवाक्येन विधीयते? उतेशानायेति यागविधिः पर्यग्निकृतानारण्यानुत्सृजती? ति, तत्रैव गुणविधिरिति तत्र सत्यपि देवतासंयोगे न यागविधिरालम्भमात्रं तु विधीयते यागविधित्वे सति पर्यग्निकरणवाक्येन किञ्चिद्विधेयं लभ्येत, न तावदुत्सर्गः, यागविधिनैव प्राप्तत्वाच्च पर्यग्निकरणं चोदकप्राप्तत्वात्, न पर्यग्निकरणोत्तरकालम् उत्सर्गस्तस्यापि प्राप्तत्वात्, न पर्यग्निकरणानन्तर्यं आनन्तर्यशब्दाभावात्, न च क्लृप्तोपकारपर्यग्निकरणविधानादपूर्वत्वं, न ह्यत्र पर्यग्निकरणं विधीयते सिद्धवदुपसर्जनीभूतपर्यग्निकरणनिर्देशात्र च पर्यग्निकरणान्ताङ्गरीतिविधिः प्राप्तत्वादेव, न च ततः परेषां पदार्थानां प्रतिषेधः प्रतिषेधकशब्दाभावात्, न च पर्यग्निकरणकाल उत्सृजतीति विधिः कालस्याशाब्दत्वात्कालविधौ तु कालान्तरं निवर्तेत नाङ्गान्तराणि, तत्र चोदकप्राप्तसमस्ताङ्गयुक्त उत्सर्गः पर्यग्निकरणकाले कथमनुष्ठातुं शक्येत, तस्मादालम्भमात्रं देवतोद्देशेन पूर्ववाक्ये विधीयते परस्वतामुत्तरवाक्ये तेषामुत्सर्गः पर्यग्निकरणविशि-

धारभूतेन पयसा च विशेषितः । द्रव्यदेवतासम्बन्ध एकार्थोऽत्र विधीयते" पयस्यादित्यश्चरुरित्युभयविशिष्टद्रव्यदेवतासम्बन्धविधानान्नास्ति वाक्यभेदः, तत्र चरु प्रथमानिर्द्देशाद्धविः पयस्तु सप्तमीनिर्द्देशादाधारत्वेन सम्बध्यते, एवमवाक्यभेदे सति सप्तमीनिर्देशस्याविवक्षामङ्गीकृत्य तुल्यकल्पफलत्वमयुक्तमभ्युपगन्तुं तस्मान्न पयसि प्रदेयधर्माः ॥

अभ्युदयेष्टौ दधिशृतयोः प्रदेयधर्मानुष्ठानाधिकरणम्

सू० अभ्युदये दोहापनयः स्वधर्मा स्यात्प्रवृत्तत्वात् ॥ ११ ॥

अभ्युदयेष्टावपि ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधश्चरुं येऽणिष्ठास्तान्विष्णवे शिपिविष्टाय शृते चरु"मिति दधिशृतयोः सप्तमीनिर्द्देशात्पूर्ववत्प्रदेयधर्मा न कर्तव्या इति प्राप्तं तत्रोच्यते नापूर्वकर्मविधानादृतेऽनेकार्थविधिः सम्भवति न चेहापूर्वकर्मविधिः किन्तु पूर्वप्रवृत्तदर्शकर्मणि निमित्ते पूर्वमेवापनीतानां हविषां देवतान्तरसम्बन्धमात्रं विधीयत इति स्थितं षष्ठे, तद्यदि तण्डुलानां देवतान्तरसम्बन्धे दधिशृतयोश्च प्रणीतार्थे विधिः स्यात्ततः प्राप्ते कर्मणि अनेकार्थविधानाद्वाक्यं भिद्येत, तस्मात्प्रदेयत्वेनैव प्रवृत्तयोर्दधिशृतयोर्देवतान्तरसंयोगमात्रं तण्डुलवद्विधीयते इति कर्त्तव्याः प्रदेयधर्माः ॥

पशुकामेष्टौ दधिशृतयोः प्रदेयधर्माननुष्ठानाधिकरणम् ।

सू० अपनयो वार्थान्तरे विधानात् चरुपयोवत् ॥ १२ ॥

"यः पशुकामः स्यात्सोऽमावास्यायामिष्ट्वा वत्सानपाकुर्यात् ये मध्यमास्तान् विष्णवे शिपिविष्टाय शृते चरुं ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुमिति श्रुतं तत्राभ्युदयेष्टितुल्यश्रुतित्वात्तद्वदेव दधिपयसोः प्रदेयत्वं मन्वानः प्रदेयधर्मान्मन्यते अपूर्वकर्मविधानादप्राप्तप्रदानयोर्दधिपयसोः सप्तम्या श्रपणार्थमादित्यचरुपयोवद्विधानमित्यकर्त्तव्याः प्रदेयधर्माः ॥

ज्योतिष्टोमे श्रपणानां प्रदेयधर्माननुष्ठानाधिकरणम् ।

सू० श्रपणानां त्वपूर्वार्थ[1]त्वात्प्रदानार्थे विधानं स्यात् ॥ १३ ॥

(१) त्वपूर्वत्वादिति पा० ।

ज्योतिष्टोमे श्रूयते "पयसा मैत्रावरुणं श्रीणाति सक्तुभिर्मन्थिन" मित्यादि, तत्र संशयः किं पयःप्रभृतयः प्रदेयत्वेन सोमवद्विधीयन्ते ततश्च प्रदेयधर्माः क्रमादयः कर्त्तव्या? उत सोमसंस्कारार्थत्वेन विधानादकर्त्तव्या? इति, तत्र पयसा सोमस्य मिश्रणं श्रूयते किमर्थं कथं नु नाम सोमे प्रदीयमाने पयोऽपि प्रदीयेतेति, एवं हि यागनिर्वृत्तिर्दृष्टमेव प्रयोजनं सोमसंस्कारार्थत्वे तु अदृष्टार्थता स्यादिति एतावता प्रदेयत्वं मन्यते, "द्वितीयया प्रधानत्वं सोमस्यात्रावगम्यते। तृतीयया च तादर्थ्यं पयसः प्रतिपाद्यते॥ श्रुतेश्चादृष्टसंस्कारकल्पना नैव दुष्यति। तस्मात्प्रदेयधर्माणां न पयःप्रभृतौ क्रिया॥

अश्वमेधे ईशानाय परस्वत इत्यनेन यागान्तरविधानाधिकरणम्।

## सू० पर्यग्निकृतानामुत्सर्गे तादर्थ्यमुपधानवत्॥ १४॥

अश्वमेधे "ईशानाय परस्वत आलभत" इति प्रकृत्य श्रूयते "पर्यग्निकृतानारण्यानुत्सृजती" ति तत्र सन्देहः किमीशानायालभत इत्यालम्भमात्रं विधीयते तेषां चालब्धानां पर्यग्निकरणविशिष्ट? उत्सर्गस्त्यागः पर्यग्निकरणवाक्येन विधीयते? उतेशानायेति यागविधिः पर्यग्निकृतानारण्यानुत्सृजती? ति, तत्रैव गुणविधिरिति तत्र सत्यपि देवतासंयोगे न यागविधिरालम्भमात्रं तु विधीयते यागविधित्वे सति पर्यग्निकरणवाक्येन किञ्चिद्विधेयं लभ्येत, न तावदुत्सर्गः, यागविधिनैव प्राप्तत्वाच्च पर्यग्निकरणं चोदकप्राप्तत्वात्, न पर्यग्निकरणोत्तरकालम् उत्सर्गस्तस्यापि प्राप्तत्वात्, न पर्यग्निकरणानन्तर्यं आनन्तर्यशब्दाभावात्, न च क्लृप्तोपकारपर्यग्निकरणविधानादपूर्वत्वं, न ह्यत्र पर्यग्निकरणं विधीयते सिद्धवदुपसर्जनीभूतपर्यग्निकरणनिर्देशाच्च च पर्यग्निकरणान्ताङ्गरीतिविधिः प्राप्तत्वादेव, न च ततः परेषां पदार्थानां प्रतिषेधः प्रतिषेधकशब्दाभावात्, न च पर्यग्निकरणकाल उत्सृजतीति विधिः कालस्याशब्दत्वात्कालविधौ तु कालान्तरं निवर्तेत नाङ्गान्तराणि, तत्र चोदकप्राप्तसमस्ताङ्गयुक्त उत्सर्गः पर्यग्निकरणकाले कथमनुष्ठातुं शक्येत, तस्मादालम्भमात्रं देवतोद्देशेन पूर्ववाक्ये विधीयते परस्वतामुत्तरवाक्ये तेषामुत्सर्गः पर्यग्निकरणविशि-

ष्टश्चोद्यते उच्यते—"विना यागेन न द्रव्यं देवतान्वयमृच्छति । द्रव्यदेवतसंयोगादतो यागो विधीयते" ईशानायेति देवतात्वं गम्यमानमशक्यमपह्नोतुं तच्च न कथंचिद्यागमन्तरेणालम्भमात्रादुपपद्यते, अतो यागविधिः विहिते च तस्मिन् यदि पर्यग्निकरणवाक्यस्य विधेयं न लभ्यते ततोऽनुवादो भवतु न चैतावता देवतासम्बन्धज्ञानमप्रमाणीकर्तुं शक्यं, न च नास्ति विधेयम् अपूर्वतापरत्वात् क्लृप्तोपकारप्राकृतपर्यग्निकरणाङ्गरीतिर्विधीयते तथा प्रत्यक्षविहितया निराकाङ्क्ष ईशानप्रयोगवचनो न चोदकमपेक्षते तस्माद्यागविधिः, उत्तरं तु तत्रैव गुणविधिः ॥

आज्येन शेषं संस्थापयतीत्यनेन कर्मान्तरविधानाधिकरणम् ।

सू० आज्यसंस्थाप्रतिनिधिः स्यात् द्रव्योत्सर्गात् ॥ १५ ॥

"त्वाष्ट्रं पात्नीवतमालभेते"ति प्रकृत्य पर्यग्निकृतं पात्नीवतमुत्सृजती"ति श्रुतं तत्र पुनः श्रूयते "आज्येन शेषं संस्थापयती"ति तत्र संशयः किं पूर्वस्मिन्नेव कर्मणि पशोरुत्सृष्टस्य स्थाने प्रतिनिधित्वेनाज्यं विधीयते? किं वा कर्मान्तरविधि? रिति तत्र शेषशब्दात्संस्थापयति—शब्दाच्च तत्रैव प्रतिनिधिविधिः, न कर्मान्तरं देवतान्तराभावात् । ननु पर्यग्निकरणान्ताङ्गरीतिविधानमित्युक्तं पूर्वाधिकरणे ततश्च तथैव निराकाङ्क्षस्य न शेषमस्ति उच्यते पूर्वाधिकरणे यागविधिरालभतिरित्युक्तं तदिह मृष्यामः पर्यग्निकरणान्ताङ्गरीतिनैराकाङ्क्ष्यं तु न मृष्यामहे शेषसंस्थापयति—शब्दानुपपत्तेः, किं तु यागस्यैव पशुनोपक्रान्तस्य चोदकप्राप्तेऽग्नीषोमीयविध्यन्तेऽनुष्ठीयमाने पर्यग्निकृतावस्थायामुत्सर्गः परित्यागः पशोर्विधीयते, तस्मिन्नुत्सृष्टे साकाङ्क्षस्य कर्मशेषस्याज्येन संस्थापनं विधीयते कर्मान्तरस्य ह्यनुपक्रान्तस्य स्वरूपमेव वक्तव्यं समापनं शेष—शब्दस्य चानुपपत्तिस्तस्मात्पूर्वत्रैव प्रतिनिधिराज्येनेतीति प्राप्ते ब्रूमः—न प्रतिनिधिः सम्भवति तथा हि यदि पशोस्त्यागमात्रं क्रियेत तत उत्पत्तिवाक्यविहितदेवतासम्बन्धो नानुष्ठितः स्यात्तत्रैवं देवतासम्बन्धविधिरप्रमाणं स्यात्, असति च देवतासम्बन्धे यागविधित्वं न स्यात्प्रत्यक्षयज्यश्रवणादसति च यागे ऽग्नीषोमी-

यविध्यन्तस्याप्राप्तेः पर्यग्निकृतोत्सर्गः शेषसंस्थापनं चोभयमप्यनुपपन्नम् अथ देवतामुद्दिश्योत्सृज्येत ततः पशुसाधनके यागे पशुनैव मुख्येन साधिते किमर्थः प्रतिनिधिः देवतोद्देशेन चोत्सर्ग उत्पत्तिवाक्यसिद्धत्वाच पर्यग्निकरणवाक्येन विधातव्या, तस्मात्पूर्वाधिकरणोक्तन्यायेन पर्यग्निकरणान्ताङ्गरीतिविधानात्तयैव निराकाङ्क्षस्य पूर्वस्य कर्मणः समाप्तत्वान्न शेषमस्ति यस्मिन्नाज्येन संस्थापनमुच्येत, तस्मात्कर्मान्तरविधिरेवायमिति । न च देवता भावः प्राकृतपात्नीवतपदानुषङ्गादिह संस्थापयतीति प्रत्ययार्थेन भावनया आज्यप्रातिपदिकार्थोऽनुषक्तदेवतापदयुक्तः सम्बध्यते, तदयमर्थः पात्नीवतमाज्यं कुर्यादिति शेषसंस्था—शब्दो च सादृश्यात्पूर्वो हि यागः पत्नीवद्देवत्यः पर्यग्निकरणमात्रे संस्थापितः सशेष इव तदनन्तरं चाज्ययागः पत्नीवद्देवत्य एव क्रियमाणस्तत्रैव शेषसमापनमिव भवति या ऽप्याज्यप्रातिपदिके तृतीया साऽपि संस्थासम्बन्धादनुवाद एव प्रातिपदिकार्थमात्रन्तु देवतासम्बन्धित्वेन विधीयते इति सिद्धं कर्मान्तरत्वम् ॥

प्राकृतार्थपतितान्यकार्यतो मन्त्रसामविषये च संस्कृतो । एवमूहविधिरत्र चिन्तितो बाधचिन्तनमतः करिष्यते ॥

इति श्रीपार्थसारथिमिश्रकृतौ शास्त्रदीपिकायां नवमाध्यायस्य चतुर्थः पादः समाप्तः ॥ समाप्तश्चायमध्यायः ॥ श्रीः श्रीः श्रीः ॥

---

श्रीमते रामानुजाय मीमांसाद्वयगुरवे नमः ॥

## अथ दशमाध्यायस्य प्रथमः पाद आरभ्यते ॥

---

विकृतौ लुप्तार्थानां प्राकृतानां बाधाधिकरणम् ।

सू० विधेः प्रकरणान्तरेऽतिदेशात्सर्वकर्म स्यात् ॥ १ ॥

श्रीः, ऊहे सिद्धेऽतिदिष्टानां बाधाभ्युच्चयचिन्तया । इयत्ता दशमेऽङ्गानां विकृतिष्वभिधीयते। अतिदिष्टपदार्थविषयत्वाद्बाधस्याप्यूहवदतिदेशोत्तरकालमारम्भः । नतूहबाधयोर्न मिथो हेतुहेतुमत्ता, ऊहो नाम प्राकृ-

तस्य प्रयोगस्यान्यथाभावः, न च तदधीनो बाधः कृष्णलेषु ह्यवघातस्य बाधः, न च तत्रोहोऽस्ति, अननुष्ठानात्, न ह्यननुष्ठीयमानस्य प्रयोगविकारोऽस्ति, यत्र चोहो नीवारादौ न तत्र बाध इति विषयभेदाच्च [1]तयोरन्योन्यहेतुहेतुमत्ता, यत्र हि द्रव्यान्तरे देवतान्तरे वा प्राकृतप्रयोजनमस्ति तद्विषय ऊहः, यत्र तु नास्ति तत्र बाधः, सत्यमेवं, तथाऽप्यूहस्य पदार्थगतरूपान्तरात्मकत्वेन पदार्थप्रत्यासत्तेस्तत्प्राप्तिचिन्ताऽनन्तरं चिन्ता कृता, बाधस्तु तन्निवृत्त्यात्मकः, पश्चाच्चिन्त्यते, तत्र प्रथमन्तावदिदं चिन्त्यते किं सर्वं प्राकृतं विकृतौ कर्त्तव्य ? मुत लुप्तप्राकृतप्रयोजनं न कर्त्तव्य ? मिति, तदर्थमिदं विचार्यते किं प्राकृतमङ्गजातमङ्गशास्त्रं वा स्वरूपेणैवानादृतप्रयोजनं विकृतावतिदिश्यते सौर्येण भावयेत्कथम् आग्नेयस्य यान्यङ्गानि तानि कृत्वे ? ति उत पदार्थकार्याणि यानि दृष्टादृष्टरूपाणि तद्वत्तासम्पादनाय य आग्नेयादिगतो व्यापारः सोऽतिदिश्यते सौर्येण भावयेत् कथं यथाऽऽग्नेयेन तथे ? ति, तत्र पूर्वस्मिन्पक्षेऽतिदेशावगताङ्गभावानां प्राकृतप्रयोजनानादरेण विकृतावेव यथासम्भवं दृष्टादृष्टप्रयोजनकल्पनात्स्वयं दितेऽपि बर्हिषि लवनमदृष्टार्थतया कर्त्तव्यमिति नास्ति बाधः। उत्तरत्र तु प्राकृतस्य लवनकार्यस्य दृष्टस्य स्वयं दिते बर्हिष्यभावेनानतिदेशाल्लवनस्वरूपस्य चानतिदेशाच्च कर्त्तव्यं लवनमिति सिध्यति बाधः, तत्रोपदेशवदतिदेशोऽपि पदार्थपूर्वक एव युक्तः उपदेशानुरूपत्वात्तस्येति मन्वानः सर्वं कर्त्तव्यं न तु किं विद्बाधितव्यमित्याह, सिद्धान्तस्तु "अपेक्षाऽऽसत्तियोग्यत्वैरुपकारातिदेशनम्। तदभावात्पदार्थानामतिदेशो न कल्प्यते"। यागेन भावयेदिति हि यथा यागः फलसाधनं भवति तथा व्याप्रियेतेत्यर्थः, कथमिति केन व्यापारेण यागः फलसाधनतामापद्यत इत्येवं यागस्य फल[2]साधने व्यापारविशेषोऽपेक्षितो न तु व्यापारमात्रं येनावघातादिव्यापारः स्वरूपेणातिदिश्येत, अवघातप्रयाजादिजन्यदृष्टादृष्टोपकारसंपादनं तु भवति यागस्य फलसाधनसामर्थ्यजनने व्यापारः, तस्मादपेक्षावशादुपकारसम्पादनस्यै-

---

१ नानयोरन्योन्यहेतुहेतुमत्ता इति पा०।
२ फलसामर्थ्यजनने इति पा०।

वातिदेशो न पदार्थानां, तथा सन्निधिरपि तस्यैव. वैकृतं वाक्यं चोदनासामान्येन प्राकृतं प्रधानवाक्यमुपस्थापयति । तच्च वाक्यं स्वार्थमुपस्थापयति, तस्य च क्रत्वर्थोऽशत्रययुक्ता भावना तत्र साध्यसाधनांशावनपेक्षितत्वादनादृत्य तृतीयोंशो गृह्यते, स चाङ्गजन्योपकारसंपादनात्मा नाङ्गस्वरूपाणि तथा कथमाकाङ्क्षापूरणयोग्यताऽपि यागगतव्यापारस्यैव नाङ्गानां, तस्मादपेक्षासन्निधियोग्यत्वैः कार्याणामेवात्र पदार्थविशिष्टानामतिदेशः, न पदार्थस्वरूपाणामपेक्षाद्यभावात्, एवं शास्त्रस्वरूपाणाम्, एवं च विशिष्टकार्यातिदेशादार्थिको विशेषणानां पदार्थानामतिदेशः, ततश्च यस्यां विकृतौ यत्प्राकृतं कार्यं न सम्भवति तस्यां तस्यासम्भवानतिदेशाच्च तद्वशेन पदार्थप्राप्तिः स्वरूपस्य नास्त्येवातिदेशः, तदिदमुक्तं "लुप्तप्राकृतप्रयोजनं न चोदकश्चोदयती"ति, यस्तु पदार्थाननुरक्तं तदुपलक्षितमुपकारस्य स्वरूपमतिदिश्य तस्य जनकापेक्षायां पदार्थानामपि पुनर्विकृत्यपूर्वेण तादर्थ्यादन्वयमिच्छति तन्मते लुप्तप्राकृतद्वाराणामपि तादर्थ्यावगमात्तदुपपत्तये द्वारान्तरं परिकल्प्यानुष्ठानं स्यात्, पदार्थापोहेन च स्वरूपमतिदिशता किं तत्स्वरूपमतिदेष्टव्यं, न तावत्प्राकृत्युपकारव्यक्तिर्विकृतौ शक्या कर्त्तुं तादृशस्तूपकारोऽतिदिश्येत तादृक्त्वं च न दर्शपूर्णमाससम्बन्धितया, न हि विकृतौ तत्सम्बन्धिता सम्भवति तेन प्रयाजादिमत्तयैव तादृक्त्वमिति तादृग्रूपातिदेशोऽर्थसिद्ध एव पदार्थानामतिदेशोऽपि विशिष्टविधिनेव विशेषणानां विधिरिति व्यर्थः पृथक्पदार्थातिदेशः, स्यान्मतं कारणभेदे कार्यभेदस्यावश्यं भावात्प्रयाजाद्यधीनमुपकारान्तराद् व्यावृत्तं सर्वदर्शपूर्णमासोपकारेष्वनुवृत्तमुपकाररूपं तदतिदिश्यत इति, तथाऽपि तत एव प्रयाजादिप्राप्तिः सिद्ध्येत्, न हि तस्य तस्मादन्यत उत्पत्तिसम्भवः कारणभेदे कार्यभेदादिति त्वयैवोक्तत्वात्, तस्मादनर्थकोऽयं पदार्थातिदेशः केवलमूहबाधविघाताय स्यादित्यास्तां तावत् ॥ ननु सप्तमे विध्यन्तातिदेश इत्युक्तं, विध्यन्तश्च ब्राह्मणम् अतः कथमिह शास्त्रातिदेशो

१ सम्भवादेशाच्च तद्वशेन इति पा० ।

निराक्रियते उच्यते—कार्यातिदेशादार्थिकोऽयः शास्त्रातिदेशस्तदभिप्राय-न्तत्। अपि च विध्यन्त-शब्देन प्राकृतस्य प्रधानविधेर्ये ऽतिमोंऽश स उच्यते न च समिधो यजति व्रीहीनवहन्तीति प्रत्यक्षश्रुतमात्रं प्रधानवाक्यशेषः किं तर्हि कल्पितकार्यवाचिशब्दसहितमीदृशमङ्गशास्त्रम् अवघातेन वितुषीकुर्यादुविरिति, ततश्चेदृशस्यैवातिदेशः, ईदृशस्य च कृष्णलचरावतिदेशासम्भवात्सिद्धो बाध, तस्माल्लुप्तार्थानां प्रकृतिवत्कुर्यादित्येतावन्मात्रालोचनया झटिति प्राप्तिमवगतामपि भ्रान्तीकृत्य तद्व्यतिरिक्ताङ्गविषयमतिदेशशास्त्रमुपसंह्रियते, तेन स्वयं दितं बर्हिर्भवतीत्यादौ लवनादयस्तन्मन्त्रास्तत्साधनभूताश्च परश्वादयो न प्रवर्तन्ते । एवं वा प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्काम इति श्रूयते तत्रावघातः कर्त्तव्यो नेति संशये चरु-शब्दो ऽचरौ चरुधर्मविधानार्थः तेन लुप्तार्थोऽप्यवघातो वचनात्कृपणावत्कर्तव्य इति विशेषशङ्कां विनाऽप्यवघातेनालुप्तार्थैरेव धर्मैर्वेशञ्जेन वा उपपन्नश्चरु-शब्दो नावघातं प्रापयितुमलं, श्रपणं तु घृते श्रपयतीत्याहत्य विधानात्क्रियत इति वैषम्यम् । एवं वा वैश्वदेवं चरुं निर्वपेद् भ्रातृव्यवान् तं वर्हिषदं कृत्वा शम्यया स्फ्येन च व्यूहेदिदमहममुष्यामुं च व्यूहामीतीयं द्विष्यात्तं ध्यायेत् यदन्धोऽवमृद्येत यच्च स्फ्य आश्लिष्येत तद्विष्णव उरुक्रमायाऽवद्यती"ति श्रूयते तत्र संशयः किं वैश्वदेवदेवतावाहनकाले विष्णोरावाहन कर्त्तव्यं ने? ति तत्र चोदकप्राप्ते कर्त्तव्य कथं पुनश्चोदकप्राप्तिः न हीयं देवता प्राकृत्याः कस्याश्चिद्देवतायाः कार्यं वर्त्तते किं त्वप्राकृतकार्येयम् अतोऽस्या यूपावटस्तरणवर्हिषीव वर्हिर्धर्मानावाहनं प्राप्नोति सत्यं, वैश्वदेविकचोदकेन न प्राप्नोति स्वयमेव स्वयं वैष्णवयाग औषधद्रव्यकत्वाच्चाग्नेयविकारः, तत्र वैश्वदेविकतन्त्रमध्यपातात्सर्वाण्यङ्गानि प्रसङ्गेनोपकुर्वन्तीति न पृथक् क्रियन्ते, आवाहनं त्वकृतार्थत्वात्कर्त्तव्यमिति प्राप्ते ब्रूमः । नैमित्तिकविधेर्निमित्तापेक्षित्वान्निमित्तस्य स्फ्याश्लेषादेरवश्यंभावाभावेन देवताऽऽवाहनकाले निश्चयासम्भवादनिश्चितसद्भावम् उरुक्रमयागविधानं नावाहनं प्रयोक्तुं क्षमम्, अविहितं चावाहनं कृतमपि निष्फलमेव तस्मान्न कर्त्तव्यम् ॥

दीक्षणीयादिषु आरम्भणीयाबाधाधिकरणम् ।

सू० इष्टिरारम्भसंयोगादङ्गभूतान्निवर्त्तेतारम्भस्य प्रधानसंयोगात् ॥ २॥

दर्शपूर्णमासयोरारम्भणीया श्रुता सा विकृतिष्वपि कर्त्तव्येति द्वादशे वक्ष्यते, सा किं सोमाङ्गभूतासु दीक्षणीयादिषु कर्त्तव्या ने? ति विचारः "कर्त्तव्या चोदकप्राप्तेरि"ति प्राप्ते ऽभिधीयते ॥ अङ्गभूतास्वियं लुप्तद्वारत्वान्न प्रवर्त्तते । आरप्स्यमानपुरुषसंस्कारार्थेयमिष्यते । नारम्भो दीक्षणीयादेः प्रधानारम्भसिद्धितः" । आरम्भद्वारेणारम्भणीया प्रकृतावङ्गमासीत्, अतो विकृतिष्वपि तद्द्वारैव प्राप्तिः, न चाङ्गभूतासु दीक्षणीयादिष्विष्टिष्वात्मीय आरम्भोऽस्ति, ज्योतिष्टोमे तावन्न कर्त्तव्या तस्यापूर्वत्वात्, दीक्षणीयादेश्च तस्यामवस्थायामप्राप्तावसरत्वात्, ज्योतिष्टोमे च प्रवृत्तोऽर्थादङ्गेष्वपि प्रवृत्तो भवति, प्रथमं च प्रवर्त्तनमारम्भः तेन प्रधानार्थेनैवारम्भेणाङ्गानामारब्धत्वात् तेषां पृथगारम्भोऽस्ति तदभावाच्च तद्द्वारारम्भणीया लुप्तार्थत्वान्न कर्त्तव्या ॥

अनुयज्ञादिषु आरम्भणीयाबाधाधिकरणम् ।

सू० प्रधानाच्चान्यसंयुक्तात्सर्वारम्भान्निवर्त्तेतानङ्गत्वात् ॥ ३ ॥

अथ यत्रेष्टिकान्यन्यानि च कर्माणि समप्रधानान्येकफलसाधनत्वेन चोदितानि यथा राजसूये, तत्र किमैष्टिकेष्वारम्भणीया स्यान्न वे? ति पूर्वाधिकरणे प्रधानविषय आरम्भो नाङ्गानामित्युक्तम्, स इह सर्वेषां प्रधानत्वादिष्टीनामप्यस्त्यारम्भः तेनालुप्तार्थत्वादारम्भणीया कर्त्तव्येति प्राप्ते ब्रूमः प्रकृतौ हि यदङ्गमारम्भणीया तद्विषय आरम्भो द्वारं दर्शपूर्णमासावारप्स्यमान इति वचनात्, इह त्विष्टिपशुसोमानामेकप्रयोगभाजामेकः सर्वेषु व्यासक्त आरम्भो नेष्टिभिर्व्यपदेष्टुं शक्यते, अग्निषोमीयहविरिवाग्निना, तेनात्रापीष्टीनामात्मीयारम्भाभावाल्लुप्तार्थैवारम्भणीया ॥

आरम्भणीयायां आरम्भणीयाबाधाधिकरणम् ।

सू० तस्यां तु स्यात्प्रयाजवत् ॥ ४ ॥

किमारम्भणीयायामारम्भणीया कर्त्तव्या नेति संशयः नन्वङ्गभूतेयं दर्शपूर्णमासयोः, अतो दीक्षणीयाद्विवदस्यां न कर्त्तव्या तस्माद्धतार्थमेतत् उच्यते सत्यम्, अङ्गभूता तथाऽपि पृथगारम्भा भवति न प्रधानारम्भेण सिद्ध्यति, न ह्यस्यां वेलायामारब्धौ दर्शपूर्णमासौ तयोरारप्स्यमानयोरेषा विहिता, यदि चारब्धौ भवेतां तत आरम्भणीयैव न कर्त्तव्या, सा हि कर्त्तारमारम्भयोग्यं कर्तुं क्रियते, तौ चेदारब्धौ किमर्था सा, तस्मादारप्स्यमानयोर्दर्शपूर्णमासयोः क्रियमाणेयं पृथगारम्भा[1] भवतीत्यलुप्तार्थत्वादस्यामारम्भणीया कर्त्तव्या, मैवम् अशक्या ऽत्रातिदेष्टुं सा हीदानीं विधीयते, न तस्या दर्शपूर्णमासाङ्गत्वं ज्ञातं, यच्च प्रकृतावज्ञातं न तद्विकृतावतिदेष्टुं शक्यन्त्वेतदेकमेव वाक्यमविहितवद्दर्शपूर्णमासयोरेतां विदधाति विहितत्वञ्चातिदिशतीति न कथंचिदवकल्पते, तस्मात्तद्व्यतिरिक्तेतिकर्त्तव्यतातिदिश्यते ॥

खले वाल्यां यूपाहुतिवाधाधिकरणम् ।

सू० कर्म च द्रव्यसंयोगार्थमर्थाभावान्निवर्त्तेत तादर्थ्यं श्रुतिसंयोगात् ॥ ५ ॥

साद्यस्क्रे श्रूयते "खले वालीयूपो भवती"ति प्रकृतौ चास्ति यूपाहुतिः [2]यूपमच्छेष्यता होतव्यमिति, सा किं खले वाल्यां कर्त्तव्या नेति संशये, अतिदेशप्राप्तेः कर्त्तव्येति प्राप्ते लुप्तार्थत्वादकर्त्तव्येत्याह कथं यूपमच्छेष्यता होतव्यमिति छेदनार्थो होमः, न च खले वाल्यां छेदनमस्ति स्वदेशावस्थितायामेव तस्यां पशुर्बध्यते अतस्तत्र न यूपाहुतिः कर्त्तव्या ॥

साद्यस्क्रे स्थाणवाहुतिवाधाधिकरणम् ।

सू० स्थाणौ तु देशमात्रत्वादनिर्वृत्तिः प्रतीयेत ॥ ६ ॥

तत्रैव स्थाण्वाहुतिं जुहोतीति सा किं यस्मिन् कस्मिँश्चित्स्थाणावारादुपकारकत्वेन कर्तव्या सती खले वाल्यामपि स्यात्, किं वा यूप-

१ पृथगारम्भवतीति पा० ।

२ अत्र अच्छेष्यता० अछेष्यता० अद्धेष्यता० इति पाठत्रयं पुस्तकत्रये उपलभ्यते शबरस्वामिनस्त्विह "अच्छ—शब्दो हि प्राप्तुमित्यर्थं वर्त्तते" इति ब्रुवते तेनेह यूपं प्राप्तुमिच्छता इत्यर्थलाभः । सर्वा श्रुतिस्तु "यूपमच्छेष्यता होतव्यं न हि दीक्षितस्याग्नौ जुहोति आज्यं चारणिं चादाय यूपस्यान्तिकेऽग्निं मथित्वा यूपाहुतिं जुहोति इति ।

व्रश्चनस्थाणौ कर्त्तव्या तद्द्वारेण यूपस्यैव संस्कारार्था सती खले वाल्या-मावश्चनस्थाणभावेन लुप्तार्थत्वादकर्त्तव्येति विचारे यूपवियोजिते स्थाणौ क्रियमाणा तद्द्वारेण न शक्नोति यूपस्योपकर्त्तुं, तस्मादाराद्दुपकारिका खले वाल्यां कर्त्तव्येति प्राप्ते ब्रूमः आव्रश्चनस्थाणोः सन्निधानात्तद्द्वारेण च संस्कारत्वे संभवत्याराद्दुपकारत्वानुपपत्तेर्यूपसंस्कारार्थेयं नियोजितेऽपि स्थाणौ यूपीयोऽसावित्येवं क्रियमाणा शक्नोत्येव यूपस्योपकर्त्तुं देवदत्तधारितायां इव स्रजः शुचिदेशनिधानं देवदत्तस्य, यद्यपि चादृष्ट एव संस्कारस्तथाऽपि संस्कारत्वमेव सम्बद्धोपकारित्वलाभादसम्बद्धोपकारिणा आराद्दुपकाराज् ज्यायः, तस्मात् खले वाल्यां न कर्त्तव्या ॥

उत्तमप्रयाजस्य संस्कारकर्मताधिकरणम् ।

सू॰ प्रयाजे च तन्न्यायत्वात् ॥ ७ ॥

अस्ति दर्शपूर्णमासयोरुत्तमः प्रयाजः "स्वाहाकारं यजती"ति स किमाराद्दुपकारकः? उताज्यभागादिषु यक्ष्यमाणानामग्न्यादिदेवतानां संस्कारकः? इति, तदर्थमिदं विचार्यते किं स्वाहाकारं यजतीति देवताविधि? रुत नामधेयं? स्वाहाग्निं स्वाहा सोममित्यादिमन्त्रवर्णाद्देवताविधिरि? ति तत्र "वचनाद्देवतालाभे न मन्त्रात्कल्पनं क्षमम्। तस्याश्चानुपयोगित्वाद्भवेदाराद्दुपक्रिया" न हि वचनविहितदेवतासम्भवे स्वाहाऽग्निं स्वाहा सोममित्यादिना तत्कल्पना युक्ता, न चाऽयं मन्त्रकरणत्वेन श्रुत्या विधीयते यतस्तद्गतानामग्न्यादीनां देवतात्वं कल्प्येत क्रमप्रकरणविनियोज्यो ह्यसौ, न चाविज्ञातसामर्थ्यस्ताभ्यां विनियोक्तुं शक्यते, न चाग्न्यादिप्रतिपादकस्य मन्त्रस्याविज्ञातदेवत्ये यागे सामर्थ्यमवगम्यते, तेन वाचनिकं देवताविधानमाश्रित्य तत्रैवाग्न्यादिशब्दानां मातृशब्दवद्रूढ्या कथं चिद्वृत्तिरङ्गीकर्त्तव्या, अतो न मान्त्रवर्णिकी देवतेत्याराद्दुपकारकः। किं च न चायं स्वाहाकारो मन्त्रवर्णाच्छक्यते कल्पयितुं तेन स्वाहाकारदेवताकयागविधानमिदं, न च स्वाहाकाराख्या देवताऽन्यत्रोपयोगिनी या संस्क्रियेत, तस्मादाराद्दुपकारकमिदं कर्मेति प्राप्त उच्यते—"न देवताविधौ शक्तिर्द्वितीयान्तस्य विद्यते। न च यागविधौ क्षीणो विधत्ते देवतां विधिः" ॥ न छेका-

र्थविधिसम्भवेऽनेकार्थविधिर्युक्तः, सम्भवति चात्र यागमात्रविधानं स्वाहाकार-शब्दस्य स्वाहाऽग्निमित्यादिमन्त्रसम्बन्धेन नामधेयत्वसम्भवात्, करणत्वं च क्रमसहितात्प्रकरणाल्लभ्यते मन्त्रस्य, न चासामर्थ्यं निश्चितं येन विनियोगो न स्यात्, सम्भवति च यागे देवताप्रतिपादकस्य मन्त्रस्य प्रकाशनसामर्थ्यं यदि यागोऽयं न स्याद्यागोऽपि वा देवतान्तरयुक्तः स्यात्ततोऽग्न्यादिवचनस्य मन्त्रस्यासामर्थ्यं निश्चीयेत, न त्वेतदस्ति, तस्माद्योग्यताऽस्तीत्यविहितो विनियोगः। न च द्वितीयान्तस्य देवताविधौ सामर्थ्यं लभ्यते मन्त्रवर्णाद्देवताविधिरिति च नागत्या देवताविध्याश्रयणं, मन्त्रे चाज्यभागादिषु वक्ष्यमाणा देवता यथाक्रमेण संकीर्त्यमानाः प्रत्यभिज्ञायन्त इति तासां स्मरणं दृष्टमेव प्रयोजनमिति नादृष्टार्थत्वकल्पना तस्माद्विकृतिषु सौर्यादिष्वग्न्यादिपदानि लुप्तार्थत्वान्निवर्त्तन्ते ॥

अग्नियागस्यारादुपकारकताऽधिकरणम्।

सू० तथा ऽऽज्यभागाग्निरपीति चेत् ॥ ८ ॥

दर्शपूर्णमासयोराज्यभागौ प्रकृत्य श्रूयते "आज्यभागावग्नीषोमाभ्यां यजती"ति योऽयमाग्नेय आज्यभागः स किं प्रधानदेवताया अग्नेः संस्कार? उताराादुपकारक? इति पूर्वेण न्यायेन संस्कारत्वे प्राप्त उच्यते निगदेष्वावाहनादिषु अग्निमावह सोममावह अग्निमावहेत्येवमग्नि-शब्दस्य द्विः पाठाद्देवताऽन्तरं गम्यते, सोमाच्च पूर्वं पठ्यमानोऽग्निस्ततः परभाविनः प्रधानाग्नेरन्य इति गम्यते, विधिवाक्ये चाग्नीषोमाभ्यां यजतीत्येकेन पदेनाग्निः सोमश्च विधीयते, तत्र स्पष्टमेव यागं प्रति गुणत्वं सोमस्य, अन्यत्र देवतात्वाभावात्, तद्वदग्निः प्रधानं स्यात्ततो वैरूप्यं स्यात्, सोमापेक्षयाऽऽज्यभागावित्युद्दिश्याग्नीषोमाभ्यामित्युपादेयम् अग्न्यपेक्षया तद्विपरीतमिति वचनव्यक्तिभेदात्, तस्मादग्निरपि यागाङ्गत्वेन विधीयते। यागस्तु प्रधानकर्माराादुपकारकः तेन सौर्यादिषु नाग्निर्निवर्तते अग्नीषोमीयादिविकारेष्वप्याग्नेयाज्यभागोऽतिदिश्यते ॥

पशुपुरोडाशयागस्य देवतासंस्कारकताधिकरणम्।

सू० पशावपीति चेत् ॥ ९ ॥

अग्नीषोमीये पशौ पशुपुरोडाशः अग्नीषोमीयस्य वपया प्रचर्याऽग्नीषोमीयं पशुपुरोडाशमनुनिर्वपतीति, स किं पशोरारादुपकारकः? उत पशुदेवतासंस्कार? इति सन्देहे पशौ पशुपुरोडाशे चोभयत्रापि तद्धितनिर्देशाद्विशेषणभूता देवता गुणत्वेन गम्यते, न च गृह्यते विशेषः पशोर्देवताऽङ्गं पुरोडाशे विपरीतमिति उभयत्राप्यपूर्वैव देवतोपादीयत इति न संस्कारत्वम् आसोमं वहन्त्यग्निना प्रतितिष्ठन्ती"ति वाक्यशेषाल्लता सोमः प्रणीयमानोऽग्निश्च पशौ देवतापुरोडाशे तु न नियोगतस्तावेवेति प्रमाणमस्ति, तस्मादारादुपकारकः पशुपुरोडाशः, नैवं "दृष्टे स्मरणसंस्कारे सति नादृष्टकल्पना । पशुधर्मैश्च सन्दशात्तदङ्गत्वं सुनिश्चितम्" । ज्योतिष्टोमाङ्गं हि पशुर्न पुरोडाशे संस्कारार्थत्वेन शक्यः शङ्कितुं, पुरोडाशस्तु पशुधर्ममध्ये विधीयमानस्तदङ्गं संस्तद्गतदेवतासंस्कारेण दृष्टेनोपकुर्वन्नादृष्टार्थतामालम्बते, अतो नागृह्यमाणविशेषत्वं, तेन यैव पशोर्देवता लता वाऽन्या वा सैव पुरोडाशेन संस्कर्तव्येति विकृतिषु देवतान्तरवतीष्वग्नीषोमो निवर्तते ॥

सौर्यं चरुं निर्वपेदित्यत्र चरुशब्दस्यौदनवाचिताधिकरणम् ।

**सू० चरुर्हविर्विकारः स्यादिज्यासंयोगात ॥ १० ॥**

"सौर्यं चरुं निर्वपे"दित्यत्र संशयः किं स्थालीवचनश्चरु-शब्द उतौदनवचन? इति यदाऽपि स्थालीवचनस्तदापि किं स्थाली कपालविकारो हविः श्रपणार्था? उत पुरोडाशस्य हविषो विकारः प्रदेये? ति तत्र स्थाल्यां लोकप्रसिद्धेस्तद्वचनत्वं, यस्तु याज्ञिकानामोदने प्रयोगः स स्थालीसम्बन्धाल्लाक्षणिकः, न च विपरीतं सम्भवति, ओदनमात्रे प्रयोगाभावात् । येऽपि तस्यौदनवचनत्वं मन्यन्ते तेऽपि न तन्मात्रं वाच्यमाहुः कपाले कटाहे वा श्रपितस्यौदनस्य तद्वाच्यत्वानभ्युपगमात्, तथा चोपरितने ऽधिकरणे वक्ष्यामः,तेन स्थालीसम्बन्धनिमित्त एवौदनेऽपि चरु-शब्द इति विशेषणत्वात्स्थाल्येवाऽभिधेया, सा चानदनीया हविष्ट्वायोग्या, श्रपणयोग्यता तु प्रसिद्धैव, तस्मात्स्थाली चरुः कपालविकारश्च सौर्यमिति स्थाल्यां श्रपितस्य हविषः सूर्यसम्बन्धात्स्थाल्येवाऽभिधीयते । तस्येदमिति तद्धितो भविष्य-

तीत्येकः पक्षः, गृह्णीम एतत्स्थाली चरुरिति स तु हविर्विकारः सौर्यमिति देवतासंयोगात् देवतातद्धितो ह्ययम् अन्यथा याग एवायं न स्यात् वचनाच्चानदनीयेनापि कृष्णलादिनेव यागः क्रियेत, तस्माद्धविर्विकार इति द्वितीयः, सत्यं, चरुर्हविर्विकारः न तु स्थाल्यां चरु-शब्दः किंचोदने चरु-शब्दस्य वेदे याज्ञिकप्रयोगे चौदनवचनत्वावधारणात्, वेदे तावदादित्यः प्रायणीयश्चरुरित्युक्त्वा अदितिमोदनेनेति पश्चादनुवादादोदनवचनत्वं तत्र तावद्वाक्ये ऽवगम्यत इत्युक्तं शास्त्रस्था वा तन्निमित्तत्वादित्यत्र, ततश्चानेकार्थत्वमन्याय्यमिति सर्वत्रैवौदनवचनत्वं याज्ञिकाश्चानवस्राविन्तरूष्मपक्वौदने चरु-शब्दमुपचरन्ति, तेषां च शब्दैकगम्यधर्माधर्मव्यवहारिणां शब्दार्थविप्लवे तात्पर्यातिशयात्पृथग्जनेभ्यः प्रत्ययिततरत्वात्स एव शब्दार्थः, पाकविशेषनिमित्तश्चौदने चरु-शब्दः, न च स्थालीमन्तरेण स पाको निर्वर्तत इति कृत्वा स्थाल्यादरः, न तु तावता स्थालीवचनत्वं तस्मादोदनेन हविर्विक्रियते ॥

सौर्य्यचरोः स्थाल्यामेव पाकाधिकरणम् ।

सू० स कपाले प्रकृत्या स्यादन्यस्य चाश्रुतत्वात् ॥ ११ ॥

स एष चरुः किं कपाले पक्तव्य ? उत यत्र क्वचि ? दुत स्थाल्या ? मिति संशयः, चोदकप्राप्तेः कपाले स्यात्, नन्वष्टत्वपरिच्छिन्नं कपालं चोदकेन प्राप्नोति, न च चरुरष्टसु कपालेषु शक्यः पक्तुं सत्यमष्टत्वं प्राप्यते तत्त्वसम्भवान्निवर्त्तते न तु तन्निवृत्त्या कपालमपि निवर्तितुमर्हति तस्मात्कपाले स्यात्, नैवम् अप्राकृतकार्यत्वात् प्रकृतौ हि कपालोष्मणा हविः पाको निर्वर्तते चरुस्तूदकगतोष्मणा पक्तव्यः तत्र कपालमुदकधारणार्थमुपादीयमानमप्राकृतकार्यं स्यादिति न चोदकानुग्रहः, तस्माद्यत्र क्वचित्पक्तव्य इति प्राप्ते ब्रूमः स्थाल्यामेव स्यात् तस्य हि चरुत्वनिमित्तः पाको निवर्तते नान्यत्र तस्मात्स्थाल्यां स्यात् यद्योदनवचनेऽपि चरुशब्दे स्थाल्यामेव पाकस्ततः पूर्वाधिकरणे स्थाली कपालविकार इति पक्षस्यौदनेन हविर्विक्रियत इति पक्षस्य च कोऽनुष्ठाने विशेषः, उभयथाऽपि स्थाल्यां पक्वस्य हविष्ट्वादित्याशङ्क्य ॥

सौर्यचरौ पेषणाभावाधिकरणम् । सू० "तस्मिंस्पेषणमनर्थलोपात्स्यादित्यादिभिः" ॥

सूत्रैः प्रयोजनमुच्यते स्थाल्यां हि कपाले निवर्त्तितेऽपि चोदकप्राप्तः पुरोडाश एव स्थाल्यां अर्पितो हविः स्यात्, ततश्च पेषणसंयवनोपधानादीनि कर्त्तव्यानि स्युः, सिद्धान्ते त्वोदने तेषामनर्थलोपादकरणम् एवं प्रयोजनसूत्राणि व्याख्याय पुनरधिकरणान्तत्वेन व्याख्यातवान्, यो नाम चरावपि सम्भवादवघा[1]तवत् पेषणादीनि कर्त्तव्यानीति मन्यते तस्य बुद्धिर्मन्दविषन्यायेन व्यावर्त्यते प्रयोजनप्रयुक्तत्वात्तेषां चरौ च तदभावादकरणं पेषणसंयवनोपधानादीनाम्, उपधानं तु याज्ञिकाः कपालोपधानकाले तेनैव मन्त्रेण स्थाल्याः कुर्वते, न त्वयुक्तं, न च स्थालीकपालकार्यं वर्तते उदकधारणार्थत्वात्, अत उपधानस्य व्यावृत्त्या आसादनमप्यर्थकृतत्वान्न चोदकेन प्राप्यते ॥

इति श्रीशास्त्रदीपिकायां दशमाध्यायस्य प्रथमः पादः ॥ १ ॥

---

## अथ दशमाध्यायस्य द्वितीयः पाद आरभ्यते ॥

---

कृष्णले चरौ पाकानुष्ठानाधिकरणम् । सू० कृष्णलेष्वर्थलोपादपाकः स्यात् ॥ १ ॥

"प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्काम" इत्यत्र संशयः किं कृष्णलेषु पाकः कर्त्तव्यो नेति लुप्तार्थत्वादकर्त्तव्यः, ननु "घृते श्रपयती"ति वचनात्कर्त्तव्यः, न, अशक्यत्वात् रूपरसादीनां पूर्वेषान्तिरोभावोऽपूर्वाणां च प्रादुर्भावः पाकः असौ न कृष्णलेषु सम्भवति, तस्मादकर्त्तव्य इति प्राप्ते ब्रूमः—यद्यपि मुख्यः पाको न सम्भवति तथाऽपि लक्षणया तापमात्रं वचनेन विधीयते, अतस्तावन्मात्रं कर्त्तव्यम्, अन्यथा वचनानर्थक्यं स्यात्, यदि त्वयमेव मुख्यः पाको यदनुष्णस्पर्शवद्द्रव्यस्योष्णीकरणं ततः सुतरां वचनबलादसत्यपि प्राकृते कार्ये कर्त्तव्यः ॥

---

१ अविघाताच्चेति पा० ।

कृष्णले उपस्तरणाभिघारणयोरभावाधिकरणम् ।

सू० उपस्तरणाभिघारणयोरमृतार्थत्वादकर्म स्यात् ॥ २ ॥

कृष्णलचरावेव सन्देहः किमुपस्तरणाभिघारणे कर्त्तव्ये ने? ति, चोदकप्राप्तेः कर्त्तव्ये "यदुपस्तृणात्यभिघारयत्यमृताहुतिमेवैनां करोती"ति वचनात्स्वादिमार्थ्येत, न च कृष्णलेषु स्वादिमा सम्भवति, अतो लुप्तार्थत्वादकर्त्तव्ये इति चेत् न, अर्थवादत्वादमृताहुतिवचनस्य, एवं तर्हि चतुरवत्तसम्पत्त्यर्थमुपस्तरणाभिघारणं तत्तु चत्वारि चत्वारि कृष्णलान्यवद्यति चतुरवत्तस्याप्त्यै, इति कृष्णलचतुष्ट्वेनैव चतुरवत्तावाप्तिवचनादकर्त्तव्यं, नैवं, न हि कृष्णलचतुष्ट्वेनावदानचतुष्टमाप्तुं शक्यं विषयभेदात्, आप्तिवचनं त्वर्थवादमात्रं, यदि कृष्णचतुष्ट्वेनैव चतुरवत्तमाप्येत, ततः सकृदवत्तेरेव तदवाप्तेर्नै द्व्यवदानमपि स्यात्, तत्र चत्वारि चत्वारीति वीप्सा नावकल्प्येत । अथ वीप्सार्थो विधीयते ततः प्राप्तावदानानुवादेन चतुःसङ्ख्याया वीप्सायाश्च विधानाद्वाक्यं भिद्येत, ननु द्विर्हविषोऽवद्यतीत्यस्य प्रकृतितः प्राप्तेर्द्व्यवदानं स्यात्, न, चतुरवत्तसम्पत्त्यर्थं हि प्रकृतौ द्व्यवदानमुपस्तरणाभिघारणवत्, तच्चेदन्यतः सम्पन्नं ततोद्व्यवदानमप्युपस्तरणाभिघारणवदेव निर्वर्त्ति[१]तुमर्हति, तस्मादर्थवादमात्रमाप्तिवचनमिति कर्त्तव्यमुपस्तरणाभिघारणमिति प्राप्ते उच्यते—सूक्ष्माणां पुरोडाशावयवानां स्रुच्यसंसक्तानामाहवनीयपातः कथं स्यादित्येवमुपस्तरणाभिघारणं दृष्टार्थं, न च कृष्णलानां संसक्तिः सम्भवति यत्परिहारायोपस्तरणादि भवेत् । ननु चतुरवत्तसम्पत्तिरपि दृष्टमेव प्रयोजनं न, अनङ्गत्वात्, चतुरवत्तं जुहोतीत्यत्रावत्तं जुहोतीत्येतावद्विधीयते चतुःशब्दस्तूपस्तरणाभिघारणद्व्यवदानवचनप्राप्तचतुःसङ्ख्यानुवादमात्रं न विधानार्थम् अवत्तहोमविधिपरत्वाद्वाक्यस्य, तस्मादकर्त्तव्यमुपस्तरणाभिघारणम् ॥

कृष्णलचरौ भक्षसद्भावाधिकरणम् ।

सू० भक्षाणां तु प्रीत्यर्थत्वादकर्म स्यात् ॥ ३ ॥

---

१ निर्वर्तितुमर्हतीति पा० ।

कृत्वा चिन्तेयं यदा प्रकृतौ भक्षाः पुरुषप्रीत्यर्थास्तदा कृष्णलानामस्ति भक्षो ने? ति तत्र कृष्णलैर्भक्ष्यमाणैर्न प्रीतिर्भवति तेन प्राकृतास्तावद्बुद्धा लुप्तार्थत्वादकर्त्तव्याः। यत्तु वचनं [1]चुच्चूर्षाकारं भक्षयतीति तदाज्यस्य भक्षणं विधत्ते तस्यादनीयत्वात् चुच्चूर्षाकारस्यानुवादसम्भवाच्च कृष्णलानां, तस्माच्च तेषां भक्षणमिति प्राप्ते ब्रूमः—पूर्ववाक्ये कृष्णलानां प्राधान्यादाज्यस्य च तदङ्गत्वात्तेषामेव भक्षणवाक्येऽन्वयः, तेषां चानदनीयानामपि प्रदानवद्भक्षणमपि वचनाद्भविष्यतीति, तेषामेव चुच्चूर्षाकरणविशिष्टं भक्षणं विधीयते ॥

कृष्णलचरौ एकधा ब्रह्मणे चरतीत्यनेन सह परिहारविधानाधिकरणम् ।

**सू० एकधोपहारे सहत्वं ब्रह्मभक्षाणां प्रकृतौ विहृतत्वात ॥ ४ ॥**

तत्रैव श्रूयते "एकधा ब्रह्मण उपहरती"ति किमत्र सकृत्त्वं सहत्त्वं वा—विधीयते? उत सहत्व? मिति कश्चात्र विशेषः? यदि सकृत्त्वं विधीयते ततश्चोदकप्राप्तानामिडाप्राशित्रचतुर्धाकरणशंयुवाककालभक्षाणां कालभेदेन चतुर्हरणे प्राप्ते "सकृद्धरति नाधिक"मिति विधानादेक एवास्य भक्ष उपहर्त्तव्यः, भक्षान्तराणि निवर्त्तेरन्, सहत्वविधौ पुनरनिवर्त्तिता भक्षाः कालभेदेनोपहर्त्तव्याः प्राप्ताः सन्त एकस्मिन्काल उपह्रियन्ते, तत्र सकृत्त्वे सहत्वे चैकधा—शब्दस्य लोके प्रयोगादनियमः यत एवायं साधारणः अत एव चोदकप्राप्तभक्षान्तराबाधाय सहत्वमेव विधीयते, प्राशित्रमिडामिति द्वितीयया क्रियां प्रति भक्षस्य प्राधान्यावगमाद् दृष्टार्थत्वाच्च तत्प्रतिपत्त्यर्थाः प्राकृता भक्षाः कृष्णलेष्वपि चोदकेन प्राप्नुवन्तीति तेषां सहत्वविधानमुपयुज्यते ॥

कृष्णलचरौ ब्रह्मणे सर्वभक्षभागार्पणाधिकरणम् ।

**सू० सर्वत्वं च तेषामधिकारात्स्यात ॥ ५ ॥**

तत्रैव "सर्वं ब्रह्मणे परिहरती"ति श्रुतं, तत्र संशयः किं ब्रह्मभागस्य सर्वस्य परिहारो विधीयते-यद्ब्रह्मणे सर्वं तत्परिहरती? ति यद्ब्रह्मणे

[1] चुच्चूषाकारं भक्षयतीति पा० ।

परिहरति तत्सर्वमिति वा? उत परिहरणीयस्य सर्वस्य ब्रह्मसम्बन्धो विधीयते यत्परिहरति तत्सर्वं ब्रह्मणो नाध्वर्य्वादिभ्य? इति पुरुषान्तरेभ्यो-भक्षोऽपनीयत इति, तत्र चोदकप्राप्तपुरुषान्तरसम्बन्धो मा बाधीति ब्रह्म-भागस्य परिहर्त्तव्यस्य सर्वता सर्वस्य ब्रह्मसम्बन्धिनो वा परिहारोविधी-यत इति मन्यते, वचनं त्वेवमनर्थकं स्यात्, प्रकृतित एव हि कृत्स्नस्य ब्रह्म-भागस्य भक्षणाय परिहरणं प्राप्तमेव, कृत्स्नो हि भागस्तेन भक्षणीयः। अन्यथा ह्यभक्षितस्यांशस्य संस्कारहानिः स्यात्, तस्मात्प्राप्तत्वाद्ब्रह्मभा-गस्य कृत्स्नता न विधातव्या, तेन यत्प्रकृतौ नानापुरुषेभ्यो भक्षार्थं हरति तत्सर्वं ब्रह्मणे परिहरति, नान्येभ्य इति प्राकृताभक्षाः पुरुषान्तरेभ्योऽप-नीयन्ते ॥

भक्षभागानां स्वस्वकाले ब्रह्मणा भक्षणाधिकरणम्।

सू० पुरुषापनयात्स्वकालत्वम् ॥ ६ ॥

सर्वे भक्षा ब्रह्मण उपहर्त्तव्याः ते चैकधा ब्रह्मण उपहरतीति सह-त्वविधानादेकस्मिन्नेव काल उपहर्त्तव्या इति स्थिते संशयः, किं युगप-दुपहृतानां युगपद्भक्षणम्? उत प्रकृतिवचानाकालं भक्षणं? तत्र "भक्षार्थो ह्युपहारो ऽतोभक्षोऽपि युगपद्भवेत्। सहाप्युपहृतौ शक्यं यथाकालं तु भक्ष-णम्" ॥ तस्माच्चोदकाबाधाय सहोपहृतानामपि प्रकृतिवचानाकालं भक्षणम्

"ब्रह्मभक्षे चतुर्धाकरणा-दीनामभावाधिकरणम्।

सू० एकार्थत्वादविभागः स्यात्[1] ॥ ७ ॥

प्रकृतौ चतुर्धाकरणं विधाय "इदं ब्रह्मण इदं होतुरित्यादिव्या-देशो विहितः स किं कृष्णलेषु कर्त्तव्यो ने?ति चोदकप्राप्तेः कर्त्तव्यः, नैवं चतुर्धाकरणं तावच्चतुर्णां भक्षणार्थं प्रकृतौ, इह तु ब्रह्मणैव सर्वं भक्षयितव्यमिति लुप्तार्थत्वादकर्त्तव्यं, व्यादेशोऽपि चतुर्णां व्यवस्थार्थम् इह तु सर्वस्य ब्रह्मसम्बन्धित्वेन निश्चितत्वादिदं ब्रह्मण इत्यपि निर्देशो न कर्त्तव्यः, नतरामिदं होतुरित्यादिहोत्रादिभ्योऽपनीतत्वात् ॥

ज्योतिष्टोमे ऋत्विग्दाना-स्यानत्यर्थताधिकरणम्।

सू० ऋत्विग्दानं धर्ममात्रार्थं स्याद्-दातिसामर्थ्यात् ॥ ८ ॥

१ एकार्थत्वाधिभागइति पा०।

"ऋत्विग्भ्यो दक्षिणां दद्या"दित्यादि यदृत्विग्दानं तददृष्टार्थमानत्यर्थं वेति सन्देहे अदृष्टार्थमिति ब्रूमः—दानकर्त्तव्यताश्रुत्या दानेनानतिकर्त्तव्यतावाक्यात् तच्च दुर्बलं, तस्माद्दानमात्रं कर्त्तव्यम्। किं च द्वादशशतादिपरिमाणनियमो मन्त्रादीतिकर्त्तव्यता कर्माननुरूपद्रव्यता च दानस्यादृष्टार्थत्वे ऽवकल्पते नान्यथा, उच्यते कर्मकरेभ्यस्तदीयमानमपेक्षितानतिद्वारेण दृष्टप्रयोजनत्वाच्च शक्यते अदृष्टार्थं कल्पयितुं, परिमाणादिनियमस्तु कामं भवत्वदृष्टार्थः न तु तावता दानस्याप्यदृष्टार्थता, तस्मात्सत्रेषु न कर्त्तव्यं दानम् ॥

ज्योतिष्टोमे भक्षस्य प्रतिपत्त्यर्थताधिकरणम् ।

**सू० शेषभक्षास्तु तद्वत् ॥ ९ ॥**

शेषभक्षा इडादिविषया दर्शपूर्णमासयोः सोमविषयाश्च सोमे समाम्नाताः किं परिक्रयार्था ? उत प्रतिपत्त्यर्था ? इति विचारः, तत्र भक्षणात्प्रीतिः प्रीत्या चानतिः, प्रत्यक्षा तस्मात्तदर्थाः, नैवं यागे क्लृप्ते ऽवशिष्टं द्रव्यं प्रतिपत्तिमपेक्षमाणं भक्षणेन प्रतिपाद्यते, तत्तु दृष्टमेव प्रयोजनम्, अनीशानश्च यजमानो देवतायै सङ्कल्पितस्यातो न शक्नोत्यसौ तेन परिक्रेतुं, तस्मात्प्रतिपत्त्यर्था भक्षाः । स्थिते चास्मिन् भक्षाणां प्रतिपत्त्यर्थत्वे चतुर्धा करणे भक्षणाश्रवणात्परिक्रयमाशङ्क्य भक्षार्थत्व[2]व्यादेशस्य तृतीये साधिता, तस्मात्सत्रेष्वप्यबाध्या भक्षाः ॥

सत्रे ऋत्विग्वरणाभावाधिकरणम् ।

**सू० वरणमृत्विजामानमनार्थत्वात्सत्रे न स्यात्स्वकर्मत्वात् ॥ १० ॥**

ज्योतिष्टोमे वरणमृत्विजामाम्नातम् अग्निर्होता स मे होतेत्यादि, तत्सत्रेषु कर्त्तव्यं नेति संशये चोदकानुग्रहाय कर्त्तव्यम् ऋत्विक्त्वार्थं चेदं [1]प्रकृतौ तच्च सत्रे ऽपि यजमानेष्वाधातव्यं "ये यजमानास्त ऋत्विज" इति वचनात्, अतो लुप्तार्थत्वात्कर्त्तव्यं वरणं, मैवम् आनत्यर्थं तत्प्रकृतौ, न कृतं चात्र यजमानैर्वरणेनानमितव्यम्, अतो ऽर्थलोपादकर्त्तव्यम्, ऋत्विक्त्वमपि

१ प्रकृते इति पा० ।
२ भक्षणार्थताव्यादेशस्येति पा० ।

यागकर्तृत्वं, तच्च प्रकृतौ वरणविधानात्तद्द्वारेणानतानामेव, लत्रेषु तु वरणस्यार्थलोपाविवृत्तवरणानामेव न विगुणमृत्विक्त्वम् आध्वर्य्यादित्वं भविष्यति यदि तु कर्म करत्वचवनोऽयमृत्विक्शब्दस्ततो वरणेनापि यजमानेषु शक्यमाधातुं ते हि स्वार्थं कुर्वाणा न कर्मकरा भवन्ति तेन ऋत्विभिरेव सत्रं कर्त्तव्यमिति वरणनिवृत्तिः ॥

सत्रे परिक्रयाभावाधिकरणम् ।

सू० परिक्रयश्च तादर्थ्यात् ॥ ११ ॥

दक्षिणादानं परिक्रयार्थं नादृष्टार्थमित्युक्तम्, इदानीं परिक्रय एव सत्रे किं कर्त्तव्यो ने? ति संशये पूर्वाधिकरणवत्पूर्वोत्तरपक्षौ नात्र गौर्द्दीयत इत्यादिप्रतिषेधो नासत्यां दानप्राप्तौ घटते, तस्माददनिवृत्तं दानमिति विशेषाशङ्का विध्यन्तरशेषस्त्वयमनुवादो न प्राप्तिं सूचयति, तस्माद्दानमनार्थत्वाद्वरणवत्परिक्रयोऽपि निवर्त्तते ॥

उदवसानीयस्य सत्रानङ्गतया तत्र दानस्य परिक्रयार्थत्वाधिकरणम् ।

सू० उदवसानीयः सत्रधर्मा स्यात् तदङ्गत्वात्तत्र दानं धर्ममात्रं स्यात् ॥ १२ ॥

सत्रादुदवसाय "ज्योतिष्टोमेन पृष्टशमनीयेन सहस्रदक्षिणेन यजेरन्नि"ति श्रूयते तत्र संशयः किं पृष्टशमनीयं सत्राङ्गं तत्र सत्रवद् यजमानैरेवार्त्विज्यं कर्तव्यमिति दक्षिणादानमदृष्टार्थम्? उत नाङ्गमृत्विग्भिः कर्त्तव्यं परिक्रयार्थं च दान? मिति, तत्र फलवत्सत्रसमभिव्याहारात्तदुत्तरकालेऽपि श्रूयमाणः पृष्टशमनीयो वाजपेयस्येव बृहस्पतिसवः सत्रस्याङ्गम्, इतरथा हि सत्रसंयोगः काललक्षणार्थः स्यात् फलं च कल्प्येत, तस्मादङ्गं नैवम् । उदवसानं हि त्यागः, स च निःशेषसमाप्तावकल्पते, न च निःशेषसमाप्तस्याङ्गं सम्भवति, वाजपेयेनेष्ट्वेति तु प्रयोगसमाप्तिर्गम्यते, समाप्तेऽपि च यथोक्ते प्रयोगे सम्भवत्यङ्गान्तरं त्यक्तस्य तु पुनरङ्गं न सम्भवति, सम्भवे वा त्याग एव न स्यात्, तस्मादुदवसायेति त्यागस्य शाब्दत्वादनङ्गत्वं, न च लक्षणा श्रौतमेव सत्रावसानं निमित्तीकृत्य पृष्टशमनीयविधानात् ॥

उदवसानीयस्य ऋत्विजामेकैकेनानुष्ठानाधिकरणम् ।

**सू॰ तेषां तु वचनाद् द्वियज्ञवत्सह प्रयोगः स्यात् ॥ १३ ॥**

पृष्ठशमनीय एव संशयः "किमुदवसायिभिः सह"[1] प्रयोक्तव्य? उतैकैकश्येन यजेरचिति, तत्राख्यातोपात्तस्य बहुत्वस्योपादेयकर्तृगामित्वेनविवक्षितत्वात्संहत्य कुर्युरिति स्थितं तावदपर्यवसितम्, अन्तरा चिन्तान्तरं क्रियते ॥

उदवसानीये सत्रिभ्योऽन्येषामृत्विक्त्वाधिकरणम् ।

**सू॰ तत्रान्यानृत्विजो वृणीरन् ॥ १४ ॥**

यदा संहत्य कर्त्तव्यं तदा किं यजमानैरेव सर्वं कर्त्तव्यमुतर्त्विग्भिरिति विचारः, तत्रोदवसाने यजमानानामेव कर्तृत्वात् क्त्वाप्रत्ययेन च पृष्ठशमनीयस्य तत्समानकर्तृकत्वात्तत्रापि यजमाना एव कर्त्तारो नान्य इति प्राप्ते ब्रूमः—यजेरचित्यनेन यो व्यापारो विधीयते तस्यैवोदवसानसमानकर्तृकता क्त्वा प्रत्ययादवगम्यते नार्त्विज्यस्य, तत्तु पुरुषान्तरैः प्रकृतिवत्क्रियमाणं न केनचिद्विरुध्यते । किं च दक्षिणा—शब्दः परिक्रयार्थे वर्त्तते न चात्र परिक्रयः संभवति, अतो दक्षिणाश्रुतिबलादन्ये भयेयुः, यद्येवमङ्गत्वेऽपि दक्षिणाश्रुतेरेवान्ये सिध्येयुः, ये यजमानास्ते ऋत्विज इति साधारणं वचनं पृष्ठशमनीयवर्जं भविष्यति तत्राहत्य परिक्रयवचनात्, भवतु नामैवं को दोषः, किमर्थं तस्याङ्गत्वनिराकरणम्? उच्यते अङ्गत्वाभ्युपगमेनापि शक्यत एव परिक्रयार्थता वक्तुं तथाऽपि तत्त्वत उत्तरं विवक्षित्वाऽङ्गत्वमेव नास्तीत्युक्तम्, अपि चाङ्गत्वे सति संहत्य प्रयोगः स्यात् प्रधानवत्. एकैकशस्तु प्रयोगं वक्तुकामोऽङ्गत्वं निराकृतवान् तस्मादन्ये वरीतव्याः, स्थितादुत्तरं नैतदस्ति संहत्यप्रयोग इति यदि बहुत्वं विधीयेत तत एवं स्यात् उदवसायेति तु क्त्वा-प्रत्ययादुदवसानसमानकर्तृकत्वावगमादुदवसाने च बहूनां कर्तृत्वात्प्राप्तमेव बहुत्वं न विधीयते, न चाविहितमङ्गं भवति, उदवसाने च गम्यमानमपि बहुत्वं निमित्तवदुद्देश्यगतत्वादविवक्षितं, यागे चानुवादत्वादनङ्गम् ॥ किं च उदवसाने निरपेक्षाः कर्त्तारस्तद्वदि

[1] संहत्यप्रयोक्तव्य इति पं॰ ।

यागोऽपि निरपेक्षास्ततः समानकर्तृकत्वं सम्भवेन्नान्यथा, तस्मादेकैकश्येन प्रयुञ्जीरन् ॥

कामेष्टौ दानस्यादृष्टार्थताधिकरणम् ।

सू० कामेष्टौ च दान-शब्दात् ॥ १५ ॥

सारस्वते सत्रे श्रूयते "प्लाक्षं प्रस्तरणं प्राप्याग्नये कामायाष्टाकपालं निर्वपन्ति तस्यामश्वां च पुरुषीं च धेनुके दद्युरि"ति किमिदं दानमदृष्टार्थं ? मुत परिक्रयार्थं ? मिति तदर्थं चिन्त्यते किमेतस्यामृत्विजः सन्ति ? उत यजमानै रेवेयमिष्टिः कर्त्तव्ये ? ति तत्र द्वादशाहे ये यजमानास्त ऋत्विज इति यजमानानामार्त्विज्यमिहातिदेशेन प्राप्यमाणं प्राकृतेष्वेवाङ्गेषु प्राप्यते नापूर्वाङ्गेषु यूपावटस्तरणवर्हिषा बर्हिर्धर्माः तेनापूर्वाङ्गे कामेष्टौ असति यजमानार्त्विज्ये चोदकप्राप्तैर्ऋत्विग्भिर्भवितव्यं सत्सु च तेषु दानमसत्यपि दक्षिणाशब्दे दृष्टार्थत्वात्परिक्रयार्थमेवेति प्राप्ते ब्रूमः—प्रकृतौ बर्हिर्धर्माः प्रदिष्टानां पदार्थानामङ्गत्वाद्युक्तं यदपूर्वेषु न भवन्ति, यजमानास्तु कर्तारः प्रयोगाङ्गत्वाद्विकृतावपि प्रयोगद्वारेण प्राप्नुवन्ति तस्मिँश्च प्रयोगे यदपूर्वमप्यङ्गं निपतति तत्रैव प्रसङ्गसिद्धत्वान्न कर्त्रन्तरमाकाङ्क्षति, तस्माददृष्टार्थमेवैतद्दानम् ॥

दर्शपूर्णमासयोर्द्वेष्याय दानस्यादृष्टार्थताधिकरणम् ।

सू० द्वेष्ये वा चोदनाद्दक्षिणापनयः स्यात् ॥ १६ ॥

दर्शपूर्णमासयोः श्रूयते "यदि पर्वोः संयाजयन्कपालमभिजुहुयाद्वैश्वानरं द्वादशकपालं निर्वपेत्तस्यैकहायनी गौर्दक्षिणा तां स द्वेष्याय दद्या"दिति किमिदं दानं परिक्रयार्थं ? मुतादृष्टार्थं ? मिति दक्षिणाशब्दात्परिक्रयार्थमिति, यद्यपि च दर्शपूर्णमासयोरेव नैमित्तिकमङ्गं वैश्वानरेष्टिस्तन्त्रम[1]ध्य एव क्रियते तथाऽपि वचनाद्दक्षिणान्तरं नानुपपन्नम् उच्यते द्वेष्याय तद्दानं न चर्त्विग् द्वेष्यः सम्भवति "ऋत्विगाचार्यौ नातिचरितव्या"विति स्मरणात् तस्मादनृत्विजे दानमिदमदृष्टार्थं दक्षिणाशब्दश्च दानमात्रेऽगत्या वर्तते ॥

---

१ तन्मध्य इति पा० ।

जीवतामस्थियज्ञाधिकरणम् ।

सू० अस्थियज्ञो ऽविप्रतिषेधादितरेषां स्यादिप्रतिषेधादस्थ्नाम् ॥ १७ ॥

इदं श्रूयते "यदि सत्त्राय सन्दीक्षितानां प्रमीयेत तं दग्ध्वा कृष्णाजिने ऽस्थीन्युपनह्य योऽस्य नेदिष्ठः स्यात्तं तस्य स्थाने दीक्षयित्वा तेन सह यजेरन् ततः सम्वत्सरे ऽस्थीनि याजयेयु"रिति योऽयं सम्वत्सरेऽस्थियागः स विचार्यते किमस्थि-शब्देन शरीरशरीरिणोरभेदोपचारेण मृतं लक्षयित्वा तस्यायं याग उच्यते तदधिकारे च यागे सत्त्रिणामितरेषामृत्विक्स्थानीयानां कर्तृत्वमात्रम्? उतास्थि-शब्देन जीवत एव सत्त्रिणोऽस्थिसहायाल्लक्षयित्वा तेषामेव यागविधि? रिति तत्रास्थि-शब्दस्य तच्छरीरे पुंसि प्रवृत्तेरितरेषां च ण्यन्तपरस्मैपदनिर्द्देशात्परार्थे कर्मणि याजयितृत्वावगमान्मृताधिकारमिदं कर्म सत्त्रमध्यमरणनिमित्तं तस्यैव फलदमिति प्राप्ते ब्रूमः—न कथंचिदपि मृतस्य साक्षाद्वा संविधानाद्वा कर्तृत्वं सम्भवति न चाकर्त्तुरधिकारः तस्माज्जीवतामेवायं यागः, याजयतिश्च ये तेषां याजयितारस्तदभिप्रायेण भविष्यति ॥

अस्थियज्ञे अस्थ्नाऽजयाद्यनुष्ठानाधिकरणम् ।

सू० यदि तु वचनात् तेषां जपसंस्कारमर्थलुप्तं सेष्टितदर्थत्वात् ॥१८॥

जीवदधिकारपक्षे चोदकप्राप्तं न किञ्चिद्बाधितव्यं, मृताधिकारे तु भवति केषांचिद्बाधः तदिह कृत्वा चिन्तया किं बाध्यं किं नेति चिन्त्यते, ये यजमानजयावपनादयश्च संस्कारा दीक्षणीयेष्टिश्च ते किमस्थ्यधिकारपक्षे कर्त्तव्या नेति चोदकानुग्रहाय कर्त्तव्याः मैवं, दीक्षार्थाहीष्टिर्यमनियमसङ्कल्पश्च दीक्षा, न च सा मृतस्य सम्भवति, तस्माल्लुप्तार्था, वपनं तु दूरापास्तं केशश्मश्रुणोरभावात् जपश्चाशक्यत्वात् क्रत्वर्थे तु क्रियते गुणभूतत्वात् । अथ यत्र यजमानो गुणभूतः यथा शुक्रं यजमानोऽन्वारभत इत्यादौ तत्कर्त्तव्यं नेति अचेतनानामस्थ्नां स्वातन्त्र्यलक्षणकर्तृत्वासम्भवादकर्त्तव्यं, न चैतन्यापेक्षं कर्तृत्वं काष्ठादीनामपि

ज्वलनादौ कर्तृत्वसम्भवात् यस्यैवान्यानपेक्षयाऽऽख्यातोपात्तव्यापारसमवायसम्भवः स एव कर्त्ता, तस्माच्छुक्रान्वारम्भणादिकर्मास्थिभिः कर्त्तव्यम् ॥

अस्थियज्ञे अस्याङ्काम्यकर्माद्यननुष्ठानाधिकरणम् ।

सू० काम्यानि तु न विद्यन्ते कामाज्ञानाद्यथेतरस्यानुच्यमानानि ॥ १९ ॥

गुणकामानां विकृतौ प्रवृत्तिं कृत्वा चिन्त्यते यदि कामयेत वर्षुकः पर्जन्यः स्यान्नीचैः सदोऽभिनुयादित्यादयो गुणकामामृताधिकारपक्षे प्रवर्तन्ते नेति चोदकप्राप्तेः प्रवर्तन्ते नैवं, कुतः कामाज्ञानात्, न हीदं ज्ञायते किं मृतस्येष्टं न वेति तस्मादप्रवृत्तिर्गुणकामानाम् ॥

अस्थियज्ञे अस्यां सूक्तवाकगताशासनानुष्ठानाधिकरणम् ।

सू० ईहार्थाश्चाभावात्सूक्तवाकवत् ॥ २० ॥

"सूक्तवाकगतान्यायुराशास्त" इत्यादीनि फलपदानि प्रवर्तन्ते नेति संशये सूक्तवाकस्य प्रहरणाङ्गतया नित्यवत्प्रवृत्तेस्तन्निबन्धनानामायुरादिपदानामपि प्रवृत्तिः, नैवं फलनिर्देशा ह्येते मान्त्रवर्णिकफलकल्पनात्, न च मृतस्य फलाशंसनङ्गम्यत इत्युक्तम्, अतो लुप्तार्थत्वादेषां निवृत्तिः ॥

अस्थियज्ञे होतृकामाभावाधिकरणम् ।

सू० स्युर्वा होतृकामाः ॥ २१ ॥

प्रकृतौ सन्ति होतृकामाः यं कामयेत पापीयान् स्यादिति नीचैस्तरान्तस्य याज्यया वषट् कुर्यात् यं कामयेत वसीयान् स्यादिति उच्चैस्तरान्तस्य याज्यया वषट् कुर्यादि''त्यादयः, ते मृताधिकारेऽपि कर्मणि होतुः कामनासम्भवाच्च निवर्तेरन्, निवृत्तिर्वा यजमानफलमेव हि अत्रापि निर्दिश्यते, न चानिर्दिष्टं फलं भवति, न च मृतस्येच्छा विज्ञायते तस्मादेवमादीनामपि निवृत्तिः ॥

यजमानस्य दिष्टगतावपि सर्वस्वारस्यसमापनाधिकरणम् ।

सू० सर्वस्वारस्यदिष्टगतौ समापनं न विद्यते कर्मणो जीवसंयोगात् ॥ २२ ॥

सर्वस्वारो नामैकाहः स्वर्गकामस्य विहितः, तत्रार्भवस्तोत्रकाले

"ब्राह्मणाः समापयत मे यज्ञ"मिति प्रैषमृत्विग्भ्यः प्रदाय यजमानो म्रियते तस्मिन्मृते शेषं कर्म समापनीयं नेति संशये, न समाप्यं मृतस्य कर्तृत्वासम्भवात्, यजमानस्य तावच्च समाप्तिः कर्तव्या, यच्च यजमानस्य कार्यं तद् ऋत्विजः कुर्वन्ति नान्यत्तस्मादृत्विजोऽपि न समापयेयुः, उच्यते ।—यद्यसम्भवि कर्तव्यं तत एवं भवेदिदं जीवं[१]चैव तु स प्रैषाच्छिष्टे कर्तृत्वमृच्छति" वरणभरणादिसमाचरणमेव जीवदवस्थायामपि यजमानस्य कर्तृत्वं, तच्च मरणोत्तरकालभाविन्यपि कर्मशेषे जीवदवस्थायामिव संविधानेन सम्भवति, प्रत्यक्षमेव च समापयतेति प्रैषेण समाप्तिश्चोद्यमाना न शक्यते ऽपह्नोतुं, न हि ब्राह्मणभागगताद्विधेः प्रैषस्य कश्चिद्विशेषः, न हि प्रैषे प्रेषकपुरुषस्य स्वातन्त्र्यं येन पौरुषेयत्वाद्दोषः स्यात्, प्रयोक्तृत्वमात्रं तु ब्राह्मणगतेष्विव विधिषु प्रैषेष्वपि पुरुषाणाम्, अतः प्रत्यक्षमेव विहितं समापनं स्वर्ग एव वा अत्र मरणेनार्थिनः फलं न मरणं, मरणकाम इत्यङ्गीकृतमरण इत्यर्थः, तेन यो ह्येवं ज्ञात्वा स्वर्गं प्राप्नवानीति कामयते तस्यायं क्रतुः, तथा च हरिभिरुक्तं "प्रधानस्य मरणेनार्थिन इज्यां प्रवर्तयन्ती"ति तेन संजातेऽपि मरणे स्वर्गार्थमेव समापनीयम् ॥

यजमानस्य दिष्टगतौ सर्वस्वारस्यशुक्लस्पर्शादियोग्याङ्गाद्यनुष्ठानाधिकरणम्।

सू गते कर्मास्थियज्ञवत् ॥ २३ ॥

अथ मृते यजमाने कर्मशेषे क्रियमाणे किं बाध्यं? किं वा ने?ति प्रश्नेनैवोपक्रमः, अत्रोत्तरम् अस्थियज्ञे ऽस्यामधिकारपक्षे यथोक्तं तथेहापि द्रष्टव्यम् ॥

सर्वस्वारे यजमानस्य दिष्टगतावपि आयुराशंसनाधिकरणम्।

सू० जीवत्यवचनमायुराशिषस्तदर्थत्वात् ॥ २४ ॥

सर्वस्वार एव मरणात्प्राग्जीवदवस्थायामायुराशास्त इत्यायुराशीर्वक्तव्या ने?ति संशयः तत्र मरणाभ्युपगमेन प्रकृतस्य नाशासितव्यमायुः प्रागपि त्वाभवकालान्मरणं संभवति, तथा सति क्रतोर्वैगुण्यात्प्रावदाभवकालमाशासितव्यमायुः, तस्मादायुराशीर्वक्तव्या ॥

[१] जीवच्चैव तु इति पा०

द्वादशाहे ऋतुयाज्याद्यनुष्ठानाधिकरणम् ।

सू० क्रिया स्याद्धर्ममात्राणाम् ॥ २५ ॥

यत्प्रकृतावानत्यर्थमृत्विग्वरणं दक्षिणादानं च न तत्सत्रे स्यादित्युक्तं, यत्त्वदृष्टार्थमृतुयाज्यावरणम् आत्रेयाय हिरण्यदानं च तत्सत्रेऽपि कर्त्तव्यमिति प्रत्युदाहरणमात्रमेतत् ॥

पवमानेष्टौ निर्वापानुष्ठानाधिकरणम् ।

सू० गुणलोपे च मुख्यस्य ॥ २६ ॥

दर्शपूर्णमासयोरग्निहोत्रहवण्याहवींषि निर्वपतीति श्रुतो निर्वापः पवमानेष्टिषु चोदकेन प्राप्तः कर्त्तव्यो ने? ति संशये न कर्तव्यः कस्मात् अग्निहोत्रहवण्यभावात्, ययाऽग्निहोत्रं हुतं सा ह्यग्निहोत्रहवणी, न च पवमानेष्टिवेलायामग्निहोत्रं हुतं सम्भवति, विना वाऽग्निहोत्रहवण्यानिर्वापोविगुणत्वादकर्त्तव्य इति प्राप्ते ब्रूमः—अतिदेशेन हि कार्यमुखेन पदार्थेषु प्राप्यमाणेषु हविःसंस्कारार्थतया निर्वापः प्राप्यते तदङ्गभूताग्निहोत्रहवण्यसम्भवाच्च प्राप्यते, न चाप्राप्ताया गुणत्वम्, अतस्तदभावेऽप्यगुणत्वात्कर्त्तव्य एव निर्वापः ॥

वाजपेये मुष्टिलोपाधिकरणम् ।

सू० मुष्टिलोपात्सङ्ख्यालोपस्तद्गुणत्वात्स्यात् ॥ २७ ॥

वाजपेये श्रूयते "बार्हस्पत्यो नैवारः सप्तदशशरावः क्षीरे चरुर्भवती"ति अस्ति तु प्रकृतौ "चतुरो मुष्टीर्निर्वपती"ति चतुःसङ्ख्या मुष्टिद्रव्यञ्च तदुभयमिह चोदकेन प्राप्तं, न च चतुर्भिर्मुष्टिभिः सप्तदशशरावपरिमाणश्चरुः सम्पादयितुं शक्यते, अतोऽवश्यं बाधितव्ये सति किमुभयं बाधितव्यं शरावद्रव्येण मुष्टिद्रव्यं सप्तदशसंख्या या च चतुःसङ्ख्या किं वान्यतरत् तत्रापि किमनियमः? अथ वा मुष्ट्यनुग्रहः? सङ्ख्यालोपः? विपरीतं वे? ति, तत्राविशेषादुभयोर्बाधः, तत्रापि समानकार्यत्वात् द्रव्यं द्रव्येण सङ्ख्याः सङ्ख्ययेत्येकः पक्षः, सप्तदशसङ्ख्याशरावपरिमाणं च यागद्रव्याङ्गं चतुःसङ्ख्या मुष्टिश्च निर्वापाङ्गम्, अतो न तावत्साक्षादेकविषयत्वं येनोभयमुभयेन बाध्येत चतुर्भिर्मुष्टिभिः सप्तदशशरावश्चरुर्न सम्पादयितुं शक्यत इत्यर्थाद्बाधः, तत्रैकबाधेनोपपत्तौ नोभयबाधनं युक्तं, तस्मादन्यतरबाधः

तत्राविशेषादनियम इति द्वितीयः, सङ्ख्याया द्रव्याङ्गत्वात्प्रधानस्य मुष्टिद्रव्यस्यानुग्रहः सङ्ख्यायास्तु बाध इति तृतीयः, न सङ्ख्याया मुष्ट्यङ्गत्वं वाक्यलक्षणसमानाधिकरणद्रव्यसम्बन्धबाधेन द्वितीयाश्रुत्या निर्वापाङ्गत्वावगमादुभयोरपि क्रियाङ्गत्वावगमात्तुल्यत्वं तत्र मुख्यत्वात्सङ्ख्यानुग्रहो जघन्यत्वाच्च मुष्टिलोप इति सिद्धान्तः ॥

धेनुमालभेतेत्यादिश्रुतौ धेन्वादिशब्दानां गवान्विताधिकरणम् ।

**सू० औत्पत्तिके तु द्रव्यतो विकारः स्यादकार्यत्वात् ॥ २८ ॥**

'द्यावापृथिव्यां धेनुमालभेत वायव्यं वत्समैन्द्रमृषभ"मिति गोद्रव्यासाधारणगुणवचनेषु धेन्वादिशब्देषु श्रुतेषु किं चोदकप्राप्तमजद्रव्यं प्रवर्त्तते नेऽति संशयः, तत्र यद्यपि गोरसाधारणं गुणमेते वदन्ति तथाऽपि न गोर्वाचकाः तेनात्र गोर्नोपदेशेन नातिदेशेन प्राप्तिः, अजस्त्वतिदेशेनं प्राप्यते तत्रैव धेन्वादिशब्दा लक्षणया वर्तन्ते, यथाऽजमृषभमित्यादिष्विति प्राप्ते ब्रूमः—नानुमानिकचोदकानुरोधेन श्रुतानां शब्दानां लक्षणावृत्तिर्न्याय्या, तेन यद्यपि गोद्रव्यं न शाब्दं तथाऽपि श्रुतगुणविशेषसम्पादनाय गौरेवालब्धव्यः, चोदकप्राप्तं त्वजद्रव्यं प्रत्यक्षश्रुतगुणविशेषविरोधाच प्राप्यते ॥

वायव्यं श्वेतमालभेतेत्यनेन अजस्यैवालम्भनाधिकरणम् ।

**सू० नैमित्तिके तु कार्यत्वात्प्रकृतेः स्यात्तदापत्तेः ॥ २९ ॥**

यस्तु साधारणगुणवचनः श्वेतादिशब्दः "वायव्यं श्वेतमालभेते"ति स चोदकप्राप्ते ऽप्यजे सम्भवतीति न तत्राजस्य बाधनमिति प्रत्युदाहरणमेतत् ॥

साद्यस्के चित्रायाञ्च खले वाल्यास्तण्डुलस्य च यथाक्रमं खादिरत्व ब्रैहत्वानियमाधिकरणम् ।

**सू० विप्रतिषेधे तद्वचनात्प्रकृतेर्गुणलोपः[1] स्यात्तेन च कर्मसंयोगात् ॥ ३० ॥**

साद्यस्के श्रूयते "खले वाली यूपो भवती"ति तत्र संशयः किं चोदकप्राप्तं खादिरादिकं यूपं छेदनादिभिः कृत्वा सखले वाली कर्त्तव्यः

१ प्राकृतगुणलोपः इति पा० ।

यूपः खले वाली भवतीति वचनव्यक्तिः ? उत यैवोत्तरवेदिभूते खले पूर्वावस्थिता खादिर्यखादिरी वा खले वाली तस्यामेव पशुनियोजनं कर्त्तव्यं या खले वाली स यूपो भवति यूपकार्यकरी भवतीति वचनव्यक्तिरिति, तथा चित्रायामिष्टौ श्रूयते दधिमधुघृतं धाना उदकं तण्डुलास्तत्संसृष्टं प्राजापत्यमिति, तत्रापि चोदकप्राप्ता व्रीहयोऽवघातादिभिस्तण्डुलीकर्त्तव्या ? उत वैहा अवैहा वा लोकसिद्धास्तण्डुला ग्रहीतव्या ? इति, तत्र चोदकानुग्रहाय यूपस्य खले वालीत्वं व्रीहीणां च तण्डुलत्वं यथासिद्धोपादाने हि चोदकप्राप्ताः खदिरादयो व्रीहयस्तत्संस्काराश्च छेदनावघातादयो बाध्येरन् । किं च खले वाली यूपकार्ये भवतीति विधौ यूप—शब्दस्या यूपे तत्कार्यकरे यजमानशब्दस्येव प्रस्तरे गौणी वृत्तिः स्यात्, यूपस्य तु खले वालीत्वविधौ न गौणत्वं, तस्मात्खदिरादयः खले वाली कर्त्तव्याः, व्रीहयश्च तण्डुलीकर्त्तव्या इति प्राप्ते ब्रूमः—यूपस्य खले वालीत्वमदृष्टार्थं विधीयते । खले वाल्यास्तु यूपत्वं दृष्टार्थं पश्वन[1]पक्रमणात्, तस्माद्यथासिद्धैव खादिर्यखादिरी वा खले वाली यूपकार्यं कुर्यात्, तण्डुलाश्च यथासिद्धा एवोपादेयाः, प्रकृतौ हि श्रपणस्य विधानात्प्रकृतिद्रव्यमुपादाय स्वयमेव हविः कर्त्तव्यं विकृतावपि यत्र श्रपणं चर्वादौ तत्रापि प्रकृतिद्रव्यं गृहीत्वा स्वयमेव हविः कर्त्तव्यं तण्डुलेषु श्रपणस्यार्थाभावान्निवृत्तौ न श्रपणकर्त्तव्यताबलेन प्रकृतिद्रव्यप्राप्तिः, प्राप्ते च प्रकृतिद्रव्योपादाने व्रीहियवनियमः, तस्माल्लोकप्रसिद्धा एव तण्डुला वैहा अवैहा वा ग्रहीतव्याः ॥

खले वाल्यां तक्षणाद्यननुष्ठानाधिकरणम् ।

सू० परेषां प्रतिषेधः स्यात् ॥ ३१ ॥

यथासिद्धे खले वाल्युपादानात्खादिरादिकाष्ठं बाध्यमिति स्थितम् अथ छेदनतक्षणादयः संस्काराः कर्त्तव्या ने ? ति सन्देहे चोदकानुग्रहाच्छक्यत्वाच्च कर्त्तव्याः प्रयोजनाभावात्तु न कर्त्तव्याः, छिन्ना हि खले वालीश्लक्ष्णीभूता निखातोच्छ्रिता तस्याः छेदनं तक्षणं निखननमुच्छ्रयणं च लुप्तार्थमकर्त्तव्यम् ॥

---

१ पश्वनपक्रमादिति पा० ।

खले वाल्यां पर्यूहणादिसंस्काराणामनुष्ठानाधिकरणम्।

सू० अर्थाभावे संस्कारार्थत्वं स्यात ॥ ३२ ॥

अथ यत्पर्यूहणपरिवृंहणपरिषेचनादि खले वाल्यां सम्भवत्प्रयोजनं यच्चादृष्टार्थम् अञ्जनप्रोक्षणादि तत्खले वाल्यां भवति नेति संशये न भवतीति ब्रूमः—कुतः यूपार्थत्वात्तेषाम् इह चायूपे खले वाल्यां यूपकार्यकरणाल्लुप्तार्थे पर्यूहणादि न कर्त्तव्यम् उच्यते—न यूपो नामैकः कश्चिदर्थोऽस्ति यदर्थाः संस्काराः किन्तु छेदनप्रोक्षणादिजन्यदृष्टादृष्टरूपाः संस्काराः काष्ठे वर्त्तमाना यूपशब्दाभिधेया नियोजनस्याङ्गभूताः तत्र केषांचिल्लुप्तार्थानां लोपेऽप्यन्येषामलुप्तार्थानां निवृत्तौ नास्ति प्रमाणं, तस्मात्पर्यूहणाञ्जनादयः कर्त्तव्याः ॥

महापितृयज्ञे धानासु अवघातानुष्ठानाधिकरणम् ।

सू० अर्थेन च विपर्यासे तादर्थ्यात्तत्त्वमेव स्यात ॥ ३३ ॥

महापितृयज्ञे श्रूयते "सोमाय पितृमते पुरोडाशं षट्कपालं निर्वपति पितृभ्यो बर्हिषद्भ्यो धानां पितृभ्योऽग्निष्वात्तेभ्योऽभिवा[1]सायै दुग्धे मन्थ"मिति तत्र धानासु हन्तिः कर्त्तव्यो नेति संशये विघातादकर्त्तव्यः, क्रियमाणे हि हन्तौ धानात्वं विहन्येत सक्तवो भवेयुः तस्मादकर्त्तव्योऽवघातः, सत्यं, अपणोत्तरकालं क्रियमाणे विघातः स्यात्, पूर्वं तु हन्तिं कृत्वा पश्चात्पाकः-क्रियते[2] क्रममात्रं बाधित्वा तथा न विहन्यते, न हि क्रमबाधे पदार्थोऽपि बाधितव्यः, तदुक्तं "गुणलोपे च मुख्यस्य क्रिया स्यादि"ति तस्मात्कर्त्तव्योऽवघात इत्येवं भाष्यकारेणाधिकरणं व्याख्यातं, तदिदमनुपपन्नं प्रकृतावपि पूर्वमवघातः ततः पाकः तेन नास्ति क्रमविपर्यासः, पुनरुक्तं च गुणलोपे च मुख्यस्येत्यनेन न्यायेन । ये त्वाहुः न क्रमो नाम कश्चिद्गुणः पदार्थव्यतिरिक्तोऽस्ति यस्य पृथग्बाधं व्यवस्थापयामः, पदार्था एव हि वितताः प्रतीयन्ते तेन केवलस्य क्रमस्य बाधासम्भवात्तद्बाधे पदार्थोऽपि बाधित इत्यवघातो न कर्त्तव्य इत्येतन्निराकरणार्थमिदमधिकरणम् । यत्तु विपर्यासो

१ अभिवान्यायै दुग्धे मन्थमिति पाठस्तु समीचीनः ।
२ क्रियन्ते इति पा० ।

नास्तीति तत्राप्याहुः धानासु श्रपणं कृत्वाऽवघातः प्रकृतौ च विपरीतमि-
त्यस्ति विपर्यास इति यदि विपर्यासः कथं तर्ह्यवघातानुष्ठानं, न हि
क्रमस्य पृथग्बाधः सम्भवति सत्यं, न त्वत्र परमार्थतः क्रमबाधः प्रकृतौ
हि श्रुतेष्वेव व्रीहिष्ववघातः कृतः, तत्रापि श्रुतास्वेव धानास्ववघात इति
नास्ति क्रमविपर्यासः प्रकृताववघात्परं श्रपणम् इह तु विपरीतमित्येतावता
विपर्यासवाचो युक्तिः। ननु धानावस्थायां हन्तिः क्रियमाणो विघातं कुर्यात्
यथा न विघातो भवति तथा कुर्महे सकृदेवानभ्यस्तमवहननं क्रियते, न
च भविष्यति विघात इति तदयुक्तं, संभवति हि पृथक्क्रमस्य बाधः, त
एव हि पदार्था अन्येनान्येन च क्रमेणानुष्ठातुं शक्यन्ते तेन क्रमस्य प्राकृ-
तस्याभावेऽपि पदार्था न निवर्तन्ते। यत्तु श्रपणं कृत्वा ऽवघात इति त"त्पूर्वं
हन्तिं कृत्वा पश्चात्पाकः" कार्य इति भाष्यविरुद्धं यद्यपि श्रपणोत्तरका-
लेऽप्यवघाते विपर्यासो नास्ति श्रुते द्रव्ये ऽवघातकरणादिति तदप्यसारं,
प्रकृतौ हि द्वे द्रव्यश्रवणे पुरोडाशश्रवणं व्रीहिश्रवणं च, तत्र धाना देव-
तासम्बन्धात्पुरोडाशकार्ये वर्तन्ते न व्रीहिकार्ये, प्रकृतौ च व्रीहिविषयोऽ-
वघातो न पुरोडाशविषयः, तेन धानास्वपि चोदकप्राप्तेषु व्रीहिष्वेवाव-
घातो न धानावस्थायां तत्र तु क्रियमाणे हन्तौ क्रमविपर्यासः स्यादेव
धानासु वा ऽवघातकरणे धानात्वं विहन्येत। यत्तु सकृदेवावहनिष्याम
इति तथा सत्यप्राकृतकार्यमदृष्टार्थमवहननं स्यात्, प्रकृतिवत्तु तुषविमो-
कार्थोऽवघातः क्रियमाणो धानात्वं विहन्यात्, तस्मान्नैवमधिकरणं युक्त-
मिति यथावार्त्तिकं व्याख्यास्यामः, न धाना उदाहरणं तत्रैव मन्थ उदा-
हरणं, तत्र पेषणं श्रपणोत्तरकालमर्थाद् भवति तत्प्राकृत? मुताप्राकृत? मिति
संशयः, प्रकृतौ पाकात्पूर्वं पेषणं पाकार्थं भवति न ह्यसति पेषणे पुरोडाश-
निर्वर्तकः पाकः कर्तुं शक्यते, तेन पा[1]कार्थं पेषणं मन्थे तु विनैव पेषणे
न भर्जनरूपः पाकस्तण्डुलावस्थायामेव कृत इति लुप्तार्थं प्राकृतं पेषणं
निवृत्तं भर्जितेषु तण्डुलेषु सक्तुभावापादनाय लौकिकं पेषणमधर्मकं कर्त-

१ पाककार्यं पेषणमिति पा०।

व्यमिति प्राप्ते ब्रूमः—न प्रकृतौ पाकार्थं पेषणं द्वितीयाश्रुत्या पेषणं श्रपणं चोभयमपि हविरर्थम्, अर्थात्तु तयोः पूर्वं पेषणम् इह त्वर्थादेव पश्चात्क्रियत इति क्रममात्रमन्यत्, न च तदन्यत्वे पदार्थान्यत्वं तस्मात्प्राकृतमेव पेषणमिति कर्त्तव्याः पेषणधर्माः ॥

इति शास्त्रदीपिकायां दशमस्य द्वितीयः पादः ॥ २ ॥

—o—

## अथ तृतीयः पादः ।

पशवादौ सामिधेन्यादिप्राकृतेतिकर्तव्यतानुष्ठानाधिकरणम् ।

सू० विकृतौ शब्दवत्त्वात्प्रधानस्य गुणानामधिकोत्पत्तिः सन्निधानात् ॥ १ ॥

अग्नीषोमीयपशौ श्रूयते "एकादश प्रयाजान् यजती"ति तथा चातुर्मास्येषु नव प्रयाजान् यजति नवानुयाजानि"ति तथा वायव्ये पशौ हिरण्यगर्भः समवर्त्तताग्र इत्याघारमाघारयतीति एवमन्यत्रापि यत्र प्राकृतमङ्गमप्राकृतगुणयुक्तं श्रूयते तदुदाहृत्य विचार्यते किं तत्र चोदकेन प्राकृतीतिकर्त्तव्यता प्राप्यते न वे? ति तदर्थमिदं विचार्यते किमेतैर्गुणविशिष्टप्रयाजादिविधिः? उत प्रयाजाद्यनुवादेन गुणमात्रविधि? रिति तत्रातिदेशेन पदार्थानां न स्वरूपतः पर्युपस्थापनमस्ति प्रकारमात्रातिदेशात्, अतो नातिदेशप्राप्त्यङ्गीकरणेन गुणविधिः सम्भवति तस्मात्सङ्ख्यादिविशिष्टाः प्रयाजादय एवात्र विधीयन्ते, एवं च धात्वर्थविधानाच्छ्रुत्यनुग्रहो भवति, ते च प्रयाजादयः प्रकृतौ क्लृप्तोपकारा विकृतौ श्रूयमाणा गृहमेधीयाज्यभागवदतिदेशं निरुन्धन्ति तस्माच प्राकृतीतिकर्त्तव्यताऽतिदिश्यत इति प्राप्ते ब्रूमः—प्रकारद्वारतः प्राप्ते रतिदेशेन कर्मणां तान्यनूद्य गुणः शक्यो बिधातुमिति तद्विधिः ॥ न च सत्यां गतौ न्याय्यं विशिष्टविधिगौरवम् । वाक्यार्थविधिदोषश्च समानः पक्षयोर्द्वयोः ॥ यो ऽपि हि श्रुत्यर्थविधिलिप्सया धात्वर्थं विधित्सति तेनापि गुणवादस्याप्रमादपाठादवश्यं वाक्यार्थविधिरङ्गीकर्तव्यः, तथा सति तत्र संक्रान्ते विधौ

धात्वर्थानुवादेनानेकविधिपरिजिहीर्षया प्रकार[1]द्वारा प्राप्तिमालोच्य तद-नुवादेन विधिर्गुणमात्रं विधत्ते, तस्मादेवंजातीयकेषु गृहमेधीयन्याया-भावादस्त्यतिदेशः ॥

वायव्यपशौ हिरण्यगर्भः इत्यादिमन्त्रस्योत्तरस्मिन्नाघारे गुणत्वाधिकरणम् ।

सू० हिरण्यगर्भः पूर्वस्य मन्त्रलि-ङ्गात् ॥ २ ॥

वायव्ये पशौ श्रूयते "हिरण्यगर्भस्समवर्तताग्र" इत्याघारमाघार-यतीति तत्प्राकृताघारानुवादेन मन्त्रविधिरिति स्थितं, प्रकृतौ च द्वावा-घारौ पूर्वः प्राजापत्यो ऽमन्त्रकश्च, उत्तरस्त्वैन्द्रः समन्त्रकः, तदिह किं पूर्वस्याघारस्य मन्त्रविधिः? उतोत्तरस्ये? ति संशये मन्त्रस्य प्रजापतिलिङ्गत्वात् "प्रजापतिर्वै हिरण्यगर्भः प्रजापतेरनुरूपत्वाये" ति च वाक्यशेषात्पूर्वस्येति प्राप्ते ब्रूमः पूर्वस्मिन्मन्त्राभावाच्च मन्त्रकार्यमस्ति तत्र मन्त्रविधौ मन्त्र-कार्यमप्राकृतं कल्प्यं स्यात्, उत्तरत्र तु प्रकृतावेव मन्त्रविधानादस्ति मन्त्र-नियमजन्यमदृष्टं तत्र मन्त्रविधानं सुकरं मन्त्रलिङ्गं त्वैन्द्रेऽप्यविशिष्ट-मिति दर्शितं भाष्ये वाक्यशेषोऽपि प्रजानां पतिः प्रजापतिरित्येवमिन्द्र एवोपपन्नः, यो[2] हि खलु वाव प्रजापतिः स एवेन्द्र इति चैकत्वादुपपत्ति. र्वाक्यशेषस्य पूर्वाघारस्य चाहत्यैवामन्त्रत्वं दृश्यते, न स्वाहाकारो न मन्त्रं चाहेति तस्मादुत्तरस्य मन्त्रः ॥

चातुर्मास्येषु सोमेष्वासा-दननियोजनयोः प्राकृतगुण-विधित्वाधिकरणम् ।

सू० संस्कारे तु क्रियान्तरं तस्य वि-धायकत्वात् ॥ ३ ॥

उत्करे वाजि[3]नमासादयति परिधौ पशुं नियुञ्जीते"त्यत्र संशयः किमप्राकृतमासादनान्तरं नियोजनान्तरं वा दृष्टार्थकमुत्करपरिधिविधि-विशिष्टं विधीयते? उत प्राकृतयोरेवासत्तिभावानपक्रमणरूपदृष्टप्रयोजन-योरुत्करपरिधिविधि? रिति तत्र तीरणायत्वात्तुङ्गत्वाच्चोत्करस्य परिधेश्चा-

---

१ प्रकारद्वारप्राप्तिमालोच्येति पा०।

२ योऽपि खलु वाव इति पा० ।

३ उत्करे वाजिनमासादयन्ति इति पा० ।

णीयस्त्वाच्च दृष्टकार्यमासादनं, नियोजनं च शक्यं कर्तुम् अतो ऽप्राकृतकार्यमन्यद्विधीयते, एवं च धात्वर्थविधानाच्छ्रुत्यनुग्रहः, अन्यथा वाक्यार्थविधिः स्यादित्येवं प्राप्ते ब्रूमः—न सम्भवति गुणमात्रविधौ विशिष्टविधिर्युक्तः साधारणश्च वाक्यार्थविधिः गुणस्यावर्जनीयत्वात्, अतः प्राकृतयोर्गुणविधिः, न चाशक्यता पृथ्वय[1]तामुत्करणस्य स्थविमानं च परिधेराश्रित्य प्राकृतकार्यसम्पादनात् ॥

अग्निचयने प्राकृतवैकृतोभयदीक्षाहुतीनामनुष्ठानाधिकरणम् ।

सू० षड्भिर्दीक्षयतीति तासां मन्त्रविकारः श्रुतिसंयोगात् ॥ ४ ॥

अग्नौ प्रकृतितो दीक्षाऽऽहुतयः षट्प्राप्तास्तासां च पञ्चमन्त्राः प्रकृतित एव प्राप्ताः "आकूत्यै प्रयुजे ऽग्नये स्वाहे"त्यादयः अत्रापरे षण्मन्त्राः "आकूतिमग्निं प्रयुजं स्वाहे"त्यादयः, ते च दीक्षार्थतया विनियुक्ताः षड्भिर्दीक्षयतीति दीक्षाहुतीनां चाभ्यासः श्रूयते "द्वादश जुहोती"ति, तत्र संशयः किं वैकृतैर्मन्त्रैः प्राकृता बाध्यन्ते समुच्चीयन्ते वे? ति, तत्र प्रत्यक्षपाठेन प्रत्यक्षवचनेन च "वैकृताः प्राकृतान्मन्त्रान् बाधेरन्नेककार्यतः । यद्यपि द्वादश जुहोतीति वचनाद्धोमानामभ्यासः तथाऽपि वैकृतानामेव प्रत्यक्षवचनविहितानां चोदकप्राप्तप्राकृतमन्त्रबाधेन होमाङ्गत्वात्तैरेवाभ्यस्तैर्द्वादशापि होतव्या इति प्राप्ते ब्रूमः—न प्रत्यक्षेण वाक्येन होमार्थं वैकृताः श्रुताः । दीक्षार्थताबलात्तेषां होमाङ्गत्वं प्रकल्प्यते ॥ सकृत्प्रयोगमात्राच्च तादर्थ्यमुपपद्यते । वैकृतैः प्राकृतास्तस्मात्समुच्चेया न बाधनम् ॥ षड्भिर्दीक्षयतीति दीक्षार्थता श्रुता सा च स्वाहाकारलिङ्गानां होमद्वारेणेति दीक्षार्थत्वसिद्धये होमाङ्गत्वं कल्प्यते सकृत्प्रयुक्तैरेव च षट्सु होमेषु दीक्षार्थतासिद्धेर्नाभ्यासे प्राकृतबाधे वा प्रमाणमस्ति, तेनाभ्यासवशेन होमानां द्वादशत्वान्मन्त्राणामपि प्राकृतवैकृतानां समुच्चयः ॥

[1] पृथ्वयतामुत्करस्येति पा० ।

पुनराधानेऽग्न्याधानदक्षिणानां निवृत्त्यधिकरणम् ।

सू॰ अग्न्या[1]धेयस्य नैमित्तिके गुणविकारे दक्षिणादानमधिकं स्याद्वाक्यसंयोगात् ॥ ५ ॥

अस्ति पुनराधेयं तच्चाग्न्याधेयधर्मकं तत्र श्रूयते "पुनर्निष्कृतो रथो दक्षिणा पुनरुत्स्यूतं वास" इत्यादि सेयं दक्षिणा किमग्न्याधेयस्य दक्षिणा नामैका देयेत्येवमादीनां निवर्त्तिका न वे? ति चिन्तायां [2]सत्यप्येककार्यत्वे वचनादुभयोर्ददातीति समुच्चयप्राप्तावुच्यते विध्यश्रवणाद्विध्यन्तरशेषत्वाच्चास्य समुच्चयविधावसामर्थ्याद्दक्षिणयोश्चानत्यर्थत्वमनेककार्यत्वेनैककार्यत्वाद्वैकृतीभिः प्राकृतीनां बाधः कथं पुनरुभयोर्ददातीति निर्देशः—उच्यते कृत्वा ह्यग्न्याधेयं पश्चात्पुनराधेयं क्रियते तेन पूर्वदत्तसम्प्रति दीयमानापेक्षयोभयदाननिर्देशः ॥

आग्रयणे वासोवत्साभ्यामन्वाहार्य्यस्य निवृत्त्यधिकरणम् ।

सू॰ वासो वत्सं च सामान्यात् ॥ ६ ॥

"आग्रयणे वासो दक्षिणा वत्सः प्रथमजो दक्षिणे" ति श्रुतं वासो वत्सं समानकार्यत्वात्प्राकृतस्यान्वाहार्यस्य निवर्त्तकमिति सिद्धमेवोत्तरविवक्षाये प्राप्यते ॥

आग्रयणे वासोवत्सयोरन्वाहार्य्यधर्मानुष्ठानाधिकरणम् ।

सू॰ अर्थापत्तेस्तद्धर्मा स्यान्निमित्ताख्याभिसंयोगात् ॥ ७ ॥

अन्वाहार्यकार्यापत्तेर्वासोवत्सन्त[3]द्धर्मांल्लभेत इत्येतदपि प्राप्तिसूत्रमेव ॥

आग्रयणे वत्से पाकाभावाधिकरणम् ।

सू॰ दाने पाकोऽर्थलक्षणः ॥ ८ ॥

अन्वाहार्यपाको वत्से कर्तव्यो नेति संशये चोदकानुग्रहाय पक्त्वा वत्सन्तदीयं मांसं दक्षिणात्वेन देयमिति मन्यते, श्रुतन्तु वत्सद्रव्यं

---

१ आग्न्याधेयस्येति पा॰ ।

२ चिन्तायां सत्यां सत्यप्येककार्यत्वे पा॰ ।

३ लभते इति पा॰ ।

पाकेन नश्येत्, अशृतं च मांसं दीयेत, वत्स-शब्दो वा मांसलक्षणार्थः स्यात्, न चैतच्याय्यं, तस्माच्च वत्सपाकः ॥

आग्रयणे वाससि पाकाभावाधिकरणम् ।

**सू० पाकस्य चान्नकारितत्वात् ॥ ९ ॥**

अथ वाससि पाकः स्यान्नेति संशये विरोधाभावात् पच्येत प्रयोजनाभावा[1]त्त्वपाकः, प्रकृतौ हि दक्षिणाभूतान्नसंपत्त्यर्थः पाको नादृष्टार्थः तस्माच्च वाससः पाकः ॥

आग्रयणे वासोवत्सयोरभिघारणाभावाधिकरणम् ।

**सू० तथाऽभिघारणस्य ॥ १० ॥**

अभिघारणमन्वाहार्यधर्मः किं वासो वत्से कर्त्तव्यं, नेति प्रकृतावदृष्टार्थत्वादिहाविरोधात्कर्त्तव्यं, नैवं, स्वादिमार्थं हि तद्दृष्टेनैव प्रकृतावन्नानामुपकरोति, न च वासोवत्सयोः स्वादिम्ना प्रयोजनमस्ति, अतोऽभिघारणनिवृत्तिः ॥

ज्योतिष्टोमे गवामेव द्वादशशतस्य दक्षिणात्वाधिकरणम् ।

**सू० द्रव्यविधिसन्निधौ संख्या तेषां गुणत्वात्स्यात् ॥ ११ ॥**

ज्योतिष्टोमे श्रूयते "गौश्चाश्वश्चाश्वतरश्च गर्द्दभश्चाजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादश शतं दक्षिणे"ति, तत्र संशयः किमेकैकस्य गवादेर्द्रव्यस्य द्वादशशतसङ्ख्या ? उतैकस्य यस्य कस्य चित् ? अथ वा माषाणाम् ? आहोस्वित्सर्वैः सहितैः सम्पाद्या ? किं वैकजातीयस्यैवानियमेन ?। यद्वा पशूनां ? तदापि किमनियमो ? ऽथवा गवा ?मिति तत्र तस्येति षष्ठ्यन्तेन गवादीनि प्रधानत्वेनो[2]पदिश्य तद्गुणभूता सङ्ख्या विधीयमाना प्रतिप्रधानं सम्बध्यते, अतः प्रत्येकं द्वादशशतमिति प्रथमः पक्षः, नात्र गवाद्युद्देशेन सङ्ख्या विधीयते, न ह्येकेन वाक्येन गवादीनां दक्षिणात्वेन विधानं तदङ्गत्वेन च सङ्ख्या विधानं सम्भवति, तस्माद्गवादीनि द्रव्याणि सङ्ख्या च दक्षिणया संबध्यन्ते सोभयविशिष्टा विधीयते तत्रैकस्मिन्द्रव्ये निविष्टायां ,सङ्ख्यायां तद्विशिष्टा दक्षिणाऽनु-

१ प्रयोजनाभावाच्च पाक इति पा० ।
२ प्रधानत्वेनोद्दिश्य पा० ।

ष्ठिता भवति, तस्मादेकस्य सङ्ख्या तत्राप्यनियमः विशेषाभावात्। अथवा माषाणां स्यादानन्तर्यात् नैतदपि युक्तं च-शब्दश्रुत्या ह्यन्यसहिता माषा निर्द्दिष्टाः तेनान्यसहितानां माषाणां सङ्ख्या तेषां च बहुत्वात्तस्येति प्रतिनिर्द्देशासम्भवात् तस्येति तु क्रतुनिर्देशोऽङ्गीकर्त्तव्यः। यद्वा गवादिसमाहाराभिप्रायं तस्येत्येकवचनं यदा च क्रतुनिर्द्देशः तदा यद्यपि च-शब्दो न स्यात्तथाऽपि गवादिद्रव्यविशिष्टा द्वादशशतसङ्ख्या विशिष्टा च दक्षिणा अतः सहितानि च गवादीनि दक्षिणा नैकैकमतो दक्षिणा परिच्छेदिका सङ्ख्या सर्वेषु सहितेषु निवेष्टुमर्हति, तस्मात्सर्वेषां सङ्ख्या, नैवं न हि तस्येति शब्दो वाक्यगतेन द्रव्येण सम्बन्धं लभमानः प्रकृतिविशेषञ्च कुर्वन्प्रकृतेन क्रतुना सम्बन्धमानर्थक्यं चावलम्बते, तस्मात्तस्येति गवादीनां निर्द्देशः तत्रैकवचनान्तत्वाच्च सहितानां सर्वेषां निर्द्देशः। नापि समाहारस्य तस्याशाब्दत्वात्॥

किं त्वेकजातीयकस्य, तत्राप्यनियमो विशेषाभावात्। अथवा पशूनामेव न माषादीनां तेषामाढकादिपरिमाणान्तरापेक्षया सङ्ख्या व्यवहारो लोके न स्वरूपतः भृतित्वाभावादिति दर्शितं भाष्ये, अत एव माषैरप्यनन्तरैर्न सम्बध्यते, अतः पशूनामेव, तत्राप्यनियमो ऽविशेषात्, एकवचनान्तत्वाच्च तस्येति न बहुवचननिर्द्दिष्टानां माषादीनां निर्द्देशः। अत एवाजावीनामपि न निर्द्देशः गवादीनां चत्वारि परिशिष्टानि तत्र महोपकारकत्वादप्रतिषिद्धत्वान्मुख्यत्वाच्च गवां निर्द्देशः, तेनायमर्थः गवादिद्रव्याणि तत्र च तस्य गोद्वादशशतं दक्षिणेति तस्माद्गवामेषा सङ्ख्या॥

विभज्य गोदक्षिणाया दानाधिकरणम्।

सू० तच्च दानं विभागेन प्रदानानां पृथक्त्वात्॥ १२॥

किमेषा दक्षिणा ऋत्विग्भ्यो विभज्याविभज्य वा देया? किमविभज्यैव? उत विभज्यैवे? ति संशये विशेषाश्रवणादनियमः। अथ वा "ऋत्विग्भ्यो दक्षिणां ददाती"ति दानाङ्गत्वेन ऋत्विग्बहुत्वस्य विवक्षितत्वादविभज्यैव सहितेभ्यो देया न विभज्यैकैकस्मै बहुवचनविरोधादिति प्राप्तेऽभि-

धीयते—"ऋत्विक्परिक्रयार्थेन दानमेतदिति स्थितम्। तेन तेषां प्रधानत्वाद्धुत्वं न विवक्षितम्", अतः प्रतिप्रधानावृत्तेरेकैकस्यैव तद्दानं, न चानियमः आनमनार्थं हि तद्दानं, यदि च दीयमानं द्रव्यमात्मोपयोगक्षमं भवति तेन तेषामानतिर्नान्यथा तेनात्मीयं द्रव्यमृत्विजामुपयोगक्षमं कुर्यादिति दानविधेरर्थः, विभज्य च ददता सम्पूर्णं तदनुष्ठितं भवति परिषदे तु ददता न तत्सम्पूर्णमनुष्ठितं स्यात्, पुनर्विभागापेक्षत्वात्तेषामुपयोगस्य "तु थो वो विश्ववेदा विभजत्वि"ति च मन्त्रवर्णस्यापाक्षिकत्वात् छागन्यायेनापि सिध्यति विभागः, यत्र त्वेकमेव द्रव्यं दक्षिणा यथा "धेनुर्दक्षिणाऽन्वाहार्यो दक्षिणे"ति तत्र विभागासम्भवादविभज्यैव दानम् ॥

ज्योतिष्टोमे समाख्यानुसारेण दक्षिणाविभागाधिकरणम् ।

सू० समं स्यादश्रुतित्वात् ॥ १३ ॥

स्थिते विभागे चिन्त्यते किं समो विभागः स्या? दुत प्रयासानुरूपोऽथवा समाख्यानुरूप? इति, विशेषाश्रवणात्साम्ये लौकवद्वा प्रयासानुरूप्ये प्राप्ते द्वादशाहे दीक्षा क्रमवाक्यगतार्द्धादिसमाख्यानात् ब्राह्मणाच्छंसिप्रभृतीनां तदनुरूपो विभागः प्रकृतावध्यवसीयते ॥

भूर्नामैकाहे "तस्य धेनुः" इत्यनेन कृत्स्नक्रतुदक्षिणाबाधाधिकरणम् ।

सू० तस्य धेनुरिति गवां प्रकृतौ विभक्तचोदितत्वात्सामान्यात्तद्विकारः स्याद्यथेष्टिर्गुणशब्देन ॥ १४ ॥

एवं प्रकृतौ दक्षिणास्थितिर्निरूपिता, तस्यां हि निरूपितायां विकृतिषु बाधाबाधविचारः सुखेन वर्तिष्यत इतीदानीं बाधाबाधौ विचार्येते, अस्ति भूर्नामैकाहः "अथैष भूर्वैश्वदेवस्तस्य धेनुर्दक्षिणे"ति, तत्र संशयः किं धेनुर्गवामेव विकार? उत सर्वस्य गवाश्वादे? रिति, तदर्थमिदं विचार्यते किं गवादीनां प्रत्येकं दक्षिणात्वम्? उत सहिताना? मिति, तत्र प्रत्येकं दक्षिणात्वं न्याय्यं, कथं गवादिशब्दा जातिवचनाः दक्षिणा-शब्दो गुणवचनः, स हि भृतित्वेन गुणेन वर्तते, जातिगुणयोश्च जातिर्विशेष्यत्वेन गुणस्तु विशेषणत्वेन नीलमुत्पलं शुक्लो गौरित्यादिषु सार्वजनीनमेतत्, यच्च विशेष्यं

तत्प्रधानमेव अतो गवादीनां प्राधान्यं प्राधान्यात्तेषां गुणभूता दक्षिणा प्रत्येकमेतैः सम्बध्यते गवादयो दक्षिणारूपाः कार्या इति, एवं बह्वीषु दक्षिणासु यस्याः कस्याश्चित्स्थाने निविशमानाया धेन्वा दक्षिणात्वमुपपन्नं, तत्र गोलिङ्गेन धेनुत्वेन गवां निर्वृ[1]त्तिर्गम्यते, तस्माद्गवामेव निर्वर्[2]त्तिका धेनुर्नाश्वादीनामिति प्राप्ते ऽभिधीयते "गवादीनां प्रधानत्वे दृष्टं नास्ति प्रयोजनम्। ऋत्विगानमनार्था तु दक्षिणा सप्रयोजना" ॥ यदि च द्रव्योपसर्जनत्वेन दक्षिणोच्येत ततो गुणवचनत्वादाश्रयभूतगवादिद्रव्यगतवचनप्राप्तेर्गवादीनां बहुत्वाद्दक्षिणा--शब्दो बहुवचनान्तः स्यात्, गुणवचनशब्दस्य व्याकरणे परोपसर्जनार्थत्वात्स्वप्राधान्ये तु नैष दोषो भवति, तथा हि यदाऽऽनतिक्रान्तदक्षिणेत्युच्यते एका चानतिरिति तदुपाधिको दक्षिणाशब्द एकवचनं लभते, गवादीनि तु तत्र विशेषणानि, न च विशेषणवशेन विशेष्ये सङ्ख्या संभवति यथाऽग्नीषोमौ देवतेति तेनानेकगवाद्यात्मिकैका दक्षिणा विधीयते, गवादिरूपया च भृत्या दृष्टं प्रयोजनमृत्विगानमनं भृतिरूपसंस्कृतैर्गवादिभिर्नास्ति दृष्टं, तस्मादेका दक्षिणा गवाद्यात्मिका प्रकृतौ विकृतौ धेन्वात्मिका जातेति समस्तगवादिनिवृत्तिः ॥

यस्य सोममपहरेयुः, इत्यादौ एकां गाम् इत्यादिना गोगतसङ्ख्याबाधाधिकरणम्।

सू० एका पञ्चेति धेनुवत् ॥ १५ ॥

"यदि सोममपहरेयुरेकां गां दक्षिणां दद्यादभिदग्धे सोमे पञ्च गा दद्या"दिति श्रुतम्, तत्र संशयः किमेका पञ्च गवां निवर्त्तिका किं वा सर्वस्य दाक्षिण्यस्येति, तदर्थमिदं विचार्यते किमेकां दद्यादिति सम्बन्ध? उतैकां गा?मिति तत्र "द्वितीयाश्रुतिसामर्थ्याद्ददाति क्रियया ऽन्वयः। एकया पञ्चभिश्चातः सर्वं देयं निवर्त्तते ॥ उच्यते ददातिसङ्गतौ सत्यां गोशब्दे लक्षणा भवेत्। पाक्षिको वा ऽनुवादः स्याद्द्विधा वाक्यं तु भिद्यते" ॥ बहुषु गवादिषु चोदकप्राप्तेषु एकां दद्यादिति विहितं किं तदेकमित्यनिर्द्दिशा-

१ निवृत्तिर्गम्यते इति पा०।
२ विवर्त्तिका इति पा०।

च्चोदकप्राप्तेषु यत्किंचिदिति गम्यते तत्र गामित्यश्वादीनामप्युपलक्षणार्थं स्यात्, गोरपि वा पक्षे प्राप्तेः पाक्षिकोऽनुवादः स्यात्, न चैतदुभयमपि न्याय्यम् । अथ त्वेकां दद्यात्तां च गामिति विधीयते ततः प्राप्तक्रियाऽनुवादेनानेकार्थविधानाद्वाक्यं भिद्येत, यदि तु गां दद्यादिति गौरेव दक्षिणा दाने विधीयते ततस्तस्याश्चोदकप्राप्तैव द्वादशशतसङ्ख्या परिच्छेदिका प्राप्तेति, पञ्चैकशब्दावनर्थकौ स्यातां विधाने वाक्यभेदः, अथ धेनुवद्विवक्षितैकसङ्ख्य गोविधानादेकशब्देऽनुवादः तथाऽप्यानर्थक्यं पञ्चशब्दस्त्वननुवाद एव, तस्माच्छब्दानर्थक्यपरिजिहीर्षया श्रुतिलक्षणमपि क्रियासम्बन्धमविधाय वाक्यलक्षणो गोसङ्ख्यासम्बन्ध एव विधीयते । यद्वा भवतु सङ्ख्ययोर्दानेनैवान्वयः तथाऽपि ते प्रातिपदिकाभिहितसङ्ख्यात्वसाम्याद्द्वादशशतसंख्यास्थाने निविशेते, सा च प्रकृतौ गोपरिच्छेदनैवोपकृतवतीति तत्स्थानपतिते एकपञ्चसंख्ये गामेव परिच्छिन्द्यातामित्यश्वादीनामनिवृत्तिः ॥

साद्यस्के त्रिवत्सेन सर्वेषां क्रयार्थानां बाधाधिकरणम् । सू॰ त्रिवत्सश्च ॥ १६ ॥

त्रिवत्सः साण्डः सोमक्रयण इत्यत्र तु साण्डानुवादेन त्रिवत्सविधौ सत्यग्नीषोमीयादिष्वपि प्रसङ्गात्सोमक्रयण एव त्रिवत्सो विधीयत इति सर्वाणि क्रयद्रव्याणि निवर्तन्ते इति विशेषः ॥

अश्वमेधे प्राकाशाविन्यनेनाध्वर्युभागबाधाधिकरणम् । सू॰ प्राकाशौ तथेति चेत् ॥ १७ ॥

अश्वमेधे श्रूयते "प्राकाशावध्वर्यवे ददाती"ति, तत्र संशयः किं प्राकाशौ कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्तकौ ? उताध्वर्युभागस्य निवर्त्तकाविति, यदि प्राकाशौ ददातीति सम्बन्धः ततः कृत्स्नस्य, अथ प्राकाशावध्वर्यव इति ततस्तद्भागस्यैव तत्र "तदानन्तर्यसंप्राप्तं बाधित्वाऽध्वर्युसङ्गमम् । द्वितीयाश्रुतिसामर्थ्याद्ददातीति क्रियान्वयः ॥ दानञ्च चोदकप्राप्तमुद्दिश्यते न चोद्देश्यमध्वर्युणा शक्यं विशेष्टुं, तस्मादध्वरं युङ्क्ते इत्येवमध्वर्यु-शब्दं कथंचिदृत्विङ्मात्रे व्याख्याय दानमात्रे प्राकाशविधिरिति

कृत्स्ननिवृत्तिः, उच्यते ऽध्वर्युसम्बन्ध एव प्राकाशयोरिह विधीयते, अथवा पूर्वं दानं द्वाभ्यां विशेषितम् अध्वर्यु-शब्दस्यानर्थक्यभयाच्च दानमात्रे विधानम्, अतः क्रियान्वयनिमित्तो यः पश्चात्तनः सम्प्रदानस्याध्वर्योः सम्प्रदेयभूतयोश्च प्राकाशयोर्मिथः सम्बन्धः स एव विधीयते? अथ वा ऽध्वर्यु-शब्दस्यानर्थक्यपरिजिहीर्षयैव दानान्तरमेवापूर्वमध्वर्युप्राकाशविशिष्टं विधीयते तेन च दृष्टार्थत्वादध्वर्य्वानतिसिद्धेस्तद्भागः प्राकृतो निवर्त्तेत इति न कृत्स्ननिवृत्तिः।

उपहव्ये अश्वेन कृत्स्नक्रतुदाक्षिण्यस्य बाधाधिकरणम्।

सू॰ धेनुवच्चाश्वदक्षिणा स ब्रह्मण इति पुरुषापनयो यथा हिरण्यस्य ॥ १८ ॥

उपहव्यो निरुक्त इत्युपहव्यसञ्ज्ञकमेकाहं विधाय श्रूयते "अश्वःश्यावो दक्षिणा स ह्यनिरुक्तः स ब्रह्मणे देय" इति, किमयमश्वो ब्रह्मभागस्य निवर्त्तकः? किं वा कृत्स्नस्य क्रतुदाक्षिण्यस्ये? ति, तत्र ब्रह्मणे देय इति वचनाद् ब्रह्मणे दीयमानस्तस्यैवानतिं कुर्वंस्तद्भागमेव निवर्त्तयति प्राकाशवदध्वर्युभागं पुरुषान्तराणां चानत्यर्थं चोदकप्राप्तं दाक्षिण्यं दातव्यमेवेति प्राप्ते ब्रूमः द्वे ह्येते वाक्ये क्रतुसंयुक्तमेकम् अश्वःश्यावो दक्षिणेति पुरुषसंयुक्तमपरं ब्रह्मणे देय इति तत्र पूर्वेण वाक्येनास्मिन् क्रतावश्वो दक्षिणेत्यश्वेनानतिः कार्येति विहिते यदन्यदस्मिन् क्रतौ चोदकेनानत्यर्थतया प्राप्तं तत्सर्वं धेनुन्यायेन निवर्त्तते, स चाश्वः क्रतौ भृतित्वेन विहितः सर्वर्त्विजां दातव्यः प्राप्तः सन्नुत्तरेण वाक्येन पुरुषान्तरेभ्यो ऽपनीय ब्रह्मणे दीयते तेन पुरुषान्तराणां विनैव दक्षिणया प्रकारान्तरेणानतिः कर्त्तव्येति कृत्स्ननिवृत्तिः॥

ऋतपेये सोमचमसेन कृत्स्नक्रतुदाक्षिण्यबाधाधिकरणम्।

सू॰ तथा च सोमचमसः ॥ १९ ॥

ऋतपेये श्रूयते "औदुम्बरः सोमश्चमसो दक्षिणा सप्रियाय सगोत्राय ब्रह्मणे देय" इति, तत्र पूर्ववत्संशयपूर्वोत्तरपक्षाः, का पुनर्विशेषाशङ्का पूर्वत्र द्वे एव वाक्ये इह त्वेकमिदं वाक्यम् अतः प्रथमं क्रतुसंयोगा-

भावाद् ब्रह्मभागस्यैव निवृत्तिरिति विशेषा शङ्का, यद्यप्येकं वाक्यं तथाऽपि दक्षिणासंयोगात्सर्वनिवृत्तिरिति केचिदेवं वर्णयन्ति न त्वेतद्युक्तम् अत्रापि द्वे एव वाक्ये सोमचमसो दक्षिणेत्येकं स ब्रह्मणे देय इत्यपरं स्पष्टमेवातो नायं विशेषः, सिद्धान्तोऽप्ययुक्तः सति ह्येकवाक्यत्वे ब्रह्मभागस्यैव निवृत्तिः स्यादिति वक्ष्यामः, तस्मादेवं वक्तव्यम् अत्र हि केषां चिद्दक्षिणाद्रव्याणां प्रतिषेधः श्रूयते असौ सत्यां प्राप्तौ घटते तस्मान्नूनं सोमचमसः सर्वस्यानिवर्त्तक इति विशेषाशङ्का सोमचमसस्तुत्यर्थोऽयमर्थवादो यत्स्नून्दद्यात्सोऽनृतं कुर्यादित्यादिनं प्रतिषेधः तस्मात्पूर्ववत्सर्वनिवृत्तिः ॥

सोमचमसेन कृत्स्नदक्षिणापुरुषान्तरयोर्बाधाधिकरणम् ।

सू० यदि तु ब्रह्मणस्तदूनं तद्विकारः स्यात् ॥ २० ॥

सू० " सर्वं वा पुरुषापनयात्तासां क्रतुप्रधानत्वात् " इदं सूत्रद्वयं पूर्वोत्तरपक्षप्रयोजनकथनार्थत्वेन व्याख्याय पुनरन्यथा व्याख्यातं सोमचमसो ब्रह्मणे दक्षिणा देय इत्येकमिदं वाक्यमिति कृत्वा चिन्त्यते यद्येकं वाक्यं तदाऽपि किं कृत्स्नस्य क्रतुदाक्षिण्यस्य निवृत्तिः? उत ब्रह्मभागस्यैवे ? ति दक्षिणासंयोगात् दक्षिणायाश्च चोदकेनैकस्याप्राप्तत्वात्तत्संयुक्तश्चमसः सत्यपि ब्रह्मसंयोगे कृत्स्नां दक्षिणां निवर्तयेत्, इतरथा हि ब्रह्मभागे दक्षिणावयवे दक्षिणा-शब्दो लक्षणया स्यात्, तस्माद्दक्षिणासंयोगात्कृत्स्ननिवृत्तिः, ब्रह्मसंयोगाच्च पुरुषान्तरापनय इत्येवमुत्सूत्रं पूर्वपक्षं कृत्वा यदि तु ब्रह्मण इति सिद्धान्ते वर्णयितव्यम् एकवाक्यत्वे ब्रह्मभागस्यैव निवृत्तिः ब्रह्मणे दक्षिणात्वेन सोमचमसो देय इति न खल्वेकं वाक्यं सोमचमसः क्रतोर्दक्षिणा नान्यत्सोऽपि तु ब्रह्मणे देयो नान्येभ्य इत्यर्थद्वयं शक्नोति विधातुं भिद्येत हि तथा वाक्यन्तस्माद्दक्षिणावयवे ब्रह्मभागे दक्षिणा-शब्दमङ्गीकृत्य तत्रैव सोमचमसो विधातव्यः । किं च दक्षिणा-शब्दो भृतिवचनः स च कर्मापेक्षयाऽपि प्रवर्त्तते अस्मिन् कर्मणीयं भृतिरिति, कर्त्रपेक्षयाऽपि प्रवर्त्तते अस्य पुरुषस्य कुर्वाणस्येयं भृतिरिति, तदिह यदि द्वे वाक्ये ततो यत्पुरुषविशेषसंयुक्तं तत्प्रकरणात् क्रतुना सम्बध्यमानं क्रत्वपेक्षयैव दक्षिणात्वं

चमसस्य विदधत् क्रतुगतं कृत्स्नं दाक्षिण्यं निवर्त्तयेद्, यदा पुरुषविशेष-संयुक्तमेकं वाक्यं तदा तदपेक्षयैव दक्षिणात्वं चमसस्य विदधत्तद्भागमेव निवर्त्तयति, तद्भागश्च यद्यपि क्रत्वपेक्षया दक्षिणावयवस्तथाऽपि ब्रह्मापेक्षया भृतित्वान्मुख्यैव दक्षिणेति न लक्षणाप्रसङ्गः, तस्मादेकवाक्यत्वे ब्रह्मभागस्यैव निवृत्तिः सर्वं वा पुरुषापनयादिति कृत्वा चिन्तोद्घाटनम् ॥

वाजपेये रथस्य भाग-नियामकताधिकरणम् ।

सू० यजुर्युक्ते त्वध्वर्योर्दक्षिणाविकारः स्यात् ॥ २१ ॥

वाजपेये "सप्तदश रथाः सप्तदश दास्य"इति दक्षिणां विधाय श्रूयते "यजुर्युक्तं रथमध्वर्यवे ददाती"ति तत्र संशयः किं यजुर्युक्तो रथोऽध्वर्युभागं निवर्त्तयेन्नेति? तत्र "प्राकाशवद्यजुर्युक्तः स्यात्तद्भागस्य बाधकः । न चायं बाधकस्तस्य प्राप्तस्य नियमो ह्यसौ ॥ प्राकाशौ ह्यपूर्वावध्वर्य्वानतिकरत्वेन विधीयमानौ युक्तं तत्र यत्तद्भागं प्राकृतं बाधेते इति, इह तु सप्तदशरथा द्रव्यान्तराणि च वाजपेयस्य दक्षिणात्वेन विहितानि इति तत्र यजुर्युक्तस्यापि रथस्य प्राप्तमेव दानं सत्यध्वर्यवे ऽन्यस्मै वा कस्मैचिद्दातव्यः सचाध्वर्योर्नियम्यते, ततश्च नायमर्थः यदध्वर्यवे ददाति तद्यजुर्युक्तं रथमिति किं तर्हि यजुर्युक्तं यद्ददाति तदध्वर्यव इति तस्य च द्रव्यान्तरसहितस्यैव दानं प्राप्तमिति तादृशस्यैव नियमाच्च देयान्तरनिवृत्तिः, अध्वर्युभागे तु यथा प्राप्ते यजुर्युक्तो नियम्यते ॥

इति शास्त्रदीपिकायां दशमाध्यायस्य तृतीयः पादः ॥ ३ ॥

———o———

## अथ चतुर्थः पाद आरभ्यते ॥

———∞———

अग्न्यादौ नारिष्टहोमाविभिर्नक्षत्रेष्ट्यादीनां समुच्चयाधिकरणम् ।

सू० प्रकृतिलिङ्गासंयोगात् कर्मसंस्कारं विकृतावधिकं स्यात् ॥ १ ॥

नक्षत्रेष्टौ श्रूयते "सोऽनुजुहोती"ति[1] तत्र मन्त्रा आम्नाता "अग्नये स्वाहा कृत्तिकाभ्यः स्वाहा" इत्येवमादयः सन्ति च प्रकृतौ नारिष्टहोमाः

---

१ सोऽत्र जुहोतीति पा० ।

तत्र संशयः किं वैकृतैरुपहोमैः प्राकृता नारिष्टहोमा बाध्यन्ते? किं वा समुच्चय? इति, तदर्थं च किं वैकृताः प्राकृतानां कार्ये वर्त्तन्त ने? ति तत्रोपहोमाः कार्यमपेक्षमाणाः होमत्वसामान्यात्प्राकृतहोमकार्ये उपस्थिते तत्रैव विधीयन्ते, तस्मिंश्च कार्ये प्रत्यक्षश्रुतैरुपहोमैर्निर्वर्तिते[1] तत्कार्यकराः प्राकृता निवर्त्तन्ते शरैरिव कुशा इति प्राप्ते ब्रूमः—"सति प्राकृतकार्यत्वे भवेद्बाधो न चास्ति तत् । साधारणं न होमत्वं तस्योपस्थापनक्षमम्" ॥ सर्वसाधारणं हि होमत्वं न नारिष्टकार्यमुपस्थापयितुमर्हति, विधीयमानस्य तु होमविशेषस्य दूरापास्तमेव तदुपस्थापकत्वमदृष्टार्थत्वाच्च होमानां प्रमाणान्तरमपि तत्कार्यकरत्वे नास्ति, न च प्रत्यक्षश्रुतैरुपहोमैर्निराकाङ्क्षा विकृतिः प्राकृतमित्यम्भावं नापेक्षत इति वाच्यं सन्निपातिनां द्रव्यदेवतासंस्काराणामलाभे कथंभावस्यापरिपूर्णत्वात्, तस्मादुभयेषामभ्युच्चयः स्यादतिदेशोपदेशाभ्यामवगतत्वात्, यदुक्तमाद्येऽभ्युच्चयं वक्ष्याम इति तदिदं शरास्तु वर्हिः शब्दलक्षिते कुशकार्ये विहिता युक्तं यत्कुशान्बाधन्ते तदिदमुक्तं "चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत प्रकृतिसन्निधाना"दिति । यद्वाऽधिकरणान्तरमिदम् उभयोः कुशशरयोः प्रमाणावगतत्वात्समुच्चयः प्राकृतकार्यत्वाच्च निवृत्तिः, एवं वा वाजपेये श्रूयते "रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोती"-ति प्रकृतावुपावर्तध्वमिति मन्त्रेण दर्भाभ्यां स्तोत्रोपाकरणं तदिह किं रथो दर्भयोर्निवर्तकः घोषश्च मन्त्रस्य? उत रथस्य घोष उभयोर्निवर्तक? इति संशयः, तदर्थं च किमयं समाहारद्वन्द्वो रथेन घोषेण चे? ति किं वा षष्ठीतत्पुरुषः? तत्र षष्ठीसमासपक्षे पूर्वपदस्य लक्षणा स्यात्, अतः समाहारद्वन्द्वः तेन रथो घोषश्च द्वयमुपाकरणसाधनं तत्र रथो द्रव्यत्वसामान्यात् दर्भयोर्निवर्तकः, घोषस्तु मन्त्रस्य शब्दत्वसामान्यात्, एवं च नावश्यं रथस्यैव घोष आदर्तव्यः घोषस्याविशेषणात्, येन केन चिदपि घोषेण कार्यसिद्धिरिति प्राप्ते ब्रूमः—इतरेतरयोगद्वन्द्वे पदद्वयमपि श्रुतिवृत्तं स्यात्तथा तु रथघोषाभ्यामिति द्विवचनं स्यात्, समाहाराश्रयणे तु द्वे अपि पदे लक्षणार्थे

[1] निवर्तिते इति पा० ।

स्यातां तत्पूर्वप[1]दमात्रे लक्षणावृत्तिमङ्गीकृत्य षष्ठीसमासाश्रयणं, तस्माद्ग्रहस्य ग्रोप उपाकरणस्य साधनं स च प्राकृतं साधनं मन्त्रवर्भ्णा निवर्त्तयति ॥

बृहस्पतिसवादौ बार्हस्पत्यग्रहादिभिः प्राकृतेन्द्रवायवादिग्रहाणां समुच्चयाधिकरणम् ।

सू० सर्वेच तु ग्रहाम्नानमधिकं स्यादुपाकलिवत् ॥ २ ॥

बृहस्पतिसवे श्रूयते "बार्हस्पत्यं ग्रहं गृह्णाती"ति विषुवत्यर्कं गृह्णातीति महाव्रते शुक्रं गृह्णातीति अश्वमेधे सौवर्णराजताभ्यां महिमानौ गृह्णातीति, एवं जातीयका वैकृता ग्रहाः प्राकृतानामैन्द्रवायवादिग्रहाणां निवर्तका न वे?ति संशये ग्रहाणां यागनिर्वृत्त्यर्थत्वेनैककार्यत्वात्प्रत्यक्षश्रुतैर्वैकृतैर्ग्रहैर्निर्वृत्ते यागे चोदकप्राप्ता निवर्तन्ते इति प्राप्ते ब्रूमः "येषां मिथो नपेक्षाणां कार्येणैकेन सङ्गतिः । तेषां बाधो विकल्पो वानैवमस्ति ग्रहेषु नः ॥ न हि यागनिर्वृत्तौ ग्रहावाक्यैर्विधीयन्ते बार्हस्पत्येन यजेतेति, येन निरपेक्षा यागं निर्वर्तयेयुः, प्रयोगवचनस्तु चोदकप्राप्तानुपदिष्टांश्च ग्रहान्यौगपद्येन गृह्णन् सहितानामेव यागान्वयं गमयति, न च दृष्टार्थानि ग्रहणानि विनापि ग्रहणेन यागनिर्वृत्तिसिद्धेः । यश्च ग्रहेषु देवतोद्देशः सोऽत्यन्तादृष्टार्थ एव, न हि ग्रहणस्य देवतया किञ्चिद्दृष्टमस्ति, न चैकेन ग्रहणेन देवतोद्देशेन वा यद्दृष्टं तदन्येन क्रियत इति प्रमाणमस्ति, अतो यथा प्रकृतावैन्द्रवाय्वादिग्रहाणां समुच्चयस्तथा प्राकृतवैकृतानामपि भवितुमर्हति आह भवत्येवं ग्रहान्तरविधायकं गृह्णातीत्यादौ बार्हस्पत्ये तु प्राकृतेष्वेव देवतामात्रं विधीयते न ग्रहान्तरमित्यनुदाहरणं ग्रहणविधाने श्रुतिः देवताविधाने वाक्यम् अतो ग्रहणविधिरेव न्याय्य इति चेत् न वाक्यार्थविधेरवर्जनीयत्वात् देवतापदस्याप्रमादपाठात् तेनोभयविधानाद्वरं देवतामात्रविधानं, न चाविपरिवृत्तिः, ग्रहाणां चोदकप्राप्त्या विपरिवृत्तेः, यद्यपि च चोदकः कार्यप्रधानत्वात्र स्वरूपेण पदार्थान् स्पृशति तथाऽपि कार्यमुखेन तेषां विपरिवृत्तेः शक्यं तदनुवाद देगुणवि-

१ पूर्वपदमात्रे इति तु युक्तः पाठः ।

धानं, येषां च कार्यप्राप्त्युत्तरकालं पदार्थानामपि पृथगतिदेश इष्टस्तन्मते सुतरामस्ति त्रिपरिवृत्तिः। यस्त्वेवं नेच्छति तस्यैकां गां दक्षिणां दद्यादिति दानान्तरमेव विधीयेत तेन समस्तप्राकृतं दातव्यं धेनुन्यायेन निवर्त्तेत तथा "अध्वर्यो होत्रे हरते"ति हरणान्तरमप्राकृतं विधीयेताध्वर्युप्रतिपत्त्यर्थं तत्राप्राकृतकार्यत्वात्प्राकृतं होतुरिडाभक्षणं न निवर्तयेत्, तस्माच्चोदकप्राप्तेषु ग्रहेषु बृहस्पतिमात्रविधानादनुदाहरणम्, उच्यते—प्राकृतग्रहानुवादेन देवताविधौ तेषां बहुत्वाद्दानेया ग्रहा भवन्तीति बहुवचनं स्यात्, यद्यपि चानुवाद्यगता संख्या न विवक्षिता तथाऽपि बहुषु बहुवचनेनैव भवितव्यं, सोऽयमभिधानबाधः, विशिष्टविधौ तु गौरवमात्रं त माद्देवताविशिष्टग्रहान्तरविधिरेव न्याय्य इति सूक्तमुदाहरणम्॥

वाजपेये प्राजापत्यपशुभिः क्रतुपशूनां समुच्चयाधिकरणम्।

सू० प्राजापत्येषु चाम्नानात्॥ ३॥

वाजपेये श्रूयते "सप्तदश प्राजापत्यान् पशूनालभत" इति, सन्ति तु चोदकप्राप्ता आग्नेयादयः क्रतुपशवः ते किं प्रजापत्यैर्निवर्त्यन्ते? किं वा समुच्चीयन्त? इति पशुत्वेन प्रकृतिलिङ्गेन संयोगान्निवृत्तिं मन्वानस्योत्तरं न पशुत्वं सवनीयादिकार्यमलमुपस्थापयितुमनेकसाधारणं, न च प्राकृतपश्वनुवादेन गुणविधिः सम्भवति देवतान्तरस्य संख्यान्तरस्य च विधौ वाक्यभेदात्तस्मात्कर्मान्तराणि तानि चादृष्टार्थत्वात् प्राकृतैः समुच्चीयन्ते॥

साङ्ग्रहण्येष्टौ आमनहोमैरनुयाजानां समुच्चयाधिकरणम्।

सू० आमने लिङ्गदर्शनात्॥ ४॥

सांग्रहण्यां श्रूयते "आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोती"ति सन्ति तु प्रकृतौ त्रयोऽनुयाजाः ते किम् आमनहोमैर्बाध्यन्ते? उत समुच्चीयन्ते? प्रत्यक्षश्रुतत्वात्त्रित्वस्य च प्रकृतिलिङ्गत्वान्निवृत्तिः। अथवा तिस्रो जुहोति तद्यामनमसीत्यादिभिर्मन्त्रैरित्यनुयाजेष्वेव मन्त्रविधिं मन्यते त्रित्वविशिष्टहोमानुवादे विशिष्टानुवादाद्वाक्यभेदः तस्मात्कर्मान्तराणि, न च त्रित्वमात्रमनेकसाधारणमनुयाजकार्यं शक्नोत्युपस्थापयितुमिति समुच्चयः॥

महाव्रते ऋत्विगुपगानस्य पत्न्युपगानेन समुच्चयाधिकरणम् ।

सू० उपगेऽ[1]येषु शरवत्स्यात्प्रकृतिलिङ्गसंयोगात् ॥ ५ ॥

गवामयने महाव्रतं नामैकाहः, तत्र दिक्षु दुन्दुभयो नदन्तीत्यादि विधाय श्रूयते पत्न्य उपगायन्तीति प्राकृतं च सामगानमृत्विजश्चोपगातारः प्राप्ताः तत्र पत्न्य उपगायन्त्यः किं सामगानस्योपगातॄणामृत्विजां निवर्तिकाः? किं वा दुन्दुभ्यादिवादित्रनादानुपगायन्त्यो भिन्नविषयत्वादृत्विजामनिवर्तिकाः? इदमपरं सन्दिह्यते किं गानस्योपचय उपगानम्? उतोपचयात्मकं गानमुपगान? मिति, तत्र गानस्योपचय उपगानं गान-शब्दश्च शारीर्यामेति प्रसिद्धः, तस्माद्गानस्योपचयङ्काण्डवीणादिभिः कुर्वन्त्य ऋत्विजां निवर्त्तिकाः? भवतु वोपचयात्मकं गानमुपगानं तथाऽपि गायतेः शारीरगीतिवचनत्वाच्छारीरमेवेदमुपगानं तच्छारीरस्योपचयो भवति समानजातीयत्वात्, अतः सामगानस्यैवोपगाने पत्न्यो वर्त्तन्त इति ऋत्विजां निवृत्तिः—उच्यते नायमेकान्तः यच्छारीर एव गायतिरिति तन्त्रीगानेऽपि प्रयोगात्, ततश्च यद्यपि गानस्येदमुपगानं तथाऽपि दुन्दुभ्यादीनां गानानामनन्तरविहितानां विपरिवर्तमानानामिदमुपगानं पत्नीभिः कर्त्तव्यम् अपि चोपचयात्मकं गानमुपगानं सामानाधिकरण्यलाभात्, तच्च काण्डवीणादिभिः क्रियमाणं न कथंचिच्छारीरं सम्भवति तेन वादित्रादिकमिदमुपगानं तत्कस्योपचय इति दुन्दुभ्यादीनां गानानां समानजातीयत्वात्प्रकृतत्वाच्च तेषामेवेदमुपगानं पत्न्यः कुर्वन्तीति न सामविषयाणामृत्विजां निवृत्तिः ॥

अञ्जनाभ्यञ्जने नवनीताभ्यञ्जनस्य गौग्गुलवाभ्यञ्जनादिभिः समुच्चयाधिकरणम् ।

सू० संस्कारे चान्यसंयोगात् ॥ ६ ॥

अस्त्यञ्जनाभ्यञ्जनं नाम सत्रं तत्र श्रूयते गौग्गुलवेन प्रातः सवनेऽभ्यञ्जत इत्यादि तत्किं प्राकृतस्य नवनीताभ्यञ्जनस्य निवर्तकं नेति संशये दृष्टार्थत्वात् अञ्जनाभ्याञ्जनयोः प्राकृतस्य वैकृतेन निवृत्तिः, सत्यं,

[1] उपगेष्विति ।

दृष्टार्थमभ्यञ्जनं तथाऽपि नैकार्थ्यं नवनीताभ्यञ्जनस्य स्नेहनार्थत्वाद्गौग्गुल-वादेस्तु चन्दनानुलेपनवद्दृढीकरणार्थत्वात्, न च प्राकृतेऽभ्यञ्जने गुण-विधिः प्रातःसवन इति च गौग्गुलवेनेति चानेकगुणश्रवणात् ॥

महाव्रते अहतवाससः तार्प्यादिभिः समुच्चयाधिकरणम् ।

**सू० आच्छादने त्वैकार्थ्यात् प्राकृतस्य विकारः स्यात् ॥ ७ ॥**

महाव्रते श्रूयते "तार्प्यं यजमानः परिधत्ते दर्भमयं पत्नी"ति तत्र संशयः किं तार्प्यं दर्भमयञ्च चोदकप्राप्तस्याहतस्य वाससो निवर्त्तकं ने ? ति तत्र कौपीनाच्छादने परिदधातीति प्रयुज्यते तस्मिंश्च तार्प्येण कृते तत्कार्यस्याहतस्य निवृत्तिः, नैवं कम्बलं परिधत्त इत्युपरिवासस्यपि दर्शनात् तार्प्यदर्भमययोश्च कौपीनाच्छादनेऽतीवायोग्यत्वात्तत्राप्याचारप्राप्तस्योत्तरीयस्य स्थाने विधीयते । किं चाधिकमिदं तार्प्यादिपरिधानं वासांसि विस्रंसयतीति वासोबहुत्वानुवाददर्शनात्, तस्मादुपरिधारणे तार्प्यादिविधिरित्याहतस्यानिवृत्तिः ॥

महाव्रते रथन्तरादिसाम्नां श्लोकादिसामभिः समुच्चयाधिकरणम् ।

**सू० सामस्वर्थान्तरश्रुतेरविकारः प्रतीयते[1] ॥ ८ ॥**

तत्रैव श्रूयते "श्लोकेन पुरस्तात्सदसः स्तुवीतेति अनुश्लोकेन पश्चादि"त्यादि तत्र श्लोकादिभिः सामभिः प्राकृतानां गायत्रादिसाम्नां निवृत्तिर्ने वे ? ति सन्देहे स्तुत्यर्थत्वान्निवृत्तिः स्यादेवं यदि प्राकृतस्तुत्यनुवादेन सामान्तरं विधीयेत न त्वेवमस्ति, न हि प्राप्तस्तुत्यनुवादेन सामान्तरं पुरस्तात्सदस इति च देशान्तरं शक्यं विधातुम्, अतः स्तुतिरेवात्र विधेया, सा चादृष्टार्था न प्राकृतीनां निवर्तिका भवितुमर्हति एकार्थत्वानवगमात् तदेतद्व्यतंप्रायं विस्पष्टीकरणार्थम् उत्तरविवक्षया वा अर्थे त्वश्रूयमाणे शेषत्वात्प्राकृतस्य विकारः स्यात् क्वचिच्छ्रूयते कौत्सं भवति काण्वं भवति वसिष्ठस्य जनित्रे भवतः क्रौञ्चानि भवन्तीति किं कौत्सादीनि सामानि प्राकृतानां

1 प्रतीयेतेति पा० ।

निवर्त्तकानि नेति संशयः, तत्र साममात्रं श्रूयते न स्तुत्यर्थता, तस्मात्स्तुत्यर्थानामनिवृत्तिः सत्यं, न प्रत्यक्षः स्तुतिसंयोगः प्रकरणात्तु क्रत्वर्थत्वेनावगतानि सामानि लिङ्गात्प्राकृतानां साम्नां कार्यमुगत्तराभिव्यक्तिमवलम्बमानानि प्राकृतानां निवर्त्तकानि भवन्ति ॥

कौत्सादिभिर्व्यवस्थया एकादिभिर्बाधाधिकरणम् ।

सू० सर्वेषामविशेषात् ॥ ९ ॥

कौत्सादीनि निवर्त्तकानीत्युक्तम्, इदमिदानीं विचार्यते किं कौत्सं सर्वेषां निवर्त्तकं तथा वसिष्ठस्य जनित्रे तथा क्रौञ्चानि ? उतैकमेकस्य द्वे द्वयोः, बहूनि बहूना ? मिति, अविशेषात्सर्वत्र सर्वेषां निवृत्तौ प्राप्तायाम् प्राप्तायामुच्यते यत्रैकं श्रूयते तत्रैकस्य निवृत्तिः, यत्र द्वयं तत्र द्वयोर्यत्र बहूनि तत्र बहूनामिति यावन्त्यत्र वैकृतानि तावतामेव प्राकृतानां निवृत्तिः तन्मात्रेणैव वैकृतसामोपदेशस्यार्थवत्त्वादितरनिवृत्तौ प्रमाणाभावात् ॥

विवृद्धाविवृद्धस्तोमकक्रतुषु यथाक्रमं प्राकृतसामबाधाबाधाधिकरणम् ।

सू० स्तोमविवृद्धौ[1] त्वधिकं स्याद्विवृद्धौ द्रव्यविकारः स्यादितरस्याश्रुतित्वाच्च ॥ १० ॥

प्रत्यक्षश्रुतैः सामभिस्तावत्सङ्ख्यानां प्रकृतानां विकार इत्युक्तम् । अथेदानीं विचार्यते यत्र स्तोमविवृद्धिर्यथा द्वात्रिंशः पवमानोऽभिषेचनीय इत्यादौ तत्र प्रत्यक्षश्रुतैराजसामभिः प्राकृतानि विक्रियन्ते किं ? किं वा समुच्चय इति तत्र विवृद्धस्तोमकेष्वागमेन सङ्ख्यापूरणं वक्ष्यते तत्रागमेन विवृद्धौ पूरितायां प्रत्यक्षश्रुतानि राजसामानि विवृद्धावनवकाशमलभमानानि प्राकृतबाधेन वर्त्तन्ते तेनाविवृद्धौ विवृद्धौ च सर्वत्र बाध इति प्राप्ते ब्रूमः "प्राकृतानामबाधेन वैकृतानामसम्भवः । यत्र तत्रैव बाधः स्यात् विवृद्धौ त्वस्ति सम्भवः, ॥ न ह्यागमेन सङ्ख्यापूरणं वाचनिकं विवृद्ध्यन्यथानुपपत्त्या त्वागमः

---

1 स्तोमविवृद्धात्त्वधिकमिति पा० ।

क्रियते सा चेह विवृद्धिरुपदिष्टातिदिष्टसामभिरेव सिद्धयतीति को नामाश्रुतानामागमं कृत्वाऽतिदिष्टानि बाधेत, तस्माद्विवृद्धौ समुच्चयः ॥

पवमान एव विवृद्धाविवृद्धस्तोमकक्रतूनां सामावापोद्वापाधिकरणम् ।

सू० पवमाने स्यातां तस्मिन्नावापोद्वापदर्शनात् ॥ ११ ॥

अविवृद्धौ प्रत्यक्षश्रुतेः कौत्सम्भवतीत्यादिभिस्तावत्सङ्ख्यानां प्राकृतानामुद्वापः, विवृद्धौ तु प्रत्यक्षश्रुतानां राजनसामादीनामधिकानामावाप इति स्थितं, तत्र चिन्त्यते किं यस्मिन्कस्मिंश्चित्स्तोत्रे यस्यां कस्यांचिदपि प्रत्यक्षश्रुतानामावापो यतः कुतश्चिच्च प्राकृतानामुद्वापोऽथवा पवमानेष्वेव गायत्रीबृहत्यनुष्टुप्स्वावापोद्वापाविति तत्र यत्र क्वचिदपि निवेशे वैकृतानामर्थवत्त्वादविशेषः तन्निबन्धनश्च प्राकृतानामुद्वाप इति सोऽप्यविशेषेणैव स्यात्, त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप् च अत्र ह्येवाऽवपन्ति अत एवोद्वपन्तीत्येतत्तु हि-शब्दोऽपबन्धात् वर्त्तमानापदेशरूपत्वाच्चा विधायकं नावाद्वापौ नियन्तुमलम् । यद्यपि नियामकं तथाऽपि पवमानविषययोरेवावापोद्वापयोर्देशविधानार्थं न स्तोत्रान्तरपरिसंख्यानार्थम् इति, उच्यते अपूर्वत्वादस्यार्थस्य विधायकमेवेदं स्तुतिकल्पितविधिशक्तिकमतो वचनात्पवमानेष्वेवावापोद्वापौ । न त्वेकविंशेनातिरात्रेणेत्यादौ स्तोमविवृद्धिरविशेषेण श्रुता सर्वत्र कर्त्तव्या सा चावापेनैव नाभ्यासेन अभ्यासस्याश्रुतत्वादिति वक्ष्यति ततश्च सर्वस्तोत्रेष्ववापे कर्त्तव्ये प्रत्यक्षश्रुतानामपि यत्र क्वचिदावापः स्यात् सत्यं, यदि सर्वत्रावापः स्यात् स तु न्यायात्सर्वत्र प्राप्तोऽत्र ह्येवावपन्ति अत एवोद्वपन्तीति वचनाद्गायत्र्यादिभ्योऽन्यत्र परिसंख्यायते, न चेदमेवावापस्य वचनमिति निबन्धकारवचनाद्गमितव्यं कौत्सादीनां पाठादेवावापसिद्धेः, अन्यत्रापि विवृद्धावागमेन संख्यापूरणं वक्ष्यमाणन्यायसिद्धं न विधातव्यम् एवकारोऽपहतविधिशक्तिकं चेदं तस्मात्परिसंख्या, न च परिसंख्यायास्त्रिदोषत्वम् एवकारेण तस्या एव श्रुतत्वात्, तेन स्तोत्रान्तरेष्वगत्याऽभ्यासेनैव पूरणम् । ननु कण्वरथन्तरन्यायेन कौत्सादीनां स्वयोनावेव गानाच्च

प्राकृतीषु स्तुत्वावापप्राप्तिः असत्याञ्च प्राप्तौ कथं परिसंख्या तस्माद्विधिरेव गायत्र्यादिष्वावापस्य नैतदेवं कौत्सं भवतीत्यादिषु साममात्रमुपदिश्यते तद्योनिभूतायास्तृचो नोपदेशेन नातिदेशेन प्राप्तिः, यदि परमक्लृप्तकल्पनाभयादध्ययनसिद्धरूपान्यथाभावभयाच्च स्वयोनावेव गीयते तच्चायुक्तं प्राकृत्यो हि स्तृचः प्रकृतौ क्रमप्रकरणाभ्यामङ्गत्वेनावधारिताः सामानि च प्रतिसंस्कार्यत्वात्प्रधानभूता इहापि स्तोत्राङ्गत्वेनातिदेशतः प्राप्ता न शक्यन्ते बाधितुम्, अतः प्राकृतीष्वेव स्तृचु प्रत्यक्षश्रुताऽन्यागम्यमानानि च सर्वाण्यपूर्वाणि सामानि गेयानीति प्राप्ते आवापे परिसंख्यार्थमेव वचनम् एवमेवकारः समर्थितो भवति कण्वरथन्तरस्य तु यथा स्वयोनावेव स्वयोनेरुत्तरयोश्च गानन्तथा वक्ष्यामः तस्मात्पवमानेष्वावापोद्वापौ ॥

यागादौ विधिशब्देनैव देवताभिधानाधिकरणम् ।

सू० विधिशब्दस्य मन्त्रत्वे भावः स्यात्तेन चोदना ॥ १२ ॥

दर्शपूर्णमासयोः श्रूयते आग्नेयोऽष्टाकपाल इति बहूनि चाग्नेरभिधानानि अग्निः शुचिः पावक इत्यादीनि तत्र तद्वाचिषु निगमेषु येन केन चिच्छब्देनाग्नेरभिधानं कर्त्तव्यम्? उत विधिगतेनैवाग्निशब्देने? ति "तत्र देवतात्वं विधायाग्नेश्चोदना विनिवर्त्तते। प्रयोगकाल उद्देशो येन केनापि सिध्यति ॥ आग्न्यर्थो देवताकर्त्तव्य इत्येत्यावांश्चोदनार्थः तस्य शब्देनोद्दिश्यमानस्य देवतात्वमिति प्रयोगावस्थायां शब्दोच्चारणमापतति तन्नियमे तु नास्ति प्रमाणं पावक-शब्देनापि ह्युद्दिश्यमाने चोदनाभिहितमग्नेदेवतात्वं सम्पादितमेव भवति, तस्मादनियम इति प्राप्ते केचित्तावदाहुः-सत्यमर्थस्यैव देवतात्वं चोदनयोच्यते तस्य त्विदमेव देवतात्वं यच्छब्देनोद्देशः तेन तच्छब्दोच्चारणमेव पुरुषस्य व्यापारः स्वव्यापारे चासौ नियोक्तव्यः तेनार्थस्यापि देवतात्वमुक्त्वा तन्मात्रेण पर्यवस्यन्ती चोदना शब्दोच्चारणं यावद्विधाय पर्यवस्यति, तस्यां चावस्थायां विधिगतस्य शब्दस्य सन्निहितस्य परित्यागे कारणाभावात्तदुच्चारणमेव विधी-

यते न शब्दान्तरस्य असंनिहितत्वात्, तस्माद्विधिशब्दनियम इति अस्मिंस्तु पक्षे स्यादपि कथंचिद्विधिशब्द एव नियमः किं तु यत्र पर्यायेण शब्दद्वयेन देवताविधिः यथाऽग्नये पावकाय निर्वपेदग्नये शुचय इति तत्र द्वाभ्यामपि शब्दाभ्यामेकमर्थमभिधाय तस्य देवतात्वे विहिते शब्दाकाङ्क्षावेलायामुभयोः शब्दयोः संनिहितत्वेऽप्येकेनैवार्थस्योद्देशसम्भवादगृह्यमाणविशेषत्वे विकल्पेनान्यतरस्यैवोपादानं स्यात् न द्वयोः, न हि निरपेक्षयोरेककार्ययोः समुच्चयः, नन्वेकेनैव वाक्येन विधानात्समुच्चयः सिद्ध्यति, स्यादेव यदि प्रथमोपनिपात एव शब्दस्वरूपं वाक्यार्थान्वयि स्यात्, अर्थसमर्पणेन तु चरितार्थौ शब्दौ पश्चादाकाङ्क्षावशाद्गृह्यमाणावेकैकशस्तदाकाङ्क्षापूरणसामर्थ्याद्विकल्पेनैव ग्रहीतव्यौ । अथैकेनैवार्थस्य देवतात्वं सिद्धे द्वितीयः शब्दः स्वरूपपर इत्युच्यते तथा सति तस्यैवोच्चारणं स्यान्नेतरस्यार्थसमर्पणेन चरितार्थस्य, अथैवमादिषु शब्दस्यैव वाक्यार्थान्वयित्वं तथा सति सर्वत्रैवमेव सिद्धान्तयितव्यम् अवश्यं ह्यत्र शब्दोच्चारण एव पुरुषो नियोक्तव्यः तत्र किमित्यर्थस्य देवतात्वं विधाय पश्चाच्छब्दोच्चारणं विधीयते प्रथममेव शब्दस्वरूपं वाक्यार्थान्वयित्वेन विधीयते तद्विधानेन चार्थस्य देवतात्वं प्राप्तमेवानूद्यते, येन हि शब्देनोद्दिश्य हविस्त्यज्यते तस्यार्थस्य देवतात्वं भवति, तस्माच्छब्दोच्चारणेन तस्यैव विधानान्न पर्यायप्रसक्तिः ॥

अतिदेशस्थलेऽपि विधिशब्देनैव देवताभिधानाधिकरणम्

सू० तथोत्तरस्यां ततौ तत्प्रकृतित्वात् ॥ १३ ॥

सौर्यादिषु विकृतिषु चिन्त्यते चोदकप्राप्तेषु उज्जि(१)त्यादिनिगमेषु किं विधि-शब्द एव वक्तव्यः? उतादित्या दशब्दा अपी? ति संशयः, तत्र विधिवाक्ये हविस्त्यागमात्रे सूर्य-शब्दो विधीयते नोज्जित्यादिषु निगमेषु प्रकृतौ तूज्जित्यादिष्वग्नि-शब्द एव पठित इति तदाश्रयणम्, इह त्वसति पाठे येन केनचिदुपलक्षणमिति प्राप्ते ऽभिधीयते प्रकृतावग्नि-शब्दो

१ ज्जि, भ्रजि, एवमपि पुस्तकान्तरे पाठो दृश्यते ।

न यागरूपेण सम्बध्यते किं तर्हि यागकरणके भावनापरनामधेये प्रयोगे भावनया ह्यङ्गानि सम्बध्यन्त इति, सप्तमनवमाध्याययोर्व्याख्यातं, तेनाग्नि-शब्दयुक्तः प्रयोगः कर्तव्यः स कियत्कृत्वः केषु च प्रदेशेषूच्चारयितव्य इत्यपेक्षायां याज्यानुवाक्यापाठादुज्जित्यादिपाठाच्च तावत्कृत्वस्तेषु च प्रदेशेषूच्चारणीय इति गम्यते विकृतावपि सूर्यशब्दः प्राकृतस्याग्निश-ब्दस्य स्थाने निविशमानस्तेषु प्रदेशेषु वक्तव्यो भवति, तस्माद्विधि-शब्द एव सर्वेषु निगमेषु विकृतिष्वपि वक्तव्यः ॥

आधाने अग्नेः सगुणेना-भिधानाधिकरणम् ।

सू० प्राकृतस्य गुणश्रुतौ सगुणेनाभि-धानं स्यात् ॥ १४ ॥

सन्त्याधाने पवमानेष्टयः अग्नये पवमानाय अग्नये पावकाय अग्नये शुचय इति तत्र संशयः तद्वाचिषु निगमेषु किमेक एवाग्नि-शब्दो वक्तव्यः? किमुभौ शब्दौ वक्तव्यौ अग्नये पवमानाय निर्वपाम्यग्निं पवमानमावहाग्नेः पवमानस्याहमुज्जितिमनूज्जेषमिति "तत्रैकेनार्थनिर्देशसिद्धेर्नोच्चारणं द्व-योः, । स चाग्निशब्द एवैकश्चोदकानुग्रहाद्भवेत्" स्यादेवं यदि प्रथममर्थं विधाय पश्चाच्छब्दाश्रयणं भवेत् शब्द एव तु भावनाङ्गत्वेन विधीयत इत्युक्तं, तस्मादुभयोर्विधानादुभौ वक्तव्यौ ॥

आधानाज्ययोरग्नेर्निर्गुणे-नाभिधानाधिकरणम् ।

सू० बुधन्वान्पवमानवद्विशेषनिर्दे-शात् ॥ १५ ॥

पवमानेष्टिष्वाज्यभागौ प्रकृत्य श्रूयते बुधन्वानाग्नेयः कार्यः पाव-कवान्सौम्य इति तत्र संशयः किं बुधन्वत्तया पावकवत्तया (१) ऽवगुणे-न सगुणमभिधानं निगमेषु कर्त्तव्यं बुधन्वन्तमग्निमावह पावकवन्तं सोम-मावहे? ति उत अविकारेण प्रकृतिवद्विर्गुणा? मिति, तदर्थमिदं चिन्त्यते किं देवताविशेषणं बुधन्वत्ता? उत मन्त्रविशेषणा? मिति मन्त्रस्य स्वरूपप्र-करणाभ्यां प्राप्तत्वाद्देवतानिर्देशः, तदयमर्थः आग्नेय आज्यभागो बुधन्वान् बुधन्वच्छब्दयुक्तः कार्यः, तस्य च देवताद्वारेण बुधन्वच्छब्दवत्ता, तदनेन

१ गुणेन सगुणमभिधानमिति पा० ।

प्रकारेण देवताया बुधन्वत्ता विहिता भवति, तस्मात्सगुणमभिधानं कर्तव्यं नैतदेवं मन्त्रान्तराण्यप्यग्निलिङ्गानि सोमलिङ्गानि च प्रकरणे विद्यन्ते, तत्र मन्त्रविशेषनियमार्थं वचनमुपपन्नं तेन मन्त्रद्वारेण बुधन्वत्ताऽऽज्यभागस्य विधीयते न चाहत्याग्नेर्बुधन्वत्ता विधीयते तद्धितार्थे वृत्तस्योपसर्जनीभूतस्याग्नेर्विशेषणत्वेन विशेषणान्तरासहत्वात् मन्त्रमेव चाऽग्नेय-शब्देन निर्दिश्य तस्यैव बुधन्वत्ता साक्षाद्विधीयते, एवं चोदकप्राप्ता देवता न विकृता भवति ॥

गवानुबन्धनपृषदाज्यहोमयोर्विधिशब्दाभ्यामेव उस्रावनस्पतिशब्दाभ्यामभिधानाधिकरणम् ।

**सू० विधिनिगमभेदात्प्रकृतौ तत्प्रकृतित्वाद्विकृतावपि भेदः स्यात् ॥ १६ ॥**

ज्योतिष्टोमे श्रूयते गौरनुबन्ध्य इति तत्राग्नीषोमीयस्य पशोः छागस्य वपाया मेदस इति मन्त्रश्चोदकेन प्राप्तः तत्र मन्त्रान्तरमाम्नातम् "उस्राया वपाया मेदस" इति तत्र संशयः किं गोशब्दादन्येन येन केनचिदभिधानं कर्त्तव्य ? मुतोस्रा-शब्देनैवे ? ति तथा पशौ वनस्पतिं यजतीति श्रुतं स्विष्टकृद्विकारश्च वनस्पतिः, तत्र निगमेषु किं विधिशब्दादन्येन केन चिदनभिधानम् ? उत विधिशब्देनैवे ? ति किं प्राप्तमुभयत्रापि विधिशब्दादन्येन येनकेनचित्तदभिधानं तत्र निगमे स्यात् प्रकृतौ विधिनिगमभेदात् पशुशब्देन विधिः, छागशब्देन निगमः तथा स्विष्टकृच्छब्दको विधिः अग्निं स्विष्टकृतं यजतीति निगमस्त्वस्विष्टकृच्छब्दकः ये देव्या ऋत्विजस्तेऽभिरगन इति, यच्च प्रकृतौ श्रुतं तद्विकृतौ कर्त्तव्यं, तस्मात् गोशब्दादन्येनाभिधानं, तदपि येन केन चित् शब्देन उस्राया वपाया मेदस इति च पाठमात्रं न विधिरस्ति तथा वनस्पतावपि विधिशब्दादन्येन येन केनचिदभिधानमिति मन्यते-उच्यते प्रकृतावार्थिको विधिनिगमभेदो न वाचनिकः न चार्थिकं चोदकः प्रतिदिशति, तेनानुबन्ध्याया द्रव्यत्वाद्विधिशब्दनियमाभावे विधिशब्देनान्येन वा येन केनचिदभिधाने प्राप्ते प्रकरणाम्नानादुस्रा-शब्दस्य तेनैवाभिधानं वनस्पतौ तु देवतात्वाद्विधिशब्देनैव ॥

अवभृथे अग्नीवरुणयोः सस्विष्टकृच्छब्देनाभिधानाधिकरणम् ।

सू० स्विष्टकृद्देवतान्यत्वे तच्छब्दत्वान्निवर्त्तेत ॥ १७ ॥

अवभृथे श्रूयते "अग्नीवरुणौ स्विष्टकृतौ यजती"ति किं निगमेष्वस्विष्टकृच्छब्दकं वचनमग्नीवरुणावावहे?ति उत स स्विष्टकृच्छब्दकमग्नीवरुणौ स्विष्टकृतावावहे?ति यद्येषा वचनव्यक्तिः स्विष्टकृत्कार्ये अग्नीवरुणाविति ततोऽग्नीवरुणयोर्देवतात्वादस्विष्टकृच्छब्दकम् । अथैवं वचनं व्यज्यते यत्स्विष्टकृद्गुणेन सगुणां देवतां यजति तदग्नीवरुणौ न केवलमग्निमिति ततः स्विष्टकृत्त्वेनाग्नीवरुणयोर्विधानात्सस्विष्टकृच्छब्दकमिति तत्सिद्ध्यर्थमिदं चिन्त्यते किं स्विष्टकृच्छब्दः प्रकृतौ समुदायप्रसिद्ध्याऽग्नौ प्रयुक्तः? उत स्विष्टकरणयोगेने?ति तत्र भूतस्य स्विष्टकरणयोगस्याग्नावभावाद्रूढ्याऽयं शब्दोऽग्नेर्वाचको ऽतोनाग्नीवरुणयोः शक्नोति वर्त्तितुमतः कार्यलक्षणार्थः स्विष्टकृच्छब्दः स्विष्टकृत्कार्ये ऽग्नीवरुणौ निर्गुणौ विधीयेते तस्मादस्विष्टकृच्छब्दकं वचनम् उच्यते भूतकालतामात्रासम्भवेऽपि स्विष्टकरणयोगस्य तावत्सम्भवाद्भूतकालताया अपि प्रयोगान्तरापेक्षयोपपन्नत्वाच्च समुदायप्रसिद्धौ प्रमाणमस्ति तेन स्विष्टकृद्गुणकावग्नीवरुणौ यष्टव्याविति श्रौत एव स्विष्टकृच्छब्दो न लक्षणा, तस्मात्सगुणयोरेव देवतात्वात्सगुणमभिधानम् ॥

अग्नीषोमीयपशौ सर्वत्रैव प्रयोगे निर्गुणेनाग्निशब्देनाग्नेरभिधानाधिकरणम् ।

सू० सगुणस्य गुणलोपे निगमेषु यावदुक्तं स्यात् ॥ १८ ॥

अग्नीषोमीयपशौ पशुपुरोडाशः तत्र चोदकप्राप्तस्य स्विष्टकृतो गुणलोपः श्रुतः, अग्निं यजतीति किमयं प्रधानमात्रे गुणलोपः? उत सर्वेषु निगमेष्वि?ति प्रधानमात्रे यजतीति लोपश्रवणात् अवशिष्टेषु निगमेषु प्रकृतिवत्स्विष्टकृद्गुणयुक्तमभिधानं प्रयोग एव निर्गुणविधिरिति सर्वत्र गुणलोपः ॥

अनुयाजेषु स्विष्टकृद्यागस्य संस्कारकर्मताधिकरणम् ।

सू० स्विष्टकृदावापिको ऽनुयाजे स्यात् प्रयोजनवदङ्गानामर्थसंयोगात् ॥ १९ ॥

दर्शपूर्णमासयोस्त्रयोऽनुयाजास्तृतीयः स्विष्टकृद्दैवत्यः स किमवापिकस्योत्तरार्द्धात्स्विष्टकृते समवद्यतीत्यस्य स्विष्टकृतः संस्कारार्थ? उताराादुपकारक? इति, तत्र "उभयोर्दर्शशेषत्वाद्विशेषानवधारणात्। न मिथोऽङ्गाङ्गिभावः स्यात्तस्मादारादुपक्रिया॥ उच्यते देवतास्मरणं ह्यत्र दृष्टमेव प्रयोजनम्। अनूयाजस्य तेनेह न युक्ताऽदृष्टकल्पना॥ न चागृह्यमाणविशेषत्वम् आवापिकस्य द्रव्यप्रतिपत्त्येष्टदेवतास्मरणेन च कृतार्थत्वाच्चानुयाजिकस्विष्टकृद्दैवता संस्कारार्थत्वम्, अनूयाजस्य तु दृष्टप्रयोजनान्तराभावाददृष्टकल्पनापरिहारायावापिकस्विष्टकृत्संस्कारार्थत्वमध्यवसीयते॥

दर्शपूर्णमासयोर्याज्यापुरोनुवाक्ययोः संस्कारकर्मताधिकरणम्।

सू० अन्वाहेति शस्त्रवत्कर्म स्याच्चोदनान्तरात्॥ २०॥

दर्शपूर्णमासयोः तिष्ठन्याज्यामन्वाह आसीनः पुरोऽनुवाक्यामन्वाहेति किं याज्यापुरोनुवाक्योच्चारणम्? अर्थकर्म? उत संस्कारकर्मार्थप्रतिपत्त्यर्थ? मिति, तत्रार्थप्रतिपत्त्यर्थत्वे रूपादेव प्राप्तमुच्चारणं न विधातव्यं तस्माददृष्टार्थं, सत्यं, यद्युच्चारणं विधीयेत रूपादेव तु प्राप्तमुच्चारणमनूद्य तिष्ठन्नासीन इति गुणविधानाच्च वचनानर्थक्यमतो नादृष्टार्थता॥

मनोतायामूहाभावाधिकरणम्।

सू० मनोतायान्तु वचनादविकारः स्यात्॥ २१॥

अग्नीषोमीये पशावस्ति मनोतामन्त्रस्त्वं ह्यग्ने प्रथमो मनोते'ति तत्रैव चेदं वचनं यद्यप्यन्यदेवत्यः पशुराग्नेय्येवमनोताकार्येति सोऽयं मनोतामन्त्रः किं विकृतिषु वायव्यादिपशुषु यथादेवतमूहितव्यो ऽथाऽविकारेण प्रयोक्तव्य? इति संशयः, तदर्थं च यद्यप्यन्यदेवत्य इत्येतद्वचनं प्रकृत्यर्थ? मुत विकृत्यर्थ? मिति, तत्र पशोरग्नीषोमदेवत्यत्वात्केवलाग्निदेवत्या मनोता, तत्रासामर्थ्यादुत्कृष्यमाणवचनेनानेन वार्यते, यद्यपि द्विदेवत्यः तथाऽप्येकदेवत्यैव मनोता तत्र कार्या नोत्कृष्टव्येति, न चानेन वचनेन विकृतिषूहः प्रतिषिध्यते प्रकृतावेवार्थवत्किमिति विकृतिषु कार्यं कुर्यात्तद्वचनेनावस्थापिता मनोता न प्रकृतावदृष्टार्था येन विकृतिषु नोह्येत,

शक्नोति ह्यसावग्निद्वारेण लक्षणया देवताभूतावग्नीषोमौ प्रकाशयितुं, तस्माद्वायव्यादिषु यथादेवतमूहितव्येति प्राप्ते ब्रूमः "अग्निद्वारेण मन्त्रो-यमग्नीषोमौ प्रकाशयन् । अन्तरेणैव वचनं प्रकृतावतिष्ठते ॥ न च विकृतिषु सामान्यसम्बन्धोऽस्ति, येन लिङ्गेन केवलाग्निदेवत्याया उत्कर्षः स्यात् तस्मान्नोत्कर्षप्राप्तिः येन तन्निवारणेन प्रकृतावेव वचनं कार्यं कुर्यात्, तस्माद्विकृतिषु यथादेवतमूहे प्राप्ते तन्निवारणार्थं वचनमिति वायव्यादिष्वनूह इत्यग्नि—शब्दस्याबाधः ॥

कण्वरथन्तरस्य स्वयोनौ गानाधिकरणम् ।

सू० पृष्ठार्थेऽन्यद्रथन्तरात्तद्योनिपूर्वत्वात्स्यादृचां प्रविभक्तत्वात् ॥२२॥

वैश्यस्तोमे श्रूयते कण्वरथन्तरं पृष्ठं भवतीति तत्र संशयः किं कण्व-रथन्तरं बृहद्योनौ रथन्तरयोनौ वा गेयम्? उत रथन्तरयोनावेव? उत स्वयोनौ? विति, तत्र कण्वरथन्तरशब्देन साममात्रं प्राकृतयोः साम्नोः स्थाने विधीयते तद्योनिभूतयोस्तृचोः प्रकृतौ क्रमप्रकरणाभ्यामङ्गत्वेनावधारित-योरिह चोदकेन प्राप्तयोर्नास्ति किञ्चिन्निवर्तकं, तस्मात्तयोरन्यतरत्र गानम् अथ वा कण्वस्य रथन्तरं कण्वरथन्तरमिति यौगिकोऽयं शब्दः रथन्तर-शब्दश्चारथन्तरे तद्धर्मातिदेशार्थः, तस्माद्रथन्तरयोनावेव गेयं नैतदेवं कण्वसम्बन्धे प्रमाणाभावात्, तस्माद्रूढोऽयं कण्वरथन्तरशब्दो न कण्वस्य रथन्तरम् इत्येवं प्रवृत्तः, तस्मान्न तावद्रथन्तरयोनावेव गेयं, नापि बृहद्योनौ रथन्तरयोनौ वा किन्तु स्वयोनावेव, कस्मात् उत्तराग्रन्थे तस्यास्तदुत्तर-योश्च पठितत्वात् ऋत्वर्थोह्युत्तराग्रन्थः एकं साम तृचे क्रियते स्तोत्रीयं य-द्योन्यां तदुत्तरयोर्गायतीति वचनार्थानुष्ठानाय ऋत्विग्विशेषापेक्षायां तत्प-रिज्ञानाय योनय उत्तराश्च प्रतिसाम विभक्ता उत्तराग्रन्थे पठ्यन्ते नादृष्टार्थं कण्वरथन्तरयोनिरपि तत्रैव पठिता सा यत्र कण्वरथन्तरं तदङ्गत्वेन ज्ञायते तस्मात्स्वयोनौ गेयम्, एवं चाम्नानसिद्धर्क्परित्याग ऋगन्तरसञ्चारश्च न कल्पितो भवति कौत्सादिसाम्नां तु योनिरुत्तराग्रन्थेन पठितेति तेषां प्राकृतीष्वेव ऋक्षु गानम् ॥

कण्वरथन्तरस्य स्वयोन्युत्तरयोर्गानाधिकरणम् ।

सू॰ कार्त्स्न्यादुत्तरयोर्यथा प्रकृति ॥२३॥

कण्वरथन्तरस्यैवोत्तरागाने संशयः किं बृहदुत्तरयोरथन्तरोत्तरयोर्वा गानम्? उत स्वयोन्युत्तरयोरपि? तत्र स्वयोन्युत्तरयोरपि गीयमानस्याम्नानसिद्धक्परित्याग ऋगन्तरसञ्चारावपरिहार्यौ तद्वरं चोदकप्राप्तयोरेव गानमिति मन्यते उत्तरांयन्ये पाठस्तु स्वयोनिवदुत्तरयोरप्यविशिष्ट इति स्वयोन्युत्तरयोरेव गानम् ॥

अग्निष्टुति स्तुतशस्त्रयोरविकाराधिकरणम् ।

सू॰ अचाणां देवतान्यत्वे स्तुतशस्त्रयोः कर्मत्वादविकारः स्यात् ॥ २४ ॥

अग्निष्टुति श्रूयते आग्नेया ग्रहा भवन्तीति प्रकृतौ नानादेवत्यानि स्तोत्रशस्त्राणि तानि यदि देवतासंस्कारार्थानि ततोऽग्निष्टुति यथादेवतमूहितव्यानि तेषां त्वर्थकर्मत्वं द्वितीये स्थितं तस्मादविकार इति द्वितीयसिद्धस्यैव प्रयोजनकथनमेतत् ॥

चातुर्मास्येषु आज्यशब्दस्याविकारेणावाहनाधिकरणम् ।

सू॰ उभयपानात्पृषदाज्ये दध्नः स्यादुपलक्षणं निगमेषु पातव्यस्योपलक्षणत्वात्[1] ॥ २५ ॥

चातुर्मास्येषु श्रूयते पृषदाज्येनानुयाजान् यजतीति सन्ति प्रकृतावाज्यपशब्दयुक्ताः निगमाः देवानाज्यपानावह स्वाहा देवानाज्यपान्देवानामाज्यपानां प्रियाधामानि देवाआज्यपा आज्यमजुषन्तेति, आज्यप–शब्देन च तत्र प्रयाजानुयाजदेवता उच्यन्ते अत्र च पृषदाज्येनानुयाजा यष्टव्याः तदिह संशयः आज्यप–शब्दस्याज्यदधिपानित्येवं विकारः,? अथ वा दधिपानि? ति उत पृषदाज्यपानिति अहोस्विदविकारेणैव प्रयोग? इति यद्युभयं हविस्ततः प्रथमः पक्षः यदि दध्येव ततो द्वितीयः यदि पृषदाज्यं नाम द्रव्यान्तरं हविस्ततस्तृतीयः, अथ त्वाज्यमेव हविः तस्य तु पृषत्त्वं चित्रता संस्कारमात्रं तज्जननार्थं च दधि ततः सिद्धान्तः तत्र पृषदाज्यं गृह्णाति

[1] उपलक्षणादिति पा॰ ।

द्वयं वा इदं सर्पिश्च दधि चेति तुल्यवत्सङ्कीर्तनादुभयं हविः । नन्वेकेन प्रकृतौ देवतोपलक्षिता तेनेह यद्यप्युभयं हविः तथाऽप्येकेन देवतोपलक्षणसिद्धेर्नोभयादरो यज्ञपतिशब्दवदिति चेत् स्यादेवं यदि यज्ञपतिवत्पराथं हविः तदपि देवतावदनुष्ठानाङ्गत्वेन स्मर्त्तव्यमेव तस्मादुभयोपलक्षणम् अथ वा द्विरुपस्तृणाति सकृदभिघारयतीत्युपस्तरणाभिघारणवादाद्दधिसंस्कारार्थमाज्यं दध्येव हविः ततो दधिपानित्येव वक्तव्यं, नैतद् द्वयमपि युक्तं ग्रहणे हि दध्याज्ययोस्तुल्यत्वं दध्नो वा प्राधान्यं गम्यते यागे त्वाज्यमेव पृषत्त्वगुणकं करणत्वेन श्रुत्या विधीयते नोभयं, नापि दधि, यच्च यागद्रव्यं तदर्थो ग्रहणसंस्कारः तस्माद्ग्रहणे ऽप्याज्यमेव प्रधानं तस्य तु पृषत्तासम्पादनार्थं दधि गृह्यते न स्वार्थेनानुपयोगित्वात्, तथाविधे तु दधनि तुल्यनिर्देश उपस्तरणादिवादेन च प्राधान्यनिर्देशोऽर्थवादमात्रं तस्मादविकारः । अन्यस्त्वाह दध्ना आज्येन द्रव्यान्तरं निष्पद्यते तस्य वाचकः पृषदाज्य-शब्दः, तच्च हविः पृषदाज्येनानूयाजान् यजतीति वचनात् तस्मात्पृषदाज्यपानिति वक्तव्यं, स्यादेतदेवं यदि पृषदाज्य-शब्दः समुदायशक्त्या द्रव्यान्तरमभिधत्ते न त्वेवमस्ति पृषच्छब्दो[१] हि लोके चित्रत्ववचनः पृषद्रज्जुः पृषन्मणिरिति तेन पृषदाज्येन चित्रेणाज्येनेत्यर्थः, तेन प्राकृतस्यैवाज्यस्य हविषश्चित्रता गुणमात्रं विधानम्, एवं च गुणं सम्पादयितुं दधि गृह्यते प्राधान्यनिर्देशोऽर्थवादमात्रं हविरेव च प्रकृतावुपलक्षितं न हविर्गुणः अविकारेण तेनाज्यपानित्येवोपलक्षणं चोदकानुग्रहश्चैवमविकाराद्भविष्यति ॥

इति शास्त्रदीपिकायां दशमाध्यायस्य चतुर्थः पादः ॥ ४ ॥

---

## अथ दशमाध्यायस्य पञ्चमः पादः आरभ्यते ॥

---

एकदेशग्रहणे प्राथमिकानामेव ग्रहणाधिकरणम् ।

सू० आनुपूर्व्यवतामेकदेशग्रहणेष्वागमवदन्त्यलोपः स्यात् ॥ १ ॥

---

१ पृषदाज्य-शब्दो हीति पा० ।

प्राकृतानां बहूनामेकदेशे विकृतिषूपादातव्ये किमादितो मध्यतोऽन्ततो वा विकल्पेनोपादानम्? उतादित एवे? ति संशयः, यथा द्यावापृथिव्य एककपाले आश्विने द्विकपाले वैष्णवे त्रिकपाले प्राकृतानां कपालानामेकदेशग्रहणं तथा एकां सामिधेनीमित्यत्र सामिधेन्येकदेशः, तथा द्विरात्रादिषु द्वादशाहैकदेशः, तत्र विशेषाग्रहणादनियमे प्राप्त उच्यते यः कपालोपधानानां मध्ये प्राचीनः पदार्थः तेन प्रथमः कपाल उपस्थाप्यते तस्यो[1]पस्थितस्य परित्यागे न किंचित्कारणमस्ति तथा तेनापि द्वितीयस्तेनापि तृतीय इत्येवं क्रमेणोपस्थापितेषूपात्तेषु चावशिष्टानि प्रयोजनाभावाल्लुप्यन्ते तथा सामिधेन्यादिष्वपि तस्मादाद्योपादानमन्त्यलोपः ॥

एकत्रिके आद्ये तृचे गानाधिकरणम् ।

सू० एकत्रिके तृचादिषु माध्यन्दिनच्छन्दसां श्रुतिभूतत्वात् ॥ २ ॥

अस्त्येकत्रिको नाम क्रतुः अथैष एकत्रिकः तस्यैकस्यां स्तोत्रीयायां वहिष्पवमानं स्तुवीत तिसृषु होतुराज्यमेकस्यां मैत्रावरुणस्य तिसृषु ब्राह्मणाच्छंसितः एकस्यामच्छावाकस्य तिसृषु माध्यन्दिनः पवमान, इत्येवमान्तादेका तिस्रश्च स्तोत्रीया व्यतिषङ्गेण कर्त्तव्याः श्रूयन्ते, प्रकृतौ माध्यन्दिनपवमाने त्रयस्तृचाः गायत्रः प्रथमो वार्हतो द्वितीयः त्रैष्टुभस्तृतीयः, तत्रैव चेदं वचनं त्रिच्छन्दा आवापो माध्यन्दिनः पवमान इति, तदिह नवानामृचां मध्ये तिसृषूपादातव्यासु भवति संशयः किं त्रयाणां तृचानामाद्या ऋच उपादातव्या? उताद्यस्तृचः सकलो ग्राह्य इति, तत्र त्रिच्छन्दस्त्वं श्रुत्या प्रकृतौ विहितं चोदकप्राप्तमनुग्रहीतुं तृचाद्यानामुपादानम् आद्ये हि तृचे गायत्रीमात्रोपसंग्रहात् त्रिच्छन्दस्त्वं हीयते । नन्वाद्यया गायत्र्या द्वितीया गायत्र्युपस्थाप्यते न तु द्वितीयस्य तृचस्याद्या वृहती, सा हि तृतीयया गायत्र्योपस्थाप्यते, तेन पाठक्रमोपस्थापनबलादाद्यस्तृच उपादेयः सत्यं, पाठप्राप्तः क्रमो लोपनीयः श्रुतिप्राप्तत्रिच्छन्दस्त्वानुग्रहायेति प्राप्ते ब्रूमः प्रकृतावियं श्रुतिः अयं पाठ इति बलाबलं

[1] तस्यापस्थापितस्येति पा० ।

चिन्त्यं विकृतौ तु सर्वस्य प्रकृतितो लब्धात्मकस्य प्राप्तस्य न तत्कृतः कश्चिद्बलाबलविशेषः किं तु यद्विकृतावेव शीघ्रमुपतिष्ठते तदुपादेयम् अतः क्रम एवात्र बलीयान् । प्रथमा हि गायत्री समाप्यमानैव द्वितीयां गायत्रीमुपस्थापयति सोपस्थापितोपक्रान्तैव भवतीति नान्यस्यावसरः तस्माद्द्याद्ये तृचे माध्यन्दिनः पवमानः स्तोतव्यः ॥

एकस्यामृचि धूर्गानाधिकरणम् ।

सू० त्रिकं तृचेषु धुर्यं स्यात् ॥ ३ ॥

एकत्रिक एव क्रतौ व्यतिषङ्गेणैकस्यां तिसृषु च स्तोत्रेषु सम्पाद्यमानेषु यानि प्रकृतौ धूर्गानसम्पाद्यानि स्तोत्राणि तेषु यत्त्रिकं सम्पाद्यं तत्किं तिसृष्वृक्षु ? उतैकस्या एवर्चोऽभ्यासेन त्रिकं सम्पाद्य? मिति संशयः, तत्र तृचगानप्रापिचोदकानुग्रहाय गानान्तरवद्धूर्गानान्यपि त्रिस्तोमकानि तृचे गातव्यानि "आवृत्तं धूर्षु स्तुवत" इति तु वचनं तिसृष्वपि गीयमानस्य साम्नः प्रत्येकमावृत्तेस्तेनाभिप्रायेणानुवादमात्रमिति मन्यते स्यादेतदेवं यदि सामावृत्तिरियमुच्यते स्तोत्रावृत्तिस्त्वियं गुणकीर्त्तनञ्च स्तुतिः तत्र एकरूपैव स्तुतिरावर्त्तनीया सा चैकस्यामेवर्चि क्रियमाणा तादृश्येवावृत्ता भवति न तद्भेदे, तत्रान्यथाभावस्यावर्जनीयत्वात् वचनं चैवमर्थवत्, इतरथा ह्यनुवादमात्रमनर्थकं, तस्माद्धूर्गानानि त्रिकस्तोमकान्येकस्यामेवर्च्यभ्यस्तव्यानि ।

द्विरात्रादिषु दशरात्रस्य विध्यन्तानुष्ठानाधिकरणम् ।

चोदनासु त्वपूर्वत्वाल्लिङ्गेन धर्म नियमः स्यात् ॥ ४ ॥

द्विरात्रादिष्वहर्गणेषु द्वादशाहः प्रवर्त्तत इति स्थितं तत्र किं द्वादशाप्यहान्यादितः प्रवर्त्तन्त ? उत प्रायणीयोदयनीये वर्जयित्वा मध्यमो दशरात्रः पृष्ठ्यषडहच्छन्दोमचतुष्टयात्मक इति संशये विशेषाभावात् सर्वप्रवृत्तावुच्यते द्विरात्रे यत् प्रथमं तद्द्वितीयं यद् द्वितीयं तत्तृतीयं जगतीमन्तर्गच्छतीति पार्ष्णिकतृतीयस्य जागतस्यान्तरायदर्शनात् अन्यैश्चैवंविधैर्लिङ्गैर्दशरात्रस्यैव प्रवृत्तिः, अस्ति च द्वादशाहे मध्यमस्य दशरात्रस्य पृथक्सङ्घातक्लृप्तिः पृष्ठ्यादारभ्य हि प्रथममहर्द्वितीयमहरिति व्यवहारः

चतुर्थं छन्दोममहः दशममहरिति व्यवहारः, सति च दशरात्रसङ्घाते तस्यैव प्रवृत्तिलिङ्गविशेषैरध्यवसीयते ॥

सप्तभिराधुनोति इत्यनेनाग्नौ धूननार्थानां मन्त्राणामनियमेनोपादानाधिकरणम् ।

सू० अपूर्वासु तु सङ्ख्यासु विकल्पः स्यात्सर्वासामर्थवत्त्वात् ॥ ५ ॥

बहूनामेकदेशग्रहणे सत्याद्योपादानम् । अन्त्यलोप इति स्थितं, यत्र तु प्रकरणपठितानां मन्त्राणामेकदेशग्रहणं यथा यावाधूननार्थानां वेशीनां त्वा पत्मन्नाधूनोमीत्येवमादीनामावपनार्थानां च या जाता ओषधय इत्येवमादीनां सप्तभिराधूनोतीति चतुर्द्दशभिर्वपतीति तत्रापि किमाद्योपादानम्? उतानियम? इति संशये क्रमानुग्रहादाद्योपादाने प्राप्ते बलीयसा प्रकरणेन सर्वेषामङ्गत्वावगमात्सङ्ख्याश्रुतेश्चानियमेन तत्संख्योपादानेऽप्यविरोधात् क्रमबाधेनादितो मध्यतो ऽन्ततो वा सप्तानां चतुर्दशानां चोपादानम् ॥

विवृद्धस्तोमकेऽप्राप्तानां साम्नामागमाधिकरणम् ।

सू० स्तोमविवृद्धौ प्रकृतानामभ्यासेन तु संख्यापूरणमविकारात्संख्याया गुणशब्दत्वादन्यस्य चाश्रुतित्वात् ॥ ६ ॥

विवृद्धस्तोमकेषु क्रतुषु एकविंशेनातिरात्रेण प्रजा कामं याजयेदित्यादिषु किं प्राकृतानामेव साम्नामभ्यासेन स्तोमविवृद्धिसम्पादनम्? उताप्राकृतानां साम्नामागमेने? ति सन्देहे अन्येषामश्रवणात्संख्यायाश्च प्राकृताभ्यासेनापि सम्पत्तेरभ्यास एव न्याय्यः, नैवं, संख्या हि पृथक्त्वनिवेशनीस्तोत्रीयागता सम्पाद्या स्तोत्रीया पृथक्त्वसिद्ध्यर्थं सामान्तरागममाक्षिपति, अभ्यासे हि मुख्यपृथक्त्वाभावादसमञ्जसा संख्या स्यात्तस्मादागमः, स च साम्नामेव नर्चां त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप् च अत्र ह्येवाऽवपन्त्यत एवोद्वपन्तीति वचनेनाप्रख्यानां गायत्र्याद्याधारत्वनियमादृचां चर्त्वेवापासम्भवादनेनैव 'वचनेन न्यायप्राप्तोऽप्यागमः पवमानविषय एव कृत इति स्तोत्रान्तरेष्वगत्याऽभ्यासेनैव संख्यापूरणमित्युक्तम् ॥

बहिष्पवमाने ऋगागमाधिकरणम् ।

सू० बहिष्पवमाने त्वृगागमः सामैकत्वात् ॥ ७ ॥

बहिष्पवमानेऽपि किं समागम? उतर्गागम? इति संशये पूर्वेण न्यायेन सामागमे प्राप्ते ब्रूमः, एकं हि तत्र सामेति ब्रूयात्स्वरसामैव गायतीति वचनात्सामागमो न सम्भवति, न चाभ्यासेनापि संख्यापूरणं भवति, पराग्बहिष्पवमानेन स्तुवीतेत्यनभ्यासवचनेन पराक्छब्देनाभ्यासस्य श्रुत्यैव निषिद्धत्वात्, तस्मादृगागमः ।

सामिधेनीष्ववशिष्टानामागमेन सङ्ख्यापूरणाधिकरणम् ।

सू० अभ्यासेन संख्यापूरणं सामिधेनीष्वभ्यासप्रकृतित्वात् ॥ ८ ॥

यत्र सामिधेनीविवृद्धिरेकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्येत्यादौ तत्र किं प्राकृतीभ्य एकादशभ्योऽधिकानामागमः? उत प्रथमोत्तमयोरेवाभ्यासेन संख्यापूरणम्? उत यावदुक्तं त्रिरभ्यासम्प्रथमोत्तमयोः कृत्वा ऽवशिष्टानामागमः? इति, संशये संख्यासामञ्जस्यादेकादशभ्यः प्राकृतीभ्यो ऽतिरिक्तानां सर्वासामागमः, नैवं प्रकृतौ हि पञ्चदशसु सामिधेनीषु विहितासु एकादशसु सामिधेनीषु पठितासु वचनं त्रिः प्रथमामन्वाह त्रिरुत्तमामिति संख्यापूरणं यावद्भवति तावत्प्रथमोत्तमयोरभ्यसितव्यमित्येवंपरं, पूरणसंख्याभिप्रायश्च त्रि–शब्दो दृष्टार्थत्वात् त्रित्वस्वरूपपरत्वे हि अदृष्टार्थता स्यात् तस्मात्प्रथमोत्तमयोरभ्यासेन संख्यापूरणमिति प्राप्ते ब्रूमः स्यादेवं यदि पूरणसंख्यायास्त्रित्वस्य च सम्प्रतिपत्तिः स्यात्, न त्वेतदस्ति न ह्यवश्यं प्रथमोत्तरयोरभ्यासेन संख्यायां पूर्यमाणायामेकैकस्यास्त्रिरभ्यासो भवति द्विचतुरभ्यासेनापि तत्पूरणसम्भवात्, तस्मात्त्रिरभ्यास एव तत्र विवक्षितो न यावत्पूरणमभ्यासः तेन विकृतिष्वपि त्रिरभ्यास एव प्राप्तो न यावत्पूरणमभ्यासः तस्मात्प्रथमोत्तमे त्रिरभ्यस्यावशिष्टानामाग्नेयीनां दाशतयीभ्य[1] आगमः किं पुनरागम्यमानानां कर्मसम्बन्धे प्रमाणं न तावल्लिङ्गं तस्याग्न्यादिस्वरूपमात्रविषयत्वेन क्रत्वर्थत्वे प्रामाण्याभावात् सर्वत्र हि लिङ्गं यत्किञ्चित्प्रमाणकं क्रतुसम्बन्धसामान्यमपेक्ष्य द्वारविशेष-

१ दाशतयीनामागम इति पा० ।

मात्रे प्रमाणमिति याज्यापुरोऽनुवाक्या काण्डे व्याख्यातं, न चान्यदपि प्रमाणं पश्यामः—उच्यते संख्यैवात्र संख्येयानां कर्माङ्गत्वे प्रमाणं तथा हि सामिधेनीपरिच्छेदद्वारा क्रतोरुपकर्त्तव्यम् अग्निसमिन्धनप्रकाशिकाश्चर्चः सामिधेन्य उच्यन्ते तेन तत्समर्थाः याः काश्चिदृचो ऽवश्यमुपादातव्याः एवं सर्वत्रागमे द्रष्टव्यम् ॥

षोडशिनां प्राकृतत्वाधिकरणम् । सू॰ षोडशिनो वैकृतत्वं तत्र कृत्स्नविधानात् ॥ ९ ॥

अस्ति ज्योतिष्टोमे षोडशी स च षोडशिना वीर्यकाम इति पुरुषार्थतया विहितोऽपि पुनः क्रत्वर्थतया श्रूयते "अप्यग्निष्टोमे राजन्यस्य गृह्णीयादप्युक्थ्ये ग्राह्योऽतिरात्रे ब्राह्मणस्योत्तरे ऽहनि द्विरात्रस्य गृह्यते मध्यमेऽहंस्त्रिरात्रस्य चतुर्थेऽहन्यहीनस्य गृह्यत" इति, तत्र क्रत्वर्थषोडशिनं प्रति सन्देहः—किं प्रकृतौ स्यात्? उत विकृतिष्वेवोत्क्रष्टव्य? इति उत्तरे ऽहन् द्विरात्रस्य गृह्यत इत्यादिवचनैर्विकृतिसम्बन्धावगमादग्निष्टोमे राजन्यस्येत्यादिवचनस्य च वैकृताग्निष्टोमाभिप्रायत्वेनाप्यविरोधात्प्रकरणं बाधित्वा वाक्येनोत्कर्षे प्राप्ते ब्रूमः प्रकृतिप्रकरणाम्नातैरग्निष्टोमादिशब्दैस्तत्रैव सम्भवद्भिः किमित्यसन्निहिताऽपि विकृतिरभिधीयते। तस्माद्वाक्येनैव प्रकृतौ स्यात्-तत्र राजन्यादिनिमित्तेन विहितः स विकृतिष्वनैमित्तिको विधीयते उत्तरेऽहन्द्विरात्रस्येति ॥

आग्रयणादेव षोडशिग्रहणाधिकरणम् । सू॰ तस्याग्रयणाद् ग्रहणम् ॥ १० ॥

षोडशिन्येव सन्देहः किमसावाग्रयणादुक्थ्याद्वा ग्रहीतव्यः? उताग्रयणादेवेऽति? तत्राग्रयणाद्गृह्णाति उक्थ्याद्गृह्णातीति वचनद्वयाद्विकल्पेन समुच्चयेन वा द्वाभ्यां गृह्यते एवमपर्यवसिते पूर्वपक्षे मध्ये चिन्ता ॥

तृतीयसवन एव षोडशिग्रहणाधिकरणम् । सू॰ तृतीयसवने वचनात् स्यात् ॥ ११ ॥

वचनात् किं षोडशीसवनत्रये ग्राह्य? उत तृतीयसवन एवे? ति किं पुनः कारणमन्तरा चिन्तायाः मूलाधिकरणसिद्धान्ते कालोपलक्षणत्वमुक्थ्यस्य स्यास्यति, स्थिते च तस्मिन्पूर्वयोः सवनयोर्ग्रहणमशङ्कितुमशक्य-

न्तयोरुक्थ्याभावात् तस्मान्मध्ये चिन्तितमिति केचित्। तदयुक्तम् एवमपि पूर्वपक्षं समाप्य कर्त्तव्येयं चिन्ता स्यान्न मध्ये। किं च प्रातः सवने ग्रहीतव्य इत्यादिवचनादस्य सवनत्रये ग्रहणमाशङ्क्यते, न च वचनस्य परिपन्थी सम्भवति तस्माद्यद्यपि पूर्वयोः सवनयोरुक्थ्याभावात्तदुत्तरकालता न सम्भवति तथाऽपि वचनबलाद् ग्रहीतव्यः, कालवचनं तु तार्त्तीयसवनग्रहणाभिप्रायं भविष्यति, विद्यते च पूर्वयोरपि सवनयोरुक्थ्यं तस्माद्विचित्रगतिः सूत्रकारश्चिन्तान्तरमध्येऽपि प्रसङ्गात् चिन्तान्तरं कृतवानित्येव वक्तव्यं, तत्र प्रातःसवने गृह्णातीत्यादिभिर्वाक्यैः सवनत्रयेऽपि विधानात् त्रिष्वपि ग्राह्यः नैवं प्रातःसवनाद्यनुक्रमणं निन्दाद्वारेण तृतीयसवनस्तुत्यर्थं सवनत्रयं ह्यनुक्रम्य यत्प्रातःसवने गृह्णीयात् वज्रो वै षोडशीत्यादिना सवनद्वयं निन्दित्वा तृतीयसवने ग्राह्य इति श्रूयते, तस्मात्सर्वमिदमेकं वाक्यं तृतीयसवने षोडशिविधानार्थमिति तत्रैवास्य ग्रहणं सू· स्थितादुत्तरम् उक्थ्यान् निर्गृह्णाति षोडशिनमिति वचनादुक्थ्यादपि ग्रहीतव्यमित्युक्तम्। यदपि शाखान्तरवचनं पराञ्चमुक्थ्यात् षोडशिनं गृह्णातीति तत्राप्युक्थ्यादित्यपादानपञ्चमी न दिक्छब्दयोगनिमित्ता पराक्शब्दस्य पराचीः सामिधेनीरितिवदनभ्यासवाचित्वेन दिक्छब्दत्वाभावात्, तस्मादुभाभ्यां ग्रहणमिति प्राप्ते ब्रूमः "कृत्स्नस्याग्रयणादेव ग्रहणं नित्यवत्कृतम्। न युक्तं बाधितुं तस्मान्न विकल्पसमुच्चयौ। यत्तु वचनादिति तत्र पराञ्चमुक्थ्यादित्यत्र पराक्शब्दोऽनभ्यासवचनः सन्नपकर्षकः स्यात् अभ्यासस्य प्राप्त्यभावात्, तस्माद्दिक्शब्दोऽयं कालवचनः तन्निमित्ता चेयं पञ्चमी, उक्थ्यादूर्ध्वकाले षोडशिनं गृह्णातीति तत्समानार्थत्वाच्चोक्थ्यान्निर्गृह्णातीत्यत्रापि दिक्छब्दनिमित्तैव पञ्चमी न ह्यवश्यं दिक्छब्दयोगापेक्षैव सा विनाऽपि तेन मासात्प्रवत्स्यामीत्यादिषु दर्शनात् तेनेयं सह युक्ते तृतीयावदर्थमात्रापेक्षा न शब्दयोगमपेक्षते, एवं चाग्रयणात् कृत्स्नस्य नित्यवद्ग्रहणं न बाधितं भवति तस्मादाग्रयणादेव ग्रहीतव्यः॥

षोडशिग्रहस्य सस्तो(त्रा)त्रग्रस्वाधिकरणम्।

सू॰ उक्थ्याग्निष्टोमसंयोगादस्तुतशस्त्रः स्यात्सति हि संस्थाऽन्यत्वम्॥ १२॥

षोडशिन्येव यदाऽप्यग्निष्टोमे राजन्यस्य गृह्णीयादप्युक्थ्ये ग्राह्य इत्यादिवचनादग्निष्टोमोक्थ्ययोर्वा गृह्यते तदा किमस्तुतशस्त्रः स्यात्? उत तदाऽपि सस्तुतशस्त्र? इति संशये "उक्थ्याग्निष्टोमसंयोगेनास्य स्तोत्रादिकं भवेत् षोडशीस्तोत्रसंस्थायां नोक्थ्याग्निष्टोमता भवेत्॥ अग्निष्टोमादिशब्दा हि स्तोत्रसंख्यानिमित्तकाः "षोडशिस्तोत्रसंख्यायां नाग्निष्टोमः क्रतुर्भवेत्॥ तत्राग्निष्टोमे ग्राह्य इत्येतदेव विरुध्यते" तस्मादस्तुतशस्त्रः स्यात् सत्यं, संस्थान्यतापत्तिर्वचनात्तु न दुष्यति। पूर्वसंस्थोपमर्द्देन संस्थैवान्या विधीयते उक्थ्यसंस्थो हि यः प्राप्तस्तथाऽग्निष्टोमसंस्थितिः। राजन्यस्य तथा नासौ किन्तु षोडशिसंस्थितिः इत्येष वचनस्यार्थस्तस्मात्सस्तुतशस्त्रकः। तदङ्गत्वेन हि स्तोत्रं शस्त्रं चाहत्य चोदितम्। एकविंशस्तोत्रं भवति प्रतिष्ठित्यैहरिवच्छस्यत इति विहितं स्तुतशस्त्रमसति विरोधे किमुक्थ्याग्निष्टोमसंस्थस्य न क्रियते तस्मात्सस्तुतशस्त्रः,॥

आङ्गिरसां द्विरात्रे षोडशिनः परिसङ्ख्याधिकरणम्। **सू० अभावादतिरात्रेषु गृह्यते॥ १३॥**

आङ्गिरसां द्विरात्रे श्रूयते वैखानसम्पूर्वेऽहन् साम भवति षोडश्युत्तर इति किमिदमप्राप्तस्य षोडशिनोविधानार्थं? मुत प्राप्तस्य परिसंख्यार्थं? मिति संशये विधिः प्राप्त्यभावात् न तावच्चोदकेन प्राप्तिः स ह्यानुमानिकः तत्प्राप्तेः प्रागेव प्रत्यक्षेण वचनेन विधीयते षोडश्युत्तरइत्यनेन उत्तरेऽहन् द्विरात्रस्य गृह्यत इत्यनेन अथ वा वैकल्पिकी चोदकप्राप्तिः प्रकृतावतिरात्रे षोडशिनो वैकल्पिकत्वात् तत्र नियमार्थं विधानं, विहिते च तस्मिन्नानुमानिको न प्रापयति तस्मान्न तावच्चोदकप्राप्तिमपेक्ष्य तत्परिसंख्या न चानेनैवोत्तरेऽहन् द्विरात्रस्य गृह्यत इति सामान्यवचनेन प्राप्तत्वात् षोडश्युत्तरवचनं परिसंख्यार्थमिति वाच्यं सामान्येन हि सर्वद्विरात्राणामिदं वचनं तत्प्राप्तेः प्रागेवाङ्गिरसां द्विरात्रे षोडश्युत्तर इति विशेषवचनेन विधीयते, तस्मादप्राप्तविधिः षोडश्युत्तर इति नैतदेवं यद्यपीदं सामान्यवचनं तथाऽपि प्रत्यक्षेणैव वाक्येन द्विरात्रेषूत्तरेषामह्नां विकल्पेन प्राप्तः षोडशिनियतः षोडश्युत्तर इत्यत्र

तु नास्ति प्रत्यक्षो द्विरात्रादिसंयोगः प्रकरणात्तु कल्प्यते तच्च दुर्बलं वाक्यात्, तस्मात्सामान्यवचनेनैव वैकल्पिकीं चोदकप्राप्तिमपोद्य नियम्यमानः षोडशी षोडश्युत्तर इत्यनेन द्विरात्रान्तरेभ्यः परिसंख्यायते तेनाङ्गिरसां द्विरात्र एव नियमः, द्विरात्रान्तरेषु तु यथाचोदकं विकल्प एव स्यात् तदिदं वृत्त्यन्तरकारव्याख्यानमधिकरणस्यानुपपन्नमिति मत्वा भाष्यकारेण व्याख्यानान्तरमारब्धं तत्र यः पूर्वस्मिन् व्याख्याने सिद्धान्तः स एव पूर्वपक्षः परिसंख्येति । सिद्धान्तस्तु परिसंख्यायास्त्रिदोषवत्वाद्वैखानसविधिशेषो ऽयं न विधिः परिसंख्या वा, तस्मात्सर्वद्विरात्रेषूत्तरेषामह्नां नियतएव षोडशीसामान्यवचनेन प्राप्तत्वाद्वचनान्तरेणापरिसंख्यातत्वात् ॥

नानाऽहीने षोडशिग्रहग्रहणाधिकरणम् ।

सू० चतुर्थे चतुर्थे ऽहन्यहीनस्य गृह्यत इत्यभ्यासेन प्रतीयेत भोजनवत् ॥ १४ ॥

षोडश्यत्र चतुर्थे चतुर्थे ऽन्यहीनस्य गृह्यत इति श्रूयमाणः सन्दिह्यते किमेकस्यैवाहीनस्य चतुर्थे गृहीत्वा पुनरूत्पुरस्ताच्चतुर्थेऽभ्यासेन ग्रहीतव्यः? उतैकस्याहीनस्यैकस्मिन्नेव चतुर्थे सकृद्ग्रहणं वीप्सा तु नानाभिप्रायेति तत्र नानाऽहीनाभिप्रायत्वे न्यायप्राप्तत्वेन वीप्सानर्थक्यादहीनस्येति चैकवचनश्रवणादेकस्मिन्नहीने चतुर्थे चतुर्थे ऽभ्यासः, नैवम् अहीनस्य चतुर्थ इत्युच्यते एकस्य चाहीनस्यैकं चतुर्थमहः । यत्तु चतुर्थाच्चतुर्थं तदहीनस्याष्टमं भवति तत्र गृह्णन्नहीनस्य चतुर्थे गृह्णीयात् तस्मात्सकृद्ग्रहणम्, एकवचनं तु सामान्याभिप्रायं वीप्सा च न्यायप्राप्तानुवादः ।

विकृतौ ग्रहाणामाग्रयणाग्रतया अधिकरणम् ।

सू० जगत्साम्नि सामाभावादृक्सामतदाख्यं स्यात् ॥ १५ ॥

ज्योतिष्टोमे श्रूयते यदि रथन्तरसामासोमः स्यादैन्द्रवायवाग्रान् गृह्णीयात् यदि बृहत्सामा शुक्राग्रान् यदि जगत्सामाऽऽग्रयणाग्रानिति किमाग्रयणाग्रता ज्योतिष्टोमे निविशते? किं वोत्कृष्येतेति संशये प्रकरणात् ज्योतिष्टोमे स्यात् जगत्सामशब्देनापि ज्योतिष्टोम एव प्रकरणाद्यथा कथं चिदुच्यत इति प्राप्ते ब्रूमः—न जगन्नाम साम ज्योतिष्टोमेऽन्यत्र वा-

हुत्र चिदस्ति ते नायमृग्द्वारेण व्यपदेशः जगत्यामृच्युत्पन्नं साम जगत्साम तद्यत्र स जगत्सामा न च ज्योतिष्टोमे तदस्ति विद्यते तु विषुवति तस्माद्विषुवान् जगत्सामातत्संयुक्ता चाग्रयणाग्रता प्रकरणादुत्क्रष्टव्या एव वा यदि जगत्सामाग्रयणाग्रानित्यत्रैव जगत्सामशब्दे सन्देहः किमनेन ज्योतिष्टोम एव रथन्तरसामा बृहत्सामा चोच्यते किं वा स एवोभयसामा? अथ वा रथन्तरसामैव? उत यत्र जगत्यामुत्पन्नं साम विषुवति सोऽनेनाभिधीयत इति प्रकरणात् ज्योतिष्टोमे एवान्यतरसामाभिधीयते तथा सति पूर्वाभ्यामग्रताभ्यामाग्रयणाग्रताया विकल्प एव स्यात्, तस्मादुभयसामा जगत्सामा, जगच्छब्दो हि कृत्स्नवचनः, कार्त्स्न्यं च समुच्चये स्यात् तस्मात्समुच्चतोभयस्य मानैवमपि युक्तम् एवं हि सति जगत्सामेत्यनर्थकं स्यादाग्रयणाग्रान् गृह्णीयादित्येतावतैवोभयसामपक्षे निवेशसिद्धेः अन्यतरसामत्वपक्षयोः पूर्वाभ्यामग्रताभ्यामवरुद्धत्वात्, न चोभयसामत्वं ज्योतिष्टोमे ऽस्ति बृहद्रथन्तरयोर्वचनेनैव विकल्पविधानात् तस्मादीशानमस्य जगतः स्वदृशमित्येवं जगच्छब्दवत्यामुत्पन्नं रथन्तरमेव जगत्साम, अतस्तत्साम जगत्सामेति प्राप्ते ब्रूमः पदद्वारेण ऋगृचा च साम लक्षणयितव्यं स्यात्तत्र लक्षितलक्षणा स्यात्तस्माज्जगत्यामुत्पन्नेन साम्ना सो विषुवानेव जगत्सामा तदर्थं चाग्रयणाग्रत्वं पूर्वव्याख्यायां नैमित्तिकमाग्रयणाग्रत्वं विचारितं तद्धेतुत्वेन तु जगत्सामशब्दप्रस्तावः, इह तु साक्षाद्विचारित इति भेदः, ॥

संसवे उपवत्त्यप्रियवत्योरभावाधिकरणम् ।

सू० उभयसाम्नि नैमित्तिकं विकल्पेन समत्वात्स्यात् ॥ १९ ॥

यत्र बृहद्रथन्तरपृष्ठयोः समुच्चयः संसवगो[1]सवादिषु तत्र यत्प्रकृतौ रथन्तरनिमित्तं बृहन्निमित्तं च उपवन्ती रथन्तरपृष्ठस्य प्रतिपदं कुर्यात् अयवन्तीं बृहत्पृष्ठस्येत्यादि तदुभयं विकल्पेन कर्त्तव्य? मुत रथन्तरनिमित्तम्? अथाथवोभयं न कर्त्तव्य? मिति संशयः, तत्रोभयसामत्वेऽपि रथन्तरस्य बृह-

१ संसवागोसवादिष्विति पा० ।

तश्च सद्भावात्. सत्तया चोभयोः क्रतुविशेषणत्वादुभयमपि प्राप्तं समुच्चयासम्भवाद्विशेषाग्रहणाच्च वि[1]कल्पः । अथ वा मुख्यत्वाद्रथन्तरनिमित्तमेव स्यादिति प्राप्ते ब्रूमः वृहद्रथन्तरे हि प्रकृतौ निरपेक्षया सत्तया परस्परव्यवच्छेदेन वा क्रतुं वि[2]शिषन्ती निमित्ततामुपगते अत्र तूभयोः सहैव क्रतुसम्बन्धात्सापेक्षयोर्नान्यतरेणापि क्रतुर्विशेष्यते, तस्मान्निमित्तविघातादकर्त्तव्यम्, ॥

ऐन्द्रवायवस्य सर्वादावप्रतिकर्षाधिकरणम् ।

सू० ऐन्द्रवायवस्याग्रवचनादादितः प्रतिकर्षः स्यात ॥ १७ ॥

ज्योतिष्टोमे उपांश्वन्तर्यामौ अधाराग्रहौ विधाय ऐन्द्रवायवमैत्रावरुणादीनां धाराग्रहाणामुपक्रमे श्रूयते वाग्वा एषा यदैन्द्रवायवो यदैन्द्रवायवाग्रा ग्रहा गृह्यन्ते वाचमेवानुप्रयन्ति अपव्या धारया गृह्णाती"ति तत्र संशयः किमैन्द्रवायवः सर्वादित उपांश्वन्तर्यामाभ्यामपि पूर्वं ग्रहीतव्य? उत पाठप्राप्तस्थान ? इति, तदर्थमिदं विचार्यते किमैन्द्रवायवप्रभृतीनां ग्रहाणामेतद्विधायक ? मुत ग्रहानुवादेनैन्द्रवायवाग्रता धर्मोऽङ्गत्वेन विधीयत? इति, तत्र ग्रहाणां वचनान्तरैरेव प्राप्तत्वात्तदग्रताविधिरयं, तच्चाविशेषेण सर्वग्रहाणामङ्गमुपांश्वन्तर्यामयोरपि संपादयितव्यम्, इतरथा तयोर्वैगुण्यं स्यात्, अतः सर्वादितः प्रतिकर्षः, स्यादेवं यद्यग्रताविधिः स्यात् ग्रहविधिस्त्वयं कथं धारासंयोगाद्धि धाराग्रहाणामत्र गृह्णातिनोपादानं, तेषां च पाठप्राप्तमैन्द्रवायवाग्रत्वम्, अतो वक्ष्यमाणानामैन्द्रवायवादीनां ग्रहाणां संक्षेपेणायमुपक्रमः तस्मात्स्वस्थानस्यैवैन्द्रवायवस्य ग्रहणम् ॥

कामसंयोगेऽपि ऐन्द्रवायवस्यादावप्रतिकर्षाधिकरणम् ।

सू० कामसंयोगे तु वचनादादितः प्रतिकर्षः स्यात् ॥ १८ ॥

तत्रैव संक्षेपेणोपक्रम्य प्राग्विस्तारवचनेभ्यः कामसंयुक्तानि वचनान्याम्नातानि ऐन्द्रवायवाग्रान् गृह्णीयात् यः कामयेत यथापूर्वं प्रजाः

१ विकल्प्यते ।
२ विशिंष्टे ।

कल्पेरचीति तत्र किं सर्वादितः प्रतिकर्षे? उत तत्रापि स्वस्थान-एव ग्रहणम्? मिति, तत्र ग्रहाणां नित्यत्वाच्च कामे विधानम् अतो-ऽत्रैन्द्रवायवाग्रता गुणः कामाय विधीयत इति सर्वादितः प्रतिकर्षः । नैवं गुणो हि विधीयमानः प्रकृतान् ग्रहानाश्रित्य विधीयेत धाराग्रहाश्च प्रकृताः, तेषां च स्वरूपवदैन्द्रवायवाग्रताऽपि पाठादेव प्राप्ता सती कामे विधातव्या, तद्वरं श्रुत्यर्थविधानाय ग्रहणमेव कामे विहितमतः कामसंयोगेऽपि स्वस्थान एवैन्द्रवायवः ॥

आश्विनाग्रादीनां ग्रहाणां प्रतिकर्षाधिकरणम् ।

सू॰ परेषु चाग्रशब्दः पूर्ववत्स्यात्तदादिषु ॥ १९ ॥

तत्रैव श्रूयते शुक्राग्रान् गृह्णीया[१]त् प्रतिष्ठाकामो मन्थ्यग्रानभिचरन्न त्यादि, तत्र संशयः किं शुक्राग्रादीनामपि कामसंयोगे स्वस्थाने ग्रहणम्? उत प्रतिकर्ष इति, तत्र पूर्ववदेव शुक्रप्रभृतीनां नित्यानां ग्रहाणां कामे विधानात्स्वस्थाने प्राप्ते उच्यते, न हि प्राकृताधाराग्रहा पाठतः शुक्राग्रा येन तदनुवादेन ग्रहाणां कामे विधिः स्यादैन्द्रवायवाग्रा हि ते तत्र ग्रहान्कामे ग्रहेषु च शुक्राग्रतां विदधद्वाक्यं भिद्यते, तस्माद्ग्रहणाश्रितः शुक्राग्रतादिगुणः कामाय विधीयत इति प्रतिकर्षः ॥

आश्विनादीनां ग्रहाणामैन्द्रवायवस्य पुरस्तात्प्रतिकर्षाधिकरणम् ।

सू॰ पुरस्तादैन्द्रवायवस्याग्रस्य कृतदेशत्वात् ॥ २० ॥

स्थिते प्रतिकर्षे चिन्त्यते किं सर्वादितः प्रतिकर्षः? उतैन्द्रवायवात्पूर्वमिति विशेषाग्रहणात्सर्वग्रहाणां पुरस्ताच्छुक्रोऽपकृष्टव्य इति प्राप्ते ब्रूमः कामाय हि गुणो विधीयमानः प्रकृतान् ग्रहानाश्रित्य विधीयते, प्रकृताश्च यदैन्द्रवायवाग्रा गृह्यन्त इत्यनेन साधारणेनोपक्रमेणोपक्रान्ता ऐन्द्रवायवाद्याधारा ग्रहा वक्ष्यमाणाः तेन तानेवाश्रित्य शुक्राग्रता गुणः कामाय विधीयत इति न सर्वादितः प्रतिकर्षः, इदमेव च वक्ष्यमाणानां ग्रहाणां

१ गृह्णीत प्रतिष्ठाकाम इति पा॰ ।

साधारणोपक्रमस्य प्रयोजनं कथं नाम सर्वे एव वक्ष्यमाणा ग्रहाः काम्यानां गुणानामाश्रयत्वं प्रतिपद्येरन्निति ॥

सादनस्यापि प्रतिकर्षाधिकरणम् । सू० सादनं चापि शेषत्वात् ॥ २१ ॥

धाराग्रहाणां पूर्वं पूर्वं गृहीत्वा सादयित्वोत्तरोत्तरस्य ग्रहणं सर्वेषु च गृहीतेष्वासादितेषु[1] च पश्चात्क्रमेण प्रदानमित्येषा तावन्नित्यक्लृप्तिः, कामाय तु शुक्राग्रादिग्रहणेष्वपकृष्यमाणेषु किं सादनं प्रतिकृष्यते ने? ति संशये वचनाभावान्न प्रतिकर्षेति इति प्राप्त उच्यते सादनस्यैतत्प्रयोजनं यदुत्तरग्रहाणां साहित्यसम्पादनं न ह्यनासाद्यैकमपरो ग्रहीतुं शक्यते । तस्माद्ग्रहणशेषत्वात्सादनस्य तत्प्रतिकर्षे प्रतिकर्षः ॥

प्रदानस्यापि प्रतिकर्षाधिकरणम् । सू० प्रदानं चापि सादनवत् ॥ २२ ॥

तथा प्रदानं किं प्रतिकृष्यते ने? ति संदेहे प्रदानोपक्रमत्वाद्ग्रहणस्य तत्प्रतिकर्षे प्रदानस्य प्रतिकर्षः । नैवं, न ह्यवदानवत्प्रदानोपक्रमो ग्रहणं सर्वेषु गृहीतेषु पश्चात्प्रदानं नित्यक्लृप्तावित्युक्तमवगतस्वरूपं च ग्रहणं कामेऽपि प्रतिकृष्यत इति न प्रतिकृष्यमाणस्यापि प्रदानोपक्रमत्वं, तस्मात्तत्प्रदानापकर्षः ॥

त्र्यनीकायामैन्द्रवायवतोक्तेः समानविषयतेताधिकरणम् । सू० त्र्यनीकायां न्यायोक्तेष्वाम्नानं गुणार्थं स्यात् ॥ २३ ॥

द्वादशाहे त्र्यनीकाऽऽम्नाता, ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ दशमं चाह अथेतरेषां नवानामन्हामैन्द्रवायवाग्रं प्रथममहरथ शुक्राग्रमथाग्रयणाग्रमथैन्द्रवायवाग्रमथ शुक्राग्रमित्यादि, तत्र प्रथमद्वितीययोरन्होरैन्द्रवायवाग्रता शुक्राग्रता च श्रुता, सा तयोरथन्तरसामत्वाद्बृहत्सामत्वाच्च प्रकृतित एव प्राप्ता सती किमर्थं श्रूयत इति चिन्त्यते—अनुवादमात्रमित्येकः पक्षः, तथा च सत्यानर्थक्यं स्यात्तस्मादङ्गान्तरपरिसंख्यार्थं साऽपि त्रिदोषा, तस्मादर्थवादार्थं तृतीयेऽहन्याग्रयणाग्रता व्याख्या, पूर्वयोरैन्द्रवायवाग्रतायाः

---

१ गृहीतेषु सादितेषु इति पा० ।

शुक्राग्रतायाश्चानुष्ठितत्वादजामित्वायेति । सिद्धान्तस्तु प्रकृतौ रथन्तरसामत्वेन बृहत्सामत्वेन च निमित्तेन नैमित्तिके ऐन्द्रवायवाग्रशुक्राग्रते विहिते तथैव चोदकेन प्राप्येते, इदं त्वनैमित्तिकार्थं वचनं तस्य च प्रयोजनं तत्तद्विकृतिष्वसत्यपि रथन्तरबृहत्सामत्वे ऐन्द्रवायवशुक्राग्रतयोः सिद्धिः ॥

व्यूढद्वादशाहस्य समूढविकारत्वाधिकरणम्[१]

सू॰ द्वादशाहस्य व्यूढसमूढत्वं पृष्ठवत्समानविधानं स्यात् ॥ २४ ॥

ग्रहाग्रताविशेषद्वैविध्यात् द्विविधो द्वादशाहः समूढो व्यूढश्च, समूढः पूर्वोक्तः व्यूढस्त्वैन्द्रवायवाग्रौ प्रायणीयोदयनीयौ अथेतरेषां दशानामह्रामैन्द्रवायवाग्रं प्रथममहः अथ शुक्राग्रम् अथ शुद्धे[१] आग्रयणाग्रे अथैन्द्रवायवाग्रम् अथ द्वे शुक्राग्रे अथाग्रयणाग्रम् अथ द्वे ऐन्द्रवायवाग्रे इति, तत्र किं द्वे अपि रूपे द्वादशाहस्य नैसर्गिके वैकल्पिके क्रत्वङ्गे? उत समूढमेव नित्यं व्यूढरूपं तु तस्यैव काम्यो विकार? इति, तत्र व्यूढस्याप्यकामसंयुक्तस्योत्पन्नस्य वाक्यान्तरेण कामसंयोगे सत्यप्येकस्य तू भयत्वे संयोगपृथक्त्वमित्यनेन न्यायेन क्रत्वर्थता पुरुषार्थता च, तस्मात्समूढवद्व्यूढोऽपि क्रत्वर्थः उच्यते न दध्यादिवत् व्यूढस्योभयार्थत्वं युक्तं तत्र हि दध्न इन्द्रियसंबन्धं विदधत् वाक्यं लोकतो दधिस्वरूपं प्रकरणेन चाश्रयसंबन्धं लब्ध्वा न दध्ना जुहोतीत्येतं दधिविधिमपेक्षते, व्यूढस्वरूपस्य तु लोकतोऽप्रसिद्धेरवश्यं वाक्यान्तरसिद्धैव व्यूढोत्पत्तिः कामवाक्येन फले विधातव्या, अतः प्रत्यक्षेण कामवाक्येन फललाभाद् व्यूढोत्पत्तिवाक्यं न प्रकरणेन क्रत्वङ्गतां भजते, तस्मात्समूढविकारो व्यूढः ॥

संवत्सरसत्रेऽनीकानां विवृद्ध्यधिकरणम् ।

सू॰ एकादशिनवत्[२] त्र्यनीका परिवृत्तिः स्यात् ॥ २५ ॥

गवामयने एकषष्ट्यधिकानि त्रीणि शतान्यहानि अशीति शतं पूर्वपक्षः तथोत्तरं मध्ये विषुवान् तत्राहः क्लृप्तिं ताण्ड्यकिनः समामनन्ति प्रा-

१ अथ द्वे आग्रयणाग्रे इति पाठस्तु पुस्तकान्तरस्थोयुक्तः प्रतिभाति ।
२ एकादशिनीव ।

यणीयं प्रथममह· चतुर्विंशं द्वितीयं ततश्चत्वारोऽभिप्लवाः षडहाः एकः पृष्ठ्यः षडहः समासः सद्वितीयः सतृतीयः सचतुर्थः सपञ्चमः ततस्त्रयोऽभिप्लवाः षडहाः एकः पृष्ठ्यः षडहः अभिजिन्नामैकाहः त्रयः स्वरसामानः इत्यष्टाविंशतिरहानि आद्याभ्यामहोभ्यां सह षण्मासाः तदिदं पूर्वं पक्षः, ततो विषुवान् अथोत्तरं पक्षः त्रयः स्वरसामानः विश्वजिन्नामैकाहः पृष्ठ्यः षडहस्त्रयस्त्रिंशारम्भणः त्रयोऽभिप्लवाः षडहाः तान्यष्टाविंशतिरहानि पुनः पृष्ठ्यः षडहस्त्रयस्त्रिंशारम्भणः चत्वारोऽभिप्लवाः षडहाः समासः सद्वितीयः सतृतीयः सचतुर्थः ततस्त्रयोऽभिप्लवाः षडहाः आयुर्गौरिति द्वे अहनी द्वादशाहस्य दशाहानि महाव्रतं चातिरात्रश्चेति द्वात्रिंशदहानि आद्यैरष्टाविंशत्यहोभिः सह षण्मासाः तदत्र भाष्यकारेण प्रायणीयोदयनीयमध्यवर्तिनीं द्वादशाहिकीं त्र्यनीकां चोदकप्राप्तामाश्रित्य विचारितं—किं दण्डकलितवदावर्तनीया? किं वा नवानामप्यनीकानां स्वे स्वे स्थाने विवृद्धि? रिति, तदर्थं च विचारितम् ऐन्द्रवायवाग्रं प्रथममहरित्यहर्ग्रहणं विवक्षितम्, अतश्च प्रथमादीनामह्नामङ्गभूता ऐन्द्रवायवाग्रत्वादयो ऽहरपूर्वप्रयुक्ता? उत प्रथमादीनां यज्ञभागानां धर्माः परमापूर्वप्रयुक्ताः? इति, तत्राहर्ग्रहणस्य श्रुतत्वादहर्धर्मत्वमतश्च प्रायणीयानन्तरस्याह्नोधर्मऐन्द्रवायवाग्रता, तदनन्तरस्य शुक्राग्रता तदनन्तरस्याग्रयणाग्रता, गवामयनेऽपि तथैव प्राप्नोति. नवभिश्चानीकैर्नवस्वहस्सु समनुष्ठितेषु पुनरैन्द्रवायवाग्रं प्रथममहरित्येतदेवोपतिष्ठते, तथा ततः परमपि, तस्माद्दण्डकलितवदावृत्तिरिति प्राप्ते सिद्धान्तितम्। उद्दिश्यमानस्य हि प्रथमादेरह्नो विशेषणं न सम्भवति तस्मात्प्रथममैन्द्रवायवाग्रमथ शुक्राग्रमित्येतावद्विवक्षितं, नवानां चानीकानां नवधा विभा[1]गः गवामयनेऽपि पूर्वं पक्षो नवधा विभज्य प्रथमादिभागेषु नवस्वैन्द्रवायवाग्रतादीनां नवानामनीकानामनुष्ठानं कर्त्तव्यमिति स्वस्थानविवृद्धिः सिद्धा भवति, एवं च क्रत्वोत्तरे पक्षसि पञ्चमे षाडहिके त्रयस्त्रिंशेऽहन्याग्रयणाग्रता दर्शनमुपपन्नं भवति, जगन्ती वै छन्दांसि प्रत्यवरोहन्त्याग्रयणं ग्रहाबृहत्पृष्ठानि

१ विभागे इति।

त्रयस्त्रिंशं स्तोमा इति दण्डकलितवदावृत्तावभिप्लवादारभ्य नवकेष्वहस्सु सङ्ख्यमानेषु उत्तरस्मिन्नपि पक्षसि एकमहर्व्याप्य त्र्यनीका समाप्यते ततः पुनरैन्द्रवायवाग्रत्वादारभ्यानुष्ठीयमाने द्वितीयमहरैन्द्रवायवाग्रं तृतीयं शुक्राग्रं विश्वजिदाग्रयणाग्रम् त्रयस्त्रिंशमहरैन्द्रवायवाग्रं प्राप्नोति स्वस्थानविवृद्धौ पुनः पूर्वस्मिन्पक्षसि नवधा विभक्ते नवमे भागे आग्रयणाग्रतायामनुष्ठितायामुत्तरे पक्षस्यावृत्ते प्रातिलोम्येनानुष्ठीयमाने प्रथमभागे आग्रयणाग्रता भवति, तदन्तर्गतं तत्र यस्त्रिंशमहरिति तत्र आग्रयणाग्रतादर्शनमुपपन्नं भवति, तदिदं भाष्यकारीयमधिकरणव्याख्यानं लिङ्गोपवर्णनं चानुपपन्नं, न ह्यत्र चोदकेन त्र्यनीका प्राप्यते अभिप्लवे हि ज्योतिर्गौरायुरिति नामधेयैरेकाहज्योतिरादिधर्मप्राप्तिः, एकाहेषु च रथन्तरसामस्वैन्द्रवायवाग्रता बृहत्सामसु च शुक्राग्रता तेनाभिप्लवेऽपि षडहे प्रथमतृतीयपञ्चमानां रथन्तरसामत्वादैन्द्रवायवाग्रता द्वितीयचतुर्थषष्ठानां बृहत्सामत्वाच्छुक्राग्रता, न तु त्र्यनीकाप्राप्तिः चोदकादपि बलीयो नामधेयमित्युक्तं बहुशोऽभिप्लवविकाराण्येव गवामयनेऽहानि तेन न त्र्यनीका स्यात् अस्तु वा चोदकेन त्र्यनीकाप्राप्तिस्तथाऽपि नवधा विभागो न युक्तः न हि द्वादशाहे प्रायणीयोदयनीययोरन्तरालं नवभिरनीकैः पूरितं किन्तु दशभिः, दशमे चैन्द्रवायवाग्रता ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ दशमं चेति वचनात्, अतश्च गवामयनेऽपि सर्वस्मिन्पक्षसि दशधा विभज्यमाने दशमो भाग ऐन्द्रवायवाग्रः स्यात् उत्तरस्मिंश्च पक्षसि प्रातिलोम्येनानुष्ठीयमाने प्रथमो भाग ऐन्द्रवायवाग्रः स्यात्, तदन्तर्गतं च त्रयस्त्रिंशमहरिति तत्राप्यैन्द्रवायवाग्रता प्राप्तेराग्रयणाग्रताऽनुपपत्तिः सिद्धान्तेऽपि स्यात्, अपि च पूर्वपक्षे त्वहर्मत्वात् त्र्यनीकायां गवामयनिके च पृष्ठ्यषडहे नामधेयेन द्वादशाहिकपृष्ठ्यषडहधर्मप्राप्तेस्तत्र च त्रयस्त्रिंशस्यान्ह आग्रयणाग्रत्वादिहापि यत्र क्वचिदवस्थितस्यापि त्रयस्त्रिंशस्याग्रयणाग्रता भवतीति विपरीतं लिङ्गम्, अन्यानि च दूषणानि तन्त्ररत्नएव दर्शितानीति नेह प्रपञ्च्यन्ते। तस्माद्यथावार्तिकमधिकरणं वर्ण्यते, सत्यं, न चोदकेन त्र्यनीका प्राप्यते, प्रत्यक्षेण तु वचनेन

अनीका विधीयते ऐन्द्रवायवाग्रं प्रथममहरथ शुक्राग्रमथाग्रयणाग्रमथैन्द्रवायवाग्रमथ शुक्राग्रमथाग्रयणाग्रमिति तत्र संशयः किमेते दण्डकलितवदावर्तनीया ? उत नवधा विभज्य नवस्वपि भागेषु नवानामनीकानां निवेश इति तत्र प्रथमहरिति वचनादुत्तरेष्वप्यहर्ग्रहणस्यानुषङ्गात्प्रथमादन्हः आरभ्यान्तादैन्द्रवायवशुक्राग्रयणानां व्यतिषङ्गेणाग्रत्वमनेन वचनेन विधीयते, ऐन्द्रवायवाग्रता शुक्राग्रता ग्रयणाग्रतेति त्रिष्वहस्सु तथा परेष्वपि त्रिषु तथा परेष्वपि, एवमान्तात्कुर्यादिति वचनार्थं मन्यते पूर्वपक्षवादी सिद्धान्तस्तु उद्दिश्यमानस्य भागस्यान्हो वा प्राथम्येन विशेषणासम्भवात्प्रथममहरिति चोद्देश्यं तत्राहरुद्देशेऽहर्मात्रोद्देशादग्रेति निर्देशानुपपत्तिः तस्मात्प्रथममैन्द्रवायवाग्रमथ शुक्राग्रमित्येतावद्विवक्षितमहर्ग्रहणं त्वहःसङ्ख्याते तस्मात्प्रथमादीनां भागानां धर्माः नवानां चाग्रतानां विधानान्नवधा विभागः, गवामयने च धर्मा विधीयमाना अवान्तरप्रकरणेन पूर्वस्मिन्पक्षसि निविशन्ते, अतश्च पूर्वं पक्षो नवधा विभज्य नवाप्यनीकानि निवेशनीयानि, तत्र चान्त्ये भागे आग्रयणाग्रता भवति, उत्तरस्मिंश्च पक्षसि यत्पूर्वस्मिन्पक्षसि विहितं तत्प्रातिलोम्येनानुष्ठेयं, ततश्च प्रथमे भाग आग्रयणाग्रता भवति तदन्तर्गतं च पार्ष्ठिकं त्रयस्त्रिंशमहरिति तत्राग्रयणाग्रत्वदर्शनमुपपद्यते दण्डकलितवदावृत्तौ त्वाद्ये द्वे अहनी वर्जयित्वा अनीका प्रारब्धव्या तयैन्द्रवायवाग्रताया आहत्य विधानात् आदितो ह्यारभ्यमाणा सा द्वितीयेऽहनि आहत्य चोदितेनैन्द्रवायवाग्रत्वेन विरुध्येत, तस्माद् द्वे अहनी वर्जयित्वाऽभिप्लवाविकात्प्रमादन्हस्त्रिवृत आरभ्य प्रवर्तते, ततश्च पूर्वस्मिन्पक्षस्यान्तिमे पर्याये सप्तानामन्हां परिशेषादसमाप्तैव अनीकाविषुवन्तमुत्तरस्मिंश्च पक्षस्येकमहर्व्याप्य समाप्यते ततश्चासौ पूर्वस्मिन्पक्षसि साकल्येनासम्भवन्ती सामर्थ्यात्मकेन लिङ्गेनावान्तरप्रकरणं बाधित्वा महाप्रकरणेन गवामयनस्य विधीयमाना न पूर्वस्य पक्षसो विहितेति शक्यं वक्तुं यच्च पूर्वस्य पक्षसो विहितं तस्योत्तरस्मिन्प्रातिलोम्यमिति न अनीकायाः प्रातिलोम्यमित्यानुलोम्येनैवासावान्तात्प्रवर्तत इति त्रयस्त्रिंशेऽहन्यैन्द्रवायवाग्रत्वप्रसङ्गादाग्रयणाग्रताऽनुप-

पत्तिः, सिद्धान्ते त्वविरोधादादित आरभ्य प्रवर्तते उत्तरे च पक्षसि प्रातिलोम्यं लभत इत्युपपन्नं लिङ्गम् ॥

व्यूढे मन्त्राणां छन्दोव्यतिक्रमाधिकरणम् ।

सू० छन्दोऽव्यतिक्रमात् व्यूढे भक्षपवमानपरिधिकपालस्य मन्त्राणां यथोत्पत्तिवचनमूहवत्स्यात् ॥ २६ ॥

व्यूढात्मके द्वादशाहे छन्दोऽव्यतिक्रम आम्नातः छन्दांसि वा अन्योन्यस्य लोकमभ्यध्यायन् "गायत्रीस्त्रिष्टुभस्त्रिष्टुब्जगत्या जगतीगायत्र्या" इति तत्र संशयः किं भक्षाणां पवमानानां परिधीनां कपालानाञ्च मन्त्रार्थवादेषु गायत्र्यादिशब्दैरभिलपितानां मन्त्राणामर्थानां च छन्दांस्यतिक्रमयितव्यानि? उत मन्त्रगतानामेव छन्दसां व्यतिक्रम? इति विशेषाभावात् सर्वेष्वर्थेषु मन्त्रेषु च छन्दो व्यतिक्रमस्तेन गायत्रशब्दनिर्दिष्टः प्रातःसवनीयो भक्षस्त्रैष्टुभशब्दितस्य माध्यन्दिनीयस्य भक्षस्य स्थाने माध्यन्दिने सवने कर्त्तव्यः माध्यन्दिनीयश्च जागतशब्दितस्य तार्तीयसवनीकस्य स्थाने तृतीयसवने तार्तीयसवनिकश्च प्रातःसवने तथा बहिष्पवमानो माध्यन्दिने माध्यन्दिनपवमानस्तृतीयसवने आर्भवः पवमानः प्रातःसवने तथा मध्यमः परिधिः स्थविष्ठो दक्षिणस्य स्थाने दक्षिणश्चाणीयानुत्तरस्य उत्तरश्चाणिष्ठो मध्यमस्थाने परिधातव्यः, तथाऽष्टाकपालो माध्यन्दिने एको दशकपालस्तृतीयसवने द्वादशकपालश्च प्रातःसवने कर्त्तव्यः, तथा मन्त्रगता गायत्र्यादिशब्दाः श्येनोऽसि गायत्रच्छन्दा इत्यादयस्त्रिष्टुबादिशब्दानां सुपर्णोऽसि त्रिष्टुप्छन्दा इत्यादीनां स्थाने सुपर्णोऽसि गायत्रच्छन्दा इत्येवमूहितव्या इति प्राप्ते ब्रूमः—मन्त्रगतानामेव व्यतिक्रमो नार्थानां, न हि तेषां गायत्र्यादिशब्दवत्त्वमस्ति, स्तुतिमात्रं तु तेषु गायत्र्यादिभिः निर्देशः शक्यते त्वेकस्मिन्मन्त्रे प्रकाशितं छन्दो मन्त्रान्तरे गायत्र्यादिशब्दप्रक्षेपेण प्रकाशयितुं, तस्मान्मन्त्रगतानामेव छन्दसां व्यतिक्रमः ॥

इति शास्त्रदीपिकायां दशमाध्यायस्य पञ्चमः पादः ॥ ५ ॥

## अथ दशमाध्यायस्य षष्ठः पाद आरभ्यते ॥

रथन्तरादीनां साम्नां तृचे-गानाधिकरणम् ।

**सू० एकर्चस्थानि यज्ञे स्युः स्वाध्यायवत् ॥ १ ॥**

सन्ति ज्योतिष्टोमे रथन्तरादीनि स्तोत्रीयाणि सामानि तानि किमेकैकस्यामृचि गेयानि? उत तृचे? इति संशये, स्वाध्यायवेलायामेकस्यामृचि गीतत्वात्तदवैलक्षण्याय यज्ञेऽप्येकस्यां भवेयुः, एकं साम तृचे क्रियत इति तु वर्तमाननिर्देशसरूपं न विधिक्षममित्येतावान्पूर्वः पक्षः ऋक्स्तोमो[१] वाचेत्याद्यर्थवादविभावितविधिशक्तेरेकं साम तृचे क्रियत इति वचनात्तृचे गातव्यानीति सिद्धान्तः ॥

स्वर्दृक्शब्देन वीक्षणस्य कालार्थताऽधिकरणम् ।

**सू० स्वर्दृशं प्रतिवीक्षणं कालमात्रं परार्थत्वात् ॥ २ ॥**

रथन्तरे प्रस्तूयमाने संमीलयेदिति विधाय श्रूयते "स्वर्दृशं प्रतिवीक्षेते"ति तत्र सन्देहः किं स्वर्दृक्छब्दस्य वीक्षणस्य च कालार्थः संयोगः? उताङ्गाङ्गिसम्बन्ध? इति, तत्र कालार्थत्वे स्वर्दृक्छब्दस्य लक्षणाप्रसङ्गादङ्गाङ्गिसम्बन्ध एव न्याय्यः स्वर्दृक्छब्दो वा वीक्षणाङ्गं स्वर्दृक्छब्दं समुच्चारयन् वीक्षेत नान्यथेति, वीक्षणं वा स्वर्दृक्छब्दस्याङ्गं वीक्षमाणः स्वर्दृक्छब्दमुच्चारयेन्नान्यथेति प्राप्ते ब्रूमः ॥ अनपेक्षितसम्बन्धाद् वाक्यभेदप्रसङ्गः न युक्तोऽङ्गाङ्गिसम्बन्धस्तस्मात्कालार्थता वरम् अभिवत्येकदेशो हि स्वर्दृक्छब्दः पृष्ठस्तुत्यर्थत्वाच्च वीक्षणं प्रयोजनमपेक्षते स्वर्दृक्छब्दः कर्तृवचनत्वाद् द्वितीयान्तत्वाच्च नोनुम इत्यनेन सम्बध्यमानः स्तुतिमेवालमभिनिर्वर्तयितुं न वीक्षणं प्रकाशयितुं, तथा वीक्षणमपि रागप्राप्तं दृष्टेनैव प्रयोजनेन निराकाङ्क्षं न स्वर्दृक्शब्दाङ्गतया विधातव्यं सम्मीलनविधिना चावधिप्रतिपादनेनैकार्थ्यसम्भवाच्च वाक्यान्तरत्वमवकल्पते, प्रति-शब्दश्च स्वर्दृक्शब्दस्य श्रुत्यैव लक्षणतामाचष्टे, अतः काल-

१ ऋक्सामो वाचेति पा० ।

तथैव न्याय्या, तेनायमर्थः रथन्तरे प्रस्तूयमाने संमीलयेदास्वर्दृक्रुच्छ्वो-च्चारणात्, तस्मिंस्तु काले वीक्षेतेति ॥

गवामयनिके पृष्ठ्यषडहे बृहद्रथन्तरयोर्विभागाधिकरणम् ।

सू॰ पृष्ठ्यस्य युगपद्विधेरेकाहवद् द्विसामत्वम् ॥ ३ ॥

द्वादशाहे पृष्ठ्यः षडह उत्पन्नः, तत्र षण्णामप्यन्हां क्रमेण रथन्तर-बृहद्वैरूपवैराजशाक्वररैवतानि पृष्ठसामानि गवामयनादिषु श्रूयते पृष्ठ्यः षडहो बृहद्रथन्तरसामा कार्य इति, तेन वैरूपादिकं निवर्तते बृहद्रथन्त-राभ्यामेव पृष्ठस्तुतिर्निर्वर्तयितव्या, तत्र संशयः किमेकैकस्मिन्नहनि द्वे द्वे स्याताम्? उत क्वचित् बृहत्क्वचिद्रथन्त?रमिति, तदर्थमिदं विचार्यते किं बृहद्रथन्तरसामेति द्वन्द्वगर्भो बहुव्रीहिः बृहच्च रथन्तरञ्च बृहद्रथन्तरे इति प्रथमं द्वन्द्वं कृत्वा पश्चाद्बृहद्रथन्तरे सामनी अस्येत्यन्यपदार्थे बहुव्रीहिः? उताकृत्वैव द्वन्द्वमनेकपदबहुव्रीहिः, बृहच्च रथन्तरं च सामा-स्येति, तत्र द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनमिति कात्यायनवचना-देवंविषये द्वन्द्वस्य नित्यत्वात्कृत्वैव द्वन्द्वं बहुव्रीहिः तेनेतरेतरयुक्तयोः साम्नोः षडहसम्बन्धाद्यत्रैकं प्रयोक्तव्यं तत्रेतरेतरसहितमेव कार्यमित्येव-मवगमादेकैकमेवाहो बृहद्रथन्तरसामकं कार्यमिति प्राप्ते ब्रूमः क्वचि-त्किंचित्स्यात् एवमेकैकस्येतरेतरनिरपेक्षस्य प्रापकश्चोदकोऽनुगृहीतो भवति, न च वचनविरोधः यद्यपि तावद् द्वन्द्वगर्भो बहुव्रीहिः स्यात्तथाऽपि षडहापेक्ष एवेतरेतरयोगो द्वन्द्वेनावगम्यते, न षडहावयवापेक्षः षडहापे-क्षश्चेतरेतरयोगः क्वचित्कस्यचिद्विशेषेऽपि न विरुध्यते, स च यदि विभा-गेन निवेशे प्रमाणं न स्यात्ततः सर्वत्रेतरेतरयोगः स्यात् अविशेषात् अस्ति तु प्रमाणं चोदकः तस्मादेकस्मिन्नहन्येकमितरस्मिंश्चेतरत्प्रयोक्तव्यं न वाऽवश्यं द्वन्द्वगर्भोऽयं बहुव्रीहिः, विभाषावचनेन द्वन्द्वस्यानित्यत्वात् कात्यायनीयं तु वचनं शब्दानुशासनपरत्वाद्यत्र सतोर्द्वन्द्वतत्पुरुषयोरन्यश-ब्दरूपम् असतोश्चान्यद्भवति तत्र समासकृतरूपनियमार्थं, तद्यथा वाक्-

१ निवर्तते इति पा॰ ।
२ तत्र पठोति पा॰ ।

त्वचप्रियः पञ्चगवधन इत्यत्र द्वन्द्वतत्पुरुषयोरकरणे वाक्त्वक्प्रियः पञ्चगोधन इति अकृत्वाऽपि समासान्तप्रयोगः प्रसज्येत, तद्व्यावृत्त्यर्थं नित्यसमासवचनं बृहद्रथन्तरसामेत्यादिषु तु द्वेधा ऽपि स्वरूपस्याभेदात् न्यायतोऽर्थो निर्णेतव्य इति प्रत्येकप्राप्तिचोदकानुग्रहायानेकपदबहुव्रीह्याश्रयणं, तस्मात्क्वचित्किञ्चित्प्रयोक्तव्यं न प्रत्यहं द्वे द्वे स्याताम् ॥

प्रायणीयोदनीययोरैकादशिनानां विभागाधिकरणम्।

**सू० समासस्त्वेकादशिनेषु तत्कृतित्वात् ॥ ४ ॥**

द्वादशाहे श्रूयते ऐकादशिनां प्रायणीयोदयनीययोरतिरात्रयोरालभेरन्निति, तत्र किं सर्वे प्रायणीये सर्वे चोदयनीये आलब्धव्या? उत विभज्य केचित्प्रायणीये केचिच्चोदयनीय? इति संशये प्रायणीयोदयनीययोः प्रधानत्वेनोद्देश्यत्वात् द्वन्द्वावगतसाहित्यस्याविवक्षितत्वात् प्रतिप्रधानमैकादशिना आलब्धव्या इति प्राप्ते ब्रूमः-द्वादशाहप्रकरणे प्रागेव वचनान्तरेणैकादशिनी विहिता प्रकरणाद् द्वादशाहाङ्गत्वेनावगता साऽनुष्ठातव्या सती क्व प्रदेश आलब्धव्येत्यपेक्षायां देशविधित्सायां प्रायणीयोदयनीयौ श्रूयेते न प्रधानतया द्वादशाहस्य प्रधानस्यावगमात्, देशश्चाङ्गं, न च प्रत्यङ्गमावर्तते प्रधानं तस्माद्विभज्यालम्भः ॥

विश्वजित् सर्वपृष्ठः इत्यत्रैकस्यैव पृष्ठदेशे निवेशाधिकरणम्।

**सू० सर्वपृष्ठे पृष्ठशब्दात्तेषां स्यादेकदेशत्वं पृष्ठस्य कृतदेशत्वात् ॥ ५ ॥**

विश्वजित्सर्वपृष्ठो भवतीति श्रूयते तत्र षाडहिकानां रथन्तरादिपृष्ठानां विधिरिति स्थितं सप्तमे, तत्र संशयः किं षण्णामपि साम्नां पृष्ठस्तुतिसाधनत्वं ततश्च पृष्ठदेशे माध्यन्दिनपवमानमैत्रावरुणसाम्नोर्मध्ये निवेश? उत वैरूपस्यैव तत्साधनत्वेन तत्र विनिवेशोऽन्येषां स्तोत्रान्तरसाधनत्वेन तत्तद्देशे प्रयोग? इति, तत्र षडहे तेषां पृष्ठसाधनत्वेनेहापि पृष्ठ-शब्देन तत्साधनत्वावगमात्पृष्ठदेश एव प्रयोगः सर्वेषामिति प्राप्ते ब्रूमः रथन्तरं बहिष्पवमाने कुर्यादार्भवे बृहन्मध्यतइतराणि वैरूपं होतुः पृष्ठे इत्यादिवचनाद्वैरूपस्यैव पृष्ठसाधनत्वम् इतराणि स्तोत्रान्तरसाधनानि,

न च पृष्ठस्तुतौ प्रयुक्तानामेव पुनर्वचनात्स्तोत्रान्तरेऽपि प्रयोगोऽस्त्विति वाच्यं वैरूपस्य पृष्ठे विधेरानर्थक्यप्रसङ्गात् । किं च सर्वपृष्ठशब्देन लक्षणया पृष्ठसाधनभूतानि रथन्तरादीनि सामानि षाडहिकानि विधीयन्ते स्तुतेर्बहुत्वाभावेन सर्वशब्दविषयत्वासम्भवात् तेषां च साम्नामिहातिदिष्टानां कार्याकाङ्क्षिणां वाचनिकैरेव कार्यैरुपपत्तौ को नाम सर्वेषां पृष्ठसाधनत्वं कल्पयेत्, तस्माद्विभज्यैव निवेशः ॥

वैरूपसामवैराजसाम्नोः पृष्ठकार्ये निवेशाधिकरणम् । सू० वैरूपसामा क्रतुसंयोगात्त्रिवृद्वदेकसामा स्यात् ॥ ६ ॥

उक्थ्यो वैरूपसामा एकविंशः षोडशी वै राजसामेत्यत्र किं वैरूपवैराजयोः साम्नोः सर्वेषु सामकार्येषु निवेशः उत पृष्ठस्तुतावेवे? ति संशये विशेषाग्रहणात्सर्वेष्विति प्राप्ते प्रकृतावेवंविधस्य निर्देशस्य रथन्तरसामा बृहत्सामा वेति पृष्ठविषये दृष्टत्वादिहापि तेन प्रकृतिलिङ्गेन पृष्ठस्तुतेर्बुद्धावारोहात्तद्द्वारेण च साम्नोः क्रतुसम्बन्धोपपत्तेः पृष्ठसाधनस्यैव रथन्तरादेर्विकारो वैरूपादि ॥

त्रिवृदग्निष्टोमः इत्यत्र स्तोमगतसंख्याविकाराधिकरणम् । सू० त्रिवृत्तिसंख्या[1]त्वात्सर्वसंख्याविकारः स्यात् ॥ ७ ॥

त्रिवृदग्निष्ट,दग्निष्टोम इति श्रूयते त्रिवृच्छब्दोऽयं त्रैगुण्यवचनो लोके त्रिवृद्रज्जुरित्यादौ, वेदे च "रशना त्रिवृद्भवती"ति प्रयोगादवगतः स्तोत्रीयानवकवचनोऽपि वेदे अवगतः त्रिवृद्बहिष्पवमानमित्युक्त्वा स्तोत्रीयाणां नवानामनुक्रमणात् तदेवमुभयार्थत्वे सति यत्र त्रिवृदग्निष्टुदित्यादौ वाक्यशेषादर्थविशेषो नावगम्यते तत्र विचार्यते किं त्रैगुण्यवचनः सन् सर्वेषां क्रतुसाधनानां सङ्ख्याविकारः? उत स्तोत्रीयानवकवचनः सन् स्तोमस्यैव विकार? इति, तत्र शास्त्रस्य महाविषयत्वलिप्सया सर्वद्रव्याणां त्रैगुण्यविधिरिति प्राप्ते ब्रूमः त्रैगुण्यं ह्यसौ ब्रुवन्नवयवप्रसिद्ध्या ब्रूयात्

१ मन्यते इति ।

रूढ्या च स्तोत्रीयानवकं, सा च बलीयसी, तस्मात्स्तोत्रीया सङ्ख्या विकारस्त्रिवृत्त्वम् ॥

उभयसाम्नि बृहद्रथन्तरयोः समुच्चयाधिकरणम् ।

**सू० उभयसाम्नि विश्वजिद्वद्विभागः स्यात् ॥ ८ ॥**

यत्र संस्रवादावुभे बृहद्रथन्तरे भवत इति श्रुतं तत्र किमुभयोः पृष्ठसाधनत्वम्? इतैकेन पृष्ठमितरेण स्तोत्रान्तरं साधयितव्य? मिति संशये चोदकेन वैकल्पिकपृष्ठप्राप्तेस्तदनुग्रहायैकमेव पृष्ठसाधनमितरत्तु साम विश्वजिद्वत् स्तोत्रान्तरेऽपि स्यात् नैवं विश्वजिति वाचनिकः कार्यान्तरे निवेशो न त्विह तादृग्वचनमस्ति येन कार्यान्तरे निवेशः स्यात् तेन विकल्पेन प्राप्तयोः पृष्ठयोः समुच्चयमात्रं वचनेन क्रियते चोदकबाधस्तु स्तोत्रान्तरसाधनत्वेऽपि तुल्यः, तस्मात्पृष्ठ एव निवेशः ॥

मध्वशनघृताशनयोः षडहान्तेऽनुष्ठानाधिकरणम् ।

**सू० पृष्ठ्ये रसभोजनमाष्टत्ते संस्थिते त्रयस्त्रिंशेऽहनि स्यात्तदानन्तर्यात्प्रकृतिवत् ॥ ९ ॥**

द्वादशाहे त्रिवृत्पञ्चदशः सप्तदश एकविंशस्त्रिणवस्त्रयस्त्रिंश इति षडहं विधाय श्रूयते संस्थिते पृष्ठ्ये षडहे मध्वाशयेद् घृतं वेति गवामयनादिषु पृष्ठ्यषडहस्य प्रातिलोम्यं विहितं पृष्ठ्यः षडहस्त्रयस्त्रिंशारम्भणस्त्रिवृदुत्तमः कार्य इति, तत्र किं त्रयस्त्रिंशेऽहनि संस्थिते मध्वशन? मुत षडहान्त? इति तत्र त्रयस्त्रिंशेऽहनि प्रकृतावनुष्ठितत्वात्तदङ्गं मध्वशनं मन्वानः[1] पूर्वानुष्ठिते त्रयस्त्रिंशे तदन्त एव मध्वशनं मन्यते, सिद्धान्तस्तु द्वादशाहाङ्गता ह्यस्य गम्यते प्रक्रियावशात् । वाक्याद्वा षडहाङ्गत्वं त्रयस्त्रिंशाङ्गता क्रमात् । अनुष्ठानसंनिधिलक्षणेन हि क्रमेण त्रयस्त्रिंशाङ्गता मध्वशनस्य स्यात्, प्रकरणात्तु द्वादशाहाङ्गत्वं षडहाङ्गत्वं समभिव्याहाराद्वा तत्र सत्यपि संस्था-शब्दे वैमृधवत्पौर्णमास्यां षडहस्यैवाङ्गं षडहावसाने च विधीयते न त्रयस्त्रिंशावसाने, तस्मात् षडहान्ते स्यात् ॥

१ संख्यायाश्चेति पाठान्तरं तु चिन्त्यम् ।

षडहावृत्तावपि मध्वशन-घृताशनयोः सकृदनुष्ठानाधिकरणम् ।

सू॰ अभ्यासे च तदभ्यासः कर्मणः पुनः प्रयोगात् ॥ १० ॥

यत्र षडहस्य पुनः प्रयोगः तत्र किं मध्वशनस्य पुनः प्रयोगः? उत सर्वाभ्यासान्ते सकृदि? ति संशये षडहाङ्गत्वात्तदावृत्तावावृत्तिः षडहसं[1]-स्थायाश्च पुनः पुनर्भावात्तन्निमित्तं मध्वशनमावर्तनीयं नैवं संस्था नाम तद्विषयव्यापारोपरमः पुनः प्रवर्त्तमानस्य च नोपरमोऽस्ति तस्मात्सत्यप्यङ्ग-त्वे निमित्ताभावान्नावृत्तिः अङ्गत्वनिराकरणं तु भाष्येऽतिशयोक्तमिति नातीवादर्त्तव्यम् ॥

गवामयने मध्वशनघृताशनयोः प्रतिमासमावृत्त्यधिकरणम् ।

सू॰ आवृत्तिस्तु व्यवाये कालभेदात्स्यात् ॥ ११ ॥

यत्र गवामयनादावभिप्लवादिभिर्व्यवेतस्य षडहस्याभ्यासात्तत्रापि किं सर्वान्ते मध्वशनम्? उत प्रत्यभ्यास? मिति पूर्वेण न्यायेन सर्वान्त इति प्राप्त उच्यते अत्र षडहादुपरम्यैवाभिप्लवादिषु व्याप्रियते न तु पूर्ववदनु-परमः, तस्मान्निमित्तभूतसंस्थाव[2]त्तन्नैमित्तिकस्य मध्वशनस्यावृत्तिः ॥

द्वादशाहे सत्त्रिभिरपि मध्वशनाधिकरणम् ।

सू॰ मधु न दीक्षिता ब्रह्मचारित्वात् ॥ १२ ॥

सत्त्रमहीनश्च द्वादशाहः तत्र सत्त्रे मध्वशनं कर्त्तव्यं नेति सन्देहे यजमानानामेव सत्त्रे दीक्षितानामृत्विक्त्वात् दीक्षितस्य च ब्रह्मचर्यविधा-नात् ब्रह्मचारिणश्च मधुप्रतिषेधान्न कर्त्तव्यं सत्त्रे मध्वशनं, न च वैगुण्यं घृताशनेन साद्गुण्यसम्भवात् मध्वशनं चाहीनविषयं भविष्यतीति प्राप्तेऽ-भिधीयते यस्तावत्प्रतिपदोक्तो मध्वशनप्रतिषेधो ब्रह्मचारिणः स तु पुरु-षार्थो न क्रत्वर्थं मध्वशनं बाधितुमर्हति विषयभेदात् । यस्तु ज्योतिष्टोमे दीक्षितस्य क्रत्वर्थत्वेन ब्रह्मचर्यविधानादिहाप्यतिदेशेन क्रत्वर्थतया ब्रह्म-चर्यप्राप्तेर्ब्रह्मचारिधर्मगतो मध्वशनप्रतिषेधः क्रत्वर्थतया प्राप्तः स प्रत्य-

१ संस्थावृत्तौ इति पा॰ ।
२ त्रिवृत्तिसंख्यत्वेनेति पा॰ ।

त्वविहितं मध्वशनं नाहीनविषयत्वेन संकोचयितुमर्हति वरमतिदेश-स्यैवानुमानिकस्याङ्गान्तरेषु सङ्कोचः, तस्मात्सत्रे मध्वशनं स्यात् ॥

मानसस्य दशमाहाङ्गता-धिकरणम् ।

सू० मानसमहरन्तरं स्याद् द्वादशाच्च व्यपदेशात्[1] ॥ १३ ॥

द्वादशाहे दशमस्याह्नोऽधिकारे मानसो ग्रहः श्रूयते अनया त्वा पृथिव्या पात्रेण समुद्रं रसया प्रजापतये जुष्टं गृह्णामीति मानसं प्राजापत्यं गृह्णातीति, तत्र संशयः किमहरन्तरचोदनेयं यागान्तरचोदनेत्यर्थः? उत दशमस्याह्नोऽङ्गभूतग्रहाभ्यासान्तरं चोद्यत? इति तत्र वाग्वै द्वादशाहो मनो मानसमित्यादिभिर्व्यपदेशादिभिर्हेतुभिर्यागान्तरशङ्कायामुच्यते व्यप-देशभेदादेरवयवावयव्यभेदादप्युपपत्तेर्ग्रहणचोदनानां वा चोदकाश्च सं-स्कारा इत्यनेन संस्कारमात्रपर्यवसायित्वेन यागान्तरकल्पकत्वाभावाद्द-शमे ऽहनि मानसाय सर्पन्तीत्यादिदर्शनैश्च दशमस्याह्नोग्रहाभ्यासा-न्तरं नाहरन्तम् ॥

सत्रस्य बहुकर्तृकत्वाधिक-रणम् ।

सू० सत्रमेकः प्रकृतिवत् ॥ १४ ॥

सत्राणि किं कामिन एवैकैकशः कुर्युः? उत बहवः संहत्ये? ति चोद-कानुग्रहाद्बहुवचनस्य चैकैकशोऽपि लोके बहवः कामिनः सत्रं कुर्वन्तीत्य-नेनाभिप्रायेणानुवादत्वोपपत्तेरेकैकशः कुर्युः, नैवम् आख्यातगता हि कर्तृ-संख्या प्रकृतिवदिहापि प्रयोगाङ्गतया विवक्षिता, न हि तस्याः किं-चिदविवक्षाकारणमस्ति सा च चोदकप्राप्तमेकत्वं बाधते । तस्माद्बहवः प्रयुञ्जीरन् ॥

सत्रे यजमानानामेव ऋत्वि-क्त्वाधिकरणम् ।

सू० अन्ये स्युर्ऋत्विजः प्रकृतिवत् ॥ १५ ॥

सत्रेष्वेव किमन्यैरार्त्विज्यम्? उत यजमानैरेवे? ति सन्देहे चोद-कानुग्रहाय ये यजमानास्त ऋत्विज इति वचनं यच्छब्दोपबद्धयजमानो-पदेशेन तत्संस्कारार्थतयाऽऽर्त्विज्यविधिः न त्वार्त्विज्ये यजमानविधिः

[1] भेदव्यपदेशादिति पा० ।

तेनार्त्विज्यमन्यैः कार्यं यद्वाऽध्वर्युर्गृहपतिं दीक्षयित्वेत्यनेन ऋत्विजां संस्कारार्थेन दीक्षा विधीयत इति तद्योगादृत्विगेव यजमानशब्दगोचर इत्यनुवादः । नैवम् अप्राकृतकार्यत्वप्रसङ्गात् वचनानर्थक्याच्च न चार्त्विज्यस्य यजमानसंस्कारत्वम् अप्राकृतकार्यत्वप्रसङ्गादेव, तस्मात्प्राकृतकार्यस्यैवार्त्विज्यस्य यजमानाः कर्त्तारो विधीयन्ते अतो ऽन्येषां चोदकप्राप्तानां बाधः ॥

सत्राहीनयोर्विवेकाधिकरणम् ।

सू॰ द्वादशाहस्य सत्रत्वमासनोपायिचोदनेन यजमानबहुत्वेन च सत्रशब्दाभिसंयोगात् ॥ १६ ॥

सू॰ यजति चोदनादहीनत्वं स्वामिनां चास्थितपरिमाणत्वात् ॥

सत्रप्रसङ्गात् द्वादशाहगतस्य सत्रस्वरूपस्य लक्षणं तत्प्रसङ्गाच्च तद्गतस्यैवाहीनरूपस्य लक्षणं सूत्रद्वयेनोच्यते, तत्र त्रयोदशरात्रादिष्वासनोपायिचोदनेषु वेदे ऽध्वतृप्रयोगेषु च सत्रशब्दप्रयोगाद् द्वादशाहेऽपि प्रयुज्यमानस्य सत्र-शब्दस्य तन्निमित्तता द्विरात्रादिषु च यजति चोदनेष्वहर्गणेष्वहीनशब्ददर्शनाद् द्वादशाहेऽपि तदेव तस्य निमित्तम् ॥

पौण्डरीके सकृदेव दक्षिणादानाधिकरणम् ।

सू॰ अहीने दक्षिणाशास्त्रं गुणत्वात्प्रत्यहं कर्मभे[१]दात्स्यात् ॥ १७ ॥

पौण्डरीको नामाहीन एकादशरात्रः तत्र श्रूयते "अयुतं दक्षिणा ऽश्वसहस्रमेकादश"मिति, तत्र संशयः–किमयुतमश्वसहस्रं च प्रत्यहं दातव्यम्? उतैकमेवायुतमश्वसहस्रं च दातव्य? मिति तत्र दक्षिणा ह्यहरङ्गत्वात्प्रत्यहं भेदमर्हति । एकप्रयोगपातात्तु तन्त्रेणैका प्रदीयते ॥ सत्यं प्रत्येकमन्हामङ्गं दक्षिणा तथाऽपि कर्त्रानतिद्वारत्वात्कर्तॄणां च चिकीर्षितार्थमुपादाना-

१ कर्मभेदः स्यादिति तु पा॰ ।

देकप्रयोगचोदितानामेकादशानामप्यह्नां युगपच्चिकीर्षितत्वात्तन्त्रेण सर्वेषां पुरुषाणामुपादानं; तदानतिश्चैकैव तन्त्रेण तत्सिद्ध्यर्था च दक्षिणेति सापि तन्त्रेण संभवादेकैव दीयते। ननु पौण्डरीकप्रकृतौ द्वादशाहे प्रत्यहं दक्षिणाभेदेन दत्ता अन्वहं द्वादशशतं ददातीति वचनात्तेनेहापि द्वादशशतविकारो ऽयुतमश्वसहस्रं च प्रत्यहं भेदमर्हति। उच्यते द्वादशाहेऽप्येकप्रयोगत्वादेकैवानतिरिति प्रत्यहं द्वादशशते दीयमाने यावती भवति तावती भवति दक्षिणैकैव, तस्मादिहाप्येकमेवायुतमश्वसहस्रं दातव्यम् ॥

पौण्डरीके सर्वासां दक्षिणानां विभज्य नयनाधिकरणम्।

सू० प्रत्यहं सर्वसंस्कारः प्रकृतिवत्सर्वासां सर्वशेषत्वात् ॥ १८ ॥

प्रकृतौ माध्यन्दिने सवने दक्षिणाऽनयनं श्रुतं पौण्डरीके चायुतमश्वसहस्रं माध्यन्दिने सवने प्रत्यहं नेतव्यम्? उतैकस्मिन्नहनि? अथवा विभज्य प्रत्यहं सहस्रं नेतव्यम्? अश्वसहस्रं त्वेकादशेऽन्हि नेयमिति संशये प्रकृतावात्मीये माध्यन्दिने सवने नीते तीहापि प्रतिकर्मावसायी चोदकः प्रतिमाध्यन्दिनं नयनं प्रतिपादयति, समस्ता चेयं सर्वेषामन्हां दक्षिणेति सर्वैव प्रत्यहं नेतव्या दक्षिणासंस्कारत्वान्नयनस्य सकृत्संस्कृतायाश्च न पुनः संस्कारेण प्रयोजनमित्येकस्मिन्कस्मिंश्चिन्माध्यन्दिने नयनं, नैवं, द्वादशाहे हि विभज्य नयनं विहितम् अन्वहं द्वादशशतं ददातीति, तेनेहापि तद्वदेव विभज्य नयनम् ॥

मनो ऋच इत्यनेन यावदर्थमृचामुपादानाधिकरणम्।

सू० लिङ्गेन द्रव्यनिर्देशे सर्वत्र प्रत्ययः स्याल्लिङ्गस्य सर्वगामित्वादाग्नेयवत् ॥ १९ ॥

क्वचिद्विकृतौ श्रूयते "मनोऋचः सामिधेन्यो भवन्ती"ति तत्र किं सर्वा एव मनोऋचः सामिधेनीत्वेन वक्तव्या? उत यावतीभिः संख्या पूर्यते प्राकृती तावत्य एवेति प्रत्यक्षेण वचनेन सर्वासामविशेषेण प्राप्त्यवगमा-

च्चोदकप्राप्तसंख्याबाधेन सर्वासामुपादानमित्येतावान्पूर्वः पक्षः, नावश्यं प्रत्यक्षवचनेन सर्वासां प्राप्तिः न हीदमृक्संस्कारार्थम् अग्निसमिन्धनार्थं ह्यृचं उपादीयन्ते तत्र बहुवचनात्त्रित्वे प्राप्ते त्रित्वमतिक्रम्य पञ्चदशोपादीयन्ते अधिकानां त्वनाशङ्क्यमेवोपादानम् ॥

वाससि मानोपावहरणयोरनुष्ठानाधिकरणम् ।

सू० वाससि[1] मानोपावहरणे[2] प्रकृतौ सोमस्य वचनात् ॥ २० ॥

ज्योतिष्टोमे सोमस्य मानमुपावहरणं च वासःसाधनकं वाससि मिनोति वाससोपावहरतीति वचनादित्युत्तरविवक्षया प्राप्तिः क्रियते ॥

अहर्गणेऽर्थाद् वासोऽन्तरोत्पादनाधिकरणम् ।

सू० तत्राहर्गणे अर्थाद्वासःप्रकृ[2]प्तिः स्यात् ॥ २१ ॥

स्थितं वाससि मानं वाससा चोपावहरणमिति द्वादशाहादावहर्गणे किमुपावहरणार्थं प्रत्यहं वासो भेदः स्यात्? उत ने? ति भेदे प्रमाणाभावाच्चेति प्राप्ते ब्रूमः अर्थाद्वाससो भेदः स्यात् हविर्धाने शकटेऽवस्थितः सोमः प्रत्यहं भेदेनाभिषवार्थं यावानेकस्याह्नः पर्याप्तस्तावान्सोमो वाससोपावहर्त्तव्यः अवशिष्टश्च शकट एव वाससोपनद्धोऽवतिष्ठते, तस्मादर्थादहर्भेदे वासोऽन्तरमुपावहरणार्थमुत्पादयितव्यम् ॥

उपावहरणार्थमेव वासोऽन्तरोत्पादनाधिकरणम् ।

सू० मानं प्रत्युत्पादयेत्प्रकृतौ तेन दर्शनादुपावहरणस्य ॥ २२ ॥

यदेतदुपावहरणार्थमन्यद्वास उत्पाद्यते तत्किं मानकाल एवोत्पाद्यं? उतोपावहरणकाल? इति संशये प्रकृतौ यस्मिन्वाससि क्रयकाले मानं कृतं तेनैवाभिषववेलायामुपावहरणस्य दर्शनादहर्गणेऽपि मानवास-

---

१ वासस इति पा० ।
२ प्रकृतिः स्यादिति पा० ।

सोपावहरणेन भवितव्यं, तस्मान्मानकाल एवोत्पाद्यं नैवम् आर्थिकं हि प्रकृतौ मानवाससोपावहरणं न शास्त्रीयमेतावद्धि श्रूयते वाससोपावहरतीति, तत्र प्रकृतौ यस्मिन्वाससी सोमो मित उपनद्ध शकटे स्थापितः तेनैव सोऽकुर्यादुपावहरणमनुष्ठितम्, अहर्गणे तु मानवेलायामनुपपत्त्यभावादेकस्मिन्नेव वाससि सर्वदामन्ह्यां सोमे मित्वोपनह्य स्थापिते अभिषववेलायामुपावहरणार्थमनुपपत्तिवशादन्यदुत्पाद्यते ॥'

इति शास्त्रदीपिकायां दशमस्य षष्ठः पादः ॥

---

## अथ सप्तमः पाद आरभ्यते ॥

---

ज्योतिष्टोमे प्रत्यङ्गं हविर्भेदाधिकरणम् ।

सू० पशोरेकहविष्ट्वं समस्तचोदितत्वात् ॥ १ ॥

अग्नीषोमीयं पशुमालभेतेत्यत्र संशयः किं कृत्स्नः पशुरेकं हविस्तेन च देवतायै दीयमानेन पयो विक्रियते तत एव चावदाय होमः ? उत पश्वङ्गं हृदयादिहवि ? रिति, तत्र "तद्धितेन पशोरेव देवतान्वयचोदनात् । समस्तस्य पशोर्दानमैन्द्रस्य पयसो यथा" ॥ "हृदयस्याग्रे ऽवद्यति अथ जिह्वाया अथ वक्षसः" इत्यादीनि वचनानि पशोरेवावदानप्रदेशलक्षणार्थानि मध्यपूर्वार्द्धवचनवत्, हृदयप्रदेशे ऽवद्यतीत्येकादशानां च प्रदेशानामुपदेशाद् द्व्यवदानमपोद्य एकादशकृत्वो ऽवदाय हूयते तस्मिन्नेव च काले समस्तः पशुर्देवतायै त्यज्यते पुरोडाशवत्तस्मात्पशुरेकं हविरिति प्राप्ते ब्रूमः "खण्डनं प्राकृतार्थं हि हृदयादिषु दृश्यते । तस्मात्तत्प्रकृतित्वेन देवतासङ्गतिः पशोः" ॥ हृदयादिशब्दा हि मांसविशेषवचना न युक्तं यत्पशुप्रदेशलक्षणार्थतां नीयन्ते हृदयादीनामेवावदानोपपत्तेः, अवदानञ्च प्रकृतौ हविःसंस्कारार्थमितीहाप्यवदानं हविष एव युक्तं, तच्च हृदयादिषु दृश्यत इति हृदयादीनामेव हविष्ट्वं निश्चीयते, न चोत्पत्तिवाक्यशिष्टपशुविरोधः

तस्य हृदयादिप्रकृतित्वेन यागसाधनत्वे ऽपि देवतासम्बन्धोपपत्तेः, यदि हि प्रणाड्यां प्रमाणं न स्यात्ततः पशुरेव साक्षाद्धीयेत, अस्ति तु प्रमाणं हृदयादिष्ववदानवचनं विशंसनवचनं च, तस्माद्धृदयादीनि हवींषि देवतायै देयानि तेभ्य एव च द्व्यवदानं गृहीत्वा हूयते तत्प्रकृतिश्च पशुः ॥

पशोर्हृदयादिभिरेवाङ्गविशेषैर्यागानुष्ठानाधिकरणम्।

सू० तद्भेदात्कर्मणोऽभ्यासस्तस्मात्तेभ्योऽवदानं स्यात् ॥ २ ॥

पश्वङ्गानि हवींषीति स्थिते चिन्त्यते किमेकेन केनचिदङ्गेन यागः कर्त्तव्यः? उत सर्वैरङ्गैरथ वा हृदयादिभिः एकादशभि? रिति तत्र "एकेनापि पशोर्यागसाधनत्वोपपत्तितः। तन्मात्रेणैव यागः स्यात्सर्वैर्वा युगपन्मतेः ॥ पश्वाकृतिर्हि देवतासम्बन्धित्वेन श्रुता तेन तया परिच्छिन्नेन द्रव्येण यष्टव्यं, सा चावयविद्रव्यं साक्षात्परिच्छिनत्ति तस्य विशसनादिविधानात् न साक्षाद्यागसाधनता सम्भवतीति तदवयवानामयवविद्वारेण पश्वाकृत्या परिच्छिन्नानां साधनत्वम्। अवयवी चावयवेषु व्यासज्य वर्तमानः सहैव सर्वावयवेषु धियमादधाति, न जातिरिव व्यक्तिषु प्रत्येकमतो विशेषतः सर्वैर्यष्टव्यं, हृदयादिवचनं तु द्व्यवदाननियमार्थम् एवं हि श्रूयते "एकादश वै पशोरवदानानि तानि द्विर्द्विरवद्यती"ति नियमश्च नैवम् एकादशैवावदेयानि नाधिकानीति किं तर्हि यान्येकादश तानि द्विरवद्यति नाधिकानीति तेनाधिकान्यङ्गानि पशोः पञ्चावदानवचनात् त्रिस्त्रिरवद्यन्ते, तस्मात्सर्वेभ्यो ऽवदेयं नैतदेवम् "अविशेषाद्धि सर्वेषां हविष्ट्वमवगम्यते,। अवदानवचोभ्यस्तु विशेषोऽत्रावधार्यते"। यदा हि हृदयादीनामवदानवचनेन हविष्ट्वमवगतं तदा तत्प्रकृतित्वेनैव पशोर्देवतासम्बन्धोपपत्तेर्न किंचिदङ्गान्तराणां हविष्ट्वे प्रमाणमस्ति, न च द्विसङ्ख्यार्थं हृदयादिस्मरणं भिन्नवाक्यत्वात्, "हृदयस्याग्रे ऽवद्यति अथ जिह्वायाः अथ वक्षस" इत्यादीन्यवदानविधानानि एकादश वै पशोरवदानानि तानि द्विर्द्विरवद्यतीति संख्याविधानं, तस्माद्धृदयादिभ्यः परिगणितेभ्यो ऽवदानं नाधिकेभ्यः ॥

ज्योतिष्टोमेऽनिज्याशेषैस्त्र्यङ्गैः स्विष्टकृद्धोमाधिकरणम् ।

**सू० इज्या[1]शेषात्स्विष्टकृदिज्येत तत्प्रकृतिवत् ॥ ३ ॥**

पशावेव चोदकप्राप्तः स्विष्टकृद्यागः किं प्रधानहविर्भ्यो हृदयादिभ्यः उत्तरार्द्धं गृहीत्वा कर्तव्य? उताङ्गान्तरेभ्य? इति संशये प्रधानशेषप्रतिपत्त्यर्थत्वात्प्रकृतौ पशावपि प्रधानशेषेभ्यः कर्तव्यः, त्र्यङ्गैः स्विष्टकृतं यजतीति वचनं चोदकप्राप्तेषु सर्वेषु प्रधानहविःषु त्रित्वविधानार्थं तेन तेषामेव मध्ये त्रिभिः स्विष्टकृदिज्येति प्राप्ते ब्रूमः, "त्रित्वं नाङ्गानुवादेन विधातुं शक्यते तथा । तस्य प्रसरभेदेन सामर्थ्यं हि विहन्यते" ॥ एकं ह्येदं समासपदं त्र्यङ्गैरिति तदेकप्रसरं युक्तं सकलमुद्देशकमुपादायकं वा? उत्तरार्द्धं तूद्दिश्य पूर्वार्द्धे विधीयमाने प्रसरभेदात्सामर्थ्यविघातात्समासो न स्यात्, अपि च दोः पूर्वार्धस्य गुदं मध्यतः श्रोणिं जघनार्द्धस्येति वाक्यशेषे ऽनिज्याशेषाणां कीर्तनाद्विस्पष्टमनिज्याशेषाणां विधानं, तैश्च प्रत्याम्नानादिज्याशेषाणां बाधः । नन्वनिज्याशेषाणामङ्गत्वेन विधानादिज्याशेषाणां च चोदकेन प्रतिपाद्यत्वेन प्रधानतया प्राप्तानां विषयभेदादयुक्तो बाधः, प्रधानभूतानामपि निवर्त्तकत्वात्तस्मिंश्चांशे ऽनिज्याशेषाणां विधानादार्थिकमस्त्येव तुल्यविषयत्वं, न ह्यनिज्याशेषैः क्रियमाणो यागस्तेषां प्रतिपत्तये ऽलं भवति, तेन गुणभूतैरपि युक्तः प्रधानबाधः । किं चानिज्याशेषाणामपि हृदयाद्यर्थालब्धपश्वनुनिष्पन्नानामाकीर्णकराणां प्रतिपत्त्यपेक्षत्वाच्चोदकेनेज्याशेषप्रतिपत्त्यर्थतया प्राप्तः स्विष्टकृद्यागस्तत्प्रतिपत्तौ वचनेन विनियुज्यते यत्स्विष्टकृता प्रतिपाद्यं तत् त्र्यङ्गानि हृदयादीनि, तस्माद्युक्तो बाधः ॥

अध्रूघ्न्या इडाभक्षविकारताऽधिकरणम् ।

**सू० अध्रूघ्नी तु होतुस्त्र्यङ्गवदिडाभक्षविकारः स्यात् ॥ ४ ॥**

पशावेव श्रूयते "अध्रूघ्नी होत्रे हरन्ती"ति सेयमध्रूघ्नी किं प्राकृतस्य

१ इज्याविशेषादिति पा० ।

होतुरिडाभक्षस्य विकार? उत ने? ति यद्यत्यन्ताप्राप्ताऽध्वर्युर्धीयं विधीयते ततो विकारः । अथ पक्षे हेतुः प्राप्ता सती नियम्यते ततो विकारः, तत्रानस्थिभिरिडां वर्धयन्तीति वचनादिडायामन्तर्गताऽध्वर्युर्धीडायाम् ऋत्विग्भिर्विभज्य भक्ष्यमाणायां कदाचिद्धोतृभागे स्यात्कदाचिदन्यस्य भागे सा होतृभागे नियम्यते, ततो यजुर्युक्तरथवच्चेडा भक्षस्य विकारः । उच्यते अनस्थिभिरिडां वर्धयन्तीति वर्तमानापदेशसरूपत्वादनुवादोऽयं कथं प्राप्तिः । अथ यत्परिशिष्टं तत्समवत्त धान्यामा[१]वपन्ति यद्धृदयं प्रास्यति जिह्वां वक्षस्तनिममतस्तस्यैव निष्ठुमिति, न च तन्मध्ये ऽध्वर्युधी कीर्तिता, तस्मादप्राप्ता तेन नैवं वचनव्यक्तिः यदध्वर्युधीं हरन्ति तद्धोत्रे इति किं तर्हि यद्धोत्रे हरन्ति तदध्वर्युधीमिति प्राकृतं होतृसम्प्रदानकं हरणमध्वर्युधीप्रतिपादने विनियुज्यते, तस्मादिडा भक्षविकारः ॥

वनिष्ठोर्भक्षविकारताऽधिकरणम् ।

सू· अग्नीध्रश्च वनिष्ठुरध्वर्युधीवत् ॥ ५ ॥

तत्रैव श्रूयते वनिष्ठुमग्नीध्रे हरन्तीति तत्रापि पूर्ववदेव संशयपूर्वोत्तरपक्षाः, विशेषाशङ्का तु वनिष्ठोरिडायां प्रासनवचनादस्ति प्राप्तिरिति, सत्यमस्ति प्रासनं तत्त्विडासंस्कारार्थम् उपस्तरणादिवत्, अतो नास्यैडात्वं, न भक्षसंयोगोऽस्य भक्षयितुं प्रास्यतीति न चतुर्थीनिर्देशः प्रासनविधावस्ति, तस्मादप्राप्तोऽवनिष्ठुरग्नीध्रे वनिष्ठुमिति चतुर्थ्याऽग्नीत्सम्प्रदानके हरणे विधीयत इति प्राकृतस्यैडा[२]भक्षस्य विकारः ॥

मैत्रावरुणस्यापि शेषभक्षास्तित्वाधिकरणम् ।

सू· अप्राकृतत्वान्मैत्रावरुणस्याभक्षत्वम् ॥ ६ ॥

मैत्रावरुणो नामाऽस्ति पशावृत्विक्स किम् इडां भक्षयेन्ने? ति सन्देहे "नास्य प्रकृतितो भक्षः प्राप्नोत्यप्राकृतो ह्यसौ । होत्राध्वर्यवकारित्वात्का-

१ धान्यामावपन्ति इति ।
२ प्राकृतस्यैवेडाभक्षस्य विकार इति ।

र्यतस्त्वस्ति भक्षणम् । प्राकृता हि भक्षाः प्राकृतकर्तृनियमांशेन कर्तृसंस्कारार्था अपीत्युक्तमतोऽध्वर्युहोतृसंस्कारत्वाद्भक्षस्य मैत्रावरुणे प्रैषकरणादध्वर्युकार्यं मनुवचनकरणाच्च होतृकार्यं कुर्वाणेऽस्ति प्राप्तिः ॥

मैत्रावरुणस्यैकभागताऽधिकरणम् ।

सू· द्विभागः स्याद् द्विकर्मत्वात् ॥ ७ ॥

किमयं मैत्रावरुणो द्वौ भागौ भक्षयेत्? उतैक? मिति, द्वयोः कर्म कुर्वन्द्वौ लभेतेति प्राप्ते ब्रूमः "अध्वर्योर्यावती तृप्तिर्होतुस्तृप्तिश्च यावती । तन्त्रेण तावती तृप्तिर्भागेनैकेन लभ्यते" ॥ तस्मादेकभागः स्यात् ॥

प्रतिप्रस्थातुर्भक्षाभावाधिकरणम् ।

सू· प्रतिप्रस्थातुश्च वपाश्रपणात् ॥ ८ ॥

तत्रैव प्रतिप्रस्थातुरिडायामस्ति भक्षो नेति संशये अध्वर्युकार्यं हविः श्रपणमसौ च करोति वपाश्रपणं तस्माद्भक्षयेत्सत्यमसौ वपां श्रपयति तस्यास्तु सर्वप्रदानत्वान्नास्ति शेषः, प्रकृतौ च यस्यापूर्वस्य यः कर्त्ता स तच्छेषस्य भक्षयिता भिन्नं चाङ्गापूर्वेभ्यो वपापूर्वमतस्तस्य कर्त्ता प्रतिप्रस्थाता तच्छेषमेव भक्षयितुमर्हति, सा च निःशेषा, तस्मान्नास्य भक्षः, न त्वङ्गेभ्योऽपि हृदयादिभ्योऽयमवदानं कुर्वन्भक्षं लभेत दक्षिणतो निधाय प्रतिप्रस्थाताऽवद्यतीति वचनात्, यस्यां शाखायामध्वर्युरेवावदानं तद्विषयमिदमधिकरणं प्रतिप्रस्थात्रवदानपक्षे त्वस्त्येव भक्ष इत्ययमेव परमार्थपरिहारः, यत्त्वप्राकृतमिदमवदानमप्राकृतकार्यञ्च प्रदानारम्भत्वाभावादित्युक्तं, तदयुक्तं यद्यपि दैवतान्यवदाय न तावत्येव होतव्यं सौविष्टकृतान्यवद्यतीति मध्ये पदार्थान्तरविधानान्नायं प्रदानाऽऽरम्भः तथाऽपि प्रदानार्थमेवेदमवदानं नादृष्टार्थं, तथा चावदानदर्शनाद्धृदयादीनां हविष्ट्वमुक्तमदृष्टार्थे अवदाने हि न तेषां हविष्ट्वं सिध्येत्, तस्मादवद्यन्प्रतिप्रस्थाता लभेतैव भक्षम् । अध्वर्य्ववदानपक्षे तु नास्य भक्षो वपाया निःशेषत्वादित्येतावानधिकरणार्थः ॥

आज्यभागौ यजति इत्यनेनापूर्वगृहमेधीयविधानाधिकरणम् ।

**सू॰ विकृतौ प्राकृतस्य विधेर्ग्रहणात्पुनः श्रुतिरनर्थिका स्यात् ॥ ९ ॥**

चातुर्मास्येषु साकमेधे प्रर्वणि गृहमेधीयेष्टिः, तत्र श्रूयते "आज्यभागौ यजति यज्ञताया" इति तदिहाज्यभागश्रवणेऽष्टौ पक्षा विचार्यन्ते किं चोदकप्राप्तानुवादमात्रम्? उत द्वाभ्यां विधानम्? अर्थवादार्थं वा? कर्मान्तरविधिर्वा? परिसंख्या वा? तद्वर्जातिदेशो वा? तयोरेवातिदेशो वा? अपूर्वो वा गृहमेधीये? ति "तत्र प्रकृतितः प्राप्तेश्चोदकेनाज्यभागयोः। गुणान्तरस्य चाभावादनुवादत्वमिष्यताम् । आनर्थक्यप्रसङ्गात्तु न त्वेतद्धृदयङ्गमं तस्मादुभाभ्यां विध्यन्तो दार्शिकोऽत्र विधीयते ॥ आज्यभागश्रवणं निर्वपत्यादिश्रवणवत्प्रकृतिसादृश्यमापादयच्चोदकस्य निमित्तं भवति, चोदकस्त्वैष्टिकं विध्यन्तं नियच्छतीत्येवमुभाभ्यामैष्टिकविध्यन्तविधिः, नैतदपि युक्तम् औषधद्रव्यकत्वादेवैष्टिकातिदेशसिद्धेः, तस्माच्चोदकप्राप्तैष्टिकविध्यन्तप्रशंसार्थमिदम् एवमयं दर्शपूर्णमासविध्यन्तः प्रशस्तो यत्त्राज्यभागावपि स्तः, तौ च यज्ञताया इति विध्येकवाक्यत्वाभावादिदमप्यन्याय्यं, तस्मात्कर्मान्तरविधिः प्रसिद्धाज्यभागप्रत्यभिज्ञानात्तदपि न सारं, तस्माच्चोदकेन सर्वेष्वङ्गेषु प्राप्तेष्वाज्यभागयागपुनःश्रवणं समिदादियागानां परिसंख्यार्थम् आज्यभागावेव यजति न समिदादियागानिति, तदप्यनुपपन्नं परिसंख्यायास्त्रिदोषत्वात्, तस्मात्प्रत्यक्षवचनसिद्धत्वादाज्यभागयोस्तद्वर्जमन्यान्यङ्गानि चोदकः प्रापयति तदप्यचतुरस्रं, न हि चोदकस्य प्रत्यङ्गं व्यापारभेदोऽस्ति येनाज्यभागविषये न व्याप्रियेत एकेनैव व्यापारेणासौ सर्वाण्यङ्गानि प्रापयति तेनैव चाज्यभागयोरपि प्राप्तत्वादनर्थकमेव पुनः श्रवणं स्यात्तस्माच्चोदकोपसंहारोऽयं प्रकृतिवत्कुर्यात् । किं तत्सादृश्यमाज्यभागौ यजति तदप्यपेशलं, न हि प्रत्यक्षश्रुतोऽतिदेशः येनैवमाश्रीयते, कल्प्यो ह्यसौ, तद्यदि कल्पितेऽपि तस्मिंश्चाज्यभागावेवानुष्ठातव्यौ तयोः प्रत्यक्षेणैकवचनेन सिद्धे ऽनर्थकश्चोदकाङ्गीकारः, "तस्मादपूर्वेतेव

स्यात् गृहमेधीयकर्मणः । प्राकृताङ्गनिराकाङ्क्षं न तच्चोदकमर्थयेत् ॥ आज्य-भागयोर्हि प्रकृतौ श्रुतयागरूपव्यतिरेकेण प्रकरणाम्नानकल्पितं स्वापूर्व-द्वारेण यागगतव्यापाररूपमपरमस्ति तद्रूपलक्षणार्थं चेदमाज्यभागश्रवणम् । अन्यथा आनर्थक्यात्, अतश्च गृहमेधीयप्रयोगवचनो यागगतं व्यापारम-पेक्षमाणः प्रत्यक्षवचनविहिताज्यभागनिराकाङ्क्षो न प्रकृतिमपेक्षते विकृ-त्यन्तरे यानि त्वप्राकृतान्यामनहोमादीन्यङ्गानि तेषां यागगतव्यापाररू-पस्याक्लृप्तत्वात्तद्रूपानपेक्षः प्रयोगवचनः सन्निहितान्यपि तान्यतिक्रम्य प्राकृतान् क्लृप्तोपकारान् गृहीत्वा पश्चात्समीपाम्नाताङ्गानर्थक्यपरिजि-हीर्षया तान्यपि गृह्णातीति न तैश्चोदकलोपः । किं च यदि गृहमेधीयः प्रकृतिपूर्वः स्यात् नाज्यभागग्रहणं क्रियेत, कृतं च तदतोऽवगच्छामो नूनमत्र नास्ति चोदकमिति, तस्माद्यत्र प्राकृतमङ्गं निर्गुणं श्रुतं तत्रापूर्वत्वम् ॥

गृहमेधीये स्विष्टकृदा-द्यनुष्ठानाधिकरणम् । सू० ततोऽपि यावदुक्तं स्यात् ॥ १० ॥

गृहमेधीय एव स्विष्टकृदिडादि कर्त्तव्यं नेति संशये निराकाङ्क्ष-त्वादाज्यभागाभ्यां न कर्तव्यं प्रत्यक्षश्रुतत्वाद्विशेषात्तु कर्तव्यं, न च विक-ल्पः प्रकृताविव प्रकरणेन सर्वेषां युगपद्ग्रहणात् ॥

गृहमेधीये प्राशित्रादि-भक्षणाभावाधिकरणम् । सू० स्विष्टकृदिति [1] भक्षप्रतिषेधः स्यात्तु-ल्यकारणत्वात् ॥ ११ ॥

गृहमेधीय एव प्राकृताङ्गपुनःश्रवणं परिसंख्यार्थमिति कृत्वा चि-न्त्यते तदा हि समानजातीयमेव शीघ्रोपस्थापनात्परिसंख्यायते नान्यत् तेनाज्यभागाभ्यां यागान्तराणि परिसंख्यायन्ते न शेषकार्याणि, स्विष्टकृत्तु किं प्राशित्रादीनां शेषकार्याणाम्परिसंख्यां करोति नेति चिन्तायामिडोप-ह्वानदर्शनाच्चेति प्राप्ते ब्रूमः परिसंख्यात एव प्राकृतः स्विष्टकृत्पुनः श्रूय-

१ स्विष्टकृदभक्षप्रतिषेधः स्यादिति पा० ।

माणाः शेषकार्यान्तराणि, इडादिदर्शनं तु वचनान्तरविहितत्वादुपपन्नं नान्यस्य शेषकार्यस्यानिवृत्तिं सूचयति ॥

प्राणीयातिथ्ययोः शंय्विडान्ततानियमाधिकरणम् ।

सू० शंय्विडान्तत्वे विकल्पः स्यात्परेषु पत्न्यनूयाजप्रतिषेधोऽनर्थको हि स्यात् ॥ १२ ॥

ज्योतिष्टोमे श्रूयते "शंय्वन्ता प्रायणीया सन्तिष्ठते न पत्नीः संयाजयन्ति इडान्ता तिथ्या सन्तिष्ठते नानूयाजान् यजती"ति तत्र संशयः किं प्रायणीयातिथ्ये शंय्विडान्ते वा कृत्स्नसंस्थे वा? उत शंय्विडान्ते एवे? ति तत्र शंय्विडान्तवचनेन परेष्वङ्गेषु सर्वेष्वकर्तव्येषु पुनः पत्नीसंयाजानूयाजानामकर्त्तव्यत्ववचनं परिसंख्यारूपेणाङ्गान्तराणामकर्त्तव्यताप्रतिषेधेन कर्तव्यताविधानार्थं पत्नीसंयाजानेव न कुर्यादन्यानि तु कुर्यादेवेति तेन पत्नीसंयाजानुयाजप्रतिषेधेन कृत्स्नसंस्थाविधानाच्छंय्विडान्तवचनेन तत्संस्थाविधानाद् द्वयोः संस्थयोर्विकल्पः नैवं "वाक्यभेदो हि न न्याय्यो विकल्पश्चाष्टदोषभाक् । त्रिदोषा परिसंख्या च तस्मात्स्तुत्यैकवाक्यता" ॥ शंय्विडान्तविधेरेवायमर्थवादार्थोऽनुवादः पत्नीसंयाजाद्यकरणाल्लाघवं भवतीति न विध्यन्तरं, तस्मान्नियमेन शंय्विडान्ते एव प्रायणीयातिथ्ये ॥

प्रायणीयातिथ्ययोः पूर्वाभ्यामेव शंय्विडाभ्यां संस्थाधिकरणम् ।

सू० प्रतिषेधार्थवत्त्वाद्देवतस्य परस्तात्प्रतिषेधः स्यात् ॥ १३ ॥

शंय्विडान्तयोरेव सन्देहः प्रकृतौ द्वौ शंयू पत्नीसंयाजानां पुरस्तादेकः पश्चादपरः तथेडे अपि द्वे अनुयाजानां पुरस्तादेका पश्चादपरा तत्र किं पूर्वाभ्यां शंय्विडाभ्यां तदन्तता? उतोत्तराभ्या?मुतानियम? इति, विशेषाभावादनियमे प्राप्तेऽभिधीयते उत्तराभ्यामेव, कुतः इदं तावत्पर्यग्निकृतोत्सर्गवचनवच्छंय्विडान्ताङ्गरीतिविधानमतो ये शंयोरिडा-

याश्च प्राञ्चः पदार्थास्ते कर्तव्याः, ये चोत्तराभ्यां शंय्विडाभ्यां प्राञ्च-स्तेषामपि शंय्विडाभ्यां पूर्वभावित्वमस्तीति कर्त्तव्यता गम्यते, तस्मादुत्त-राभ्यामेव तदन्तता । तथा च पत्नीसंयाजानूयाजप्रतिषेधोऽर्थवान्भवति वादमात्रं ह्यनर्थकं स्यादेवं शंय्विडान्ताङ्गरीतिर्यदि विधीयते प्रवृत्त-योस्तु संस्थानं चोद्यते शंय्विडान्तयोः सन्तिष्ठतिना हि संस्थानमुप-रमो विधीयते नाङ्गरीतिः तेन प्रवृत्ते प्रापणीयातिथ्ये शंय्विडान्ते सत्यौ सन्तिष्ठेते तामवस्थां प्राप्य ततः परं न प्रवर्तितव्यमुपरन्तव्यं तेन शंय्विडे चेत्साद्यात्कृते कर्तव्यमवस्थानमिति पूर्वयोः कृतयोः कर्त्तव्यं संस्थानमिति पूर्वाभ्यामेव तदन्तता पत्न्यनूयाजप्रतिषेधस्त्वेकवाक्यत्वादर्थवादार्थोऽनु-वाद इत्युक्तम् ॥

यदुपसद उपसाद्यन्ते इत्या-दिना अपूर्वोपसत्कर्मविधाना-धिकरणम् ।

सू० उपसत्सु यावदुक्तमकर्म स्यात् ॥ १४ ॥

ज्योतिष्टोमे सत्युपसदः ताः प्रकृत्य श्रूयते अप्रयाजास्ता अननूया-जास्ता" इति तथा स्रुवेणाघारमाघारयतीति तत्र सन्देहः किं प्रतिषि-द्धप्रयाजादिवर्जमन्यत्सर्वं प्राकृतं कर्त्तव्यम् ? त प्रत्यक्षवचनविहिताघारादि-ना परिसंख्यानादपूर्वता परत्वाद्वा सर्वमश्रुतमकर्त्तव्य ? मिति, परिसंख्या-पक्षस्तु गृहमेधीयवन्निरस्तोऽपि सम्भवमात्रेणोपन्यस्त इति द्वावेव पक्षौ, तत्र केनापि कारणेनाघारादीनामभावमाशङ्क्य प्रतिप्रसवं कुर्वदिव वच-नमिदं प्रतिभाति नाघारादिभ्योऽन्यामाहुतिमौपसदीं पुरस्ताज्जुहुया-द्यदन्यां जुहुयादन्यन्मुखं कुर्यादाघारादयो हि सर्वेष्टीनां मुखम्, अतः स्रुवेणाघारमाघारयतीति तेन प्रतिषिद्धप्रतिप्रसवार्थमिदं न परिसंख्या-मपूर्वतां वा शक्नोति कर्त्तुम् । अथ वा चोदकप्राप्तानुवादमात्रमिदमस्तु नन्वा[1]नर्थक्यं स्यात् अपूर्वतापक्षेऽप्यप्रयाजास्ता अननूयाजास्ता इति वचन-द्वयमनर्थकमेव स्यात्, तद्वरमेकस्यैवानर्थक्यं, तस्मात्प्रतिषिद्धवर्जमन्यत्सर्वं

१ न चानर्थक्यं स्यादिति पा० ।

कर्त्तव्यम्, उच्यते न तावदभावाशङ्काऽऽघारादीनामस्ति येन प्रतिप्रसवः क्रियते तस्मादपूर्वतापरमेवैतत् अप्रयाजाननूयाजवचनं त्वनुवादमात्रमाख्याताभावात् स्रुवाघारवचनं त्वाख्यातसद्भावाद्यज्ञस्य प्रज्ञात्या इति च स्तुतिसम्बन्धाद्विधायकं सदपूर्वताङ्गमयतीति विशेषः ॥

वारुणेनैककपालेन इत्यादिना अपूर्वस्यावभृथस्य विधानाधिकरणम् ।

सू॰ अवभृथे बर्हिषः प्रतिषेधाच्छेषकर्म्म स्यात् ॥ १५ ॥

अवभृथे श्रूयते अप्सुमन्तावाज्यभागौ यजतीति तथा अपबर्हिषः प्रयाजान् यजति अपबर्हिषावनूयाजौ यजतीति तत्र किमवभृथे बर्हिःसंज्ञं चतुर्थं प्रयाजं बर्हिःसंज्ञं प्रथममनूयाजं वर्जयित्वा ऽन्यत्सर्वं कर्त्तव्यम्? उत प्रत्यक्षश्रुतव्यतिरिक्तमन्यत्सर्वं परिसंख्यानादपूर्वत्वाद्वा न कर्त्तव्य?मिति संशयः, तत्राज्यभागवचनमप्सुमन्तागुणविधानार्थं नापूर्वतां गमयति तस्माद्बर्हिर्वर्जमन्यत्सर्वं कर्त्तव्यं मैवं लिङ्गक्रमाभ्यामेवाप्स्वग्ने सधिष्टव अप्सु मे सोमो अब्रवीदिति मन्त्रप्राप्तेः प्राप्तैवा ऽज्यभागयोरप्सुमन्तासा न विधातव्या तेनाज्यभागविध्यर्थमेव वचनमित्यपूर्वोऽवभृथः, अपबर्हिषः प्रयाजान् यजतीत्यादिवचनं बर्हिर्व्यतिरिक्तप्रयाजविधानार्थेन बर्हिःप्रतिषेधार्थम् ॥

वाजपेयादौ यूपादीनां खादिरत्वादिनियमाधिकरणम् ।

सू॰ विरोधिनामेकश्रुत्तौ नियमः स्याद्ग्रहणस्यार्थवत्त्वाच्छरवच्छ्रुतितो विशिष्टत्वात् ॥ १६ ॥

यत्र चोदकेनानेकेषां प्राप्तानामेकं प्रत्य श्रूयते यथा "खादिरो यूपो बृहत्पृष्ठं यवमयः पुरोडाश" इत्यादिषु तत्र किं श्रुतस्य खादिरादेरतिदिष्टस्य पलाशादेः प्रकृतिवद्विकल्पः? अथ वा श्रुतस्यैव नियम? इति संशये विकल्पः प्रकृतिवत्, प्रत्यक्षवचनं तु न खादिरादेर्विधायकं प्राप्तत्वात् पलाशादिनिवृत्त्यर्थत्वे त्रिदोषा परिसंख्या स्यात्, तस्मादनुवादमात्र-

मिति यथाचोदकं विकल्पः, नैवं यथैव प्रकृतावर्थादनियताऽनेकद्रव्यकत्वे प्राप्ते व्रीहिखदिरादिश्रवणं नियमार्थम्, एवं चोदकेनापि अनियमेन खादिरादि प्राप्यमाणं प्रत्यक्षवचनेन नियम्यते तन्नियमाच्चार्थाभावात्पालाशादेर्निवृत्तिः ॥

कार्म्येष्टिषु प्राकृतद्रव्यदेवतस्य निवृत्त्यधिकरणम् ।

सू. सर्वासां च गुणानामर्थवत्त्वाद् अग्रहणमप्रवृत्तेः स्यात् ॥ १७ ॥

अध्यायादावर्थलोपाद्बाधो वर्णितः, प्रत्याम्नानस्य तु बाधकत्वं सिद्धवत्सर्वत्र व्यवहृतमिदानीं तु तदेव चिन्त्यते किं प्रत्यक्षश्रुतेन श्यामाकादिना प्रत्याम्नानाच्चोदकप्राप्तं व्रीह्यादि बाधितुं शक्यम्? उतोभयं तुल्यबल? मिति विकल्पः समुच्चयो वा? तत्र तद्धर्मप्राप्तिनिराकरणाच्चोदकेन तावद्व्रीह्याद्यपि प्राप्यते, न च प्राप्तं शक्यं केनचिद्बाधितुं शास्त्रप्रामाण्याविशेषात् तथा च "नार्षेयं वृणीत" इति प्रत्यक्षोऽपि प्रतिषेधः पक्षे चोदकप्राप्तेन वरणेन विकल्पत इति वक्ष्यते न तुल्यत्वादुभयं शब्दलक्षणमिति, न च सत्यपि चोदकप्राप्त्याऽङ्गत्वे व्रीह्यादेरननुष्ठानं कार्यनिमित्तं ह्यननुष्ठानं तत्साधनत्वे सति व्रीहीणां को नाम निराकुर्यात्तस्माद्विकल्पः समुच्चयो वा, सत्यं, यदि पारमार्थिकी चोदकप्राप्तिः स्यात् न त्वेवं, चोदको हि यद्यपि सर्वपदार्थानुरक्तं युगगतं व्यापारं प्रापयन्नेकेनैव व्यापारेण सर्वाण्यङ्गानि प्रापयति न प्रत्येकं तथाऽपि व्रीह्यादिविशेषे प्रत्यक्षवचनविरोधमालोच्य तद्व्यतिरिक्ताङ्गपरत्वेन व्यवस्थाप्यते, तदिदमुक्तं भाष्यकारेण "यदुक्तमग्रहणाद्ग्रहणमिति तदिह सिद्ध"मिति सिद्धान्तत्वेन स्थापितमित्यर्थः समुच्चयस्य तूत्तरं प्राप्तमपि प्रयोजनाभावान्नानुष्ठीयत इति, न ह्यतिदिष्टमपि व्रीह्यादि यवैः सिद्धे यागे ऽनुष्ठातव्यमित्यभिप्रायः, तस्मात्प्रत्यक्षश्रुतं द्रव्यदेवतं चोदकप्राप्तं बाधते ॥

सौमापौष्णे पशौ खादिरयूपस्य नियमाधिकरणम् ।

सू· तथै[1]कार्थविकारे प्राकृतस्याप्रवृत्तिः प्रवृत्तौ चि विकल्पः स्यात् ॥ १८ ॥

क्वचिच्छ्रूयते "औदुम्बरो यूपो भवती"ति तत्र किं प्राकृतं खादिरं यूपद्रव्यं प्रवर्त्तते ने?ति संशये द्वयोरपि सह नियोजनसम्भवादसति विरोधे[2] न युक्तो बाधः, तस्माद् द्वयोरपि यूपयोः समुच्चयः नैवं, निरपेक्षो हि खादिरश्चोदकेन प्राप्यते निरपेक्षश्चौदुम्बर उपदेशेन समुच्चये द्वयोरपि बाधः । किं च औदुम्बरवचनेन न यूपान्तरं विधीयते किं तर्हि प्राकृतस्यैव यूपस्य खादिरतां व्युदस्य औदुम्बरता विधीयत इति स्पष्टो[3] बाधः ॥

ब्रह्मवर्चसकामे- व्रीहिभिरेव यागाधिकरणम् ।

सू० वैकृतै[3] त्वनियमः स्यात्पृषदाज्यवद् ग्रहणस्य गुणार्थत्वादुभयोश्च प्रदिष्टत्वाद् गुणशास्त्रं यदेति स्यात् ॥ १९ ॥

यत्र प्राकृतानां वैकल्पिकानामन्यतमद्वैकल्पिकगुणान्तर नहितं कर्मोत्पत्तिवाक्ये श्रूयते "यथा सौमारौद्रं चरुं निर्वपेत् शुक्लानां व्रीहीणां नैर्ऋतं चरुं निर्वपेत् कृष्णानां व्रीहीणामिति तत्र संशयः किं व्रीहियवयोर्विकल्पः, व्रीहिपक्षे च शुक्लकृष्णविधि? उत सर्वदा व्रीहय एवेति तत्र व्रीहिग्रहणस्य शुक्लादिगुणसम्बन्धार्थत्वेनाविधायकत्वाच्च यवानां बाधः, तस्माद्विकल्प नैवं, न ह्येकेन वाक्येन यागस्य चोदकप्राप्तव्रीह्युद्देशेन गुणस्य च विधानं सम्भवति, तस्माद्द्रव्यगुणविशिष्टकर्मविधानादुपदिष्टा व्रीहयो यवान् बाधेरन् ॥

---

१ तथैव कार्यविकारे इति पा· ।
२ विरोध इति पा· ।
३ विकृते इति पा· ।

पञ्चावत्तैव वपा कार्येत्यनेनाङ्गेष्वपि पञ्चावत्तविधानाधिकरणम् ।

सू० यथाश्रुतीति चेत् ॥ २० ॥

अग्नीषोमीये पशौ श्रूयते यद्यपि चतुरवत्ती यजमानः पञ्चावत्तैव वपा कार्येति तत्र किं पञ्चावदानं वपायामेवो? त हृदयादिष्वप्यङ्गेषु सङ्कीर्यत? इति संशये वपोद्देशेन विधानाद् वाऽपूर्वस्य चाङ्गापूर्वेभ्यो भिन्नत्वाच्च [illegible]धिकरणन्यायेना संकरे प्राप्ते ऽभिधीयते । "वपामुद्दिश्य चोद्येत यदि [illegible]वदा[illegible]ता । स्यादेवमवदाने तु पञ्चसंख्याऽत्र चोद्यते" ॥ न हि वपामु[illegible] [illegible]त्वविशिष्टमवदानं विधीयते अवदानस्य प्राप्तत्वात् अतो ऽवदानोद्देशेन पञ्चत्वसंख्याविधानादुद्दिश्यमानस्य च वपावि-शेष[illegible]वात्प्राकृतावदानमुद्दिश्य पञ्चत्वं विधीयते, वपाग्रहणं तु प्रदर्श[illegible]मिति सर्वेषां पञ्चावदानम् । ननु समासैकदेशमवदानमुद्दिश्यैक-देशान्तरं पञ्चत्वम् अङ्गवच्च शक्यं विधातुम्, अतो वपामेवोद्दिश्य पञ्चसं-ख्या[illegible]वदानान्तरं प्राकृतावदानकार्यमध्वर्युप्राकाशदानवद्विधीयते वपाग्रहणं चैवमर्थवद्भविष्यति, इतरथा ऽवयुत्याऽनुवादो लक्षणा वा स्यात् सत्यपि पशुयागतदपूर्वयोरेकत्वेऽभ्यासापूर्वभेदान्मैत्रावरुणादिश्रवणवद्वपा-पूर्वप्रयुक्तत्वात्पञ्चावदानस्य नाङ्गेषु संस्कारो भवति उच्यते एकादश वै पशोरवदानानि तानि द्विर्द्विरवद्यतीति यदेतद् द्व्यवदानवचनमिदमत्र सिद्धान्तस्य मूलयुक्तिः । वपामात्रविषये हि पञ्चावदाने प्रकृतित एव द्विर्ह-विषोऽवद्यतीति प्राप्तत्वात् द्व्यवदानवचनमनर्थकं स्यात्, सर्वविषये तु पञ्चावदाने संख्यासम्पत्तये हविषोऽपि त्र्यवदाने प्राप्ते द्व्यवदानविधान-मर्थवद्भवति सकलवचनानर्थक्याद्वरमेकस्य वपाग्रहणस्योपलक्षणार्थत्वम-ङ्गीकृतं, तस्मात्सर्वविषयं पञ्चत्वं, तच्चाङ्गेषु द्व्यवदानवचनादुपस्तरणवि-वृद्ध्या अभिघारणविवृद्ध्या वा सम्पद्यते, तस्मादङ्गेष्वपि पञ्चावदानम् ॥

इति पार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां दशमाध्या-यस्य सप्तमः पादः ॥ ७ ॥

## अथाऽष्टमः पाद आरभ्यते ॥

प्रदेशानारभ्य विधानयोर्निषेधस्य पर्युदासताधिकरणम् ।

सू० प्रतिषेधः प्रदेशेनारभ्य विधाने च प्राप्तप्रतिषिद्धत्वाद्विकल्पः स्यात् ॥ १ ॥

महापितृयज्ञे दार्शपौर्णमासिके विध्यन्ते प्रदिष्टे श्रूयते "नार्षेयं वृणीते न होतार"मिति तथाऽनारभ्य श्रूयते "यजतिषु येयजामहं करोति नानूयाजेषु येयजामहं करोती"ति तत्र विचार्यते किं महापितृयज्ञे वरणस्य प्रदिष्टस्य तत्प्रतिषेधस्य च विकल्पः तथाऽनुयाजेषु ये जामहतत्प्रतिषेधयोः ? उत नियोगतो वर्जनमेवे ? ति, तदर्थमिदं चिन्त्यते नार्षेयं नानूयाजेष्विति किमयं प्रतिषेधः ? उत पर्युदास ? इति, "तत्र श्रुत्यर्थलाभाय प्रतिषेधोऽन्यथा पुनः । पदद्वयमपि ह्यन्यपरत्वाल्लक्षणां व्रजेत्" । प्रतिषेधपक्षे हि चोदकप्राप्तमार्षेयवरणं श्रुत्यैवानूद्यते, श्रुत्यैव च तत्प्रतिषिध्यते अनारभ्यवादप्राप्तश्च येयजामहः पर्युदासपक्षे पुनर्नानूयाजशब्दाभ्यां यागान्तराणि नञ्वृणातिभ्यां च वरणव्यतिरिक्तचोदकप्राप्ताङ्गान्तराणि लक्षणया प्रतिपाद्येरन्, न च श्रुतिसम्भवे लक्षणा युक्ता । किं चानूयाज–शब्दसम्बन्धे नञ्समासप्रसङ्गः, नित्यो ह्यस्य सुबन्तसम्बन्धे समास इति ब्रुवन्वार्तिककारो वा वचनानर्थक्यं मन्यते । एवं हि वदन् वाक्यसमासयोर्भिन्नार्थतां मेने, सति ह्येकार्थ्ये समासनियमाद्वाक्यं निवर्तेत तन्मा निवर्तिष्टेति कर्त्तव्यं वा वचनमिति तदाऽनर्थक्यं न ब्रूयात्, आनर्थक्यवचनात्तु नास्त्यैकार्थ्यमिति गम्यते, ततो ऽननुयाजेष्विति समासगम्यः पर्युदासस्तदैव लभ्यत इति तद्विवक्षायां नित्यः समासः स्यात्, असति तु समासे नानूयाजेष्वित्याख्यातसम्बन्धी सन् नञ् प्रतिषेधार्थ एव ज्ञायते, अतश्च प्रदेशानारभ्य वादाभ्यां विहितत्वादाभ्यां वचनाभ्यां च प्रतिषिद्धत्वाद्वरणयेयजामहयोर्विकल्पः । ननु सामान्यविषयस्य विशेषविषयस्य च प्रतिषेधस्यातुल्यबलत्वाद्युक्तो बाधो न विकल्पः तथाऽऽनुमानिकस्य चोदकस्य प्रत्यक्षस्य च सुतरामयुक्त इति चेत्

नैवं तत्राम प्रत्यक्षविशेषशास्त्रं सामान्यस्यानुमानिकस्य च बाधने क्षमं यत्त-न्निरपेक्षमात्मानं लभते यथा शर-पद-शास्त्रे कुशाहवनीययोर्न हि शर-विधिः कुशप्राप्तिमपेक्षते तत्कार्यमात्रापेक्षत्वात्, पदविधिरपि होममात्रा-पेक्षोनाहवनीयप्राप्तिमपेक्षते, तेन प्रागेव कुशाहवनीयप्राप्तेः प्रत्यक्षेण विशे-षशास्त्रेण शीघ्रविहिते शरपदे पश्चात्सामान्यद्वा॥ लक्षणया प्राप्यमाणयोः प्राप्तिं निवारयत इति युक्तो बाधः। अत्र तु प्रतिषेधस्य प्राप्त्यपेक्षत्वादवश्यं प्रतिषेधता शास्त्रेणैव प्रतिषेध्ययोर्वरणयेयजामहयोर्महापितृयज्ञे अनूया-जेषु च प्राप्तिः प्रतीक्षितव्या, प्राप्तिश्च निर्दोषशास्त्रकारितत्वादशक्या मिथ्या कर्त्तुं तस्माद्विकल्प इति प्राप्ते ब्रूमः। "यत एव विकल्पोऽयं प्रति-षेधे प्रसज्यते। अतस्तत्परिहाराय पर्युदासाश्रयो वरम्"॥ नित्यवत्कृतयोर्वि-धिप्रतिषेधयोः पक्षेऽप्यत्यन्ताविद्यमानमिथ्यात्वकल्पनादत्यन्तायुक्तो विक-ल्प इति वरं लक्षणयाऽपि पर्युदासाश्रयणं, न चानूयाजशब्दसम्बन्धेनऽसमा-सापत्तिः विभाषाध्ययनात्पाणिनेः, कात्यायनीयं तु वा वचनानर्थक्यं न्या-यविरोधादनादर्त्तव्यम्, अस्ति हि वृत्ति[१]वाक्ययोरैकार्थ्यं, य एव हि राजपुरुष इति वृत्तेरर्थो राजविशिष्टः पुरुषः स एव राज्ञः पुरुष इति वाक्यस्यापि, विशेषस्त्वेतावान् वृत्तावभिधानद्वयमप्यनन्यात्क्षिप्तस्वार्थं सदेकं विशिष्टं प्रतिपादयति, वाक्ये त्वर्थान्तराक्षेपं सहते, यथा ऋद्धस्य राज्ञः पुरुष इति राजपदमृद्ध्याक्षेपमनुभवन्पुरुषं विशिनष्टि, न चैतावताऽर्थभेदः प्रतिपाद्या-भेदात्, यदि चैतावता भेदेन समासो वाक्यस्यानिवर्त्तक इत्यङ्गीक्रियेत ततो विभाषावचनात् प्राग्विहितोपकुम्भादिसमासेनापि वाक्यं न निव-र्तेत तथोपपदसमासेन कुम्भकारादिना, न चैवमिष्टं, तस्मादवश्याऽध्येयं विभाषा वचनमित्यन्याय्यं तदानर्थक्यं, तस्मादसमासेऽपि विकल्प परिजिहीर्षया युक्तं पर्युदासाश्रयणम्, एवं च प्रदेशानारभ्य वादयोरेवायं वाक्यशेषः प्रकृतिवत्कुर्यादार्षेयवरणव्यतिरिक्तं पितृयज्ञे अनूयाजव्यतिरिक्तेषु यज्ञेषु च येयजामहं कुर्यादिति ततश्च विधेरङ्गान्तरयज्ञान्तरविषयत्वादविहितमेव

१ अस्ति हि समासवाक्ययोरैकार्थ्यमिति पा०।

वरणमनूयाजेषु च येयजामहः, तस्माच्च विकल्पो ऽननुष्ठानमेव, सोऽयं प्रतिषेधनिबन्धनः प्राकृताङ्गबाधः शरैः कुशानां प्रत्याम्नानात् स्वयंदिता-दिषु लवनादीनामर्थलोपादिति त्रेधा बाधो वेदितव्यः ॥

न तौ पशौ करोतीत्यादिनिषेधस्यार्थवादताऽधिकरणम् ।

सू॰ अपूर्वे चार्थवा[1]दः स्यात् ॥ २ ॥

दर्शपूर्णमासयोराज्यभागावग्नीषोमाभ्यां यजतीत्येवं विधाय श्रूयते "तौ न पशौ करोति न सोम" इति किमयं प्रतिषेधः? पर्युदासो वा? अर्थवादो वे? ति संशयः, तत्रासमस्तत्वात्प्रतिषेधः विकल्पभयाद्वा पूर्ववत्पर्युदासः । ननु सोमस्योपदेशातिदेशाभ्यामाज्यभागप्राप्त्यभावादुभयमप्ययुक्तं, सत्यं, साक्षात्सोमे नाज्यभागौ स्तः, दीक्षणीयादिद्वारेण त्वाज्यभागाभ्यां सोमस्यास्ति सम्बन्धः स प्रतिषिध्यते तदनेन प्रकारेण सोमाङ्गेषु दीक्षणीयादिषु आज्यभागप्रतिषेधः पर्युदासो वेति प्राप्ते ब्रूमः । यद्युपदेशेनातिदेशेन वाज्यभागौ सोमे प्राप्नुयातान्ततो निषेधः स्यात्, यदि च सोमासोमसाधारणमाज्यभागविधानमभविष्यत्ततो ऽसोम इति पर्युदासो वा कल्प्यः स्यात् । न त्वेवमस्ति न च दीक्षणीयादिषु प्रतिषेधः तथा सति न सोम इत्यनेनैवाग्नीषोमीयेऽपि पशौ प्रतिषेधसिद्धेस्तत एव तद्विकारेषु निरूढादिपशुष्वपि प्राप्त्यभावात्पशाविति प्रतिषेधोऽनर्थकः स्यात्, सोमशब्दस्य चैवं लक्षणा स्यात् । न च वाजपेयस्येव यूपेनाङ्गद्वारकः सोमाज्यभागसम्बन्धो निर्दिश्यते, षष्ठी हि सम्बन्धमात्रमभिधत्ते सप्तमी त्वाधाराधेयभावमेव न चाङ्गाङ्गित्वेनाधाराधेयभावः सम्भवति तस्मादङ्गाङ्गिभावनिर्देशोऽयं, स चाप्राप्त इति तत्प्रतिषेधपर्युदासावयुक्तौ तस्माच्च पशावित्यस्यायमर्थवादो यथा सोमस्य नाज्यभागौ, एवं पशावपीति । अथ न पशाविति किमयं प्रतिषेधः पर्युदासो वा विकल्पपरिहाराय पर्युदास इति केचित् । तदयुक्तम् अ न्तरवृत्तस्याज्यभागाङ्गविधेः केवलदर्शपूर्णमासविषयत्वेन पश्वपशुसाधारण्याभावात्, न च पाशुकस्य प्रकृ-

[1] अपूर्वे वार्थवादः स्यादिति पा॰ ।

तिवच्छब्दस्यायं वाक्य शेषः, तस्य ह्यसन्निधानात्तच्छेषत्वेन च सोम इत्यर्थवादो नावकल्पते, न ह्येवं सम्भवति यथा सोमस्याज्यभागव्यतिरिक्तमङ्गमैष्टिकं कर्तव्यन्तथा पशोरपीति सोमस्यापूर्वत्वादैष्टिकाङ्क्षाभावात्, सम्भवति त्वेवं यथा सोमस्याज्यभागौ न कर्तव्यौ तथा पशोरपीति, तस्मात्प्रतिषेधः ततश्च पशावाज्यभागयोर्विकल्पः ॥

नातिरात्रे गृह्णाति षोडशिनमित्यादि निषेधस्य विकल्परूपताधिकरणम् ॥

सू० शिष्ट्वातु प्रतिषेधः स्यात् ॥ ३ ॥

सामान्यविषये विधौ विशेषविषयोनञ्पर्युदासरूपेण विधेरेव वाक्यशेष इत्युक्तमप्राप्तविषयस्तु नञ् अर्थवाद इति । अथ क्वायं प्रतिषेधो भवतीति तत उच्यते यत्रैकमर्थं शिष्ट्वा तद्विषय एव नकारः श्रूयते, यथातिरात्रे षोडशिनं गृह्णाति नातिरात्रे इति तत्र प्रतिषेधः पर्युदासार्थवादासम्भादगत्या च करणाकरणयोर्विकल्पः प्रतिषेधार्थवत्त्वापाकरणेऽपि क्रतुसिद्धिरस्तीति कल्प्यते, विध्यर्थवत्त्वाय चानुष्ठाने फलभूयस्त्वमित्युभयोरुपपत्तिः ॥

अनाहुतिर्वै जर्तिलाश्चेत्यादिनिषेधस्यार्थवादताधिकरणम् ।

सू० न चेदन्यं प्रकल्पयेत्प्रक्लृप्तावर्थवादः स्यादानर्थक्यात्परसामर्थ्याच्च ॥ ४ ॥

अस्येदानीमपवादः क्रियते शिष्ट्वापि श्रूयमाणो नञ् क्वचित्प्रतिषेधार्थमपहायार्थवादार्थो भवति यत्र विध्यन्तरेणैकवाक्यत्वं तथा ह्यग्निहोत्रे "जर्तिलयवाग्वा वा जुहुयाद्गवे धुकयवाग्वा चे"त्युक्त्वा "अनाहुतिर्वैजर्तिलाश्च गवेधुकाश्चे"त्युक्तं, ततः पुनः पयसाऽग्निहोत्रं जुहुयादिति श्रुतं तत्र संशयः किं जर्तिलगवेधुकानामनाहुतिवादः प्रतिषेधः? उत पयोहोमस्यार्थवाद? इति, तत्र पूर्वेण न्यायेनप्रतिषे धार्थता जर्तिलगवेधुकास्तावद्विस्पष्टेन लिङ्प्रत्ययेन विहितास्तेषामयमनाहुतिवादः प्रतिषेधः, पयोविधिश्च वाक्यान्तरमिति प्राप्ते ऽभिधीयते यद्यपि जर्तिलगवेधुका विहिताः स्युस्तथाऽप्यनाहुतिवादो नैव प्रतिषेधोऽनर्थकत्वात् विकल्पार्थे न

हि प्रतिषेधः स चेह विकल्पः पयोविधिनैव जर्तिलगवेधुकानां सिद्ध इति व्यर्थः प्रतिषेधः, परेण च विधिनाऽस्य समस्तस्यैकार्थत्वमर्थवादतया सम्भवतीति न युक्तो वाक्यभेदः १ तस्मादनाहुतिवादस्तावज्जर्तिलादिनिन्दाद्वारेण पयसः स्तुत्यर्थः यदा चैवं जर्तिलादिविधिरपि तन्निन्दाद्वारेण पयसः प्रशस्ततरत्वं ज्ञापयन्नर्थवाद एव न विधिः एकवाक्यत्वसम्भवे ह्यनेकादृष्टानुबन्धिवाक्यभेदकल्पनमन्याय्यं, तस्मात्पयोमात्रं विधीयते अन्यस्तु सर्वोऽर्थवादः ॥

त्र्यम्बकादावभिघारणानभिघारणादीनामर्थवादताधिकरणम् ।

सू० पूर्वैश्च तुल्यकालत्वात् ॥ ५ ॥

आधाने श्रूयते होतव्यमग्निहोत्रं न होतव्यमिति मीमांसन्ते ब्रह्मवादिनः "यद्यजुषा जुहुयादयथापूर्वमाहुतीर्जुहुयात् यन्न जुहुयादग्निः पराभवेत् तूष्णीमेव होतव्यमग्निहोत्र"मिति तथा चातुर्मास्येषु त्र्यम्बकानधिकृत्य श्रूयते "अभिघार्या नाभिघार्या" इति मीमांसन्ते "यदभिघारयेत्तद्रुद्रायास्ये पशूनभिदध्याद्यन्नाभिघारयेन्न रुद्रायास्ये पशूनभिदध्यादथो खल्वाहुरभिघार्या एवे"ति तत्र संशयः किं होमाभिघारणयोर्विकल्पः ? उतानुष्ठानमेवे? ति तत्र होमाभिघारणयोर्विधेयत्वमविवादमतो होतव्यमभिघार्या इति च विध्यर्थमेव न जर्तिलश्रवणवदन्यार्थम्, एवं च न होतव्यं नाभिघार्या इति च प्रतिषेधार्थमेव भवति न मीमांसाविशेषणं, न ह्येकपक्षावलम्बिनी मीमांसा सम्भवतीति, तस्माद्धोतव्यमिति विधेर्न होतव्यमिति च निषेधाद्विकल्पः, सति च विकल्पे अन्यतरपक्षपरिग्रहाय प्रयोगदशायां मीमांसा भवतीति तदभिप्रायेणाऽनुवादो मीमांसा—शब्दः अन्ते तूष्णीं होतव्यमिति तूष्णींभावगुणविधानार्थवचनम्, अपि च रुद्रायास्ये पशूनभिदध्यादित्यभिघारणनिन्दाकथनं तद्विधेः शेषो भवेत्, तस्मान्निषेधशेष एवायमन्ते त्वभिघार्या इति वचनमनुवाद इति प्राप्ते ब्रूमः सत्यं, होमाभिघारणे विधेये तथाऽप्युपक्रमे श्रवणं न विध्यर्थमुभयोरपि होमाहोमयोर्मीमांसासंबन्धावगमादन्ते त्वनन्यपरं श्रवणं विध्यर्थं तदर्थवादोऽयं निन्दापि च प्रशस्ततरत्वज्ञापनार्थैव, एवमि-

दमभिघारणं प्रशस्तं यत्सन्तमपि दोषमनादृत्य कर्तव्यमिति, तस्माच्च विकल्पो नियतं एव होमाभिघारणे ॥

आधाने उपवादस्य विकल्पताधिकरणम् ।

सू० उपवादश्च तद्वत् ॥ ६ ॥

अग्न्याधेये वारवन्त्यादिसामगानं विधाय श्रूयते "न ब्रह्मा सामानि गाये"दिति तत्र संशयः किमयं प्रतिषेधो नित्यं सामगान? मुत प्रतिषेधार्थमेवेदं विकल्पः सामगानस्ये? ति तत्र ब्रह्मणो गानप्राप्त्यभावादनुवादोऽयं निषेधस्तेन नित्यं गानं, नैवम् अनुवादमात्रस्यानर्थकत्वात्, तस्माद्गाननिषेधोऽयं ब्रह्म-शब्दस्तु ब्रह्मणपरोऽनुवादः ॥

दीक्षितो न ददातीत्यादिनिषेधस्य पर्य्युदासताधिकरणम् ।

सू० दीक्षितस्य दानहोमपाकप्रतिषेधोऽविशेषात सर्वदानहोमपाकप्रतिषेधः स्यात् ॥ ७ ॥

ज्योतिष्टोमे श्रूयते "दीक्षितो न ददाति न जुहोति न पचती"ति तत्र विचारः किमयं सर्वेषामेव पुरुषार्थानां क्रत्वर्थानां चोपदिष्टानामतिदिष्टानां च प्रतिषेधः? उतातिदिष्टानां पुरुषार्थानां च? अथ वा पुरुषार्थानामेवाग्निहोत्रादीना? मिति, तत्राविशेषात्सर्वेषाम् आहत्य विहितानां तु ग्रहैर्जुहोतीत्यादीनां बलवत्त्वात्तद्दुर्जमातिदेशिकानां चतुरवत्तहोमादीनामग्निहोत्रादीनां च बाध इति प्राप्ते ब्रूमः विकल्पप्रसङ्गात् न क्रत्वर्थप्रतिषेधः, तस्मात्पुरुषार्थानामेव, तत्रापि प्रतिषेधपक्षे विकल्पदोषः स्यादेव, तस्मात्पर्युदासोऽग्निहोत्रादिविधेः शेषोऽयमदीक्षितोऽग्निहोत्रादि कुर्यादिति न त्वेतद्युक्तमसन्निहितत्वादग्निहोत्रादिविधेः, तस्मात्प्रतिषेध एवायं, न च विकल्पप्रसक्तिरैकार्थ्याभावात्, यद्युभावपि विधिप्रतिषेधौ पुरुषार्थौ क्रत्वर्थौ वा भ[1]विष्येतां ततो विकल्पिष्येयातां पुरुषार्थतया तु

१. भविष्येतामिति सर्वपुस्तकसाधारणोऽपि पाठो न समीचीन सूक्ष्मतरमवधारणीयम् ।

विहितानामग्निहोत्रादीनां क्रतुमध्येऽपि प्राप्तानां प्रतिषेधः क्रत्वर्थतया क्रियते स्त्र्युपगमादिप्रतिषेधवदतः क्रतुमनुतिष्ठताऽवश्यं वर्जनीयान्यग्निहोत्रादीनि भवन्तीति नास्ति विकल्पप्रसङ्गः । यदा च प्रतिषेधपक्षेऽप्यविकल्पस्तदा श्रुत्यर्थलिप्सया प्रकरणानुजिघृक्षया च प्रतिषेधत्वमेव न्याय्यं, पर्युदासपक्षे हि न शब्ददीक्षितशब्दावुभावपि दीक्षितव्यतिरिक्तपुरुषलक्षणार्थौ स्यातां तस्मात्प्रतिषेधः, तथाऽपि विकल्पाभावात्फलतः पर्युदासत्वं भवतीति मत्वा सूत्रभाष्यकाराभ्यां पर्युदासत्वमुक्तं, यदि च पर्युदासः स्यात्ततो वरं क्रत्वर्थानामेव होमादीनां पर्युदासः यद्यपि प्रत्यक्षेण विशेषरूपेण चोपादिष्टानां यद्वेर्जुहोत्यौदुम्बर्या जुहोतीत्येवमादीनामशक्यः पर्युदासः तथाऽपि सामान्यतोऽतिदेशेन प्राप्यमाणानां चतुरवत्तहोमनारिष्ठहोमानामार्षेयवरणवत्पर्युदासः स्यात् । ननु ते दीक्षितस्यैव विधीयन्त इति कथन्तेषु दीक्षितस्य पर्युदासो विधीयते, नैवं न दीक्षित-शब्देन सह नञः पर्युदासत्वमदीक्षित इति कथं तर्हि ददात्यादिशब्दैः दीक्षितो दानहोमपाकव्यतिरिक्तानि प्राकृतान्यङ्गानि कुर्यादिति, एवमतिदेशपर्युदासेन प्रकरणगतानामेव प्रापणीयादिविधीनां दीक्षोत्तरकालभाविनां शेषोभवत्वयं पर्युदासो नासन्निहिताग्निहोत्रादिशेषतामवलम्बते, तस्माल्लक्षणापरिहाराय पर्युदासपक्षं परित्यज्य श्रुत्यर्थतृष्णया प्रतिषेधत्वमेवाङ्गीकृत्य क्रत्वर्थप्रतिषेधे विकल्पप्रसङ्गात्पुरुषार्थानामेव प्रतिषेधः क्रत्वङ्गतया विधीयत इत्येतदेव समञ्जसम् ॥

वर्त्महोमादिभिराहवनीयस्य बाधाधिकरणम् ।

सू० अविशेषेण यच्छास्त्रमन्याय्यत्वाद्विकल्पस्य तत्संदिग्धमाराद्विशेषशिष्टं स्यात् ॥ ८ ॥

नञ्प्रसङ्गं परिसमाप्याधुना प्राप्तबाधप्रसङ्गात्सामान्यविशेषबाधं चिन्तयति "यदाहवनीये जुहोती"ति सामान्यविहितस्याहवनीयस्य "पदे जुहोति वर्त्मनि जुहोति गार्हपत्ये पत्नीसंयाजान् जुहोती"ति विशेषवि-

हितैः पदादिभिः किं विकल्पो? ऽथ बाध? इति संदेहः, यदि सामान्यविशेषयोस्तुल्यबलत्वं ततो विकल्पः, विशेषबलीयस्त्वे तु बाधः। तत्र "सामान्यस्यापि लब्धत्वात्प्रत्यक्षेण विशेषवत्। नास्ति लिङ्गादिवद्बाधो नापि बाधोऽतिदेशवत्"॥ लिङ्गादिकल्पकस्य हि शास्त्रस्य शीघ्रशास्त्रेण कल्पनानिरोधाद्युक्तो बाधः, तथाऽतिदेशस्यानुमानिकत्वात्प्रत्यक्षेण शरादिशास्त्रेण विरोधे सति तद्विषयं परिहृत्य विषयान्तरपरिकल्पनाद्युक्तः कुशानां बाधः सामान्यशास्त्रं तु क्लृप्तं प्रत्यक्षश्रुतं च विशेषशास्त्रवदिति तुल्यबलत्वाद्विकल्प एव युक्त इति प्राप्ते ब्रूमः "प्राप्तिः सामान्यशिष्टस्य विशेषे लक्षणावशात्। श्रुत्या विशेषशिष्टस्य तस्मादस्ति बलाबलम्"॥ पत्नीसंयाजादिषु होमविशेषेषु होमसामान्ये श्रुतस्याहवनीयस्य लक्षणया प्राप्तिः गार्हपत्यादि तु श्रुत्यैव होमविशेषे विधीयते। तेनास्मिन्विशेषे श्रुत्या शीघ्रप्राप्तं गार्हपत्यादिकं लक्षणया मन्थरप्राप्तमाहवनीयं निरुणद्धीति बाधः॥

वैमृधादिषु साप्तदश्यविधेर्वाक्यशेषताधिकरणम्।

सू॰ अप्रकरणे तु यच्छास्त्रं विशेषे श्रूयमाणमविकृतमाज्यभागवत्प्राकृतप्रतिषेधार्थम्॥ ९॥

सप्तदश सामिधेनीरनुब्रूयादित्यनारभ्य विहितं साप्तदश्यं श्रुतं प्रकृतौ पाञ्चदश्येन बाधितं विकृत्यर्थमिति स्थितं, विकृतिष्वपि कासुचित्पशुमित्रविन्दाध्वरकल्पादिषु प्रकरणे साप्तदश्यं श्रुतं, तदिदं प्राकरणिकं सप्तदशसामिधेनीवचनं किमाज्यभागविधिवदपूर्वतापरं? क्लृप्तोपसंहारार्थं?मिति सन्देहे "क्लृप्तोपकाराः प्रकृतौ सामिधेन्यो यतस्ततः। ताभिरेव निराकाङ्क्षा नेच्छन्ति प्राकृतान्वयम्॥ साप्तदश्यं त्वनारभ्यवादप्राप्तमनूद्यते। सामिधेन्यस्तु चोद्यन्ते ताभिश्चापूर्वता स्फुटा॥ भवेदेवमपूर्वत्वं सामिधेनीविधिर्यदि। साप्तदश्यविधिस्त्वेष तस्मान्नापूर्वता भवेत्"॥ साप्तदश्यविधौ किमित्यपूर्वता न भवति तस्य सामिधेनीभिः सम्बन्धस्तासां च चोदक

प्राप्तेर्न चोदकलोपः सम्भवति, चोदकलोपे चापूर्वत्वमिति न साप्तदश्यविधावपूर्वत्वम्। किं च साप्तदश्यं ह्यनारभ्य वादेन सामिधेनीसम्बन्धितया श्रुतं यावत्तद्बलेन क्रत्वङ्गतां नैव कल्पयति तावत्प्राकरणिकैर्वचनैरध्वरकल्पादिसम्बन्धे कृते क्षीणाऽर्थापत्तिर्न कर्मान्तरसम्बन्धं कल्पयति, तेन साप्तदश्योपसंहारार्थानि प्राकरणिकानि वचनानीति नापूर्वत्वम् ॥

पृथिव्यै स्वाहा इत्यादिविधिना अविहितस्वाहाकारेषु प्रदानेषु स्वाहाकारविधानाधिकरणम् ।

सू० मन्त्रेष्ववाक्यशेषत्वं गुणोपदेशात्स्यात् ॥ १० ॥

अनारभ्य श्रूयते स्वाहाकारेण वा वषट्कारेण वा देवेभ्यो हविः प्रदीयत इति केषु चिद्विहोमेषु पुनः स्वाहाकारः पठ्यते पृथिव्यै स्वाहाऽन्तरिक्षाय स्वाहे''ति तदिदमनारभ्य वादप्राप्तस्य स्वाहाकारस्य विशेषेषु पुनः श्रवणं साप्तदश्यवदुपसंहारार्थमिति मन्वानस्योत्तरं पृथिव्यादिशब्दास्तावन्मान्त्रवर्णिकदेवताविधानार्थाः स्वाहाकारपाठस्तु वषट्कारवैकल्पिकत्वेनानियतप्राप्तस्य स्वाहाकारस्य नियमार्थो नोपसंहारार्थः, तस्माद्धोमान्तरेष्वपि नास्ति स्वाहाकारस्य बाधः ॥

अग्न्यतिग्राह्यस्य विकृतावुपदेशाधिकरणम् ।

सू० अग्न्यतिग्राह्यस्य विकृतावुपदेशादप्रवृत्तिः स्यात् ॥ ११ ॥

अग्निरनारभ्यवादविहितः स वाक्येन प्रकृतौ विकृतिषु च कासुचिद्विनियुज्यते, अथातोग्निमग्निष्टोमेनानुयजति तमुक्थ्येन तमतिरात्रेण तं त्रिरात्रेणेत्येवमाद्वादशरात्रादनुक्रान्तः, सोऽयमग्निर्यासु विकृतिषु वाक्येन नोपदिष्टो यथा षोडशिषु वाजपेये च तत्र किं चोदकप्राप्त्या कर्त्तव्यो नेति संशयः तथाऽतिग्राह्यानामग्रहोः प्रकृतौ श्रुताः विकृतिष्वपि कासुचिदुपदिष्टाः उक्थ्ये गृह्णीयात्पृष्ठ्ये गृह्णीयाद्विश्वजिति प्रग्रहीतव्या इति

तेऽपि विकृत्यन्तरेषु ग्राह्या नेति संशयः, तत्र "चोदकेनाभ्यतियाह्यं विकृतौ न प्रदिश्यते। कासुचिच्छ्रवणं तस्य तथा हि स्यादनर्थकम्। तस्मात्तदर्थवत्त्वाय प्रदेशोनेति कल्प्यते। तेन यत्रोपदेशोऽस्य तत्रैवान्यत्र न क्रिया॥ उच्यते अङ्गान्तरवदस्यापि प्राप्तिश्चोदकतो ध्रुवा। चोदकार्थस्य कृत्स्नत्वात्कासुचिच्छ्रवणं पुनः॥ सामान्यविध्यसिध्यर्थं नातिदेशं निवारयेत्। कोऽर्थः सामानविध्ये चेद्गुणकामप्रवर्त्तनम्"॥ यासु विकृषु विधीयते तासु प्रकृतौ च समानं विधानं भवति विकृत्यन्तरेषु तु चोदकतः प्राप्तिरिति न प्रकृतितुल्यं विधानं समानविधानत्वे च प्रयोजनमग्न्याश्रितानां गुणकामानां श्येनचितं चिन्वीत स्वर्गकाम इत्यादीनान्तास्वपि विकृतिषु प्रवृत्तिः, गुणकामा हि प्रकृतमग्निमाश्रयन्ति प्रकृतश्चाग्निः प्रकृतिविकृतिसाधारणभूत इति तथाभूतस्याश्रयत्वाद्विकृतिष्वपि गुणकामप्रवृत्तिः, यासु तु विधिर्नास्ति तासु तु न गुणकामाः प्रवर्त्तन्ते "निवृत्तिर्वा कर्मभेदादि"ति न्यायात्, तदेव गुणकामप्रवृत्त्यर्थेपि कृतिषु कासुचिच्छ्रवणमिति न तद्बलेनातिदेशाभावः शक्यते कल्पितुं तस्मादस्त्यतिदेशः। अत्र केचिदाहुः अनारभ्याधीतोऽग्निः प्राकरणिकोत्तरवेदिविरोधात्प्रकृतौ न लभते निवेशम्। अप्राकृतश्च न विकृतिष्वतिदिश्यते तेनोपदेशेनैवास्य विकृतिषु प्राप्तिरित्यनुपदेशतः षोडशिवाजपेययोर्नाग्निश्चेतव्य इति, तदयुक्तम् अग्निष्टोमवाक्येन प्रकृतावपि विधानात् न विकृत्यग्निष्टोमाभिप्रायं तद्भविष्यति प्रकृतौ प्राकरणिकोत्तरवेदिविरोधात् न प्रकरणेन वाक्यसङ्कोचो युक्तः। किं च प्रकृतेरेवाग्निष्टोमत्वमनन्यापेक्षं विकृतीनां त्वतिदेशापेक्षमिति प्रकृतिरेवानेनाभिधीयते। न चात्र साप्तदश्यन्यायः, साप्तदश्यस्य हि सामिधेनीमात्रसम्बन्धो वाक्येनावगम्यते क्रतुसम्बन्धः कल्पयितव्यः, पाञ्चदश्यस्य तु प्रकरणेन सम्बन्धः क्लृप्त इति युक्तं बलाबलम्। अग्निष्टोमशब्दस्तु क्रतुमेवाभिधत्त इति तत्सम्बन्धो वाक्यकृत इति न प्रकरणेन बाधमर्हति, तस्मादस्ति प्रकृतावग्निरिति विकृतिष्वप्यतिदिश्यते तत्र साद्यस्क्रेषु सारस्वतेषु च सत्रेष्वशक्यत्वात् काममग्निर्न चीयतां षोडशिवाजपेययोस्तु चेतव्यः॥

उपस्तरणाभिघारणाभ्यां सहैव चतुरवदानाधिकरणम्।

सू० उत्पत्तिनादर्थ्याच्चतुरवत्तं प्रधानस्य होमसंयोगादधिकमाज्यमतुल्यत्वं लोकवदुपपत्तेर्गुणभूतत्वात् ॥ १२ ॥

दर्शपूर्णमासयो "रुपस्तृणाति द्विर्हविषो ऽवद्यति अभिघारयती"ति विधाय श्रूयते चतुरवत्तं जुहोतीति तत्र संशयः किं चतुरवत्तहोमे हविष एव चतुरवदानमुपस्तरणाभिघारणे त्वधिके द्व्यवदानं च पक्षान्तरम्? उतोपस्तरणाभिघारणाभ्यां सह चतुरवत्तं हविषो नित्यं द्विरेवावदान?मिति, तत्र "द्वितीयासंयोगाच्चतुःखण्डनसंस्कृतम्। होतव्यं हविषस्माद्धोतव्यात्खण्डनं चतुः" ॥ चतुरवत्तमिति द्वितीयानिर्देशाद्धोतव्यमेव चतुरवत्तं कर्त्तव्यं हविश्च होतव्यं नाज्यं तस्माद्धविष एव चतुरवदानम् उपस्तरणाभिघारणं त्वधिकं, न च तेनाधिकेन होमे चतुरवत्तविघातः तस्याहोतव्यत्वात्, द्व्यवदानं चतुरवदानयोर्विकल्प इति प्राप्ते ब्रूमः "चतुःसंख्यावदानस्था होमाङ्गं चोद्यते यदि। तत एवं भवेत्सा तु यथा प्राप्तानुकीर्त्यते ॥ चतुरवत्तं जुहोतीति नात्र चतुःसंख्याविशिष्टमवदानहोमानुवादेन विधीयते, होमस्याग्नेयादिवाक्यैरप्राप्तत्वेनानुवादासंभवात्, न चतुरवत्तविशिष्टहोमविधिर्गौरवात्, न चाविहितस्याङ्गत्वमतो न चतुःसंख्याहोमाङ्गं। का तर्हि वचनव्यक्तिः? यच्चतुरवत्तमित्युपस्तरणादिवाक्यकल्पितचतुरवत्तानुवादेन तत्संस्कारतया जुहोतिना त्यागदेवतोद्देशावुत्पत्तिवाक्यसिद्धावनूद्य प्रक्षेपो विधीयते उपस्तरणाभिघारणाभ्यां च सह चतुरवत्तं प्राप्तमिति यथाप्राप्तानुवादात् सहैवोपस्तरणाभिघारणाभ्यां चतुरवत्तं यद्यपि होमाङ्गतया चतुरवत्तविधिः तथाप्यवत्तमात्रं विधीयते न चतुःसंख्या वाक्यान्तरप्राप्तानुवादत्वेनापि सम्भवतो विधाने गौरवापत्तेः। यद्यपि संख्या होमाङ्गतया विधीयते तथाऽपि साधनमात्रपरिच्छेदेनाङ्गत्वोपपत्तेराज्यस्यापि च संस्कारद्वारेण होमसाधनत्वादुपस्तरणाभिघारणाभ्यां चतुरवत्तमित्याश्रीयते। एवं च द्व्यवदानस्य पाक्षिको बाधो न कल्पितो भवति ॥"

उपांशुयागेऽपि चतुरवत्तस्यावश्यकताधिकरणम् ।

सू० साप्तदश्यवन्नियम्येत ॥ १३ ॥

कृत्वा चिन्तेयं यदा चतुःसंख्या होमाङ्गतया विधीयते तदा किमाज्यद्रव्यके उपांशुयाजे चतुरवदानं कर्त्तव्यं नेति संशये चतुरवत्तं विहितं कथं सम्पादनीयमित्यपेक्षायामुपस्तरणादिप्रकारविधानात्तस्य च केवलसान्नाय्यौषधविषयत्वात्तत्रैव चतुरवदानमुपसंह्रियते, साप्तदश्यवदिति प्राप्ते उच्यते चतुरवत्तमविशेषविहितं सर्वहोमाङ्गं, न च तच्छेषत्वेनोपस्तरणादिविधिः हविःसंस्कारार्थतया तूपस्तरणाभिघारौ विहितौ ताभ्यामेव तु सान्नाय्यौषधयोश्चतुरवत्तसम्पत्तेर्न हविषश्चतुरवदीयते यत्र[1]त्वाज्यभाग उपस्तरणादि न श्रुतं तत्रान्यतः सम्पत्त्यभावाद्धविष एव चतुरवदानं परमार्थतस्तु नात्र चतुःसंख्या विधीयते अन्यपरे वाक्ये ऽनुवादत्वेनापि सम्भवन्त्यां विधानस्यान्याय्यत्वात् अतोऽवत्तानुवादेन होमविधिर्न होमाङ्गतया ऽवत्तविधिः उपांशुयाजाज्ये चतुर्गृहीतं जुहोतीति वाक्याच्चतुर्गृहीतविधिः न चतुरवत्तवाक्यात् ॥

दर्शपूर्णमासयोराग्नेयैन्द्राग्नयोरनुवादताधिकरणम् ।

सू० पुरोडाशाभ्यामित्यधिकृतानां पुरोडाशयोरुपदेशस्तच्छ्रुतित्वाद्वैश्यस्तोमवत् ॥ १४ ॥

दर्शपूर्णमासयोः श्रूयते पुरोडाशाभ्यामेवासोमयाजिनं याजयेद्यावेतावाग्नेयश्चैन्द्राग्नश्च सान्नाय्ये न तु सोमयाजिनमिति तत्र पुरोडाशाभ्यामेव सोमयाजिनमिति किमयं विधि? उतानुवाद? इति संशयः विधित्वे च बहवः पक्षाः अधिकृतोपदेश इत्येकः कर्मान्तरविधिरित्यन्यः याजनविधिरित्यन्यतरः, कालोपदेश इत्यपरः आग्नेयस्यानुवादः ऐन्द्राग्नस्य पौर्णमास्यां विधिरित्यन्यः तत्रार्थवत्त्वाद्विधिः अनुवादस्यानर्थक्यात्, तत्राधिकृतविधिः पुरोडाशाभ्यामेव सोमयाज्यधिक्रियते न सान्नाय्येनेति, असो-

[1] त्वाज्योपस्तरणादि न इति पा० ।

मयाज्येव वा ताभ्यामधिक्रियते न सोमयाजीति तदयुक्तं समस्ताभ्यां हि दर्शपूर्णमासाभ्यां चोदितं फलं न केवलाभ्यां पुरोडाशाभ्यामसोमयाजिन उत्पत्तुमर्हति, नापि नित्ययोः पुरोडाशयोरनित्यमसोमयाजिनं प्रति सम्भवति विधिः, तस्मात्कर्मान्तरे एते विधीयेते । नैवं प्रकृतप्रत्यभिज्ञानादेवकारानर्थक्याच्च, याजनविधिस्तर्हि भवतु, न फलाश्रवणात् परस्मैपदनिर्देशाच्च न फलकल्पनाऽपि शक्यते तेन कालविधिरेव ज्यायान् असोमयागकाले पुरोडाशाविति तदपि न चतुरस्रं सान्नाय्यवैकल्पिको ह्यैन्द्राग्नः सान्नाय्यं च नासोमयाजी सन्नयेदिति वचनात्सोमयागकालात्परतः प्रवर्त्तते तेन तद्वैकल्पिकस्यैन्द्राग्नस्य प्राक्कालः प्राप्त एवेति तद्विधिर्व्यर्थः, तस्माद्वाग्नेयस्य पर्वद्वयेऽपि प्राप्तत्वादनुवादः, ऐन्द्राग्नस्य त्वमावास्यायां विहितस्य पौर्णमास्यामप्राप्तस्य विधिरिति युक्तम् एवकारानर्थक्यात् समुच्चितयोश्च पुरोडाशयोरेकेन लिङ्शब्देन कस्य चिदनुवादः कस्य चिद्विधिरिति वैषम्यमयुक्तं, तस्मात्पूर्वोक्त एव कालविधिरस्तु । न च प्राप्तः कालः सान्नाय्यं ह्यसोमयाजिनोऽपि विहितं तदु सन्नयेदिति प्रागूर्ध्वञ्च सोमात्सान्नाय्यस्य काल एवेति तद्वैकल्पिकस्यैन्द्राग्नस्योभयोः प्राप्तौ सम्भवन्त्यां प्राक्काल एव नियम्यते, तन्नियमाच्च प्राक्सोमादैन्द्राग्नसान्नाय्ये विकल्पेते, पश्चात्तु सान्नाय्यमेव भवतीति युक्तः कालविधिः । नैवम् असोमयाजिनः कालो लक्ष्यते न चैतद्युक्तं तस्मात्सान्नाय्येन सोमयाजिनमित्यस्यायमर्थवादः ॥

उपांशुयाजस्य ध्रौवाज्यद्रव्यताधिकरणम् ।

सू० उपांशुयाजमन्तरा यजतीति हविर्लिङ्गाश्रुतित्वाद्यथाकामी प्रतीयेत ॥ १५ ॥

उपांशुयाजस्य द्रव्ये सन्देहः किमर्थप्राप्तं यत्किंचित्स्यादुताज्यमेव ध्रौव ? मिति तत्र विशेषाश्रवणादनियमः आज्यस्यैव नावुपांशुपौर्णमास्यां यजन्नित्यस्य कालविधिपरत्वेन द्रव्यविधावसामर्थ्यात्सर्वस्मैवा

एतदग्राय गृह्यते यद्ध्रुवायामाज्यमित्यस्य वै-शब्दोपबृहस्य वर्तमानाप-देशसरूपस्य विधिसामर्थ्याभावादिति प्राप्ते ब्रूमः यद्यपि तावद्विधिर्न स्यात्तथाऽप्यसंयुक्तोत्पन्नं ध्रौवमाज्यं प्रयोजनमपेक्षमाणमश्रुतद्रव्यकेषु प्रकृतेषु यागेषु द्रव्याकाङ्क्षिषु[1] निविशते किमुत यदा विस्पष्टं तादर्थ्यं चतुर्थीसंयुक्तं विपरिणामलब्धविधिसामर्थ्यं "सर्वस्मै वा एतदि"ति वचनमेव विद्यते तस्मात् ध्रौवाज्यमस्य द्रव्यम् ॥

उपांशुयागस्य प्रकृतदेवतानियमाधिकरणम् ।

सू॰ तद्वच्च देवतायां स्यात् ॥ १६ ॥

उपांशुयागस्यैव देवतायां सन्देहः किमर्थप्राप्ता या काचिदनियमेन स्यात्? उतास्ति कश्चिन्नियम? इति तत्र विष्णुरुपांशु यष्टव्यो जामित्वायेत्यादेरर्थवादत्वादन्यस्य च देवताविधेरदर्शनादनियम नाविहिता देवता भवति, तस्माद्देवतापक्षोऽयमुपांशुयाजविधिः प्रकरणवशाद्दर्शपूर्णमासतन्त्रगताभिरेकवाक्यतां यातीति नानियमः ॥

उपांशुयागस्य विष्णवादिदेवताकत्वपौर्णमासीकर्त्तव्यत्वयोरधिकरणम् ।

सू॰ धर्माद्वा स्यात्प्रजापतिः ॥ १७ ॥

तास्तिस्रो देवता इति स्थिते का तासामिति चिन्त्यते देवताविचारसमानहेतुकत्वाच्च कालविचारोऽपि सहैव तेन क्रियते तदयमत्र विचारः किं प्रजापतिर्देवता? उताग्निः? उत विष्णु? रमावास्यायां चोपांशु याजः? किं चोभययोः पर्वणोर्विष्णुः प्रजापतिरग्नीषोमौ च व्यवस्थितविभाषया देवताः? यदाऽमावास्यायां तदा विष्णुः, पौर्णमास्यान्तु प्रजापतिरग्नीषोमौ चेति । अथवा पौर्णमास्यामेवोपांशुयाजो विष्ण्वाद्याश्च तिस्रो देवतास्तत्रैव विकल्पन्त? इति तत्र धर्मसम्प्रतिपत्तेः प्रजापतिर्देवतेति गम्यते, स हि यत्किञ्चित्प्राजापत्यं यज्ञे क्रियते उपांश्वेव तत्क्रि-

१ द्रव्याकाङ्क्षेषु इति पा॰ ।

यत इति वचनादुपांशुधर्मो यागोऽपि चायं तद्धर्मेति प्राजापत्यत्वाध्यवसानं न प्रजापतिरुपांशुधर्मो तूष्णींभावस्तस्य धर्मः "प्रजापतिं मनसा ध्यायेदि"ति विधेः तदर्थवादस्त्वयं यत्किञ्चित्प्राजापत्यमिति, तस्मात्सम्प्रतिपत्त्यभावाच्च प्रजापतिः मुख्यत्वात्त्वग्निः स्यात्सोऽपि न, विष्णुस्तु मन्त्रवर्णात्स्यात् आग्नेयैन्द्राग्नयाज्यानुवाक्यायुगलयोर्मध्ये वैष्णवं याज्यानुयुगलमाम्नातं यागश्चायं पुरोडाशद्वयमध्ये विहित इति स्थानसामान्याद्वैष्णवमन्त्रद्वयमस्याङ्गं भवद्विष्णुं देवतां परिकल्पयति, आग्नेयैन्द्राग्नमध्यवर्तित्वाच्च मन्त्रयोरमावास्याकालत्वावगमादविशेषविहितोऽपि यागो मन्त्रवशादमावास्याकाल इति निश्चीयते सत्यं, मान्त्रवर्णिकी देवता न तु विष्णुरेव मन्त्रवशादेव तु तिस्रोऽपि देवता व्यवस्थितविकल्पेन स्युरुभयोश्च पर्वणोरुपांशुयाजः स्यात्, तथा हि जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशानुपांशुयाजमन्तरा यजत्यजामित्वायेत्यविशेषेण पुरोडाशद्वयोपलक्षिते काले विधानादुभयोश्चपर्वणोः पुरोडाशद्वयसम्भवादुभयत्रोपांशुयाजः स्यात्। नन्वमावास्यायां जामितादोषः पाक्षिकः सोमयाजिनः ऐन्द्राग्नाभावात्तुल्यं पौर्णमास्यामपि पाक्षिकत्वम्। असोमयाजिनोऽग्नीषोमीयाभावात्, तस्मात्पाक्षिकेणैव जामित्वोपनयेनोभयत्रार्थवाद इत्युभयत्राप्युपांशुयाजः स्यात् तत्र तावद् ब्रूतामेग्नीषोमावाज्यस्यैव ना वुपांशुपौर्णमास्यां यजन्नित्यनेन वचनेन पौर्णमासी कालवर्तिनोऽग्नीषोम देवताविधानान्मन्त्रवर्णाच्च स्यातामग्नीषोमौ प्रजापतिश्च मन्त्रवर्णात्स्यात् आग्नेयाग्नीषोमीययाज्यानुवाक्यामध्ये तैत्तिरीयाणां प्राजापत्ययाज्यानुवाक्याम्नानात् विष्णुस्तु पूर्वोक्तेन न्यायेनामावास्यायां स्यादिति प्राप्ते ब्रूमः "विष्ण्वाद्या देवताः सत्यं मन्त्रवर्णाद्विकल्पतः। न तु कालद्वये यागः पौर्णमास्यान्तु वाक्यतः"॥ उपांशुपौर्णमास्यां यजन्नित्यनेन प्रत्यक्षवचनेन पौर्णमासीविधानात्पौर्णमास्यामेव स्यात् कालविधानं ह्येतत् न देवताविधानं मन्त्रवर्णादेव देवतानां लब्धत्वात् पौर्णमासीकालविशिष्टयागानुवादेन च देवताविधौ विशिष्टानुवाददोषापत्तेः, तस्मादुपांशुयाजानुवादेन कालविधानमेतत्, अग्नीषोमग्रहणं तु मान्त्रवर्णिकीनां देवतानामुपलक्षणार्थं। ये त्वाश्वलायनाः

कालविधिमनिच्छन्तः पर्वद्वयेऽप्युपांशुयाजमाहुः ते कथमिव त्रयोदशामावास्यायामिति लिङ्गं समर्थयेरन्, कालविध्यभावे च पौर्णमासीवाक्येनानुवादसम्भवात् पूर्णमास–शब्देनापि न फले विनियुज्येतेति प्राधान्यमुपांशुयाजस्य न स्यात्, आज्यभागादिवदङ्गता स्यादित्यास्तां तावत् तस्मात्पौर्णमासीकालस्य वाचनिकत्वात्प्रधानानुवर्तित्वाच्च देवतानां तिसृणामपि तत्रैव विकल्पः ॥

एकपुरोडाशायामप्युपांशुयाजाधिकरणम् ।

सू० द्विपुरोडाशायां स्या[1]दन्तरालार्थत्वात् ॥ १८ ॥

पौर्णमास्यामेवोपांशुयाज इति स्थिते चिन्त्यते किं द्विपुरोडाशायामेव स्यात्, ? उतैकपुरोडाशायामपी ? ति तत्रैकपुरोडाशायामन्तरालगुणालाभेन वैगुण्यात् द्विपुरोडाशायामेव स्यात्, सिद्धान्त्येकदेशी त्वाह यागस्याविशेषेण श्रवणादुभयत्रानुष्ठानं, गुणस्तु यदा द्विपुरोडाशा तदा भविष्यतीति तदयुक्तं विधीयमान एव यागोऽन्तरालकालगुणविशिष्टो विधीयते अनुपादेयश्चान्तरालगुणः, तेन यत्रैवायङ्गुणस्तत्रैवास्य विधिरितरत्र तु विधिरेव नास्तीत्यकर्त्तव्य एवेति प्राप्ते विधीयते "स्यादेवमन्तरालस्य गुणत्वे न विधिर्यदि । कालो विधीयते, त्वत्र पुरोडाशोपलक्षितः अन्यार्थाभ्यां हि पुरोडाशाभ्यामुपलक्षिते काले कर्म विधीयते योऽयम्पुरोडाशयोर्मध्यकालस्तत्रोपांशुयाज इति सर्वत्र चोपलक्षणापायेऽपि उपलक्षणीयमवतिष्ठते शङ्खवेलायामागन्तव्यमित्यादौ तेन कर्माङ्गभूतस्य कालस्यैकपुरोडाशायामपि लाभात्तत्राप्युपांशुयाजो न बाधितव्यः, तदेवं लुप्तार्थं, यदपि च निषिद्धं विकृतिषु । तथा प्रत्याम्नातं त्रिविधमिह बाध्यं व्यवसितम् । अतस्त्वन्यस्याभ्युच्चयविधिरियत्तेव मुदिता प्रयोगेयत्तायास्त्वत उपरि चिन्तां प्रकुरुते ॥

इति श्रीपार्थसारथिमिश्रकृतौ शास्त्रदीपिकायामष्टमः पादः समाप्तिमितः, दशमोऽध्यायश्च समाप्तः ॥

---

[1] द्विपुरोडाशायां स्यादन्तरार्थत्वादिति पाठान्तरम् १८ ।

# अथ एकादशाध्यायस्य प्रथमः पाद आरभ्यते ।

आग्नेयादीनां समुदितानां तन्त्रेण स्वर्गफलकत्वाधिकरणम् ।

सू० प्रयोजनाभिसंबन्धात्पृथक् सतां ततः स्यादैककर्म्यमेकशब्दाभिसंयोगात् ॥ १ ॥

दशमेऽध्याये बाधाभ्युच्चयचिन्तया विकृतिष्वङ्गपरिमाणं चिन्तितम्, अतिदेशविचारश्च सप्तमादिभिर्दशमपर्यन्तैः समाप्तः । संप्रत्युपदेशातिदेशसाधारण्येन प्रयोगपरिमाणं परिमाणप्रसङ्गादेकादशे तन्त्रावापचिन्तया चिन्त्यते, उपदिष्टातिदिष्टपदार्थयत्तावधारणाधीनं प्रयोगेयत्ताऽवधारणमिति तदुत्तरकालमारम्भः, तदिहैकप्रयोगवचनचोदितानाम् एकफलानां संहत्यकारिणां बहूनां कर्मणां साधारणाङ्गभाजामङ्गानुष्ठानं किं तन्त्रेण भवत्युतावृत्त्ये? ति चिन्ता लक्षणार्थः, प्रथमं तावदुपोद्घातत्वेन संहत्यकारित्वं प्रतिपाद्यते, यदि ह्याग्नेयादयः षडपि परस्परानपेक्षाः स्वर्गं साधयेयुस्ततस्तेषां कामिनः कर्त्तव्यत्वेन युगपदुपस्थानाभावात्पृथक्पृथगेव स्वाङ्गयुक्ताः कर्त्तव्या इति न तन्त्रत्वं सिद्ध्येत्, तस्मात्संहत्यकारित्वं प्रतिपाद्यते, तदयमत्राधिकरणे विचारः किमाग्नेयादीनि पृथक् पृथक् स्वर्गं साधयन्ति? उत संहत्ये? ति तत्र, "परस्परानपेक्षाणामुत्पन्नानां फलार्थिनाम् । चोद्यमानं फलन्तेषामेकैकस्यावधार्यते ॥१॥ तेषां ह्युद्दिश्यमानत्वात्साहित्यमविवक्षितम् । तस्मात्प्रत्येकमेव स्यादिति प्राप्ते ऽभिधीयते ॥ २॥ आग्नेयादिकमुद्दिश्य फलं यद्युपदिश्यते । तत उद्दिश्यमानत्वात्तेषामेकैकशः फलम् ॥ ३ ॥ कामिनन्तु यदोद्दिश्य कर्मणां चोदनात्तदा । तेषां विधीयमानां सहभावो विवक्षितः ॥ ४ ॥ यद्यपि चोभयथा वचनव्यक्तिः सम्भवति तथाऽपि द्वित्वावगतं दर्श–शब्देन च त्रिकस्य पूर्णमास–शब्देन च त्रिकस्य तन्त्राभिधानावगतं च साहित्यं मा बाधीति कामिनमेवोपा[१]र्यार्थिनं नरमुद्दिश्याग्नेयादीनि विधीयन्त इत्येतदेव युक्तं, प्रधानत्वाच्च फलस्यैवोद्देशो

१ - कामिनमेव स्वर्गार्थिनमिति, पाठान्तरम् ।

युक्तो न कर्मणां गुणभूतानामेकस्मिन्नपि का[1]ले संहत्य कारित्वेन विनि-
युक्तानां कर्मणां प्रत्येकमप्युत्पन्नानां फलापेक्षा निवर्तत इति नानपेक्षि-
तसम्बन्धापत्तिः, तस्मात्फलोद्देशेन विधीयमानानां विवक्षितं साहित्य-
मिति सिद्धं संहत्यकारित्वम् । यत्तु भाष्यकारेण पुरुषपरत्वं कालपरत्वं
निमित्तपरत्वं च निराकृत्य फलपरत्वं च कामपदस्य समर्थितं तदिहा-
सूत्रितमपि सूत्रितविच.रस्योपोद्घातत्वेन सति हि तस्य फलपरत्वे किं
प्रत्येकं फलम्? उत सहत्ये? ति विचारो नान्यथेति । स्वर्गकामादिकरणे
तु स्वर्गस्य तत्कामनायाश्चाङ्गत्वेन विधानं निराकृतमित्यपुनरुक्तता ॥

अङ्गानामेककार्याधिकरणम् ।

सू० अङ्गानान्तु शब्दभेदात्क्रतुवत्स्यात् फलान्यत्वम् ॥ २ ॥

अतः प्रभृति षड्भिः सूत्रैरेकमधिकरणम् एकेनापि समाप्येतेत्यतः
प्रभृति च नवभिः सूत्रैर[ि]धिकरणान्तरं भाष्यकारेण व्याख्यातमिति प्रतिभाति
तत्र च पूर्वाधिकरणे अङ्गानां [का]र्यभेदं पूर्वपक्षीकृत्यैकैककार्यत्वं सिद्धान्ति-
तम्। उत्तराधिकरणे तु तस्मिन्नेकस्मिन्कार्ये विकल्पमाशङ्क्य समुच्चयः प्रति-
पाद्यत इति व्याचष्टे तदिदं वार्त्तिककारो नानुमेने, न हि कार्यभेदाभेद-
मात्रचिन्ता प्रयोजनवती । भेदे सति कार्याणां कारकवदङ्गानां समुच्चयः
कार्यैक्येऽप्यपर्यायविधानात्समुच्चय इति नास्त्यनुष्ठाने विशेषः औपोद्घा-
तिकमिदं, सति हि कार्यैक्ये विकल्पसमुच्चयाविति चेत् तथाऽपि ना-
स्त्येव प्रयोजनं करणैकत्वाद्धि तत्साम[2]र्थ्याद्बोधनरूपस्योपकारस्य स्पष्टमे-
वैकत्वम्, अवान्तरकार्यभेदस्तु सिद्धान्तेऽपि सम्मत एवेति न चिन्तनीयं
पश्यामः । अथ शक्त्युद्बोधनस्यावान्तरकार्याणां च मध्ये किं चिदुपकाराख्यं
वस्तु मन्यसे तदप्रमाणकं निष्प्रयोजनं च शक्त्युद्बोधन एव विकल्पसमु-
च्चयचिन्तोपपत्तेः, तस्मादेकमेवेदं पञ्चदशसूत्रं समुच्चयप्रतिपादनार्थम-
धिकरणं, त्रयश्चेह पक्षाः किमङ्गानामितरेतरनिरपेक्षाणां क्रतूपकार-

१ एकस्मिन्नपि फले इति पाठान्तरम् ।

२ तत्सामर्थ्याद्बोधनरूपस्येति पा० ।

कतया विकल्प? उतैकेन द्वाभ्यां बहुभिश्चोपकारसिद्धेरुपकारभूयस्तया च फलभूयस्त्वम्? उत समुच्चितानामेवोपकारकत्व?मिति तदर्थमिदं चिन्त्यन्ते किमङ्गानामात्मीयैर्विधिभिः प्रयोगोऽभिधीयते? किं वा प्रधानविधिभिरिति? "प्रधानान्येकशब्देन तन्त्रेणाभिहितानि युगपत्फले विनियुक्तानि युक्तं यत्फले समुच्चीयन्ते, अङ्गानि तु पृथक्शब्देनाभिहितानि पृथगेव विहितानि फलमपेक्षमाणान्यन्योन्यनिरपेक्षाण्येव क्रतूपकारार्थतया विनियुक्तानि विकल्पितुमर्हन्ति, तेषां हि स्ववाक्यैरेव विधानमसति विधानेऽङ्गत्वानुपपत्तेः, उक्तं हि "न चाविहितमङ्गं भवती"ति, स्ववाक्यानि च तेषामेकैकमेव विदधतीति कुतः समुच्चयः, न हि कश्चिच्छब्दोऽस्ति येनैषां सहितानामनुष्ठानमुच्यते तस्माद्यथा सत्यपशुफलत्वे चित्रोद्भिदादीनां पृथग्विधानादसमुच्चयः तथाऽङ्गानामपीति प्रथमः पक्षः, सत्यं, निरपेक्षाणामुपकारकत्वं गम्यते तथाऽपि बह्वङ्गज्ञानसामर्थ्याद्विकल्पस्य चान्याय्यत्वात्तेषामेकमपि प्रयुञ्जीत तथा द्वे तथा बहूनि च अङ्गभूयस्तया चोपकारभूयस्त्वात्फलभूयस्त्वमिति द्वितीयः, स चैकेनापि समाप्येतेत्यनेन सूत्रेणोच्यते पक्षान्तरमेव चाधिकरणान्तरमिव भाष्ये दर्शितम् । अधिकरणान्तरत्वे त्वनेनैव सूत्रेण विकल्पपक्षो वक्तव्यः स्यात्, न चानेन विकल्प उच्यते प्राप्तेषु चोत्तरावत् स्यादिति समुच्चयस्याप्यभ्यनुज्ञानात्, तस्मान्नाधिकरणान्तरम् ॥ सिद्धान्तस्तु युक्तं चित्रादीनां नैरपेक्ष्यं तेषु हि प्रतिवाक्यं भेदेन कामपदं श्रूयते, समिदादिषु तु यद्यपि "प्रतिवाक्यं विधिश्रवणात्फलापेक्षोपजायते। फलं तु न प्रतिवाक्यं श्रूयते प्रधानभावनया ह्येषां फलाकाङ्क्षाणां कथंभावाकाङ्क्षिण्या सहेत्थं भावेन सम्बन्धः, सा च सकृदुपात्ता सर्वैरङ्गैरुद्यमाणविशेषैर्विशिष्टा युगपत्प्रधानविधिना विधीयत इति सिद्धः समुच्चयः। यद्यपि च प्रत्येकं विधिः श्रूयते तथाऽप्यंशत्रयालाभादसावुदास्ते ॥ भाव्यांशस्तु विध्यवगमबलादेव पुरुषार्थरूपोऽपेक्ष्यते, एतावानेव च तत्र विधेरुपयोगः तदभावे धात्वर्थ एव भाव्यांशे निपतेत्तस्यां च फलापेक्षायां प्रकृतभावनया युगपत्सम्बन्धात्तस्याश्च सर्वाङ्गविशिष्टाया

युगपत्प्रधानविधिना विधानादङ्गानामपि तत एवानुष्ठानसिद्धेस्तस्मिन्नंशेऽङ्गविधीनामनुवादकत्वं सर्वविशिष्टविधानाच्च समुच्चयः ॥

काम्यकर्मणां भूयोऽभ्यासाधिकरणम् ।

सू० कर्मण्यारम्भभाव्यत्वात्कृषिवत्प्रत्यारम्भं फलानि स्युः ॥ ३ ॥

काम्यानां कर्मणामैन्द्राग्नसौर्यादीनां किं सकृदेव प्रयोगः ? उत भूयोभूयः फलमिच्छता भूयोऽपि प्रयोग? इति सन्देहे सकृदिति ब्रूमः कर्मणां हि फलं कालान्तरे जननीयं तच्च द्वारमपेक्षते तच्चात्यन्तमदृष्टमपूर्वं तस्य च कर्मजत्वं फलहेतुत्वं स्थायित्वं चेत्यनेककल्पनाद्वरं कृतयागादात्मनः फलमिति कल्पितम्, आत्मनो हि सद्भावः स्थिरत्वं कर्मसम्बन्धश्च क्लृप्तः, केवलं तु फलहेतुत्वं कल्पनीयम् अतः कृतयागादात्मनः फलं सकृत्प्रयोगादेव चासौ कृतयागो जातः, पुनरपि प्रयुञ्जानस्य तस्य तावत्येव तु कृतयागता न तस्य कश्चिदतिशय इति अनर्थकः पुनः प्रयोगः, सकृदेव प्रयोग इति प्राप्ते ब्रूमः । "आत्मन्यतिशयः कश्चित्कृते कर्मणि नैव चेत् प्रागवस्थासमानत्वादात्मनो न भवेत्फलम् ॥ आत्मस्वरूपहेतुत्वे ह्यकर्त्तुरपि तद्भवेत् । तस्मादतिशयः कश्चित्कर्मभ्यो जायते नरे ॥ २ ॥ स च कार्यविरोधित्वात्स्वफलाप्तेर्विनश्यति । फलान्तरार्थं कर्त्तव्यं तस्मादतिशयान्तरम् ॥ ३ ॥ स एवातिशयोऽस्माभिरपूर्वमिति गीयते । तस्माद् भूयः प्रयोक्तव्यं पुनः फलमभीप्सता ॥ ५ ॥ कर्मभ्यः फलसिद्धिप्रकारे विकल्पसमुच्चयरूपे चिन्तिते बहुफलसिद्धिप्रकारः सकृदसकृद्रूपश्चिन्त्यत इति सङ्गतिः ॥

अवघातादीनामातण्डुलनिर्वृत्तेरभ्यासाधिकरणम् ।

सू० क्रियाणामर्थशेष[१]त्वात्प्रत्येकं तन्निर्वृत्त्याऽपवर्गः स्यात् ॥ ४ ॥

दर्शपूर्णमासयोः श्रुतं "व्रीहीनवहन्ती"ति तत्र संशयः किं सकृदेवोद्यमननिपातने कृत्वोपरन्तव्यम्? उत यावत्तण्डुलनिष्पत्ति प्रयोक्तव्यमिति? तत्रोद्यमननिपातनमात्रस्य शब्दार्थत्वात्तन्मात्रं विधीयते, विहितस्य च प्रयोजनकल्पनमित्यसत्यपि दृष्टेऽवघातमात्रमदृष्टार्थं कर्त्तव्यं सर्वोपधाव-

१ क्रियामर्थशेषत्वात् प्रत्यक्षोऽतस्तन्निवृत्त्याऽपवर्गः स्यात् इति तु पुस्तकान्तरपाठः ॥

हन्तिवत्स्यादेवं यद्यवघातं कुर्यादिति विधीयेत, अवघातेन तु समीहितं साधयेदिति विधिः, समीहितं च दृष्टे सम्भवति नादृष्टं कल्पयितव्यं, सम्भवति चेह क्रत्वपेक्षिततण्डुलनिर्वृत्त्यर्थताऽवघातस्येति तदेव प्रयोजनं, तच्चानभ्यस्तेनाशक्यमिति प्रयोजनवशादश्रुतोऽप्यभ्यासः कर्त्तव्यः सर्वौषधावघाते तु दृष्टार्थासम्भवाददृष्टार्थं शब्दार्थमात्रं कर्त्तव्यं सकृदसकृद्विचारप्रसङ्गात्सङ्गतिः, एवमुत्तरत्रापि ॥

प्रयाजादीनामङ्गानां सकृदनुष्ठानाधिकरणम्। सू० क्रतुवद्वाऽनुमानेनाभ्यासे फलभूमा स्यात् ॥ ५ ॥

फलभूमार्थिना कर्माणि पुनः पुनः प्रयोक्तव्यानीति स्थिते चिन्त्यते किमेकस्मिन्प्रयोगेऽङ्गानि पुनः पुनः प्रयुञ्जानस्य फलभूयस्त्वं भवति ने? ति तत्राभ्यस्यमानान्यङ्गानि बहूनुपकारान् जनयन्ति, बहूपकारयुक्तं च प्रधानं फलभूयस्त्वाय भवतीति मन्वानस्योत्तरं समग्रकारणावृत्त्या हि कार्यमावर्त्तते प्रधानं च साङ्गं फलसामग्री नाङ्गमात्रम्, अतस्तन्मात्रावृत्त्या न भूयः फललाभः, न चोपकारभूयस्तया फलभूयस्त्वं प्रमाणाभावान्न चात्राङ्गाभ्यासः शास्त्रीयः, न चाशास्त्रीयेण प्रयासगौरवेण फलभूमा शक्यते कल्पयितुम्, अतः फलभूमार्थिना साङ्गं प्रधानमभ्यसितव्यं नाङ्गमात्रं, नापि प्रधानमात्रम् ॥

कपिञ्जलानिति बहुवचनस्य त्रित्वपरत्वाधिकरणम्। सू० बहुवचनेन सर्वप्राप्तेर्विकल्पः स्यात् ॥ ६ ॥

"वसन्ताय कपिञ्जलानालभते"इत्यादिषु बहुवचनेषु किं त्रयाणामेवालम्भः? उत त्रिप्रभृतीनामसंख्याना? मिति संदेहे बहुवचनस्य सर्वत्र वृत्तेः सर्वसंख्यानां शास्त्रार्थत्वं शास्त्रीयाच्च प्रयासगौरवात्फलभूयस्त्वमविवादमतो यावदुत्साहं नानासंख्योपादानं नैतदेवं बहुत्वमात्रं हि शब्दार्थः न तु षट् देया द्वादश देयेत्यादिवत्संख्याविशेषाणां भेदेन शास्त्रमस्ति यद्बलात्फलभूयस्त्वं कल्प्यते यो हि त्रीनालभते यश्च सहस्रं तयोरुभयोरपि बहुत्वसंपादनमविशिष्टं, यत्तु विशिष्यते सहस्रादि तदशास्त्रीयं, न चाशास्त्रीयं गौरवं फलभूयस्त्वं कल्पयितुमलम्, एवं च त्रीननालभ्य चतुर्णामालम्भासम्भवात् अवश्यं त्रय आलब्धव्याः, तावता च

सिद्धे शास्त्रार्थेनाधिकालम्भं [1]तावच्छास्त्रं कल्पयति निवृत्तव्यापारे च विधौ न हिंस्यादिति निषेधशास्त्रं प्रवर्त्तते इत्यधिकानालम्भः ॥

'उत्तरा दोहयति' इत्यत्र सर्वासां गवां दोहनविधानाधिकरणम् ।

सू० उत्तरासु तु यावत्स्वमपूर्वत्वात् ॥ ७ ॥

सान्नाय्य दोहाधिकारे श्रूयते "वाग्यतस्तिस्रो दोहयित्वा विसृष्टवागन्वारभ्य तूष्णीमुत्तरा दोहयती"ति, तत्र किमुत्तरासान्तिसृणामेव दोह? उत यावत्यो यजमानस्य गावस्तासां सर्वासामि? ति संदेहे पूर्वत्रतिसृणामेव न च यावत्स्वं दोहनं साक्षात्केनचिद्विहितं येन सर्वासां दोहनं स्यात् येन चोत्तरा दोहयतीत्यनुवादः स्यात्, अतो विधिरेवायमिति तिसृणामेव दोहः । मैवं "नास्ये तां रात्रिं कुमारा अपि पयोलभेर"न्नित्यनेन वचनेन कृत्स्नस्यापि पयसो हविष्ट्ववचनात्प्राप्तमेव सर्वासां दोहनं, न हीदं कुमाराणां पयःप्रदानप्रतिषेधपरम् अदृष्टार्थत्वप्रसङ्गात्, अपि-शब्दानर्थक्यप्रसङ्गाच्च, तस्मात्सर्वासां दोहः ॥

आग्नेयादीनां प्रधानानां भेदेऽप्याधारादीनामङ्गानां तन्त्रेणानुष्ठानाधिकरणम् ।

सू० प्रधानकर्मार्थत्वादङ्गानान्तद्भेदात्कर्मभेदः प्रयोगे स्यात् ॥ ८ ॥

उपोद्घातप्रसक्तानुप्रसक्तादि गतम्, इदानीं लक्षणार्थं तन्त्रावापं विचारयामः, दर्शपूर्णमासयोः षट् प्रधानकर्माणि पौर्णमास्यां त्रीणि अमावास्यायां च त्रीणीति तत्र देशकालकर्तॄणां तन्त्रत्वं वक्ष्यते तेनैकस्यामेव पौर्णमास्याम् एकस्मिन्नेव देशे तैरेव कर्तृभिस्त्रीण्यप्याग्नेयादीनि तदङ्गानि च कर्त्तव्यानीति स्थिते चिन्त्यते किं त्रयाणामप्याग्नेयादीनां प्रधानानां भेदेन प्रयाजाद्यङ्गानि कर्त्तव्यान्युत सकृदेवे? ति तत्र "भेदेन विनियुक्तत्वात् भेदेनैव क्रिया भवेत् । कथंभावस्य भिन्नत्वाद्भेदेन विनियोगधीः ॥ षडप्याग्नेयादिभावनाः साध्यसाधनांशयुक्ता उत्पत्तिप्रयोगवाक्याभ्यामवगताः परस्परानपेक्षा एव कथमितीत्थंभावं भेदेनैवापेक्षन्ते । तद्वशाच्च सन्निधिसमाम्नातान्यङ्गानि प्रत्येकमेव तासु विनियुज्यन्ते विनियोगानुसारेण

[1] तावता च सिद्धे शास्त्रार्थे नाधिकालम्भता यच्छास्त्रं कल्पयति इति पा० ।

चानुष्ठानं, तस्मादेकैकं स्वाङ्गयुक्तं कर्त्तव्यमिति प्रत्येकं साङ्गं कृत्वा अपरमपि तथैव कर्त्तव्यमिति प्राप्ते ब्रूमः। "सत्यं प्रत्येकमङ्गानां विनियोगस्तथापि तु । विधानवदनुष्ठानं सकृदेवोपकारकम् ॥ यथैव हि षट्सु भावनासु अंशविशिष्टासु विधित्सितासु साध्यसाधनांशप्रतिपादनेन प्रकृतासु प्रक्रान्तासु तृतीयमंशं कथंभावभेदेनैवापेक्षमाणास्वपि साध्यसाधनांशप्रतिपादने त्वनुप्रक्रान्तासु तृतीयमंशं कथंभावं भेदेनैवापेक्षमाणासु अपि सकृदाम्नाता एवाङ्गविधयः षण्णामपि प्रत्येकमङ्गानि समर्पयन्ति, सत्यपि च कस्यचित्प्रधानोत्पत्तिविधिसंनिधौ प्रकरणवशेन सन्निधिर्बाध्यते तथैव संहतानाम्प्रधानानां फलसाधनत्वात्कर्तृदेशकालैक्याच्च युगपत्सर्वेष्वनुष्ठातुं प्रारब्धेषु सकृत्कृतमेवाङ्गं सर्वचिकीर्षया कृतत्वात्सन्तमपि केन चित्सन्निधिं बाधित्वाऽनुष्ठानक्रियाप्रारम्भाख्यप्रकरणवशेन सर्वार्थं भवतीति न पुनः क्रियायां प्रयोजनमस्ति। किं च पौर्णमास्यां पौर्णमास्या यजेतेति युगपदनुष्ठानं त्रयाणामवगतं पृथक् पृथक् स्वाङ्गेषु अनुष्ठीयमानेषु बाध्येत । तस्मादेकदेशकालकर्तृकाणां तन्त्रमङ्गानीति सिद्धम् ॥

कृष्णग्रीवयोः प्रथमतृतीययोभेदेन प्रदानाधिकरणम् ।

सू० व्याख्यातं तुल्यकालानां यौगपद्यमगृह्यमाणविशेषाणाम् ॥ ९ ॥

"आग्नेयं कृष्णग्रीवमालभेत सौम्यं बभ्रुम् आग्नेयं कृष्णग्रीवं पुरोधायां स्पर्द्धमान इति श्रुतं[1] तत्राग्नेययोरनुष्ठानं तन्त्रं पृथग्वेति संशये तन्त्रमिति ब्रूमः, भवति हि तन्त्रेणानुष्ठानं देवतैक्यात्, न च पाठक्रमानुष्ठानम्, अवश्यं भाविनि हि क्रमे पाठान्नियमः सम्भवति चेह सकृदनुष्ठानमिति न क्रमापेक्षा तस्मात्तन्त्रं नैवं यद्यप्याग्नेययोस्तन्त्रता सम्भाव्येत तथापि सौम्येन तद्वदवश्यं भावी क्रमः तत्र पाठवशादेकस्याग्नेयस्य सौम्यात्पूर्वमनुष्ठानमितरस्य ततः पश्चात्सहानुष्ठाने ऽवश्यं भाव्यन्यतरस्य सौम्येन यः क्रमः स बाध्येत, तस्मात्पृथगेवानुष्ठानम् ॥

इति श्रीपार्थसारथिकृतशास्त्रदीपिकायामेकादशस्य प्रथमः पादः समाप्तः ॥ १ ॥

[1] काम्यपशुकाण्डे इति शेष इति पुस्तकान्तरेऽधिकः पाठः ।

## अथैकादशस्य द्वितीयः पाद आरभ्यते ॥

आग्नेयादीनां प्रधानानां तन्त्राधिकरणम् ।

सू० एकदेशकालकर्तृत्वं मुख्यानामेकशब्दोपदेशात्स्यात् ॥ १ ॥

दर्शपूर्णमासयोर्देशः "समे दर्शपूर्णमासाभ्यां यजेते"ति, कालः "पौर्णमास्यां पौर्णमास्यां यजेत अमावास्यायाममावास्यया यजेते"ति, कर्त्तारो दर्शपूर्णमासयोश्चत्वारः ऋत्विज इति, किमेते देशकालकर्त्तारस्तन्त्रम्? उत भेदेने? ति, किं यस्मिन्नेव समे यैरेव कर्त्तृभिर्यस्यामेव पौर्णमास्याम् आग्नेयस्तस्मिन्नेव समे तैरेव कर्त्तृभिस्तस्यामेव पौर्णमास्यां तैरेव कर्त्तृभिरग्नीषोमीय? उत समान्तरे पौर्णमास्यन्तरे कर्त्रन्तरे? रिति, तदर्थमिदं विचार्यते किमुत्पत्तिवाक्यैर्यदाग्नेयोऽष्टाकपाल इत्यादिभिर्देशादिविधीनां सम्बन्धः? उत फलवाक्येन दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति, तत्र "कर्मरूपेण सम्बन्धो देशादीनां फलस्य च । उत्पत्तिविधिनैवातः सर्वेषामेकवाक्यता ॥ त्रयाणामपि ह्यंशानां भावनयैव सम्बन्धो न परस्परम् अतो देशादिविधीनां फलवाक्यस्य च न मिथःसम्बन्धः किन्तु फलवाक्यं देशादिवाक्यानि च सर्वाणि भावनोत्पत्तिवाक्येन सम्बध्यन्ते उत्पत्तिवाक्येषु चाग्नेयादयोऽन्योन्यनिरपेक्षा एवावगता इति तथाभूतैः सम्बध्यमाना देशादयो निरपेक्षाणामेव भवन्ति, इति निरपेक्षोत्पन्ना अपि देशादिविधिषु पौर्णमास्यादिशब्दैस्तन्त्रोक्ताः सहैवावगता इति साहित्येनैव फलसम्बन्धवद्देशादिसम्बन्धः कस्मान्न भवतीति चेत् न, विषम उपन्यासः फलं प्रति गुणभूतानां युक्ता तन्त्राभिधानावगतसाहित्यविवक्षा देशादींस्तु प्रति कर्मणां प्राधान्यादविवक्षितं साहित्यं, तस्माद्यथा"य इष्ट्वा पशुना सोमेन वा यजेत सोऽमावास्यायां पौर्णमास्यां चेत्यस्मिन्वाक्ये तन्त्राभिहिताभिरपीष्टिभिः प्रत्येकमेव कालः सम्बध्यते इति नैकस्यामेव पौर्णमास्यां सर्वाः क्रियन्ते तथाऽग्नेयादिभिः प्रत्येकमेव कालादीनां सम्बन्धादेकस्यां पौर्णमास्याम् आग्नेयं कृत्वा अपरस्यामग्नीषोमीय इत्येवं षट्सु पर्वसु षड् यागाः क-

र्त्तव्याः । न चैवं फलवाक्यावगतसाहित्यबाधस्तत्र ह्येतावदधिगतम् एकमेव फलं सर्वैः साध्यते न प्रत्येकं फलस्य पृथक् निष्पत्तिरिति न तस्य कालभेदाद्बाधः। यथा पौर्णमासीत्रिके अमावास्यात्रिके च द्वयोः पर्वणोः निष्कृष्यमाणेऽपि न फलं प्रति साहित्यबाधस्तथा त्रयाणामपि निष्कर्षे द्रष्टव्यं, यदा चैवमुत्पत्तिवाक्यशेषत्वं कालादीनां तदोत्पत्तिवाक्ये प्रधानमात्राणां निरङ्गानां विधानात्तन्मात्राणामेवामी कालादयो नाङ्गानां प्रधानदेशकालकर्तृकत्वं तानि तु कामं कालान्तरादिष्वपि कर्त्तव्यानीति प्राप्ते ब्रूमः "भावनोत्पत्तिवेलायां देशादिविधयो यदि । तत[1] एवं भवेत्ते तु फलवद्भावनाश्रयाः" । यद्यपि भावनयैवाङ्गानां सम्बन्धो न परस्परं तथाऽपि नोत्पत्तिवेलायामङ्गसम्बन्धः सा हि प्रथमं भाव्यमपेक्षते तल्लाभश्च फलवाक्ये तेन फलवाक्यावरुद्धानामुत्पत्तिवाक्यानामङ्गसम्बन्धः, फलवाक्ये च फलं प्रति विवक्षितसाहित्यानां विनियोगात्फलार्थिनां युगपत्सर्वेषु कर्त्तव्यताऽवगतिः, यस्यां हि बुद्धावाग्नेयः कर्त्तव्यतयोपस्थितः तस्यामेवाग्नीषोमीयादयोऽपि प्रयोगविध्येकवाक्यत्वात् तेन सर्वेषु कर्त्तव्यतयाऽवगतेषु चिकीर्षितेषु च पौर्णमासीकालो विहित इति यैवैका पौर्णमास्युपात्ता सैवाग्रह्यमाणविशेषत्वात्सर्वार्था भवति। तथा देशः कर्त्तारश्च तस्मात्तन्त्रम्। सौर्यादीनां पुनः पुनः पृथक् पृथक् स्वफले विनियुक्तानां पृथगेव कर्त्तव्यताऽवगमो नानाविधिविधेयत्वात्, तेन तैरन्योन्यनिरपेक्षैरेव य इष्ट्वा पशुनेत्यादिकालः सम्बध्यत इति नास्ति तन्त्रता । यदि पुनः कश्चिच्चित्राफलं सौर्यफलं च युगपदिच्छन् कर्मद्वयमपि सह चिकीर्षति किमसौ तन्त्रेणैकस्मिन्नेव काले द्वयमपि प्रयुञ्जीत? नेति ब्रूमः यदा हि विधिवेलायां साहित्यं नावगतं तदाऽनुष्ठानदशायामपि न लब्धुं शक्यते तस्मादेकेन विधिना यावन्त्यङ्गप्रधानानि विधीयन्ते तावद्भिर्यावान्कालो व्याप्यते तावत्यविक्षिप्तः समस्ताङ्गप्रधानप्रयोगः कर्त्तव्य इत्यवगमात्सहप्रयोगे च तद्विरोधात्, एकेन तु विधिना फले सह चोदितानामाग्नेयादीनामेकोपक्रमोपसंहारत्वात्तादृशैः सम्बध्यमाना देशादयो ऽगृह्यमाण-

१ तत एव भवेत्ते तु इति पाठान्तरम् ।

विशेषतया विधिवेलायामेव सर्वसम्बन्धितयाऽवगतास्तन्त्रं भवन्तीति विशेषः। यदा चैवं प्रयोगवाक्यशेषत्वं कालादीनां तदाङ्गानामपि तत्का-लत्वं सिध्यति। तथा हि साध्यसाधनांशयुक्तावगता भावना कथमितीत्थ-म्भावमपेक्षते, भावनागतश्च रूपविशेष इत्थंभावः प्रज्ञातरूपाच भावना कालादीनपेक्षते तेन प्रकारापेक्षायां भावनायान्तत्प्रकारत्वेन प्रयाजादिषु अवगतेषु सामस्त्यरूपेण भावनाख्ये व्यापारे प्रयोगापरपर्यायेऽवगते तच्छे-षत्वेन कालादयो विधीयन्त इत्यङ्गानामपि त एव देशादयो भवन्ति द्रव्यदेवतं तु पुनर्न समस्तप्रयोगसम्बन्धित्वेन विधीयते अनपेक्षितत्वात्, अयोग्यत्वाच्च, न ह्यग्न्यन्वाधानबर्हिस्तरणाद्यनुरक्तस्य प्रयोगस्य द्रव्यदेव-तापेक्षा। नापि तन्निष्पत्तौ द्रव्यदेवतापेक्षा, नापि तन्निष्पत्तौ द्रव्यदेवतं समर्थं किं तु फलभावनावयवयागरूपनिष्पादनेन द्रव्यदेवतमपेक्षितत्वा-द्योग्यत्वाच्च सम्बध्यते, तस्माच प्रधानसम्बन्धिद्रव्यदेवतमङ्गानां भवति। कालादयस्त्वाग्नेयादिकरणिकया भावनया समग्ररूपया सम्बध्यमानास्त-दन्तर्गतानामङ्गानामपि भवन्तीति विशेषः॥

दर्शपूर्णमासेष्टिप्रभृतिषु संघभेदेन अङ्गानां भेदेना-नुष्ठानाधिकरणम्।

सू० इष्टिराजसूयचातुर्मास्येष्वैककर्म्याद-ङ्गानां तन्त्रभावः स्यात्॥ २॥

दर्शपौर्णमासयोर्विभज्य पर्वद्वये प्रयुज्यमानयोरङ्गानि तन्त्रम्? उत प्रति त्रिकमावर्तेरन्नि? ति संदेहे तन्त्रमित्याह कस्मादेककर्मत्वात् षण्णामप्ये-कोपक्रमावसानत्वात्, तेन यदेव किं चिदङ्गमनुष्ठितं तदेव षट्सु चिकीर्षि-तेषु क्रियमाणमगृह्यमाणविशेषत्वात्तन्त्रं भवति वचनात्तु एकोऽपि प्रयोगो विप्रकृष्यते न तावताऽङ्गानामावृत्तिः पशुवत्, यथा पशुप्रयोगे वपया प्रातः-सवने चरन्ति पुरोडाशेन माध्यन्दिने सवने अङ्गैस्तृतीयसवन" इति विप्रकृ-ष्यमाणेऽपि नाङ्गानामावृत्तिस्तथेहापीति प्राप्ते ब्रूमः। "त्रिकद्वयस्य साङ्गस्य चोदना कालयोर्द्वयोः। तेनाङ्गानामिहावृत्तिर्वपादीनां पशौ पुनः"॥ यद्यप्ये-कफलत्वादेकप्रयोगत्वं षण्णां प्राप्तं तथाऽपि वाचनिकेन कालभेदेन प्रयो-गभेदो भवति पौर्णमास्यां पौर्णमास्या यजेतेत्यनेन हि यः पौर्णमासीकर-

यकः फलार्थो व्यापारः प्रत्ययवाच्यस्तदङ्गत्वेन पौर्णमास्यामिति पौर्णमासीकालोविधीयते न पौर्णमासी यागमात्रे तेनाङ्गानामपि यागकरयकफलक्रियान्तर्गतानां तत्कालता विहिता भवति, तथा ऽमावास्यायामपि साङ्गैवामावस्या विधीयत इति द्वयोः कालयोरङ्गानामावृत्तिः पशौ पुनर्वपाप्रचारादिमात्रस्य भिन्नकालस्य चोदना न पशुयागस्य। न च प्रचारार्थान्यङ्गानि विहितानि, तेन तत्र नावर्तन्ते, अत्र पुनः प्रधानकालभेदेनाङ्गानामावृत्तिः, एवं चातुर्मास्येषु राजसूये च द्रष्टव्यम् ॥

अध्वरकल्पायां त्रिषु संघेष्वङ्गानां भेदेनानुष्टानाधिकरणम् ।

सू॰ तथा स्यादध्वरकल्पायां विशेषस्यैककालत्वात् ॥ ३ ॥

अस्त्यध्वरकल्पानामिष्टिः "आग्नावैष्णवमष्टाकपालं निर्वपेत्पूर्वाह्णे सरस्वतीमाज्यस्य यजेत बार्हस्पत्यश्चरुः आग्नावैष्णवमेकादशकपालं निर्वपेत् मध्यन्दिने सरस्वतीमाज्यस्य यजेत बार्हस्पत्यश्चरुः आग्नावैष्णवं द्वादशकपालं निर्वपेदपराह्णे सरस्वतीमाज्यस्य यजेत बार्हस्पत्यश्चरु"रिति तत्र श्रूयते "पुरावाचः प्रवदितोर्निर्वपे"दिति, तत्र किमङ्गानि तन्त्रम्? उत त्रयाणामपि त्रिकाणामर्थेन त्रिरङ्गान्यावर्त्तेरन्नि?ति, तदर्थमिदं विचार्यते पुरावाचः प्रवदितो निर्वपेदिति किं सर्वनिर्वापस्यापकर्षः? उत प्रातः कालस्यैवे?ति प्रकरणाविशेषात्सर्वनिर्वापस्यापकर्षः, ततश्च तदादिवाभिसम्बन्धादिति न्यायान्निर्वापान्तस्यान्वाधानादेरङ्गकाण्डस्यापकर्षः, तच्चाङ्गकाण्डं वचनादन्यकालमेवं प्रधानानाम् उपकारकमिति अगृह्यमाणविशेषत्वात्तन्त्रम्, अतश्च नवापि यागास्तन्त्रेणोपक्रान्ता भवन्ति, यथोपक्रमं च समापनमित्युत्तरेषामप्यङ्गानां तन्त्रत्वं, "स्यादेवं यदि निर्वापः सर्वेषामपकृष्यते। प्रातः कालिकमात्रस्य तद्विशेषोऽत्र चोद्यते ॥१॥ प्रातःकालविशेषोऽयं पुरावाच इति विधीयते तेन यस्य सामान्यतः प्राप्तिस्तस्यैवायं विधीयते नान्यकालस्याप्रधानकालत्वं चैवमङ्गानां चोदकप्राप्तं न बा-

१ चातुर्मास्ये इति पा॰ ।
२ अग्नावैष्णव ।

धितं भवति, तस्मान्मध्यन्दिनापराह्णकालानां यागानामङ्गकाण्डं नापकृष्यत इति न सर्वेषां सहोपक्रमः तस्मात्प्रातर्मध्यन्दिनापराह्णवर्त्तिनां प्रधानानामङ्गान्यपि तत्र तत्रावर्त्तनीयानीति तन्त्रभेदः ॥

वसाहोमानां भेदेनानुष्ठानाधिकरणम् ।

सू० वसाहोमस्तन्त्रमेकदेवतेषु स्यात्प्रदानस्यैककालत्वात् ॥ ४ ॥

अग्नीषोमीये पशौ "याज्यार्द्धर्चान्ते वसाहोमं जुहोती"ति श्रुतो वसाहोमश्चोदकपरम्परया प्राजापत्येषु पशुषु प्राप्तस्तन्त्रमावापो वेति संदेहे सहश्रपणाद्वसाया एकत्वादेकदेवतत्वाच्च याज्यार्द्धर्चान्तस्य चैकत्वात्तन्त्रं सकृत्कर्त्तव्य इति स्पष्टमेव शिष्यहितार्थमेवमुक्तम् ॥

पूर्वेण समानाधिकरणम् ।

सू० कालभेदा[1]त्त्वावृत्तिर्देवताभेदे ॥ ५ ॥

भिन्नदेवतेष्वपि पशुषु सहश्रपणश्रवणेन वसाया एकत्वाद्याज्यार्द्धर्चान्तभेदेऽपि यस्य कस्य चित् याज्यार्द्धर्चान्ते सकृदेव वसाहोमः स्यात्, नैवं सर्वे हि पशवः स्वयाज्यार्द्धर्चान्ते स्वस्या वसाया होमेन प्रतिपत्तिमपेक्षन्ते, भवति च वसा द्रव्यन्तेन सर्वेषु याज्यार्द्धर्चान्तेषु भेदेन वसाहोमः सर्वपशुवसाप्रतिपत्तये कार्यः ॥

यूपैकादशिन्यां तन्त्रेण यूपाहुत्यनुष्ठानाधिकरणम् ।

सू० अन्ते यूपाहुतिस्तद्वत् ॥ ६ ॥

अग्नीषोमीये पशौ यूपस्यान्तिके ऽग्निं मथित्वा यूपाहुतिं जुहोतीति यूपाहुतियूपैकादशिन्यां भेदेन कर्त्तव्या तन्त्रेण वेति संदेहे तदन्तिकदेशानां भिन्नत्वात् वसाहोमवदावृत्तिः, नैवम् आपेक्षिके ह्यन्तिकदेशे मन्थनं सम्भवति तेन यं देशं प्राप्तो यूपसमीपं प्राप्तो ऽस्मीति मन्यते यत्र यूपो दृष्टिपथमापद्यते तत्र मन्थनं होमश्च, स च सर्वेषामेकदेशः सम्भवतीति अगृह्यमाणविशेषत्वात्तन्त्रम् ॥

साङ्गस्यावभृथः अप्स्वनुष्ठानाधिकरणम् ।

सू० अवभृथे प्रधानेऽग्निर्विकारः स्यान्न हि तद्धेतुरग्निसंयोगः ॥ ७ ॥

---

१ कालभेदे त्वावृत्तिर्देवताभेदे इति पा० ।

अप्स्ववभृथेन चरन्तीति किं प्रधानमात्रमप्सु कर्त्तव्यम् ? उताङ्गान्यपी ? ति संशये मुख्यार्थौ वाङ्गस्याचोदितत्वादिति न्यायेन वैकृतविशेषाणां प्रकृतावेव श्रुतानां केवलप्रधानार्थत्वात् उपांशुत्ववदापोऽपि प्रधानस्यैव अङ्गानान्त्वाहवनीय एव क्रियेति प्राप्ते ब्रूमः ता उपांशु कर्त्तव्या इति प्रधानक्रियायां विहितमुपांशुत्वं युक्तं यदङ्गेषु न भवति, देशस्त्ववभृथकरणिकायां क्रियायां श्रूयमाणस्तदन्तर्गतानामङ्गानामपि भवति, तस्मादङ्गप्रधानानामेकदेशत्वम् ॥

उत्तरदक्षिणविहारयोर्भेदे-नामनुष्ठानाधिकरणम्।

सू० दक्षिणेऽग्नौ वरुणप्रघासेषु देशभेदात्सर्वं तन्त्रं विक्रियेत ॥ ८ ॥

वरुणप्रघासेषु विहारद्वयं द्वयोरप्याहवनीयो विभज्य स्थापितः तत्र श्रूयते, "अष्टावध्वर्युरुत्तरे विहारे हवींष्यासादयति मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मि" न्निति, तत्र विचार्यते किं नवानामपि हविषां तन्त्रम् ? अङ्गान्युताग्नेयादीनामष्टानां मारुत्याश्चामिक्षायाभेदेनाङ्गानि कर्त्तव्यानी ? ति तत्र "प्रावृषि वरुणप्रघासैर्यजेते" ति प्रयोगवचनैक्यात्तन्त्रत्वं, न च देशभेदाद्भेदः, आसादनमात्रं हि दक्षिणे विहारे मारुत्या विधीयते न होमस्तस्मात्प्रधानदेशाभेदात्तन्त्रमङ्गानि, मैवं न ह्यत्रासादनमपूर्वं विधीयते किन्तु नवानामपि हविषां चोदकप्राप्तमासादनं होमश्च विहारद्वयेऽप्यव्यवस्थया प्राप्त उभयत्राहवनीयस्य स्थापितत्वादासादनं नियम्यते वाक्यद्वयेन यथाप्राप्तस्य च नियमः, प्राप्तिश्च होमार्थतयेति तादृशस्यैव दक्षिणे विहारे विधानाद्धोमोऽपि दक्षिणस्मिन्नेव विहारे मारुत्याः तस्मात्प्रधानदेशभेदाद्वक्ष्यमाणविशेषाण्यङ्गानि न तन्त्रं भवन्ति, सत्यं, न तन्त्रमङ्गानि देशभेदात्तथापि तु "न पृथक् स्यादनुष्ठानं प्रसङ्गात्कार्यसिद्धितः॥ ननु कर्तृदेशभेदे कथं प्रसङ्गः वक्ष्यत्यस्योत्तर "मर्थस्याविकृतत्वा" दिति, तदिहाप्यर्थो विकृतस्तथा हि सर्वाणि तावदङ्गानि प्रधानानि चाऽध्वर्युकर्तृकाणि प्रतिप्रस्थातृकर्तृकाणि चोत्तरवैहारिकाणि दक्षिणवैहारिकाणि च यजमानात्मन्येव स्वापूर्वाण्यादधति, ततश्चोत्तरवैहारिकप्रधानोद्देशेनोत्तरस्मिन्विहारेऽध्वर्युणा कृतैरङ्गैर्यजमानात्मनि स्वापूर्वैस्त्वाहितेषु तद-

कार्यसमवायलब्धसामर्थ्योद्बोधं मारुतीयागोत्पत्त्यपूर्वं दक्षिणवैहारिकमपि प्रतिप्रस्थातृकर्त्तृकमपि स्वकार्यं जनयतीति कृतमस्य स्वाङ्गैः पृथगनुष्ठितैः, अत्रोच्यते "तन्त्रे ऽन्यस्य समारब्धे यत्रान्यस्य विधिः श्रुतः। तत्र प्रसङ्गो न त्वत्र युगपत्सर्वचोदनात्"॥ यत्र हि प्रधाने चोद्यमानेऽन्यान्यङ्गानि प्रक्रान्ता परिसमाप्तान्यालोच्यन्ते तत्र लाघवात्प्रयोगविधिरेव गुणकालाद्यन्यथाभावं कार्यपरतया नादृत्यान्यदीयमेव तन्त्रमुपजीव्य न स्वीयं तन्त्रं प्रयुङ्क्ते, इह पुनर्नवानामपि यागानां युगपच्चोदनाद्युगपदुपक्रमोऽवसानं चेति तेन सर्वेऽपि तेऽन्योन्यानपेक्षाः स्वाङ्गान्यात्मसमानदेशकालकर्त्तृकाणि प्रयुञ्जते तेन मारुत्याः स्वाङ्गेषु दक्षिणे विहारे प्रतिप्रस्थात्रा कर्त्तव्यानीति गम्यमानेषु कथं तदनादरेणान्योपजीवनं, तदुपजीवने हि यदस्य स्वाङ्गैः समानदेशकर्त्तृकत्वं चोदनावगतं तल्लोपे वैगुण्यादामिक्षायागो न फलसाधनं, तस्मादुभयत्राङ्गानामावृत्तिः॥

उत्तरदक्षिणविहारयोः कर्त्तृभेदाधिकरणम्।

**सू॰ कर्त्तृभेदस्तथेति चेत् ९॥**

कर्त्तृष्विदानीं तन्त्रावापौ चिन्त्येते तत्राध्वर्युप्रतिप्रस्थातारौ वचनादेव विहारद्वये व्यवस्थितौ ब्रह्मा होताऽऽग्नीध्रश्च किं विहारयोर्भेदेनोत तन्त्र?मिति तत्र देशभेदेन प्रयोगयोर्भिन्नत्वात्प्रयोगाङ्गभूतानां कर्त्तृणामपि भेदः स्यान्नैवम् असत्यपि भेदे तैरेवोभयत्रापि कार्यसिद्धेः, दर्शिता च कार्यसिद्धिर्भाष्ये, वचनाच्च चातुर्मास्यानां पञ्चर्त्विज इति विहारद्वयाभिप्रायं हीदं पञ्चर्त्विग्वचनं, न ह्येकैकस्मिन्विहारे पञ्च पञ्च सन्ति वचनादेव विहारद्वयेऽध्वर्युप्रतिपस्थात्रो र्विहारद्वये व्यवस्थितत्वात्, तस्मात्तन्त्रं ब्रह्मादयः॥

उत्तरदक्षिणविहारयोः आपराग्निकहोमानां भेदेनानुष्ठानाधिकरणम्।

**एकाग्नित्वादपरेषु तन्त्रं स्यात्॥ १०॥**

ये पुनरापराग्निका होमाः पत्नीसंयाजादयस्तेषु तन्त्रमावापो वेति सन्देहे पौर्वाग्निकवद्देशभेदाभावात्तन्त्रत्वं स्यात्, असत्यपि देशभेदे कर्त्तृ-

भेदात् भेदः प्रतिप्रस्थातृकर्त्तृका हि मारुत्या उपकुर्वन्ति अध्वर्युकर्त्तृका-स्त्वितरेषां तस्माद्भेदः ॥

वाजपेये ब्रह्मसाम्न्यालम्भस्य कर्म्मशेषप्रतिषेधार्थताधिकरणम् ।

सू० पर्य्यग्निकृतानामुत्सर्गे प्राजापत्यानां कर्म्मोत्सर्गः श्रुतिसामान्यादारण्यवत् तस्माद्ब्रह्मसाम्नि चोदनापृथक्त्वं स्यात् ॥ ११ ॥

वाजपेये प्राजापत्यान् पशून् प्रकृत्य श्रूयते "तान् पर्यग्निकृतानुत्सृजन्ति ब्रह्मसाम्न्यालभत" इति किमुत्सृजेदिति कर्मशेषप्रतिषेधः आलभत इति कर्मान्तरविधि? उतोत्सृजतीत्यनुवादः आलभत इत्युत्कर्षविधिः? तत्र तान्पर्यग्निकृतानारण्यानुत्सृजन्तीतिवत् तदन्ताङ्गरीतिविधानात् तथैव प्राजापत्यानां नैराकाङ्क्षाच चोदकेनाङ्गान्तरग्रहणम्, अतः पर्यग्निकरणान्ताः प्राजापत्याः ब्रह्मसाम्न्यालभत इत्याज्येन शेषमितिवत्कर्मान्तरमिति मन्वानस्योत्तरं "नान्यकर्मविधिर्युक्तो ऽनेकादृष्टप्रकल्पनात् वाक्यभेदप्रसङ्गाच्च तस्मादुत्कर्षचोदना॥ पर्यग्निकरणानन्तरं प्राप्तस्यालम्भस्य ब्रह्मसामकाले उत्कर्षमात्रं विधीयते तद्विधौ च प्राप्तः पर्यग्निकरणान्तो व्यापारोपरम इति तदनुवादमात्रमुत्सृजतिः, एवमत्यन्तलाघवलाभात्र कर्मान्तरवाक्यभेदाभ्युपगमो माध्यन्दिने सवने ब्रह्मसामाख्यस्तोत्रकाले युक्तः, तस्मात्पर्यग्निकरणान्तमङ्गकाण्डं सकृदेव कर्त्तव्यं न माध्यन्दिने पुनरावर्त्तनीयं पशवश्च नान्य उपादातव्याः ॥

अहीने उक्ताःसुत्सर्गकर्म्मशेषप्रतिषेधार्थताधिकरम् ।

सू० पञ्च शारदीयास्तथेति चेत् ॥ १२ ॥

अस्ति पञ्चशारदीयो नामाहीनः पञ्चाहस्तत्र श्रूयते "वैशाख्याममावास्यायां सप्तदशमारुतीस्त्रिवत्सा अप्रवीता उपाकरोति सप्तदश प्रश्नीनुक्ष्णस्तान् पर्यग्निकृतान्प्रोक्षितानितरा आलभन्ते प्रेतरानुत्सृजन्ति ततः संवत्सरे राज्ञीवा आनयन्ति तांश्चैवोक्ष्णस्तान्पर्यग्निकृता"नित्या-

दिपूर्ववत्, एवं तृतीये चतुर्थे च संवत्सरे स्त्रीपशुयागानां सामस्त्येनानुष्ठानमुख्यां च पर्यग्निकृतानामुत्सर्गमुक्त्वा तत्र श्रूयते "पञ्चमे वर्षे दीक्षित एतानुख्यास्त्रींस्त्रीनन्वहमालभते पञ्चोत्तमे ऽहनी"ति तत्रोत्तसु संशयः किं य एव प्रथमवर्षे पर्यग्निकृता उख्या उत्सृष्टव्यास्तेषामेव द्वितीयादिसंवत्सरेषु पर्यग्निकरणम् पञ्चमे वर्षे तेषामेव पञ्चसु सुत्यासु त्रींस्त्रीनित्येव मालम्भः प्राजापत्यानामिव? उत प्रथमे वर्षे उपक्रान्तानां पर्यग्निकरणान्ताङ्गरीतिविधानेन तत्रैव समाप्तिरारण्यवत् द्वितीयादिष्वन्येऽन्ये उख्याः पञ्चमे वर्षे सुत्यासु पञ्चमे वर्षे सुत्यासु अन्येषामुख्यामालम्भ इति तत्र त्रींस्त्रीनित्यनेन ब्रह्मसामालम्भवाक्यवत्तेषामेवालम्भोत्कर्षमात्रविधौ लाघवम्। वचनात्पर्यग्निकृतानामपि तेषां पुनः पुनः पर्यग्निकरणं क्रियते उत्सर्गवचनानि चालम्भोत्कर्षादेव प्राप्तस्योत्सर्गस्यानुवाद इति प्राप्ते ब्रूमः स्यादेवं यदि त्रींस्त्रीनित्यनेनालम्भोत्कर्षः शक्यो विधातुं न त्वेवमस्ति, गुणवाक्यत्वे सति त्रींस्त्रीनिति चान्वहमिति चानेकार्थविधाने वाक्यभेदापत्तेः, तथा पञ्च इति चोत्तमेऽहनीति नार्थभेदो दर्शयितव्यः, तस्मादिदन्तावत्संख्याकालविशिष्टापूर्वकार्यविधानम् एवम् चाविहिते सत्यालम्भोत्कर्षे प्राजापत्यन्यायासम्भवात् तदन्ताङ्गरीतिविधानेनारण्यन्यायेन प्रथमवर्षोपक्रान्तानामुख्यां त्रिवत्सानामिव तत्रैव समाप्तिः द्वितीयादिष्वपि वत्सरेषु अन्य एव स्त्रीपशुयागाः पुंपशुयागाश्च, एवं प्रतिसम्वत्सरम् देवताऽनुषङ्गेण चतुस्त्रिंशत्कर्माणि पञ्चमे चान्येषामेवोख्यामालम्भः॥

अभिषेचनीयदशपेययोर्भेदेन प्रयोगाधिकरणम्।

सू० दशपेये क्रयप्रतिकर्षात्प्रतिकर्षस्ततः प्राचां तस्मात्समानं तन्त्रं स्यात्॥ १३॥

राजसूये ऽभिषेचनीयो नाम सोमयागः ततः संसृपाहवींषि ततः पुनर्दशपेयः सोमयागस्ताविमावभिषेचनीयदशपेयौ समानतन्त्रौ भिन्नतन्त्रौ वेति संशये सह सोमं क्रीणात्यभिषेचनीयस्य दशपेयस्य चेति

वचनादभिषेचनीयसोमक्रयकाले दशपेयक्रयः प्रतिकृष्यते, स च प्रतिकृष्यमाणः प्राचोऽपि पदार्थान्प्रतिकर्षति "तदन्तमपकर्षं स्यादि" ति न्यायात् तस्मात्सहोपक्रमितव्यावभिषेचनीयदशपेयौ यथोपक्रमं च समापनमिति समानतन्त्रौ मैवम् उपसंवादमात्रमिह क्रीणातिनोच्यते न त्वङ्गभूतः क्रयः नन्वसौ क्रीणातेर्न मुख्यो वाच्यः परकीयस्य मूल्यं हि दत्वा स्वीकरणं क्रयः न चोपसंवादमात्रस्यैवंरूपत्वमस्ति यद्यप्येवं तथाऽपि गौण्या वृत्त्या तस्यैवेदं साहित्यमुच्यते वचनान्तरानुगुण्यात् दशपेये हि श्रूयते "सद्यो दीक्षयन्ति सद्यः सोमं क्रीणन्ती" ति तथाऽभिषेचनीयेऽवभृथदर्शनमत्यन्तानुपपन्नमेकतन्त्रत्वे स्यात्, तस्मादङ्गभूतक्रयापकर्षाभावाच्च तदन्तापकर्ष इति न सहोपक्रमत्वं, कालभेदात्तु भिन्नोपक्रमावसानौ भिन्नतन्त्रावेवेतौ[1] ॥

वारुण्या निष्कासेन तुषैश्चावभृथमभ्ययन्ति इत्यस्य कर्मान्तरोपदेशताधिकरणम् ।

सू० निष्कासस्यावभृथे तदेकदेशत्वात्पशुवत्प्रदाने विप्रकर्षः स्यात् ॥ १४ ॥

वरुणप्रघासेषु "वारुण्यामिक्षा मारुत्यामिक्षे" ति श्रुतं तत्र पुनः श्रूयते "वारुण्यानिष्कासेन तुषैश्चावभृथं यन्ती" ति तत्र संशयः किं प्रधानस्यामिक्षायागस्यायं प्रचारविप्रकर्षः पशोरिव वपाहृदयादिभिः प्रातःसवनतृतीयसवनयोः? उत निष्कासस्येयं प्रतिपत्तिः? उतामिक्षानिष्कासद्रव्यकमवभृथधर्मकं कर्मान्तरं विधीयत? इति, तत्र कृत्स्नस्यामिक्षाद्रव्यस्य प्रकृतयागशेषत्वात्तदेकदेशे तस्या एव देवतायै वरुणाय दीयमानो न कर्मान्तरं युक्तम्, अवभृथशब्दस्तु देवतासामान्याद्गौणोऽनुवादः, अवभृथोऽपि हि वारुणः, न चानुवादे गौणत्वं दोषः सिद्धान्ते तु तद्धर्मककर्मविधौ विधावेव गौणत्वं स्यात्, तच्चायुक्तं तस्मात्तस्यैवायमभ्यास इति न स्विष्टकृदादेः पुनः करणं नैवम् अवभृथशब्दानर्थक्यात्, न चार्थवत्त्वे सम्भवति आनर्थक्यं युक्तं तस्मादवभृथधर्मककर्मान्तरविधानं तत्तु प्रयाजशेषाभि-

१ भिन्नतन्त्रावेवेति पा० ।

धारणवदामिक्षाशेषस्य प्रतिपत्त्यर्थं सत्यं, कर्मान्तरं न तु प्रतिपत्तिः अवभृथशब्दविरोधात्, अवभृथे हि द्रव्यं गुणतः कर्मप्रधानतः इह तु विपर्ययात्तद्भावानुपपत्तिः, तेन यस्यैव अवभृथशब्दस्य प्रसादात्कर्मान्तरमाश्रितं तेनैव प्रतिपत्त्यर्थतानिराकरणेनार्थकर्मता सिध्यति । वचनाच्चान्यद्रोयद्रव्यस्यैकदेशोऽन्यत्र विनियुज्यमानो न दुष्यति ॥

प्रायणीयनिष्कासे उदयनीयनिर्वापस्यार्थकर्मताधिकरणम् । सू० उदयनीये च तद्वत् ॥ १५ ॥

ज्योतिष्टोमे प्रायणीयश्चरुरुदयनीयश्च तत्र श्रूयते "प्रायणीयस्य निष्कास उदयनीयमनुनिर्वपती"ति तत्र संशयः किं प्रायणीयनिष्कासद्रव्यकम् उदयनीयधर्मकं कर्मान्तरं विधीयते? किं वा प्रायणीयनिष्कासस्योदनीयनिर्वापसंयोगः प्रतिपत्ति? उत प्रायणीयनिष्कासे निर्वाप उदयनीयस्य संस्कार इति? पूर्ववत्तद्धर्मककर्मविधिः मुख्यस्यैव तूदयनीयस्येह प्रकृतत्वाच्च प्रकरणान्तरन्यायेन तद्धर्मकर्मविधिस्तस्मात्प्रायणीयनिष्कासस्य कृतार्थस्येयं प्रतिपत्तिरुदयनीयनिर्वापसंयोगः, नैतदेवं निष्कासस्य हि सप्तम्या गुणभावोऽवगम्यते द्वितीयया प्रधानत्वमितरस्य स्फुटं श्रुतम् उदयनीयहविर्हि निरूप्यमाणं भाव्युपयोगित्वात्सुतरां संस्कारार्हं, न च निष्कासस्य प्रयाजशेषवदुदयनीयसंयोगात्किञ्चिददृष्टमस्ति । तस्माच्छब्दानुगुण्यात् उदयनीयहविःसंस्कारार्थः प्रायणीयनिष्कासनिर्वापः ॥

इति श्रीशास्त्रदीपिकायामेकादशस्य द्वितीयः पादः ॥ २ ॥

---

## अथैकादशस्य तृतीयः पाद आरभ्यते ॥

---

वेद्याद्यङ्गानां प्रधानकालान्यकालकर्तव्यताधिकरणम् । सू० अङ्गानां मुख्यकालत्वाद्वचनादन्यकालत्वम् ॥ १ ॥

प्रधानसमदेशत्वं प्रधानसमानकालत्वं चाङ्गानामुक्तं, यत्र त्वाहत्याऽङ्गस्य भिन्नदेशकालत्वं वचनेनैवोक्तं तत्र तथा भवतीति सुहृद्भूत्वोक्तवाचाच्च निराकार्यमस्ति ॥

आधानस्य तन्त्रेणानुष्ठानाधिकरणम् ।

सू० द्रव्यस्य चाकर्मकालनिष्पत्तेः प्रयोगः सर्वार्थः स्यात्स्वकालत्वात् ॥ २ ॥

"वसन्ते ब्राह्मणोऽग्नीनादधीत" इत्यनारभ्याधीतमपि आधानमग्निहोत्रादीनामङ्गमिति कृत्वा चिन्त्यते किमङ्गं सदाधानं प्रतिकर्म प्रयोगभेदेन कर्तव्यम्? उत सर्वकर्मणां सर्वप्रयोगाणां च तन्त्रेण? इति तत्र, "प्रयाजादिवदङ्गत्वादावृत्तिः स्यात्प्रतिक्रियम् । आनन्तर्याद्विशेषश्च गृह्यतेऽतो न तन्त्रता ॥ स्वकालत्वात्तु तन्त्रत्वं विशेषाग्रहणाद्भवेत् । आनन्तर्याद्विशेषश्चेच्चाधानसमये ह्यसौ" ॥ न हीदं कर्मणः प्रारम्भे मध्ये वा प्रयुज्यते येन तदपवर्गे प्रयुज्येत वाचनिकोऽह्यस्य वसन्तादिः स्वकालस्तेन तत्रैव स्थितं सर्वेषामुपकरोत्यगृह्यमाणविशेषत्वादिति तन्त्रं यदाधाने कृतेऽनन्तरं किञ्चित्कर्माऽऽपतति तत्तदर्थमित्यानन्तर्येण विशेषो गृह्यत इति चेत् नायमाधानसमयेऽस्ति विशेषः तदा ह्येवमभिसन्धायासावाधत्ते यदेव किञ्चिन्निमित्तवशात्कामनावशाद्वा कर्त्तव्यं कर्मोपस्थास्यते तदर्थमाधास्येऽग्नीनिति,न तु कंचिदेव कर्मविशेषमभिसन्धायाधत्ते, एवमनभिसंहितकर्मविशेषेण सर्वोद्देशेनाधाने कृते यद्यपि किञ्चित्कारणवशात्प्रथमं कर्माऽऽपतति तथाऽपि न तादर्थ्यमेव भवति प्रथमावस्थायामेव सर्वार्थत्वावधारणात् तस्मात्तन्त्रम् ॥

अग्नीषोमीयादिषु यूपस्य तन्त्रेणानुष्ठानाधिकरणम् ।

सू० यूपश्चाकर्मकालत्वात् ॥ ३ ॥

ज्योतिष्टोमेऽग्नीषोमीये पशावुपदिष्टो यूपः सवनीयानुबन्ध्ययोस्त्वतिदिष्टः स किं त्रयाणामपि पशूनां तन्त्रम्? उत प्रतिपशु भिन्न? इति, तदर्थमिदं विचार्यते दीक्षासु यूपं छिनत्तीति किमग्नीषोमीययूपस्याकर्ष? उत सर्वयूपाना? मिति, तत्र, "यथैवाध्वरकल्पायामाद्यस्यैवापकर्षणम् । निर्वापस्य तथा यूपोऽप्याद्य एवापकृष्यते ॥ अग्नीषोमीयसंस्थायामतोऽसावपवृज्यते । भेदेन सवनीयादौ स्वकाले यूपसंग्रहः ॥ नैतदस्त्यविशेषेण सर्वयूपापकर्षणात् । न चेहाध्वरकल्पावदाद्यमात्रापकर्षणम् । प्रधानकालबाधोऽत्र तथैवाप्राप्तचोदना ॥ आद्यापकर्षणेऽप्यस्ति तस्मात्सर्वापकर्षणम्" ॥ अध्वर-

कल्पायां हि प्रथमनिर्वापापकर्षे सति प्रधानकालबाधो नियमविधानं च लभ्यत इति तस्यैवापकर्षः समाश्रितः, अत्र त्वग्नीषोमीययूपापकर्षेणेऽप्यस्ति प्रधानकालबाधो ऽप्राप्तविधिश्च, तस्मादविशेषात्सर्वयूपापकर्षे सत्यकर्मकाल[1]त्वादगृह्यमाणविशेषो यूपः, सर्वेषां तन्त्रम् ॥

यूपसंस्काराणां तन्त्रेणानुष्ठानाधिकरणम् ।

सू० संस्कारास्त्वावर्त्तेरन्[2] न स्वकालत्वात् ॥ ४ ॥

यूपस्य तन्त्रत्वे तत्संस्काराणां तक्षणप्रोक्षणादीनां तन्त्रत्वमावृत्तिर्वेति संशये छेदनमात्रस्यापकर्षविधानात्प्रोक्षणादीनां चाग्नीषोमीयकालानां तदपवर्गे ऽपवर्गात् सवनीयादौ पुनः प्रयोग इति प्राप्ते ब्रूमः तेषामप्यपकर्षः दीक्षासु यूपं छिनत्तीति, नायमर्थः यूपं सन्तं छिनत्तीति यूपस्य प्रागसिद्धत्वात् किं तर्हि छेदनेन यूपं कुर्यादिति । न च छेदनमात्रेणासौ कर्त्तुं शक्यते तक्षणादीनामपि यूपेऽपेक्षितत्वात्, तस्माच्छेदनग्रहणमुपलक्षणं छेदनादिभिर्यूपं कुर्यादिति, तस्मात्तेषामप्यपकर्षात्तन्त्रत्वम् । अस्तु छेदनमात्रापकर्षः तावतैव च यूपसिद्धिस्तथाऽपि यूपस्तावत्सर्वेषामर्थेनैक एवोपात्तस्तद्द्वारा च संस्कारास्ते यद्यप्यग्नीषोमीयकालेऽनुष्ठीयन्ते तथाऽपि यूपद्वारत्वात्तस्य च साधारणत्वात्तेषामपि साधारण्यम् ॥

स्वरोः साधारण्याधिकरणम् ।

सू० स्वरुस्तन्त्रापवर्गः स्यादस्वकालत्वात् ॥ ५ ॥

यूपस्य स्वरुं करोतीति स्वरुः किमेकयूपानां पशूनां तन्त्रम्? उत प्रतिपशु भिद्यत? इति सन्देहे अञ्जनकाले ऽस्योपादानात्तदपवर्गे चापवर्गादञ्जनान्तरे ऽन्यशकलोपादानं यः प्रथमः शकलः स स्वरुरिति चैकस्मिन् प्रहरणे यः प्रथम इति शास्त्रार्थः तेनैकस्मिन्नपि यूपे प्रहरणबहुत्वात्संभवन्ति बहवः प्रथमशकलाः, मैवं प्रहरणस्यानुपात्तत्वात् तेन शकलमात्रापेक्षं प्राथम्यमित्येकस्मिन्यूपे एक एव प्रथमः शकल इति तन्त्रत्वं यूप-

१ प्रधानकालत्वाद् गृह्यमाणविशेषोयूप इति ।
२ आवर्तेरन्नर्थकालत्वादिति पा० ।

च्छेदनकाल एव चास्य व्यामोहनिवृत्त्यर्थं नाशापहारपरिहारार्थं च उपादानं कर्त्तव्यमिति अगृह्यमाणविशेषत्वादपि तन्त्रम् ॥

द्वादशाहे कृष्णविषाणाप्रासनस्यान्त्याह एव कर्तव्यताऽधिकरणम् ।

सू० अहर्गणे विषाणाप्रासनं धर्मविप्रतिषेधादन्त्ये प्रथमे वाऽहनि विकल्पः स्यात् ॥ ६ ॥

ज्योतिष्टोमे श्रूयते "कृष्णविषाणया कण्डूयत" इति, तथा नीतासु दक्षिणासु "चात्वाले कृष्णविषाणां प्रास्यती"ति द्विरात्रादिषु अहर्गणेषु चिन्त्यते किं प्रथमे एवाहनि कृष्णविषाणाप्रासनम्? उतान्त्य एवे? ति विकल्पः स्यात् प्रकृतौ हि प्रासनोत्तरकालानां पदार्थानां पाणिकण्डूयनं धर्मः, पूर्वकालानां तु विषाणाकण्डूयनं तद्यदि प्रथमेऽहनि प्रास्येत तत उत्तरेष्वहस्सु ये दक्षिणानयनात्प्राग्भाविनः पदार्थास्तेषां विषाणाकण्डूयनं धर्मो बाध्येत, न हि प्रास्तायाः पुनरुपादानं सम्भवति त्यागात्मकं हि प्रासनं प्रकृते विहितं, न च पुनरुपादित्समानस्य त्यागबुद्धिर्भवति, तस्माद्बाध्यत एव विषाणाकण्डूयनम् ॥ अथ पुनरन्त्ये ऽहनि प्रास्येत ततः पूर्वेष्वहस्सु ये दक्षिणानयनात्परस्तात्पदार्थास्तेषां पाणिकण्डूयनं बाध्येत, न ह्यप्रास्तायां तस्यां पाणिकण्डूयनं सम्भवति, अदृष्टार्थत्वापातात्प्रक्रान्तनियमत्यागे शिष्टाचारविरोधाच्च, अतः पक्षद्वये ऽपि अवश्यंभावी केषांचिद्धर्मबाध इति विकल्पः स्यादेवं यद्यन्त्येऽहनि प्रासने धर्मबाधः स्यात् न त्वेतदस्ति, पाणिकण्डूयनस्यार्थकृतत्वेनाशास्त्रीयत्वात्तस्मादन्त्येऽहनि प्रासनम् ॥

राजसूये ऽन्त्य एव हविष्कृत्काले वाग्विसर्गाधिकरणम् ।

सू० वाग्विसर्गो हविष्कृता बीजभेदे तथा स्यात् ॥ ७ ॥

दर्शपूर्णमासयोः श्रुतं "प्रणीताः प्रणेष्यन्वाचं यच्छति तां सह हविष्कृता वाचं विसृजती"ति हविष्कृतेति च कालोपलक्षणं हविष्कृदाह्वानकाल इत्यर्थः । तत्र नानाबीजेषु चिन्त्यते कृष्णाजिनास्तरणादीनां फलीकरणपर्यन्तानामनुसमय इत्युक्तं, तत्र किं प्रथमस्यान्त्यस्य वा बीजस्य हविष्कृता वाग्विसर्गः? किं वान्त्यस्यैवे? ति, तत्र प्रथमं विसर्गे सत्युत्तरेषां

बीजानां ये हविष्कृत्कालात्प्राञ्चः प्रदार्था हविरावपनादयस्तेषां धर्मो बाध्येत, अन्तिमे तु विसर्गे पूर्वबीजानां ये हविष्कृतः प्रत्यञ्चः परे वपनादयस्तेषां धर्मो वाग्विसर्गो वा बाध्येत, न ह्यत्र पूर्ववत् वाग्विसर्गस्याशास्त्रीयत्वं विसृजतीति वचनात्, तस्मादवश्यं भाविनि धर्मबाधे विकल्पः, नैवं, न ह्यत्र विसर्गो विधीयते वाग्यमविधेस्त्वयमवधिरुच्यते तदेकवाक्यत्वात्, विसर्गविधौ हि वाक्यभेदोऽदृष्टकल्पना च स्यात् प्राप्तश्च विसर्गो न विधातव्यः, तस्माद्विसर्गस्यानङ्गत्वादविसृष्टायामपि न कस्यचिद्धर्मबाध इत्यन्त एव विसर्गः ॥

अग्नीषोमीये पौरोडाशिककाल एव वाग्विसर्गाधिकरणम् ।

सू० पशौ च सपुरोडाशे च समानतन्त्रं भवेत् ॥ ८ ॥

पशावग्नीषोमीये पशुपुरोडाशः तत्र तावदस्ति हविष्कृदाह्वानं पशावप्यस्तीति कृत्वा चिन्त्यते किं प्रथमे पशुकाले वाग्विसर्गः ? पुरोडाशकाले वे ? ति, प्रासङ्गिकत्वात्पशुपुरोडाशस्य पाशुकेनैव वाग्यमेन कार्यसिद्धेर्न पृथग्वाग्यमेन कार्यं, तस्मात्पशुकाले वाग्विसर्ग इति मन्वानस्योत्तरं न वाग्यमोऽयमारादुपकारकः कर्तृसंस्कारस्त्वसौ, अतो विसृष्टवाचा क्रियमाणाः पौरोडाशिका विगुणा भवेयुः । तस्मात्पुरोडाशकाले विसर्गः ॥

अग्निचयनेऽग्निविमोकस्य प्रधानापवर्गकालताऽधिकरणम् ।

सू० अग्नियोगः सोमकाले तदर्थत्वात्संस्कृतकर्मणः परेषु साङ्गस्य तस्मात्सर्वापवर्गे विमोकः स्यात् ॥ ९ ॥

अग्नौ श्रूयते "अग्निं युनज्मि शवसा घृतेने"ति जुहोति अग्निमेव तद्युनक्ति पञ्चभिर्युनक्ति पाङ्क्तो यज्ञ इत्यग्नियोगः तथा "इमं स्तनमूर्जस्वन्तं धयामि इत्याज्यस्य पूर्णां स्रुचं जुहोतीत्येष वा अग्नेर्विमोक" इति सोऽयमग्नेर्विमोकः किं प्रधानमात्रापवर्गे स्या ? दुत साङ्गप्रधानापवर्गे ? इति, यदि प्रधानमात्रार्थो योगस्तदपवर्गे विमोकः साङ्गप्रधानार्थत्वे तु योगस्य सर्वान्ते विमोकः तत्राग्नेः सर्वार्थत्वात्तत्संस्कारो योगः सर्वार्थः तस्मात्सर्वापवर्गे विमोक इति पूर्वपक्षं कृत्वा पाङ्क्तो यज्ञ इति वाक्य-

शेषेण यज्ञार्थता योगस्य, अतः प्रधानापवर्गेऽपवर्ग इति भाष्यकारेण सिद्धान्तितम्, । एवं च सौमिकमपि वरणं "यदवृत्ता वषट्कुर्युर्भ्रातृव्यमेव यज्ञस्याशीर्गच्छे"दिति यज्ञसंयोगादग्नियोगतुल्यन्यायं केवलप्रधानार्थं भवति तत्रावभृथे सौमिकेन वरणेन प्रत्याम्नातं होतृवरणं प्राप्नोति तत्र न होतारं वृणीत इति प्रतिषेधोऽवक्लृप्तोभवति, इतरथा सौमिकस्य वरणस्य साङ्गप्रधानार्थत्वादवभृथे पृथग्वरणप्राप्त्यभावात्तन्निषेधो न स्यात् इति च लिङ्गदर्शनमुक्तं तथा "अहरहर्युनक्ति अहरहर्विमुञ्चती"ति प्रत्यहं योगविमोकदर्शनं द्वादशाहे इतरथा साङ्गप्रधानार्थत्वे आद्यन्तयोरेव योगविमोकदर्शने स्यादिति । ननु प्रधानार्थत्वेऽपि वरणस्याप्राप्तिरपूर्वत्वादवभृथस्य तत्र कश्चिदाह अपूर्वताया एवायमर्थवादो होतृवरणाभावे लाघवं स्यादिति, स चापूर्वत्वपक्षे वरणाप्राप्तौ सत्यामवकल्पते नान्यथेति । वयं तु ब्रूमः यद्यप्यपूर्वोऽवभृथस्तथाऽप्याज्यभागयोस्तत्र सद्भावाद्धोतुश्चाङ्गप्रधानार्थत्वात्तद्वरणमप्यङ्गप्रधानार्थं, न हि दार्शिकं वरणं केवलप्रधानार्थं यज्ञसंयोगाभावात् अतोऽसत्यप्यतिदेशे होतृवरणस्याज्यभागार्थतयाऽस्त्येवावभृथे प्राप्तिरिति युक्तः प्रतिषेध इति । तदिदं भाष्यकारीयमधिकरणव्याख्यानमनुपपन्नमिति मत्वा वार्त्तिककारेण विपर्ययेण पूर्वोत्तरपक्षौ वर्णितौ वाक्यशेषादवभृथलिङ्गाच्च केवलप्रधानार्थो योग इति पूर्वः पक्षः । सिद्धान्तस्तु अग्नेः सर्वार्थत्वात्तद्योगोऽपि सर्वार्थः । न च वाक्यशेषवशाद्विशेषः योगोत्पत्तिविधौ वाक्यशेषाभावात्, तत्र तावत्सर्वार्थत्वङ्गम्यते पञ्चसंख्यागुणविधौ वाक्यशेषः श्रुतः, न चासावुत्पत्तिवाक्यावगतं सर्वार्थत्वमलं निवर्त्तयितुम् । किं च यज्ञ–शब्दो यागमात्रं ब्रवीति न प्रधानयागमात्रम्, अतो न तद्वशात्केवलप्रधानार्थत्वम्, अवभृथे च होतृवरणप्रतिषेधोऽङ्गप्रधानार्थत्वेऽपि सौमिकस्य वरणस्य घटत एव । सौमिकं वरणमानत्यर्थं प्राकृतन्तु होतृवरणं प्रवृत्ते होतरि क्रियमाणमदृष्टार्थम् । अतस्तत्सर्वासु सोमेष्टिषु कार्यमिति द्वादशे वक्ष्यति । तस्माद्युक्तः प्रतिषेधः, द्वादशाहे च प्रत्यहं योगविमोकदर्शनमस्मिन्नेव पक्षे घटते विधानार्थं ह्येतद्वचनं नानुवादमात्रम् आनर्थक्यात्तेन

१ प्रधानापवर्जंविमोक इति भा० ।

सर्वादौ सर्वान्ते च सकृद्योगविमोकयोर्न्यायतः प्राप्तयोर्वचनेनाहरहर्योगविमोकौ विधीयेते। तस्मात्सर्वार्थो योगः सर्वापवर्गे विमोकः । सूत्राणि तु तन्त्ररत्न एवास्माभिर्व्याख्यातानीति नेह व्याख्यायन्ते ॥

उपसत्कालस्य सुब्रह्मण्याह्वानस्य भेदेनानुष्ठानाधिकरणम् ।

सू० सुब्रह्मण्या तु तन्त्रं दीक्षावदन्यकालत्वात् ॥ १० ॥

ज्योतिष्टोमे ऽस्त्युपसत्कालीनं सुब्रह्मण्याऽऽह्वानं तदहर्गणेषु भिद्यते न वेति संशये प्रधानभेदाद् भेदः अकर्मकालत्वात्तु तन्त्रं, न हीदं प्रधानकालम् ?-उपसत्कालन्तु सकृदेवानुष्ठितमेव सर्वेषामुपकरोतीति तन्त्रम् ॥

पूर्वेण समानमधिकरणम् ।

सू० तत्कालात्त्वावर्तेत प्रयोगतो विशेष[1]संयोगात् ॥ ११ ॥

सुत्याकालमाह्वानं तन्त्रमावापो वेति संशये प्रथमसुत्याकाल एव कृतं सर्वसुत्यानामुपकारकं सत्यप्येकस्य सन्निधिविशेषे यूपाहुतिवदिति प्राप्त उच्यते कर्मकालं ह्येतद् यस्य कर्मणः काले कृतं तदर्थमिति विशेषग्रहणात् तदपवर्गे तत्कृतस्य देवतासंस्कारस्यापवर्गादहरन्तरे पुनः कर्त्तव्यं तस्माच्च तन्त्रम् ॥

देशपात्रर्त्विजामन्यप्रयोगे पूर्वदेशाद्युपादानस्य ऐच्छिकत्वाधिकरणम् ।

सू० लौकिकेषु तु यथाकामी संस्कारानर्थलोपात् स्यात् ॥ १२ ॥

समादिदेशानामृत्विजां स्रुवादीनाञ्च पात्राणां किं प्रयोगेऽन्येषामुपादानम् ? उत तेषामन्येषामुपादानम् ? उत तेषामन्येषां वेत्यनियमः,? इति संदेहे निरिष्टिकोपादाने शिष्टाचारविरोधादन्येषामेवोपादानं नात्र शिष्टाचारविरोधः। एतेषु शिष्टा न पुनरुपादानं वर्जयन्ति, तस्मादनियम इत्यवसितमृत्विक्षु, देशे च पात्रेषु तु चिन्त्यते ॥

---

१ विशेषसंबन्धादिति पा० ।

२ प्राप्तकालमिति पा० ।

पात्राणाम् आकर्मसमाप्ति धारणाधिकरणम् ।

सू० यज्ञायुधानि धार्येरन् प्रतिपत्तिविधानादृजीषवत् ॥ १३ ॥

पात्रेषु किं देशादिवदनियमः ? उत तेषामेवात्तानां धारणम् ? इति नियामकस्याभावादनियमः ? न हि पूर्वप्रयोगे कृतः संस्कारः कश्चित् परेषु उपजीवनीयोऽस्ति यल्लोपभयात्पात्रान्तराणि नोपाददीमहि, । नन्वा, "हिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्चे"ति परिधानीये कर्मणि पात्राणां प्रतिपत्तिर्विहिता तत्परित्यागे लुप्येतातस्तेषामेव धारणं, नेयं पात्राणां प्रतिपत्तिर्यजमानशरीरसंस्कारार्थे दाहे पात्राणां तृतीयया गुणभावावगमात् तेन परित्यज्यापि पूर्वोपात्तानि पात्राण्यभिनवैः परिदह्यमाने नास्ति किं चिद्वैगुण्यं तस्मादनियमः । सिद्धान्त्येकदेशी त्वाह–यद्यपि गुणभावः पात्राणां तथाऽपि धारणं, परित्यागे हि सति मरणस्यानियतत्वात्कदाचित्पूर्वप्रयोगोपयुक्तेषु परित्यक्तेषु उत्तरप्रयोगकालेऽनागते यजमानः प्रमीयेत तत्र यज्ञपात्राभावाद्विगुणोदाहः स्यात्तस्मादवश्यं यावदुत्तरकालं तेषामेव धारणं, धारितेषु च तेषु तैरेव तत्प्रयोगस्यापि सिद्धेर्नान्योपादानम्, एवमतः परमपीत्यान्तद्धारणम्, एवं स्थिते चिन्तान्तरं प्रक्रम्यते किं दर्शपूर्णमासप्रभृति धारणम् ? उत पवमानहविःप्रभृती ? ति, दर्शपूर्णमासयोः सर्वप्रकृतित्वात्तत्रैव पात्राणामुपदेशात् ततः प्रभृति धारणं मन्वानस्योत्तरं पवमानहविःप्रभृतिधारणम् अधारितेषु प्रागेव दर्शपूर्णमासाभ्यां यदि यजमानः प्रमीयेत तदा तस्याहिताग्नेः सतो देहसंस्कारो यज्ञपात्राभावाल्लुप्येत, तस्मात्पवमानहवींष्यारभ्य धारणं स्थितादुत्तरं गुणाभावेऽपि पात्राणां धारणमित्येकदेशिमतं, परमार्थतस्तु प्रतिपत्तिरत्र पात्राणां यद्यपि दाहे गुणभावस्तृतीयया ऽवगम्यते तथाऽपि दक्षिणे हस्ते जुहूमासादयतीति द्वितीयानिर्देशादासादनं प्रतिपत्तिः, तेन यद्यप्यभिनवैरपि दाहस्यावैगुण्यं तथाऽऽप्यासादनरूपा प्रतिपत्तिर्मालोपीत्याद्यानामेव धारणं, तस्मात्सर्वकर्मणां सर्वप्रयोगाणां च तन्त्रं पात्राणि ॥

सर्वसोमानामुपरिष्टात् प्राजापत्यप्रचाराधिकरणम् ।

सू० उपरिष्टात्सोमानां प्राजापत्यैश्चरन्तीति सर्वेषामविशेषादवाच्यो हि प्रकृतिकालः ॥ १४ ॥

वाजपेये श्रूयते "सप्तदश प्राजापत्यान् पशूनालभत" इति तान्प्रकृत्य श्रूयते "उपरिष्टात्सोमानां प्राजापत्यैश्चरन्ती"ति तत्र विचार्यते किमार्भवकाले प्रचरितव्यम् ? उत शस्त्रवतां सोमानामुपरिष्टात् ? उत विकारस्थाने ? अथ सर्वसोमानामुपरिष्टादि? ति, तत्र चोदकानुग्रहादार्भवकाले प्रचार इति ब्रूम. प्रकृतावार्भवकाले प्रचारो दृष्टः प्रकृतिवदिहापि कर्त्तव्यः आर्भवकालश्च केषाञ्चित्सोमानामुपरिष्टाद्भवतीति नास्ति वचनविरोध इति पूर्वः पक्षः, मैवं तथा सति चोदकेनैव तत्कालस्य सिद्धत्वाद्वचनमनर्थकं स्यात्, तस्माच्छस्त्रवतां सोमानामुपरिष्टात् तथा हि प्रकृतिकालप्रत्यासत्तिर्लभ्यत इति द्वितीयः । न प्रधानप्रत्यासत्तिमात्रेण चोदकानुग्रहो भवति तस्माद्विकारस्थाने प्रचारो ऽग्निष्टोमप्रचारादूर्ध्वं तत्खल्वागन्तुकानामुक्थ्यादीनां विकाराणां स्थानं प्राजापत्यप्रचारश्चागन्तुकविकारः, तस्मात्तत्र स्यादिति तृतीयः पक्षः, सोमविकाराणामेतत्स्थानं न पशुविकाराणां, प्राजापत्यप्रचारश्च पशुविकारस्तस्मान्न तत्स्थानं सामान्यतो दृष्टं चैवंजातीयकेषु प्रमाणं, तस्माद्वचनस्याविशेषप्रवृत्तेः सर्वसोमानाम् उपरिष्टादिति सिद्धान्तः। आर्भवकालप्रचारे क्रतुपशूनां प्राजापत्यानां चैककालः प्रचार इति मनोतायै हविषो ऽवदीयमानस्यानुब्रूहीति मनोता सूक्तानुवचनं तन्त्रं, सिद्धान्ते तु कालभेदादावाप इति सङ्गतिः ॥

सवनीये पुरोडाशे देवतोत्कर्षाधिकरणम् ।

सू० उत्कर्षे सूक्तवाकस्य न स्व[१]नीयदेवतानामुत्कर्षः पश्वङ्गत्वाद्यथा निष्कर्षे ऽनन्वयः ॥ १५ ॥

सवनीयपशौ प्राकृतस्य सूक्तवाकस्य विकृतस्य पाठः, स चानुयाजोत्कर्षादाग्निमारुतादूर्ध्वमुत्कृष्यते तत्र सवनीयपुरोडाशदेवताः कीर्त्यन्ते भृज्जानिन्द्रापहरिवते धाना इत्यादिपाशुकं च तन्त्रं पुरोडाशे प्रसज्यत इति वक्ष्यते, तत्र संशयः किमुत्कृष्यमाणे सूक्तवाके पुरोडाशदेवतानामुत्कर्षो ने? ति "प्रासङ्गिकं च नोत्कर्षे"दिति न्यायेन दाक्षिणाग्निकहोमयोरिव

१ सोमदेवतानामुत्कर्म इति पा० ।

हविर्विदादिपदानामनुत्कर्षप्राप्तौ उच्यते तन्त्रपदापेक्षित्वादेषामुत्कर्षः, न हि भृज्ज्यानिन्द्राय धाना इत्येतावन्मात्रं प्रयोगार्हम्, अग्निमद्यहोतारमवृणीताय सुन्वत्यजमान इति तन्त्रपदमपेक्ष्यैषामर्थप्राप्तिः तच्च तन्त्रपदयांशुकमुत्कृष्यते, अतस्तदपेक्षाणां पुरोडाशदेवतापदानामप्युत्कर्षः, तैश्चोत्कृष्टैरपि सवनीयदेवता एव प्रकाश्यन्ते इति न लिङ्गविरोधः । पूर्वं प्राजापत्यप्रचारस्योत्कर्षेऽभिहिते प्रसङ्गात्सवनीयदेवतानामुत्कर्षः प्रतिपाद्यते इति सम्बन्धः ॥

इति शास्त्रदीपिकायामेकादशस्य तृतीयः पादः ॥

## अथैकादशस्य चतुर्थः पाद आरभ्यते ॥

राजसूये आग्नावैष्णवादिकेऽङ्गानां भेदेनानुष्ठानाधिकरणम् ।

सू० चोदनैकत्वाद्राजसूयेऽनुक्तदेशकालानां समवायात्तन्त्रमङ्गानि ॥ १ ॥

राजसूये यान्यनुक्तदेशकालानि दक्षिणाभेदवन्ति कर्माणि यथा-"ग्नावैष्णवमेकादशकपालं निर्वपति वामनो दक्षिणा सोमापौष्णं चरुं निर्वपति श्यामो दक्षिणे"ति किमेवंजातीयकेषु तन्त्रमङ्गानि? उत प्रतिदक्षिणं तन्त्रभेद? इति, तत्र "देशकालफलाभेदादङ्गानां तन्त्रता भवेत् । कर्तृभेदोऽपि नैवास्ति दक्षिणामात्रभेदतः ॥ शक्यते हि तेभ्य एव कर्तृभ्योऽन्या दक्षिणा दातुं तस्मादेकतन्त्र्यम्, उच्यते दक्षिणाभेदात्कर्तृत्वमपि भिद्यते "तदानतानां कर्तृत्वादानतेश्च पृथक्त्वतः । दक्षिणाभेदादानतिभेदस्तद्भेदात्तत्कृतस्य रूपस्य भेदः वामनानतैर्हि पूर्वं कर्म कर्त्तव्यं श्यामानतैरुत्तरं तन्त्रत्वे तु उभाभ्यामानता उभयं कुर्युः, तत्र दक्षिणाव्यवस्था गम्यमाना बाध्येत, तस्मात्प्रतिदक्षिणं तन्त्रभेदः ॥

राजसूये कर्तुस्तन्त्रताऽधिकरणम् ।

सू० अनियमः स्यादिति चेत् ॥ २ ॥

दक्षिणाभेदात्कर्तृरूपं भिद्यते इत्युक्तम्, इदानीं कर्तृत्वाधिष्ठानभूताश्चिन्त्यन्ते किं ये पूर्वे प्रवृत्तास्त एवान्त्यात्कुर्युः? उत ते वाऽन्ये वे? ति तद-

र्थमिदं विचार्यते किं सर्वकर्मणामृत्विग्वरणम् तन्त्रम् ? उत भेदेने ? ति तत्र दक्षिणाभेदात्[1]प्रयोगाणां भेदात्तदङ्गभूतस्य वरणस्यापि भेदः यस्मिन्कर्मणि ये वरणभरणाभ्यामुपात्तास्ते तदपवर्गेऽपवृक्ता लौकिका भवन्ति तत्र पुनर्वरणसंस्कार आधातव्यः कर्मान्तरार्थं तदाधाने चाविशेषात्ते वाऽन्ये वेति प्राप्ते ब्रूमः सर्वस्य राजसूयस्यैकफलत्वाद्युगपत्सर्वचिकीर्षा, चिकीर्षितार्थं च सहायवरणं, तस्मादग्रहमाणविशेषत्वात्सर्वकर्मणां राजसूयावयवभूतानां तन्त्रं वरणमिति उपक्रमवृत्ता एवान्तात्कर्तारः। ननु सत्यप्येकफलत्वे देशकालकर्तृभेदादिष्टिपशुसोमानां भिन्ना एव प्रयोगाः, बार्हस्पत्यं चरुं निर्वपति ब्रह्मणो गृहे ऐन्द्रमेकादशकपालं राजन्यस्य गृहे इत्यादिदेशभेदः, षडेव पूर्वेद्युर्निरुप्याणि षडुत्तरे द्युरिति कालभेदः, दक्षिणाभेदाच्च कर्तृभेदः तदेवं भिन्नेषु प्रयोगेषु यस्मिन्कर्मणि प्रयुयुक्षिते वरणमनुष्ठितं तदर्थमेवैतदिति विशेषग्रहणाच्चास्ति तन्त्रत्वं, न हि पवित्रारम्भसमयेनैकेष्टिव्यवहितस्याभिषेचनीयस्य प्रयोग उपस्थितो येन तदेव तस्यापि वरणं स्यात् न ह्यकर्मकालं यूपच्छेदनवत् प्रकृतावृत्त्विग्वरणं येन सर्वकर्मार्थं स्यात् कर्मकालत्वे तु तद्भेदात् पौर्णमास्यमावास्ययोरिव सत्यप्येकफलत्वे भेदेनैव वरणमृत्विजश्च, तस्मादनियमो ज्यायान्, भाष्यकारमते च सौमिकवरणस्य यज्ञसंयोगेन केवलप्रधानार्थत्वादग्नियोगविमोकवत् विस्पष्टमेव भेदेन प्रत्यहं वरणमित्यनाशङ्कनीयमेव तन्त्रत्वं, सत्यमेवमङ्गभूतस्य वरणस्य भेदः। यत्तु लौकिकं वरणं तस्य तन्त्रत्वमस्माभिरुच्यते यजमानो हि लौकिकप्रार्थनमृत्विजां कुर्वन् सर्वराजसूयोद्देशेन कुर्यात् लाघवादविघ्नसमाप्तये च, अन्यथा ह्येककर्मार्थं प्रार्थिताः कदाचित्तत्समाप्तौ ते न याजयेयुरन्ये च न लभ्येरन् तत्र कर्मविघ्नो भवेत्। निरन्तरप्रयोगाणि च राजसूयकानि कर्माणि दर्शपूर्णमासवदौदासीन्यं मध्ये न लभन्त इति त एवान्तादविघ्नसमाप्त्यर्थमवश्यं स्थापनीया इत्येतावानभिप्रायः॥

१ दक्षिणाभेदेन प्रयोगाणां भिन्नत्वादिति पाठान्तरम्।

२ देशेनैव कर्तुमर्हतीति पाठान्तरम्।

अवेष्टावङ्गानां भेदाधिकरणम् ।

सू॰ अवेष्टौ त्वैकतन्त्र्यं स्याल्लिङ्गदर्शनात् ॥ ३ ॥

राजसूये ऽवेष्टिर्नामेष्टिः "आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणे"त्यादि पञ्चहविष्का सा चेयमीश्वरो वा एष दिशो ऽनून्मदितोर्यद्दिशो ऽनुव्यवस्थापयन्ति दिशामवेष्टयो भवन्ति दिक्ष्वेव प्रतितिष्ठन्त्यनुन्मादायेत्येवं दिग्व्यवस्थापने निमित्तोन्मादपरिहारतया श्रूयमाणा राजसूयान्तर्गतेति तावदविवादं, राजसूये हि दिशो व्यवस्थापयन्तीति दिग्व्यवस्थापनं विहितम् अतो नैवं भ्रमितव्यम् "एतयान्नाद्यकामं याजयेदिति" प्रत्यक्षया विशेषश्रुत्या ऽन्नाद्यसंयोगाच्च प्रकरणापेक्षिण्या सामान्यरूपया च स्वाराज्यकामगतयजतिचोदनयेयं गृह्यत इति, तस्या एव बहिः प्रयोगो ऽपि श्रूयते "यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिं हुत्वा तमभिघारये"दिति ततश्चैतया ऽन्नाद्यकामं याजयेदिति बहिः प्रयोगस्य फलापेक्षत्वात्तेन सम्बध्यते, क्रतुमध्यप्रयोगस्य तु स्वाराज्यं फलम् इत्युभयोः फलयोर्भिन्नविषयत्वेनाविरोधः, तदेवं स्थिते क्रतुमध्यस्थायामवेष्टौ चिन्त्यते पञ्चापि हवींषि समानतन्त्राणि न वेति तत्र सत्यपि दक्षिणाभेदे बार्हस्पत्यं मध्ये निधायेति मध्ये निधानविध्यनुपपत्त्या समानतन्त्रत्वम् ॥ ननु ब्राह्मणादिसंयुक्ते बहिः प्रयोगे मध्ये निधानं न क्रतुमध्यप्रयोगे सत्यं, तथा ऽप्यन्तः प्रयोगे ऽप्यैकतन्त्र्यं यथोत्पन्नाया एव हि दक्षिणाभेदयुक्तायाः क्रतुमध्य इव बहिरपि प्रयोगः, तत्र[1] यदि दक्षिणाभेदान्नाना तन्त्रत्वं स्यात् बहिः प्रयोगे ऽपि स्यात्, तत्र मध्ये निधानमत्यन्तानुपपन्नमथ तदनुरोधेन समानतन्त्रत्वमङ्गीकृत्य दक्षिणाभेदः कथं चिदेकस्मिन्नपि प्रयोगे तत्तत्प्रधानोद्देशेन दानात् समर्थ्यं तथा क्रतुमध्ये ऽपि स्यात् अवेष्टिरिति चैकनिर्देशः समानतन्त्रतां गमयति, तस्मात्समानतन्त्रत्वं नैवम् उत्पद्यमानान्येतानि दक्षिणाभेदसंयुक्तान्युत्पद्यन्ते राजसूयार्थत्वेन चैषामुत्पत्तिः, ईश्वरो वा एष दिशोनून्मदितोरित्युपक्रम्य-

१ तत्रब्रवीत्यपि पाठान्तरम् ।

विधानात् दक्षिणाभेदादुत्पत्तिसमय एवैतानि नानातन्त्राणि क्रतुमध्ये प्रयोक्तव्यानीति निर्णीतं, पश्चात्तु ब्राह्मणादीनां बहिः प्रयोज्यानीति विधीयमानानि मध्ये निधानविधानान्यथानुपपत्त्या एतयाऽन्नाद्यकाममिति च प्रयोगवचनैक्यात्समानतन्त्राणि गम्यमानानि दक्षिणाभेदमुज्झित्वा समानतन्त्राणि भवन्ति, क्रतुमध्ये तु दक्षिणाभेदान्नानातन्त्राणीति नावश्यमैकरूप्यम् ॥

पवमानेष्टिहविषां भेदेनानुष्ठानाधिकरणम् ।

सू० पवमानहविःष्वैकतन्त्र्यं प्रयोगवचनैकत्वात् ॥ ४ ॥

सन्त्याधाने पवमानहवींषि "अग्नये पवमानायाग्नये पावकायाग्नये शुचय" इति तान्यधिकृत्य श्रूयते अह्ना निरूप्याणि सर्वाणि सह निरूप्याणीति तथा यः कामयेतोत्तरोत्तरं वसीयान् श्रेयान् स्यामिति तस्याग्नये पवमानाय निरूप्य पावकशुचिभ्यामुत्तरे हविषी समानबर्हिषी निर्वपेदिति तदिह काम्ये प्रयोगे चिन्त्यते किं सर्वाणि समान तन्त्राणि ? उत प्रथममुत्तरं च द्वयं नाना तन्त्र ? मिति तत्राह्नो निरूप्याणि सह निरूप्याणीति वचनात्समानतन्त्रत्वं न च यः कामयेतेत्यनेन वचनेन प्रयोगभेदः नह्येकं वाक्यप्राप्तानां पवमानहविषां फलार्थतां प्रयोगभेदं च शक्नोति विधातुमिति भ्रान्तः काम्येऽपि समानतन्त्रतामाह । सिद्धान्तस्तु न हविषां काम्ये विधिः तदाश्रितस्तु प्रयोगभेद एव दध्यादिवत्कामाय विधीयते, तस्माद्वसीयस्त्वं कामयमानः प्रथमं पृथङ् निरूप्य पश्चादुत्तरे समानतन्त्रे कुर्यात् ॥

द्वादशाहे दीक्षोपसत्सुत्यानां प्रत्येकस्य द्वादशदिनताधिकरणम् ।

सू० द्वादशाहे तत्प्रकृतित्वादेकैकमहरपवृज्येत कर्मपृथक्त्वात् ॥ ५ ॥

द्वादशाहे "द्वादश दीक्षा द्वादशोपसद" इति श्रूयते तत्र विचार्यते किमेकैकमहः पृथक् द्वादश दीक्षोपसद्युक्तं कृत्वा द्वादश पञ्चविंशतिरात्राः कर्त्तव्या ? उतैकैकमहः सद्य एव दीक्षोपसद्युक्तं निर्वर्त्य द्वादशस्वहःसु द्वादशसाद्यस्क्राः कर्त्तव्याः ? अथ वा द्वादशस्वेवाहस्सु चतुरहे दीक्षाश्चतुरहे चोपसदश्चतुरहे सुत्याः सम्पाद्याः आहोस्विद्दीक्षोपसत्सुत्यानां स्वस्थाने विवृद्धिस्ततो द्वादशसु अहःसु दीक्षा 'द्वादशसूपसदः द्वाद-

शसुत्या इत्येवं षड्त्रिंशताऽहोभिः समाप्तिरिति तत्रैकैकस्य यागस्य ज्योतिष्टोमप्रकृतित्वात्तद्वशेनैकैकं सदीक्षोपसत्कं कर्तव्यं द्वादशसंख्या च दीक्षागतोपसद्गता च प्रत्येकमेवाङ्गन्तस्माद् द्वादश पञ्चविंशतिरात्राद्वा-दशाहशब्दस्य नामत्वादिति प्रथमपक्षः सत्यमेकैकं सदीक्षोपसत्कं कर्त्तव्यं न तु द्वादशाहशब्दो नामधेयं गुणविधिस्त्वसौ तेन द्वादशस्वेवाहःसु द्वादशानामपि यागानां सदीक्षोपसत्कानां निर्वर्तनात् द्वादश साद्यस्क्रा इति द्वितीयः पक्षः, गृह्णीम एतत् द्वादशाहशब्दो गुणविधिरिति न त्वेकैकं पृथक्साङ्गं कर्त्तव्यम् एकेन विधिना एकस्मिन् फले विनियुक्तानां सह कर्त्तव्य-त्वावगमात् तन्त्रमङ्गान्यसुत्याकालानि तेन तन्त्रेण सर्वेषां दीक्षोपसदः कार्याः द्वादशाहशब्दस्य गुणविधित्वात् द्वादशस्वेवाहःसु सर्वं सम्पादनीयं तेन चतुरहे दीक्षाश्चतुरहे चोपसदश्चतुरहे च सुत्या इति तृतीयः पक्षः, युक्तमेव तन्त्रं दीक्षोपसदामिति न तु द्वादशाहशब्दो गुणविधिः नामधेयत्वं तु यजिसामानाधिकरण्यात् द्वादशदीक्षा इति विधानात्, द्वादशसु अहस्सु दीक्षास्तथोपसदस्तन्त्रेण कृत्वा ततो द्वादशस्वहस्सु सुत्याः कार्याः द्वादशाह इति च नामधेयं प्रधानकालनिमित्तमित्यविरुद्धं, तस्मात् षड्त्रिं-शताहोभिः समाप्तिः ॥

प्रधानैरपृथक्कालानामङ्गा-नां भेदेनानुष्ठानाधिकरणम् ।

सू० भेदस्तु तद्भेदात्कर्मभेदः प्रयोगा[1]-त्स्यात्तेषां प्रधानशब्दत्वात् ॥ ६ ॥

यानि सुत्याकालान्यङ्गानि यथा सवनीयः पशुः सवनीयाः पुरोडा-शास्तानि किं द्वादशानां यागानां तन्त्रम्? उतावाप? इति संशये प्रयोगै-क्यात्तन्त्रत्वे प्राप्ते प्रधानकालत्वादेषां यस्य काले यदनुष्ठितं तत्तदर्थमिति विशेषग्रहणात्तदपवर्गे तस्यापवर्गादन्यस्मिन्नहनि प्रधानान्तरार्थं पुनः करणेन भवितव्यम् ॥

उपसत्काले सुब्रह्मण्याह्वा-नस्याविकारेण कर्तव्यताधि-करणम् ।

सू० सुत्याविवृद्धौ सुब्रह्मण्यायां सर्वे-षामुपलक्षणं प्रकृत्यन्वयादाबाद्व-मवत् ॥ ७ ॥

१ प्रयोगे स्यादिति पाठान्तरम् ।

प्रकृतावुपसत्कालं सुब्रह्मण्याह्वानं श्रूयते इत्यहः सुत्यामागच्छ मघवन्निति ब्रूयादिति, इति करणेन च संख्योच्यते चतुरहे त्र्यहे सुत्यामागच्छ मघवन्निति ब्रूयादित्यर्थः तदिदमङ्गमेककालत्वात् द्वादशाहे तन्त्रमित्युक्तं तस्मिंस्तन्त्रेण क्रियमाणे किं सर्वेषामह्नां पृथक् पृथक् उपलक्षणं त्रयोदशाहे, चतुर्दशाहे आगच्छेति एवमहःशब्दस्यैकधा—शब्दस्यैवाभ्यासात्मक ऊहो भवति? उताविकारेण प्रयोग? इति, ननु सिद्धान्तेऽप्यस्त्येव विकारः प्रकृतौ चतुरहे सुत्यामित्युक्तम्; इह तूपसदन्हां द्वादशसंख्यया विवृद्धत्वात् त्रयोदशाह इति वक्तव्यं, सत्यं, तथापि नास्त्यूहः सिद्धान्ते, पूर्वपक्षे त्वहःशब्दस्याभ्यासात्मक ऊहो भवति सिद्धान्ते तु तस्य तन्त्रत्वादविशेषादविकारः तत्र प्रकृतौ सौत्यस्याह्न उपलक्षितत्वादिहापि तानि सर्वाणि तान्युपलक्षणीयानि, न चाहःशब्देनागृह्यमाणविशेषत्वात्सर्वोपलक्षणं सिध्यतीति वाच्यं संख्याशब्देन विशेषग्रहणात् त्रयोदशाह आगच्छेत्युक्ते प्रथमस्यैवाह्न उपलक्षणं न द्वितीयादेस्तस्मादावृत्तिः, सुत्यामागच्छ मघवन्नित्येवं सुत्यासम्बन्धिदेवतासंस्कारमात्रं विवक्षितं संख्याशब्दोऽहःशब्दश्चार्थसिद्धत्वादविवक्षितनिर्देशमात्रम्, अतः सकृदेव वक्तव्यं तन्त्रम् ॥

वाजपेये प्राजापत्येषु शूलादीनां तन्त्रताऽधिकरणम् ।

सू० पशुगणे कुम्भीशूलवपाश्रपणीनां प्रभुत्वात्तन्त्रभावः स्यात् ॥ ८ ॥

एकदेवत्येषु प्राजापत्यपशुषु कुम्भीहृदयशूलवपाश्रपणी च तन्त्रं विभवादित्युत्तरविवक्षया प्राप्यते ॥

भिन्नदेवताकेष्वपि शूलादीनां तन्त्रताऽधिकरणम् ।

सू० भेदस्तु संदेहाद् देवताऽन्तरे स्यात् ॥ ९ ॥

ये तु भिन्नदेवत्या एकजातीयाः पशवस्तेषु किं कुम्भ्यादीनां भेद? उतात्रापि तन्त्र? मिति सन्देहे सह श्रपितेषु कस्यै देवतायै किमवदेयमिति अविज्ञानात्कदाचिदन्यस्यै उपाकृतात्पशोरन्यस्यै देवतायै अवदीयेतापि तस्माद्भेदः। चिह्नकरणेनापि तु शक्यते कर्त्तुं विवेकः, तस्मात्साहित्यलिप्सया तन्त्रत्वम् । ननु वसानां चिह्नकरणासम्भवात्सर्वासां स्व-

स्वे याज्यार्द्धर्चान्ते होमसिध्यर्थं भेदेनैव कुम्भी स्यात् नैवमेकीभूतानामपि वसानां स्वे स्वे याज्यार्द्धर्चान्ते हूयमानानां न किंचिद्वैगुण्यन्तस्मात्तन्त्रम् ॥

भिन्नजातिषु कुम्भ्यादीनां भेदेनानुष्ठानाधिकरणम्।

सू॰ जात्यन्तरेषु भेदः स्यात्पक्तिवैषम्यात् ॥ १० ॥

नानाजातीयेष्वैकादशिनादिषु "आग्नेयः कृष्णग्रीवः सारस्वती मेषी"त्यादिष्वपि पूर्ववत्तन्त्रत्वं न पक्तिवैषम्यात्। केचिद्धि पशवः शीघ्रं सिध्यन्ति केचिच्चिरेण तत्र सह श्रपणे केषांचिदशृतत्वं विलयो वा स्यात् तस्मात्तन्त्रभेदः ॥

अश्वप्रतिग्रहेष्ट्या प्रतिपुरोडाशं कपालचतुष्कभेदाधिकरणम्।

सू॰ कपालानि च कुम्भीवत्तुल्यसङ्ख्यानाम् ॥ ११ ॥

"यावतो ऽश्वान्प्रतिगृह्णीयात्तावतो वारुणांश्चतुःकपालान्निर्वपेदि"ति श्रुतं, तत्र यदा बहुष्वश्वेषु प्रतिगृहीतेषु बहवः पुरोडाशाः प्रयुज्यन्ते तदा किं तन्त्रेण चत्वारि कपालानि स्युः? उत प्रतिपुरोडाशं चत्वारी?ति सन्देहे दीर्घेषु चतुर्ष्वेव कपालेषु सर्वपुरोडाशानां श्रपणसम्भवात्तन्त्रत्वप्राप्तावुच्यते कपालावयवस्य कपालशब्दवाच्यत्वाभावात् तन्त्रत्वे च सर्वेषां कपालावयवेषु श्रपणाच्चैकोऽपि चतुः कपालःस्यात् यावत्कपालं चाभिप्रथन्नं प्रकृतितः प्राप्तं तच्च तन्त्रत्वे सति न सम्पादयितुं शक्यं तस्मात्प्रतिपुरोडाशं कपालभेदः ॥

व्रीह्यवहननादौ प्रतिप्रहारं मन्त्रस्यानावृत्त्यधिकरणम्।

सू॰ एकद्रव्ये संस्काराणां व्याख्यातमेककर्मत्वं तस्मिन्मन्त्रार्थनानात्वादावृत्तौ मन्त्रस्य सकृत्प्रयोगः स्यात् ॥ १२ ॥

दर्शपूर्णमासयोरवघातमन्त्रः "अवरक्षो दिवः सपत्नं बध्यासमिति अवहन्ती"ति स किं प्रतिप्रहारम्भेदेन प्रयोक्तव्यः? उत सकृदेव सर्वादौ? विति विचारे प्राप्ते प्रत्येकं प्रहाराणामवघातशब्दवाच्यत्वादवघातमन्त्रत्वाच्च

मन्त्रस्य प्रधानावृत्तेरावृत्तिः, मैवं न ह्यत्र प्रधानावृत्तिरवघातकरणिका हि तण्डुलभावना व्रीहीनवहन्तीत्यत्र विधीयते तच्छेषश्चायं मन्त्रविधिस्तेन तण्डुलभावनाम्प्रति करणीभवतोऽवघातस्य मन्त्रोऽङ्गं न च तद्रूपस्यावृत्तिः, न हि प्रतिप्रहारं भेदेन तण्डुलाः क्रियन्ते साभ्यासेन हि ते निष्पद्यन्ते न च तादृशस्यावृत्तिऽस्तस्मात्सकृदेव मन्त्रः ॥

नानाबीजेष्टौ प्रतिप्रहारं मन्त्रावृत्त्यधिकरणम् ।

सू० द्रव्यान्तरे कृतार्थत्वात्तस्य पुनः प्रयोगान्मन्त्रस्य च तद्गुणत्वात्पुनः प्रयोगः स्यात्तदर्थेन विधानात् ॥ १३ ॥

नानाबीजेष्वग्नये गृहपतयेऽष्टाकपालं निर्वपति कृष्णानां व्रीहीणां सोमाय वनस्पतये श्यामाकं चरु"मित्यादिषु किं सर्वेषामवघातमन्त्रस्तन्त्र? मुत प्रतिबीजमावर्त्तेत? इति संशये सर्वावघातचिकीर्षायां प्रयुक्तस्य मन्त्रस्यागृह्यमाणविशेषत्वात्तन्त्रत्वं सत्यं, यदि न गृह्येत विशेषः सन्निपातित्वादवघातस्य समन्त्रस्यातिदेशाद्यस्मिन्नेव बीजे मन्त्रः प्रयुक्तस्तस्यैव मन्त्रकृतः संस्कारोऽनान्यस्येति विशेषग्रहणाद्बीजान्तरे पुनः प्रयोक्तव्यः ॥

दर्शपूर्णमासादौ प्रतिनिर्वपणादि मन्त्रावृत्त्यधिकरणम् ।

सू० निर्वपणलवनस्तरणाज्यग्रहणेषु चैकद्रव्यवत्प्रयोजनैकत्वात् ॥ १४ ॥

दर्शपूर्णमासयोश्चतुरो मुष्टीन्निर्वपति अयुग्वा युग्वा मुष्टीर्लुनाति त्रिधा तु पञ्चधा तु वा वेदिं स्तृणाति चतुर्जुह्वां गृह्णाती"ति श्रूयते, तत्रमन्त्राः देवस्य त्वा सवितुः प्रसवे बर्हिर्देवसदनं दामि ऊर्णाम्रदसं त्वास्तृणामि शुक्रं त्वा शुक्रायामिति किमेते सकृत्प्रयोक्तव्या? उत प्रतिमुष्टि प्रतिधातु प्रत्याज्यं भेदेने? ति सन्देहे ससंख्यानामेककर्मत्वादवघातमन्त्रवत् मन्त्राणां सकृत्प्रयोगप्राप्तौ उच्यते युक्तमवघाते तत्र हि त एव व्रीहयः पुनः पुनरवहन्यन्ते, तेन सकृत्प्रयुक्तेनैव मन्त्रेण सर्वव्रीहीणां समन्त्रकावघातलाभान्न पुनः प्रयोगस्य कारणमस्ति, निर्वापादिषु पुनरन्येऽन्ये व्रीहयो दर्भा आज्यञ्च प्रतिमुष्टि प्रतिप्रस्तरणं प्रतिग्रहणं च निरूप्यन्ते

लूयन्ते स्तीर्यन्ते गृह्यन्ते च, ततश्च यत्रैव मन्त्रः प्रयुक्तस्तत्रैव तत्कृत-संस्कारलाभात्सर्वेषां तल्लाभाय मुष्ट्यादिषु भेदेन मन्त्राः॥

वेदिप्रोक्षणे प्रत्यावृत्ति मन्त्रानावृत्त्यधिकरणम्।

**सू॰ वेदिप्रोक्षणे मन्त्राभ्यासः कर्मणः पुनः प्रयोगात्॥ १५॥**

दर्शपूर्णमासयोः श्रूयते "वेदिरसि बर्हिषा त्वे"ति त्रिर्वेदिं प्रोक्षतीति तत्र किं प्रत्यभ्यासं मन्त्रावृत्तिः? उत सकृदेवादौ मन्त्रः? इति संशये प्रोक्षणार्थत्वान्मन्त्रस्य प्रोक्षणस्य च सङ्ख्यया भिन्नत्वात्प्रतिप्रधानञ्च गुणानामावृत्तेः प्रत्यभ्यासमावृत्तिः, किं चानेन मन्त्रेण त्रिः प्रोक्षतीति वचनाद्विस्पष्टं मन्त्रावृत्तिर्गम्यते, उच्यते नैवं सम्बन्धः अनेन मन्त्रेण त्रिरिति किन्तु मन्त्रस्य करणत्वात् क्रियया सम्बन्धोऽनेन प्रोक्षतीति त्रिरभ्यासोऽपि क्रियाया एवाङ्गं तेन मन्त्रवदावृत्तिमच्च कर्त्तव्यं, न चात्र क्रियाभेदः किं त्वेकैव क्रिया आवृत्तिधर्मिका, क्रियावृत्तौ हि सुज्विधीयते न क्रियाभेदे, तस्मात्सकृदेव मन्त्रः॥

कण्डूयनमन्त्रस्य सकृत् प्रयोगाधिकरणम्।

**सू॰ कण्डूयने प्रत्येकं[1], कर्मभेदात् स्यात्॥ १६॥**

ज्योतिष्टोमे श्रूयते "कृष्णविषाणया कण्डूयत" इति तत्र मन्त्रः "कृष्णे-त्वासुसस्यन्या" इति तत्र यदाऽनेकेषु पाण्याद्यङ्गेषु युगपत्कण्डूरुत्पद्यते तदा किं प्रत्यङ्गं मन्त्रावृत्तिः? उत सकृदि? ति सन्देहे कण्डूयनकर्मणस्तदपनेयस्य दुःखस्य दुःखापनयनसंस्कार्याणामङ्गानां च भिन्नत्वात्प्रत्यङ्गमावृत्तिस्तन्त्रत्वे हि यस्मिन्नेवाङ्गे मन्त्रः प्रयुक्तस्तदर्थः स इति विशेषग्रहणादङ्गान्तराणां मन्त्रकृतसंस्कारहानिः स्यात्, सत्यन्दुःखानि भिन्नानि न तु दुःखापनयनं स्वरूपेण चिकीर्षितं नाप्यङ्गसंस्कारः, येन तद्भेदाद्भेदः स्यात्, किं त्वात्मानं कण्डूदुःखविक्षिप्तचित्तमपनीतकण्डूदुःखं कर्त्तुं कण्डूयनं क्रियते, तेन यावता दुःखेनानपनीतेनात्मनि दुःखं भवति, तावत्सर्वमप-

[1] प्रत्यङ्गमिति पा॰।

नेतुमभिसन्धाय कण्डूयनमुपक्रममाणेन प्रयुक्तो मन्त्रो गृह्यमाणविशेषत्वात्तन्त्रं भवति ॥

ज्योतिष्टोमे स्वप्नादिषु मन्त्रानावृत्त्यधिकरणम् ।

सू० स्वप्ननदीतरणाभिवर्षणामेध्यप्रतिमन्त्रणेषु चैवम् ॥ १७ ॥

ज्योतिष्टोमे स्वप्नार्थो मन्त्र "त्वमग्ने व्रतपा असी" ति तथा नदीतरणमन्त्रो देवीरापो अपां नपादिति तथाभिवृष्टस्य उन्दतीर्बलं धत्त इति तथा अमेध्यप्रतिमन्त्रणमन्त्रः "अबद्धं मनो दरिद्रञ्चक्षु" रिति, तत्र संशयः यदा दीक्षितः पुनः पुनः प्रतिबुध्य स्वपिति अनेकस्रोतसं नदीं वा तरति सन्तानेन चाभिवृष्यते युगपच्चानेकानि अमेध्यानि पश्यति तदा किं मन्त्राणामावृत्तिः? उत सकृत्प्रयोगः? इति विशेषग्रहणादावृत्तिप्राप्तावुच्यते सर्वां रात्रिं निद्रामभिसन्धाय मन्त्रं प्रयुङ्क्ते तथा नदीं वृष्टिं च नावान्तरनिद्रां नाप्येकं स्रोतसन्तथा वर्षधारां तस्मात्सकृत्प्रयोगः, अमेध्येषु तु कालभेदाभावाद्विस्पष्टमगृह्यमाणविशेषत्वम् ॥

दीक्षितस्य प्रयाणे मन्त्रानावृत्त्यधिकरणम् ।

सू० प्रयाणे त्वार्थनिर्वृत्तेः ॥ १८ ॥

दीक्षितस्य प्रस्थानार्थो मन्त्रः "भद्रादभिश्रेय" इति, स किं पुनः पुनः विश्रम्य प्रतिष्ठमानेन प्रयोक्तव्य? उत सकृदेवे? ति संशये विशेषग्रहणादावृत्तिं मन्वानस्योत्तरम् आसमीहितप्राप्तेरेकं प्रयाणमिति, तदर्थस्य मन्त्रस्य सकृत्प्रयोगः ॥

उपरवमन्त्रस्यावृत्त्यधिकरणम् ।

सू० उपरवमन्त्रस्तन्त्रं स्याल्लोकवद्बहुवचनात् ॥ १९ ॥

ज्योतिष्टोमे सन्त्युपरवाश्चत्वारस्तेषां खननार्थो मन्त्रः "रक्षोहणो वलगहनो वैष्णवान्खनामी" ति, स किं चतुर्णामपि तन्त्रम्? उत प्रत्युपरवं भिद्यत? इति संशये वैष्णवादीनिति बहुवचनान्तत्वात्सकृदेव प्रयुज्यमानो मन्त्रः सर्वानभिधत्त इति न पुनः प्रयोक्तव्यः, प्रत्येकं हि प्रयोगे बहुवचनमसमर्थं, तस्मात्तन्त्रं नैवं खननक्रियास्तावत् खेयभेदेन भिन्नाः क्रमेणोप-

क्रम्यन्ते न युगपत्, मन्त्रश्च सन्निपाती तेन यस्य खननस्योपक्रमो मन्त्रान्तेन सन्निपतितस्तदर्थ एव मन्त्रो नान्येषामुपरवाणामलमुपकर्तुमेतः प्रातिपदिकमात्रं कारकमात्रं च विवक्षितं, बहुवचनं त्वेकस्मिन्नेव पूजार्थं प्रयुक्तमिति वेदितव्यम् ॥

हविष्कृदादिमन्त्राणामावृत्त्यधिकरणम् ।

सू० हविष्कृदध्रिगुपुरोनुवाक्यामनोता-, तस्यावृत्तिः कालभेदात्स्यात् ॥ २० ॥

ज्योतिष्टोमे अनुसवनं सवनीयाः पुरोडाशाः ते षु चोदकप्राप्तं हविष्कृदाह्वानं तन्त्र? मुत प्रतिसवनभेदेन? तथा वाजपेये प्राजापत्यान् क्रतून् पशूंश्च सहोपक्रम्य यदा प्राजापत्यान् पर्यग्निकृत्वोत्सृज्य ब्रह्मसामन्त्यालभते तदा किं क्रतुपश्वालम्भकाले कृतमध्रिगुवचनं प्राजापत्यानामपि तन्त्रं? उत प्राजापत्यार्थत्वेन ब्रह्मसामकाले पुनरध्रिगुर्वक्तव्यः? तथाऽऽग्नेयं कृष्णग्रीवमालभेत सौम्यं बभ्रुमाग्नेयं कृष्णग्रीवमिति कृष्णग्रीवयोर्भेदेन प्रदाने क्रियमाणे ऽवदाने च किमनुवाक्यायामनोतामन्त्रस्य च तन्त्रत्वमुतावृत्ति?रिति विचारे सर्वत्रासन्निपातित्वात्प्रयोगवचनानुग्रहाय तन्त्रत्वं, न ह्येतेषां करणवत्सन्निपातित्वमनुवाक्याऽपि हि याज्याव्यवधानादसन्निपातिन्येव तस्या अगृह्यमाणविशेषत्वात्तन्त्रत्वभ्रान्तिः कस्य चित्स्यात् तद्व्यावृत्त्यर्थमिदं सूत्रं हविष्कृदादीनामावृत्तिः कालभेदेन विशेषग्रहणान्न च प्रयाजवदत्र कालान्तरे कृतः संस्कारः कालान्तरेऽवतिष्ठते येनावृत्तिः स्यात्, प्रकाशनार्थत्वादेषां, यद्यप्येतानि करणवन्न सन्निपातीनि तथाऽपि प्रकाशनार्थत्वात्प्रकाशनस्य च कालान्तरे प्रध्वंसात्तस्मादावर्तेरन् । तन्त्रावापनिमित्तः प्रयोगपरिमाणनिश्चयो वृत्तः । प्रासङ्गिकेः प्रयोगे परिमाणमतः प्रवक्ष्यामः ॥

इति श्रीपार्थसारथिमिश्रकृतौ शास्त्रदीपिकायामेकादशाध्यायस्य चतुर्थः पादः समाप्तः, समाप्तश्चैकादशोऽध्यायः ॥

## अथ द्वादशाध्यायस्य प्रथमः पाद आरभ्यते ॥

अग्नीषोमीयप्रयाजादिभिः पुरोडाशस्योपकाराधिकरणम् ।

सू० तन्त्रिसमवाये चोदनातः समानानामेकतन्त्र्यमतुल्येषु तु भेदः स्याद्विधिप्रक्रमता[1]दर्थ्यात्तादर्थ्यं श्रुतिकालनिर्देशात् ॥ १ ॥

सकृदनुष्ठितमप्यङ्गं बहूनां प्रधानानामेकदेशकालकर्तृकाणां शक्नोत्युपकर्तुमित्येतत्तन्त्रलक्षणोक्तमुपजीव्य किमगृह्यमाणविशेषत्वादेवं [2]भवति? उतास्मा इदमनुष्ठानं नास्मा इत्येवं गृह्यमाणेऽपि विशेषे अन्यार्थेऽप्यनुष्ठितमप्यङ्गमन्यस्यापि देशाद्यभेदे शक्नोत्युपकर्तुं न तादर्थ्येन पुनरनुष्ठातव्यमिति चिन्त्यते इति तन्त्रप्रसङ्गयोर्हेतुहेतुमत्ता अग्नीषोमीये पशावैष्टिको विध्यन्तः प्रवर्तते, तत्र पशुपुरोडाशोऽग्नीषोमीयस्य वपया प्रचर्याऽग्नीषोमीयं पशुपुरोडाशं निर्वपतीति तत्राप्यैष्टिको विध्यन्तः, तत्र चिन्त्यते किं पश्वर्थानुष्ठितान्यङ्गानि पुरोडाशस्य नोपकुर्वन्ति तेन तदर्थं पृथगनुष्ठातव्यानि? उत तैरेवोपकारसिद्धेर्न पृथक् पुरोडाशार्थेनाङ्गानामनुष्ठानमिति, तत्र "अङ्गानि पशुकालानि पश्वर्थानीत्यसंशयम्। अनागते पुरोडाशकाले न हि तदर्थता ॥ अन्यार्थानुष्ठितं चाङ्गं न ह्यन्यस्योपकारकम् ॥ तदर्थेन कृतं तस्य तथा प्रकृतिदर्शनात् ॥ प्रकृतौ हि यदुद्देशेनाङ्गमनुष्ठितं तस्योपकारकं दृष्टम् इहापि नान्यार्थमनुष्ठितमन्यस्योपकरोति । किंच विधीयमानं कर्म कालादौ साङ्गं विधीयते स्वकाले ऽतः पुरोडाशः कार्यः सर्वाङ्गसंयुतः[3] वपाप्रचारकालेऽप्यु[4]पदिष्टातिदिष्टसर्वाङ्गयुक्ते पुरोडाशे कर्तव्यतया विज्ञायमाने को नाम शास्त्रातिक्रमेण प्रधानमात्रमनुष्ठातुं क्षमः, वैगुण्यं च प्रसङ्गसमाश्रयणे स्यात्प्रयाजानन्तर्यं ह्याज्यभागाङ्गत्तदानन्तर्यं च प्रधा-

---

१ विधिप्रक्रमात्तादर्थ्यात्तादर्थ्यमिति पा० ।
२ अगृह्यमाणविशेषत्वादेव वैवं भवतीति पा० ।
३ सर्वाङ्गसंगत इति पा० ।
४ वपाप्रचारकाले ह्युपदिष्टानि इति पा० ।

नाङ्गं प्रकृतिवदतिदेशात्, तदिह पाशुकेषु प्रयाजेषु प्रसज्यमानेषु तदानन्तर्यगुणहानाद्द्विगुणावाज्यभागौ न स्वकार्यं साधयेयाताम्। अथ तु वैकल्पिकत्वात्पशावेवाज्यभागावनुष्ठितौ ततस्तयोरपि प्रसज्यमानयोः पुरोडाशस्य तदानन्तर्यगुणलोपान्न स्वकार्यसाधनत्वं स्यात्, तस्मान्न पाशुकानामङ्गानां पुरोडाशे प्रसङ्ग इति तस्य स्वाङ्गानि पृथक्कर्त्तव्यान्येव॥ "गुणकालकृतं चापि वैगुण्यं भाष्य ईरितम्। तेनापि न प्रसङ्गोऽस्तीत्येवं प्राप्तेऽभिधीयते॥ वितते पाशुके तन्त्रे समाप्तिमगते सति। मध्ये पतन् पुरोडाशस्तत्तन्त्रमुपजीवति॥ चोदकेन पुरोडाशे यो विध्यन्तः समर्पितः। ऐष्टिकः स पशावेव विततो दृश्यते यदा॥ तदा तेनैव संतुष्टः पुरोडाशविधिः स्वयम् प्राकृतानां पदार्थानां न करोत्युपसंग्रहम्॥ पुरोडाशप्रयोगवचनो हि पशुतन्त्रे वि[१]तते तदीयेषु प्रयाजानुयाजाद्यङ्गेषु कृतकरिष्यमाणेषु तत्कार्येषु चोपकारेष्वारब्धारिप्सितरूपेण मनसि विपरिवर्त्तमानेषु तन्मध्ये पुरोडाशभावनां चोदकसमर्पितप्रयाजाद्यङ्गजन्योपकारयुक्तां विदधल्लाघवात्पश्वर्थैरेवोपकारैस्तद्वृत्तामुपजीव्य यान्यङ्गानि पशुतो न लभ्यन्ते तद्युक्तामेव विदधाति, यद्विशिष्टं च प्रधानं विधीयते तेषामेव प्रधानकालत्वं, क्रमश्चाङ्गं भवति, तेन प्रधानमात्रानुष्ठानेऽपि नास्ति शास्त्रातिक्रमः। नापि क्रमलोपाद्वैगुण्यं, तद्धि कार्यस्य प्रयाजादिजन्यस्य कृतत्वात्तन्मात्रस्य च पुरोडाशभावनयोपजीवनाद्भाष्य एव परिहृतम्। नन्वेवं पौर्णमास्यर्थकृताङ्गकृतानामुपकाराणामाफलापूर्वनिर्वृत्तेरवस्थानादमावास्यायां न भूयः प्रयाजादीनि कर्त्तव्यानि स्युस्तत्र त्रयोदशामावास्यायामिति वषट्काराहुतीनामाहवनीयगतानां संख्यादर्शनं नोपपद्यते, तदिदं वारुणप्राघासिकयोर्दक्षिणोत्तरविहारयोर्मिथः प्रसङ्गनिराकरणेन निराकृतं चोद्यं "पौर्णमास्यां पौर्णमास्या यजेत" "अमावास्यायाममावास्यया यजेते"ति द्वे वाक्ये परस्परमनपेक्षमाणे द्वयोः कालयोस्त्रिकस्य त्रिकस्य कृत्स्नाङ्गयुक्तस्य प्रयोगद्वयं विदधाते इति कः प्रसङ्गः प्रसङ्गस्य, प्रसङ्गे हि यथाचोदिताननुष्ठानात् क्रमादिलोपेन वैगुण्यान्नामावास्या स्वकार्यसाधनाय पर्याप्नुयात्, इह त्वन्यस्य तन्त्रे विहिते प्रवृत्तानपवृत्ते च

१ विहिते इति पुस्तकान्तरपाठस्तु चिन्त्यः।

पुरोडाशो विधीयमानः प्रसङ्गमुपजीवतीति वैषम्यम् । यत्तु प्रकृतावनस्योद्देशे-नानुष्ठितान्यङ्गान्युपकारकाणि दृष्टानि इहापि पुरोडाशे तथैव कर्त्तव्यानीत्युक्तं, तदयुक्तं, न हि प्रकृतावुद्देशोऽङ्गस्य विहितत्वात् प्रयाजादिस्वरूपमात्रं त्वङ्गमार्थिकस्तु तत्रोद्देशः । न चार्थिकं चोदकः प्रतिदिशति तस्मादस्ति प्रसङ्गः, अन्यार्थानुष्ठिताङ्गस्यान्येनोपजीवनं प्रसङ्गः ॥

पुरोडाशे आज्यभागयोः कर्तव्यताऽधिकरणम् ।

सू० जैमिनेः परत[1]न्त्रत्वापत्तेः स्वतन्त्रप्रतिषेधः स्यात् ॥ २ ॥

स्थितं पाशुकैरङ्गैः कार्यसिद्धेर्न पुरोडाशस्य पृथगङ्गानि कर्त्तव्यानीति यत् पुनराज्यभागावघातादिकमङ्गं पशौ न विद्यते तदपि पुरोडाशे न कर्त्तव्यं कर्तव्यं वेति संशयः, तदर्थमिदं विचार्यते प्रसङ्गमुपजीवता पुरोडाशेन प्रयोगवचनमबाधित्वा चोदको बाध्यते ? उत चोदकस्याबाधः प्रयोगवचनस्तु बाध्यते ? इति तत्र प्रयोगवचनः प्रत्यक्षत्वान्न बाध्यते । चोदकस्त्वनुमेयत्वाद्दुर्बलो बाधमर्हति । लिङ्प्रत्ययो हि प्रयोगवचनः प्रत्यक्षो न शक्यते बाधितुं प्रकृतिवच्छब्दस्त्वानुमानिकोऽयं बाध्यते, तेन पाशुकेन चोदकेन प्रापितान्यङ्गकार्याणि पौरोडाशिकः प्रयोगवचनः संगृह्य तद्विशिष्टं प्रयोगं विधत्ते, तैरेव च पुरोडाशस्य निराकाङ्क्षत्वाच्चोदको लुप्यते, तेन पशौ विद्यमानानामेव पुरोडाशेन संग्रहादाज्यभागादेरकरणमिति प्राप्ते ब्रूमः चोदकेनाङ्गकार्याणां पुरोडाशान्वये सति । प्रयोगवचनः पश्चात्तद्विशिष्टं विधास्यति ॥ यत्खलु भावनासंबन्धितया श्रुत्यादिभिरतिदेशेन वा समर्पितं तद्विशिष्टां भावनां प्रयोगवचनो विदधाति, न तु स्वयमङ्गानि भावनया संबध्नाति विधिमात्रव्यापारात् । न च पाशुकेन चोदकेन पुरोडाशान्वयोऽङ्गानां कार्याणां वा सिध्यति तेनावश्यं पौरोडाशिकश्चोदकोऽङ्गीकर्त्तव्यः, तेन तु प्राकृतेष्वङ्गेषु कार्यमुखेन भावनाऽन्वयितया समर्पितेषु तद्विशिष्टां भावनां विदधत् प्रयोगवचनो यानि पश्वर्थतयैव प्रक्रान्तानुष्ठानानि तैस्तथाविधैरेव तद्वृत्तामुपजीव्याङ्गान्तरयुक्तां विदधाति, तेन प्रयो-

[1] परतन्त्रापत्तेरिति पा० ।

गवचनैकदेशो यः प्रयाजादिविषयः स बाध्यते अङ्गान्तरेषु सोऽपि न बाध्यते इति सिद्धमाज्यभागादेरनुष्ठानम् । कश्चित्तु प्रयाजादिष्वपि प्रयोजकत्वं विधेर्न बाध्यते सत्येव तु प्रयोजकत्वे कार्यस्यान्यार्थैरेव सिद्धेर्नानुष्ठानम् । एवं चाप्रयोजकाद्विशेषो भवति, इतरथा प्रसङ्गिप्रयोजकयोरविशेषः स्यादित्याह तदिदमसारम्, यदि शास्त्रेण पुरोडाशार्थतया वपाप्रचारादूर्ध्वकाले प्रयाजादीनि कर्त्तव्यानीति बोध्यते कस्तदा तदतिक्रमेणान्यार्थान्यङ्गान्युपजीवितुं क्षमः, यदप्युच्यते प्रयोजन[1]मनुष्ठाने हेतुर्न चेह पृथगनुष्ठाने प्रयोजनमस्ति अन्यार्थैरेव कार्यसिद्धेरिति तदपि यत्किञ्चिदेतत् यदि शास्त्रात्पुरोडाशार्थतयाऽवगतं पृथगनुष्ठानन्तदा तद्बलादेव फलं कल्प्यतां पृथगनुष्ठितैरेव पुरोडाशस्योपकारः सिध्यति, न पश्वर्थैरिति । यत्तु प्रयोजकत्वलोपे सत्यप्रयोजकादविशेषापत्तिरिति तदपि बुद्धिमान्द्यम्, अप्रयोजके प्रयुक्तिसामर्थ्यमेव नास्ति, प्रसङ्गी तु प्रयुक्तिसमर्थ एव सन्नन्यार्थो[2]नामुपजीवनं लाघवात्करोतीति विशेषः, यदि च सत्यपि प्रयोजकत्वे कार्याभावादननुष्ठानं ततो वरुणप्रघासेषूत्तरवैहारिकैरेवाङ्गैर्मारुत्याः कार्यसिद्धेस्सत्यपि देशभेदे कर्त्तृभेदे च विकाराच्च न भेदः स्यादर्थस्याविकृतत्वादिति न्यायेन पृथगङ्गानि न क्रियेरन् । किं च वपाप्रचारानन्तरकाले पुरोडाशो यदि सकलप्राकृताङ्गयुक्त एव कर्त्तव्यतया चोद्यते ततस्तस्मिन्नेव काले सर्वाङ्गेषु प्राकृतेन क्रमेण कार्यतयाऽवगम्यमानेषु यद्यपि कथं चित्प्राकृतानां प्रयाजाद्यङ्गानां कार्याणि निष्पन्नान्यनपवृक्तानि संनिहितानीति कृत्वा तानि न क्रियेरन्, तथाऽपि यानि तस्यामेव वेलायां पश्वर्थेनाप्यननुष्ठितानि अनूयाजादीनि तानि क्रमवशात्पौरोडाशिकेडोपाह्वानानन्तरमुपस्थितानि कर्त्तव्यतया च पुरोडाशप्रयोगवचनाद्बोध्यमानानि किमिति न क्रियन्ते, न हि तदनुष्ठानं निष्प्रयोजनं तत्कार्यस्येदानीमनिष्पन्नत्वात्, अनिष्पन्नस्य प्रतीक्षणे कारणाभावात्, अस्मत्पक्षे पुनः पशुप्रयोगवचनसंनिधापितान्यङ्गान्युपजीवन्पुरोडाशविधिर्यादृशानि

१ प्रयोजनमप्यनुष्ठाने हेतुरिति पा० ।
२ अन्यार्थोपजीवनमिति पा० ।

तेन पूर्वापरकालवर्तीनि सन्निधापितानि तादृशान्येव लाघवतृष्णयोपजीव्याधिकानामेव प्रयोगं विधत्ते इति युक्तं साध्या[1]नामपि प्रसङ्गेनो[2]पजीवनेनानुष्ठानं, लाघवमेव हि प्रसङ्गे कारणम्। आह च "अन्यार्थानुष्ठितैः शेषैरुपकारे ऽल्पकल्पना। प्रसङ्गे तदभावे च स्याद् भूयिष्ठप्रकल्पना॥ तस्मात्प्रयोचनैकदेशो लुप्यत एव। अधिकाङ्गविषयस्त्वंशो न लुप्यत इति सिद्धमाज्यभागादेरनुष्ठानम्॥

सोमे दार्शिकवेदेरकरणाधिकरणम्।

सू० नानार्थत्वात्सोमे दर्शपूर्णमासप्रकृतीनां वेदिकर्म स्यात्॥ ३॥

ज्योतिष्टोमे यानि महावेद्यां कृतायां दर्शपूर्णमासप्रकृतीनि कर्माणि प्रवर्त्तन्ते तेषु महावेदेर्भेदेन प्राकृती वेदिः कर्त्तव्या नेति सन्देहे यद्यप्यङ्गप्रधानार्था महावेदिस्तथाऽपि प्रचारार्थत्वाच्च हविरासादनार्थायाः प्राकृत्याः कार्यं साधयतीति तदर्थं प्राकृती कर्त्तव्या, नैवं प्रचारार्थाऽपि प्रसङ्गाद्धविरासादनमपि शक्नोति साधयितुं न हि तस्यां क्रियमाणं हविरासादनं विगुणं भवति, वेद्यां हि हविरासादनं प्रकृतौ श्रुतं न स्वार्थायामेवेति, तस्मात्प्रचारार्थैव प्रसङ्गादासादनेनोपजीव्यते॥

सोमे दार्शिकैः स्रुवादिभिः पात्रैः सावनपशुआदिहोमाधिकरणम्।

सू० पात्रेषु च प्रसङ्गः स्याद्धोमार्थत्वात्॥ ४॥

सोमाङ्गेष्वैष्टि? केषु कर्मसु किं सोमार्थान्येव पात्राणि प्रसज्येरन् उत जुह्वादीनि पात्राणि पृथक्प्रयोक्तव्यानी? ति संशये सौमिकैरेव होमार्थैरैष्टिकानामपि होमादिकार्यसिद्धेः प्रसङ्गं मन्यते जुह्वादिकार्याणि होमादीनि अन्यैः क्रियमाणानि विगुणीभवेयुः। न चात्रान्यैरेव होमादयः कृता येन पृषदाज्यानुयाजवच्च पुनः क्रियेरन्, तेन कर्त्तव्याः सन्तो होमादयः साद्गुण्यस्य सम्भवे किमिति विगुणाः क्रियन्ते, तस्माच्च पात्रप्रसङ्गः॥

शामित्रे पशुपुरोडाशश्रपणाभावाधिकरणम्।

सू० शामित्रे च पशुपुरोडाशो न स्यादितरस्य प्रयुक्तत्वात्॥ ५॥

---

१ भाविनामपि इति पा०।

२ प्रसङ्गजीवनेनाननुष्ठानमिति पा०।

अग्नीषोमीये पशौ शामित्रोऽग्निः श्रपणार्थं श्रुतः पशुतन्त्रोपजीवी पुरोडाश इति स्थितम्। अतः सोऽपि तत्रैव श्रपयितव्य इति मन्यते न पशुश्रपणेन पुरोडाशः श्रपितो भवति, तेन पृथक् श्रपयितव्यः पुरोडाशश्चोदकप्राप्ते गार्हपत्ये श्रपयितव्यो ऽवैगुण्यात्॥

कौण्डपायिनामयनेऽग्निहोत्रद्रव्यस्य प्राजहिते श्रपणाधिकरणम्।

सू० श्रपणं चाग्निहोत्रस्य शालामुखीये न स्यात्प्राजहितस्य विद्यमानत्वात्॥ ६॥

कौण्डपायिनामयनेऽग्निहोत्रे किं प्राजहिते मुख्ये गार्हपत्ये श्रपणम्? उत शालामुखीय? इति सन्देहे चोदकप्राप्ते शालामुखीये स्यात्, ज्योतिष्टोमे हि शालामुखीय एवात ऊर्द्धं गार्हपत्यो भवतीति शालामुखीयो गार्हपत्यकार्ये विहितश्चोदकपरम्परया कुण्डपायिनामयनं प्राप्तस्तस्मात्तत्र श्रपणं, सत्यं, चोदकादेवम्, अग्निहोत्रनामधेयात्तु नैयमिकाग्निहोत्रवन्मुख्य एव गार्हपत्ये श्रपणं प्रापितं, तच्च चोदकात् बलीय इत्युक्तम्॥ केचित्तु क्त्वाचिन्तामाहुरसत्यपि नामधेये गार्हपत्ये हवींषि श्रपयतीत्यनारभ्यवादस्य सर्वार्थत्वादुपदेशतः प्राप्तः प्राजहितश्चोदकप्राप्तं शालामुखीयं बाधत इति। तत्तु नैवम् अनारभ्यवादस्य हविःश्रपणद्वारकत्वात्कौण्डपायिनामयने च हविःश्रपणस्याश्रुतत्वात्प्रकृतितः प्राप्यमाणस्य सहैव प्राजहितेन प्राप्तेर्द्विरुक्तत्वाच्चोपदेशसम्भवः। तस्माचान्नैव प्राजहितस्य प्राप्तिः। ननु सिद्धं नाम्नः प्राबल्यं सप्तमे, सत्यम् इदन्तु प्रसङ्गनिराकरणार्थं सूत्रं शालामुखीयस्तावदस्मिंस्तन्त्रे चोदकेन सर्वगार्हपत्यकार्याय प्रवृत्तः स एव प्रसङ्गादग्निहोत्रश्रपणमपि साधयिष्यति, विनाऽपि तादर्थ्येनेति शङ्का, सेयं निराक्रियते अन्यार्थस्य नाम प्राप्तेन प्राजहितेन बाधितत्वादिति पूर्ववत् साद्गुण्यसम्भवे वैगुण्यानाश्रयणादित्यस्यैव न्यायस्य प्रपञ्चोऽयम्॥

हविर्द्धानयोः शकटयोरन्येन शकटेन श्रौषधद्रव्यकाणां पुरोडाशानां निर्वापाधिकरणम्।

सू० हविर्धाने निर्वपणार्थं साधयेतां प्रयुक्तत्वात्॥ ७॥

ज्योतिष्टोमे हविर्द्धानसमाख्ययोः सोमधारणार्थयोरनसोः प्रवर्त्तने कृते यानि सवनीयपुरोडाशादीनि तेषां किं तयोरन्यतरत्र निर्वपणम्? उत अनोऽन्तरमुपादेयम्? इति संशये अनसोऽधिनिर्वपतीत्यस्य प्रकृतितः प्राप्तस्य सोमधारणार्थाभ्यामपि प्रसङ्गतः सिद्धेर्न निर्वापार्थेनानोऽन्तरमुपादेयं, सत्यमेतावत्सम्भवति देशस्तु निर्वापस्यापरेण गार्हपत्यं निर्वपतीति प्रकृतितः प्राप्तयोर्हविर्द्धानयोर्न सम्पद्यते, तयोर्मन्त्रवन्नियमवच्च महावेद्यामवस्थापितयोः प्राग्वंशनयनासम्भवात्, तस्मादनोऽन्तरमुपादेयमवैगुण्यात् ॥

प्रायणीयादिषु दीक्षाजागरणस्याभावाधिकरणम् ।

सू० तद्युक्तं च कालभेदात् ॥ ८ ॥

दीक्षाकालं जागरणमाम्नातं दीक्षोत्तरकालेषु प्रायणीयादिषु कर्मसु किं चोदकप्राप्तं दार्शपौर्णमासिकं जागरणं कर्त्तव्यं नेति संशये सोमार्थेन दीक्षाकालीनेन जागरणेन प्रसङ्गात्कार्यसिद्धेर्न पृथक्तेषु जागरणं कर्त्तव्यं, यदि तावदप्रमादार्थं जागरणं यज्ञसाधनरक्षणार्थं ततो न दीक्षाकालीनेषु रक्षितेषु तदुत्तरकालानि रक्षितानि संभवन्तीति तदर्थं पुनर्जागरितव्यम्। अथादृष्टार्थं जागरणं तथाऽपि सौमिकेन जागरणेनैष्टिकजागरणजन्यादृष्टसिद्धौ प्रमाणाभावात् तदर्थं कर्त्तव्यमेव प्राकृतं जागरणम् ॥

विहारभेदे मन्त्रभेदाधिकरणम् ।

सू० मन्त्राश्च सन्निपातित्वात् ॥ ९ ॥

वरुणप्रघासेषु दक्षिणोत्तरविहारयोर्निर्वापादिमन्त्राः किं तन्त्रेणाध्वर्युणा प्रतिप्रस्थात्रा वा ऽन्यतरेण वक्तव्याः? उतोभाभ्यामपि भेदेने? ति संशये ऽन्यतरेणाप्युच्यमानाः शक्नुवन्ति उभयोः स्मृतिं कर्त्तुमिति मन्यते निर्वपामीत्यादेरात्माभिवादित्वान्न तन्त्रता सम्भवतीत्युभयोः पृथक् पृथक् प्रयोगः सकृदसकृदनुष्ठानप्रसङ्गात्तन्त्रावापचिन्तापीयमत्र कृता ॥

दीक्षणीयादिषु अग्न्यन्वाधानस्याभावाधिकरणम् ।

सू० धारणार्थत्वात्सोमेऽग्न्यन्वाधानं न विद्यते ॥ १० ॥

सोमाङ्गेष्वैष्टिकेषु कर्मसु चोदकप्राप्तमग्न्यन्वाधानं कार्यं नेति संशये चोदकानुग्रहात्कर्त्तव्यमिति प्राप्ते ब्रूमः, धारणार्थं तु तत्सोमार्थेन

विहितस्य धारितस्याग्नेस्तेनैव धारणेन प्रसङ्गसिद्धकार्यत्वात् न पुनर्धारणं कार्यम् ॥ ननु चाक्रतुसमाप्तेः पुनः पुनः प्रयत्नेन धारयितव्य एवाग्निः सत्यं, तथाऽपि नान्वाधानं कार्यं तद्धि विहृतस्याग्नेराद्यो यः समिन्धनव्यापारो धारणार्थस्तद्रूपं, न हि तत्प्रकृतौ पुनः पुनः कृतं तस्मादत्रापि धार्यमाणस्य धारणायामन्वाधानं न कर्त्तव्यम् ॥

दीक्षणीयादिषु व्रतोपायनाभावाधिकरणम्[1]। सू० तथा व्रतमुपेतत्वात् ॥ ११ ॥

तत्रैवं [2]प्राकृतं व्रतोपायनं कर्त्तव्यन्नेति संशये कर्त्तव्यमिति प्राप्ते सोमार्थेऽपि तेनैव व्रतेन सत्यवदनब्रह्मचर्यादिसङ्कल्परूपेणासमाप्तेरविनष्टेन प्रसङ्गात्सिद्धेर्न पुनरुपायनं कर्त्तव्यम् ॥

ऐष्टिकेषु अग्न्यन्वाधानाननुष्ठानाधिकरणम् । सू० ग्रहणार्थं च पूर्वमिष्टेस्तदर्थत्वात्[2] ॥

यदुक्तं धारणार्थत्वात्सोमेऽन्यदग्न्यन्वाधानं न विद्यत इति तदाक्षिप्यते, यदि तत्केवलधारणार्थं स्यात्ततो न विद्येत तत्तु दर्शपूर्णमासयोर्देवतापरिग्रहार्थमपि श्रुतं ममाऽग्ने वर्च इति पूर्वमग्निं गृह्णाति देवता एव तत्पूर्वेद्युर्गृहीत्वा श्वो भूते यजत इति, ततः प्रायणीयादिष्वपि तद्देवतापरिग्रहार्थं कर्त्तव्यमग्न्यन्वाधानं नैवं न ह्यग्निधारणे दृष्टप्रयोजने सति अदृष्टदेवतापरिग्रहार्थत्वमर्थवादमात्रोपयुक्ताद्वाक्यशेषात्कल्पयितुं शक्यम् अभ्युपेत्य ब्रूमः । यद्यपि देवतापरिग्रहार्थन्तथाऽपि प्रायणीयादिष्वकर्त्तव्यं दीक्षणीयाया अपि वाक्यशेषे देवतापरिग्रहार्थता श्रूयते "आग्नावैष्णवमेकादशकपालं निर्वपेद् दीक्षिष्यमाणो ऽग्निरवमो देवतानां विष्णुः परमो देवता एतदुभयतः परिगृह्य दीक्षित इति, यद्यपि दीक्षा सोमस्येति वचनात्प्रधानार्था दीक्षणीया प्रधानदेवता एव परिगृह्णाति तथाऽपि वैश्वदेवग्रहे सर्वदेवतासमवायात्तत्परिग्रहं कुर्वती दीक्षणीयाप्रसङ्गादङ्गकर्मदेवता अपि गृह्णाति, न हि विश्वेदेव-शब्दः कस्यादिद्देवतागणस्य वाचकः

१ विहृतस्येति पा० ।
२ तत्रैवेति पु० ।

प्रसिद्धावयवार्थस्य समुदायस्य शक्त्यन्तरकल्पनाप्रमाणाभावात्तस्मात्सर्वदेवतावचनत्वात्तत्परिग्रहे च सर्वान्तर्गतानामङ्गदेवतामपि प्रसङ्गतः परिग्रहादकर्त्तव्यमन्वाधानम्। यद्वा अभ्युपगमपक्षे दीक्षणीयायां कर्त्तव्यमेवान्वाधानं ततः परन्तु न कर्त्तव्यम् ॥

ऐष्टिकेषु पत्नीसन्नहनाननुष्ठानाधिकरणम्।

सू० सन्नहनं च वृत्तत्वात् ॥ १३ ॥

दार्शपौर्णमासिकं पत्नीसन्नहनं प्रायणीयादिषु चोदकप्राप्तं कर्त्तव्यं नैवं वासोधारणार्थं तद् दृष्टार्थत्वाद्दीक्षाकालेन च सोमार्थेन सन्नहनेन वाससो धारितत्वादकर्त्तव्यम्। अथाऽपि न वासोधारणार्थं तथापि सन्नद्धैव[1] कर्माणि कार्याणीत्येवमर्थं सन्नहनं, नादृष्टार्थम् अन्यार्थेनापि सन्नहनेन सन्नद्धैवेति न पृथक् सन्नहनम् ॥

ऐष्टिकेषु आरण्यभोजनाभावाधिकरणम्।

सू० अन्यविधानादारण्यभोजनं न स्यादुभयं हि वृत्त्यर्थम् ॥ १४ ॥

आरण्याशनमपि प्रायणीयादिषु चोदकप्राप्तमपि वृत्त्यर्थत्वात्सौमिकेनैव पयोव्रतादिना वृत्तिसिद्धेरकर्त्तव्यम् ॥

ऐष्टिकेषु शेषभक्षानुष्ठानाधिकरणम्।

सू० शेषभक्षास्तथेति चेन्नान्यार्थत्वात् ॥ १५ ॥

एवं तर्हि शेषभक्षा अपि ये यजमान कर्त्तृका इडाभक्षणादयस्तेऽपि वृत्त्यर्थत्वात्सौमिकेन व्रतेन निवर्त्तेरन्, सत्यं, यदि वृत्त्यार्थास्ते तु शेषभक्षप्रतिपत्त्यर्थाः यजमानपञ्चमा इडां भक्षयन्तीति शेषस्य द्वितीयानिर्देशात्तदिदं षष्ठ एव प्रसाधितं, तस्य त्विदं प्रयोजनकथनं प्रसङ्गात्मकत्वादिहोक्तम् ॥

ऐष्टिकेषु अन्वाहार्यदानाभावाधिकरणम्।

सू० भृतत्वा[2]च्चापरिक्रयः ॥ १६ ॥

---

१ संनद्धयैवेति पा०।

२ भृतत्वाच्च परिक्रयः इति।

दीक्षणीयादिषु चोदकप्राप्ताऽन्वाहार्यदक्षिणा दातव्या नेति संशये दक्षिणा सोमस्येति वचनात् द्वादशशतदक्षिणा केवलप्रधानार्थेत्युक्तम्, अतोऽङ्गेषु स्वार्थे[२] दक्षिणा दातव्यैव, प्रसङ्गसिद्धकार्यत्वात्तु न दातव्या प्रधानार्थं ह्यानतिरुपक्रमप्रभृत्यासमाप्तेः प्रवृत्तानपवृक्ता चावस्थितेति तामेवोपजीवन्तो दीक्षणीयादिविधयश्चोदकप्राप्तामपि स्वार्थामानतिं न प्रयुञ्जते । किं च पृथग्दक्षिणायां सत्यामानतिभेदादङ्गप्रधानानामश्रुतः कर्तृभेद आपद्यते । किं च यैः प्रधानं कर्त्तव्यं तैरेवावश्यमङ्गान्यपि कर्त्तव्यानि नाकुर्वद्भिरङ्गानि प्रधानं कर्त्तुं शक्यमिति निश्चिते शास्त्रार्थे प्रधानार्थत्वेनाङ्गानां बलादङ्गान्यपि कर्त्तव्यानि भवन्तीति प्रसङ्गसिद्धानुष्ठानत्वान्नाङ्गेषु दक्षिणा ॥

ऐष्टिकेषु शेषभक्षस्य संस्कारार्थतया कर्तव्यत्वाधिकरणम् ।

**सू० शेषभक्षास्तथेति चेत् ॥ १७ ॥**

पूर्वं यजमानभक्षस्य वृत्त्यर्थत्वात् व्रतेन निवृत्तिराशङ्किता सम्प्रति ऋत्विग्भक्षाणां परिक्रयार्थतया प्रधानदक्षिणया निवृत्तिराशङ्क्यते, निराकरणं च तद्वदेव शेषप्रतिपत्त्यर्था भक्षा नानत्यर्था इति दशम एव चानत्यर्थत्वं भक्षाणां निराकृतं तस्येदं प्रयोजनं प्रसङ्गात्मकत्वेनेहोक्तम् ॥

ऐष्टिकेषु होतुर्वरणसद्भावाधिकरणम् ।

**सू० प्रवृत्तवरणत्वात्प्रतितन्त्रं वरणं होतुः क्रियेत ॥ १८ ॥**

दर्शपूर्णमासयोः होतृवरणमाम्नातम् "अग्निर्देवो दैव्यो होते"ति तत्किमानत्यर्थत्वात्सौमिकेनैव वरणेनाग्निर्होता स मे होतेत्यादिना प्रसङ्गादानतिसिद्धेर्दीक्षणीयादिषु न कर्त्तव्य?मुतादृष्टार्थत्वात्कर्त्तव्य?मिति संशये वरणस्यानत्यर्थत्वाच्चिवृत्तिं मन्यते । ननु प्रवृत्ते कर्मणि क्रियमाणमृतुयाज्यावरणवददृष्टार्थं नैवं क्रतुयाज्यावरणमादावेवानत्यर्थं कृते वरणे पश्चात्क्रियमाणमदृष्टार्थं स्यात्, होतुस्तु न प्रागस्ति वरणम्, अतः प्रवृत्तेऽपि कर्मणि दृष्टार्थमेव ब्रह्मवरणवत्, तदस्मि हि पूर्वेद्युरमावास्यायां वेदिकरणेऽनु-

---

२ स्वार्था दक्षिणेति पा० ।

प्रतिदाने प्रवृत्ते ब्रह्मण्यपरेद्युः प्रणीताप्रणयनकाले क्रियते । अथ च दृष्टार्थमेवान्यद्वा तदपि दीक्षणीयादिषु कर्त्तव्यं स्यात्, तस्माद्धोतृवरणमपि न कर्त्तव्यमिति प्राप्ते ब्रूमः—प्रवृत्तस्य वरणं न कथं चित् दृष्टार्थं भवति दक्षिणादानं हि भविष्यदवस्थमपि भवत्यानतिनिमित्तं लोके तथा दर्शनात् । न तु वरणेन भाविना भवत्यानमनं तस्माददृष्टार्थं, ब्रह्मवरणं त्वप्रवृत्ते ब्रह्मणि क्रियते पौर्णमास्यां तावदप्रवृत्त एव क्रियत इत्यविवादम्, अमावास्यायामपि पूर्वेद्युरपकृष्यमाणा वेदिः स्वाङ्गभूतप्रसवसिद्धये ब्रह्मणो वरणमप्यपकर्षति, लिङ्गाद्धि वरणस्यानतिरेव प्रयोजनं गम्यते, प्रयोजनवशेन च पाठक्रमं बाधित्वा युक्तमेव वरणस्य पूर्वेद्युरनुष्ठानं, तस्मादप्रवृत्तविषयत्वात् ब्रह्मवरणं दृष्टार्थं, न चैवं होतृवरणस्यापकर्षः सम्भवति "अवृतः सामिधेनीरन्वाहे"ति वचनात् तस्माददृष्टार्थं होतृवरणं प्रतिकर्म कर्त्तव्यम् ॥

आतिथ्यायां बर्हिषः प्रतिकर्मप्रोक्षणाद्यभावाधिकरणम् ।

सू० यज्ञोत्पत्त्युपदेशे निष्ठितकर्मप्रयोगभेदात्प्रतितन्त्रं क्रियेत ।

॥ १९ ॥

यदातिथ्यायां बर्हिःस्तदुपसदां तदग्नीषोमीयस्येति बर्हिःसाधारण्यविधिरित्युक्तमेव त्रयाणामर्थेनोपात्ते बर्हिषि संस्काराः प्रोक्षणादयो विचार्यन्ते, किन्ते प्रतिकर्मावर्तनीया? उतातिथ्याकालकृता एवोपसत्स्वग्नीषोमीये च प्रसज्यन्त? इति, सन्देहे मध्यपाताभावाच्च प्रसङ्गो नापि तन्त्रम्, आतिथ्याकालत्वेन विशेषग्रहणादिति प्राप्ते ब्रूमः सत्यं, न तन्त्रता प्रसङ्गस्तु भवति, तन्त्रमध्यपाताभावेऽपि बर्हिर्द्वारा ये संस्कारास्ते यदर्थं बर्हिरुपात्तं तदर्था विज्ञायमाना बर्हिषः साधारणत्वात् तेऽपि सकृदेव कर्त्तव्या इत्यवगते सति नान्तरीयकमातिथ्याकालेऽनुष्ठानम् उपसदादेस्तदानीमप्राप्तत्वात्, न चैतावता आतिथ्यापवर्गेऽपवृज्यन्ते बर्हिषो ऽनपवृक्तत्वात्, तदर्थत्वाच्च तेषां, तस्माच्च भेदेन कर्त्तव्याः ॥

आतिथ्यायां स्तरणमन्त्रस्यावृत्त्यधिकरणम् ।

सू॰ देशपृथक्त्वान्मन्त्रोऽभ्यावर्त्तते ॥ २० ॥

तदेव बर्हिर्यदातिथ्यार्थं प्राग्वंशे स्तीर्णं तत् आनीयापरेणोत्तरवेदिमग्नीषोमीयार्थत्वेनास्तीर्यते, तदा किं "ऊर्णाम्रदसं त्वा स्तृणामी"ति स्तरणमन्त्रः पूर्वं कृत एव प्रसज्यते? उतावर्त्तनीय? इति विचारे पूर्ववद्बर्हिःसाधारण्यात्प्रसङ्गप्राप्तावुच्यते स्यादेवं यदि बर्हिरर्थं स्तरणं स्यात् तत्तु "बर्हिषा वेदिं स्तृणाती"ति द्वितीयानिर्दिष्टत्वात्प्रयोजनवत्त्वाच्च वेदिदेशसंस्कारार्थं भिन्नौ चेह प्राग्वंशोत्तरवेदिसमीपदेशौ, तेन तदर्थं स्तरणं तदङ्गं च मन्त्रोऽप्यावर्त्तते, असत्यामावृत्तौ वेदिवैगुण्यादग्नीषोमीयहविषामासादनं विगुणं स्यात्, भवतु वा बर्हिरर्थं स्तरणबर्हिष्यवस्तीर्णे हवींषि साक्षादासाद्यन्त इति तथाऽपि तदावृत्तेस्तदङ्गमन्त्रावृत्तिरन्यथा ह्यमन्त्रास्तीर्णे बर्हिषि हवींष्यासाद्येरन् ॥

बर्हिषो देशान्तरनयने सन्नहनहरणमन्त्रयोरप्रयोगाधिकरणम् ।

सू॰ सन्नहनहरणे तथेति चेत् ॥ २१ ॥

तदेव बर्हिः प्राग्वंशे स्तीर्णं पुनः सन्नह्योत्तरवेदिसमीपे स्तीर्यते प्रकृतौ संनहनमन्त्रः "पूषा ते ग्रन्थिं ग्रथ्नात्वि"ति तथा त्विति तथाऽऽहरणमन्त्रः "बृहस्पतेर्मूर्द्ध्ना हरामी"ति तौ किमस्मिन्सन्नहने हरणे च प्रयोक्तव्यौ नेति संदेहे सन्नहनहरणयोरावृत्तेर्मन्त्रयोरप्यावृत्तिः पूर्ववत्, नैवं प्रकृतौ हि लूनस्य बर्हिषो यद्विहारदेशप्रापणार्थं सन्नहनं हरणं च तदर्थावेतौ मन्त्रौ विहारदेशं प्रापितस्य बर्हिषो वेदिदेशप्रापणार्थमेतत्, अतोऽन्यकार्यत्वात्कार्यप्रयुक्तत्वाच्च मन्त्रयोर्नात्र प्रयोगः, यथा प्रकृतावेव गार्हपत्यादाहवनीयमानीयमाने बर्हिषि मन्त्रो न प्रयुज्यते तद्वत् ॥

इति श्रीशास्त्रदीपिकायां द्वादशाध्यायस्य प्रथमः पादः ॥ १ ॥

———o———

## अथ द्वादशाध्यायस्य द्वितीयः पाद आरभ्यते ॥

विहाराग्नेर्वैदिककर्ममात्रार्थताधिकरणम् ।

सू॰ विहारो लौकिकानामर्थं साधयेत्प्रभुत्वात् ॥ १ ॥

किं गार्हपत्योऽग्निः लौकिकानां पार्वणस्थालीपाकता[१]पपचनप्रकाशादीनां, चरुपुरोडाशहोमहविःश्रपणादीनां च वैदिकानां सर्वेषामग्निकार्याणामङ्गम्? उत वैदिकानामेवे? ति संशये सामर्थ्यात्मकाल्लिङ्गात् मांसपाकप्रतिषेधदर्शनाच्च सर्वार्थताप्राप्तावुच्यते "गार्हपत्ये हवींषि श्रपयति दक्षिणाग्नावन्वाहार्यं पचति यदाहवनीये जुहोती"ति प्रत्यक्षवचननिर्दिष्टैरेव प्रयोजनैर्निराकाङ्क्षाणां न लिङ्गेन सर्वार्थता शक्या कल्पयितुं, मांसपाकप्रतिषेधस्तु वैदिकवपाश्रपण एवोपपन्नः, स्थालीपाकादयस्त्वौपासने विहिता न सामान्यविहितान् गार्हपत्यादीन् गृह्णन्ति, तस्माद् वैदिकानामेव विहारोऽङ्गं, पूर्वं बर्हिःसंस्काराणां साधारण्यासाधारण्ये विचारिते तत्प्रसङ्गादग्नीनां लौकिकालौकिकसाधारण्यं विचारितमिति सम्बन्धः ॥

सवनीयपशौ पशुपुरोडाशस्य कर्तव्यताऽधिकरणम् ।

**सू० सवनीये छिद्रापिधानार्थत्वात्पशुपुरोडाशो न स्यादन्येषामेवमर्थत्वात् ॥ २ ॥**

सवनीये पशावग्नीषोमीयात्पशोश्चोदकप्राप्तः पशुपुरोडाशः कर्त्तव्यो नेति संशये न कर्त्तव्यः, स हि प्रकृतौ छिद्रापिधानार्थः "सुषिरो ह वा एतर्हि पशुर्यर्हि वपामुत्खिदति यद्व्रीहिमयः पुरोडाशो निरुप्यते अपिहित्या अच्छिद्रतायाः" इति सवनीयपशौ च सवनीयैरेव पिधानात् छिद्रापिधानं कृतं, तत्रापि हि श्रूयते "अनुसवनीयं सवनीयाः पुरोडाशा निरुप्यन्ते अपिहित्या अच्छिद्रतायाः" इति तस्मात्तैरेव कृतकार्यः पुरोडाशो निवर्तते । ननु पुरोडाशेन माध्यन्दिने सवने इति लिङ्गात्कर्त्तव्यः, एवं तर्हि विकल्पोऽस्तु नैवमर्थवादमात्रं छिद्रापिधानवचनं प्रत्यक्षविरोधात् देवतासंस्कारार्थस्त्वसौ तस्मात्कर्त्तव्य एव लिङ्गं च पुरोडाशेन माध्यन्दिन इति न पाक्षिकं कल्पयितुं शक्यम् ॥

२ . तापपचनप्रकाशनादीनामित्येतावन्मात्रं पुस्तकान्तरे ।

सवनीयपुरोडाशे हविष्कृदाह्वानस्याभावाधिकरणम् ।

सू॰ हविष्कृत्सवनीयेषु न स्यात्प्रकृतौ यदि सर्वार्था पशुं प्रत्याहृ[1]ता सा कुर्याद्विद्यमानत्वात् ॥ ३ ॥

प्रकृतौ पात्रप्रोक्षणानन्तरमवघातकालस्तस्मिन् काले हविष्कृदेहीति त्रिरवघ्नन्नाह्वयतीति हविष्कृदाह्वानं तदाज्यौषधसान्नाय्यानां सर्वेषामङ्गमिति कृत्वा चिन्त्यते तदा हि सान्नाय्यविकारे पशावपि पात्रप्रोक्षणानन्तरमस्ति हविष्कृदाह्वानम्, अतश्च सवनीयपश्वर्थेन तदीयपात्रप्रोक्षणानन्तरमाहूता हविष्कृत्तन्मध्यपातिनां सवनीयपुरोडाशानां प्रसङ्गसिद्धेर्न पृथगाह्वातव्येति सिद्धमेवोत्तरविवक्षया प्राप्यते ॥

तृतीयसवने हविष्कृदाह्वानस्या पुनरावृत्त्यधिकरणम् ।

सू॰ पशौ तु संस्कृते विधानात्तातीयसवनिकेषु स्यात्सौम्याश्विनयोश्चा[2]पवृक्तत्वात् ॥ ४ ॥

सन्ति तृतीयसवने सवनीयाः पुरोडाशाः सौम्यश्चरुराश्विनश्च द्विकपाल इति, ते च सवनीये पशौ[3] पक्के क्रियन्ते तेषु किं हविष्कृदाह्वातव्या? उत पाशुक्येव च प्रसज्यत? इति संशये हविष्कृत्समाख्यया हविष्करणमेव तस्याः कार्यम्, अतः पक्के पशौ तदर्था हविष्कृत्कृतकार्यत्वादपवृक्तेति ततः परेषु पुनराह्वातव्येति प्राप्ते ब्रूमः साहाय्यकरणं तदाह्वानकार्यं सामर्थ्यान्न केवलं हविष्करणमेव मुख्यत्वात् हविष्करणेन समाख्यायते, तेनाहूता सती प्रागुत्थानविधानान्नोत्थातुमर्हति, प्रकृतौ च पत्नीसंयाजेभ्यः पश्चात्प्रत्युत्थानं विहितमिति सवनीये पशावपत्नीसंयाजेभ्यः सन्निहितेति तत्कालवर्तिनां तार्तीयसवनिकानां न भेदेनाह्वातव्येति ॥

निशियज्ञे ऽमावास्यातन्त्रप्रयोगाधिकरणम् ।

सू॰ निशि यज्ञे प्राकृतस्याप्रवृत्तिः प्रत्यक्षशिष्टत्वात् ॥ ५ ॥

---

१ प्रत्याहृतेति पा॰ ।
२ सौम्याश्विनयोश्चापवृक्तार्थत्वादिति पा॰ ।
३ सवनीये पशावपवृक्ते इति पुस्तकान्तर पाठो युक्तः ।

काम्यास्विष्टिषु श्रूयते "अग्नये रक्षोघ्ने पुरोडाशमष्टाकपालं निर्वपेद्यो रक्षोभ्यो बिभियादि"ति तत्रापरं वचनम् "अमावास्यायां निशि यजेते"ति तस्मिन्निशि यज्ञे चिन्त्यते किं पृथक् तन्त्रं कर्तव्यम्? उत दार्शिकमेव तन्त्रं प्रसज्यत? इति, तत्रामावास्यायां निशीति सामानाधिकरण्यात्कालवचनो ऽमावास्या-शब्दो न कर्मवचनः काले चानपेक्षः प्रवर्तते, कर्मणि तु कालापेक्षा वृत्तिरतो ऽपि कालवचनः, तेन वाक्यात्तावन्नामावास्याकर्मणामुपस्थानं, ना ऽपि प्रकरणात् तदभावात्, अतो नालोच्य दर्शं विधीयमाना निशीष्टिस्तत्तन्त्रोपजीवनासम्भवात् स्वाङ्गयुक्तैव निशि कर्त्तव्यतया विधीयते इति नास्ति प्रसङ्ग इति प्राप्ते ब्रूमः । यद्यपि वा क्या-त्प्रकरणेन वा नोपस्थानं तथा ऽपि यस्मिन्काले विधीयते स तावन्नियमेन प्रवृत्तामावास्यातन्त्र एव तेन तत्र विधीयमानेष्टिस्तत्तन्त्रमध्यविहिता भवति, अवश्यं चार्थस्वभावावगतमप्यमावास्यातन्त्रमालोच्यैव निशीष्टिर्विधातव्या, अन्यथा ऽग्निप्रणयनव्रतोपायनादिकमपि विदध्यात्, तच्चाशक्यं प्रणीतानामग्नीनां पुनः प्रणयनासम्भवात्, उपेतस्य च व्रतस्यानुत्सृष्टस्य पुनरुपेतुमशक्यत्वात्, तस्मादालोच्यैव दर्शतन्त्रं विधीयमानेष्टिर्यत्तत उपजीवितुमशक्यमिध्माबर्हिः सामिधेन्यादि तन्मात्रं स्वयं प्रयुङ्क्ते अन्यत्तु दार्शिकमेवोपजीवतीति, विकृत्यन्तराणि तु सौर्यादीनि पौर्णमास्यमावास्ययोर्विधीयमानान्यपि न प्रवृत्ततन्त्रायां प्रकृतौ विधीयन्ते, प्रागेव प्रकृत्यारम्भात्तदनुष्ठानसम्भवात्, इयन्तु निशायां विधीयमाना तन्त्रमध्यपातिनी प्रसङ्गमुपजीवतीति वैषम्यम् ॥

विकृतिष्वप्यारम्भणीयाऽनुष्ठानाधिकरणम् ।

सू० आरम्भणीयाविकृतौ न स्यात् प्रकृ[१]तिकालमध्यत्वात्कृता पुनस्तदर्थेन ॥ ६ ॥

सौर्यादिषु आरम्भणीया स्यान्न वेति सन्देहे, न स्यादिति ब्रूमः प्रकृतौ हि सकृदेवेयं कर्त्तव्या न प्रतिप्रयोगमावर्त्तनीयेत्युक्तं नवमे, यदि च सकृत्कृतया ऽनया संस्कृतः पुरुषो यावज्जीवं संस्कृतो भवति ततो ऽस्याः

१ प्रकृतौ कालमध्यत्वादिति पा० ।

सङ्कृत्करणं युक्तम्, अपवृक्ते तु तत्संस्कारे पुनः पुनस्तत्सिद्ध्यर्थमनुष्ठातव्या स्यात् तेन प्रकृत्यर्थंकृत एव संस्कारो ऽनपवृक्तः प्रसङ्गेन विकृतीनामुपकरोतीति न तास्वारम्भणीया कर्त्तव्या। उच्यते न संस्कारावस्थानात्प्रकृतावनावृत्तिः किं त्वारम्भैक्यात्, आद्या हि कर्त्तुः प्रवृत्तिरारम्भः, स चैकस्य क्रतोरेक एवातस्तदपवर्गे ऽपवृज्यत एव तदर्थः संस्कारः कार्यविरोधित्वाद्धर्मस्य पुनः पुनः प्रयोगे हि प्रयोगा एव भिद्यन्ते न क्रत्वारम्भः, क्रत्वारम्भाङ्गं चान्वारम्भणीया दर्शपूर्णमासशब्दस्य क्रतुवचनत्वात्, तस्माच्च पुनः पुनः प्रयोगे चारम्भणीया विकृतिषु त्वारम्भभेदाच्चोदकप्राप्ताऽऽरम्भणीया कर्त्तव्यैवारम्भवेलायाम् ॥

प्रधानानां धर्मविरोधे बहूनां धर्मानुष्ठानाधिकरणम्।

**सू० विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात्सधर्मत्वम् ॥ ७ ॥**

पञ्चदशरात्रे ऽग्निष्टुत्प्रथममहस्तत्रैकाहाग्निष्टुद्धर्मा नामधेयेन प्राप्यन्ते, तेनाग्नेयी तत्र सुब्रह्मण्या ततो ज्योतिर्गौरायुरिति त्र्यहः तत्र ज्योतिरादिनामधेयैरेकाहज्ज्योतिरादिधर्मप्राप्तिः तेन तेष्वैन्द्री सुब्रह्मण्या परिशिष्टान्येकादशाहानि द्वादशाहिकानि तेष्वप्यैन्द्र्येव इह चोदकप्राप्तैन्द्रीधर्मकाणामेकादशानामह्नामप्राप्ताऽग्नेयीधर्मकस्य चाग्निष्टुतो विरोधे चिन्त्यते, । यद्वा नाम्नामेव ज्योतिरादीनामग्निष्टुतश्च मिथश्चिन्ता, तत्रोपसत्कालसुब्रह्मण्यायां तन्त्रभूतायां किमनियमः? उताग्नेयी ग्राह्या? अथवैन्द्री? ति, तत्रानियमे मुख्यत्वाद्वाऽग्निष्टुद्धर्मानुग्रहे प्राप्ते भूयसां साधर्म्याय ऐन्द्रीति सिद्धान्तितम्। न त्विह सु ब्रह्मण्योदाहरणं युक्तं यत्रान्यार्थेनान्यस्योपकारसिद्धिस्तत्र प्रसङ्गः, न चाग्नेय्या सुब्रह्मण्यया इन्द्रः संस्कृतो भवति ऐन्द्र्या वा ऽग्निः, अत एव न तन्त्रता, तेनोभावपि भेदेनाह्वातव्यावित्यनुदाहरणं, काम्यास्विष्टिषु श्रूयते "अग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेदिन्द्राय प्रदात्रे पुरोडाशमेकादशकपालं दधिमधुघृतमापो धानास्तत्संसृष्टं प्राजापत्यं पशुकाम इति, तदिमानि सप्तहवींषि आग्नेयमैन्द्रं प्राजापत्यानि पञ्चेति तत्राग्नेयं प्राजापत्यानि पञ्चेति तत्राग्नेयं प्राजापत्याश्च धाना आग्नेयविकारत्वादुभयथाऽप्यविरुद्धाः ।

यस्त्वैन्द्रपुरोडाशो यच्च प्राजापत्यं दधि तयोरैन्द्राग्नसान्नाय्यविकारत्वाद-मावास्याधर्मापेक्षा, मधुघृतापां तु उपांशुयाजविकारत्वात्पौर्णमासिकधर्मा-पेक्षा, मधूदकयोर्याज्याविकारत्वमष्टमे सिद्धं, घृतस्य त्वसन्दिग्धमेव, तदेतेषु सप्तसु यागेषु सह प्रक्रान्तेषु पौर्णमासीविकाराणां वार्त्रघ्नावाज्यभाग-मन्त्रौ प्राप्तौ, दर्शविकारयोस्तु द्वयोर्वृधन्वन्तौ, न चान्यतराभ्यां कृतावा-ज्यभागौ पुनर्मन्त्रार्थमावर्त्तनीयौ, तदिह किममावास्यामन्त्राभ्यामाज्य-भागौ कर्त्तव्यौ ताभ्यामेव च प्रसङ्गसिद्धकार्यत्वात्पौर्णमासिकौ मन्त्रौ निव-र्तेते, अथ वा विपर्यय इति संदेहे अनियमः, मुख्यत्वाद्वा ऐन्द्रदध्नोस्तद्धु-र्मानुग्रहे प्राप्ते' ब्रूमः भूयसां मध्वादीनां धर्मौ वार्त्रघ्नावनुग्रहीतव्यौ यद्यपि मुख्यधर्मः प्रथममवगम्यते तथाऽपि पश्चाद्भूयोऽनुग्रहमालोच्य बाध्यते, सोऽयं प्राप्तबाधः, तस्मात्पौर्णमासिकौ धर्मावनुग्रहीतव्यौ ॥

तुल्यसङ्ख्याकानां धर्मवि-रोधे प्रथमस्यैव धर्मानुष्ठाना-धिकरणम् ।

सू० मुख्यं वा पूर्वचोदनाल्लोक-वत् ॥ ८ ॥

यत्र समसंख्यानां धर्मविप्रतिषेधः तत्र कस्य स्वधर्मलाभः कस्य वाऽन्यधर्मोपजीवनमिति चिन्तायामनियमप्राप्तौ मुख्यस्य स्वाधर्म्यमि-त्याह तस्य हि धर्मोऽसंजातविरोधावस्थायां निर्विघ्नमवगम्यते जघन्यस्य तु तद्विरुद्धत्वान्न धर्मः संग्रहीतुं शक्यते, न चात्रावगतस्य त्यागे अनव-गतसंग्रहे च किञ्चित्कारणं भूयस्त्वं प्रधानधर्मत्वं वाऽस्ति, तस्मादत्र मुख्य-स्य स्वाधर्म्यमिति किमिहोदाहरणम् अध्वरकल्पायां श्रूयते "आग्नावैष्णवं द्वादशकपालं निर्वपेदपराह्णे सरस्वतीमाज्यस्य यजेते"ति तत्राग्नावैष्णव-स्यौषधद्रव्यकत्वाद् द्विदेवत्यत्वद्वादशकपालत्वैरैन्द्राग्नविकारत्वाद्दार्शि-कं तन्त्रम्, आज्यस्य तूपांशुयाजविकारत्वात्पौर्णमासधर्मापेक्षा, तत्र पूर्वव-दाज्यभागमन्त्रयोर्विरोधे मुख्यधर्मत्वात् वृधन्वत्यौ ग्रहीतव्यौ, एकाधिक-रणयं त्वेकीयमतत्वेनोपन्यासादन्याय्यत्वाच्च परमतमेव न ह्यल्पवैगुण्ये सम्भवति भूयोवैगुण्यं प्रयोगवचनः क्षमते, अवगतमपि हि कारणान्तरवशा द्बाध्यत एव यथोपरितनाधिकरणे मुख्यमपि दीक्षणीयाधर्मत्वं बाधित्वा

प्रधानधर्मत्वबलेन सुत्याकाल एवानुग्रहीष्यते, तथा भूयस्त्वेनापि तस्माद् द्वे एवाधिकरणे ॥

अङ्गगुणविरोधे प्रधानगुणस्यैव प्राबल्याधिकरणम् । सू० अङ्गगुणविरोधे च तादर्थ्यात् ॥ ९ ॥

"दीक्षणीयायाः सोमस्य च य इष्ट्वा पशुना सोमेने"त्यादिना वचनेन पूर्वकालत्वे प्राप्ते सत्येकाहदीक्षा पक्षे द्वयोः कालासम्भवात्कस्य कालोऽनुग्राह्य इति विचारे अनियमे मुख्यत्वाद्वा दीक्षणीयाधर्मोऽनुग्रहे प्राप्ते प्रधानधर्मत्वात्सुत्याकालानुग्रहः सर्वाणि ह्यङ्गानि तदङ्गानि च प्रधानसाद्गुण्याय क्रियन्ते, न च साक्षात्साद्गुण्यसम्भवे परम्परामाश्रयति, तस्मात्प्रधानकालानुग्रहोऽयं प्राप्तबाधचिन्ताऽपीयं विप्रतिषिद्धधर्मसमवायप्रसङ्गात् इह कृता ॥

परिधौ परिधियूपोभयधर्मानुष्ठानाधिकरणम् । सू० परिधिर्द्व्यर्थत्वादुभयधर्मा स्यात् ॥ १० ॥

परिधौ पशुं नियुञ्जन्तीति परिधानं यूपकार्यं च कुर्वन् परिधिः परिधिधर्मान् संमार्जनादीन् यूपधर्मांश्च परिव्याणादींल्लभेतेति प्राप्तिसूत्रमेतत् ॥

परिधौ विरोधियूपधर्मानुष्ठानाधिकरणम् । सू० यौप्यस्तु[1] विरोधे न स्यान्मुख्यानन्तर्यात् ॥ ११ ॥

विरुद्धेषु धर्मेषु किं यूपधर्माः कर्त्तव्याः परिधिधर्मा वेति संशये यूपस्य हविषा पशुना साक्षात्सम्बन्धात्प्रधानप्रत्यासत्तिः, परिधेस्तु हविराघाराग्निसंस्कारार्थत्वाद्विप्रकर्षः तेन यूपधर्मानुग्रहः पूर्ववत् प्रधानप्रत्यासत्तेरिति प्राप्ते ब्रूमः परिधेः सतो नियोजने विधानादपरित्यक्तस्वधर्मे परिधौ नियुञ्जीतेति नियोजनमात्रं ह्यत्र वाचनिकं, तत्प्रयुक्तास्तु तक्षणादिधर्माश्चोदकेन प्राप्नुवन्तः परिधित्वानुपमर्द्देन भवितुमर्हन्ति, सत्यामपि च प्रत्यासत्तावङ्गधर्मत्वमुभयोरविशिष्टं, तस्माद्विरोधे परिधिधर्माः कर्त्तव्याः ॥

[1] यौप्यस्तुविरोधे स्यादिति पा० ।

सवनीयपशुपुरोडाशयोः पशो-रेव तन्त्रित्वेन पाशुकतन्त्रस्यैवादानाधिकरणम् ।

सू० पशुसवनीयेषु विकल्पः स्याद्वैकृतश्चेदुभयोरश्रुतिभूतत्वात् ॥ १२ ॥

सवनीयः पशुः प्रातः सवने प्रारभ्यते तृतीयसवने समाप्यते वपया प्रातः सवने प्रचरन्ति पुरोडाशेन माध्यन्दिने अङ्गैस्तृतीयसवने इति सवनीयाः पुरोडाशाः प्रतिसवनं विहिताः अनुसवनं सवनीयाः पुरोडाशाः निरूप्यन्त इति माध्यन्दिनीयानां तार्तीयसवनिकानां च पुरोडाशानां तन्त्रमध्यपातादसन्दिग्धं प्रसङ्गित्वं प्रातःसवनिकानां पशोश्च मिथश्चिन्ता किं पुरोडाशास्तन्त्रिणः पशुः प्रसङ्गी अथवा तन्त्री ते प्रसङ्गिनः पशुरेव तन्त्री विपरीतं वेति यस्य पूर्वमुपक्रमोयस्य वा पूर्वं समाप्तिस्स तन्त्री इतरस्तु प्रसङ्गी, तत्रेह कस्य पूर्वमुपक्रम इति विशेषो नावगम्यते। ननु समाप्तावस्ति विशेषः पशोस्तृतीयसवने समाप्तेः स एव तन्त्री स्यात् प्रातःसवनिकाः पुरोडाशा हि प्रातःसवने समाप्यन्ते अतस्ते प्रसङ्गिनः, मैवन्तेऽपि तृतीयसवने समाप्यन्ते आग्निमारुतादूर्ध्वमनूयाजैश्चरन्तीति पौरोडाशिकानूयाजोत्कर्षविधिरस्त्विति मन्यते, तस्मादविशेषः उच्यते पशुरेव तन्त्री तत्र ह्यग्निमद्य होतारमवृणीतायं यजमान इत्यादि सूक्तवाकप्रैषो मैत्रावरुणकर्तृको ऽग्नीषोमीयात्पशोश्चोदकेन प्राप्तः पुनरग्निमद्य होतारमवृणीतायं सुतासुतीयजमान इत्यादिरूपेण विकृतः प्रत्यक्षेण सवनीयपशौ पठ्यते सोऽयमनर्थकः पुरोडाशानां तन्त्रित्वे स्यात्,न हि तेषामयमङ्गानामपि मैत्रावरुणस्तेषामस्ति येनायमुच्येत। विकल्पे तु नित्यवद्वचनानर्थक्यं, तस्मादनेन पशुवैशेषिकाङ्गाम्नानेन पशुरेव तन्त्रीति निश्चीयते। किं च आग्निमारुतादूर्ध्वमनुयाजैश्चरन्तीत्ययमपि पाशुकानामेवानुयाजानामुत्कर्षस्तेषां ह्यङ्गैस्तृतीयसवने इत्यङ्गप्रचारोत्कर्षादेव तृतीयसवनसम्बन्धे प्राप्ते प्रदेशविशेषमात्रं सुखेन विधीयते पुरोडाशानां त्वनुसवनं निरूप्यते इति वचनात्प्रातःसवनसमाप्त्यवगमात्तद्विरोधेनायुक्तं तदीयानूयाजोत्कर्षविधानं, तस्माद्दीर्घकालत्वात्पशोस्तन्त्रिता, तन्मध्यपातात्तु पुरोडाशाः प्रसङ्गिनः ॥

समानतन्त्रयोः प्रकृतिविकृत्यो-र्विकृतितन्त्रानुष्ठानाधिकरणम् ।

सू० अपूर्वे च विकृतौ समानतन्त्रा चेदनित्यत्वादनर्थकं हि स्यात् ॥ १३ ॥

प्रकृतिर्यावज्जीवं पर्वणि पर्वणि प्रयुज्यते विकृतयोऽपि कामेन निमित्तेन वा पर्वण्येवापतन्ति तत्र प्रकृतिविकृत्योस्तन्त्रेण प्रयोगं कृत्वा चिन्त्यते विरुद्धेषु धर्मेषु, दात्राग्नी सामिधेनीत्यादिषु कस्य धर्मः प्रयुज्यते कस्य प्रसङ्गित्वमिति संशये प्रकृतेः पूर्वं प्रवृत्तत्वात्सैव तन्त्रिणीति प्राप्ते ब्रूमः यद्यपि तावत्पूर्वं प्रवृत्ता प्रकृतिः स्यात् । तथाऽपि वैकृतमेवानुष्ठेयम् इतरथा सर्वदैव प्राकृतानां प्रयोगाद्वैकृता विशेषविधयोऽनर्थका भवेयुः । न च पूर्वं प्रवृत्ता प्रकृतिः न ह्ययमेको यावज्जीविकः प्रयोगः पर्वणि पर्वणि भिन्नाः प्रयोगाः प्रक्रम्यन्ते ऽपवृज्यन्ते च, तस्मात्कामेन निमित्तेन चापतन्ती विकृतिरेवौत्सर्गिकीं नित्यचिकीर्षां बाधित्वा निविशत इति वैकृतमेव तन्त्रं प्रकृतौ प्रसज्यत इति ॥

आग्रयणे प्रसूनबर्हिषामे-व ग्रहणाधिकरणम् ।

सू० अधिकश्च गुणः साधारणेऽविरोधात्कांस्यभोजिवदमुख्येऽपि ॥ १४ ॥

आग्रयणेष्वामैन्द्राग्नवैश्वदेवद्यावापृथिव्यानि हवींषि तत्र द्यावापृथिव्यस्य वैश्वदेविकद्यावापृथिव्यविकारत्वात्प्रसूनं बर्हिः प्राप्तम् ऐन्द्राग्नादेस्तु प्रसूनमप्रसूनं वा बर्हिर्मात्रं तत्र समानतन्त्रेषु किं प्रसूनमप्रसूनं वोपादेयम् ? उत प्रसूनमेवेति संशये मुख्यत्वाद्भूयस्त्वाच्चानियम एव युक्तः नैवं न ह्यनियमो नाम किञ्चिदङ्गं यदनुगृह्णीत बर्हिर्मात्रं त्वङ्गं तच्च प्रसूनोपादानेऽप्यविरुद्धमिति न कस्यचिद्वैगुण्यम्, अनियमे तु द्यावापृथिव्यस्य वैगुण्यं स्यात्, न चावैगुण्यसम्भवे तद्युक्तं तस्मात्प्रसूनमेव स्यात् ॥

द्यावापृथिव्यादीनां सर्वेषामेव तन्त्रित्वाधिकरणम् ।

सू० तत्प्रवृत्त्या तु तन्त्रि[1]नियमः स्याद्यथा पाद्युक्तं सूक्तवाकेन ॥ १५ ॥

१ तन्त्रस्य नियमः स्यादिति पा० ।

एवं तर्ह्यनेनैव द्यावापृथिव्यतन्त्रलिङ्गभूतेन बर्हिषां सर्वमेवेदं द्यावापृथिवीयं तन्त्रम्, ऐन्द्राग्नादेस्तु तदेव तन्त्रं प्रसज्यते, अतो विरुद्धेष्वपि धर्मेषु द्यावापृथिवीय एव स्यात्, मैवं न ह्येतदैकान्तिकं द्यावापृथिवीयतन्त्रलिङ्गं साधारणमिदमविरोधात्संगृहीतं, न त्वनेन द्यावापृथिव्यं तन्त्रं नियन्तुं शक्यं तस्मात्सर्वे तन्त्रिण इति विरुद्धेषु धर्मेषु ऐन्द्राग्नादिधर्मः कर्त्तव्यो मुख्यभूयस्त्वाभ्याम् ॥

इति शास्त्रदीपिकायां द्वादशाध्यायस्य द्वितीयः पादः ॥

—— o ——

## अथ द्वादशाध्यायस्य तृतीयः पादः आरभ्यते ॥

——o——

अष्टरात्रे वत्सत्वगहतवाससोः समुच्चयाधिकरणम् ।

सू० विश्वजिति वत्सत्वङ्नामधेयादितरथा तन्त्रभूयस्त्वादहतं स्यात् ॥ १ ॥

अष्टरात्रे विश्वजित्प्रथममहः ततोऽभिप्लवः षडहस्ततोऽभिजित् तत्र विश्वजिति नामधेयेनैकाहिकविश्वजिद्धर्मोऽवभृथादुदेत्य वत्सत्वचं परिधत्ते इति वत्सत्वक्प्राप्तिः इतरेषु तु ज्योतिष्टोमादहतं वासः तत्र द्वयोः परिधानार्थत्वात्महाव्रततार्प्यादिवच्च वासांसि विभ्रंसयति इत्यादि वासोबहुत्वादर्शनादसति समुच्चये भूयोधर्मत्वादहतानुग्रहः ॥ एकाधिकरणयत्नादिमते तु सूत्रान्यथाकरणं भाष्यकारेण दर्शितं, सिद्धान्तस्तु सत्यं, न दृष्टं वासोबहुत्वं तथाऽपि कौपीनाच्छादने वत्सत्वचोऽयोग्यत्वादुपरि वासःकार्ये ऽसौ विधीयते, तत्रापि परिदधातीति प्रयोगात्कम्बलं परिधत्त इतिवत् अहतन्तु कौपीनाच्छादने योग्यन्तत्रैव विधीयत इति द्वयोरपि भिन्नकार्यत्वात्समुच्चयः ॥

अनुनिर्वाप्यापुरोडाशानां पुरोडाशस्यैव तन्त्रित्वाधिकरणम् ।

सू० अनुनिर्वाप्येषु भूयस्त्वेन तन्त्रनियमः स्यात् ॥ २ ॥

अग्नीषोमीयस्य पशुपुरोडाशमष्टौ देवसुवां हवींष्यनुनिर्वपतीत्यत्रानुनिर्वाप्याणां स्वाधर्म्यं पुरोडाशस्य प्रसङ्गित्वं विपरीतं वेति संशये

भूयस्त्वादनुनिर्वाप्याणामिति प्राप्ते उच्यते न हि तेषां सह चोदनानापि सहोपक्रमः किं तु पशुपुरोडाशतन्त्रे प्रक्रान्ते अनुनिर्वाप्याणां तन्त्रमध्ये विधानाद्विस्पष्टं प्रसङ्गित्वमितरस्य च तन्त्रित्वं, तन्त्रिधर्मश्च प्रसङ्गिभिरुपजीवनीय इति पशुपुरोडाशस्य स्वाधर्म्यम् । ये तु सर्वेष्वपि तन्त्रिषु विप्रतिषिद्धविषये मुख्यस्यैव स्वाधर्म्यं न भूयसामित्यैकाधिकरण्यमाश्रित्य वदन्ति तेषां प्रसङ्गिभ्योऽनुनिर्वाप्येभ्योमुखबलीयस्त्वं विस्पष्टमित्यधिकरणमिदमनर्थकं स्यात्, ऐकाधिकरण्यमेव विस्पष्टीकर्त्तुमिदमधिकरणमिति तु लज्जाशून्यानां वैयात्यभाषितम् । किं च विप्रतिषिद्धधर्माणां समवाये भूयसां साधर्म्यं मुख्यं वा स्वधर्मेति सामान्येनोक्त्वा अनुनिर्वाप्येष्विति विशेषमुपादाय तद्विषये भूयोभ्योऽपि मुख्यबलीयस्त्वमित्यभिधानात् तत्र भूयसामेव स्वधर्मत्वं मुख्यस्वाधर्म्यन्तु समसंख्याविषयमित्यधिकरणभेदः एव स्पष्टीभवति नैकाधिकरण्यमित्यास्तां तावत् ॥

दृष्टद्वारभेदात् भिन्नोपकारकाणां गुणानां समुच्चयाधिकरणम् ।

**सू० एककर्मणि शिष्टत्वाद्गुणानां सर्वकर्म स्यात् ॥ ३ ॥**

दर्शपूर्णमासयोराघारौ प्रकृत्य श्रूयते "ऊर्ध्वमाघारयति ऋजुमाघारयति संततमाघारयती"त्यादि, तत्रोर्द्ध्वत्वादीनां विकल्पसमुच्चयचिन्तायामेकार्थत्वाद्विकल्पप्राप्तौ सर्वेषां सह संभवात्समुच्चयः ॥

प्रयोजनैक्ये गुणानां विकल्पाधिकरणम् ।

**सू० एकार्थास्तु विकल्पेरन्समुच्चये ह्यावृत्तिः स्यात्प्रधानस्य ॥ ४ ॥**

व्रीहिभिर्यजेत यवैर्यजेतेत्यादिष्वपि सर्वाङ्गोपसंहारिप्रयोगवचनानुग्रहायाष्टदोषनिदानविकल्पपरिहाराय च समुच्चयः स्यात्सम्भवति च ज्योतिष्टोमवदभ्यासमाश्रित्य समुच्चयसंपादनं मिश्रैर्वा इज्यतामिति प्राप्ते ब्रूमः एकार्थानामेकस्मिन्नुपकारे ऽन्योन्यानपेक्षया विनियुक्तानां विकल्पः स्यात्, ज्योतिष्टोमो हि द्रव्यदेवतासंयोगानामदृष्टार्थानामपर्यायविधानात्प्रकरणेन युगपद्ग्रहणात्सर्वसम्पादनाय युक्तं यदभ्यस्यते, व्रीहियवौ तु द्वाभ्यां वाक्याभ्यामन्योन्यनिरपेक्षौ यागद्रव्यपुरोडाशप्रकृतितया विधी-

यमानौ तद्द्वारेण प्रयोगवचनो गृह्णन् पर्यायेणैव गृह्णाति न युगपत् यद्बलात्प्रधानाभ्यासः स्यात् ज्योतिष्टोमवत्, मिश्रत्वमपि निरपेक्षविधानादयुक्तमेव समुच्चित्य यजतोऽपि वाक्यद्वयमपि बाधितं स्यात्, द्वाभ्यामपि वाक्याभ्यां द्वयोरपि निरपेक्षयोः प्रकृतित्वेन विधानात्तद्बलेन द्रव्यान्तरनिवृत्तिप्रतीतेः, तस्माद्विकल्पः, ततो व्रीहिप्रयोगे तैरेव कार्यसिद्धेर्यवानामनुपादानं, यथा पाशुकैरङ्गैः कार्यसिद्धेः पौरोडाशिकानाम् । ननु चान्यार्थेनान्यस्य कार्यसिद्धिः प्रसङ्गः साधारणं भवेत्तन्त्रं परार्थे स्वप्रयोजकः । एवमत्र प्रसङ्गः स्याद्विद्यमाने स्वके विधा"विति वचनादत्र तु द्वयोरप्याग्नेयार्थत्वान्नास्ति प्रसङ्गरूपं सत्यमेतावान्विशेषः तथाऽप्यन्येन कार्यसिद्धेरन्यनिवृत्तिरित्येतावता सामान्येनात्र सङ्गतिः ॥

वैगुण्यसमाधानार्थानां प्रायश्चित्तानां विकल्पाधिकरणम् ।

सू० प्रायश्चित्तेषु चैकार्थ्यान्निष्पन्नेनाभिसंयोगस्तस्मा[1]त्सर्वेषु निर्घातः ॥ ५ ॥

यानि प्रायश्चित्तानि कर्मवैगुण्ये निमित्ते विधीयन्ते यथा "यद्युक्तो यज्ञ आर्तिमियात् भूः स्वाहेति गार्हपत्ये जुहुयात् योऽमावास्यां पौर्णमासीं वाऽतिपातयेदग्नये पथि कृते पुरोडाशमष्टाकपालं निर्वपेद्योऽमावास्यां पौर्णमासीं वाऽतिपातयेद्वैश्वानरं द्वादशकपालं निर्वपेदित्यादीनि वैगुण्यसमाधित्सायां विधानात् समाधानार्थानि यान्येकस्मिन्वैगुण्ये विधीयन्ते पथिकृद्वैश्वानरादीनि तेषां विकल्पसमुच्चयचिन्तायामदृष्टार्थत्वात्समुच्चयप्राप्तावेकैकेन वाक्येन वैगुण्यसमाधानाय निरपेक्षविधानाद्विकल्पः ॥

नैमित्तिकप्रायश्चित्तानां समुच्चयाधिकरणम् ।

सू० समुच्च[2]यस्त्वदोषनिर्घातार्थेषु ॥ ६ ॥

यानि पुनर्न दोषनिर्घातार्थानि निमित्ते कर्माङ्गानि भिन्ने जुहोतीत्यादीनि तेषां प्रयाजादीनामिवापर्यायविधानात्समुच्चय इति प्रत्युदाहरणमात्रमेतत् ॥

---

१ सर्वस्य निर्घातः इति पा० ।
२ समुच्चयस्त्वदोषार्थेषु इति पा० ।

कर्मकाले ऽनध्याये ऽपि मन्त्राणां प्रयोगाधिकरणम्।

सू॰ मन्त्राणां कर्मसं[1]योगे स्वधर्मेण प्रयोगः स्याद्धर्मस्य तन्निमित्तत्वात्॥ ७॥

पर्वणि नाध्येतव्यमित्यादयो ये मन्त्राणामध्ययनकाले स्वधर्मास्ते कर्मकालेऽपि स्युर्न वेति संशये मन्त्रप्रयोगार्थत्वात्कर्मकालेऽपि प्रयोगात्तत्रापि स्युः, नैवं प्रकरणादेते धर्माः स्वाध्यायविधिविहितस्य ग्रहणार्थस्याध्ययनस्याविघ्नसमाप्त्युपकारेणाङ्गभूताः कः प्रसङ्गो यत्कर्मणि धर्माद्रः पूर्वपक्षे विधीयमानानां धर्माणां मन्त्रप्रयोगार्थत्वेन कर्मकालेऽपि प्राप्तिस्तद्विधयः स्वाध्यायसमयवर्त्तिन एव प्रसङ्गात्कर्मकालेऽप्युपकुर्वन्ति, सिद्धान्ते तु नेत्येवं विधप्रसङ्गाप्रसङ्गविचारात्सङ्गतिः॥

कर्मणि प्रवचनस्वरेणैव मन्त्रोच्चारणाधिकरणम्।

सू॰ भाषास्वरोपदेशादैरवत् प्रवचनप्रतिषेधः स्यात्॥ ८॥

ये मन्त्राः समाम्नाये स्वरान्तरेण समाम्नाता ब्राह्मणे च मन्त्राः स्वरान्तरेणोपात्तास्ते मन्त्रा किं समाम्नायसिद्धेन स्वरेण प्रयोक्तव्या? उत ब्राह्मणस्वरेणे? ति संशये वाचनिकत्वाद्ब्राह्मणस्वरस्य तेनैव प्रयोगः, नैवं ये तावल्लिङ्गविनियुक्ता मन्त्रास्तेषां ब्राह्मणस्य गुणार्थवादपरिसंख्यार्थत्वाच्च मन्त्रस्वरूपे तत्स्वरे वा व्यापारो, येऽपि वचनविनियोज्यास्तेष्वपि मन्त्रविनियोगपरं वचनं न तत्स्वरविनियोगे व्याप्रियते, स्वरान्तरोपादानं तु ब्राह्मणे प्रवृत्तस्य स्वरस्याविच्छेदार्थं तस्मादात्मीयेनैव स्वरेण कर्मण्यपि प्रयोगः॥

भाषिकोपदिष्टानां भाषिकस्वरेणैवोच्चारणाधिकरणम्।

सू॰ तन्न्यायत्वाददृ[2]ष्टेऽप्येवम्॥ ९॥

ये पुनर्मन्त्रसमाम्नाये नाधीता ब्राह्मणोत्पन्ना मन्त्रास्तेष्वपि ब्राह्मणस्य मन्त्रस्वरूपविनियोगपरत्वाच्च स्वरपरत्वम् अतो न ब्राह्मणस्वरेण प्रयोक्तव्याः, नैवम्, असत्यपि स्वरविनियोगे मन्त्रस्य विनियुक्तस्य यथा

---

१ मन्त्राणां कर्मसंयोगादिति पा॰।
२ अदृष्टेऽपीति पा॰।

विज्ञातरूपस्य प्रयोगात्तस्य च ब्राह्मणस्वरातिरेकेण स्वरान्तरानवगमात्ते-नैव स्वरेण प्रयोगः ॥

पदार्थकरणमन्त्राणां पाठानन्तरमेव पदार्थानुष्ठानाधिकरणम् ।

सू० मन्त्राणां करणार्थत्वान्मन्त्रान्तेन कर्मादिसन्निपातः स्यात्सर्वस्य वचनार्थत्वात् ॥ १० ॥

करणमन्त्रेषु किं मन्त्रमध्ये मन्त्रान्ते ततोऽपि वा कियन्तंचित्कालं स्थित्वा समवेताभिधायि पदानन्तरं वा कर्मप्रयोगः किं वा सर्वमन्त्रा-तेऽनन्तरमेवेति संशये अनियमः समवेताभिधायिनो वा स्मरणस्य सञ्जा-तत्वादनन्तरमेवेति प्राप्ते ब्रूमः सकलस्य मन्त्रस्य विनियुक्तत्वात्सक-लेन सम्पादितं स्मरणं कर्माङ्गम्, अतः सकलमन्त्रसमाप्तौ तज्जनितं स्मरणं यावदेव न प्रभ्रष्टं तावदेव प्रयोगः कर्त्तव्यः, तेन मन्त्रान्तस्य कर्मादेः सन्निपातः ॥

वसोर्धारायां पूर्ववन्मन्त्रान्ते कर्मसन्निपाताधिकरणम्।

सू० सन्ततवचनाद्धारायामादिसंयोगः ॥ ११ ॥

"सन्ततां वसोर्द्धारां जुहोती"त्यत्र सन्ततवचनात् तस्य च साहित्य-वाचित्वात्साहित्यस्य चानेकाऽपेक्षत्वात्कर्मणश्चैकत्वात्कर्ममन्त्रयोः सा-हित्यमिदमुच्यते, अतो मन्त्रादेः कर्मादेश्च सन्निपातः, स्यादेवं यद्येकं कर्म स्यात्, भिन्नानि त्वत्र द्वादशैतानि जुहोतीति संख्यया कर्माणि तेषामविच्छेदः सन्तत-शब्देनोच्यते, जुहोतीति तेषामुपात्तत्वात् न मन्त्र-कर्मणोः साहित्यं मन्त्रस्यानुपात्तत्वात्, अविच्छेदेऽपि सन्तत-शब्दोवर्त्तते न केवलं साहित्ये, अतोऽत्रापि पूर्व एव न्यायः ॥

आघारेऽपि पूर्ववत् मन्त्रान्ते कर्मसन्निपाताधिकरणम् ।

सू० आघारे च दीर्घधारत्वात्[३] ॥ १२ ॥

आघारं प्रकृत्य श्रूयते "सन्ततमाघारयती"ति तत्र कर्मैकत्वात्सन्ता-नासंभवे मन्त्रसाहित्यमेव विधीयत इति आदिसंयोगः, नेत्याह न कर्मणः

३ आघारे च दीर्घत्वादिति पा० ।

दर्शाकस्य दीर्घेण मन्त्रेणोर्द्ध्वोऽध्वर इत्यादिना साहित्यसम्भवः, अतो दीर्घाघारस्याघार्यमाणद्रव्यस्य सातत्यमुच्यते तेनात्रापि मन्त्रान्तकर्माद्योरेव सन्निपातः॥

'पूषा वाम्' इत्याद्येककार्य्यार्थमन्त्राणां विकल्पाधिकरणम्।

सू॰ मन्त्राणां सन्निपातित्वादेकार्थानां विकल्पः स्यात्॥ १३॥

करणमन्त्राणामेकार्थानां भगो वां विभजत्वित्यादीनां व्रीहियववन्यायेन विकल्प इति प्राप्तिसूत्रमेतदपवादार्थम्॥

'चतुर्भिरभिमादत्ते' इत्यादौ मन्त्राणां समुच्चयाधिकरणम्।

सू॰ संख्याविहितेषु समुच्चयोऽसन्निपातित्वात्॥ १४॥

ये तु संख्यायुक्तामन्त्रा "श्चतुर्भिरभ्रिमादत्त" इत्येवमादयस्तेषामपि पूर्ववत् विकल्पः संख्यावशात्तु समुच्चयः चतुःसंख्या हि कर्माङ्गभूता नासति समुच्चये संपद्यते, तत्र पूर्वप्रयुक्तानां मन्त्राणां संस्कारद्वारेण करणत्वं चरमस्य तु साक्षादिति संख्यावचनसामर्थ्यादध्यवसीयते, तस्मात्समुच्चयः॥

ब्राह्मणविहितानाम् 'उरुप्रथस्व'-इत्यादिमन्त्राणां विकल्पाधिकरणम्॥ कृत्वाचिन्तेयम्॥

सू॰ ब्राह्मणविहितेषु च संख्यावत्सर्वेषामुपदिष्टत्वात्॥ १५॥

ये ब्राह्मणविहिता मन्त्राः "उरुप्रथा उरुप्रथस्वेति पुरोडाशं प्रथयति यज्ञपतिमेव तत्प्रजया पशुभिश्च प्रथयति उरु ते यज्ञपतिः प्रथतामिति पुरोडाशं प्रथयतीति च तेषामपि सर्वेषामुपदिष्टत्वाद्विकल्पे च पाक्षिकबाधप्रसङ्गात्समुच्चयेऽपि संख्याविहितवत्सर्वेषां करणत्वोपपत्तेः समुच्चय इति वचनविनियोगाङ्गीकारेण भाष्यकारेण पूर्वपक्षितं, वार्त्तिककारस्तु लिङ्गविनियोगेनैव मन्त्राणां विनियोगसिद्धेः समुच्चयार्थमेव वचनं मन्यते, तस्मादपि समुच्चय इति, मैवं लिङ्गेनैषां निरपेक्षसाधनत्वावगमादतो न समुच्चयः संख्यावशेन हि पूर्वत्र समुच्चयाश्रयणम्। न चैवमिहास्ति ब्राह्मणविनियोगस्तु येषां लिङ्गविनियोगो नास्ति तेषां मन्त्रस्वरूपविनियोगार्थः, येषां त्वस्ति लिङ्गं तत्रार्थवादार्थमिति न तेनापि समुच्चयः॥

होत्राणां मन्त्राणां समुच्चयाधिकरणम् ।

सू० हौत्रास्तु विकल्पेरन्नेकार्थत्वात् ॥ १६ ॥

उच्छ्रयस्व वनस्पते इत्यादयो ये क्रियमाणानुवादिनो ऽहौत्रा मन्त्रास्तेषामपि करणवदेकार्थत्वाद्विकल्पप्राप्तावुच्यते करणानि हि कर्मानुष्ठाने करणभूतां स्मृतिं पूर्वक्षणवर्त्तिनीं कुर्वन्ति, न चैकेन तत्सिद्धावितरेण कार्यमस्तीति युक्तस्तत्र विकल्पः, क्रियमाणानुवादिनस्त्वध्वर्युणा क्रियमाणस्य कर्मणः स्मृत्यविच्छेदार्थाः अविच्छेदश्चान्तादपेक्षित इति सर्वेषां समुच्चयः ॥

इति शास्त्रदीपिकायां द्वादशाध्यायस्य तृतीयः पादः ॥ ३ ॥

## अथ द्वादशाध्यायस्य चतुर्थः पादः आरभ्यते ॥

जपस्तुत्याशीरभिधानानां समुच्चयाधिकरणम् ।

सू० जपाश्चाकर्मसंयुक्तास्तुत्याशीरभिधानाश्च याजमानेषु समुच्चयः स्यादाशीःपृथक्त्वात् ॥ १ ॥

यत्र सन्तमप्यर्थप्रत्ययम् अविवक्षित्वोच्चारणमात्रमदृष्टाय क्रियते वैष्णवीमनूच्य वाग्यन्तव्येत्यादौ स जपः, गुणकीर्त्तनं स्तुतिः, अग्निर्मूर्द्धेति आशासनमाशीः आयुर्मे देहीति, गुणविशिष्टगुणिप्रकाशनमदृष्टार्थमभिधानन्तेषु ब्राह्मणविहितवद्विकल्पप्राप्तावदृष्टार्थत्वात्समुच्चयः ॥

ऐन्द्राबार्हस्पत्ये द्विविधयाज्यानुवाक्ययोर्विकल्पाधिकरणम् । याज्यानुवाक्ययोः समुच्चयाधिकरणम् ।

सू० याज्यानुवाक्यासु तु विकल्पः स्याद्देवतोपलक्षणार्थत्वात् ॥ २ ॥

ऐन्द्राबार्हस्पत्ये कर्मणि द्वे याज्यानुवाक्यायुगले समाम्नाते, इदं वामास्ये हविः अयं वां परिषिच्यत इत्येकं युगलम् । अस्मे इन्द्राबृहस्पती बृहस्पतिर्नः परिपात्वित्यपरं, तत्र समुच्चयविकल्पसंशये यथा याज्यापुरोनुवाक्ययोः सत्यपि देवतोपलक्षणार्थत्वेनैकार्थत्वे मिथस्समुच्चयस्तथा युगलयोरपि स्यादविशेषादिति प्राप्ते उच्यते विकल्प एकार्थत्वादिति, याज्यापुरोऽनुवाक्ययोस्तु पुरोऽनुवाक्यासमाख्यावशाच्च्यायप्राप्तविकल्पबाधेन समुच्चय इति विशेषः ॥

सोमक्रयसाधनानामजादीनां समुच्चयाधिकरणम् ।

सू० क्रयणेषु तु विकल्पः स्यादेकार्थत्वात् ॥ ३ ॥

"एकहायन्या क्रीणाति अजया क्रीणाति वाससा क्रीणाति" इति दश क्रयद्रव्याणि तेषां विकल्पः समुच्चयो वेति चिन्त्यते; तत्र व्रीहियवन्यायेनैकार्थत्वाद्विकल्पः; कथं पुनरेकार्थत्वं भिन्ना एव हि प्रतिवाक्यं क्रियाः; न ह्येकेन वाक्येन विहितं क्रयमनूद्य वाक्यान्तरैर्द्रव्यान्तरविधानं सम्भवति उत्पत्तिशिष्टद्रव्यविरोधात्; तस्मात्सर्वाणि क्रयविधानानि विध्यन्तराच्च क्रयभेदः, तस्माच्चानाक्रयसाधनत्वाद् द्रव्याणां नास्त्यैकार्थ्यम्; सत्यं, साक्षान्नास्ति क्रयद्वारेण त्वस्त्येव, सर्वे हि क्रयास्सोमप्राप्त्यर्थत्वादेकार्थाः तद्द्वारेण द्रव्याण्यप्येकार्थानि तदनेन प्रकारेण क्रयाणामिवात्र विकल्पसमुच्चयौ चिन्त्येते, व्रीहियववच्च विकल्पप्राप्तावुच्यते विक्रेतुरानतिरत्र प्रयोजनं; तच्च बहुभिः सुकरम् अतः कार्यप्रधानत्वात्पदार्थानां सौकर्यमालोच्य समुच्चयाश्रयणं न्याय्यं; व्रीहियवादीनान्तु नैवं किंचित्कारणमस्ति येन पृथक् श्रुतानामपि सापेक्षत्वं कल्पते; अत्र तु कार्यविशेषात्सापेक्षत्वकल्पनमिति वैषम्यम् ॥

उपयजनादिप्रतिपत्तिकर्मणां समुच्चयाधिकरणम् ।

सू० संस्कारे च तत्प्रधानत्वात् ॥ ४ ॥

अग्नीषोमीये पशौ "गुदेनोपयजती"ति श्रुतं पशुगणेऽनेकगुदसन्निपाते गुदानां विकल्पः समुच्चयो वेति चिन्ता, यद्यर्थकर्म ततो विकल्पः, अथ प्रतिपत्तिस्ततस्समुच्चयः तत्र सत्यपि तृतीयासंयोगे प्रयाजशेषवदुत्पत्तौ येन संयुक्तमित्येवं सिद्धस्य प्रतिपत्तित्वस्य प्रयोजनकथनमेतत् ॥

आधाने विविधसंख्याकानां दक्षिणानां विकल्पाधिकरणम् ।

सू० संख्यासु तु विकल्पः स्यात् श्रुतिविप्रतिषेधात् ॥ ५ ॥

१ विधिभेदाच्चेति पा० ।

आग्न्याधेयाङ्गानामेका देया षड् देया इत्यादीनां दक्षिणानामानन्तर्यार्थत्वात् क्रयवत् समुच्चयः संख्याश्रुतिविरोधात्तु विकल्पः समुच्चये संख्यान्तरोपजननाच्छ्रुतसंख्याहानिप्रसङ्गात् ॥

पशुगणेषु जाघनीनां विकल्पाधिकरणम् ।

सू॰ द्रव्यविकारन्तु पूर्ववदर्थकर्मं स्यात्तथा विकल्पे नियमः प्रधानात्[1] ॥ ६ ॥

दर्शपूर्णमासयोः पत्नीसंयाजेषु आज्येन सह विकल्पमाना जाघनी विहिता, जाघन्या पत्नीः संयाजयन्तीति सा चोदकेनाग्नीषोमीये पशौ प्राप्ता अत्रापि पुनः श्रूयते "जाघन्या पत्नीः संयाजयन्ती"ति ततोऽपि पशुगणे चोदकेन प्राप्नोति तत्र बह्वीनां जाघनीनां समुच्चयो विकल्पो वेति सन्देहः, यदि प्रतिपत्तिस्ततस्समुच्चयः, अथार्थकर्म ततो विकल्पः, तत्र यद्यपि दर्शपूर्णमासयोर्जाघनीगुणभूता पत्नीसंयाजानान्तथाऽप्यग्नीषोमीये हृदयाद्यर्थो लब्धपशुनिष्पन्नाया जाघन्याः प्रतिपत्त्यपेतायां प्रतिपत्तित्वेन पत्नीसंयाजविधानम्, एवमर्थं पुनर्वचनं, ततश्च दृष्टार्थत्वात्पशुगणे समुच्चयः नैवम् आज्येन सह विकल्पमानायाश्चोदकप्राप्तायाः पुनर्वचनं नियमार्थं यथाप्राप्तायाश्च नियमः, प्राप्तिश्च गुणभावेनेति तादृश्येव नियम्यते, अतः पशुगणे विकल्पः ॥

उखायां काम्येन नित्याग्नेर्विकाराधिकरणम् ।

सू॰ उखायां काम्यनित्ययोः समुच्चयो नियोगे कामदर्शनात् ॥ ७ ॥

अग्नावुख्यं प्रकृत्य श्रूयते "वृक्षाग्रात् ज्वलतो ब्रह्मवर्चसकामस्याहृत्याऽवदध्यात् भ्राष्ट्रादन्नाद्यकामस्ये"ति, तत्र किं नित्यस्योख्यस्य काम्यस्य च वार्क्षाग्रादेः समुच्चयो ऽथवा नित्यो निवर्त्य? इति सन्देहे ऽवधानमात्रं कामाय श्रूयते न होमः, तस्मात्फलाय काम्यमवधाय होमाय पुनर्नित्योऽग्निरुख्योऽग्निर्वा ऽवधातव्य इति समुच्चयः, स्यादेतदेवं यद्यवधानं विधीयते प्राप्तमेव तु होमार्थमग्न्यवधानमाश्रित्याग्न्यन्तरमात्रं विधीयते, तस्मात्तेन

[1] प्रधानत्वादिति तु पा॰ ।

काम्येन नित्यस्य निवृत्तिः विकल्पसमुच्चयविचारे समाप्ते समुच्चयः एवास्ति नास्तीति चिन्त्यत इति सङ्गतिः ॥

वैकारिकाग्नेराहवनीयत्वाभावाधिकरणम् ।

**सू० स आहवनीयः स्यादाहुतिसंयोगात् ॥ ८ ॥**

सोऽयं काम्योऽग्निराहवनीय-शब्दवाच्यः स्यादाहूयतेऽस्मिन्निति, तस्मादाहवनीयधर्मगत श्रीधारणादयोऽत्र कर्त्तव्याः, मैवम् आधानजन्मनः संस्कारविशेषस्य वाचकोऽयमाहवनीय-शब्दो नासति तस्मिन्संस्कारे वर्त्तितुमर्हति, तस्मान्नात्राहवनीयधर्मः ॥

वैकारिकाग्नेराधानिकसंस्काराभावाधिकरणम् ।

**सू० तस्मिन्संस्कारकर्मशिष्टत्वात् ॥ ९ ॥**

एवं तर्हि संस्कारास्तत्राधानाद्याः कर्त्तव्या होमार्थत्वात्संस्काराणामस्य चाग्नेर्होमसाधनस्य चाग्नेर्होमसाधनत्वात् सत्यं, होमसाधनोऽयमग्निस्तथाऽप्यसंस्कृत एवायं संस्कृतस्थानापन्न इति नात्र संस्काराः कर्त्तव्याः, न हि वृद्धादाहृतस्यारणिमन्थनादिजन्यः संस्कारः शक्यते आधातुं, तस्मान्नात्र संस्कारः ॥

नित्यस्योख्यस्याग्नेरधारणाधिकरणम् ।

**सू० नित्यधारणे विकल्पो न ह्यकस्मात्प्रतिषेधः स्यात् ॥ १० ॥**

काम्याग्निप्रसङ्गं समाप्य पुनर्नित्यमेवोख्याग्निमुपक्रम्य चिन्तयति किं मुख्यस्य नित्यधारणं न वेति विकल्प? उताधारणमेवेति, तत्र न प्रतिसन्दध्यादिति धारणप्रतिषेधोऽसत्यां प्राप्तावनुपपद्यमानः प्रापकं विधिमनुमापयति, तेन चानुमितेन विधिना प्रापितं प्रतिषेधेन च प्रतिषिद्धं धारणं विकल्पमर्हतीति प्राप्ते ऽभिधीयते—सामान्येनाहवनीयधारणं गतश्रियो विहितम् उख्यश्चायमाहवनीयस्थानापन्नः, आहवनीय एव हि संततीयेनोख्यः सञ्जातः, तस्य धारणं सामान्यवचनप्राप्तं गतश्रियो धार-

णामुख्यविषयेऽनेन प्रतिषिध्यत इति मानेनाश्रुतविध्यनुमानं संभवति तस्मादधार्य एवायमुख्यः ॥

सत्राहीनयोः शुक्रस्पर्शादीनामेकयजमानकर्त्तृकत्वाधिकरणम् ।

सू० परार्थान्येको यजमानगणे ॥ ११ ॥

सत्राहीनयोरनेकयजमानसमवाये यजमानसंस्कारार्थानि शुक्रान्वारम्भणोऽदुम्बरीसंमानादीनि तान्येकेनैव कर्त्तव्यानि न सर्वैः प्रयोजनाभावादिति प्राप्तिसूत्रमेतत् ॥

अहीने शुक्रस्पर्शादौ यस्य कस्यचिद् यजमानस्य कर्त्तृत्वाधिकरणम् ।

सू० अनियमो विशेषात् ॥ १२ ॥

स चोक्तो यः कश्चित्स्यात् अतो येन केन चिदेकेन कृतमन्वारम्भणादिकमितरे प्रसङ्गादुपजीवन्तीतीदमपि प्राप्तिसूत्रमेव सत्रेष्वपवादं वक्तुम् ॥

सत्रे शुक्रस्पर्शादौ गृहपतेरेव कर्त्तृत्वाधिकरणम् ।

सू० मुख्यो वा विप्रतिषेधात् ॥ १३ ॥

सत्रेषु गृहपतिरेव परार्थानि कुर्यात् नानियमः कस्मादितरेषामार्त्विज्याविरोधात् ॥

सत्रे ऽञ्जनादिसंस्काराणां सर्वगामित्वाधिकरणम् ।

सू० सत्रे गृहपतिरसंयोगाद्धौत्रवत् ॥ १४ ॥

यानि पुनर्यजमानसंस्कारार्थानि कर्माण्यञ्जनाभ्यञ्जनादीनि तान्यपि सत्रे गृहपतिरेव कुर्यादुत सर्वे? इति संशये गृहपतिः समाख्यानात्, अत्र हि गृह–शब्देन कर्मोच्यते तस्य पतिर्गृहपतिः, सर्वेषां च यजमानानां स्वामित्वाद्गृहपतिशब्दार्हत्वे सति विशेषेण कस्यचिदेवासमाख्या फलभूयस्त्वनिमित्ता, फलभूयस्त्वं च संस्काराधिक्यात्, अतस्तस्यैव संस्कारो नान्येषाम् अत्राभिधीयते फलसंस्काराः सर्वेषामेव कर्त्तव्यास्तदभावे फलमेव न स्यात्, गृहपतिसमाख्या त्वार्त्विज्याभावात्, इतरे ह्यार्त्विज्यं कुर्वाणाः

कर्मकरा इव भवन्ति, अयं तु कैवलयाजमानकरणात्स्वामित्वाचिना गृह-
हपतिशब्देनोच्यते भवतु फलभूयस्त्वं तत्तु वचनात् सं हि भूयिष्ठां वृद्धिमृ-
ध्नोती" ति न संस्काराधिक्यात्. अतः सर्वे याजमानं कुर्युः यत्रार्त्विज्ययाज-
मानयोर्विप्रतिषेधः तत्रार्त्विज्यमेव कुर्युः प्रधानत्वात्कर्त्तारो हि कर्मणां गुण-
भूताः कर्तॄणामभिगुणभूताः संस्काराः प्रत्यक्षविधानाच्च, ये यजमानास्त
ऋत्विज इत्यनेन ह्यार्त्विज्यं यजमानानां विहितं, याजमानं तु चोदकप्रा-
प्तमित्यार्त्विज्यं बलीयः ॥

ब्राह्मणस्यैवार्त्विज्ये ऽधि-
काराधिकरणम् ।

सू० प्रभुत्वादार्त्विज्यं सर्ववर्णानां स्या-
त् ॥ १५ ॥

विप्रतिषेधे परमिति सूत्रे याजमानार्त्विज्ययोरार्त्विज्यं बलीय इति
स्थितं, तत्प्रसङ्गादार्त्विज्ये कर्त्तारश्चिन्त्यन्ते, दर्शपूर्णमासज्योतिष्टोमादिषु किं
त्रिभिरपि द्विजातिभिरार्त्विज्यं कारयितव्यम्? उत ब्राह्मणैरेवे? ति संशयः
तत्र "त्रयो ऽप्यार्त्विज्यमर्हन्ति विद्वत्त्वात् स्मरणं पुनः॥ पुरुषार्थमतः कर्मवै-
गुण्यं नास्ति किञ्चन ॥ याजमानाध्यापनप्रतिग्रहा ब्राह्मणस्यैव वृत्त्युपाया
इति नियमः पुरुषार्थतया स्मर्यते न क्रत्वर्थतया, तेन क्षत्रियवैश्यौ
आर्त्विज्यं कुर्वन्तौ नियमातिक्रमात्कामं स्वधर्मात्प्रच्यवेयातां न तु क्रतोः
काचित् गुणहानिः, तस्मात्त्रिभिरप्यार्त्विज्यं कारयितव्यमिति प्राप्ते ब्रूमः
"द्विजोत्तमानामार्त्विज्यं न तु क्षत्रियवैश्ययोः । ब्राह्मणार्त्विज्यनियमः
क्रत्वर्थमपि हि स्मृतः ॥ यज्ञं व्याख्यास्याम इत्युपक्रम्य "ब्राह्मणानामार्त्वि-
ज्य"मिति स्मरन्तो यज्ञसूत्रकाराः क्रत्वर्थेन स्मरन्तीति स्पष्टमेव, तथा च
भगवद्रामायणेऽपि "क्षत्रियोयाजको यस्य चाण्डालस्य विशेषतः । कथं
सदसि भोक्तारोहविस्तस्य सुरर्षय" इति, सुरा देवता ऋषयश्च ऋत्विग्भूता
इति देवताहविर्भागनिराकरणात् क्रतुवैगुण्यमेव दर्शितम्, "राजयाजकया-
स्यज्य विनश्यति यथा हवि"रिति अब्राह्मणार्त्विज्ये हविर्नाशश्च स्मृतः,
लिङ्गानि च दर्शितानि "ब्राह्मणानामिदं हवि"रित्येवमादीनि, तस्माद् ब्रा-

क्षणानामेवार्त्विज्यमिति सिद्धम् ॥ मध्ये तन्त्रं यस्य येषां विधानं तेषु प्रोक्तोमुख्यतन्त्रप्रसङ्गः । जिज्ञास्योयोधर्म उक्तश्चतुर्द्धा स प्रज्ञातो-लक्षणैर्द्वादशान्तैः ॥

इत्युपाध्यायश्रीपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां द्वाद-शाध्यायस्य चतुर्थः पादः, द्वादशाध्यायः शास्त्र-दीपिकाग्रन्थश्च समाप्तः ॥

---

मीमांसाशास्त्रस्य तूपासनकाण्डव्याख्यानस्वरूपमध्यायचतुष्टयमव-शिष्यते, यथोक्तमाचार्यपादैः श्रीभाष्ये "संहितमेतच्छारीरकं जैमिनीयेन षोड्शलक्षणेने"ति । तदपि यथासमयं प्रकाशयिष्यामः इति, सर्वममुं श्रमं भगवत्यर्पयति,

रामभिश्रशास्त्री ॥



